ॐ तत्सद्ब्रह्मणे नमः ।

महामुनिश्रीमद्व्यासप्रणीतं

# पद्मपुराणम् ।

1162

( तत्र पञ्चमक्रियाखण्डापरनामधेयसृष्टिखण्डरूपस्तृतीयो भागः )

एतत्पुस्तकं कै० श्री० रावसाहेब मण्डलीकेत्युपनामधारिभिः
विश्वनाथ नारायण इत्येतैः
महता परिश्रमेण बहुतराणि पुस्तकानि मेलयित्वा
सपाठान्तरनिर्देशं संशोधितम् ।

तच्च

महादेव चिमणाजी आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।



शालिवाहनशकाब्दाः १८१६

खिस्ताब्दाः १८९४



मूल्यं समग्रग्रन्थस्य चतुर्विंशतिरूपकाः ।

1162

विषयानु



यदा पद्ममभूद्धैरण्मयं जगत् । तद्वृत्तान्ताश्रयं तद्वत्पाद्ममित्युच्यते बुधैः ॥
...पञ्चपञ्चाशत्सहस्राणीह पठ्यते । तत्पुराणं च यो दद्यात्सुवर्णकमलान्वितम् ॥
ज्येष्ठे मासि तिलैर्युक्तं सोऽश्वमेधफलं लभेत् ] । इत्येतत्कथितं गुह्यं पुराणं पद्मसंज्ञितम् ॥
[+अर्चयस्व हृषीकेशं यदीच्छसि परं पदम् ] ॥

सूत उवाच—

एवमुक्तो वसिष्ठेन गुरुणा नृपभासुरः । प्रणम्य च गुरुं राजा पूजयित्वा यथार्हतः ॥
तस्मात्संप्राप्तमन्त्रोऽसौ विधिना द्विजसत्तमात् । अर्चयित्वा हृषीकेशं यावज्जीवमतन्द्रितः ॥
काले हरिपदं प्राप योगिगम्यं सनातनम् ॥

इति श्रीमहापुराणे पाद्म उत्तरखण्डे भृगुशापकथनं नाम द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥

इति श्रीमहामुनिव्यासप्रणीते महापुराणे पाद्मे षष्ठमुत्तरखण्डं समाप्तम् ॥ ६ ॥

---

आदितः श्लोकानां समष्ट्यङ्काः—४८४५२

अध्यायानामादितः समष्ट्यङ्काः—६२८

---

...तिमिदं पाद्मं महामुनिव्यासप्रणीतम...

दशपुराणान्तर्गतं महापुराणम् ।

रं पुनरागम- विवाहादिषु ...ताया नन्दायाः ...न्दायाः पुत्रं ...वादः, विवा- ...न्तः सत्य- ताप्रार्थनपू- , नन्दां प्रति श्रवणमात्रा- च धर्म- प्राप्ति- १ गमन- ...

मृगया ... प्रसङ्गादव... नन्दादर्शना... रूपिणः प्रभञ्ज... र्णनम्, व्याघ्र... स्वभक्षणनिश्चयदर्श... ...न्यदानार्थं गृहगमनप्रार्थना, नन्दाया अ-

...पुष्पवाहननृपतेराख्यान- ...प्रभृतिद्वादशीव्रतकथनम्, नक्तव्रतरुद्रव्रत- नीलव्रतप्रभृतिव्रतषष्टिकथनम्, प्रसङ्गात्स्नानविधि-

# अथ पद्मपुराणान्तर्गताध्य।५।

## तत्र प्रथमं सृष्टिखण्डम् ।

# विषयानुक्रमः ।

इति सृष्टिखण्डाध्यायान्तर्गतविषयानुक्रमः समाप्तः ।

---

श्रीः ॥

महामुनिश्रीव्यासप्रणीतं

# पद्मपुराणम् ।

## तत्र पञ्चमं क्रियाखण्डापरनामधेयं सृष्टिखण्डम् ।

### अथ प्रथमोऽध्यायः ।

स्वच्छं चन्द्रावदातं करिकरमकरक्षोभसंजातफेनं
ब्रह्मोद्भूतिप्रसक्तैर्व्रतनियमपरैः सेवितं विप्रमुख्यैः ॥
ओंकारालंकृतेन त्रिभुवनगुरुणा ब्रह्मणा दृष्टिपूतं
संभोगाभोगरम्यं जलमशुभहरं पौष्करं नः पुनातु ॥ १

सूतमेकान्तमासीनं व्यासशिष्यो महामतिः । लोमहर्षणनामा वै उग्रश्रवसमाह तत् ॥ २

ऋषीणामाश्रमांस्तात सर्वधर्मान्समासतः । पृच्छतां विस्तराद्ब्रूहि यन्मत्तः श्रुतवानसि ॥ ३

वेदव्यासान्मया पुत्र पुराणान्यखिलानि च । तवाऽऽख्यातानि प्राप्तानि मुनिभ्यो वद विस्तरात्

प्रयागे षट्कुलीयैश्च यथा पृष्टः स्वयं प्रभुः । पृष्टेन चारु शास्तास्ते(?) मुनयो धर्मकाङ्क्षिणः ॥ ५

देशं पुण्यमभीप्सन्तो विभुना च हितैषिणा । सुनाभं दिव्यरूपं च सत्यगं शुभविक्रमम् ॥ ६

अनौपम्यमिदं चक्रं वर्तमानमतन्द्रिताः । पृष्ठतो यात नियमात्पदं प्राप्स्यथ यद्धितम् ॥ ७

गच्छतो धर्मचक्रस्य यत्र नेमिरशीर्यत । पुण्यः स देशो मन्तव्य इत्युवाच बृहस्पतिः ॥ ८

उक्त्वा चैवमृषीन्सर्वानदृश्यत्वमगात्पुनः । गङ्गावर्तसमाहारो नेमिर्यत्र व्यशीर्यत ॥ ९

ईजिरे दीर्घसत्रेण ऋषयो नैमिषे तदा । तत्र गत्वा तु तान्ब्रूहि पृच्छतो धर्मसंशयान् ॥ १०

उग्रश्रवास्ततो गत्वा ज्ञानविन्मुनिपुङ्गवान् । अभिगम्योपसंगृह्य नमस्कृत्वा कृताञ्जलिः ॥ ११

तोषयामास मेधावी प्रणिपातेन तानृषीन् । ते चापि सत्रिणः प्रीताः ससदस्या महामुने ॥
तस्मै समेत्य पूजां च यथावत्प्रतिपेदिरे ॥ १२

ऋषय ऊचुः—

कुतस्त्वमागतः सूत कस्माद्देशादिहाऽऽगतः । कारणं चाऽऽगमे ब्रूहि वृन्दारकसमद्युते ॥ १३

सूत उवाच—

पित्राऽहं तु समादिष्टो व्यासशिष्येण धीमता । शुश्रूषस्व मुनीन्गत्वा यत्तु पृच्छन्ति तद्वद ॥ १४

वदन्तु भगवन्तो मां कथयामि कथां तु याम् । पुराणं चेतिहासं वा धर्मानथ पृथग्विधान् ॥ १५

तां गिरं मधुरां तस्य श्रुत्वा तु ऋषिसत्तमाः । अथ तेषां पुराणस्य शुश्रूषा समपद्यत ॥ १६

---

१ क. ख. च. ज. वः । २ क. ख. ङ. च. °णानि खि° । अत्र खिलशब्देन हरिवंशादि गृह्यते—( मनु० अ० २ श्लो० २३२ ) । ३ क. ख. ङ. च. ज. °नि जानीमो वेदवि° । ४ घ. °भ्यो वेदवि° । ५ क. बहुलीयैश्च । ६ क. ख. च. °ष्टे नु चा° । ७ क. ङ. च. ज. वदता । ८ ग. घ. पृच्छतो यात मियतात्प° ।

दृष्ट्वा तमतिविश्वस्तं विद्वांसं लौमहर्षणिम् । तस्मिन्सत्रे गृहपतिः सर्वशास्त्रविशारदः ॥ १७
शौनको नाम मेधावी विज्ञानारण्यके गुरुः । इत्थं तैर्भावमालम्ब्य धर्मान्शुश्रूषुराह तम् ॥ १८

शौनक उवाच—

त्वया सूत महाबुद्धे भगवान्ब्रह्मवित्तमः । इतिहासपुराणार्थं व्यासः सम्यगुपासितः ॥ १९
दुदोहिथ मतिं तस्य त्वं पुराणाश्रयां शुभाम् । अमीषां विप्रमुख्यानां पुराणं प्रति या मतिः २०
शुश्रूषाऽऽस्ते महाबुद्धे तच्छ्रावयितुमर्हसि । सर्वे हीमे महात्मानो नानागोत्राः समागताः ॥ २१
स्वान्स्वानंशान्पुराणोक्ताञ्शृणुध्वं(ण्वन्तु) ब्रह्मवादिनः।संपूर्णे दीर्घसत्रेऽस्मिंस्तांस्त्वं श्रावय वै मुनीन्
पाद्मं पुराणं सर्वेषां कथयस्व महामते । कथं पद्मं समुद्भूतं ब्रह्मा तत्र कथं भवेत् ॥ २३
प्रोद्भूतेन कथं सृष्टिः कृता तां तु तथा वद । एवं पृष्टस्ततस्तांस्तु प्रत्युवाच शुभां गिरम् ॥ २४
सूक्ष्मं च न्यायसंयुक्तं मब्रूया(प्राब्रवी)द्रौमहर्षणिः । प्रीतोऽस्म्यनुगृहीतोऽस्मि भवद्भिस्त्वत्र चोदनात्
पुराणार्थं पुराणज्ञैः सर्वधर्मपरायणैः । यथाश्रुतं सुविख्यातं तत्सर्वं कथयामि वः ॥ २६
एष धर्मस्तु सूतस्य सद्भिर्दृष्टः सनातनः । देवतानामृषीणां च राज्ञाममिततेजसाम् ॥ २७
तद्वंशैकारणं कार्यं स्तुतीनां (?) च महात्मनाम् । इतिहासपुराणेषु दृष्टा ये ब्रह्मवादिनः ॥ २८
न हि वेदेष्वधिकारः कश्चित्सूतस्य दृश्यते । वैन्यस्य हि पृथोर्यज्ञे वर्तमाने महात्मनः ॥ २९
मागधश्चैव सूतश्च स्तुवन्तौ तं नरेश्वरम् । तुष्टेनाथ तयोर्दत्तो वरो राज्ञा महात्मना ॥ ३०
सूताय सूतविषयं मगधं मागधाय च । तत्र सूत्यां समुत्पन्नः सूतो नामेह जायते ॥ ३१
ऐन्द्रे सत्रे प्रवृत्ते तु गृ(ग्र)हयुक्तं बृहस्पतिम् । तमिवेन्द्रं (?)वार्हस्पत्ये तत्र सूतो व्यजायत ॥ ३२
शिष्यहस्तेन यत्पृक्तमभिभूतं गुरोर्हविः । अधरोत्तरधारेण जज्ञे तद्वर्णसंकरम् ॥ ३३
यत्र(श्च)क्षे(क्ष)त्रात्समभवद्ब्राह्मण्याः स च योनितः । पूर्वेणैव तु साधर्म्याद्ये धर्मास्ते प्रकीर्तिताः
मध्यमो ह्येष सूतस्य धर्मः क्षेत्रोपजीविनः । पुराणेष्वधिकारो मे विहितो ब्राह्मणैरिह ॥ ३५
*द्रष्टुं धर्ममहं पृष्टो भवद्भिर्ब्रह्मवादिभिः । य(त)स्मात्सम्यग्भुवि ब्रूयां पुराणमृषिपूजितम् ॥ ३६
+पितॄणां मानसी कन्या वासवं समपद्यत । अपि ध्याता च पितृभिर्मत्स्यगर्भे बभूव सा ॥ ३७
अरणीव हुताशस्य निमित्तं पुण्यजन्मनः । तस्यां बभूव भूतात्मा महर्षिस्तु पराशरात् ॥ ३८
तस्मै भगवते कृत्वा नमः सत्याय वेधसे । पुरुषाय पुराणाय ब्रह्मवाक्यानुवर्तिने ॥ ३९
माधवब्रह्मरूपाय विष्णवे शंसितात्मने । जातमात्रं च यं वेद उपतस्थे ससंग्रहः ॥ ४०
मतिप(म)न्थानमाविध्य येनास्मै श्रु(स्माच्छ्रु)तिसागरात् । प्रकाशो जनितो लोके महाभारतचन्द्रमाः
भारतं भानुमानिन्दुर्यदि न स्युरमी त्रयः । ततोऽज्ञानतमोन्धस्य *काऽवस्था जगतो भवेत् ॥ ४२
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् । को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ॥ ४३
तस्मादहमुपश्रुत्य पुराणं ब्रह्मवादिनम् । सर्वज्ञं सर्वलोकेषु पूजितं दीप्ततेजसम् ॥ ४४
पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् । त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥ ४५
निःशेषेषु च लोकेषु वाजिरूपेण केशवः । ब्रह्मणस्तु समादेशाद्वेदानाहृतवानसौ ॥ ४६

* इष्टमिति क्वचित्पाठः । + एतदर्धस्थाने 'सा च सत्यवती नाम्ना त्रिषु लोकेषु विश्रुता' इत्यर्धं दृश्यतेऽग्रेतनमर्धं च न दृश्यते । * का कथेति क्वचित्पाठः ।

१ क. °नासत्राः । २ ग. घ. ज. °शधारे° । ३ क. ख. ङ. च. ज. °रवारे° । ४ ङ. ज. ज. °भिः । कस्मान्मनागभु° । ५ क. ख. घ. ङ. च. ज. अपध्या° ।

अङ्गानि चतुरो वेदान्पुराणानि च सर्वशः । मत्स्यरूपेणाऽऽजहार कल्पादावुदकार्णवे ॥ ४७
अशेषमेतत्कथितमुदकान्तर्गतो विभुः । श्रुत्वा जगाद च मुनीन्प्रति *वेदांश्चतुर्मुखः ॥ ४८
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्तदा । कालेनाग्रहणं दृष्ट्वा पुराणस्य तदा विभुः ॥ ४९
व्यासरूपं त(स्त)दा ब्रह्मा संग्रहार्थं युगे युगे । चतुर्लक्षप्रमाणेन द्वापरे द्वापरे विभुः ॥ ५०
तदाऽष्टादशधा कृत्वा भूर्लोकेऽस्मिन्प्रकाशते । अद्यापि देवलोकेषु शतकोटिप्रविस्तरम् ॥ ५१
चतुर्लक्षप्रमाणेन भूर्लोकेऽत्र निवेशितम् । ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये ॥ ५२
एतदेव च वै ब्रह्मा पाद्मं लोके जगाद वै । सर्वभूताश्रयं तच्च पाद्ममित्युच्यते बुधैः ॥ ५३
पाद्मं तत्पञ्च पञ्चाशत्सहस्राणीह पठ्यते । पञ्चभिः पर्वभिः प्रोक्तं संक्षेपाद्व्यासकारणात् ॥ ५४
पौष्करं प्रथमं पर्व यत्रोत्पन्नः स्वयं विराट् । द्वितीयं तीर्थपर्व स्यात्सर्वग्रहगणाश्रयम् ॥ ५५
तृतीयपर्वग्रहणे राजानो भूरिदक्षिणाः । वंशानुचरितं चैव चतुर्थे परिकीर्तितम् ॥ ५६
पञ्चमं मोक्षतत्त्वं च सर्वज्ञत्वं (?) निगद्यते । पौष्करे नवधा सृष्टिः सर्वेषां ब्रह्मकारिका ॥ ५७
देवतानां मुनीनां च पितृवर्गस्तथाऽपरः । द्वितीये पर्वतानां च द्वीपाः सप्त च सागराः ॥ ५८
तृतीये रुद्रसर्गस्तु दक्षशापस्तथैव च । चतुर्थे संभवो राज्ञां सर्ववंशानुकीर्तनम् ॥ ५९
अपवर्गस्य संस्थानं मोक्षशास्त्रानुकीर्तनम् । सर्वमेतत्पुराणेऽस्मिन्कथयिष्यामि वो द्विजाः ॥ ६०
इदं पवित्रं यशसो निधानमिदं पितॄणामतिवल्लभं स्यात् ।
इदं च देवस्य सुखाय नित्यमिदं महापातकाभिच्च पुंसाम् ॥ ६१

इति श्रीमहापुराणे पाद्मे पञ्चमे क्रियाखण्डापरनामधेये सृष्टिखण्डे पुराणावतारे प्रथमोऽध्यायः ॥ १ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९६५८

---

अथ द्वितीयोऽध्यायः ।

---

सूत उवाच—

नमस्ये सर्वभूतानां विश्वस्य जगतः पतिम् । य इमं पश्यते भावं सृष्टिरूपप्रधानवित् ॥ १
लोककल्लोकतत्त्वज्ञो योगमास्थाय योगवित् । असृजत्सर्वभूतानि स्थावराणि चराणि च ॥ २
तमजं विश्वकर्माणं चित्पतिं लोकसाक्षिणम् । पुराणाख्यानजिज्ञासुर्व्रजामि शरणं विभुम् ॥ ३
ब्रह्मविष्णुगिरीशेभ्यो नमः कृत्वा समाहितः । इन्द्राय लोकपालेभ्यः सवित्रे च समाधिना ॥ ४
मुनीनां च वरिष्ठाय वसिष्ठाय महात्मने । तस्मै भगवते नत्वा वेदव्यासाय वेधसे ॥ ५
पुरुषाय पुराणाय भृगुवाक्यानुवर्तिने । तस्मादहमुपाश्रित्य पुराणं ब्रह्मवादिनः ॥ ६
सर्वज्ञात्सर्वलोकेषु पूजिताद्दीप्ततेजसः । अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम् ॥ ७
महदादिविशेषान्तं सृजतीति विनिश्चयः । अण्डे हिरण्मये पूर्वं ब्रह्मणः सूतिमुत्तमाम् ॥ ८
अण्डस्याऽऽवरणं चाद्भिरपामपि च तेजसा । वायुना तस्य वायोः खं तद्भूतादिभिरावृतम् ॥ ९

---

* चतुर्मुखादिति क्वचित्पाठः ।

१ झ. जगाम । २ झ. °ति वेदं स्वयंभुवः । प्र° । ३ क. ङ. च. ज. °गे । सदा एव प्र° । ४ क. ङ. च. ज. °म् । तदा अत्र चतुर्लक्षे संक्षेपेण निवेशितः । ब्र° । ५ क. ख. ङ. च. घ °रिकात् । दे° । घ. °रितात् । दे° । ६ क. ख. झ. च. ज. °र्वलोकानां । ७ क. ङ चिन्तितं । ख. घ. च ज. चित्पतिं ।

भूतादिर्महता वाऽपि अव्यक्तेनाऽऽवृतो महान् । प्रादुर्भावश्च लोकानामण्डमेवोपवर्णितम् ॥ १०
नदीनां पर्वतानां च प्रादुर्भावोऽनुवर्ण्यते । मन्वन्तराणां संक्षेपात्कल्पानां चोपवर्णनम् ॥ ११
ब्रह्मपब्रस्य यो ब्रह्मा प्रजासर्गोपवर्णनम् । कल्पानां संचरश्चैव जगतः स्थापनं तथा ॥ १२
शयनं च हरेरप्सु पृथिव्युद्धरणं पुनः । दशधा जन्मसंचारो भृगुशापेन केशवे ॥ १३
संनिवेशो युगादीनां सर्वाश्रमविभाजनम् । स्वर्गस्थानविभागश्च मर्त्यानां स्वर्गचारिणाम् ॥ १४
पशूनां पक्षिणां चैव संभवः परिकीर्तितः । तथा निर्वचनं कल्पं स्वाध्यायस्य परिग्रहम् ॥ १५
प्रतिसर्गाः पुनः प्रोक्ता ब्रह्मणा बुद्धिपूर्वकम् । त्रयोऽन्ये बुद्धिपूर्वास्ते तथा लोकानकल्पयत् ॥ १६
ब्रह्मणो वदनेभ्यश्च भृग्वादीनां समुद्भवः । कल्पयोरन्तरं प्रोक्तं प्रतिसंधिश्च सर्गयोः ॥ १७
भृग्वादीनामृषीणां च प्रजासर्गोपवर्णनम् । वसिष्ठस्य च ब्रह्मर्षेर्ब्रह्मत्वं परिकीर्तितम् ॥ १८
स्वायंभुवस्य च मनोर्व[[३]][श] स्याप्यनुकीर्तनम् । उक्तो[[४]] नाभेतिसर्गश्च रजसश्च महात्मनः ॥ १९
द्वीपानां च समुद्राणां पर्वतानां च कीर्तनम् । द्वीपभेदसमुद्राणामन्तर्भावश्च सप्तसु[[५]] ॥ २०
कीर्त्यन्ते ये जनाग्रेण(?) ये च तत्र निवासिनः । भारतादीनि वर्षाणि नदीभिः पर्वतैः सह २१
जम्बूद्वीपादयो द्वीपाः समुद्रैः सप्तभिर्वृताः । अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी २२
सूर्याचन्द्रमसोश्चारो ग्रहाणां ज्योतिषां तथा । कीर्त्यते ध्रुवसामर्थ्यात्प्रजानां च शुभाशुभम् ॥ २३
ब्रह्मणा निर्मितः सौरः स्यन्दनोऽर्थवशात्स्वयम् । कल्पितो भगवांस्तेन प्रसर्पति दिवाकरः २४
सूर्यादीनां स्यन्दनानां ध्रुवादेव प्रवर्तनम् । कीर्त्यते शिशुमारश्च यस्य पुच्छे ध्रुवः स्थितः ॥ २५
संभवान्ते च संहारः संहारान्ते च संभवः । देवतानामृषीणां च मनोः पितृगणस्य च ॥ २६
न शक्यं विस्तराद्वक्तुमित्युक्तं च समासतः । अतीतानागतानां वै स्वयं[[११]] स्वायंभुवेन तु ॥ २७
मन्वन्तरेषु देवानां प्रजेशानां[[१२]] च कीर्तनम् । नैमित्तिकः प्राकृतिकस्तथैवौत्पत्तिकः स्मृतः ॥ २८
त्रिविधः सर्वभूतानां कीर्त्यते प्रतिसंचरः । अनावृष्टिर्भास्कराच्च घोरः संवर्तकानलः ॥ २९
मेघाश्चैकार्णवा येषु तथा रात्रिर्महात्मनः । संध्यालक्षणमुद्दिष्टं तथा ब्राह्मं विशेषतः ॥ ३०
भूतानां चापि लोकानां सप्तानामनुवर्णनम् । संकीर्त्यन्ते मया चात्र पापानां रौरवादयः ॥ ३१
सर्वेषामेव सत्त्वानां परिणामविनिर्णयः । ब्रह्मणः प्रतिसर्गश्च सर्वसंहारवर्णनम् ॥ ३२
कल्पे कल्पे च भूतानां महतामपि संक्षयः (यम्) । सुसंख्याय च बुद्ध्वा वै ब्रह्मणश्चाप्यनित्यताम्
दौरात्म्यं चैव भोगानां संसारस्य च कष्टताम् । दुर्लभत्वं च मोक्षस्य वैराग्याद्दोषदर्शनम् ३४
व्यक्ताव्यक्तं परित्यज्य सत्त्वं ब्रह्मणि संस्थितम् । नानात्वदर्शनात्स्वस्थस्ततस्तदभिवर्तते ॥ ३५
ततस्तापत्रयातीतो विरूपाक्षो निरञ्जनः । आनन्दं ब्रह्मणः प्राप्तो न बिभेति कुतश्चन ॥ ३६
इति कृत्यसमुद्देशः प्रमाणस्योपवर्णितः । कीर्त्यन्ते जगतो यत्र सर्गप्रलयविक्रियाः ॥ ३७
प्रवृत्तिश्चापि भूतानां निवृत्तीनां फलानि च । प्रादुर्भावो वसिष्ठस्य शक्तेर्जन्म तथैव च ॥ ३८
सौदामिनी[[१३]] च हस्तस्य विश्वामित्रकृतेन च । पराशरस्य चोत्पत्तिरदृश्यन्त्यां यथा विभोः ॥ ३९
जज्ञे पितॄणां कन्यायां व्यासश्चापि यथा मुनिः । शुकस्य च यथा जन्म पुत्रस्य सहधीमतः ॥ ४०

---

१ क. ख. घ. ङ. च. ज °ह्मवृक्षस्य । २ क. ख. ज. °म् । सर्ग° । ङ. च. °म् । सर्गास्था° । ३ क. ख. घ. ङ. ज. °नोस्ततश्चाप्य° । ४ क. उक्ते नाभोविस° । ५ ङ. ज नाभेर्विस° । ६ क. ज. ङ. °सु । कल्पितो योज° । ७ घ. °न्ते योज° । ८ स. । ख. ङ. च. ज °नः । तदीयानि च । ९ क. प्रकीर्तितम् । ज. प्रकीर्त° । १० क. ख. ङ. च. ज. कल्पितः । ११ °थैवाऽऽत्यन्तिकः । १२ क. ङ. च. ज. कल्पितः । १३ क. ख. ङ. च. ज. सौदासाभिग्रह° ।

पराशरस्य विद्वेषो विश्वामित्रकृतो यथा । वसिष्ठसंभृतश्चाग्निर्विश्वामित्रजिघांसया ॥ ४
संधानहेतोर्विभुना जीर्णः कण्वेन धीमता । देवेन विप्रा विप्राणां विश्वामित्रहितैषिणा ॥ ४
एकं वेदं चतुष्पादं चतुर्धा पुनरीश्वरः । यथा च वेद भगवान्व्यासः *स(श)र्वादनुग्रहात् ॥ ४
तस्य शिष्यप्रशिष्यैश्च शाखाभेदाः पुनः कृताः । प्रयागे पट्कुलीयैश्च यथा पृष्टः स्वयंप्रभुः॥ ४
कृष्णेन चातुशास्तास्ते मुनयो धर्मकाङ्क्षिणः । एतत्सर्वं यथातत्त्वमाख्यातं द्विजसत्तमाः ॥ ४८
मुनीनां धर्मनित्यानां लोकोत्तरमनुत्तमम् । ब्रह्मणा यत्पुरा प्रोक्तं पुलस्त्याय महात्मने ॥ ४६
पुलस्त्येनाथ भीष्माय गङ्गाद्वारे प्रभाषितम् । धन्यं यशस्यमायुष्यं सर्वपापप्रणाशनम् ॥ ४७
कीर्तनं श्रवणं चास्य धारणं च विशेषतः । सूतेनानुक्रमेणेदं पुराणं संप्रकाशितम् ॥ ४८
ब्राह्मणेषु पुरा यच्च ब्रह्मणोक्तं सुविस्तरम् । पादमस्य विदन्सम्यग्योऽधीयीत जितेन्द्रियः॥ ४९
तेनाधीतं पुराणं स्यात्सर्वं नास्त्यत्र संशयः । यो विद्याच्चतुरो वेदान्साङ्गोपनिषदो द्विजः ॥ ५०
पुराणं च विजानाति यः स तस्माद्विचक्षणः । इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥ ५१
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति । अधीत्य चेममध्यायं स्वयंप्रोक्तं स्वयंभुवा ॥ ५२
आपदः प्राप्य मुच्येत यथेष्टां प्राप्नुयाद्गतिम् । पुरापरंपरां वष्टि पुराणं तेन वै स्मृतम् ॥ ५३
निरुक्तिमस्य यो वेद सर्वपापैः प्रमुच्यते । ऋषयोऽप्यब्रुवन्सूतं कथं भीष्मेण धीमता ॥ ५४
ब्रह्मणो मानसः पुत्रः पुलस्त्यो भगवानृषिः । दुर्लभं दर्शनं यस्य नरैः पापसमन्वितैः ॥ ५५
अत्याश्चर्यमिदं सूत क्षत्रियेण कथं मुनिः । आराधितो बृहच्छ्रुतस्तन्नो वद महामुने ॥ ५६
कीदृशं वा तपस्तेन को वाऽन्यो नियमः कृतः । येन तुष्टो मुनिर्ब्राह्मस्तथा तेन प्रभाषते ॥ ५७
पर्व वाऽप्यर्धपर्व वा समग्रं वा प्रभाषितम् । यस्मिन्स्थाने यथा पृष्टः पुलस्त्यो भगवानृषिः॥
तन्नो वद महाभाग कल्पाः स्म श्रवणे वयम् । ५८

सूत उवाच—

यत्र गङ्गा महाभागा साधूनां हितकारिणी । विभिद्य पर्वतं वेगान्निःसृता लोकपावनी ॥ ५९
गङ्गाद्वारे महातीर्थे भीष्मः पितृपरायणः । शुश्रूषुः सुचिरं कालं महतां नियमे स्थितः ॥ ६०
यावद्वर्षशतं साग्रं परमेण समाधिना । ध्यायमानः परं ब्रह्म त्रिकालं स्नानमाचरन् ॥ ६१
पितॄन्देवांस्तर्पयतः स्वाध्यायेन महात्मनः । आत्मानं कर्षतश्चास्य तुष्टो देवः पितामहः ॥
उवाच तनयं ब्रह्मा पुलस्त्यमृषिसत्तमम् ॥ ६२

ब्रह्मोवाच—

स त्वं देवव्रतं भीष्मं वीरं कुरुकुलोद्वहम् । तपसः संनिवर्तस्व कारणं चास्य कीर्तय ॥ ६३
पितृभक्त्या महाभागो ध्यायमानस्तमास्थितः । यो ह्यस्य मनसः कामस्तं संपादय मा चिरम् ॥
पितामहवचः श्रुत्वा पुलस्त्यो मुनिसत्तमः । गङ्गाद्वारमथाऽऽगत्य भीष्मं वचनमब्रवीत् ॥ ६५

पुलस्त्य उवाच—

वरं वरय भद्रं ते यत्ते मनसि वर्तते । तुष्टस्ते तपसा वीर साक्षाद्देवः पितामहः ॥ ६६
ब्रह्मणा प्रेषितस्तेऽहं वरान्दास्यामि काङ्क्षितान् ॥ ६७
भीष्मोऽपि तद्वचः श्रुत्वा मनःश्रोत्रसुखावहम् । उन्मील्य नयने दृष्ट्वा पुलस्त्यं पुरतः स्थितम् ६८

* शार्वादनुग्रहादिति क्वचित्पाठः ।

१ क. ख. घ. ङ. च. ज. लोकतन्त्रम° । २ क. ख. ङ. च. अर्थे । ३ क. ख. ङ. च. च. महामते ।

ष्टाङ्गप्रणिपातेन नत्वा तं मुनिसत्तमम् । उवाच प्रणतो भूत्वा सर्वाङ्गालिङ्गितावनिः ॥ ६९

भीष्म उवाच—

अद्य मे सफलं जन्म दिनं चेदं सुशोभनम् । भवतश्चरणौ दृष्टौ जगद्वन्द्यौ मया त्विह ॥ ७०
तपसश्च फलं सर्वं यद्दृष्टो भगवान्मया । वरप्रदो विशेषेण संप्राप्तश्च नदीतटे ॥ ७१
इयं वृषी मया क्लृप्ता आस्यतां सुखदा कृता । अर्घः पात्रे तु पालाशे दूर्वाक्षतसुमैः कुशैः ॥ ७२
सर्षपैश्च दधिक्षौद्रैर्यवैश्च पयसा सह । अष्टाङ्गो ह्येष निर्दिष्टो ह्यर्घो हि मुनिभिः पुरा ॥ ७३
श्रुत्वैतद्वचनं तस्य भीष्मस्यामिततेजसः । उपविष्टो ब्रह्मसुतः पुलस्त्यो भगवानृषिः ॥ ७४
विष्टरं सह पाद्येन अर्घपात्रं मुदाऽन्वितः । तुतोष भगवान्प्रीतः सदाचारेण तेन तु ॥ ७५

पुलस्त्य उवाच—

सत्यवान्दानशीलोऽसि सत्यसंधिर्नरेश्वरः । ह्रीमान्मैत्रः क्षमाशीलो विक्रान्तः शत्रुशासने ॥ ७६
धर्मज्ञस्त्वं कृतज्ञस्त्वं दयावान्प्रियभाषिता । मान्यमानयिता विज्ञो ब्रह्मण्यः साधुवत्सलः ॥ ७७
तुष्टस्तेऽहं सदा वत्स प्रणिपातपरस्य ते । प्रब्रूहि त्वं महाभाग कथनं ते वदाम्यहम् ॥ ७८

भीष्म उवाच—

भगवन्भगवान्ब्रह्मा कस्मिंन्स्थाने स्थितो विभुः । सृष्टिं चकार वै पूर्वं देवादीनां वदस्व मे ॥ ७९
कथं वा भगवान्विष्णुः कथं रुद्रः समानि च । *कथं वा पर्वतांश्चोग्रानरण्यानि पुराणि च ॥ ८०
मुनीन्प्रजापतींश्चैव सप्तर्षीन्प्रवरानपि । वर्णान्वायुं पुरास्थानं गन्धर्वान्यक्षराक्षसान् ॥ ८१
तीर्थानि सरितो वाऽथ सूर्यादीन्ग्रहतारकान् । यथा ससर्ज भगवांस्तथा मे त्वं वदस्व ह ॥ ८२

पुलस्त्य उवाच—

परः पराणां परमः परमात्मा पितामहः । रूपवर्णादिरहितो विशेषेण विवर्जितः ॥ ८३
अपि वृद्धिविनाशाभ्यां परिणामविजन्मभिः । गुणैर्विवर्जितः सर्वैः स भातीति हि केवलम् ॥ ८४
सर्वत्रासौ समश्चापि वसन्ननुयमो मतः । भावयन्ब्रह्मरूपेण विद्वद्भिः परिपठ्यते ॥ ८५
तं गुह्यं परमं नित्यमजमक्षयमव्ययम् । तथा पुरुषरूपेण कालरूपेण संस्थितम् ॥ ८६
तं नत्वाऽहं प्रवक्ष्यामि यथा सृष्टिं चकार ह । पूर्वं तु पद्मशयनादुत्थाय जगतः प्रभुः ॥ ८७
गुणव्यञ्जनसंभूतः सर्गकाले नराधिप । सात्त्विको राजसश्चैव तामसश्च त्रिधा महत् ॥ ८८
प्रधानतत्त्वेन समं तथा बीजादिभिर्वृतम् । वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ॥ ८९
त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत । भूतेन्द्रियाणां पञ्चानां तथा कर्मेन्द्रियैः सह ॥ ९०
पृथिव्यापस्तथा तेजो वायुराकाशमेव च । एकैकस्य स्वरूपेण कथयामि यथोत्तरम् ॥ ९१
शब्दमात्रं तथाऽऽकाशं भूतादिः स समावृणोत् । बलवानेव वै वायुस्तस्य स्पर्शो गुणो मतः ९२
ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह । ज्योतीरूपेण तं वा(तद्वा)योस्तद्रूपगुणमुच्यते ॥ ९३
स्पर्शरूपस्तु वै वायू रूपमात्रं समावृणोत् । ज्योतिश्चापि विकुर्वाणं रसमात्र ससर्ज ह ॥ ९४
संभवन्ति ततोऽम्भांसि रूपमात्रं समावृणोत् । विकुर्वाणानि चाम्भांसि गन्धमात्रं ससर्जिरे ॥ ९५

* घ. पुस्तके " कथं वा ऋषयो देवाः सृष्टास्तेन महात्मना । कथं पृथ्वी कथं व्योम कथं चेमे च सागराः " इति पाठो दृश्यते ।

१ ग. घ. °तसमित्कुशैः । २ क. ख. ङ. च ते ददा° । ३ क. ख. घ. ङ. च. ज. °स्मिन्काले स्थि° । ४ घ. रुद्रस्तु निर्मितः । क° ।

संघातो जायते तस्मात्तस्य गन्धो मतो गुणः । तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ॥ ९६
एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः । त्वक्चक्षुर्नासिका जिह्वा श्रोत्रमत्र च पञ्चमम् ॥ ९७
शब्दादिज्ञानसिद्ध्यर्थं बुद्धियुक्तानि पञ्च वै । पायूपस्थं हस्तपादौ कीर्तिता वाक्च पञ्चमी ॥ ९८
विसर्गशिल्प(र्गानन्दसिद्धिश्च)गत्युक्तिर्गुणदोषौ च कथ्यते (क्ती कर्म तत्स्मृतम्) ।
आकाशवायुतेजांसि सलिलं पृथिवी तथा ॥ ९९
शब्दादिभिर्गुणैर्वीर युक्तानीत्युत्तरोत्तरैः । शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ॥ १००
नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ १०१
समेत्यान्योन्यसंयोगात्परस्परसमाश्रयात् । एकसंहारलक्ष्याश्च संप्राप्यैक्यमशेषतः ॥ १०२
पुरुषाधिष्ठितत्वाच्च व्यक्तानुग्रहणे तथा । महदादयो विशेषान्ता ह्यण्डमुत्पादयन्ति वै ॥ १०३
तत्क्रमेण विवृत्तं(द्धं) तु जलबुद्बुदवत्समम् । तत्राव्यक्तस्वरूपोऽसौ व्यक्तरूपी जनार्दनः ॥ १०४
ब्रह्मा ब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः । मेरुरुल्बमभूत्तस्य जरायुश्च महीधराः ॥ १०५
गर्भोदकं समुद्राश्च तस्याऽऽसंश्च महात्मनः । तत्र द्वीपाः समुद्राश्च सज्योतिर्लोकसंग्रहः ॥ १०६
तस्मिन्नण्डेऽभवन्वीर सदेवासुरमानुषाः । वारिवह्न्यनिलाकाशैर्वृतैर्भूतादिना बहिः ॥ १०७
वृतं दशगुणैरण्डं भूतादिर्महता तथा । अव्यक्तेनाऽऽवृतो राजंस्तैः सर्वैः सहितो महान् ॥ १०८
एभिरावरणैः सर्वैः सर्वभूतैश्च संयुतम् । नारिकेलफलं यद्वद्बीजं ब्राह्मफलैरिव ॥ १०९
ब्रह्मा स्वयं च जगतो विसृष्टौ संप्रवर्तते । सृष्टिं च यात्यनुयुगं यावत्कल्पविकल्पना ॥ ११०
स संज्ञां याति भगवानेक एव जनार्दनः । सत्त्वभृग्गुणवान्देवो ह्यप्रमेयपराक्रमः ॥ १११
तमोद्रेकं च कल्पान्ते रूपं रौद्रं करोति च । राजेन्द्राखिलभूतानि भक्षयत्यतिभीषणः ॥ ११२
भक्षयित्वा च भूतानि जगत्येकार्णवीकृते । नागपर्यङ्कशयने शेते सर्वस्वरूपधृक् ॥ ११३
प्रबुद्धश्च पुनः सृष्टिं प्रकरोति च रूपधृक् । सृष्टिस्थित्यन्तकरणाद्ब्रह्मविष्णुशिवात्मकः ॥ ११४
स्रष्टा सृजति चाऽऽत्मानं विष्णुः पाल्यं च पाति च । उपसंह्रिय(हर)ते चापि संहर्ता च स्वयंप्रभुः
पृथिव्यापस्तथा तेजो वायुराकाशमेव च । स एव सर्वभूतेशो विश्वरूपो यतोऽव्ययः ॥
सर्गादिकं ततोऽस्यैव भूतस्थमुपकारकम् ॥ ११६

स एव सृज्यः स च सर्गकर्ता स एव पाल्यं प्रति पाल्यते गतः ।
ब्रह्माद्यवस्थाभिरशेषमूर्तिर्ब्रह्मा वरिष्ठो वरदो वरेण्यः ॥ ११७

इति श्रीमहापुराणे पाद्मे पञ्चमे सृष्टिखण्डे सृष्टिकरणं नाम द्वितीयोऽध्यायः ॥ २ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९७७५

---

अथ तृतीयोऽध्यायः ।

---

भीष्म उवाच—

निर्गुणस्याप्रमेयस्य शुद्धस्यापि महात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणो ह्युपपद्यते ॥ १

पुलस्त्य उवाच—

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । यत्ततो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ २

उत्पन्नः प्रोच्यते विद्वान्नित्य एवोपचारतः । निजेन स्वस्वमानेन आयुर्वर्षशतं स्मृतम् ॥ ३
तत्पराख्यं परार्धं च तदर्धं परिकीर्तितम् । काष्ठा पञ्चदशाऽऽख्याता निमेषा मुनिसत्तमाः ॥ ४
काष्ठास्त्रिंशत्कलास्त्रिंशत्कालो मौहूर्तिको विधिः । तावत्संख्यैरहोरात्रं मुहूर्तैर्मानुषं स्मृतम् ॥ ५
अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः । स्वप्रमाणैः शतैः संध्या पूर्वा तत्राभिधीयते ॥ ६
संध्यांशकश्च तत्तुल्यो युगस्यानन्तरो हि यः । संध्यासंध्यांशयोरन्तः कालो यो नृपसत्तम ॥ ७
युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञितः । कृतं त्रेता द्वापरश्च कलिश्चैव चतुर्युगम् ॥ ८
प्रोच्यते तत्सहस्रं तु ब्रह्मणो दिवसं(सो) नृप । ब्रह्मणो दिवसे राजन्मनवश्च चतुर्दश ॥ ९
भवन्ति परिमाणं च तेषां कालकृतं शृणु । सप्तर्षयः सुराः शक्रो मनुस्तत्सूनवो नृप ॥ १०
एककाले ह सृज्यन्ते संह्रियन्ते च पूर्ववत् । चतुर्युगाणां संख्याता साधिका ह्येकसप्ततिः ॥ ११
मन्वन्तरं मनोः कालः सुरादीनां च पार्थिव । अष्टौ शतसहस्राणि दिव्यया संख्यया स्मृतः १२
द्वापञ्चाशत्तथाऽन्यानि सहस्राण्यधिकानि च । त्रिंशत्कोट्यस्तु संपूर्णाः संख्याताः संख्यया नृप
सप्तषष्टिस्तथाऽन्यानि नियुतानि महामते । विंशतिश्च सहस्राणि कालोऽयमधिकं विना ॥ १४
मन्वन्तरस्य संख्येयं मानुषैरिह वत्सरैः । सोऽयं मनुप्रमाणेन कालो ब्राह्ममहः स्मृतम् ॥ १५
ब्राह्मो नैमित्तिको नाम तस्यान्ते प्रतिसंचरः । तदादि दह्यते सर्वं त्रैलोक्यं भूर्भुवादिकम् १६
जनं प्रयान्ति तापार्ता महर्लोकनिवासिनः । एकार्णवे तु त्रैलोक्ये ब्रह्मा ब्रह्मविदां वरः ॥ १७
भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहितः । जनस्थैर्योगिभिर्देवश्चिन्त्यमानो जगद्विभुः ॥ १८
तत्प्रमाणां हि तां रात्रिं तदन्ते सृजते पुनः । एवं तु ब्रह्मणो वर्षमेवं वर्षशतं च यत् ॥ १९
शतं हि तस्य वर्षाणां परमायुर्महात्मनः । प्रजाः ससर्ज भगवांस्तत्राऽऽदिः सर्वसंभवः ॥ २०
अतीतकल्पावसाने निशासुप्तोत्थितः प्रभुः । सत्त्वोद्रिक्तस्तथा ब्रह्मा शून्यं लोकमपश्यत ॥ २१
तोयान्ते स महीं ज्ञात्वा निमग्नां वारिसंप्लवे । प्रविचिन्त्य तदुद्धारं कर्तुकामः प्रजापतिः ॥ २२
विष्णुरूपं तदा ज्ञात्वा पृथ्वीं वोढुं स्वतेजसा । मत्स्यकूर्मादिकांश्चान्यान्वाराहीं तनुमाविशत् २३
वेदयज्ञमयं रूपमशेषजगतः स्थितौ । प्रविवेश तदा तोयं तोयाधारे धराधरः ॥ २४
निरीक्ष्य तं तदा देवी पातालतलमागतम् । तुष्टाव प्रणता भूत्वा भक्तिनम्रा वसुंधरा ॥ २५

पृथिव्युवाच—

नमस्ते सर्वभूताय नमस्ते परमात्मने । मामुद्धरास्मादद्य त्वं त्वत्तोऽहं पूर्वमुत्थिता ॥ २६
परमात्मन्नमस्तेऽस्तु पुरुषाय नमोऽस्तु ते । प्रधानव्यक्तरूपाय कालभूताय ते नमः ॥ २७
त्वं कर्ता सर्वभूतानां त्वं पाता त्वं विनाशकृत् । सर्गादौ यः परो ब्रह्मा विष्णुरुद्रात्मरूपधृक् २८
भवतो यत्परं रूपं तन्न जानाति कश्चन । अवतारेषु यद्रूपं तदर्थं त्रिदिवौकसः ॥ २९
त्वामाराध्य परं ब्रह्म याता मुक्तिं मुमुक्षवः । वासुदेवमनाराध्य को मोक्षं समवाप्स्यते ॥ ३०
यद्रूपं मनसा ग्राह्यं यद्ग्राह्यं चक्षुरादिभिः । बुद्ध्या च यत्परिच्छेद्यं तद्रूपमखिलं तव ॥ ३१
त्वन्मयाऽहं त्वदाधारा त्वत्सृष्टा त्वामुपाश्रिता । माधवीमिति लोकोऽयमभिधत्ते ततो हि माम् ३२
स च संस्तूयमानस्तु पृथिव्या पृथिवीधरः । सामस्वरध्वनिः श्रीमाञ्जगर्ज परिघर्घरम् ॥ ३३

१ क. ख. ड. च. ज. °न तस्य मा° । २ अ. °ख्या या सा° । ३ क. ख. घ. ङ. च. ज. °रैः । चतुर्दशगुणो ह्येष का° । ४ क. ख. घ. ङ. च. ज. °म् । एवं सं° ।

ततः समुत्क्षिप्य धरां स्वकीलया महावराहः स्फुटपद्मलोचनः ।
रसातलादुत्पलफुल्लसंनिभः समुत्थितो नील इवाचलो महान् ॥ ३४
उत्तिष्ठता तेन मुखानिलाहतास्तदाप्लवाम्भोजनलोकसंश्रयान् ।
सनन्दनादीनपकल्मषान्मुनींश्चकार भूयोऽपि पवित्रतास्पदम् ॥ ३५
प्रयान्ति तोयानि खुराग्रविक्षते रसातलेऽधः कृतशब्दसंतति ।
श्वासानिलास्ताः परितः प्रयान्ति सिद्धा जना ये नियतं वसन्ति ॥ ३६
उत्तिष्ठतस्तस्य जलार्द्रकुक्षेर्महावराहस्य महीं विदार्य ।
विधुन्वतो वेदमयं शरीरं व्योमान्तरस्था मुनयो जुषन्ति ॥ ३७

मुनय ऊचुः—

जनेश्वराणां परमेशकेशवः प्रभुर्गदाशङ्खवरासिचक्रधृक् ।
प्रसूतिनाशस्थितिहेतुरीश्वरस्त्वमेव नान्यत्परमं च यत्पदम् ॥ ३८
पादेषु वेदास्तव यूपदंष्ट्रा दन्तेषु यज्ञाः श्रुतयश्च वक्त्रे ।
हुताशजिह्वोऽसि तनूरुहाणि दर्भाः प्रभो यज्ञपुमांस्त्वमेव ॥ ३९
द्यावापृथिव्योरतुलप्रभाव यदन्तरं तद्वपुषा तवैव ।
व्याप्तं जगद्वाऽपि समस्तमेतद्धिताय विश्वस्य विभो भव त्वम् ॥ ४०

परमात्मा त्वमेवैको नान्योऽस्ति जगतः पते । तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥ ४१
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते तमसः प्लवे ॥ ४२
ये तु ज्ञानविदो वृद्धाश्चेतसस्तेऽखिलं जगत् । ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥ ४३
प्रसीद सर्वभूतात्मन्भवाय जगतास्त्विमाम् । उद्धरोर्वीममेयात्मन्भिमग्नां जलसंप्लवे ॥ ४४
सत्त्वोद्रिक्तोऽसि भगवन्गोविन्द पृथिवीमिमाम् । समुद्धर भवायेश कुरु सर्वजगद्धितम् ॥ ४५
एवं संस्तूयमानश्च परमात्मा महीधरः । उज्जहार क्षितिं क्षिप्रं न्यस्तवान्स महार्णवे ॥ ४६
तस्योपरि जलौघस्य महती नौरिवाऽऽस्थिता । ततः क्षितिं समां कृत्वा पृथिव्यामुच्चिनोद्गिरीन्
यथाविभागं भगवाननादिः पुरुषोत्तमः । भूरिभारां ततः कृत्वा सप्त द्वीपान्यथातथम् ॥ ४८
भूराद्यांश्चतुरो लोकान्पूर्ववत्समकल्पयत् । ब्रह्मणे विष्णुना पूर्वमेतदेव प्रदर्शितम् ॥ ४९
तुष्टेन देवदेवेन त्वं देवः पुरुषोत्तमः । त्वया मया जगच्चेदं धार्यं पाल्यं च यत्नतः ॥ ५०
येषां त्वसुरमुख्यानां वरो दत्तो मयाऽधुना । देवानां हितकामेन हन्तव्यास्ते त्वया विभो ॥ ५१
अहं सृष्टिं करिष्यामि सा च पाल्या त्वया विभो । एवमुक्तो गतो विष्णुर्देवादीनखिलं विभुः ॥
अबुद्धिपूर्वकस्तस्य प्रादुर्भूतस्तमोमयः । अविद्याँ(द्ये) यं च सर्वेषां प्रादुर्भूता महात्मनः ॥ ५३
पञ्चधाऽवस्थितः सर्गो ध्यायतः प्रतिबुद्धवान् । बहिरन्तश्चाप्रकाशः संवृतात्मान[?]मात्मनः ॥ ५४
मुख्या नागा यतश्चोक्ता मुख्यसर्गस्ततस्त्वयम् । तं दृष्ट्वाऽसाधकं सर्गममन्यदपरं प्रभुः ॥ ५५
तस्याभिध्यायतो नस्तास्तिर्यक्स्रोतोऽभ्यवर्तत । तस्मात्तिर्यक्प्रवृत्तिः स्यात्तिर्यग्जातस्ततः स्मृतः ॥
पश्वादयस्ते विख्यातास्तमःप्राया ह्यवेदिनः । उत्पथग्राहिणश्चैव तेऽज्ञाने ज्ञानमानिनः ॥ ५७

---

१ क. ख. घ. ङ. च. ज. स्वदंष्ट्रया । २ क. ख. ङ. च. °ति । बलाहकानां च ततस्तु तस्य श्वासानिलास्तापरितः प्रयाति । उ° । ३ क. ख. ङ. च. °षु यूपास्तव वेददं° । ४ क. तथैव । ५ ङ. भूरिभागं । ६ ज. °नसृजद्विभुः । ७ ज. °द्या पञ्चपर्वैषा प्रा° ।

अहंकृतास्त्वहंमाना अष्टाविंशद्विधात्मकाः । अन्तःप्रकाशास्ते सर्वे आवृतास्ते परस्परम् ॥ ५८
तमप्यसाधकं मत्वा ध्यायतोऽन्यस्ततोऽभवत् । ऊर्ध्वस्रोतस्तृतीयस्तु सात्त्विकोर्ध्वमवर्तत ॥ ५९
ते सुखप्रीतिबहुला बहिरन्तरनावृताः । प्रकाशा बहिरन्तश्च ऊर्ध्वस्रोतस्ततः स्मृतः ॥ ६०
तुष्टात्मानस्तृतीयस्तु वेदसर्गस्तु संस्मृतः । तस्मिन्सर्गेऽभवत्प्रीतिर्निष्पन्दे ब्रह्मणस्तदा ॥ ६१
ततोऽन्यं स तदा दध्यौ साधकं सर्गमुत्तमम् । असाधकांस्तु ताञ्ज्ञात्वा मुख्यसर्गादिसंभवान् ६२
तथाऽभिध्यायतस्तस्य सत्याभिध्यायिनस्ततः । प्रादुर्भूतस्तदा व्यक्तादर्वाक्स्रोतस्तु साधकः॥६३
यस्मादर्वाक्प्रवर्तन्ते ततोऽर्वाक्स्रोतसस्तु ते । ते च प्रकाशबहुलास्तमोद्रिक्ता रजोधिकाः ॥ ६४
तस्मात्ते दुःखबहुला भूयो भूयश्च कारिणः । प्रकाशा बहिरन्तश्च मनुष्याः साधकाश्च ते ॥ ६५
पञ्चमोऽनुग्रहः सर्गः स चतुर्धा व्यवस्थितः । विपर्ययेण सिद्ध्या च शक्त्या तुष्ट्या तथैव च॥६६
निर्वृत्तं वर्तमानं च तेऽनुजानन्ति वै पुनः । भूतादिकानां भूतानां षष्ठः सर्गः स उच्यते ॥ ६७
ते परिग्राहिणः सर्वे सविभागरतास्तु ते । चोदनाजाप्यशीलाश्च ज्ञेया भूतादिकास्तु ते ॥ ६८
इत्येते कथिताः सर्गाः षडत्र नृपसत्तम । प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु यः ॥ ६९
तन्मात्राणां द्वितीयस्तु भूतसर्गो हि स स्मृतः । वैकारिकस्तृतीयस्तु सर्गश्चैन्द्रियकः स्मृतः ॥ ७०
इत्येष प्राकृतः सर्गः संभूतोऽबुद्धिपूर्वकः । मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ॥ ७१
तिर्यक्स्रोतश्च यः प्रोक्तस्तिर्यग्योन्यः(निः) स उच्यते। ततोर्ध्वरेतसां षष्ठो देवसर्गस्तु स स्मृतः ॥
ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः । अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसस्तु सः॥७३
पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः । एते तव समाख्याता नव सर्गाः प्रजापतेः ७४
प्राकृता वैकृताश्चैव जगतो मूलहेतवः । सृजतो जगदीशस्य किमन्यच्छ्रोतुमर्हसि ॥ ७५

भीष्म उवाच—

संक्षेपात्कथिताः सर्गा देवादीनां गुरो त्वया । विस्तराच्छ्रोतुमिच्छामि त्वत्तो मुनिवरोत्तम॥ ७६

पुलस्त्य उवाच—

कर्मभिर्भाविताः सर्वे कुशलाकुशलास्तु ते । ख्यातास्त्वया ह्यनिर्मुक्ताः संहाराद्युपसंहताः ॥ ७७
स्थावराद्याः सुराद्यास्तु प्रजा राजंश्चतुर्विधाः । ब्रह्मणः कुर्वतः सृष्टिं जज्ञिरे मानसाः स्मृताः ७८
ततो देवासुरपितॄन्मानुषांस्तु चतुष्टयम् । सिसृक्षुरम्भस्येतानि स्वमात्मानमयूयुजत् ॥ ७९
युक्तात्मनस्ततो जाता दुरात्मानः प्रजापतेः । सिसृक्षोर्जघनात्पूर्वं जज्ञिरे त्वसुरास्ततः ॥ ८०
तत्याज तां ततो दुष्टां तमोमात्रात्मिकां तनुम् । सा च त्यक्ता ततस्तेन राजेन्द्राभूद्विभावरी॥८१
सिसृक्षुरन्यदेहस्थः प्रीतिमापुस्ततः सुराः । सत्त्वोद्रिक्ताः समुद्भूता मुखतो ब्राह्मणादयः ॥ ८२
त्यक्ता साऽपि तनुस्तेन सत्त्वप्रायमभूद्दिनम् । ततो हि बलिनो रात्रावसुरा देवता दिवा ॥ ८३
सत्त्वमात्रात्मिकां चैव ततोऽन्यां जगृहे तनुम् । पितृवन्मन्यमानस्य पितरस्तस्य जज्ञिरे ॥ ८४
उत्ससर्ज पितॄन्कृत्वा ततस्तामपि स प्रभुः । सा चोत्सृष्टाऽभवत्संध्या दिननक्तान्तरस्थितिः॥८५
रजोमात्रात्मिकामन्यां जगृहे स तनुं ततः । रजोमात्रोत्कदा जाता मनुष्याः कुरुसत्तम ॥ ८६
तामप्याशु स तत्याज तनुमाद्यां प्रजापतिः । ज्योत्स्ना समभवच्चापि प्राक्संध्याऽथाभिधीयते ८७
ज्योत्स्नागमे तु बलिनो मनुष्याः पितरस्तथा । राजेन्द्र संध्यासमये तस्मात्ते प्रभवन्ति वै ॥ ८८

१ घ. °तः । ततोर्ध्वस्रोत° । २ ख. तांस्ततो । ३ ख. °ध्वांस्तमो° । ४ ख. °कांस्ततः । सा । ५ क. ख. ङ. च. ज. °पि या संध्यायां निधी° ।

ब्रह्मणस्तु शरीराणि त्रिगुणोपाश्रयाणि च । रजोमात्रात्मिकामेव ततोऽन्यां जगृहे तनुम् ॥ ८९
*ततस्तु ब्रह्मणो जाता(?) जज्ञे कोपस्तथाकृतः । क्षुत्क्षामो ह्यन्धकारे तु तेऽसृजद्भगवांस्ततः ९०
विरूपाः श्मश्रुजातास्ते समधावन्त तं प्रभुम् । रक्षतामेव यैरुक्तं राक्षसास्ते ततोऽभवन् ॥ ९१
ऊचुः खादाम इत्यन्ये यें ते यक्षास्तु तेऽभवन् । अपि येनास्य तान्दृष्ट्वा केशाः शीर्यन्ति वेधसः
हीनाश्च शिरसो भूयः समारोहन्ति ते शिरः । सर्पणात्तेऽभवन्सर्पा हीनत्वादहयः स्मृताः ॥ ९३
ततः क्रुद्धेन वै स्रष्ट्रा क्रोधात्मानो विनिर्मिताः । वर्णेन कपिशेनोग्रा भूतास्ते पिशिताशनाः॥ ९४
धयन्तो गां समुद्भूता गन्धर्वास्तस्य तत्क्षणात् । पिबन्तो जज्ञिरे वाचं गन्धर्वास्तेन तेऽभवन्॥९५
एतानि सृष्ट्वा भगवान्ब्रह्मा तच्छक्तिचोदितः । ततः स्वच्छन्दतोऽन्यानि वयांसि वयसोऽसृजत्
अवयो बाहुतश्चक्रे मुखतोऽजांश्च सृष्टवान् । सृष्टवानुदराद्गाश्च महिषांश्च प्रजापतिः ॥ ९७
पद्भ्यां च श्वान्समातङ्गान्रासभान्गवयान्मृगान् । उष्ट्रानश्वतरांश्चैवं पशूनन्यांश्च जातयः ॥ ९८
ओषध्यः फलमूलानि रोमभ्यस्तस्य जज्ञिरे । †त्रेतायुगमुखे ब्रह्मा कल्पस्याऽऽदौ नृपोत्तम ॥ ९९
सृष्ट्वाऽपश्चौषधीः सम्यक्स युयोज तदाऽध्वरे । गौरजः पुरुषो मेष अश्वाश्वतरगर्दभाः ॥ १००
एतान्नन्यान्पशूलाहुरारण्यांश्च निबोध मे । श्वापदं द्विखुरं हस्ती वानरं पक्षिपञ्चमम् ॥ १०१
क्षुद्रकाः पशवः षष्ठाः सप्तमास्तु सरीसृपाः । गायत्रवत्स्य(?)वश्चैव बृहत्साम रथंतरम् ॥ १०२
अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान्मुखात् । यजूंषि त्रैष्टुभं छन्दस्तोमं पञ्चदशं तथा ॥ १०३
बृहत्साम तथोक्तं च दक्षिणादसृजन्मुखात् । सामानि जगतीछन्दस्तोमं पञ्चदशं तथा ॥ १०४
वैरूपमतिरात्रं च पश्चिमादसृजन्मुखात् । एकविंशमथर्वाणं सामोर्या(?) मानमेव च ॥ १०५
अनुष्टुभं सवैराजमुत्तरादसृजन्मुखात् । उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ॥ १०६
देवासुरपितॄन्सृष्ट्वा मनुष्यांश्च प्रजापतिः । ततः पुनः ससर्जासौ स कल्पादौ पितामहः ॥ १०७
यक्षान्पिशाचान्गन्धर्वांस्तथैवाप्सरसां गणान् । सिद्धकिंनररक्षांसि हयान्पक्षिमृगोरगान् ॥ १०८
अव्ययं च व्ययं चैव यदिदं स्थाणुजङ्गमम् । तत्तत्समसृजद्ब्रह्मा भगवानादिकृद्द्विजाः ॥ १०९
तेषां च यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे । तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः ११०
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मे ऋतानृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥ १११
इन्द्रियार्थेषु सर्वेषु शरीरेषु च स प्रभुः । नानात्वं विनियोगं तु धातैव व्यसृजत्स्वयम् ॥ ११२
नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवाऽऽदौ देवादीनां चकार सः ११३
ऋषीणां नामधेयानि यथावेदश्रुतानि वै । यथायोग्यस्य योग्यानि अन्येषामपि सोऽकरोत् ११४
यथायथर्तुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ ११५
करोत्येवंविधां सृष्टिं कल्पादौ स पुनः पुनः । सिसृक्षुः शक्तियुक्तोऽसौ सृज्यसृष्टिप्रचोदितः ११६

भीष्म उवाच—

अर्वाक्स्रोतश्च कथितो भवता यश्च मानुषः । ब्रह्मन्विस्तरतो ब्रूहि ब्रह्मा तमसृजद्यथा ॥ ११७

*इदमर्धं नास्ति क्वचित्पुस्तके † इतःप्रभृति गात्रेभ्यस्तस्य जज्ञिर इत्यन्तं क्वचिन्नास्ति ।

१ क. ख. ङ. च °पि भीतस्य । २ क. ख. ग. घ. ङ. च. ज. दृष्ट्वा । ३ क. ख. घ. ङ. च. ज. °च्छन्दचो° । ४ क. ख. घ. च. ञ. °यो वक्षसश्च° । ५ ञ. °व न्यङ्कून° । ६ ग. °तान्ग्राम्यपशू° । ७ ग. °स्तोत्रं प° । ८ क. ख. ग. घ. ङ. च. ज. °रगणान्स° । ९ क. ख. ग. घ. ङ. च. ज. °सि सिंहान्पशुन्मृ° । १० ग. घ. ज. °म् । तं ससर्ज तदा ब्रह्मा । ११ क. ख. ङ. च. तत्ससर्ज तदा ब्रह्मा । १२ क. ख. ग. घ. ङ. च. ज. °कृद्विभुः । ते° । १३ घ. °त्तस्य न रो° ।

यथा वर्णान्समसृजद्गुणांश्च स महामुने । यच्च तेषां स्मृतं कर्म विप्रादीनां तदुच्यताम् ॥ ११८

पुलस्त्य उवाच—

सत्त्वाभिध्यायिनस्तस्य सिसृक्षोर्ब्रह्मणः प्रजाः । अजायन्त कुरुश्रेष्ठ सत्त्वोद्रिक्ता मुखाद्द्विजाः ॥
वक्षसो रजसोद्रिक्तास्तथाऽन्या ब्रह्मणोऽभवन् । राजन्यास्तमसा वैश्यास्तमोद्रिक्तास्तथोरुतः ॥
पद्भ्यां समसृजद्ब्रह्मा शूद्रान्नृपवरोत्तम । ततः प्रधानास्ते सर्वे चातुर्वर्ण्यमिदं ततः ॥ १२१
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च नृपसत्तम । पादोरुवक्षस्थलजा मुखतश्च समुद्भवाः ॥ १२२
यज्ञनिष्पत्तये सर्वमेतद्ब्रह्मा चकार ह । चातुर्वर्ण्यं महाभाग यज्ञसाधनमुत्तमम् ॥ १२३
यज्ञेनाऽऽप्यायिता देवा वृष्ट्युत्सर्गेण मानवाः । आप्यायनं वै कुर्वन्ति यज्ञाः कल्याणहेतवः ॥
निष्पाद्यन्ते नरैस्तैस्तु(स्ते तु) स्वकर्मनिरतैः सदा । विरुद्धाचरणापेतैः सद्भिः सन्मार्गगामिभिः ॥
स्वर्गापवर्गौ मानुष्यात्प्राप्नुवन्ति नरा नृप । यच्चाभिरुचितं स्थानं तद्यान्ति मनुजा विभो ॥ १२६
प्रजास्ता ब्रह्मणा सृष्टाश्चातुर्वर्ण्यव्यवस्थितौ । सम्यक्श्रद्धासमाचाराचरणान्नृपसत्तम ॥ १२७
यथेच्छाचारनिरताः सर्वबाधाविवर्जिताः । शुद्धान्तःकरणाः पुण्या धर्मानुष्ठाननिर्मलाः ॥ १२८
शुद्धे च तासां मनसि शुद्धेऽन्तःकरणे हरौ । शुद्धज्ञानं प्रपश्यन्ति ब्रह्माख्यं येन तत्पदम् ॥ १२९
ततः कालात्मको योऽसौ वैरिञ्च्यावास उच्यते । संसारपातमत्यर्थं घोरमल्पाल्पसारवत् ॥ १३०
अधर्मबीजभूतं च मोहलोभसमन्वितम् । प्रजासु तासु राजेन्द्र रागादिकमसाधकम् ॥ १३१
ततः साहसजा सिद्धिस्तासां चातीव जायते । रोगोऽलसादयश्चान्याः सिद्धयोऽष्टौ भवन्ति याः
तासु क्षीणास्वशेषासु वर्धमाने च पातके । द्वंद्वाभिनवदुःखार्तास्ता भवन्ति ततः प्रजाः ॥ १३३
ततो दुर्गाणि ताश्चक्रुर्वार्क्षं पार्वतमौदकम् । कृत्रिमं च तथा दुर्गं पुरं खर्वटकादिकम् ॥ १३४
गृहाणि च यथान्यायं तेषु चक्रुः पुरादिषु । शीतातपादिबाधानां प्रशमाय महामते ॥ १३५
प्रतिहारमिमं कृत्वा शीतादेस्ताः प्रजाः पुनः । वार्तोपायं ततश्चक्रुर्हस्तसिद्धिं च कर्मजाम् ॥ १३६
व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः । प्रियंगुकोविदाराश्च कोरदूषाः सची(ती)नकाः १३७
माषमुद्गा मसूराश्च निष्पावाश्च कुलत्थकाः । आढक्यश्चणकाश्चैव शणाः सप्तदश स्मृताः ॥ १३८
इत्येता ओषधीनां तु ग्राम्याणां जातयो नृप । ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्दश १३९
व्रीहयः सयवा माषा गोधूमा अणवस्तिलाः । प्रियंगुसप्तमा ह्येता अष्टमाश्च कुलत्थकाः ॥ १४०
श्यामाकास्त्वथ नीवारा जर्तिलाश्च गवेधुकाः । तथा वेणुयवाः प्रोक्तास्तद्वन्मर्कटका नृप ॥ १४१
ग्राम्यारण्याः स्मृता ह्येता ओषध्यश्च चतुर्दश । यज्ञनिष्पत्तये तद्वत्तथाऽऽसां हेतुरुत्तमः ॥ १४२
एताश्च सह यज्ञेन प्रजानां कारणं परम् । एतैरेव महाप्राज्ञास्ततो यज्ञान्वितन्वते ॥ १४३
अहन्यहन्यनुष्ठानं यज्ञानां पार्थिवोत्तम । उपकारकरं पुंसां क्रियमाणं च शान्तिदम् ॥ १४४

---

१ क. ख. घ. ङ. ज. °यिनः पूर्वं सि° । ग. °यिनः सर्वं सि° । २ क. ख. ग. घ. ङ. च. ज. °खात्प्रजाः । ३ क. ख. ग. घ. ङ. च. ज. °न् । रजसस्तमसश्चैव तमो° । ४ क. ख. ग. घ ङ. च. ज. पद्भ्यामन्याः प्रजा ब्रह्मा ससर्ज कुरुसत्तम । तमःप्रधानास्ताः सर्वाश्चातु° । ५ क. ख. ग. घ. ङ. च. ञ. °णाः शुद्धाः सर्गानु° । ६ क. ख. ग. घ. ङ. च. ज. शुद्धान्तःसंस्थिते ह° । ७ क. ग. घ. ङ. च. ज. °ख्यं योगत° । ख. °ख्यं योगतत्परम् । ८ क. ख. ग. घ. ङ. च. ज. रागादिकर्मसाधनम् । ९ ञ. राजन्वश्याद° । १० ग. घ. ज. गणाः । ११ ख. ङ. च. °णं फलार्थिनाम् ।

येषां चकार स्रष्टोऽसौ परविन्दुर्महामते । *मर्यादां स्थापयामास यथास्थानं यथागुणम् ॥ १४५
वर्णानामाश्रमाणां च धर्माधर्मभृतां वर । लोकांश्च(कानां) सर्ववर्णानां सम्यग्धर्मानुपालिनाम् ॥
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं तु पार्थिव । †स्थानमैन्द्रं क्षत्रियाणां सङ्ग्रामेष्वनिवर्तिनाम् ॥
वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्तिनाम् । गान्धर्वं सर्वशूद्राणां परिचर्यानुवर्तिनाम् ॥ १४८
अष्टाशीतिसहस्राणां यतीनामूर्ध्वरेतसाम् । स्मृतं येषां तु यत्स्थानं तदेव गुरुवासिनाम् ॥ १४९
सप्तर्षीणां च यत्स्थानं स्मृतं तद्वै वनौकसाम् । प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मसंज्ञितम् ॥
योगिनामसृतं स्थानं ब्रह्मणः परमं पदम् । एकान्तिनः सदोद्युक्ता व्यापिनो योगिनो हि ये ॥
तेषां तत्परमं स्थानं यन्न पश्यन्ति सूरयः । गतागता निवर्तन्ते चन्द्रादित्यादयो ग्रहाः ॥ १५२
अद्यापि नो निवर्तन्ते प्राणायामपरायणाः । तामिस्रमन्धतामिस्रं महारौरवरौरवम् ॥ १५३
असिपत्रवनं घोरं कालसूत्रमवीचिमत् । विनिन्दकानां वेदस्य यज्ञव्याघातकारिणाम् ॥ १५४
स्थानमेतत्समाख्यातं स्वधर्मत्यागिनश्च ये । ततोऽभिध्यायतस्तस्य जज्ञिरे मानसी प्रजा ॥ १५५
तच्छरीरस[illegible]मैः कायस्थैः करणैः सह । क्षेत्रज्ञाः समवर्तन्त गात्रेभ्यस्तस्य धीमतः ॥ १५६
ते सर्वे स[illegible]र्तन्त ये मया प्रागुदाहृताः । देवाद्याः स्थावरान्ताश्च त्रैगुण्यविषये स्थिताः ॥ १५७
एवं भूतानि सृष्टानि स्थावराणि चराणि च । यदाऽस्य ताः प्रजाः सर्वा न व्यवर्धन्त धीमतः ॥
अथान्यान्मानसान्पुत्रान्सदृशानात्मनाऽसृजत् । भृगुं च पुलहं चैव क्रतुमङ्गिरसं तथा ॥ १५९
मरीचिं दक्षमत्रिं च वसिष्ठं चैव मानसान् । नव ब्रह्माण इत्येते पुराणे निश्चयं गताः ॥ १६०
सनन्दनादयो ये च पूर्वं सृष्टाश्च वेधसा । न ते लोकेष्वसज्यन्त निरपेक्षाः प्रजासु ते ॥ १६१
सर्वे ह्यागतविज्ञाना वीतरागा विमत्सराः । तेष्वेवं निरपेक्षेषु लोकसृष्टौ महात्मनः ॥ १६२
ब्रह्मणोऽभून्महान्क्रोधस्त्रैलोक्यदहनक्षमः । तस्य क्रोधात्समुद्भूतं ज्वालामालावदीपितम् ॥ १६३
ब्रह्मणस्तु तदा ज्योतिस्त्रैलोक्यमखिलं दहत् । भ्रुकुटीकुटिलात्तस्य ललाटात्क्रोधदीपितात् १६४
समुत्पन्नस्तदा रुद्रो मध्याह्नार्कसमप्रभः । अर्धनारीनरवपुः प्रचण्डोऽतिशरीरवान् ॥ १६५
विभजाऽऽत्मानमित्युक्त्वा तं ब्रह्माऽन्तर्दधे ततः । तथोक्तोऽसौ द्विधा स्त्रीत्वं पुरुषत्वं तथाऽकरोत्
बिभेद पुरुषत्वं च दशधा चैकधा च सः । सौम्यासौम्यैस्तथा रूपैः शान्तैः स्त्रीत्वं च स प्रभुः ॥
बिभेद बहुधा चैव स्वरूपैरसितैः सितैः । ततो ब्रह्मा स्वसंभूतं सर्वं स्वायंभुवं प्रभुम् ॥ १६८
आत्मानमेव कृतवान्प्राजापत्ये मनुं नृप । शतरूपां च तां नारीं तपोनिर्धूतकल्मषाम् ॥ १६९
स्वायंभुवो मनुर्नाम पत्नीत्वे जगृहे प्रभुः । तस्माच्च पुरुषाद्देवीस्वरूपाच्च व्यजायत ॥ १७०
प्रियव्रतोत्तानपादप्रसूत्याकूतिसंज्ञितम् । ददौ प्रसूतिं दक्षाय आकूतिं रुचये पुरा ॥ १७१
प्रजापतिः स जग्राह तयोर्जज्ञे सदक्षिणः । पुत्रो यज्ञो महाभाग दंपत्योर्मिथुनं ततः ॥ १७२
यज्ञस्य दक्षिणायां तु पुत्रा द्वादश जज्ञिरे । यामा इति समाख्याता देवाः स्वायंभुवे मनौ १७३
प्रसूत्यां च तदा जाताश्चत्वारो विंशतिस्तथा । ससर्ज कन्यास्तासां तु सम्यङ्नामानि मे शृणु ॥

---

* इत उत्तरम् "चेतस्त्ववमथे चक्रुस्तेन यज्ञेन मानसम् ॥ १ ॥ वेदवेदांस्तथा देवान्यज्ञकर्मादिकं च यत् । तत्सर्वे निन्द्यमानास्ते यज्ञव्यासेधकारिणः ॥ २ ॥ गुरुमार्गव्युत्थितं तु कारिणो वेदनिन्दकाः । दुरात्मानो दुराचारा बभूवुः कुटिलेशयाः ॥ ३ ॥" इतीमे श्लोकाः क. झ. पुस्तकयोर्वर्तन्ते तेषां संगतिर्न युज्यते । † एतदादि "यतीनामूर्ध्वरेतसाम्" इत्यन्तं घ. पुस्तके ।

श्रद्धा लक्ष्मीर्धृतिः पुष्टिस्तुष्टिर्मेधा क्रिया तथा। बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्तिस्त्रयोदशी
पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीं प्रभुः। ताभ्यः सृष्टा यवीयस्य एकादश सुलोचनाः॥१७६
ख्यातिः शान्त्यथ संभूतिः स्मृतिः प्रीतिः क्षमा तथा। संनतिश्चानुसूया च ऊर्जा स्वाहा स्वधा तथा
भृगुर्भगो मरीचिश्च तथा चैवाङ्गिरा मुनिः। अहं च पुलहश्चैव क्रतुश्चर्षिवरस्तथा॥ १७८
अत्रिर्वसिष्ठो वह्निश्च पितरश्च यथाक्रमम्। ख्यात्याद्या जगृहुः कन्या मुनयो राजसत्तम॥ १७९
श्रद्धा कामं तथा लक्ष्मीर्दर्पं च नियमं धृतिः। संतोषं च तथा तुष्टिर्लोभं पुष्टिरसूयत॥ १८०
मेधा श्रियं क्रिया दण्डं नयं(?)विनयमेव च। बोधं बुद्धिस्तथा लज्जा विनयं वपुरात्मजम्॥१८१
व्यवसायं क्रिया जज्ञे क्षेमं शान्तिरसूयत। सुखं सिद्धिर्यशः कीर्तिरित्येते धर्मसूनवः॥ १८२
कामान्नन्दी सुतं हर्षं धर्मपुत्रादसूयत। हिंसा भार्या त्वधर्मस्य तस्य जज्ञे तथाऽनृतम्॥ १८३
कन्या च निकृतिस्ताभ्यां भयं नरकमेव च। मायाऽथ वेदना चैव मिथुनं द्वंद्वमेव च॥ १८४
तयोर्जज्ञे तथा माया मृत्युं भूतापहारिणम्। वेदना स्वसुतं चापि दुःखं जज्ञेऽथ रौरवात्॥ १८५
मृत्योर्व्याधिजराशोकतृष्णाक्रोधाश्च जज्ञिरे। दुःखोत्तराः स्मृता ह्येते सर्वे चाधर्मलक्षणाः॥१८६
नैषां भार्याऽस्ति पुत्रो वा ते सर्वे ह्यूर्ध्वरेतसः। रौद्राण्येतानि रूपाणि ब्रह्मणो नृदरात्मज १८७
नित्यं प्रलयहेतुत्वं जगतोऽस्य प्रयान्ति वै। रुद्रसर्गं प्रवक्ष्यामि यथा ब्रह्मा चकार ह॥ १८८
कल्पादावात्मनस्तुल्यं सुतं प्रध्यायतस्ततः। प्रादुरासीत्प्रभोरङ्के कुमारो नीललोहितः॥ १८९
रुदन्वै सुस्वरं सोऽथ द्रवंश्च नृपसत्तम। किं रोदिषीति तं ब्रह्मा रुदन्तं प्रत्युवाच वै॥ १९०
नाम देहीति तं सोऽथ प्रत्युवाच प्रजापतिम्। रुद्रस्त्वं देवनामाऽसि मा रोदीर्धैर्यमावह॥ १९१
एवमुक्तः पुनः सोऽथ सप्तकृत्वो रुरोद ह। ततोऽन्यानि ददौ तस्मै सप्त नामानि वै प्रभो १९२
स्थानानि चैषामष्टानां पत्नीः पुत्रांस्तथैव च। भवं शर्वमथेशानं शिवं पशुपतिं नृप॥ १९३
भीममुग्रं महादेवमुवाच स पितामहः। सूर्यो जलं मही वह्निर्वायुराकाशमेव च॥ १९४
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमात्। सुवर्चला तथा चोषा विकेशी च तथा शिवा॥
स्वाहाऽऽदेशस्तथा दीक्षा रोहिणी च यथाक्रमम्। सूर्यादीनां नरश्रेष्ठ रुद्राद्यैर्नामभिः क्रमात्॥
पत्न्यश्च ता महाभागास्तदपत्यानि मे शृणु। येषां सूतिप्रसूतैश्च इदमापूरितं जगत्॥ १९७
शनैश्चरस्तथा शुक्रो लोहिताङ्गो मनोजवः। स्वर्गास्कन्दोऽथ संतानो बुधश्चानुक्रमात्सुताः॥१९८
एवंप्रकारो रुद्रोऽसौ सतीं भार्यामविन्दत। दक्षकोपाच्च तत्याज सा सती स्वं कलेवरम्॥ १९९
हिमवतस्तु सा भूता मेनायां द्विजसत्तम। उपयेमे पुनश्चैव याचित्वा भगवानुत॥ २००
देवौ धातृविधातारौ भृगोः ख्यातिरसूयत। श्रियं च देवदेवस्य वासुदेवपरिग्रहम्॥ २०१

इति श्रीमहापुराणे पाद्मे पञ्चमे सृष्टिखण्डे तृतीयोऽध्यायः॥ ३॥

आदितः श्लोकानां समष्ट्यङ्काः—१९९७६

१ अ. तिः सत्यथ।

अथ चतुर्थोऽध्यायः ।

भीष्म उवाच—

क्षीराब्धौ तु तदा जाता कीर्तिता कमला प्रभो । ख्यात्यां भृगोः समुत्पन्ना एतदाह कथं भवान् ॥ १
कथं च दक्षदुहिता देहं त्यक्तवती तु सा । मेनायां गर्भसंभूतिरुमाया जन्म एव च ॥ २
किमर्थं देवी देवेन पत्नी हैमवती कृता । विरोधं चापि दक्षेण भगवांस्तद्ब्रवीतु मे ॥ ३

पुलस्त्य उवाच—

इदं च शृणु भूपाल यत्पृष्टोऽहमिह त्वया । श्रीसंबन्धं मयाऽप्येतच्छ्रुतमासीत्पितामहात् ॥ ४
अत्रिपुत्रस्तु दुर्वासाः संचरंस्तु महीमिमाम् । स ददर्श शुभां मालां विद्याधर्याः करे स्थिताम् ॥ ५
दृष्ट्वा च तां याचितवाञ्शोभमानां स्रजं तदा । प्रणिपत्य च तं तस्मै स्रजं दत्तवती तदा ॥ ६
उन्मत्तव्रतधृग्विप्रः शोभमानोऽब्रवीदिदम् । इमां विद्याधरीकन्यां पीनोन्नतपयोधराम् ॥ ७
सर्वालंकारसौभाग्यैर्युक्तां दृष्ट्वाऽथ वै मनः । क्षोभमायाति मे सद्यो नाहं कामे विचक्षणः ॥ ८
व्रजामि तावदन्यत्र सौभाग्यं स्वं प्रदर्शयन् । एतदुक्त्वा स राजेन्द्र परिबभ्राम मेदिनीम् ॥ ९
ऐरावणं समारूढं राजानं त्रिदिवौकसाम् । त्रैलोक्यस्य पतिं शक्रं भ्राजमानं शचीपतिम् ॥ १०
तामात्मशिरसो मालां भ्रमदुन्मत्तषट्पदाम् । आदायामरराजाय चिक्षेपोन्मत्तवन्मुनिः ॥ ११
गृहीत्वा देवराजेन माला सा गजमूर्धनि । यु(मु)क्ता रराज सा श्वेता कैलासे जाह्नवी यथा १२
मदान्धकारिताक्षोऽसौ गन्धाकृष्टेन वारणः । करेणाऽऽदाय चिक्षेप तां मालां पृथिवीतले ॥ १३
ततश्चुकोप भगवान्दुर्वासा मुनिपुंगवः । राजेन्द्र देवराजानं क्रुद्धश्चेदमुवाच ह ॥ १४

दुर्वास उवाच—

ऐश्वर्यमददुष्टात्मन्नतिमत्तोऽसि वासव । श्रियो धाम स्रजं यस्मान्मद्दत्तां नाभिनन्दसि ॥ १५
त्रैलोक्यश्रीरतो मूढ विनाशमुपयास्यति । मद्दत्ता भवता माला यस्मात्क्षिप्ता महीतले ॥ १६
तस्मात्प्रनष्टलक्ष्मीकं त्रैलोक्यं च भविष्यति । यस्य संजातकोपस्य भयमेति चराचरम् ॥ १७
तं त्वं मदावलेपेन देवराजावमन्यसे । महेन्द्रो वारणस्कन्धादवतीर्य त्वरान्वितः ॥ १८
प्रसादयामास मुनिं दुर्वाससमकल्मषम् । प्रसाद्यमानः स तदा प्रणिपातपुरःसरम् ॥ १९
नाहं क्षमिष्ये बहुना किमुक्तेन शतक्रतो । इत्युक्त्वा प्रययौ विप्रो देवराजोऽपि तं पुनः ॥ २०
आरुह्यैरावणं नागं प्रययौ चामरावतीम् । ततः प्रभृति निःश्रीकं सशक्रं भुवनत्रयम् ॥ २१
न यज्ञाः संप्रवर्तन्ते न तपस्यन्ति तापसाः । न च दानानि दीयन्ते नष्टप्रायमभूज्जगत् ॥ २२
एवमत्यन्तनिःश्रीके त्रैलोक्ये सत्त्ववर्जिते । देवान्प्रति बलोद्योगं चक्रुर्दैतेयदानवाः ॥ २३
विजितास्त्रिदशा दैत्यैरिन्द्राद्याः शरणं ययुः । पितामहं महाभागं हुताशनपुरोगमाः ॥ २४
यथावत्कथितो देवैर्ब्रह्मा प्राह तथा सुरान् । क्षीरोदस्योत्तरं कूलं जगाम सहितः सुरैः ॥ २५
गत्वा जगाद भगवान्वासुदेवं पितामहः । उत्तिष्ठ विष्णो त्वं शीघ्रं देवानां तु हितं कुरु ॥ २६

१ क. ख. ग. घ. ङ. च. ज. तु तथा लक्ष्मीः क्षिलोत्पन्ना मया श्रुता । ख्या° । २ ङ. च. °म् । विद्याधरीकरे मालां दृष्ट्वा सौहार्दिकां शुभाम् । याचयामास मे देहि जटाजूटे करोम्यहम् । स्तनयोरन्तरे या तु स्पृष्टा सा कृषिणा तथा । ददौ तस्मै मुदा युक्ता तां मालां स तदा नृप । स्नापित्वा सुचिरं कालं शिरोमालां बबन्ध ह । उ° । ३ क. ग. घ. च. ज. °णाऽऽघ्राय । ४ क. ग. घ. च. ज °तिस्तब्धोऽसि । ५ क. ग. घ. च. ज. °लोक्यं भवतो । ६ ख. °स्यासि । म° । ७ ग. °स्य क्षय° ।

त्वया विना दानवैस्तु जिताः सर्वे पुनः पुनः । इत्युक्तः पुण्डरीकाक्षो भगवान्पुरुषोत्तमः ॥ २७
अपूर्वतपसः स्थानं दृष्ट्वा देवानुवाच ह । तेजसो भवतां देवाः करिष्याम्युपबृंहणम् ॥ २८
वदाम्यहं यत्क्रियतां भवद्भिस्तदिदं सुराः । आनीयं सकलैर्दैत्यैः क्षीराब्धौ सकलौषधीः ॥ २९
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् । मथ्यताममृतं देवाः सहाये मय्यवस्थिते ॥ ३०
सामपूर्वं च दैत्यानां तत्र संभाष्य कर्मणि । सामान्यफलभोक्तारो यूयं वाँऽत्र भविष्यथ ॥ ३१
मथ्यमाने च तत्राब्धौ यत्समुत्पद्यतेऽमृतम् । तत्पानाद्बलिनो यूयममराः संभविष्यथ ॥ ३२
तथैवाहं करिष्यामि यथा त्रिदशविद्विषः । न प्राप्स्यन्त्यमृतं देवाः केवलं क्लेशभागिनः ॥ ३३
इत्युक्ता देवदेवेन सर्व एव ततः सुराः । संधानमसुरैः कृत्वा यत्नवन्तोऽमृतेऽभवन् ॥ ३४
तथौषधीः समानीय देवदैतेयदानवाः । क्षिप्त्वा क्षीराब्धिपयसि शरदभ्रामलत्विषि ॥ ३५
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् । ततो मथितुमारब्धा राजेन्द्र तरसाऽमृतम् ॥ ३६
विबुधाः सहिताः सर्वे यतः पुच्छस्त(च्छं त)तः कृताः । विष्णुना वासुकेर्दैत्याः पूर्वकाये निवेशिताः
तेनास्य प्राणवातेन वह्निना च हतत्विषः । निस्तेजसोऽसुराः सर्वे बभूवुरमरद्युते ॥ ३८
तेन वै मुखनिश्वासवायुना तु बलाहकैः । पुच्छप्रदेशे वर्षद्भिस्तदा चाऽऽप्यायिताः सुराः ॥ ३९
क्षीरोदमध्ये भगवान्ब्रह्मा ब्रह्मविदां वरः । महादेवो महातेजा विष्णुपृष्ठनिवासिनौ ॥ ४०
बाहुभ्यां मन्दरं गृह्य पद्मवत्स परंतपः । शृङ्खले च तदा हृत्वा गृहीत्वा मन्दराचलम् ॥ ४१
देवानां दानवानां च बलमध्ये व्यवस्थितः । क्षीरोदमध्ये भगवान्कूर्मरूपी स्वयं हरिः ॥ ४२
अन्येन तेजसा देवानुपबृंहितवान्प्रभुः । मथ्यमाने ततस्तस्मिन्क्षीराब्धौ देवदानवैः ॥ ४३
हविर्धान्यभवत्पूर्वं सुरभिः सुरपूजिता । जग्मुर्मुदं तदा देवा दानवास्तु महामते ॥ ४४
व्याक्षिप्तचेतसश्चैव बभूवुः स्तिमितेक्षणाः । किमेतदिति सिद्धानां दिवि चिन्तयतां तदा ॥ ४५
बभूव वारुणी देवी मदाघूर्णितलोचना । कृतावर्ता ततस्तस्मात्प्रस्खलन्ती पदे पदे ॥ ४६
एकवस्त्रा मुक्तकेशी रक्तान्तस्तब्धलोचना । अहं बलप्रदा देवी मां वा गृह्णीत दानवाः ॥ ४७
अशुचिं देवतां मत्वा त्यक्तवन्तस्तदा सुराः । जगृहुस्तां ततो दैत्या ग्रहणान्ते सुराऽभवत् ॥ ४८
मन्थने पारिजातोऽभूद्देवश्रीनन्दनो द्रुमः । रूपौदार्यगुणोपेता अभवंश्चाप्सरोगणाः ॥ ४९
षष्टिकोट्यस्तदा जाताः सामान्या देवदानवैः । सर्वास्ताः कृतपूर्वं तु सामान्यं पुण्यकर्मणाम् ॥ ५०
ततः शीतांशुरभवद्देवानां प्रीतिदायकः । ययाचे शंकरो देवो जटाभूषणकृन्मम ॥ ५१
भविष्यति न संदेहो गृहीतोऽयं मया शशी । अनुमेने च तं ब्रह्मा भूषणाय हरस्य तु ॥ ५२
ततो विषं समुद्भूतं कालकूटं भयावहम् । तेन ते चार्दिताः सर्वे दानवाः सह दैवतैः ॥ ५३
अर्दितं भुवनं सर्वं ब्रह्मविष्णुपुरोगमम् । महादेवेन तत्पीतं बलाद्गृह्य यदृच्छया ॥ ५४
तस्य पानान्नीलकण्ठस्ततो जातो महेश्वरः । पानावशेषं नागेषु क्षीराब्धिसमुपस्थितम् ॥ ५५
तेन चाभयदानेन शंकरस्तु तदाऽभवत् । ब्रह्मणाऽनुगृहीतोऽस्मि वंदता मामनुत्तमम् ॥ ५६

---

१ झ. °य सहितैः सर्वैर्मन्दरं चारुकन्दरम् । क्षीराब्धिर्मथ्यतां शीघ्रं तत्रामृतसमुद्भवः । भविष्यति च तत्पीत्वा अमरा वै भविष्यथ । मथ्यतां सहितैर्दैत्यैः क्षीराब्धिः सकलोदधिः । मन्था° । २ घ. ज. वाच्या भ° । ३ झ. °म् । कृत्वा दैत्यैश्च संधानं तांश्चाप्यत्र नियोज्य च । तथै° । ४ झ. °र्षद्भिः पुरा चाऽऽ° । ५ क. ख. ग. ङ. च. ज. °तसः सर्वे व° । ६ क. ख. ङ. च. ज. देवानां । ७ क. ख. घ. च. ज. गन्धेन । ग. सत्त्वेन । ८ ग. °तपुण्यानां सामान्याः पु° । ९ झ. ददता ।

ततो धन्वन्तरिर्जातः श्वेताम्बरधरः स्वयम् । बिभ्रत्कमण्डलुं पूर्णममृतस्य समुत्थितः ॥ ५७
ततः स्वस्थमनस्कास्ते वैद्यराजस्य दर्शनात् । ततश्चाश्वः समुत्पन्नो नागश्चैरावणस्तथा ॥ ५८
ततः स्फुरत्कान्तिमती विकासिकमले स्थिता । श्रीर्देवी पयसस्तस्मादुत्थिता धृतपङ्कजा ॥ ५९
तां तुष्टुवुर्मुदा युक्ताः श्रीसूक्तेन महर्षयः । विश्वावसुमुखास्तस्या गन्धर्वाः पुरतो जगुः ॥ ६०
घृताचीप्रमुखा राजन्ननृतुश्चाप्सरोगणाः । गङ्गाद्याः सरितस्तोयैः स्नानार्थमुपतस्थिरे ॥ ६१
दिग्गजा मेघपात्रस्थमादाय विमलं जलम् । स्नापयांचक्रिरे देवीं सर्वलोकमहेश्वरीम् ॥ ६२
क्षीरोदस्तु स्वयं तस्यै मालामम्लानपङ्कजाम् । ददौ विभूषणान्यङ्गे विश्वकर्मा चकार ह ॥ ६३
दिव्यमालाम्बरधरां स्नातां भूषणभूषिताम् । प्रार्थमानास्ततो देवा ब्रह्मविष्णुशिवादयः ॥ ६४
इन्द्राद्याश्चामरगणा विद्याधरमहोरगाः । दानवाश्च महादैत्या राक्षसाः सह गुह्यकैः ॥ ६५
तां कन्यां साभिलाषास्ते ततो ब्रह्मा उवाच ह । वासुदेव त्वमेवैतां मया दत्तां गृहाण वै ॥ ६६
देवाश्च दानवाश्चैव प्रतिषिद्धा मया त्विह । तुष्टोऽहं कर्मणा तेऽद्य अनल्पेनेह कर्मणा ॥ ६७
सा श्रीस्तु ब्रह्मणा[2] प्रोक्ता देवि गच्छस्व केशवम् । मया दत्तं पतिं प्राप्य मोदस्व शाश्वतीः समाः
पश्यतां सर्वभूतानां गता वक्षस्थलं हरेः । ततो वक्षस्थलं प्राप्य देवं वचनमब्रवीत् ॥ ६९

श्रीरुवाच—

नाहं त्याज्या त्वया देव सदा चाऽऽदेशकारिणी । वक्षस्थले निवत्स्यामि सर्वस्य जगतः प्रिया॥
ततोऽवलोकिता देवा हरिवक्षःस्थलस्थया । लक्ष्म्या राजेन्द्र सहसा परां निर्वृतिमागताः ॥ ७१
उद्वेगं च परं जग्मुर्दैत्या विष्णुपराङ्मुखाः । त्यक्तास्तु दानवा लक्ष्म्या विप्रचित्तिपुरोगमाः ॥७२
ततस्ते जगृहुर्दैत्या धन्वन्तरिकरस्थितम् । अमृतं तु महावीर्या दैत्याः पापसमन्विताः ॥ ७३
मायया लोभयित्वा तु विष्णुः स्त्रीरूपसंस्थितः । आगत्य दानवान्प्राह दीयतां मे कमण्डलुः ७४
युष्माकं वशगा भूत्वा स्थास्यामि भवतां गृहे । तां दृष्ट्वा रूपसंपन्नां नारीं त्रैलोक्यसुन्दरीम्॥७५
प्रार्थमानां सुवपुषं लोभोपहतचेतसः । दत्त्वाऽमृतं ततस्तस्यै न तां पश्यन्ति तेऽग्रतः ॥ ७६
ततः प्रहृत्य गोविन्दो देवानाममृतं ददौ । ततः पपुः सुरगणाः शक्राद्यास्तत्तदाऽमृतम् ॥ ७७
उद्यतायुधनिस्त्रिंशा दैत्यास्तांस्ते समभ्ययुः । पीतेऽमृते च बलिभिर्देवैर्दैत्यचमूस्ततः ॥ ७८
वध्यमाना दिशं भेजे पातालं च विवेश वै । ततो देवा मुदा युक्ताः शङ्खचक्रगदाभृतम् ॥ ७९
प्रणिपत्य यथापूर्वं ततो जग्मुस्त्रिविष्टपम् । ततः प्रभृति ते भीष्म स्त्रीलौल्या दानवाऽभवन्* ॥८०
अपध्यातास्तु कृष्णेन गतास्ते तु रसातलम् । ततः सूर्यः प्रसन्नाभो ययौ वै स्वेन वर्त्मना ॥ ८१
जज्वाल भगवांश्चोच्चैश्चारुदीप्तिर्हुताशनः । धर्मे च सर्वभूतानां तदा मतिरजायत ॥ ८२
श्रिया युक्तं च त्रैलोक्यं विष्णुना प्रतिपालितम् । देवास्तु ते तदा प्रोक्ता ब्रह्मणा लोकधारिणा ॥
भवतां रक्षणार्थाय मया विष्णुर्नियोजितः । उमापतिश्च देवेशो योगक्षेमं करिष्यति ॥ ८४
उपास्यमानौ सततं युष्मत्क्षेमकरौ यतः । ततः क्षेम्यौ सदा चेमौ भविष्येते वरप्रदौ ॥ ८५
एवमुक्त्वा तु भगवाञ्जगाम गतिमात्मनः । अदर्शं तु गते देवे सर्वलोकपितामहे ॥ ८६

---

* संधिरार्षः ।

---

१ क. ख. ङ. च. °खास्तत्र ननृ° । ग. घ. ज. °खा ब्रह्मन्° । २ क. ख. घ. ङ. च. ञ. °र्देवानां । ३ क. ख. घ. ज. °पसंश्रयः । आ° । ४ क. ख. ग. घ. ङ. च. ज. °तः । दानवेभ्यस्तदादाय देवेभ्यः प्रददेऽमृतम् । त° । ५ क. ख. ग. घ ङ. च. ज. °भिर्जिता दैत्य° ।

देवलोकं गते शक्रे स्वं लोकं हरिशंकरौ । प्राप्तौ तु तत्क्षणाद्देवो स्थानं कैलासमेव च ॥ ८७
ततस्तु देवराजेन पालितं भुवनत्रयम् । एवं लक्ष्मीर्महाभाग उत्पन्ना क्षीरसागरात् ॥ ८८
पुनः ख्यात्यां समुत्पन्ना भृगोरेषा सनातनी । श्रिया सह समुत्पन्नं भृगुणा तु महर्षिणा ॥ ८९
स्वनाम्ना नगरं चैव कृतं पूर्वसरित्तटे । नर्मदाया महाभाग ब्रह्मणा चानुमोदितम् ॥ ९०
लक्ष्म्याः पुरं च पित्रोक्तं देविकायामथार्पितम् । आगता देवलोकेशं पुनर्याचयते स्वयम् ॥ ९१
लोभान्न दत्तं नगरं प्रार्थनायां यदा पुनः । भृगोः सकाशान्नावाप तदा चैवाऽऽह केशवम् ॥ ९२

लक्ष्म्युवाच—

अहं पित्रा पराभूता गृहीतं च पुरं मम । तस्य हस्तात्समाक्षिप्य पुरं तच्चाऽऽनयस्व ह ॥ ९३
तं गत्वा पुण्डरीकाक्षो देवश्चक्रगदाधरैः । सामपूर्वं भृगुं चाऽऽह कन्यायै पुरमर्पय ॥ ९४
[*कुञ्चिकानालके वोभे दीयतां च प्रसादतः । भृगुस्तं कुपितः प्राह नाहमर्पयिष्ये पुरम् ॥ ९५
न लक्ष्म्यास्तत्पुरं देव मया चेदं स्वयंकृतम् । भगवन्नैव दास्यामि आक्षेपं त्यज केशव ॥ ९६
तं प्राह देवो भूयोऽपि लक्ष्म्यास्तत्पुरमर्पय ] । सर्वथा तु त्वयाँ त्याज्यं वचनान्मे महामुने ॥ ९७
ततः कोपसमाविष्टो भृगुस्तं प्राह केशवम् ॥ ९८

भृगुरुवाच—

पक्षपातेन मां साधो भार्यायास्तत्कृतेन च । मर्त्यलोकेऽसकृच्चैव जन्म प्राप्स्यसि केशव ॥
भार्यायास्ते वियोगश्च दुःखान्यनुभविष्यसि ॥ ९९
शापमेवं ददौ तस्मै भृगुः परमकोपनः । विष्णुना च पुनस्तस्य दत्तः शापो महात्मना ॥ १००
नैवापत्यकृतां प्रीतिं प्राप्स्यसे मुनिपुंगव । शापं दत्त्वा ऋषेस्तस्य ब्रह्मलोकं जगाम ह ॥ १०१
पद्मे स्थितं पद्मवीर्यं पद्माक्षं पद्मवासिनम् । पद्मजन्मानमाहेदं नत्वा देवस्तु केशवः ॥ १०२

विष्णुरुवाच—

भगवंस्तव पुत्रोऽसौ भृगुः परमकोपनः । निष्कारणेन तेनाहं शप्तोऽस्मि जन्म मानुषे ॥ १०३
लप्स्यसे दशकृत्वो ह तत्र दुःखान्यनेकशः । भार्यावियोगजादीनि बलपौरुषनाशनम् ॥ १०४
त्यक्त्वा चाहमिमाल्लोकाञ्शयिष्ये च महोदधौ । देवकार्येषु सर्वेषु पुनश्चाऽऽवाहनं कुथाः ॥ १०५
तथा ब्रुवन्तं तं देवं ब्रह्मा लोकगुरुस्तदा । प्रसादनार्थं विष्णोस्तु स्तुतिमेतां चकार ह ॥ १०६

ब्रह्मोवाच—

त्वया सृष्टं जगदिदं पद्मं नाभौ विनिःसृतम् । तत्र चाहं समुत्पन्नस्तव ध्यानाच्च केशव ॥ १०७
त्वं त्राता सर्वलोकानां स्रष्टा त्वं जगतः प्रभो । त्रैलोक्यं न त्वया त्याज्यमेष एव वरो मम ॥ १०८
दशजन्म मनुष्येषु लोकानां हितकाम्यया । स्वयं कर्ता न ते शक्तः शापदानाय केशव ॥ १०९
कोऽयं भृगुः कथं तेन शक्यः शप्तुं जनार्दन । मानयस्व सदा विप्रान्ब्राह्मणांस्तेन शत्रुहन् ॥ ११०
योगनिद्रामुपासस्व क्षीराब्धौ त्वं हि माधव । कार्यकाले पुनस्त्वं तु त्वच्छक्त्या उपबृंहितः ११११

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. ज. श्वेतं । २ झ. °म् । संगतं देवलोके मे यावदाभूतसंप्लवम् । ३ ख. ग. घ. ङ. च. ज. °य स्वयम् । तं° । ४ ख ग. घ. ङ. च. ज. °रः । भृगुं सानुनयं प्राह । ५ झ. °या कार्यं वदतो मे म° । ६ क. ख. ग. घ. ङ. च. ज. च । दशजन्म मर्त्यलोके लप्स्यसे मधुसूदन । भा° । ७ ख. ग. घ. ज. वश्यश्च । ८ क. ख. ग. घ. च. ज. °ह्मणस्ते तनुस्त्वहम् । यो° ।

सर्वकार्यार्थतः शक्रस्तवैवांशेन शत्रुहन् । त्रैलोक्यं पालयेद्यस्तु त्वदाज्ञां स करिष्यति ॥
एवं स्तुतस्तदा विष्णुर्ब्रह्माणमिदमब्रवीत् ॥ ११२

विष्णुरुवाच—

सर्वमेतत्करिष्यामि यन्मां ज्ञापयसे प्रभो ॥ ११३
अदर्शनं गतो देवो ब्रह्मा तं नाभिजग्मिवान् । गते देवे तदा विष्णौ ब्रह्मा लोकपितामहः ११४
भूयश्चकार वै सृष्टिं लोकानां प्रभवः प्रभुः । तं दृष्ट्वा नारदः प्राह वाक्यं वाक्यविदं मुनिः॥ ११५

नारद उवाच—

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । सर्वव्यापी भुवः स्पर्शादध्यतिष्ठद्दशाङ्गुलम् ॥ ११६
यद्भूतं यच्च वै भाव्यं सर्वमेव भवान्यतः । त्वत्तो विश्वमिदं तात त्वत्तो भूतं भविष्यति ॥ ११७
त्वत्तो यज्ञः सर्वहुतः पृषदाज्यं पशुर्द्विधा । त्वत्तो ऋचोऽथ सामानि त्वत्तश्छन्दांसि जज्ञिरे ११८
त्वत्तो यज्ञाश्च जायन्ते त्वत्तोऽश्वाश्चैव दन्तिनः । गावस्त्वत्तः समुद्भूतास्त्वत्तोजाताऽ*वयो मृगाः
त्वन्मुखाद्ब्राह्मणा जातास्त्वत्तः क्षत्रमजायत । वैश्यास्तवोरुजाः शूद्रास्ते च पद्भ्यां समुद्गताः ॥
अक्ष्णोः सूर्योऽनिलः श्रोत्राच्चन्द्रमा मनसस्तव । प्राणोऽन्तःसुषिराज्जातो मुखादग्निरजायत १२१
नाभितो गगनं द्यौश्च शिरसः समवर्तत । दिशः श्रोत्रात्क्षितिः पद्भ्यां त्वत्तः सर्वमभूदिदम् १२२
न्यग्रोधः सुमहानल्पे यथा बीजे व्यवस्थितः । ससर्ज विश्वमखिलं बीजभूते तथा त्वयि ॥ १२३
बीजाङ्कुरसमुद्भूतो न्यग्रोधः समुपस्थितः । विस्तारं च यथा याति त्वत्तः सृष्टौ तथा जगत् ॥
यथा कदल्या नान्यत्वं त्वक्पत्रेणाथ दृश्यते । एवं विश्वमिदं नान्यत्त्वत्स्थं संप्रति दृश्यते॥ १२५
ह्लादिनी सुविशुद्धिः स्यात्त्वय्येका सर्वभाविनी । ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते १२६
पृथग्भूतैकभूताय सर्वभूतात्मने नमः । प्रभूतभूतभूताय तुभ्यं भूतात्मक प्रभो ॥ १२७
व्यक्तः प्रधानपुरुषो विराट्सम्राट्तथा भवान् । [+विभाव्यमन्तःकरणं पुरुषेष्वक्षयो भवान्] ॥
सर्वस्मिन्सर्वभूतस्त्वं सर्वः सर्वस्वरूपधृक् । सर्वं त्वत्तः समुद्भूतं नमः सर्वात्मनेऽस्तु ते ॥ १२९
सर्वात्मकोऽसि सर्वेश सर्वभूतस्थितो यतः । कथयामि ततः किं ते सर्वं वेत्सि हृदि स्थितम् १३०
यो मे मनोरथो देव सफलः स त्वया कृतः । तपश्च तप्तं सफलं यद्दृष्टोऽसि जगत्पते ॥ १३१

ब्रह्मोवाच—

तपसस्तत्फलं पुत्र यद्दृष्टोऽहं त्वयाऽधुना । मद्दर्शनं हि विफलं नारदेह न जायते ॥ १३२
वरं वरय तस्मात्त्वं यथाभिमतमात्मनः । सर्वं संपद्यते वत्स मयि दृष्टिपथं गते ॥ १३३

नारद उवाच—

भगवन्सर्वभूतेश सर्वस्याऽऽस्ते भवान्हृदि । किमज्ञातं तव स्वामिन्मनसा यन्मयेप्सितम् ॥ १३४
कृता त्वया तथा सृष्टिर्मया दृष्टा तथा विभो । तेन मे कौतुकं जातं दृष्ट्वा देवर्षिदानवान् ॥ १३५

पुलस्त्य उवाच—

नारदस्य पिता तुष्टो ब्रह्मा देवो दिवस्पतिः । नारदाय वरं प्रादादृषीणामुत्तमो भवान् ॥ १३६
भविता मत्प्रसादेन कलिकेलिकथाप्रियः । गतिश्च तेऽप्रतिहता दिवि भूमौ रसातले ॥ १३७

* ऽधरार्षः । + धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

१ झ. °स्तदादेशो च श° । २ क. ख. ग. ङ च. ज. सर्वभूतः । ३ क. ख. ङ. च. ज. भूतानि । ४ झ. °श्चैः कतोद्तः । गा° । ५ क. ङ. च. ज. कृतम् ।

यज्ञोपवीतसूत्रेण योगपट्टावलम्बिका । छत्रिका च तथा वीणा अलंकाराय तेऽनघ ॥ १३८

विष्णोः समीपे रुद्रस्य तथा शक्रस्य नारद । द्वीपेषु पार्थिवानां तु सर्वत्रास्खलिता गतिः १३९

त्वां दृष्ट्वा तु सदा प्रीतिं लप्स्यन्ति भुवि पार्थिवाः । वर्णानां तु भवाञ्शास्ता वरो दत्तो मया तव

तिष्ठ पुत्र यथाकामं सेव्यमानः सुरादिभिः ॥ १४०

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे विष्णुलक्ष्म्युत्पत्तिर्नाम चतुर्थोऽध्यायः ॥ ४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२०११६

---

अथ पञ्चमोऽध्यायः ।

---

भीष्म उवाच—

कथं सती दक्षसुता देहं त्यक्तवती शुभा । दक्षयज्ञस्तु रुद्रेण विध्वस्तः केन हेतुना ॥ १

एतन्मे कौतुकं ब्रह्मन्कथं देवो महेश्वरः । जगामातिक्रोधवशं त्रिपुरारिर्महायशाः ॥ २

पुलस्त्य उवाच—

गङ्गाद्वारे पुरा भीष्म दक्षो यज्ञमथाकरोत् । तत्र देवासुरगणाः पितरोऽथ महर्षयः ॥ ३

समाजग्मुर्मुदा युक्ताः सर्वे देवाः सवासवाः । नागा यक्षाः सुपर्णाश्च वीरुधौषधयस्तथा ॥ ४

कश्यपो भगवानत्रिः पुलस्त्यः पुलहः क्रतुः । प्राचेतसोऽङ्गिराश्चैव वसिष्ठश्च महातपाः ॥ ५

तत्र वेदिं समां कृत्वा चातुर्होत्रं न्यवेशयत् । होता वसिष्ठस्तत्राऽऽसीदङ्गिराध्वर्युसत्तमः ॥ ६

बृहस्पतिस्तथोद्गाता ब्रह्मा वै नारदः स्मृतः । यज्ञकर्मप्रवृत्तेषु हूयमानेषु चाग्निषु ॥ ७

देवेष्वागच्छमानेषु स्थावरे जङ्गमे तथा । सदस्योऽथाभवद्ब्रह्मा पुत्रैः सह समन्वितः ॥

यज्ञस्य रक्षणार्थाय स्वयं विष्णुरुपागतः ॥ ८

आगता वसवः सर्वे आदित्या द्वादशैव तु । अश्विनौ मरुतश्चैव मनवश्च चतुर्दश ॥ ९

एवं यज्ञे प्रवृत्ते च हूयमानेषु चाग्निषु । विभूतिं तां परां तत्र भक्ष्यभोज्यकृतां शुभाम् ॥ १०

आलोक्य सर्वतो भूमिं समन्ताद्दशयोजनाम् । महावेदिः कृता तत्र सर्वैस्तत्र समन्वितैः ॥ ११

सर्वयज्ञसमूहं तु यज्ञे दृष्ट्वा सती शुभा । तदा सानुनयं वाक्यं पितरं साऽभ्यभाषत ॥ १२

सत्युवाच—

ब्रह्मा सुरगणाः सर्वे ऋषयश्च समागताः । पद्मालयः पद्मजन्मा देवदेवः पितामहः ॥ १३

विमानवरमारूढः सावित्र्या कान्तया सह । अस्मिंस्तव मखे स्वामिंस्तपस्विगणसेविते ॥ १४

सह लक्ष्म्या शार्ङ्गधन्वा पीतवासा जगत्पतिः । कौस्तुभेनोद्भासिताङ्गः श्रीवत्साङ्कोपशोभितः ॥

लक्ष्मीपतिरिहाऽऽयातः सत्रे ते च प्रजापते । ऐरावणसमारूढो देवराजः शतक्रतुः ॥

पत्न्या शच्या सहाऽऽयातः कृतावासः शतक्रतुः ॥ १६

पापानां यो दमयिता धर्मिणां धार्मिकः प्रभुः । धूमोर्णया यमः सार्धमिहाऽऽयातः स दृश्यते ॥

यादसां च पतिर्देवो वरुणो लोकपावनः । गौर्या पत्न्या सहाऽऽयातः प्रचेता मण्डपे त्विह १८

---

*संधिरार्षः ।

---

१ क. ख. ग. घ. ङ. च. ञ. सदा प्रीतिं च लप्स्यसे । त्वां । २ क. ग. घ. च. ज. °थाऽऽरभत् । ३ क. ख. ङ. च. ज. °ह्मा सुरैः सर्वैः सम° । ४ क. ख. ङ. च. सर्वान्देवाञ्शक्रमुख्यान्यज्ञे । ५ क. ख. ग. घ. ङ. च. अस्मिन्यज्ञे तव विभो उपविष्टश्च शोभते । ६ क. ख. ग. घ. ङ. च. ज. °कभाव° ।

सर्वयक्षाधिपो देवः पुत्रो विश्रवसो मुनेः । पत्न्या सह समायातः स देवोऽस्मिन्धनेश्वरः ॥१९
मुखं यः सर्वदेवानां जन्तूनामुदरे स्थितः । वेदा यस्यार्थमुत्पन्नाः सोऽयं यज्ञ उपागतः ॥ २०
निर्ऋतिर्नाम यक्षेशो दिशांत्यये नियोजितः । स च त्विहाऽऽगतस्तात पत्न्या सार्धं कृताविह ॥
अयुष्मदो जगत्यस्मिन्ब्रह्मणा निर्मितः पुरा । प्राणोऽपानः समानश्च उदानो व्यानसंज्ञितः॥२२
एकोनपञ्चाशत्केन गणेन परिकीर्त्यते । यज्ञे प्रजापतिश्चासौ वायुर्देवः समागतः ॥ २३
द्वादशात्मा ग्रहाध्यक्षः चक्षुषी जगतस्त्विह । पाति वै भुवनं सर्वं देवानां यः परायणः ॥ २४
आयुषश्च धनानां च दिवसानां पतिर्हि यः । संज्ञापतिरिहाऽऽयातो भास्करो लोकपावनः ॥२५
अत्रिवंशसमुद्भूतो द्विजराजो महायशाः । नयनानन्दजननो लोकनाथो धरातले ॥ २६
ओषधीनां पतिश्चापि वीरुधानां पतिस्तथा । ऋक्षनाथः सपत्नीक इहाऽऽयातः स शीतगुः २७
वसवोऽष्टौ समायाता अश्विनौ च समागतौ । वृक्षो वनस्पतिश्चापि गन्धर्वाप्सरसां गणाः ॥ २८
विद्याधरा भूतसंघा वेताला यक्षराक्षसाः । पिशाचाश्चोग्रकर्माणस्तथाऽन्ये जीवहारकाः ॥ २९
नद्यो नदाः समुद्राश्च द्वीपाश्च रुह पर्वतैः । ग्राम्यारण्याश्च पशवो यश्चेहन्यश्च नेहति ॥ ३०
कश्यपो भगवानत्र वसिष्ठश्चापरैः सह । पुलस्त्यः पुलहश्चैव सनकाद्या महर्षयः ॥ ३१
पुण्या राजैन्यकाश्चैव पृथिव्यां ये च पार्थिवाः । वर्णाश्चाऽऽश्रमिणः सर्वे स्वकर्मकारिणश्च ये ३२
किं तु मे बहुनोक्तेन ब्राह्मी सृष्टिरिहाऽऽगता । भगिन्यो भागिनेयाश्च भगिनीपतयस्त्विमे॥ ३३
स्वभार्यासहिताः सर्वे सपुत्राः सहबान्धवाः । इमे ग्रहाः समायाता नक्षत्रैः सह चन्द्रमाः ॥ ३४
लोकपालाः समायाताः कृतावस्मिन्पितस्तव । शोभमानाः सपत्नीकाः सर्वालंकारभूषिताः॥३५
त्वया समर्चिताः सर्वे दानमानपरिग्रहैः । आमन्त्रणामन्त्रितानां सर्वेषां मानना कृता ॥ ३६
एक एवात्र भगवान्पतिर्नाऽऽमन्त्रितस्त्विह । विना तेन त्विदं शून्यं भगवन्प्रतिभाति मे ॥ ३७
मन्ये चाहं तु भवता पतिर्मे न निमन्त्रितः । विस्मृतस्ते भवेन्नूनं सर्वेषां भगवान्प्रभुः ॥ ३८

पुलस्त्य उवाच—

सत्या तदुक्तं वचनं श्रुत्वा दक्षः प्रजापतिः । पतिस्नेहसमायुक्तां प्राणेभ्योऽपि गरीयसीम् ॥३९
अङ्कमारोप्य तां बालां साध्वीं पतिपरायणाम् । पतिव्रतां महाभागां पतिप्रियहितैषिणीम् ॥ ४०
प्राह गम्भीरभावेन शृणु वत्से यथातथम् । येनाद्य कारणेनेह पतिस्ते न निमन्त्रितः ॥ ४१
तच्छृणुष्व वरारोहे कारणं मम यत्नतः । कपालपात्रधृक्चर्मी भस्मच्छन्नतनुस्तथा ॥ ४२
शूली दण्डी च नग्नश्च श्मशाने रमते सदा । विभूत्याऽङ्गानि सर्वाणि परिमार्ष्टि च नित्यशः॥४३
व्याघ्रचर्मपरीधानो हस्तिचर्मोत्तरच्छदः । कपालमालां शिरसि खट्वाङ्गं च करे स्थितम् ॥ ४४
कट्यां वै गोनसं बद्ध्वा लिङ्गस्थान्वलयान्बहून् । पन्नगानां तु राजानमुपवीतं च वासुकिम्॥४५
कृत्वा भ्रमति चानेन रूपेण च सदा क्षितौ । नग्नो गणपरीवारो भूतसंघैरनेकशः ॥ ४६
त्रिनेत्रश्च त्रिशूली च गीतनृत्यरतः सदा । कुत्सितानि तथाऽन्यानि सदा कुर्वीत ते पतिः ॥४७
त्रपाकरं भवेन्मह्यं देवानां संनिधौ कथम् । यादृग्वा वसनं तस्य केतनं प्रति नार्हति ॥ ४८
एतैर्दोषैर्मया वत्से लोकानां चैव लज्जया । नाऽऽह्वानं तु कृतं तस्य कारणेन मया शुभे ॥ ४९

१ ग. घ. ज. जातकर्मकाः । २ क. ख. ग. घ. ङ. च ज. °जर्षयश्चै° । ३ क. ङ. ज. °तिर्मे न समागतः । ग. घ. °तिर्मे नाऽऽगत° । ४ ग. सर्वे शंसतु मे भवान् । पु° । ५ क. ख. ग. घ. ङ. च. ज. °चर्मपरिच्छ° । ६ ङ. च. °तौ । नानागणाः पिशाचाश्च भू° । ७ क. ख. ङ. च. ज. सूते ।

यज्ञस्यास्य समाप्तौ च पूजां कृत्वा त्वया सह। आनयिष्यामि भर्तारं त्वया सह त्रिलोचनम् ५०
त्रैलोक्याभ्यधिकां पूजां करिष्यामि च सत्कृतः। एतत्ते सर्वमाख्यातं त्रपायाः कारणं महत् ५१
नात्र मन्युस्त्वया कार्यः सर्वस्वं भागमर्हसि। अन्यजन्मनि यद्येन यादृक्कर्म पुरा कृतम् ॥ ५२
इह जन्मनि स तादृक्फलं भुनक्ति पुत्रिके। परितापं मा कृथास्त्वं फलं भुङ्क्ष्व यथाकृतम् ॥ ५३
श्रियं वरकृतां दृष्ट्वा रूपसौभाग्यशोभनाम्। रूपं च कीर्तिः सौभाग्यं रम्याण्याभरणानि च ५४
कुले महति वै जन्म वपुश्चातीव सुन्दरम्। पूर्वभाग्यैस्तु लभ्यन्ते नरैरेतानि सुव्रते ॥ ५५
माऽऽत्मानं परिनिन्देथा मा च भाग्यानि शोभने। पूर्वकर्मफलं भुङ्क्ते दातुं कस्य कुतः क्षमः ॥ ५६
नास्ति वै बलवान्कश्चिन्न शूरो न च पण्डितः। पाण्डित्यं च बलं चैव जायते पूर्वकर्मणः ॥ ५७
एते देवा दिवं प्राप्ताः शोभमानाः स्थिताश्चिरम्। ब्रह्मा विष्णुश्च भगवानिन्द्राद्याश्च सुरा अपि ५८
पुण्येन तपसा चैव क्षेत्रेषु विविधेषु च। यदेभिरर्जितं पुण्यं तस्यैते फलभागिनः ॥ ५९
एवमुक्ता ततः सा तु सती भीष्म शुचाऽन्विता। विनिन्दमाना पितरं क्रोधेनारुणितेक्षणा ॥ ६०

सत्युवाच—

एवमेतद्यथा तात त्वया चोक्तं ममाग्रतः। सर्वो जनः पुण्यभागी पुण्येन लभते श्रियम् ॥ ६१
पुण्येन लभते जन्म पुण्ये भोगाः प्रतिष्ठिताः। स एव जगतामीशः सर्वेषामुत्तमो मतः ॥ ६२
स्थानान्येतानि सर्वेषां दत्तान्येतानि धीमता। ये गुणास्तस्य देवस्य वक्तुं जिह्वाऽपि वेधसः ॥ ६३
न शक्ता ख्यापने तस्य देवस्य परमेष्ठिनः। भस्मास्थि च कपालानि श्मशाने वसतिश्च याँ ॥ ६४
द्योतमानाश्च वै सर्पाः पिशाचा गुह्यकास्तथा। रत्नानां भूषणानां च स्थानानां प्रभुरीश्वरः ॥ ६५
एष धाता विधाता च एष पालयिता दिशः। प्रसादेन च रुद्रस्य प्राप्तः स्वर्गं पुरंदरः ॥ ६६
अनुज्ञया तु रुद्रस्य सृष्टिं ब्रह्मा चकार ह। का शक्तिः पालने विष्णोर्वराकस्येह दृश्यते ॥ ६७
प्रभुत्वे तु गुणोत्कर्षे को रुद्रस्याधिकः स्मृतः। एतन्मत्वा तु विभुना स्वयं देवेन शंभुना ॥ ६८
जगत्यस्मिन्स्थितेरर्थे धात्री चैषा निवेशिता। यदि रुद्रेऽस्ति देवत्वं यदि सर्वगतः शिवः ॥ ६९
सत्येनानेन ते यज्ञं विध्वंसयतु शंकरः। यद्यस्ति मे तपः किंचित्कश्चिद्धर्मोऽथवा कृतः ॥ ७०
फलेन तस्य धर्मस्य यज्ञस्ते नाशमृच्छतु। प्रियाऽहं यदि देवस्य यदि मां तारयिष्यति ॥ ७१
तेन यज्ञो न ते गन्ता समाप्तिमिह कर्हिचित्। इत्युक्त्वा योगमास्थाय स्वदेहोद्भवतेजसा ॥ ७२
निर्दहन्ती तदाऽऽत्मानं सदेवासुरपन्नगैः। किं किमेतदिति प्रोक्तं गन्धर्वगणगुह्यकैः ॥ ७३
गङ्गाकूले तदा मुक्तं देहं वै क्रुद्धया तया। मैल्लकं नाम तत्तीर्थं गङ्गायाः पश्चिमे तटे ॥ ७४
श्रुत्वा रुद्रस्तु वृत्तान्तं पत्न्या नाशसुदुःखितः। हन्तुं यज्ञं वीरभद्रो देवानामिह पश्यताम् ॥ ७५
गणकोटिः समादिष्टा ग्रहा वैनायकास्तथा। भूतप्रेतपिशाचाश्च दक्षयज्ञविनाशिने ॥ ७६
*प्रेषितास्ते च रुद्रेण तस्य यज्ञक्षयाय हि। तैर्गत्वा विबुधाः सर्वे यज्ञे निर्जित्य नाशिताः ॥ ७७

---

* इदमर्धं झ.पुस्तकस्थम्।

---

१ झ. °जां लब्ध्वा यास्यति स° । २ °ङ. ज. °नि सुव्रते । फलं चैवं विधिकृतं दातुं कस्य तु कः क्ष° । ३ क. ख. घ. ङ. च. ज. मूढो । ४ क. ख. ङ. च. °ष्म रुषाऽन्वि° । ग. °ष्म त्वरान्वि° । ५ ङ. फलम् । झ. स्वयम् । ६ क. ख. ङ. च. °या । गोनसाद्याश्च ये सर्पाः सर्वे ते भूषणीकृताः । भूतप्रेतगणास्तस्य पिशाचा गुह्यकास्तथा । ए° । ७ क. ख. ग. घ. च. ज. सौनकं । ८ ख ग. घ. ङ. च. छ. °ज्ञं धीरभद्देवा° ।

हतें यज्ञे तदा दक्षो निरुत्साहो निरुद्यमः । उपगम्याब्रवीद्दक्षो देवदेवं पिनाकिनम् ॥ ७८

दक्ष उवाच—

न ज्ञातोऽसि मया देव देवानां प्रभुरीश्वरः । त्वमस्य जगतोऽधीशः सुराः सर्वे त्वया जिताः ॥ ७९
कृपां कुरु ममेशान गणान्सर्वान्निवर्तय । गणैर्नानाविधैर्देव नानाभूषणभूषितैः ॥ ८०
नानावदनदन्तोष्ठैर्नानाप्रहरणोद्यतैः । नानानागेन्द्रसंदर्शजटाभारोपशोभितैः ॥ ८१
मत्या स्वयोद्भूतदर्पैर्घोरैर्घोरविघातिभिः । कामरूपैरकामैश्च सर्वकामसमन्वितैः ॥ ८२
अनिवार्यबलैश्चैव योगिभिर्योगगामिभिः । व्यालोलकेसरसटादंष्ट्रोत्कटहठोद्भटैः ॥ ८३
करीन्द्रकरटाटोपपाटनैः सिंहदेहिभिः । कैश्चित्पद्रुमदाघ्राणपूर्णध्यानघनप्रभैः ॥ ८४
विचित्रैश्चित्रवसनैर्वीरधीररवादिभिः । मृगव्याघ्रसिंहरुतैस्तरक्षाजिनधारिभिः ॥ ८५
भुजङ्गहारधवलकृतयज्ञोपवीतकैः । शूलासिपट्टिशधरैः परशुपाशहस्तकैः ॥ ८६
शस्त्रक्रकचकोदण्डचण्डदण्डास्त्रधारिभिः । गदामुद्गरपाषाणमुसलालातहस्तकैः ॥ ८७
वज्रशक्त्यशनिप्राशकुन्तकर्तकधारिभिः । गणेश्वरैः सुदुर्धर्षैर्वृतः सूर्यो ग्रहैरिव ॥ ८८
एतान्निवारयेद्देवो नष्टो यज्ञो दिवं गतः । मृगरूपधरो भूत्वा भयभीतस्तु शंकर ॥ ८९
नमः शङ्करदेवाय सगणाय सनन्दिने । वृषासनाय सोमाय शूलशक्त्यष्टिधारिणे ॥ ९०
नमो दिक्चर्मवस्त्राय यशसे तीव्रतेजसे । ब्रह्मणे ब्रह्मदेहाय ब्राह्मणायाजिताय च ॥ ९१
नमोऽन्धकविनाशाय क्रतुवल्कलधारिणे । रुद्राय प्रतिवज्राय शिवाय क्रथनाय च ॥ ९२
गिरीशाय सुरेशाय ईशानाय नमो नमः । धूम्रोग्राय विरूपाय गदिने दिव्यरूपिणे ॥ ९३
सुरासुराधिपतये यतीनां पतये नमः । देवदेवाधिदेवाय व्याघ्रचर्मासिधारिणे ॥ ९४
विरूपाक्ष शुभाक्षाय सहस्राक्षाय ते नमः । ईशानाय विशालाय त्रिनेत्राय च धन्विने ॥ ९५
दर्पाहताय देवाय सर्वसंहारिणे नमः । भक्तानुकम्पिने तुभ्यं रुद्रजाप्यस्तुताय च ॥ ९६
विरूपाय स्वरूपाय रूपाणां शतधारिणे । पञ्चास्याय शुभास्याय चन्द्रास्याय नमो नमः ॥ ९७
वरदाय वराहाय मृगाय कूर्मिणे नमः । नीलालकशिखण्डाय कमण्डलुधराय च ॥ ९८
विश्वनाम्ने च विश्वाय विश्वेशाय नमो नमः । त्रिनेत्र त्राणमस्माकं त्रिपुरघ्न विधीयताम् ॥ ९९
वाङ्मनःकायभावैस्त्वां प्रपन्नोऽस्मि महेश्वर । एवं स्तुतस्तदा देवो दक्षेणाऽऽपन्नदेहिना ॥ १००
दिव्येनानेन स्तोत्रेण भृशमाराधितस्तदा । समग्रं ते यज्ञफलं मया दत्तं प्रजापते ॥ १०१
सर्वकामार्थसिद्ध्यर्थं यज्ञं प्राप्स्यसि चोत्तमम् । एवमुक्तो भगवता प्रणम्याऽऽशु सुरेश्वरम् ॥ १०२
जगाम स्वं निकेतं तु गणानामेव पश्यताम् । पत्न्याः शोकेन वै देवो गङ्गाद्वारे तदा स्थितः ॥ ३
तां सतीं चिन्तयानस्तु क्व नु सा मे प्रिया गता । तस्य शोकाभिभूतस्य नारदोऽभवत्संनिधौ ॥ ४

नारद उवाच—

या सा सती ते देवेश भार्या प्राणसमा मृता । हिमवद्दुहिता सा च मेनागर्भसमुद्भवा ॥ १०५

---

१ क. ख. ग घ. ङ. च. ज. महेशा° । २ क. च. °त्परमदाघ्राणपूर्णदीप्तसमप्र° । घ. ङ. ज. °त्परमदाघ्राणपूर्णदीपसमप्र° । ३ क. ग. घ. ङ. °त्रवस्त्रव° । ४ क. ख. च. °शुप्रासह° । घ. °शुप्राशह° । ५ क. ख. ङ. च. °ण्डकालदण्डास्त्रपाणिभिः । ६ क. ख. ग. घ. ङ. च. ज. °व । देवदेव महादेव न° । ७ क. ख. ग. ङ. च. ज. नमस्ते सामवेदाय । घ. नमस्ते सोमदेवाय । ८ झ. वृषागमाय । ९ ग. घ. शूलदण्डादिधारिणे । १० क. ख. घ. ङ. च. ज. °मः । मुण्डाय चण्डमुण्डाय वरखट्वाङ्गधा° ।

जग्राह देहमन्यं सा लोकतत्त्वार्थवेदिनी । श्रुत्वा देवस्तदा ध्यानमवतीर्णामपश्यत ॥ १०६
कृतकृत्यमथाऽऽत्मानं कृत्वा देवस्तदा स्थितः । संप्राप्तयौवना देवी पुनरेव विवाहिता ॥ १०७
एवं मया ते कथितं यथा यज्ञो हतः पुरा ॥ १०८

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पुलस्त्यसंहितायां दक्षयज्ञविध्वंसनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२०२२३

---

अथ षष्ठोऽध्यायः ।

---

भीष्म उवाच—

देवानां दानवानां च गन्धर्वोरगरक्षसाम् । उत्पत्तिं विस्तरेणेमां गुरो ब्रूहि यथाविधि ॥ १

पुलस्त्य उवाच—

संकल्पाद्दर्शनात्स्पर्शात्पूर्वेषां सृष्टिरुच्यते । दक्षात्प्राचेतसादूर्ध्वं प्रजा मैथुनसंभवाः ॥ २
यथा ससर्ज चैवाऽऽदौ तच्चैव शृणु कौरव । यदा तु सृजतस्तस्य देवर्षिगणपन्नगान् ॥ ३
न वृद्धिमगमल्लोकस्तदा मैथुनयोगतः । दक्षः पुत्रसहस्राणि यथाऽसिक्न्यामजीजनत् ॥ ४
तांस्तु दृष्ट्वा महाभाग सिसृक्षून्विविधाः प्रजाः । नारदः प्राह हर्यश्वान्दक्षपुत्रान्समागतान् ॥ ५

नारद उवाच—

भुवःप्रमाणं सर्वत्र ज्ञात्वोर्ध्वमध एव वा । ततः सृष्टिं विशेषेण कुरुध्वमृषिसत्तमाः ॥ ६
ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतोदिशम् । अद्यापि न निवर्तन्ते समुद्रादिव सिन्धवः ॥ ७
हर्यश्वेषु प्रनष्टेषु पुनर्दक्षः प्रजापतिः । वीरिण्यामेव पुत्राणां सहस्रमसृजत्प्रभुः ॥ ८
शबला नाम ते विप्राः समेताः सृष्टिकर्मणि । नारदोऽनुगतान्प्राह पुनस्तान्पूर्ववन्मुनिः ॥ ९

नारद उवाच—

भुवः प्रमाणं सर्वत्र ज्ञात्वा भ्रातॄंस्तथैव च । आगत्य च पुनः सृष्टिं करिष्यथ विशेषतः ॥ १०
तेऽपि तेनैव मार्गेण जग्मुर्भ्रातॄन्यथा तदा । ततः प्रभृति न भ्रातुः कनीयान्मार्गमिच्छति ॥ ११
अन्वेषदुःखमाप्नोति तेन तत्परिवर्जयेत् । ततस्तेष्वपि नष्टेषु षष्टिं कन्याः प्रजापतिः ॥ १२
वीरिण्यां जनयामास दक्षः प्राचेतसस्तदा । प्रादात्स दश धर्माय कश्यपाय त्रयोदश ॥ १३
सप्तविंशतिं सोमाय चतस्रोऽरिष्टनेमिने । द्वे चैव भृगुपुत्राय द्वे कृशाश्वाय धीमते ॥ १४
द्वे वै चाङ्गिरसे प्रादात्तासां नामानि विस्तरात् । शृणुध्व देवमातॄणां प्रजाविस्तारमादितः ॥ १५
अरुन्धती वसुर्जामी लम्बा भानुर्मरुत्वती । संकल्पा च मुहूर्ता च साध्या विश्वा च भाविता १६
धर्मपत्न्यः समाख्यातास्तासां पुत्रान्निबोध मे । विश्वेदेवास्तु विश्वायां साध्या साध्यानजीजनत्
मरुत्वत्यां मरुत्वन्तो वसोस्तु वसवः स्मृताः । भानोस्तु भानवो जाता मुहूर्तायां मुहूर्तजाः १८
लम्बायां घोषनामानो नागवीथी तु जामिजा । पृथिवीतलसंभूत(?)मरुन्धत्यां व्यजायत ॥ १९
संकल्पायां तु संकल्पा वसोः सृष्टिं निबोध मे । ज्योतिष्मन्तस्तु ये देवा व्यापकाः सर्वतोदिशम्
वसवस्ते समाख्यातास्तेषां नामानि मे शृणु । आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः ॥ २१

---

१ क. ख. ङ. च. ज. सा वेदत्वेदार्थे । ग. घ. सा लोकवेदार्थे । २ क ग. घ. ङ. च. ज. °व.सौ त° । ३ ख. °णि पञ्चशक्त्यान° । ४ क. ग. ङ. च. ज. भामिनी । घ. माविनी । ५ क. च जामिला ।

प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः । आपस्य पुत्राश्चत्वारः शान्तो वैतण्ड एव च ॥ २२
सोम्बोऽथ मुनिवभ्रुश्च यज्ञरक्षाधिकारिणः । ध्रुवस्य कालः पुत्रश्च वर्चाः सोमादजायत ॥ २३
द्रविणो हव्यवाहश्च धरपुत्राविमौ स्मृतौ । कल्पान्तस्थस्ततः प्राणो रमणः शिशिरोऽपि च ॥ २४
मनोहरो धवश्चाथ शिवो वाऽथ हरेः सुताः । शिवो मनोजवं पुत्रमविज्ञातगतिं तथा ॥ २५
अवाप चानिलः पुत्रानग्निप्रायगुणांस्ततः । *अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत ॥ २६
तस्य शाखोपशाखश्च नैगमेयः स्वयंभुवः । अपत्यं कृत्तिकानां च कार्तिकेयस्ततः स्मृतः ॥ २७
प्रत्यूषस्य विभुः पुत्रो मुनिर्नामाथ देवलः । विश्वकर्मा प्रभासस्य पुत्रः शिल्पी प्रजापतिः ॥ २८
प्रासादभवनोद्यानप्रतिमाभूषणादिषु । तडागारामकूपेषु स्थितः सोऽमरवर्धकिः ॥ २९
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः । हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥ ३०
सावित्रश्च जयन्तश्च पिनाकी चापराजितः । एते रुद्राः समाख्याता एकादश गणेश्वराः ॥ ३१
एतेषां मानसानां तु त्रिशूलवरधारिणाम् । कोटयश्चतुरशीतिर्मत्पुत्राश्चाक्षया मताः ॥ ३२
दिक्षु सर्वासु ये रक्षां प्रकुर्वन्ति गणेश्वराः । एते वै पुत्रपौत्राश्च सुरभीगर्भसंभवाः ॥ ३३
कश्यपस्य प्रवक्ष्यामि पत्नीभ्यः पुत्रपौत्रकान् । अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा तथा ॥ ३४
सुरभिर्विनता तद्वत्ताम्रा क्रोधवशा इरा । कद्रूः खसा मुनिस्तद्वत्तासु पुत्रान्निबोध मे ॥ ३५
तुषिता नाम ये देवाश्चाक्षुषस्यान्तरे मनोः । वैवस्वतेऽन्तरे ते वा आदित्या द्वादश स्मृताः ३६
[+इन्द्रो धाता भगस्त्वष्टा मित्रोऽथ वरुणोऽर्यमा । विवस्वान्सविता पूषा अंशुमान्विष्णुरेव च ॥
एते सहस्रकिरणा आदित्या द्वादश स्मृताः ।] मारीचात्कश्यपाज्जज्ञे पुत्रानदितिरुत्तमान् ॥ ३८
कृशाश्वस्य ऋषेः पुत्रा देवप्रहरणाः स्मृताः । एते देवगणा विप्राः प्रतिमन्वन्तरेषु च ॥ ३९
उत्पद्यन्ते प्रलीयन्ते कल्पे कल्पे तथैव च । दितिः पुत्रद्वयं लेभे कश्यपादिति नः श्रुतम् ॥ ४०
हिरण्यकशिपुश्चैव हिरण्याक्षस्तथैव च । हिरण्यकशिपोस्तद्वज्जातं पुत्रचतुष्टयम् ॥ ४१
प्रह्लादश्चानुह्लादश्च संह्लादो ह्लाद एव च । प्रह्लादपुत्र आयुष्माञ्शिबिर्बाष्कलिरेव च ॥ ४२
विरोचनश्चतुर्थस्तु स बलिं पुत्रमाप्तवान् । बलेः पुत्रशतं त्वासीद्बाणज्येष्ठं तथैव च ॥ ४३
धृतराष्ट्रस्तथा सूर्यो विवस्वानंशुतापनः । निकुम्भनामा गुर्वक्षः कुक्षी भीमोऽथ भीषणः ॥ ४४
एवमाद्यास्ते बहवो बाणो ज्येष्ठो गुणाधिकः । बाणः सहस्रबाहुभ्यां(भिः) सर्वास्त्रगुणसंयुतः ४५
तपसा तोषितो यस्य पुरे वसति शूलधृक् । महाकालत्वमगमत्साम्यं यस्य पिनाकिनः ॥ ४६
हिरण्याक्षस्य पुत्रोऽभूदुलूकः शकुनिस्तथा । भूतसंतापनश्चैव महाभीमस्तथैव च ॥ ४७
एतेभ्यः पुत्रपौत्राणां कोटयः सप्तविंशतिः । महाबला महाकाया नानारूपा महौजसः ॥ ४८
दनुः पुत्रशतं लेभे कश्यपाद्वरदर्पितम् । विप्रचित्तिः प्रधानोऽभूत्तेषां मध्ये महाबलः ॥ ४९

---

* इदमर्धं क्वचिन्नास्ति । + धनुश्चिह्नान्तर्गतः पाठः, झ.पुस्तकस्थः ।

---

१ क. ख. ङ. च. ज. च । अपि शान्तो मुनिर्बभ्रुर्यज्ञकाराधिका° । ग. च । प्रशान्तोऽथ मुनिर्बभ्रुर्यज्ञकाराधिका° । २ घ. शान्तोऽथ । ३ झ. °म्बो यमु नेवत्रश्च । ४ क. ख. ङ. च. ज. °गतिप्रदम् । अ° । ५ घ. तदा । ६ क. ख. च. ज. ऋभुः । ७ झ. महाप्राज्ञः । ८ च. ज. °शीतिस्तत्पुत्राश्चाऽऽयुषां गताः । ९ झ. °द्रूः शुकी शुनि° । १० झ. सूर्यश्चन्द्रश्चन्द्रासुता° । ११ झ. निकुम्भनाभो । १२ क. ङ. च. ज. कुक्षिर्भीमो° । ग. घ. कुक्षिर्भीमोऽ° । १३ क. ग. घ. ज. °वमन्ये तु ब° । १४ क. ख. च. °भूदन्धको नाम नामतः । भू° । ग. ज. °भूदनक्षो नाम नामतः । भू° । १५ क. ख. ग. घ. ङ. च. °सप्तसप्ततिः । १६ क. ग. ङ. च. °लः । दृष्टमूर्धा स श° ।

द्विरष्टमूर्धा शकुनिस्तथा शङ्कुशिरोधरः । अयोमुखः शम्बरश्च कपिलो वामनस्तथा ॥ ५०
[*मरीचिर्मागधश्चैव हरगर्जशिरास्तथा । निद्राधरश्च केतुश्च केतुवीर्यः शतक्रतुः ॥ ५१
इन्द्रमित्रग्रहश्चैव वज्रनाभस्तथैव च । एकवक्त्रो महाबाहुर्वज्राक्षस्तारकस्तथा ] ॥ ५२
असिलोमा पुलोमा च बिन्दुर्वाणो महासुरः । †स्वर्भानुर्वृषपर्वा च एवमाद्या दनोः सुताः॥ ५३
स्वर्भानोः सुप्रभा कन्या शची चैव पुलोमजा । उपदानवी मयस्याऽऽसीत्तथा मन्दोदरी कुहूः॥
शर्मिष्ठा सुन्दरी चैव चन्द्रा च वृषपर्वणः । पुलोमाकालके चैव वैश्वानरसुते हि ते ॥ ५५
बह्वपत्ये महासत्त्वे मारीचस्य परिग्रहे । तयोः षष्टिः सहस्राणां दानवानामभूत्पुरा ॥ ५६
पौलोमान्कालखञ्जांश्च मारीचोऽजनयत्पुरा । अवध्या ये नराणां वै हिरण्यपुरवासिनः ॥ ५७
चतुर्मुखाल्लब्धवरा ये हता विजयेन तु । विप्रचित्तिः[3] सैंहिकेयमुग्रं पुत्रमजीजनत् ॥ ५८
हिरण्यकशिपोर्ये वै भागिनेयास्त्रयोदश । कंसः शङ्खश्च राजेन्द्र नलो वातापिरेव च ॥ ५९
[+इल्वलो नमुचिश्चैव खसृमश्चाञ्जनस्तथा । नरकः कालनाभश्च परमाणुस्तथैव च ] ॥ ६०
कल्पवीर्यश्च विख्यातो दनुवंशविवर्धनः । संह्रादस्य तु दैत्यस्य निवातकवचाः कुले ॥ ६१
अवध्याः सर्वभूतानां गन्धर्वोरगरक्षसाम् । ये हता बलमाश्रित्य अर्जुनेन रणाजिरे ॥ ६२
षट्कन्या जनयामास ताम्रा मारीचबीजतः । शुकी श्येनी च भासी च सुगृध्री गृध्रिका शुचिः
शुकी शुकानुलूकांश्च जनयामास धर्मतः । श्येनी श्येनांश्च भासी च कुररानप्यजीजनत् ॥ ६४
गृध्री गृध्रान्सुगृध्री च पारावतविहंगमान् । हंससारसकारण्डप्लवाञ्शुचिरजीजनत् ॥ ६५
एष ताम्रान्वयः प्रोक्तो विनीताया निबोधत । गरुडः पततां श्रेष्ठो अरुणस्तु पतत्रिणाम् ॥ ६६
सौदामिनी तथा कन्या येयं नभसि विश्रुता । संपातिश्च जटायुश्च अरुणस्य सुतावुभौ ॥ ६७
संपातिपुत्रो बभ्रुश्च शीघ्रगश्चापि विश्रुतः । जटायोः कर्णिकारश्च शतगामी च विश्रुतौ ॥ ६८
तेषामसंख्यनामानः पक्षिणां पुत्रपौत्रकाः । सुरसायां सहस्रं तु सर्पाणामभवत्पुरा ॥ ६९
सहस्रशिरसां कद्रूः सहस्रं प्राप सुव्रता । प्रधानास्तेषु विख्याता षड्विंशतिररिंदम ॥ ७०
शेषवासुकिकर्कोटशङ्खैरावतकम्बलाः । धनंजयमहानीलपद्माश्वतरतक्षकाः ॥ ७१
एलापत्रमहापद्मधृतराष्ट्रबलाहकाः । शङ्खपालमहाशङ्खपुष्पदन्तसुभावनाः ॥ ७२
शङ्खरोमा च नहुषो[12] रमणः पाणिनिस्तथा । कपिलो दुर्मुखश्चापि पातञ्जलिमुखस्तथा ॥ ७३
एषामनन्तमभवत्सर्वेषां पुत्रपौत्रकम् । प्रायशो यत्पुरा दग्धं जनमेजयमन्दिरे ॥ ७४
रक्षोगणं क्रोधवशा सुनामानमजीजनत् । दंष्ट्रिणां नियुतं तेषां भीमसेनादगात्क्षयम्[13] ॥ ७५
रुद्राणां च गणांस्तद्वद्गोमहिष्यौ वराङ्गनाम् । सुरभिर्जनयामास कश्यपान्नृप तत्परान् ॥ ७६

---

* धनुश्चिह्नान्तर्गतः पाठः, क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । परं तु घ. पुस्तके "इन्द्रमित्रग्रहश्चैव" इत्यत्र इन्द्राजिन्नगजिच्चैव' इति दृश्यते । † इदमर्धं झ.पुस्तके । + धनुश्चिह्नान्तर्गतः पाठः क. ग. घ. ङ. च. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. ज. च विकुर्वाणो । २ क. ख. ङ. च. ज. प्राची । ३ ख. ग. घ. ङ. च. ज. °त्तिः सिंहिकायां नव पुत्रानजी° । ४ झ. °श । वत्सशल्यस्य रा° । ५ झ. °न्द्र मनोवातस्तथैव । ६ क. ख. ग. घ. ङ. च. ज. सर्वदेवानां । ७ झ. °ध्रान्कपोतांश्च पा° । ८ झ. °रसः क° । ९ क. ख. च. कण्डूः । १० क. घ. च. °पानम° । ११ क. ख. ग. घ. ङ. च. ज. °न्तशुभाननाः ।.१२ क. ख. °षो रामणः पाणिनस्त° । घ. ज. °षो राम° । ङ. च. °षो रावणः पाणिनस्त° । झ. °षो मनःपाणिरजीजनत् । क° । १३ ख. ङ. च. °म् । दंष्ट्रिणो मायुकोकादीन्गोमहिष्यो वराङ्गनाः । सु° । ग. °म् । रक्षाणां नियुतं तेषां गोमहिष्यो वराङ्गनां । सु° । घ. °म् । यक्षाणां नियुतं तेषां गोमहिष्यो वराङ्गनाः । सु° ।

मुनिर्मुनीनां च गणं गणमप्सरसां तथा । तथा किंनरगन्धर्वानरिष्टाजनयद्बहून् ॥ ७७
तृणवृक्षलतागुल्ममिरा सर्वमजीजनत् । खसा तु यक्षरक्षांसि जनयामास कोटिशः ॥ ७८
एते कश्यपदायादाः शतशोऽथ सहस्रशः । एष मन्वन्तरे भीष्म सर्गः स्वारोचिषः स्मृतः ॥ ७९
ततस्त्वेकोनपञ्चाशन्मरुतः कश्यपाद्दितिः । जनयामास धर्मज्ञान्सर्वानमरवल्लभान् ॥ ८०

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२०३०३

---

अथ सप्तमोऽध्यायः ।

---

भीष्म उवाच—

दितेः पुत्राः कथं जाता मरुतो देववल्लभाः । देवैर्जग्मुश्च[1] सापत्न्यं कस्मात्सख्यमनुत्तमम् ॥ १

पुलस्त्य उवाच—

पुरा देवासुरे युद्धे हतेषु हरिणा सुरैः[2] । पुत्रपौत्रेषु शोकार्ता गत्वा भूर्लोकमुत्तमम् ॥ २
पुष्करे तु[3] महातीर्थे सरस्वत्यास्तटे शुभे । भानुमाराधयामास तप उग्रं चकार ह ॥ ३
दितिर्वै दैत्यमाता तु ऋषिकार्येण सुव्रत[4] । फलाहारा तपस्तेपे कृच्छ्रचान्द्रायणादिभिः ॥ ४
यावद्वर्षशतं साग्रं जराशोकसमाकुला । अतः सा तप्ततपसा वसिष्ठादीनपृच्छत ॥ ५
कथयन्तु भवन्तो मे पुत्रशोकविनाशनम् । व्रतं सौभाग्यफलदमिह लोके परत्र च ॥ ६
ऊचुर्वसिष्ठप्रमुखा ज्येष्ठस्य पूर्णिमाव्रतम् । यस्य प्रसादादभवत्पुत्रशोकविवर्जिता ॥ ७

भीष्म उवाच—

श्रोतुमिच्छाम्यहं ब्रह्मञ्ज्येष्ठस्य पूर्णिमाव्रतम् । सुतानेकोनपञ्चाशद्येन लेभे पुनर्दितिः ॥ ८

पुलस्त्य उवाच—

यद्वसिष्ठादिभिः पूर्वं दितेः कथितपूर्वकम् । विस्तरेण तदेवेदं मत्सकाशान्निबोध वै ॥ ९
ज्येष्ठे मासि सिते पक्षे पौर्णमास्यां यतव्रता । स्थापयेदव्रणं कुम्भं सिततण्डुलपूरितम्[5] ॥ १०
नानाफलयुतं तद्वदिक्षुदण्डसमन्वितम् । सितवस्त्रयुगच्छन्नं सितचन्दनचर्चितम् ॥ ११
नानाभक्ष्यसमोपेतं सहिरण्यं[6] तु शक्तितः । ताम्रपात्रं गुडोपेतं सहिरण्यं निवेशयेत् ॥ १२
तस्मादुपरि ब्रह्माणं सौवर्णं पद्मकोटरे । कुर्याच्छर्करयोपेतं सावित्रीं तस्य वामतः ॥ १३
गन्धधूपं तयोर्दद्याद्गीतवाद्यं च कारयेत् । तदभावे कथं कुर्याद्यथा पद्मे पितामहः ॥ १४
ब्रह्मनाम्नीं च प्रतिमां कृत्वा गुडमयीं शुभाम् । शुक्लपुष्पाक्षततिलैरर्चयेत्पुष्पसंभवम् ॥ १५
ब्राह्माय पादौ संपूज्य जङ्घे सौभाग्यदायिने । विरिञ्चायोरुयुग्मं च मन्मथायेति वै कटिम्[7] १६
ह्वकोदरायेत्युदरमनङ्गायेत्युरो हरेः । मुखं पद्ममुखायेति बाहुं वै पद्मबाहवे ॥ १७
नमः सर्वात्मने मौलिं पूजयेच्चापि कंजजम् । ततः प्रभाते तं कुम्भं ब्राह्मणाय निवेदयेत्[8] ॥ १८
ब्राह्मणान्भोजयेद्भक्त्या स्वयं तु लवणं विना । भक्त्या प्रदक्षिणां[9] दद्यादिमं मन्त्रमुदीरयेत् ॥ १९
प्रीयतामत्र भगवान्सर्वलोकपितामहः । हृदये सर्वलोकानां[10] यस्त्वानन्दोऽभिधीयते ॥ २०

---

१ अ. सापत्न्यैः । २ घ. ज. °भे । भर्तुराराधनपरा त°ः । ३ झ. तु सखिरूपेण । ४ घ. ज सुव्रता । ५ घ. ज. °तं तस्योपरि नि° । ६ अ. °र्णं कलशोपरि । कु° । ७ घ. ज. °म् । स्वच्छोद° । ८ ज. °मतन्द्राये° । ९ घ. जं. वेदपाणये । १० घ. °र्वैमालोक्य लब्धानन्दो विधी° ।

अनेन विधिना यस्तु मासि मासि समाचरेत् । उपवासी पौर्णमास्यामर्चयेद्ब्रह्मणमव्ययम् ॥ २१
फलमेकं च संप्राश्य शय्यायां भूतले स्वपेत् । ततस्त्रयोदशे मासि घृतधेनुसमन्विताम् ॥ २२
शय्यां दद्याद्द्विरिञ्चाय सर्वोपस्करसंयुताम् । ब्रह्माणं काञ्चनं कृत्वा सावित्रीं राजतीं तथा[1] ॥ २३
य एव विश्वकर्ता च सावित्री च फलस्य तु(?) । वस्त्रैर्द्विजं सपत्नीकं पूज्य शक्त्या[2] विभूषणैः[3] ॥
शक्त्या[4] गवादिकं दद्यात्प्रीयतामित्युदीरयेत् । होमं शुक्लैस्तिलैः कुर्याद्ब्रह्मनामानि कीर्तयेत् ॥ २५
गव्येन सर्पिषा तद्वत्पायसेन च धर्मवित् । द्विजेभ्यो भोजनं दद्याद्वित्तशाठ्यविवर्जितैः ॥ २६
इक्षुदण्डं ततो दद्यात्पुष्पमाल्यं च शक्तितः । यः कुर्याद्विधिनाऽनेन पौर्णमास्यां स्त्रियोऽपि वा ॥
सर्वपापविनिर्मुक्तः प्राप्नोति ब्रह्म[5] सांप्रतम् । इह लोके[6] श्रियं पुत्रान्धर्मं सौभाग्यमश्नुते ॥ २८
यो ब्रह्मा[7] स स्मृतो विष्णुः सोऽनन्तात्मा[8] महेश्वरः । सुखार्थी कामरूपेण स्मरेद्देवं पितामहम् ॥
एवं श्रुत्वा चकारासौ दितिः सर्वमशेषतः । कश्यपो व्रतमाहात्म्यादागत्य परया मुदा ॥ ३०
चकार कर्कशां भूयोरूपलावण्यसंयुताम् । वरैराच्छन्दयामास सा तु वव्रे परं वरम् ॥ ३१
पुत्रं शक्रवधार्थाय समृद्धममितौजसम् । वरयामि महात्मानं सर्वामरनिषूदनम् ॥ ३२
उवाच कश्यपो वाक्यमिन्द्रहन्तारमूर्जितम् । प्रदास्याम्यहमेतेन किं[9] त्वेतत्क्रियतां शुभे ॥ ३३
आपस्तंम्बः[10] करोत्विष्टिं पुत्रीयामद्य सुस्तनि[11] । विधास्यामि ततो गर्भं स्पृष्ट्वाऽहं ते ततः शुभम् ३४
भविष्यत्येव ते गर्भो दिवि इन्द्रनिषूदनः । आपस्तम्बस्ततश्चक्रे[12] पुत्रेष्टिं द्रविणाधिकाम् ॥ ३५
इन्द्रशत्रो भवस्वेति जुहाव[13] बहुविस्तरम् । देवाश्च मुमुहुर्दैत्या विमुखाश्चैव दानवाः ॥
दित्यां गर्भमथाऽऽधत्त कश्यपः प्राह तां पुनः ॥ ३६

कश्यप उवाच—

मुखं ते चन्द्रप्रतिमं स्तनौ बिल्वफलोपमौ । अधरौ विद्रुमाकारौ वर्णश्चातीव शोभनः ॥ ३७
त्वां दृष्ट्वाऽहं विशालाक्षि विस्मरामि स्वकां तनुम् । तदेवं गर्भः सुश्रोणि हस्तेनोरुस्तनौ तव ३८
त्वया यत्नो विधातव्यो अस्मिन्गर्भे वरानने । संवत्सरशतं त्वेकमस्मिन्नेव तपोवने ॥ ३९
संध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि । न स्थातव्यं न गन्तव्यं वृक्षमूले कदाचन ॥ ४०
नोपस्करेषूपविशेन्मुसलोलूखलादिषु[14] । जलं च नावगाहेत शून्यागारं च नो विशेत् ॥ ४१
वल्मीकेषु न तिष्ठेत न चोद्विग्नमना भवेत् । विलिखेन्न नखैर्भूमिं शून्यागारे न भस्मना ॥ ४२
न चालसा सदा तिष्ठेद्व्यायामं चैव वर्जयेत् । न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् ॥ ४३
वर्जयेत्कलहं लोके गात्रभङ्गं तथैव च । न मुक्तकेशी तिष्ठेत नाशुचिः स्यात्कदाचन ॥ ४४
न स्वपेच्चोत्तरशिरा न[15]-वा परशिराः क्वचित् । न वस्त्रहीना नोद्विग्ना[16] नाधौतचरणा तथा ॥ ४५
नामङ्गल्यं वदेद्वाक्यं न च हास्याधिका भवेत् । कुर्याच्च गुरुभिर्नित्यं पूजां माङ्गल्यतत्परा ॥ ४६
सर्वौषधीभिः सृष्टेन वारिणा स्नानमाचरेत् । कृतरक्षा तु शुश्रूषा वा(पुत्री)(?) चा पूजनतत्परा ॥

---

१ घ. °था । पद्मात्मकः सृष्टिकर्ता सावित्रीमुपलभ्य तु । २ घ. ज. भक्त्या । ३ ज. °क्त्याऽऽसनादि° । घ. °क्त्याऽशनादि° । ४ घ. ज. °तः । विप्रेभ्योऽथ धनं दद्यात्पुष्पमालाश्च श° । ५ ज. °ह्मसात्मताम् । ६ घ. °के वरान्पुत्रान्सौभाग्यं शुभम° । ज. के वरान्पुत्रान्सौभाग्यं ध्रुवम° । ७ घ. ज. °ह्मा संभृतो । ८ घ. ज. विष्णुरानन्दात्मा । ९ क. ख. ग. घ. ज. किं तच्च क्रिय° । १० क. ग. घ. ङ. च. च. °स्तम्बो क° । ११ क. °स्तनौ वि° । १२ ख. ग. घ. ङ. च. ज. °स्तम्बो तत° । १३ क. ख. ङ. च. ज. °व च हविस्त्वरन् । दे° । १४ क. ख. ग. घ. च. ज. °रेषु निवि° । १५ क. ग. घ. ङ. च. ज. न चैवाधःशि° । १६ क. ग. घ. ङ. च.ज. °प्ता न चाऽऽर्द्रचरणा सती । ना° । १७ झ. °यांक्षागु° ।

तिष्ठेत्प्रसन्नवदना भर्तृप्रियहिते रता । न गर्हयेच्च भर्तारं सर्वावस्थास्वपि क्वचित् ॥ ४८
कृशाऽहं दुर्भगा चैव वार्धक्यं मम चाऽऽगतम् । स्तनौ मे चलितौ स्थानान्मुखं च वलिभङ्गुरम्॥
एवंविधा त्वया चाहं कृताऽहं न वदेत्क्वचित् । स्वस्त्यस्तु ते गमिष्यामि तथेत्युक्तस्तया पुनः५०
पश्यतां सर्वभूतानां तत्रैवान्तरधीयत । ततो भर्तृवचः श्रुत्वा विधिना समतिष्ठत ॥ ५१
अथ भीतस्तथेन्द्रोऽपि दितेः पार्श्वमुपागतः । विहाय देवसदनं तां शुश्रूषुरवस्थितः ॥ ५२
दितेश्छिद्रं परिप्रेप्सुरभवत्पाकशासनः । विपरीतो दरव्यग्रः प्रसन्नवदनो बहिः ॥ ५३
अजानन्किंतु तत्कार्यमात्मनः शुभमाचरन् । ततो वर्षशतान्ते सा न्यूने तु दिवसैस्त्रिभिः ॥ ५४
मेने कृतार्थमात्मानं प्रीत्या विस्मितमानसा । अकृत्वा पादयोः शौचं शयाना मुक्तमूर्धजा ॥५५
निद्राभरसमाक्रान्ता दिवाऽपरशिराः क्वचित् । ततस्तदन्तरं लब्ध्वा प्रविश्यान्तः शचीपतिः॥५६
वज्रेण सप्तधा चक्रे तं गर्भं त्रिदशाधिपः । ततः सप्तैव ते जाताः कुमाराः सूर्यवर्चसः ॥ ५७
रुदन्तः सप्त ते बालाः निषिद्धा दानवारिणा । भूयोऽपि रुदमानांस्तानेकैकं सप्तधा हरिः ॥५८
चिच्छेद वृत्रहन्ता वै पुनस्तूदरसंस्थितान् । एवमेकोनपञ्चाशद्भूतास्ते रुरुदुर्भृशम् ॥ ५९
इन्द्रो निवारयामास मा रुद्ध्वं पुनः पुनः । ततः स चिन्तयामास किमेतदिति वृत्रहा ॥ ६०
धर्मस्य कस्य माहात्म्यात्पुनः संजीवितास्त्वमी । विदित्वा पुण्ययोगेन पौर्णमासीफलं त्विदम्॥
नूनमेतत्परिणतमथवा ब्रह्मपूजनम् । वज्रेणापि हताः सन्तो न विनाशमुपाययुः ॥ ६२
एकोऽप्यनेकतामाप यस्मादुदरगोपनम् । अवध्या नूनमेते वै तस्माद्देवा भवन्त्विति ॥ ६३
यस्मान्मा रुद इत्युक्ता रुदन्तो गर्भसंभवाः । मरुतो नाम ते नाम्ना भवन्तु शुभभागिनः ॥ ६४
ततः प्रसाद्य देवेशः क्षमस्वेति दितिं पुनः । अर्थशास्त्रं समास्थाय मयैतद्दुष्कृतं कृतम् ॥ ६५
कृत्वा मरुद्गणं देवैः समानममराधिपः । दितिं विमानमारोप्य ससुतामगमद्दिवम् ॥ ६६
यज्ञभागभुजः कृत्वा मरुतस्ते ततोऽभवन् । न जग्मुरैक्यमसुरैरतस्ते सुरवल्लभाः ॥ ६७

भीष्म उवाच—

आदिसर्गस्त्वया ब्रह्मन्कथितो विस्तरेण मे । प्रतिसर्गश्च यो येषामधिपांस्तान्वदस्व मे ॥ ६८

पुलस्त्य उवाच—

यदाऽभिषिक्तः सकलेऽपि राज्ये पृथुर्धरित्र्यामधिपो बभूव ।
तथौषधीनामधिपं चकार द्विजव्रतानां तपसां च सोमम् ॥ ६९
नक्षत्रताराद्विजवृक्षगुल्मलतावितानस्य च रुक्मगर्भम् ।
अपामधीशं वरुणं धनानां राज्यं प्रभुं वैश्रवणं च तद्वत् ॥ ७०
विष्णुं रवीणामधिपं वसूनामग्निं च लोकाधिपतिं चकार ।
प्रजापतीनामधिपं च दक्षं चकार शक्रं मरुतामधीशम् ॥ ७१
दैत्याधिपानामथ दानवानां प्रह्लादमीशं च यमं पितॄणाम् ।
पिशाचरक्षःपशुभूतयक्षवेतालराज्ञामथ शूलपाणिम् ॥ ७२
प्रालेयशैलं च पतिं गिरीणामीशं समुद्रं सरितामधीशम् ।
गन्धर्वविद्याधरकिंनराणामीशं पुनश्चित्ररथं चकार । ७३

---

१ क. ख. ग. घ. ङ. च. ज. °स वितर्कमिति । २ क. ख. ग. घ. ङ. च. ज. कर्मणः ।

नागाधिपं वासुकिमुग्रवीर्यं सर्पाधिपं तक्षकमादिदेश ।
दिग्वारणानामधिपं चकार गजेन्द्रमैरावणनामधेयम् ॥ ७४
सुपर्णमीशं पततामथार्वणां राजानमुच्चैःश्रवसं चकार ।
सिंहं मृगाणामृषभं गवां च प्लक्षं पुनः सर्ववनस्पतीनाम् ॥ ७५
पितामहः पूर्वमथाभ्यषिञ्चदेतान्पुनः सर्वदिशाधिनाथान् ।
पूर्वेण दिक्पालमथाभ्यषिञ्चन्नाम्ना सुधर्माणमरातिकेतुम् ॥ ७६
ततोऽधिपं दक्षिणतश्चकार सर्वेश्वरं शङ्खपदाभिधानम् ।
सुकेतुमन्तं दिशि पश्चिमायां चकार पश्चाद्भुवनाण्डगर्भः ॥ ७७
हिरण्यरोमाणमुदग्दिगीशं प्रजापतिर्मेघसुतं चकार ।
अद्यापि कुर्वन्ति दिशामधीशाः[1] सदा वहन्तस्तु भुवोऽभिरक्षाम् ॥ ७८
चतुर्भिरेभिः पृथुनामधेयः[2] श्रियाऽभिषिक्तः प्रथमं पृथिव्याम् ।
मन्वन्तरे चाधिगते त एव वैवस्वतं चक्रुरिमं पृथिव्याम् ॥ ७९
गतेऽन्तरे चाक्षुषनामधेये वैवस्वताख्ये च पुनः प्रवृत्ते ।
प्रजापतिः सोऽस्य परावरस्य[3] बभूव सूर्यावरजः सचिह्नः ॥ ८०

पुलस्त्य उवाच—

मन्वन्तराणि सर्वाणि मनूनां चरितं च यत् । [4]प्रवृत्तिं चैव कालस्य तत्सृष्टिं च समासतः ॥ ८१
एकचित्तः प्रसन्नात्मा शृणु कौरवनन्दन । याम्या[5] नाम पुरा देवा आसन्स्वायंभुवान्तरे ॥ ८२
सप्तैव ऋषयः पूर्वं ये मरीच्यादयः स्मृताः । आग्नीध्रश्चाग्निबाहुश्च[6] विभुः सवन एव च ॥ ८३
ज्योतिष्मान्द्युतिमान्हव्यो[7] मेधा मेधातिथिर्वसुः । स्वायंभुवस्यास्य मनोर्दशैते वंशवर्धनाः ॥ ८४
प्रतिसर्गममी कृत्वा जग्मुस्ते परमं[8] पदम् । एतत्स्वायंभुवं प्रोक्तं स्वारोचिषमतः परम् ॥ ८५
स्वारोचिषस्य तनयाश्चत्वारो देववर्चसः । नभो नभस्यः प्रसृतिर्भावनः कीर्तिवर्धनः ॥ ८६
दत्तोऽत्रिश्च्यवनस्तम्बः[9] प्राणः कश्यप एव च । [10]अर्वा बृहस्पतिश्चैव सप्त सप्तर्षयोऽभवन् ॥ ८७
तदा देवाश्च तुषिताः स्मृताः स्वारोचिषेऽन्तरे । हवीन्द्रः सुकृतो मूर्तिरापो ज्योति(ती)रथः स्मृतः
वसिष्ठस्य सुताः पञ्च[11] ये प्रजापतयस्तदा । द्वितीयमेतत्कथितं मन्वन्तरमतः परम् ॥ ८९
अन्यच्चैव प्रवक्ष्यामि तथा मन्वन्तरं शुभम् । मनुर्नामौत्तमिस्तत्र दश पुत्रानजीजनत् ॥ ९०
ईष ऊर्जस्तनूजश्च शुचिः शुक्रस्तथैव च । मधुश्च माधवश्चैव नभस्योऽथ नभस्तथा ॥ ९१
सहः[12] कनीयानेतेषामुदाराः कीर्तिवर्धनाः । भानवस्तत्र देवाश्च ऊर्जाः सप्तर्षयस्तथा ॥ ९२
[13]कौकिभिण्डिकतुण्डश्च दाल्भ्यः शङ्खः प्रवाहितः । मितश्च[14] संमितश्चैव[15] सप्तैते योगवर्धनाः ॥ ९३
मन्वन्तरं चतुर्थं तु तामसं नाम विश्रुतम् । कविः पृथुस्तथैवाग्निरकपिः कपिरेव च ॥ ९४
तथैव जन्यधामानौ मुनयः सप्त नाम ते । साध्या देवगणा यत्र कथितास्तामसेऽन्तरे ॥ ९५

---

१ ग. घ. ज. °तुर्षु दिक्षु पृ° । २ घ. °धेयो नृपोऽभि° । ३ घ. ज. चराचरस्य । ४ क. ख. घ. ङ. च. ज. प्रमाणं चैव कल्पस्य । ५ क. ख. ग. घ. ङ. च. ज. यामा । ६ ख. घ. ङ. च. च. °ग्निवाहश्च । ७ क. ख. घ. ङ. च. ज. °मान्भव्यो । ८ क. ख. ग. घ. ङ. च. ज. °रमां मुदम् । ९ क. ख. ग. घ. ङ. च. ज. °त्तोऽग्निश्च्य° । १० झ. अर्चो । ११ क. ख. ग. घ. ङ. च. ज. सप्त । १२ क. ख. ग. घ. ङ. च. ज. °हः सहस्य एतेषामुत्तमः कीर्तिवर्धनः । भा° । १३ ग. घ. कौकुरुण्डिः कुरुण्टिश्च दान्तः सुखप्र° । १४ ञ. मितिश्च । १५ ञ. °श्च समितिश्चै° ।

अकल्मषस्तपोधन्वा तपोमूलस्तपोधनः । तपोराशिस्तपस्यश्च सुतपस्यः परंतपः ॥ ९६
तपोभागी तपोयोगी धर्माचाररताः सदा । तामसस्य सुताः सर्वे दश वंशविवर्धनाः ॥ ९७
पञ्चमस्य मनोस्तद्वद्रैवतस्यान्तरं शृणु । वेदवादः सुबाहुश्च पर्जन्यः सोमपो मुनिः ॥ ९८
हिरण्यरोमा सप्ताश्वः सप्तैते ऋषयः स्मृताः । देवाश्च भूतरजसस्तथा प्रकृतयः स्मृताः ॥ ९९
वरुणस्तत्त्वदर्शी च चितिमान्हव्यपः कविः । मुक्तो निरुत्सुकः सत्त्वो विमोहोऽथ प्रकाशकः ॥
धर्मवीर्यबलोपेता दशैते रैवतात्मजाः । भृगुः सुधामा विरजो विष्णुर्नारद एव च ॥
विवस्वानभिमानी च सप्त सप्तर्षयः परे ॥ १०१
चाक्षुषस्यान्तरे जाता लेखा नाम परिश्रुताः । ऋभवोऽथ पृथग्भूता वारिमूला दिवौकसः ॥१०२
चाक्षुषस्यान्तरे प्राप्ते देवानां पञ्चमो नयः । रुरुप्रभृतयस्तद्वच्चाक्षुषस्य सुता दश ॥ १०३
प्रोक्ताः स्वायंभुवे वंशे ये मया पूर्वमेव ते । अन्तरं चाक्षुषं चैव मया ते परिकीर्तितम् ॥ १०४
सप्तमं च प्रवक्ष्यामि यद्वैवस्वतमुच्यते । अत्रिश्चैव वसिष्ठश्च कश्यपो गौतमस्तथा ॥ १०५
भरद्वाजस्तथा योगी विश्वामित्रः प्रतापवान् । जमदग्निश्च सप्तैते सांप्रतं ते महर्षयः ॥ १०६
कृत्वा धर्मव्यवस्थानं प्रयान्ति परमं पदम् । सावर्ण्यस्य प्रवक्ष्यामि मनोर्भावि तथाऽन्तरम् १०७
अश्वत्थामा ऋष्यशृङ्गः कौशिक्यो गालवस्तथा । शतानन्दः काश्यपश्च रामश्च ऋषयः स्मृताः ॥
धृतिर्वरीयान्यवसुः सुवर्णो धृतिरेव च । चरिष्णुराद्यः सुमतिर्वसुः शुक्रश्च वीर्यवान् ॥ १०९
भविष्यस्यार्कसावर्ण्यमनोः पुत्राः प्रकीर्तिताः । रौच्यादयस्तथाऽन्येऽपि मनवः संप्रकीर्तिताः ॥
रुचेः प्रजापतेः पुत्रो रौच्यो नाम भविष्यति । मनुर्भूतिसुतस्तद्वद्भौत्यो नाम भविष्यति ॥ १११
ततश्च मेरुसावर्णिर्ब्रह्मसूनुः स्मृतश्च यः । ऋभुश्च वीतधामा च विष्वक्सेनो मनुस्तथा ॥ ११२
अतीतानागताश्चैव मनवस्तव कीर्तिताः । वर्षाणां युगसाहस्रमेभिर्व्याप्तं नराधिप ॥ ११३
स्वे स्वेऽन्तरे सर्वमिदं समुत्पाद्य चराचरम् । कल्पक्षये विनिर्वृत्ते मुच्यन्ते ब्रह्मणा सह ॥ ११४
अमी युगसहस्रान्ते विनश्यन्ति पुनः पुनः । ब्रह्माद्या विष्णुसायुज्यं ततो यास्यन्ति वै नृप ११५

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे मन्वन्तरवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२०४१८

---

अथाष्टमोऽध्यायः ।

---

भीष्म उवाच—

बहुभिर्धरणी भुक्ता भूपालैः श्रूयते पुरा । पार्थिवाः पृथिवीयोगात्पृथिवी कस्य योगतः ॥ १
किमर्थं च कृता संज्ञा भूमेः किं पारिभाषिकी । गौरितीयं च संज्ञा वा भुवः कस्माद्ब्रवीहि मे २

---

१ क. ख. घ. ङ. च. ज. देववाहुः। ग. देववाहुः । २ क. ख. ग. घ. ङ. च. ज. समयो। ३ ख. ग. घ. ङ. च.ज. °ताः । अवशस्त° । ४ ञ. च वीतिं° । ५ ञ कपिः । ६ क. ख. ग. घ. ङ. च. च. °रजः सहिष्णु° । ७ क. ख. ग. घ. ङ. च. ज. °दस्तथा । वि° । ८ क. ख. °स्वान्कृतिनामा च । ङ. °स्त्रान्कृतनामा च । ९ ग. विभवोऽथ पृथक्स्थावकीर्तिता-स्त्रिदिवौकसः । १० ङ. च. जनः । ११ झ. °वर्णस्य । १२ क. भरद्वाजः । १३ ञ. कौशिको । १४ क. ग. घ. ङ. च. ज. °श्च वामनश्चर्षयः ।.१५ झ. धृष्टिरे° । १६ क. ख. ग. ङ. च. ज. च । वरिष्णुर्वीर्यः सुमतिर्नमुचिश्चित्रवी° । १७ क. ख. ग. घ. ङ. च. ज. ऋतुधामा ।

पुलस्त्य उवाच—

वंशे स्वायंभुवे चाऽऽसीदंशो नाम प्रजापतिः । मृत्योस्तु दुहिता तेन परिणीताऽतिदुर्मुखी ॥ ३
सुनीथा नाम तस्यास्तु वेनो नाम सुतः पुरा । अधर्मनिरतः कामी बलवान्वसुधाधिपः ॥ ४
लोकस्याधर्मकृच्चापि परभार्यापहारकः । अथ तस्य प्रसिद्ध्यर्थं जगतोऽर्थे महर्षिभिः ॥ ५
अनुनीतोऽपि न ददावशुद्धात्माऽभयं ततः । शापेन मारयित्वेममराजकभयार्दिताः ॥ ६
ममन्थुर्ब्राह्मणास्तस्य बलाद्देहं त्वकल्मषाः । तत्कायान्मथ्यमानात्तु निपेतुर्म्लेच्छजातयः ॥ ७
शरीरे मातुरंशेन कृष्णाञ्जनसमप्रभः । पितुरंशस्य चांशेन धार्मिको धर्मकारकः ॥ ८
उत्पन्नो दक्षिणाद्धस्तात्सधनुः सशरो गदी । दिव्यतेजोमयवपुः सरत्नकवचाङ्गदः ॥ ९
पृथुरेवाभवद्यस्मान्नाम्ना विष्णुरजायत । स विप्रैरभिषिक्तस्तु तपः कृत्वा सुदुष्करम् ॥ १०
विष्णोर्वरेण सर्वस्य प्रभुत्वमगमत्प्रभुः । निःस्वाध्यायवषट्कारं निर्धर्मं वीक्ष्य भूतलम् ॥ ११
दग्धुमेवोद्यतः कोपाच्छरेणामितविक्रमः । ततो गोरूपमास्थाय भूः पलायितुमुद्यता ॥ १२
पृष्ठतोऽनुगतस्तस्याः पृथुर्दीप्तशरासनः । ततः स्थित्वैकदेशे तु किं करोमीति साऽब्रवीत् ॥ १३
पृथुरप्यवदद्वाक्यमीप्सितं देहि सुव्रते । सर्वस्य जगतः शीघ्रं स्थावरस्य चरस्य च ॥ १४
तथेति चाब्रवीद्भूमिं दुदोह स नराधिपः । स्वके पाणौ पृथुर्वत्सं कृत्वा स्वायंभुवं मनुम् ॥ १५
तदन्नमभवद्दुग्धं प्रजा जीवन्ति तेन तु । ततस्तु ऋषिभिर्दुग्धा वत्सः सोमस्तदाऽभवत् ॥ १६
दोग्धा वनस्पतिरभूत्पात्रं वेदस्तपो रसः । देवैश्च वसुधा दुग्धा दोग्धा मित्रस्तदाऽभवत् ॥ १७
इन्द्रो वत्सः समभवत्क्षीरमूर्जस्वलं बलम् । देवानां काञ्चनं पात्रं पितॄणां राजतं तथा ॥ १८
अन्तकश्चाभवद्दोग्धा यमो वत्सः स्वधा रसः । अलाबुपात्रं नागानां तक्षको ब्रह्मकोऽभवत् ॥ १९
विषं क्षीरं ततो दोग्धा धृतराष्ट्रोऽभवत्पुनः । असुरैरपि दुग्धेयमायसे शत्रुपीडनम् ॥ २०
पात्रे मायामभूद्वत्सः प्राह्लादिस्तु विरोचनः । दोग्धा त्रिमूर्धा तत्राऽऽसीन्माया येन प्रवर्तिता २१
यक्षैश्च वसुधा दुग्धा पुराऽन्तर्धानमीप्सुभिः । कृत्वा वैश्रवणं वत्समामपात्रे महीपते ॥ २२
प्रेतरक्षोगणैर्दुग्धा वसारुधिरमुल्बणम् । रूप्यनाभोऽभवद्दोग्धा सुमाली वत्स एव तु ॥ २३
गन्धर्वैश्च पुनर्दुग्धा वसुधा साप्सरोगणैः । वत्सं चित्ररथं कृत्वा गन्धान्पद्मदले तथा ॥
दोग्धा तु सुरुचिर्नामाथर्ववेदस्य पारगः ॥ २४
गिरिभिर्वसुधा दुग्धा रत्नानि विविधानि च । औषधानि च दिव्यानि दोग्धा मेरुर्महीधरः २५
वत्सोऽभूद्धिमवांस्तत्र पात्रं शैलमयं पुनः । वृक्षैश्च वसुधा दुग्धा क्षीरं छिन्नप्ररोहणम् ॥ २६
पालाशपात्रे दोग्धा तु शालः पुष्पवनाकुलः । प्लक्षोऽभवत्तत्र वत्सः सर्ववृक्षवनाधिपः ॥ २७
एवमन्यैश्च वसुधा तदा दुग्धा यथेप्सितम् । आयुर्धनानि सौख्यं च पृथौ राज्यं प्रशासति ॥ २८
न दरिद्रस्तथा रोगी नाधनो न च पापकृत् । नोपसर्गो न चाऽऽघातः पृथौ राज्यं प्रशासति २९
नित्यं प्रमुदिताः सर्वे दुःखशोकविवर्जिताः । धनुष्कोट्या च शैलेन्द्रानुत्सार्य स महाबलः ॥ ३०
भुवस्तलं समं चक्रे लोकानां हितकाम्यया । न पुनर्ग्रामदुर्गाणि न चाऽऽयुधधरा नराः ॥ ३१

---

१ ग. घ. °च—पुरा कृतयुगे ह्यासीदङ्गो ना° । २ झ. वेणो । ३ ञ. °वन्नाम्ना यस्माद्विष्णु° । ४ झ. °म् । दग्धुमे° । ५ ख. ङ. च. ज. °ग्धा वाचस्प° । ६ ग. घ. °ग्धा मेरुस्त° । ७ झ. सुधा । ८ ख. ञ वत्सं मणिमन्तं म° । ग. घ. वत्सं मतिमन्तं म° । ९ ग. घ. तदा । १० ग. घ. °मा नादेव° । ११ झ. चाऽऽवर्तः पृ° १२ क. ख. ङ. च. °राः । म्रियन्ते यत्र दुःखं च नार्थशास्त्रस्य बाधकः । ध° । ज. °राः । क्रियन्ते यत्र दुःखं च नार्थशास्त्रस्य बाधकः । ध° ।

क्षयातिशयदुःखं च नार्थशास्त्रेषु चाऽऽदरः । धर्मैकतानाः पुरुषाः पृथौ राज्यं प्रशासति ॥ ३२
कथितानि च पात्राणि यत्क्षीरं च मया तव । येषां यत्र रुचिस्तत्र तेषां देयं विजानता ॥ ३३
यज्ञश्राद्धेषु सर्वेषु मया तुभ्यं निवेदितम् । दुहितृत्वं गता यस्मात्पृथोर्धर्मवतो मही ॥
तदाऽनुरागयोगाच्च पृथिवीति स्तुता बुधैः । ३४

भीष्म उवाच—

आदित्यवंशमखिलं वद ब्रह्मन्यथाक्रमम् । सोमवंशं च तत्त्वज्ञ यथावद्वक्तुमर्हसि ॥ ३५

पुलस्त्य उवाच—

विवस्वान्कश्यपात्पूर्वमदित्यामभवत्सुतः । तस्य पत्नीत्रयं तद्वत्संज्ञा राज्ञी प्रभा तथा ॥ ३६
रैवतस्य सुता राज्ञी रैवतं सुषुवे सुतम् ॥ ३७
प्रभा प्रभातं सुषुवे त्वाष्ट्री संज्ञा तथा मनुम् । यमश्च यमुना चैव यमलौ तु बभूवतुः ॥ ३८
ततस्तेजोमयं रूपमसहन्ती विवस्वतः । नारीमुत्पादयामास स्वशरीरादनिन्दिता ॥ ३९
त्वाष्ट्री स्वरूपरूपेण नाम्ना छायेति भामिनी । किं करोमीति पुरतः संस्थिता तामभाषत ॥ ४०
छाये त्वं भज भर्तारं मदीयं च वरानने । अपत्यानि मदीयानि मातृस्नेहेन पालय ॥ ४१
तथेत्युक्त्वा च सा देवमगात्कामाय सुव्रता । कामयामास देवोऽपि संज्ञेयमिति चाऽऽदरात् ४२
जनयामास सावर्णं मनुं मनुस्वरूपिणम् । सवर्णत्वाच्च सावर्णो मनोर्वैवस्वतस्य च ॥ ४३
शनैश्चरं च तपतीं विष्टिं चैव क्रमेण तु । छायायां जनयामास संज्ञेयमिति भास्करः ॥ ४४
छाया स्वपुत्रेऽभ्यधिकं मनश्चक्रे मनौ तदा । पूर्वो मनुस्तत्चक्षमे यमस्तु क्रोधमूर्छितः ॥ ४५
तां तर्जयामास तदा पादमुत्क्षिप्य दक्षिणम् । शशाप च यमं छाया सव्रणः कृमिसंयुतः ॥ ४६
पादोऽयमेको भविता पूयशोणितविस्रवः । निवेदयामास पितुर्यमः शापेन धर्षितः ॥ ४७
निष्कारणमहं शप्तो मात्रा देव सकोपया । बालभावान्मया किंचिदुद्यतश्चरणः कैंचित् ॥ ४८
मनुना वार्यमाणाऽपि मां शशाप मदाद्विभो । प्रायो न माता साऽस्माकमसमा स्नेहतो यतः ४९
देवोऽप्याह यमं भूयः किं करोमि महामते । सौख्यात्कस्य न दुःखं स्यादथवा कर्मसंततिः ५०
अनिवार्या भवस्यापि का कथाऽन्येषु जन्तुषु । कृकवाकुस्तव पदे स कृमीन्भक्षयिष्यति ॥ ५१
क्लेदं च रुधिरं चैव वत्सायमपनेष्यति । एवमुक्त्वा तु (क्तस्तु) शप्तश्च (चक्रे स) तपस्तीव्रं महायशाः
वैराग्यात्पुष्करे तीर्थे फलफेनानिलाशनः । पितामहं समाराध्य यावद्वर्षशतं पुनः ॥ ५३
तपःप्रभावादेवेशः संतुष्टः पद्मसंभवः । वव्रे स लोकपालत्वं पितृलोकं तथाऽक्षयम् ॥ ५४
धर्माधर्मात्मकस्यास्य जगतस्तु परीक्षणम् । एवं स लोकपालत्वमगमत्पद्मसंभवात् ॥ ५५
पितॄणामाधिपत्यं च धर्माधर्मस्य चानघ । विवस्वानथ तज्ज्ञात्वा संज्ञायाः कर्मचेष्टितम् ॥ ५६
त्वष्टुः समीपमागम्य आचचक्षे स रोषवान् । तमुवाच ततस्त्वष्टा सान्त्वपूर्वं तदा वचः ॥ ५७

त्वष्टोवाच—

तवासहन्ती भगवंस्तेजस्तीव्रं तमोनुद । वडवारूपमास्थाय मत्सकाशमिहाऽऽगता ॥ ५८
निवारिता मया संज्ञा त्वद्भयेन दिवस्पते । यस्मादविज्ञातमना मत्सकाशमिहाऽऽगता ॥ ५९

---

१ झ. यज्ञैः सार्धेषु । ञ. यज्ञश्रीदेषु । २.क. ख. ग. ङ. च. त्वाष्ट्रीं । ३ ञ. °कं स्नेहं चक्रे । ४ क. ख. ग. घ. ङ. च. सकृत् । ५ क. ख. घ. ङ. च. ज. °ति । खञ्जं च रुधिरं चैव पदमेतद्भविष्य°। ग. °ति । खञ्जं सरुधिरं चैव पदमेतद्भविष्य°। ६ क. ख. ग. घ. ङ. च. ज. °द्वर्षायुतं ।

तस्मान्मदीयं भवनं प्रवेष्टुं न तवाहितम् । एवमुक्त्वा जगामाथ मरुदेशमनिन्दिता ॥ ६०
वडवारूपमास्थाय भूतले संप्रति स्थिता । तस्मात्प्रसादं कुरु मे यदनुग्रहभागहम् ॥ ६१
अपनेष्यामि ते तेजः कृत्वा यन्त्रे दिवाकर । रूपं तव करिष्यामि लोकानन्दकरं प्रभो ॥ ६२
तथेत्युक्तः स रविणा भ्रमौ कृत्वा दिवाकरम् । पृथक्चकार तत्तेजश्चक्रं विष्णोरकल्पयत् ॥ ६३
त्रिशूलं चापि रुद्रस्य वज्रमिन्द्रस्य चाधिकम् । दैत्यदानवसंहर्तुः प्रसन्नकिरणात्मकम् ॥ ६४
रूपं चाप्रतिमं चक्रे त्वष्टा पद्भ्यामृते महत् । न शशाकाथ तं द्रष्टुं पादरूपं रवेः पुनः ॥ ६५
अद्यापि च ततः पादौ न कश्चित्कारयेत्क्वचित् । यः करोति स पापिष्ठां गतिं प्राप्नोति निन्दिताम् ६६
कुष्ठरोगमवाप्नोति लोकेऽस्मिन्दुःखसंयुतम् । तस्माच्च धर्मकामार्थी चित्रेष्वायतनेषु च ॥ ६७
न क्वचित्कारयेत्पादौ देवदेवस्य धीमतः । ततः स भगवान्गत्वा भूर्लोकममराधिपः ॥ ६८
कामयामास कामार्तो मुख एव दिवाकरः । अश्वरूपेण महता तेजसा च समन्वितः ॥ ६९
संज्ञा च मनसा क्षोभमगमद्भयविह्वला । नासापुटाभ्यामुत्क्षिप्तं परोऽयमिति शङ्कया ॥ ७०
तस्याथ रेतसो जातावश्विनाविति नः श्रुतम् । +दस्रौ श्रुतित्वा(?)त्संजातौ नासत्यौ नासिकाग्रतः
ज्ञात्वा चिराच्च सा देवं संतोषमगमत्परम् । विमानेनागमत्स्वर्गं पत्या सह मुदाऽन्वितः ॥ ७२
सावर्णोऽपि मनुर्मेरावद्यापि तपते तपः । शनिस्तपोबलाच्चापि ग्रहाणां समतां गतः ॥ ७३
यमुना तपती चैव उभे नद्यौ बभूवतुः । विष्टिर्घोरात्मिका तद्वत्कालत्वेन व्यवस्थिता ॥ ७४
मनोर्वैवस्वतस्याऽऽसन्दश पुत्रा महाबलाः । इलस्तु प्रथमस्तेषां पुत्रेषु समजायत ॥ ७५
इक्ष्वाकुः कुशनाभश्च अरिष्टो धृष्ट एव च । नरिष्यन्तः करूषश्च शर्यातिश्च महाबलः ॥ ७६
पृषध्रश्चाथ नाभागः सर्वे ते दिव्यमानुषाः । अभिषिच्य मनुः पुत्रमिलं ज्येष्ठं स धार्मिकम् ॥७७
जगाम तपसे भूयः स पुष्करतपोवनम् । अथाऽऽजगाम सिद्ध्यर्थं तस्य ब्रह्मा वरप्रदः ॥ ७८
वरं वरय भद्रं ते मनवे यद्यथेप्सितम् । उवाच स तदा देवं पद्माक्षं पद्मजं विभुम् ॥ ७९

मनुरुवाच—

दशेमे धर्मसंयुक्ताः पृथिव्यां सर्वपार्थिवाः । भवन्तु ईश्वराः स्वामिन्प्रसादात्तव कंजज ॥ ८०
तथेत्युक्त्वा च देवेशस्तत्रैवान्तरधीयत । ततश्च स्वयमागम्य समतिष्ठद्यथा पुरा ॥ ८१
निर्जगामाथ सिद्ध्यर्थमिलः प्रायान्महीमिमाम् । भ्रमन्द्वीपानि सर्वाणि क्ष्माभृतः प्रसाधयन् ॥८२
जगामोपवनं शंभो रथाकृष्टः प्रतापवान् । कल्पद्रुमलताकीर्णं नाम्ना शरवणं महत् ॥ ८३
रमते यत्र देवेशः सोमः सोमार्धशेखरः । उमया समयस्तत्र पुरा शरवणे कृतः ॥ ८४
पुंनाम सत्त्वं यत्किंचिदागमिष्यति नो वने । स्त्रीत्वमेष्यति तत्सर्वं दशयोजनमण्डले ॥ ८५
अज्ञातसमयो राजा इलः शरवणं गतः । स्त्रीत्वं जगाम सहसा वडवाऽश्वोऽभवत्क्षणात् ॥ ८६
यत्किंचित्पुरुषाकारं स्त्र्यभवद्विस्मितो नृपः । इलेति साऽभवन्नारी पीनोन्नतघनस्तनी ॥ ८७ ]

+ दस्रोऽस्तुतत्वादिति क्वचित्पाठः ।

१ क. ख. ग. घ. ङ. च. ज. °माऽऽशु म° । २ झ. °णा नमस्कृत्वा । ३ क. ख. ङ. च. ज. भ्रमे । ४ क. ग. च. ज. विष्णोः प्रकल्पयन् । त्रि° । ५ ञ. °हर्तॄ सहस्राकि° । ६ क. ख. ग. घ. ङ. च. ज °संज्ञितम् । ७ झ. °स्रौ तु तत्त्वात्सं° । ८ घ. ज. °म्य अयोध्यायां मनोः सुतः । नि° । झ. °म्य अयोनिजमनोः सुतः । नि° । ९ झ. रथ्याकृ° । १० ञ. °त् । पुरुषत्वे कृतं सर्वं स्त्रीकाये विस्मृतं ततः । इ° ।

उन्नतश्रोणिजघना पद्मपत्रायतेक्षणा । पूर्णेन्दुवदना नारी विशालोल्लसितेक्षणा ॥ ८८
पीनोन्नतायतभुजा नीलकुञ्चितमूर्धजा । तनुलोमा सुवदना मृदुगद्गदभाषिणी ॥ ८९
श्यामा गौरेण वर्णेन हंसवारणगामिनी । कार्मुकभ्रूयुगोपेता तनुताम्रनखाङ्कुरा ॥ ९०
भ्रममाणा वने तस्मिंश्चिन्तयामास भामिनी । को मे पिता च माता च को मे भ्राता भवेदिह॥
कस्य भर्तुरहं दत्ता कियद्वर्णोऽ(र्ण)स्य भूतले । चिन्तयन्ती च ददृशे सोमपुत्रेण साऽङ्गना ॥ ९२
इलारूपसमाक्षिप्तमनसा वरवर्णिनी । बुधस्तदाप्तये यत्नमकरोत्कामपीडितः ॥ ९३
विशिष्टाकारवान्मुण्डः सकमण्डलुपुस्तकः । वेणुदण्डकृतावेशः पवित्रकखनित्रकः ॥ ९४
द्विजरूपशिखी ब्रह्म निगदन्रुक्मकुण्डलः । बटुभिश्चान्वितो युक्तः समित्पुष्पकुशोदकैः ॥ ९५
किलान्वेषी वने त्वस्मिन्नाजुहाव स तामिलाम् । वहिर्वनस्यान्तरितः किल पादपमण्डले ॥ ९६
ससंभ्रममकस्माच्च सोपालम्भमिवावदत् । त्यक्त्वाऽग्निहोत्रशुश्रूषां क्व गता मन्दिरान्मम ॥ ९७
इयं विहारवेला ते अतिक्रामति सांप्रतम् । एह्येहि पृथुसुश्रोणि संभ्रान्ता केन हेतुना ॥ ९८
इयं सायंतनी वेला विहारस्यातिवर्तते । कृत्वोपलेपनं पुष्पैरलंकुरु गृहं मम ॥ ९९
साऽब्रवीद्विस्मृताऽहं च सर्वमेतत्तपोधन । आत्मानं त्वां च भर्तारं कुलं च वद मेऽनघ ॥ १००
बुधः स्रोवाच तां तन्वीमिला त्वं वरवर्णिनि । अहं च कामुको नाम बहुविद्यो बुधः स्मृतः १०१
तेजस्विनः कुले जातः पिता मे ब्राह्मणाधिपः । इति सा तस्य वचनात्प्रविष्टा बुधमन्दिरम् १०२
रत्नस्तम्भसमाकीर्णं दिव्यमायाविनिर्मितम् । इला कृतार्थमात्मानं मेने तद्भवने स्थिता ॥ १०३
अहो वृत्तमहो रूपमहो धनमहो कुलम् । मम चास्य च भर्तुर्वै अहो लावण्यमुत्तमम् ॥ १०४
रेमे च सा तेन सममतिकालमिला वने । सर्वभोगमये गेहे यथेन्द्रभवने तथा ॥ १०५
अथान्विषन्तो राजानं भ्रातरस्तस्य मानवाः । इक्ष्वाकुप्रमुखा जग्मुस्तदा शरवणान्तिकम् ॥ १०६
ततस्ते ददृशुः सर्वे वडवामग्रतः स्थिताम् । रत्नपर्याप्तकिरणां दीप्यमानामनुत्तमाम् ॥ १०७
संप्राप्य प्रत्यभिज्ञानात्सर्वे विस्मयमागताः । अयं चन्द्रप्रभो नाम वाजी तस्य महात्मनः ॥ १०८
अगमद्वाडवं रूपमुत्तमं केन हेतुना । ततस्तु मैत्रावरुणिं पप्रच्छुस्ते पुरोधसम् ॥ १०९
किमित्येतदभूच्चित्रं वद योगविदां वर । वसिष्ठोऽप्यब्रवीत्सर्वं दृष्ट्वा तद्ध्यानचक्षुषा ॥ ११०

वसिष्ठ उवाच—

समयः शंभुदयिताकृतः शरवणे पुरा । यः पुमान्प्रविशेदत्र स नारीत्वमवाप्स्यति ॥ १११
अयमश्वोऽपि नारीत्वमगाद्राज्ञा सहैव तु । इलः पुरुषतामेति यथाऽसौ धनदोपमः ॥ ११२
तथैव यत्नः कर्तव्य आराध्यैव पिनाकिनम् । ततस्ते मानवा जग्मुर्यत्र देवो महेश्वरः ॥ ११३
तुष्टुवुर्विविधैः स्तोत्रैः पार्वतीपरमेश्वरौ । तावूचतुरलं चैष समयः किंतु सांप्रतम् ॥ ११४
इक्ष्वाकोरश्वमेधेन यत्फलं स्यात्तदावयोः । दत्त्वा किंपुरुषो वीरः स भविष्यत्यसंशयम् ॥ ११५
तथेत्युक्त्वा ततस्ते तु जग्मुर्वैवस्वतात्मजाः । इष्ट्वाऽश्वमेधेन तत इला किंपुरुषोऽभवत् ॥ ११६
मासमेकं पुमान्वीरः स्त्री च मासमभून्नृप । बुधस्य भवने तिष्ठन्निलो गर्भधरोऽभवत् ॥ ११७
अजीजनत्पुत्रमेकमनेकगुणसंयुतम् । बुध उत्पाद्य तं पुत्रं स्वर्गार्थमगमत्ततः ॥ ११८
इलस्य नाम्ना तद्वर्षमिलावृत्तमभूत्तदा । सोमस्य वंशजो राजा ऐलोऽभूद्वंशवर्धनः ॥ ११९

---

१ झ. लं पुत्रा जपस्ते किं । २ झ. इला । ग. घ. ज. घोषं । ३ क. ङ. च. पूरुं । ४ क. ख. ग. घ. ङ. च. ज. । सोमार्कवं ।

एवं पुरूरवाः पूरोरभवद्वंशवर्धनः । इक्ष्वाकुरर्कवंशस्य तथैवोक्तो नरेश्वर ॥ १२०
इलः किंपुरुषत्वे च सुद्युम्न इति चोच्यते । पुनः पुत्रत्रयमभूत्सुद्युम्नस्यापराजितम्[1] ॥ १२१
उत्कलोऽथ गयस्तद्वद्धरिताश्वश्च वीर्यवान् । उत्कलस्योत्कला नाम गयस्य तु गया मता ॥ १२२
हरिताश्वस्य दिक्पूर्वा विज्ञाता कुरुभिः सह । प्रतिष्ठानेऽभिषिच्याथ स पुरूरवसं सुतम्[2] ॥ १२३
जगामेलावृतं भोक्तुं दिव्यवर्षफलाशनः । इक्ष्वाकुर्ज्येष्ठदायादो मध्यदेशमवाप्तवान् ॥ १२४
नरिष्यन्तस्य पुत्रोऽभूच्छुको नाम महाबलः । नाभागस्याम्बरीषस्तु धृष्टस्य तु सुतत्रयम् ॥ १२५
धृष्टकेतुश्छत्रनाथो रणधृष्टश्च वीर्यवान् । आनर्तो नाम शर्यातेः सुकन्या चैव दारिका ॥ १२६
आनर्तस्याभवत्पुत्रो रोचमानः प्रतापवान् । आनर्तो नाम देशोऽभून्नगरी च कुशस्थली ॥ १२७
रोचमानस्य रेवोऽभूद्रेवाद्रेवत एव च । ककुद्मी चापरं नाम ज्येष्ठः पुत्रशतस्य वै ॥ १२८
रेवती यस्य सा कन्या भार्या रामस्य विश्रुता । कारूषास्तु करूषस्य बहवः प्रथिता भुवि* ॥
पृषध्रो गोवधाच्छूद्रो गुरुशापादजायत । इक्ष्वाकुपुत्रा नाम्नाऽथ विकुक्षिनिमिदण्डकाः ॥ १३०
श्रेष्ठाः पुत्रशतस्याऽऽसन्दश पञ्च च तत्सुताः । मेरोरुत्तरतस्तेऽपि जाताः पार्थिवसत्तमाः ॥ १३१
चतुर्दशोत्तरं चान्यच्छतमस्य तथाऽभवत् । मेरोर्दक्षिणतश्चैते राजानः संप्रकीर्तिताः ॥ १३२
ज्येष्ठात्ककुत्स्थनामाऽभूत्तत्सुतस्तु सुयोधनः । तस्य पुत्रः पृथुर्नाम विश्वावस्वः(सुः) पृथोः सुतः
आर्द्रस्तस्य च पुत्रोऽभूद्युवनाश्वस्ततोऽभवत् । शावस्तश्च महातेजा वत्सुकस्तत्सुतोऽभवत् ॥ १३४
निर्मिता येन शावस्ती (?) गौडदेशे[11] नराधिप । शावस्ताद्बृहदश्वोऽभूत्कुवलाश्वस्ततोऽभवत् ॥
धुन्धुमारत्वमगमद्धुन्धुनाशे[12] च यः पुमान् । तस्य पुत्रास्त्रयो जाता दृढाश्वो[13] दण्ड एव च ॥ १३६
कपिलाश्वश्च विख्यातो धौन्धुमारिः प्रतापवान् । दृढाश्वस्य प्रमोदश्च[14] हर्यश्वस्तस्य चाऽऽत्मजः ॥
हर्यश्वस्य निकुम्भोऽभूत्संहताश्वस्ततोऽभवत् । अकृताश्वो रणाश्वश्च संहताश्वसुतावुभौ ॥ १३८
युवनाश्वो रणाश्वस्य मांधाता च ततोऽभवत् । मांधातुः पुरुकुत्सोऽभूद्धर्मसेतुश्च पार्थिवः १३९
मुचकुन्दश्च विख्यातः शक्रमित्रः प्रतापवान् । पुरुकुत्सस्य पुत्रोऽभूत्संभूतो नर्मदापतिः ॥ १४०
संभूतिस्तस्य पुत्रोऽभूत्त्रिधन्वा च ततोऽभवत् । त्रिधन्वनः सुतो जातस्त्रैयारुण इति स्मृतः १४१
[† तस्य सत्यव्रतो नाम तस्मात्सत्यरथः स्मृतः] । तस्य पुत्रो हरिश्चन्द्रो हरिश्चन्द्राच्च रोहितः ॥
रोहिताच्च वृको जातो वृकाद्बाहुरजायत । सगरस्तस्य पुत्रोऽभूद्राजा परमधार्मिकः ॥ १४३
द्वे भार्ये सगरस्यापि प्रभा भानुमती तथा । ताभ्यामाराधितः पूर्वमौर्वोऽग्निः पुत्रकाम्यया ॥ १४४
और्वस्तुष्टस्तयोः प्रादाद्यथेष्टं वरमुत्तमम् । एकषष्टिसहस्राणि सुतमेकं तथाऽपरा ॥ १४५
गृह्णातु वंशकर्तारं प्रभाऽगृह्णाद्बहूंस्तथा । एकं भानुमती पुत्रमगृह्णादसमञ्जसम् ॥ १४६
ततः षष्टिसहस्राणि सुषुवे यादवी प्रभा । खनन्तः पृथिवीं दग्धा विष्णुना येऽश्वमार्गणे ॥ १४७

* 'पृषध्रुन्यो तस्य पुत्रोऽभूच्छावस्थो नाम वीर्यवान्' इत्यधिकमेतदग्रे क. ङ. च. पुस्तकेषु । † धनुश्चिह्नान्तर्गतः पाठः ग. ज. पुस्तकस्थः ।

१ ङ. °त्वेन सु° । २ क. ख. ङ. च. °जिताः । उ । घ. ज. °जितः । उ° । ३ ञ. पुरी । ४ ख. घ. ङ. च. दिग्याम्या वि° । ५ ख. ङ. च. युवनाश्वस्य पुत्रोऽभूच्छावस्तो नाम वीर्यवान् । ६ क. ख. ङ. च. ज. °केतुः स्वधर्माथो । ७ ग. घ. °श्छद्मना° । ८ झ. °पुत्रतामाप विकुक्षिर्नाम देवराट् । ज्येष्ठः पु° । ९ ञ. °सन्पञ्चाशच्चाथ त° । १० क. ङ. च. चत्वारिंशत्तथाऽष्टान्ये शतमध्ये च येऽभवन् । मे° । ११ क. ख. ङ. च. अङ्गदेशे । ग. घ. ज. स्वर्गदेशे । १२ च. °द्धुन्धुं हत्वाऽसुरं पुरा । त° । १३ क. ख. ङ. च. °श्वो घृणिरेव । घ. °श्वो दण्डिरेव । १४ ख. ङ. च. ज. °प्रमोहस्तु ।

असमञ्जसस्तनयो अंशुमान्नाम विश्रुतः । तस्य पुत्रो दिलीपस्तु दिलीपाच्चु भगीरथः ॥ १४८
येन भागीरथी गङ्गा तपः कृत्वाऽवतारिता । भगीरथस्य तनयो नाभाग इति विश्रुतः ॥ १४९
नाभागस्याम्बरीषस्तु सिन्धुद्वीपस्ततोऽभवत् । तस्यायुतायुः पुत्रोऽभूदृतुपर्णस्ततोऽभवत् ॥ १५०
तस्य कल्माषपादस्तु सर्वकर्मा ततः स्मृतः । तस्मादारण्यः पुत्रोऽभून्निघ्नस्तस्य सुतोऽभवत् १५१
निघ्नपुत्रावुभौ जातावनमित्ररघूत्तमौ । अनमित्रो वनमगादरिनाशकृते नृपः ॥ १५२
रघोरभूद्दिलीपस्तु दिलीपाच्चाप्यजस्तथा । दीर्घबाहुरजाज्जातः प्रजापालस्ततोऽभवत् ॥ १५३
ततो दशरथो जातस्तस्य पुत्रचतुष्टयम् । नारायणात्मकाः सर्वे रामस्तस्याग्रतोऽभवत् ॥ १५४
रावणान्तकरस्तद्वद्रघूणां वंशवर्धनः । वाल्मिकिर्यस्य चरितं चक्रे भार्गवसत्तमः ॥ १५५
तस्य पुत्रौ कुशलवाविक्ष्वाकुकुलवर्धनौ । अतिथिस्तु कुशाज्जातो निषधस्तस्य चाऽऽत्मजः १५६
नलस्तु निषधाज्जातो नभास्तस्मादजायत । नभसः पुण्डरीकोऽभूत्क्षेमधन्वा ततः स्मृतः ॥१५७
तस्य पुत्रोऽभवद्वीरो देवानीकः प्रतापवान् । अहीनगुस्तस्य सुतः सहस्राश्वस्ततः परः ॥ १५८
ततश्चन्द्रावलोकस्तु तारापीडस्ततोऽभवत् । तस्याऽऽत्मजश्चन्द्रगिरिश्चन्द्रस्तस्य सुतोऽभवत् १५९
श्रुतायुरभवत्तस्माद्भारते यो निपातितः । नलौ द्वावपि विख्यातौ वंश्यौ कश्यपसंभवौ ॥ १६०
वीरसेनसुतस्तद्वन्नैषधश्च नराधिपः । एते चैव समाख्याता राजानो भूरिदक्षिणाः ॥ १६१
इक्ष्वाकुवंशप्रभवाः प्राधान्येन प्रकीर्तिताः ॥ १६२

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे आदित्यवंशकथनं नामाष्टमोऽध्यायः ॥ ८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९७८

---

## अथ नवमोऽध्यायः ।

---

भीष्म उवाच—

भगवञ्श्रोतुमिच्छामि पितॄणां वंशमुत्तमम् । रवेश्च श्राद्धदेवस्य सोमस्य च विशेषतः ॥ १

पुलस्त्य उवाच—

हन्त ते कथयिष्यामि पितॄणां वंशमादितः । स्वर्गे पितृगणाः सप्त त्रयस्तेषाममूर्तयः ॥ २
मूर्तिमन्तोऽथ चत्वारः सर्वेषाममितौजसाम् । अमूर्तयः पितृगणा वैराजस्य प्रजापतेः ॥ ३
यजन्ति यान्देवगणा वैराजा इति विश्रुताः । ये वै ते योगविभ्रष्टाः प्राप्ता लोकान्सनातनान् ॥४
पुनर्ब्रह्मदिनान्ते तु जायन्ते ब्रह्मवादिनः । संप्राप्य तां स्मृतिं भूयो योगं सांख्यमनुत्तमम् ॥ ५
सिद्धिं प्रयान्ति योगेन पुनरावृत्तिदुर्लभाम् । योगिनामेव देयानि तस्माच्छ्राद्धानि दातृभिः ॥६
एतेषां मानसी कन्या पत्नी हिमवतो मता । मैनाकस्तस्य दायादः क्रौञ्चस्तस्य सुतोऽभवत् ॥ ७
क्रौञ्चद्वीपः स्मृतो येन चतुर्थो व्रतसंयुतः । मेना तु सुषुवे तिस्रः कन्या योगवतीस्ततः ॥ ८
उमैकपर्णाऽपर्णा च तीव्रतपःपरायणाः । रुद्रस्यैका भृगोश्चैका जैगीषव्यस्य चापरा ॥ ९
दत्ता हिमवता बाला सर्वलोकतपोधिका । पितॄणां लोकसर्गं ते कथयामि शृणुष्व तत् ॥ १०
लोकाः सोमपथा नाम यत्र मारीचनन्दनाः । वर्तन्ते ये च पितरो यान्देवा भावयन्त्यलम् ॥ ११

---

१ झ. सिद्धिं । २ क. ख. ग. घ. ङ. च. ज. °स्त्वायुः स्मृतः । ३ क. ख. ग. घ. ङ. च. ज. °ते विवस्वतो वंशे रा° । ४ ञ. °राजा इ° । ५ ञ. धृतसंयुतः । ६ ञ. येन पि° ।

अग्निष्वात्ता इति ख्याता यज्वानो यत्र संस्थिताः । अच्छोदा नाम तेषां तु मानसी कन्यका नदी
अच्छोदं नाम तेषां तु सरः पितृविनिर्मितम् । अच्छोदाऽथ तपश्चक्रे दिव्यं वर्षसहस्रकम् ॥ १३
आजग्मुः पितरस्तुष्टाः किं च दास्यन्ति ते वरम् । दिव्यरूपधराः सर्वे दिव्यमालानुलेपनाः ॥
सर्वे प्रधाना बलिनः कुसुमायुधसंनिभाः । तन्मध्येऽमावसुं नाम पितरं वीक्ष्य साऽङ्गना ॥ १५
वव्रे वरार्थिनी सङ्गं कुसुमायुधपीडिता । योगभ्रष्टा तु सा तेन व्यभिचारेण भामिनी ॥ १६
धरां न स्पृशते पूर्वं पपाताथ भुवस्तले । तथैवामावसुर्योऽयमिच्छां चक्रे न तां प्रति ॥ १७
धैर्येण तस्य सा लोके अमावास्येति विश्रुता । पितृणां वल्लभा यस्मात्तस्याक्षयकारिका ॥ १८
अच्छोदाऽधोमुखी दीना लज्जिता तपसः क्षयात् । सा पितॄन्प्रार्थयामास पुनरात्मसमृद्धये॥ १९
विलज्जमाना पितृभिरिदमुक्ता तपस्विनी । भविष्यमिदमालोच्य देवकार्यं च ते तदा ॥ २०
इदमूचुर्महाभागां प्रसादशुभया गिरा । दिवि दिव्यशरीरेण यत्किंचित्क्रियते बुधैः ॥ २१
तेनैव तत्कर्मफलं भुज्यते वरवर्णिनि । सद्यः फलन्ति कर्माणि देवत्वे प्रेत्य मानुषे ॥ २२
तस्मात्त्वं सुकृतस्यास्य प्राप्स्यसे प्रेत्य वै फलम् । अष्टाविंशे भवित्री त्वं द्वापरे मत्स्ययोनिजा २३
व्यतिक्रमात्पितॄणां त्वं कष्टं कुलमवाप्स्यसि । तस्माद्राज्ञो वसोः कन्या त्वमवश्यं भविष्यसि २४
कन्यात्वे देवलोकांस्तान्पुनः प्राप्स्यसि दुर्लभान् । पराशरस्य वीर्येण पुत्रमेकमवाप्स्यसि ॥ २५
द्वीपे तु बदरीप्राये बादरायणमच्युत । स वेदमेकं बहुधा विभजिष्यति ते सुतः ॥ २६
पौरवस्य सुतौ द्वौ तु समुद्रांशस्य शंतनोः । विचित्रवीर्यस्तनयस्तथा चित्राङ्गदो नृपः ॥ २७
इमावुत्पाद्य तनयौ क्षेत्रे चैवास्य धीमतः । प्रोष्ठपद्यष्टका भूयः पितृलोके भविष्यसि ॥ २८
नाम्ना सत्यवती लोके पितृलोके तथाऽष्टका । आयुरारोग्यदा नित्यं सर्वकामफलप्रदा ॥ २९
भविष्यसि वरे लोके नदीत्वं च गमिष्यसि । पुण्यतोया सरिच्छ्रेष्ठा लोके स्वच्छोदनामिका ३०
इत्युक्ता सगणैस्तैस्तु तत्रैवान्तरधीयत । साऽप्याप चारित्रफलं मया यद्वादितं पुरा ॥ ३१
विभ्राजो नाम ये चान्ये दिवि सन्ति सुवर्चसः । लोका बर्हिषदो यत्र पितरः सन्ति सुव्रताः ३२
यत्र बर्हिणयुक्तानि विमानानि सहस्रशः । संकल्पपादपा यत्र तिष्ठन्ति फलदायिनः ॥ ३३
यत्राभ्युदयशालासु मोदन्ते श्राद्धदायिनः । ये दानवाः सुरगणा गन्धर्वाप्सरसां गणाः ॥ ३४
यक्षरक्षोगणाश्चैव यजन्ति दिवि देवताः । पुलस्त्यपुत्राः शतशस्तपोयोगबलान्विताः ॥ ३५
महात्मानो महाभागा भक्तानामभयंकराः । एतेषां पीवरी कन्या मानसी दिवि विश्रुता ॥ ३६
योगिनी योगमाता च तपश्चक्रे सुदारुणम् । प्रसन्नो भगवांस्तस्या वरं वव्रे सुता ततः ॥ ३७

कन्योवाच—

योगवन्तं स्व(सु)रूपं च भर्तारं विजितेन्द्रियम् । देहि देव प्रसन्नस्त्वं यदि मे वदतां वर ॥ ३८
उवाच देवो भविता व्यासपुत्रो यदा शुकः । भवित्री तस्य भार्या त्वं योगाचार्यस्य सुव्रता ३९
भविष्यति च ते कन्या कृत्वी नामाथ योगिनी । पञ्चालाधिपतेर्देया सात्वतस्य तदा त्वया ४०
जननी ब्रह्मदत्तस्य योगसिद्धार्थगा स्मृता । कृष्णो गौरप्रभः शंभुर्भविष्यन्ति च ते सुताः ॥४१
सर्वकामसमृद्धेषु विमानेष्वपि पावनाः । किं पुनः श्राद्धदा विप्रा भक्तिमन्तः क्रियान्विताः ४२
गौर्नाम कन्या येषां तु मानसी दिवि राजते । सुकन्या दयिता पत्नी साध्यानां कीर्तिवर्धिनी ४३

१ ञ. °द्याः किल दा° । २ ग. वीर्येण । ३ क. ख. ग. घ. ङ. च. ज. विश्रुता । ४ क. ख. ग. घ. ङ. च. ज. °लप्स्यसा° । ५ झ. °भागाः प्र° । ६ °कृतं कृत्वा प्रा° ।

मरीचिगर्भनामानो लोके मार्तण्डमण्डले । पितरो यत्र तिष्ठन्ति हविष्मन्तोऽङ्गिरःसुताः ॥ ४४
तीर्थश्राद्धप्रदा यान्ति यत्र क्षत्रियपुंगवाः । राज्ञां तु पितरस्ते वै स्वर्गमोक्षफलप्रदाः ॥ ४५
एतेषां मानसी कन्या यशोदा लोकविश्रुता । पत्नी यांऽशुमतः श्रेष्ठा स्नुषा पञ्चधनस्य तु ॥४६
जनन्यथ दिलीपस्य भगीरथपितामही । लोकाः कामदुघा नाम कामभोगफलप्रदाः ॥ ४७
सुस्वधा नाम पितरो यत्र तिष्ठन्ति ते सुताः । आज्यपा नाम लोकेषु कर्दमस्य प्रजापतेः ॥ ४८
पुलहाग्रजदायादा वैश्यास्तान्भावयन्ति ह । यत्र श्राद्धकृतः सर्वे पश्यन्ति युगपद्गतान् ॥ ४९
मातृभ्रातृपितृश्वश्रूसखिसंबन्धिबान्धवान् । अपि जन्मान्तरैर्दृष्टाननुभूतान्सहस्रशः ॥ ५०
एतेषां मानसी कन्या विरजा नाम विश्रुता । सा पत्नी नहुषस्याऽऽसीद्ययातेर्जननी तथा ५१
एषाऽष्टकाऽभवत्पश्चाद्ब्रह्मलोकगता सती । त्रय एते गणाः प्रोक्ताश्चतुर्थं तु वदाम्यहम् ॥ ५२
लोकाः सुमानसा नाम ब्रह्मलोकोपरि स्थिताः । सोमपा नाम पितरो यत्र तिष्ठन्ति शाश्वताः ५३
धर्ममूर्तिधराः सर्वे परतो ब्रह्मणः स्मृताः । उत्पन्नाः स्वधया ते तु ब्रह्मत्वं प्राप्य योगिनः ॥५४
कृत्वा सृष्ट्यादिकं सर्वे मानसे सांप्रतं स्थिताः । नर्मदा नाम तेषां तु कन्या तोयवहा सरित् ५५
भूतानि पूयते याति पश्चिमोदधिगामिनी । तेभ्यः सर्वत्र मनवः प्रजासर्गश्च निर्मितः ॥ ५६
ज्ञात्वा श्राद्धानि कुर्वन्ति धर्मभावेन सर्वदा । सर्वदा तेभ्य एव स्यात्प्रसादाद्योगसंततिः ॥ ५७
पितृणामाद्यसर्गे तु श्राद्धमेवं विनिर्मितम् । सर्वेषां राजतं पात्रमथवा रजतान्वितम् ॥ ५८
दत्तं स्वधा पितॄणां तु पितॄन्प्रीणाति सर्वदा । आग्नीध्रसोमपाभ्यां तु कार्यमाप्यायनं बुधैः ॥५९
अग्न्यभावे तु विप्रस्य पाणौ वाऽथ जलेऽपि वा । अजाकर्णेऽश्वकर्णे वा गोष्ठे वाऽथ शिवान्तिके
पितॄणाममलं स्थानं दक्षिणा दिक्प्रशस्यते । प्राचीनावीतमुदकं तिलसंत्यागमेव च ॥ ६१
दत्तं स्वधां पुरोधाय पितॄन्पुष्णाति सर्वदा । दर्भा माषषष्टिकान्नं गोक्षीरं मधुसर्पिषी ॥ ६२
खड्गलोहामिषं चैवमन्नं श्यामाकशालयः । यवनीवारमुद्गेक्षुशुक्लपुष्पघृतानि वा ॥ ६३
वल्लभानि प्रशस्तानि पितॄणामिह सर्वदा । द्वेष्याणि च प्रवक्ष्यामि श्राद्धे वर्ज्यानि सर्वदा ॥६४
मसूरशणनिष्पावराजमाषकुलत्थकाः । पद्मबिल्वार्कधत्तूरपारिभद्राटरूषकाः ॥ ६५
न देयाः पितृकार्येषु पयश्चाजाविकं तथा । कोद्रवो दारवरटा कपित्थमधुकातसी ॥ ६६
एतान्यपि न देयानि पितृभ्यः श्रियमिच्छता । पितॄन्प्रीणाति यो भक्त्या ते पुनः प्रीणयन्ति तम्
यच्छन्ति पितरः पुष्टिं स्वर्ग्यारोग्यं प्रजाफलम् । देवकार्यादपि पुनः पितृकार्यं विशिष्यते ॥ ६८
देवतानां तु पितरः पूर्वमाप्यायनं स्मृतम् । शीघ्रप्रसादास्त्वक्रोधा निःसङ्गाः स्थिरसौहृदाः ६९
शान्तात्मानः शौचपराः सततं प्रियवादिनः । भक्तानुरक्ताः सुखदाः पितरः पर्वदेवताः ॥ ७०
हविष्मतामाधिपत्ये श्राद्धदेवः स्मृतो रविः । एतद्धि सर्वमाख्यातं पितृवंशानुकीर्तनम् ॥ ७१
पुण्यं पवित्रमायुष्यं कीर्तनीयं नरैः सदा ॥ ७२

भीष्म उवाच—

श्रुत्वैतदखिलं भूयः परा भक्तिरुपस्थिता । श्राद्धकालं विधिं चैव श्राद्धमेव तथैव च ॥ ७३
श्राद्धेषु भोजनीया ये ये च वर्ज्या द्विजातयः । कस्मिन्वासरभागे तु पितृभ्यः श्राद्धमाचरेत् ७४

१ क. ख. ङ. च. ज. °र्गभोगफ° । २ क. ख. ग. घ. ङ. च. ज. °श्चजन° । ३ झ. अश्वपा । ४ क. घ. ङ. च. ज. °न्मायुतैर्दृ° । ५ ग. घ. ज. °न्नाः प्रलयान्ते तु । ६ ख. ग. घ. च. ज. एवास्य प्रसा° । ७ ग. घ. ङ. °र्भा मांसं च सिद्धा- न्नं । ८ झ. °भ्यः श्राद्धमि° ।

अन्नं दत्तं कथं याति श्राद्धे वै ब्रह्मवित्तम । विधिना येन कर्तव्यं कथं प्रीणाति तान्पितॄन् ॥ ७५

पुलस्त्य उवाच—

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन च । पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमावहन् ॥ ७६
नित्यं नैमित्तिकं काम्यं त्रिविधं श्राद्धमुच्यते । नित्यं तावत्प्रवक्ष्यामि अर्घ्यावाहनवर्जितम् ॥ ७७
अदैवं तद्विजानीयात्पार्वणं पर्वसु स्मृतम् । पार्वणं त्रिविधं प्रोक्तं शृणु यत्नान्महीपते ॥ ७८
पार्वणे ये नियोज्यास्तु ताञ्शृणुष्व नराधिप । पञ्चाग्निः स्नातकश्चैव त्रिसौपर्णः षडङ्गवित् ॥ ७९
श्रोत्रियः श्रोत्रियसुतो विधिवाक्यविशारदः । सर्वज्ञो वेदवान्मन्त्री ज्ञानवंशकुलान्वितः ॥ ८०
त्रिणाचिकेतस्त्रिमधुः श्रुतेष्वन्येष्ववस्थितः । पुराणवेत्ता ब्रह्मज्ञः स्वाध्यायी जपतत्परः ॥ ८१
ब्रह्मभक्तः पितृपरः सूर्यभक्तोऽथ वैष्णवः । ब्राह्मणो योगविच्छान्तो विदितात्माऽतिशीलवान् ।
शिवभक्तिपरो नित्यं श्राद्धे चार्हति केतनम् । एते भोज्याः प्रयत्नेन वर्जनीयानिमाञ्शृणु ॥ ८३
पतितस्तत्सुतः क्लीबः पिशुनोऽत्यन्तरोगवान् । सर्वे ते श्राद्धकाले तु त्याज्या वै धर्मदर्शिभिः ॥
पूर्वेद्युरपरेद्युर्वा विनीतांश्च निमन्त्रयेत् । निमन्त्रितांश्च पितर उपतिष्ठन्ति तान्द्विजान् ॥ ८५
वायुभूता निगच्छन्ति तथाऽऽसीनानुपासते । दक्षिणं जानुमालभ्य तमेवानुनिमन्त्रितः ॥ ८६
एवं निमन्त्र्य श्राद्धे तु नियमं पैतृकं विदुः । अक्रोधनैः शौचपरैः सततं ब्रह्मवादिभिः ॥ ८७
भवितव्यं भवद्भिश्च मया च श्राद्धकर्मणि । पितृयज्ञं तु निर्वर्त्य तर्पणाख्यं तु योऽग्निमान् ॥ ८८
पिण्डान्वाहार्यकं कृत्वा श्राद्धकाले क्षये तदा । गोमयेनानुलिप्तेन दक्षिणप्रवणे स्थले ॥ ८९
श्राद्धं समारभेत्तत्र गोष्ठे वा जलसंनिधौ । अग्निमान्निर्वपेत्पैत्र्यं चरुं वा सक्तुमुष्टिभिः ॥ ९०
त्रिभिर्वा निर्वपामीति सर्वं दक्षिणतो न्यसेत् । अभिघार्य ततः कुर्यान्निर्वापत्रयमग्रतः ॥ ९१
ते वितस्त्यायताः कार्याश्चतुरङ्गुलविस्तृताः । दर्वीत्रयं च कुर्वीत खादिरं रजतान्वितम् ॥ ९२
रत्निमात्रं परिश्लक्ष्णं हस्ताकाराग्रमुत्तमम् । उदकपात्राणि कांस्यं च मेक्षणं च समित्कुशम् ॥ ९३
तिलपात्राणि सद्वासो गन्धधूपानुलेपनम् । आहरेदपसव्यं तु सर्वं दक्षिणतः शनैः ॥ ९४
एवमासाद्य तत्सर्वं भवनस्य पुरो भुवि । गोमयेनानुलिप्तायां गोमूत्रेण तु मण्डलम् ॥ ९५
साक्षताभिः सपुष्पाभिरद्भिः सव्यापसव्यवत् । विप्राणां क्षालयेत्पादावभिवन्द्य पुनः पुनः ॥ ९६
आसनेषूपक्लृप्तेषु दर्भवत्सु विधानतः । उपस्पृष्टोदकान्विप्रानुपवेश्यानुमन्त्रयेत् ॥ ९७
द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा । भोजयेदीश्वरोऽपीह न कुर्याद्विस्तरं बुधः ॥ ९८
दैवपूर्वं निवेद्याथ विप्रानर्घ्यादिना बुधैः । अग्नौ कुर्यादनुज्ञातो विप्रैर्विप्रो यथाविधि ॥ ९९
स्वगृह्योक्तेन विधिना काले कुर्यात्समन्ततः । अग्नीषोमाय साज्यं तु कुर्यादाप्यायनं बुधैः ॥ १००
आप्यायनं कृतं तेन य एवाग्निर्द्विजोत्तमः । यज्ञोपवीती निर्वर्त्य ततः पर्युक्षणादिकम् ॥ १०१
प्राचीनावीतिना कार्यमेतत्सर्वं विजानता । लब्ध्वा तस्माद्विशेषेण पिण्डान्कुर्यात्तथोदकम् ॥ १०२
दद्यादुदकपात्रैस्तु सतिलं सव्यपाणिना । प्रदद्यात्सर्वयत्नेन दमयुक्तो विमत्सरः ॥ १०३

१ क. ख. घ. च. ज. °गनिष्ठात्मा विजितात्मा सुधी° । २ क. ख. ग. घ. ङ. च. ज. तोष्याः । ३ ज. °भ्य वामं पात्य निमन्त्रयेत् । अ° । ४ घ. ङ. ज. °रैः सुस्नातैर्ब्रह्म° । ५ ग. घ. ज. °द्भकारिणा । पिं° । ६ क. ख. ग. घ. ङ. च. ज. °कं कुर्याच्छ्राद्धमिन्दुक्षये तथा । गों° । ७ क. ख. ग. घ. ङ. च. ज. °भेद्भक्त्या गों° । ८ क. ख. ग. घ. ङ. च. ज. °भिः । पितृभ्यो नि° । ९ क. °भिधार्य । १० क. घ. ज. लक्षणं । ११ क. ख. ग. घ. ङ. च. ज. °नस्योत्तरेऽन्तरे । गों° । १२ क. ख. ग. घ. ङ. च. च. °धः । दक्षिणाग्नौ प्रणीतेन स ए° । १३ क. ख. ग. घ. च. ज. °तः प्रक्षेपणा° ।

विधाय लेखां यत्नेन निर्वपेदवनेजनम् । दक्षिणाभिमुखः कुर्यात्ततो दर्भान्निधाय वै ॥ १०४
निधाय पिण्डमेकैकं सर्वं दर्भोपरि क्रमात् । निर्वपेत्त्वथ दर्भेषु नामगोत्रानुकीर्तनैः ॥ १०५
तेषु दर्भेषु तं हस्तं विमृज्याल्लेपभागिनाम् । तथैव च जपं कुर्यात्पुनः प्रत्यवनेजनम् ॥ १०६
जलैर्युक्तं नमस्कृत्य गन्धधूपार्चनादिभिः । एवमावाह्य तत्सर्वं वेदमन्त्रैर्यथोदितैः ॥ १०७
*एकाग्नेरेक एवाद्भिर्निर्वपेद्दर्विकां तथा । ततः कृत्वा नरो दद्यात्पितृभ्यस्तु कुशान्बुधः ॥ १०८
तद्वत्पिण्डादिकं कुर्यादावाहनविसर्जनम् । ततो गृहीत्वा पिण्डेभ्यो मात्राः सर्वाः क्रमेण तु १०९
तानेव विप्रान्प्रथमं प्राशयेद्यत्नतो नरः । यस्माद्दत्त्वाऽऽहिता मात्रा भक्षयन्ति द्विजातयः ॥ ११०
अन्वाहार्यकमित्युक्तं तस्मात्तच्चन्द्रसंक्षये । पूर्वं दत्त्वा तु हस्तेन सपवित्रं तिलोदकम् ॥ १११
तत्पिण्डाग्रे प्रयच्छेत स्वधैषामस्त्विति ब्रुवन् । वर्णयन्भोजयेद्दत्तमिष्टं पूतं च सर्वदा ॥ ११२
वर्जयेत्क्रोधपरतां स्मरन्नारायणं हरिम् । तृप्तान्ज्ञात्वा पुनः कुर्याद्विकिरं सार्ववर्णिकम् ॥ ११३
विधृत्य सोदकं त्वन्नं सतिलं प्रक्षिपेद्भुवि । आचान्तेषु पुनर्दद्याज्जलं पुष्पाक्षतोदकम् ॥ ११४
स्वधावाचनकं सर्वं पिण्डोपरि समाचरेत् । दैवाद्यन्तं प्रकुर्वीत श्राद्धनाशोऽन्यथा भवेत् ॥ ११५
विसर्ज्य विप्रान्प्रणतस्तेषां कृत्वा प्रदक्षिणम् । दक्षिणां दिशमाकाङ्क्षन्पितॄनुद्दिश्य मानवः ११६
दातारो नोऽभिवर्धन्तां वेदाः संततिरेव च । श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति ॥
अन्नं च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मां च याचिष्म कंचन ॥ ११८
एतदभिमतां प्रोक्तमन्वाहार्यं च पार्वणम् । यथेन्दुसंक्षये तद्वत्पार्वणं तु निगद्यते ॥ ११९
पिण्डांश्च गोजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा । वमान्ते वाऽथ विकिरेदापोभिरथ वाप(ह)येत् ॥
पत्नी तु मध्यमं पिण्डं प्राशयेद्विनयान्विता । आधत्त पितरो गर्भं पुत्रसंतानवर्धनम् ॥ १२१
तावन्निर्वापणं तिष्ठेद्यावद्विप्रा विसर्जिताः । वैश्वदेवं ततः कुर्यान्निवृत्ते पितृकर्मणि ॥ १२२
इष्टैः सह ततश्चान्ते भुञ्जीत पितृसेवितम् । पुनर्भोजनमध्वानं यानमासनमैथुनम् ॥ १२३
श्राद्धकृच्छ्राद्धभुग्यो वा सर्वमेतद्विवर्जयेत् । स्वाध्यायं कलहं चैव दिवास्वप्नं च सर्वदा ॥ १२४
अनेन विधिना श्राद्धं त्रिवर्गस्येह निर्वपेत् । कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षेषु सर्वदा ॥ १२५
यत्र यत्र प्रदातव्यं सपिण्डीकरणात्मकम् । तत्रानेन विधानेन देयमग्निमता सदा ॥ १२६
अतः परं प्रवक्ष्यामि ब्रह्मणा यदुदीरितम् । श्राद्धं साधारणं नाम भुक्तिमुक्तिफलप्रदम् ॥ १२७
अयने विषुवे चैव अमावास्यार्कसंक्रमे । अमावास्याष्टका(?) चैव कृष्णे पञ्चदशीषु च ॥ १२८
आर्द्रामघारोहिणीषु द्रव्यब्राह्मणसंगमे । गजच्छायाव्यतीपाते विष्टिवैधृतिवासरे ॥ १२९
वैशाखस्य तृतीयायां नवम्यां कार्तिकस्य तु । पञ्चदश्यां तु माघस्य नभस्यस्य त्रयोदशी १३०
युगादयः स्मृता ह्येताः पितृपक्षोपकारिकाः । तथा मन्वन्तरादौ च देयं श्राद्धं विजानता॥ १३१
अश्वयुक्शुक्लनवमी द्वादशी कार्तिके तथा । तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥ १३२
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा । आषाढस्यापि दशमी माघमासस्य सप्तमी १३३

---

* अयं श्लोकः क्वचिन्नास्ति ।

---

१ ङ. च. क. दर्वीं निधा॰ । २ विसृज्या॰ । ३ झ. ॰द्यात्पत्नीभ्य॰ । ४ क. ख. ङ. च. ॰माशयित्वा च मानवः । य॰ । ग. ज. ॰मावहेच्चैव मानवः । य॰ । ५ झ. ॰दत्त्वाऽऽहृता । ग. ॰दन्नाहिं॰ । ६ क. ख. ङ. च ॰येदन्नामिदं पू॰ । घ. ॰येदन्नामि॰ । ज. ॰येद्विमिदं पू॰ । ७ ञ. दैवमन्त्रं । ८ क. ख. गः घ. ङ. च. ज ॰द्वदन्यत्रापि नि॰ । ९ ञ. वा । विप्रान्तेवासिनिकरे द्वयोभिरथ वासये॰ ।

श्रावणे चाष्टमी कृष्णा तथाऽऽषाढी च पूर्णिमा । कार्तिकी फाल्गुनी चैव ज्येष्ठे पञ्चदशी तथा ॥
मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः । यथा मन्वन्तरस्याऽऽदौ रथमाप दिवाकरः ॥ १३५
माघमासस्य सप्तम्यां भाद्रमासस्य सप्तमी ॥ १३६

पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतत्पितरो वदन्ति ॥ १३७

वैशाख्यामुपरागे तु तथोत्सवमहालये । तीर्थायतनगोष्ठेषु द्वीपोद्यानगृहेषु च ॥ १३८
विविक्तेषु च लिप्तेषु श्राद्धं देयं विजानता । विप्रान्पूर्वे परे चाह्नि विनीतात्मा निमन्त्रयेत् १३९
शीलवृत्तगुणोपेतान्वयोरूपसमान्वितान् । द्वौ देवे पितृकृत्ये त्रीनेकैकमुभयत्र वा ॥ १४०
भोजयेत्सुसमृद्धोऽपि न प्रकुर्वीत विस्तरम् । विश्वेदेवान्यवैः पुष्पैरभ्यर्च्याऽऽसनपूर्वकम् ॥ १४१
पूरयेत्पात्रयुग्मं तु स्थाप्यं दर्भपवित्रके । शं नो देवीत्यपः कुर्याद्यवोऽसीति यवानपि ॥ १४२
गन्धपुष्पैस्तु संपूज्य विश्वेदेवान्प्रविन्यसेत् । विश्वेदेवास इत्याभ्यामावाह्य विकिरेद्यवान् ॥ १४३
यवोऽसि धान्यराजस्तु वारुणो मधुमिश्रितः । निर्णोदः सर्वपापानां पवित्रमृषिसंस्तुतम् ॥ १४४
गन्धपुष्पैरलंकृत्य या दिव्येत्यर्घमुत्सृजेत् । अभ्यर्चिताघ्रानुत्सृज्य पितृयज्ञं समारभेत् ॥ १४५
दर्भासनादि कृत्वाऽऽदौ त्रीणि पात्राणि चार्चयेत् । सपवित्राणि कृत्वाऽऽदौ शं नो देवीत्यपः क्षिपेत्
तिलोऽसीति तिलान्कुर्याद्गन्धपुष्पादिकं पुनः । पात्रं वनस्पतिमयं तथा पर्णमयं पुनः ॥ १४७
राजतं वा प्रकुर्वीत तथा सागरसंभवम् । सौवर्णं राजतं पात्रं पितॄणां पात्रमिष्यते ॥ १४८
रजतस्य कथा वाऽपि दर्शनं दानमेव वा । राजतैर्भाजनैरेषां पितॄणां रजतान्वितैः ॥ १४९
वार्यपि श्रद्धया दत्तमक्षयायोपकल्पते । अर्घार्थं पितृपिण्डेषु पितॄणां राजतं मतम् ॥ १५०
शिवनेत्रोद्भवं यस्मादतस्तत्पितृवल्लभम् । [*सुमङ्गलं तद्यज्ञेषु देवकार्येषु वर्जितम् ] ॥ १५१
एवं पात्राणि संकल्प्य यथालाभं विशां पते । या दिव्येति पितुर्नामगोत्रे दर्भान्करे न्यसेत् १५२
पितॄनावाहयिष्यामि तथेत्युक्तः स तैः पुनः । उशन्तस्त्वा तथाऽऽयान्तु ऋग्भ्यामावाहयेत्पितॄन्
या दिव्येत्यर्घ्यमुत्सृज्य दद्याद्गन्धादिकं ततः । वस्त्रोत्तरं दानपूर्वं दत्त्वा संश्रवमादितः ॥ १५४
पितृपात्रे निधायाथ न्युब्जमुत्तरतो न्यसेत् । पितृभ्यः स्थानमसीति निधाय परिवेषयेत् ॥ १५५
तत्रापि पूर्वतः कुर्यादग्निकार्यं विमत्सरः । उभाभ्यामपि हस्ताभ्यामाहृत्य परिवेषयेत् ॥ १५६
उशन्तस्त्वेति तं दर्भं पाणिभक्तं विशेषतः । यवादिसूपशाकाद्यैर्नानाभक्ष्यैस्तथैव च ॥ १५७
अन्नं तु सदधिक्षीरं गोघृतं शर्करान्वितम् । मांसं प्रीणयते सर्वान्पितॄनित्युक्तवानजः ॥ १५८
द्वौ मासौ मात्स्यमांसेन त्रीन्मासान्हारिणेन च । औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै ॥ १५९
वाराहस्य तु मांसेन षण्मासं तृप्तिरुत्तमा । सप्त लोहस्य मांसेन तथाऽष्टावाजकेन तु ॥ १६०
पृषतस्य तु मांसेन तृप्तिर्मासान्नवैव तु । दश मासांस्तु तृप्यन्ति वराहमहिषामिषैः ॥ १६१
शशकूर्मयोस्तु मांसेन मासानेकादशैव तु । संवत्सरं तु गव्येन पयसा पायसेन वा ॥ १६२

---

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

---

१ क. °पवासे तु । ख. ग. घ. ङ. च. ज. °पवासेषु त° । २ क. ग. घ. ङ. च. ज. °नीतांश्च नि° । ३ झ. °भ्यर्च्य ताभिरुत्सृष्टः पि° । क. ङ. च. °भ्यर्च्य गन्धाद्युत्सृ° । ४ क. ख. ग. घ. ङ. च. ज. अद्यापि पितृपात्रेषु । ५ क. ख. घ. ङ. च. ज. दारु पू° । ६ क. ख. ङ. च. ज. °श्रयमा° । ७ ग. घ. °तः । गुणान्निश्चित्य शा° । ८ क. ख. ग. ङ. ख. °नित्याह पद्मजः ।

शौकरेण तु तृप्यन्ति मासान्पञ्चदशैव तु । वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ १६३
कालशाकेन चाऽऽनन्त्यं खड्गमांसेन चैव हि । यत्किंचिन्मधुसंयुक्तं गोक्षीरं घृतपायसम् ॥१६४
दत्तमक्षय्यमित्याहुः पितरः पूर्वदेवताः । स्वाध्यायं श्रावयेत्पित्र्यं पुराणान्यखिलानि तु ॥१६५
ब्रह्मविष्ण्वर्करुद्राणां स्तवानि विविधानि च । इन्द्रेशसोमसूक्तानि पावमानीश्च सर्वतः ॥ १६६
बृहद्रथंतरं तद्वज्ज्येष्ठसामस्य गौरवम् (?)। तथैव शान्तिकाध्यायं मधुब्राह्मणमेव चँ ॥ १६७
मण्डलं ब्राह्मणं तद्वत्प्रीतिकारि च यत्पुनः । विप्राणामात्मनश्चापि तत्सर्वं समुदीरयेत् ॥ १६८
भारताध्ययनं कार्यं पितॄणां परमं प्रियम् । भुक्तवत्सु च विप्रेषु भोज्यं तोयादिकं च यत् १६९
*सार्ववर्णिकमन्नाद्यं समीयात्सावधारणम् । समुत्सृजेद्भुक्तवतामग्रतो विकिरन्भुवि ॥ १७०
अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥
येषां न माता न पिता न बन्धुर्न चान्यमित्रं न तथाऽन्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत्प्रयान्तु योगाय यतो यतस्तत् ॥ १७२
असंस्कृतप्रमीतानां त्यागिनां कुलभागिनाम् । उच्छिष्टभागधेयानां दर्भेषु विकिरासनम् ॥ १७३
तृप्तान्ज्ञात्वोदकं दद्यात्सकृद्विप्रकरे तदा । विप्रलिप्ते महीपृष्ठे गोशकृन्मूत्रवारिणा ॥ १७४
निधाय दर्भान्विधिवद्दक्षिणाग्रान्प्रयत्नतः । सर्ववर्णविधानेन पिण्डांस्तु पितृयज्ञवत् ॥ १७५
अवनेजनपूर्वं तु नामगोत्राणि मानवैः । उक्त्वा पुष्पादिकं दद्यात्कृत्वा प्रत्यवनेजनम् ॥ १७६
ज्ञात्वाऽपसव्यं सव्येन पाणिना त्रिःप्रदक्षिणम् । पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिना १७७
दीपप्रज्वालनं तद्वत्कुर्यात्पुष्पार्चनं बुधः । अथाऽऽचान्तेषु चाऽऽचम्य दद्याच्चापः सकृत्सकृत् ॥
तथा पुष्पाक्षतान्पश्चादक्षय्योदकमेव च । सतिलं नामगोत्रेण दद्याच्छक्त्या च दक्षिणाम्॥१७९
गोभूहिरण्यवासांसि भव्यानि शयनानि च । दद्याद्यदिष्टं विप्राणामात्मनः पितुरेव च ॥ १८०
वित्तशाठ्येन रहितः पितृभ्यः प्रीतिमाहरन् । ततः स्वधावाचनिकं विश्वेदेवेषु चोदकम् ॥ १८१
दत्त्वाऽऽशीः प्रतिगृह्णीयाद्द्विजेभ्यः प्राङ्मुखो बुधः । अघोराः पितरः सन्तु सन्त्वित्युक्तः पुनर्द्विजैः
गोत्रं तथा च वर्धतां तथेत्युक्तश्च तैः पुनः । दातारो मेऽभिवर्धन्तां वेदाः संततिरेव च ॥ १८३
एताः सत्याशिषः सन्तु सन्त्वित्युक्ते च तैः पुनः । स्वस्तिवाचनकं कुर्यात्पिण्डानुद्धृत्य भक्तितः
उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रविसर्जनम् । ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः ॥ १८५
उच्छेषणं भूमिगतमजिह्मस्याशठस्य च । दासवर्गस्य तत्पित्र्यं भागधेयं प्रचक्षते ॥ १८६
पितृभिर्निर्मितं पूर्वमेतदाप्यायनं तदा । अप्रतानामपुत्राणां स्त्रीणामपि नराधिप ॥ १८७
ततः स्थानेऽग्रतः स्थित्वा प्रतिगृह्याम्बुपात्रिकाम् । वाजे वाजेति च जपन्कुशाग्रेण विसर्जयेत् ॥
बहिः प्रदक्षिणं कुर्यात्पदान्यष्टावनुव्रजेत् । बन्धुवर्गेण सहितः पुत्रभार्यासमन्वितः ॥ १८९
निवृत्तः प्रणिपत्याथ प्रयुज्याग्निं स मन्त्रवित् । वैश्वदेवं ततः कुर्यान्नैत्यकं बलिमेव च ॥ १९०
ततस्तु वैश्वदेवान्ते सभृत्यसुतबान्धवः । भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम् ॥ १९१

* इदमर्धं क्वचित्पुस्तके नास्ति । अधिकमिव च दृश्यते ।

१ क. ख. ग. घ. ङ. च. ज. °रं दधि पा° । २ क. ख. ग. घ. ङ. च. ज. शक्तितः । ३ क. ख. ग. घ. ङ. च. °छमासस्य । झ. °छसामाथ रौर° । ४ क. ख. ग. घ. ङ. च. ज. च । श्रावयेद्ब्राह्म° । ५ क. ख. ग. घ. ङ. च. °गाश्च ततं च तद्वत् । ६ क. ख. ग. घ. ङ. च. ज. °द्विकरणे तथा । वि° । ७ झ. °वः । गन्धधूपादि° । ८ क. ख. ङ. च. पितृव-न्मातृकं कार्यं । ९ झ. वचनानि । १० क. ख. ग. घ. ङ. च. ज. °त्पिण्डं भा° । ११ ञ. सदा ।

एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु । श्राद्धं साधारणं नाम सर्वकामफलप्रदम् ॥ १९२
भार्याविरहितो वाऽपि प्रवासस्थोऽपि भक्तिमान् । शूद्रोऽप्यमन्त्रकं कुर्यादनेन विधिना नृप १९३
तृतीयमाभ्युदयिकं वृद्धिश्राद्धं तदुच्यते । उत्सवानन्दसत्कारे यज्ञे चोद्वाहमङ्गले ॥ १९४
मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् । ततो मातामहा राजन्विश्वेदेवास्तथैव तु ॥ १९५
प्रदक्षिणोपचारेण दध्यक्षतफलोदकैः । प्राङ्मुखो निर्वपेत्पिण्डान्पूर्वांश्चैव पुरातनान् ॥ १९६
संपन्नमित्यभ्युदये दद्यादर्घं द्वयोर्द्वयोः । युग्मा द्विजातयः पूज्या वस्त्रकार्तस्वरादिभिः ॥ १९७
तिलकार्यं यवैः कार्यं तच्च सर्वानुपूर्वकम् । मङ्गल्यानि च सर्वाणि वाचयेद्द्विजपुंगवान् ॥ १९८
एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धं च सर्वदा । नमस्कारेण मन्त्रेण कुर्याद्दानादिकं बुधः ॥ १९९
दानं प्रधानं शूद्रस्य प्राहेति भगवान्प्रभुः । दानेन सर्वकामाप्तिस्तस्य संजायते यतः ॥ २००

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे सर्वसाधारणाभ्युदयश्राद्धकीर्तनं नाम नवमोऽध्यायः ॥ ९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२०७७६

---

## अथ दशमोऽध्यायः

---

पुलस्त्य उवाच—

एकोद्दिष्टं ततो वक्ष्ये यदुक्तं ब्रह्मणा पुरा । मृते पुत्रैर्यथा कार्यमाशौचं च पितुर्यदि ॥ १
दशाहं शावमाशौचं ब्राह्मणेषु विधीयते । क्षत्रियेषु दश द्वे च पक्षो वैश्येषु चैव हि ॥ २
शूद्रेषु मासमाशौचं सपिण्डेषु विधीयते । नैशं राजकमाशौचं त्रिरात्रपरतः स्मृतम् ॥ ३
जनेनेऽप्येवमेवं तु सर्ववर्णेषु सर्वदा । अस्थिसंचयनादूर्ध्वं यदा स्पर्शो विधीयते ॥ ४
प्रेताय पिण्डदानं तद्द्वादशाहं समाचरेत् । पाथेयं तस्य तत्प्रोक्तं यतः प्रीतिकरं महत् ॥ ५
यस्मात्प्रेतपुरं प्रेतो द्वादशाहेन नीयते । गृहे पुत्रकलत्रं च द्वादशाहं प्रपश्यति ॥ ६
तस्मान्निधेयमाकाशे दशरात्रं पयस्तदा । सर्वदाहोपशान्त्यर्थमध्वश्रमविनाशनम् ॥ ७
ततस्त्वेकादशाहे तु विप्रानेकादशैव तु । गोत्राणि सूतकान्ते तु भोजयेन्मनुजो द्विजान् ॥ ८
द्वितीयेऽह्नि पुनस्तद्वदेकोद्दिष्टं समाचरेत् । आवाहनाग्नौकरणं देवहीनं विधानतः ॥ ९
एकं पवित्रमेकोऽर्घ एकपिण्डो विधीयते । उपतिष्ठतामिति वदेद्देयं पश्चात्तिलोदकम् ॥ १०
स्वकं विप्रकरे भूयाद्विसर्गे चाभिरम्यताम् । शेषं पूर्ववदत्रापि कार्यं वेदविदो विदुः ॥ ११
अनेन विधिना सर्वमनुमासं समाचरेत् । सूतकान्ते द्वितीयेऽह्नि शय्यां दद्याद्विधानतः ॥ १२
काञ्चनं पुरुषं तद्वत्फलवस्त्रसमन्वितम् । संपूज्य द्विजदांपत्यं नानाभरणभूषितम् ॥ १३
उपवेश्य तु शय्यायां मधुपर्कं ततो ददेत् । अर्घ्यं दत्त्वा तु पात्रेण दधिदुग्धसमन्वितम् ॥ १४
अस्थि ललाटजं गृह्य सूक्ष्मं कृत्वा विमिश्रयेत् । पाययेद्द्विजदांपत्यं पितृभक्त्या समन्वितः ॥ १५
एष एव विधिर्दृष्टः पार्वतीयैर्द्विजोत्तमैः । तेन दुष्टा तु सा शय्या न ग्राह्या द्विजसत्तमैः ॥ १६

---

१ क. ख. ग. घ. ङ. च. ज. °न्दसंस्कारे । २ क. ख. घ. ज. अगन्या । च. अगून्या । ३ झ. नैशिकं वा कृतं शौचं त्रिरात्रं प° । ४ क. ख. ङ. च. °नन्याश्चैवमेव स्यात्सर्वे° । ५ क. ख. ग. घ. ङ. च. ज. प्रायेण । ६ ञ. गोत्रादि । ७ ञ. °येदयुजो । ८ ञ. °म् । स्वास्तिकं च वि° । ९ ग. स्वदितं विप्रकरणे विस° । १० ञ. °सर्गे चा° । ११ क. ख. ग. घ. ङ. च. °द्विलक्षणाम् । का° । १२ क. ख. ग. घ. च. ज. °त् । रजतस्य तु ।

ग्रहीतायां तु शय्यायां पुनः संस्कारमर्हति । वेदे चैव पुराणे च शय्या सर्वत्र गर्हिता ॥ १७
ग्रहीतारस्तु जायन्ते सर्वे नरकगामिनः । ग्रथितां वस्त्रजालेन शय्यां दांपत्यसेविताम् ॥ १८
ये स्पृशन्ति न जानन्तः सर्वे नरकगामिनः । नवश्राद्धे न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥
पितृभक्त्या सुपुत्रेण कार्यमेवं सदा भवेत् । वृषोत्सर्गे च कुर्वीत देया च कपिला शुभा ॥ २०
उदकुम्भश्च दातव्यो भक्ष्यभोज्यैसमन्वितः । यावदब्दं नरश्रेष्ठ सतिलोदकपूर्वकम् ॥ २१
ततः संवत्सरे पूर्णे सपिण्डीकरणं भवेत् । सपिण्डीकरणादूर्ध्वं प्रेतः पार्वणभाग्यतः ॥ २२
वृद्धिपूर्वेषु कार्येषु गृहस्थस्य भवेत्ततः । सपिण्डीकरणश्राद्धं देवपूर्वं नियोजयेत् ॥ २३
पितृनावाहयेत्तत्र पृथक्प्रेतं विनिर्दिशेत् । गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ॥ २४
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् । तद्वत्संकल्प्य चतुरः पिण्डान्पिण्डप्रदस्तथा ॥ २५
ये समाना इति द्वाभ्यामन्नं तु विभजेत्रिधा । अनेन विधिना चार्घ्यं पूर्वमेव प्रदापयेत् ॥ २६
ततः पितृत्वमापन्ने स चतुर्थस्तथा त्वनु । अग्निष्वात्तादिमध्ये तु प्राप्नोत्यमृतमुत्तमम् ॥ २७
सपिण्डीकरणादूर्ध्वं तस्मै तस्मान्न दीयते । पितृष्वेव च दातव्यं तत्पिण्डेष्वेव संस्थितः ॥ २८
ततःप्रभृति संक्रान्तावुपरागादिपर्वसु । त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृतेऽहनि ॥ २९
एकोद्दिष्टं परित्यज्य मृताहे यः समाचरेत् । सदैवं पितृहा स स्यात्तथा भ्रातृविनाशकः ॥ ३०
मृताहे पार्वणं कुर्वन्नधो याति स मानवः । संपृक्ते स्वर्गतीभावे प्रेतमोक्षो यतो भवेत् ॥ ३१
आमश्राद्धं तदा कुर्याद्विधिना श्राद्धदस्ततः । तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत् ॥ ३२
त्रिभिः सपिण्डीकरणं मासैकत्रितयं तथा । यदा प्राप्स्यति कालेन तदा मुच्येत बन्धनात् ॥ ३३
मुक्तोऽपि लेपभागित्वं प्राप्नोति कुशमार्जनात् । लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ॥
पिण्डदः सप्तमस्तेषां सपिण्डाः सप्त पूरुषाः ॥ ३४

भीष्म उवाच—

कथं कव्यानि देयानि हव्यानि च जनैः कथम् । गृह्णन्ति पितृलोके वा प्रायः कैर्निगद्यते ॥
यदि मर्त्ये द्विजो भुङ्क्ते हूयते यदि वाऽनले । शुभाशुभात्मकाः प्रेतास्तदन्नं भुञ्जते कथम् ॥ ३६

पुलस्त्य उवाच—

वसुस्वरूपाः पितरो रुद्राश्चैव पितामहाः । प्रपितामहास्तथाऽऽदित्या इत्येषा वैदिकी श्रुतिः॥३७
नामगोत्रे पितृणां तु प्रापके हव्यकव्ययोः । श्राद्धस्य मन्त्रतस्तत्त्वमुपलभ्येत भक्तितः ॥ ३८
अग्निष्वात्तादयस्तेषामाधिपत्ये व्यवस्थिताः । नामगोत्रास्तथा देशा भवन्त्युद्भवतामपि ॥ ३९
प्राणिनः प्रीणयत्येतदर्हणं समुपागतम् । दिव्यो यदि पिता माता शुभकर्मानुयोगतः ॥ ४०
तस्मात्तममृतं भूत्वा दिव्यत्वेऽप्यनुगच्छति । दैत्यत्वे भोगरूपेण पशुत्वे च तृणं भवेत् ॥ ४१
श्राद्धान्नं वायुरूपेण ना त्वेनोपतिष्ठति । पानं भवति यक्षत्वे राक्षसत्वे तथाऽऽमिषम् ॥ ४२
दानवत्वे तथा पानं प्रेतत्वे रुधिरोदकम् । मनुष्यत्वेऽन्नपानादि नाना भोगवतां भवेत् ॥ ४३
रतिशक्तिः स्त्रियः कान्ता भोज्यं भोजनशक्तिता । दानशक्तिः सविभवा रूपमारोग्यमेव च ॥

---

१ च. न च श्राद्धे तु भों° । २ घ. ज. °क्ष्यतोयफलान्वि° । ३ ग. °ज्यफलान्वि° । ४ क. ख. ग. ङ. च. ज. °न्पितृपरस्त° । ५ झ. स्यात्स मातृपितृना° । ६ क. ख. ङ. च. °र्थाद्यास्त्रयः स्युः पिण्ड° । ७ क. ख. ग. घ. ङ. च. ज. जनैरिह । गृ° । ८ क. ख. ग. घ. ङ. च. ज. °योः । एतद्वयं यत° । ९ झ. °न्त्युत्तरता° । १० क. ख. ग. घ. च. ज. °ता गुरुक° ।

श्राद्धं पुष्पमिदं प्रोक्तं फलं ब्रह्मसमागमः। आयुः पुत्रान्धनं विद्यां स्वर्गं मोक्षं सुखानि च ॥
प्रयच्छन्ति तथा राज्यं प्रीताः पितृगणा नृप। श्रूयते च पुरा मोक्षं प्राप्ताः कौशिकसूनवः ॥४६
पञ्चभिर्जन्मसंबन्धैः प्राप्ता ब्रह्म परं पदम् ॥ ४७

भीष्म उवाच—

कथं कौशिकदायादाः प्राप्ता योगमनुत्तमम्। पञ्चभिर्जन्मसंबन्धैः कथं कर्मक्षयोऽभवत् ॥ ४८

पुलस्त्य उवाच—

कौशिको नाम धर्मात्मा कुरुक्षेत्रे महानृषिः। नामतः कर्मतस्तस्य सुतानां तन्निबोधत ॥ ४९
स्वसृपः क्रोधनो हिंस्रः पिशुनः कविरेव च। वाग्दुष्टः पितृवर्ती च गर्गशिष्यास्तदाऽभवन् ॥५०
पितर्युपरते तेषामभूद्दुर्भिक्षमुल्बणम्। अनावृष्टिः सुमहती सर्वलोकभयंकरी ॥ ५१
गर्गादेशाद्वने दोग्ध्रीं रक्षन्ति च तपोधनाः। खादामः कपिलामेतां वयं क्षुत्पीडिता भृशम् ॥५२
इति चिन्तयतां पापं लघुः प्राह तदाऽनुजः। यद्यवश्यमियं वध्या श्राद्धरूपेण योज्यताम् ॥ ५३
श्राद्धे नियोज्यमानेयं पापान्नास्यति नो ध्रुवम्। एवं कुर्वित्यनुज्ञातः पितृवर्ती तदाऽनुजैः ॥ ५४
चक्रे समाहितः श्राद्धमुपयुज्याथ तां पुनः। द्वौ दैवे भ्रातरौ कृत्वा पित्र्ये त्रीन्भ्रातरः क्रमात् ॥
तथैकमतिथिं कृत्वा श्राद्धदः स्वयमेव तु। चकार मन्त्रवच्छ्राद्धं स्मरन्पितृपरायणः ॥ ५६
तदा गत्वा विशङ्कास्ते गुरवे च न्यवेदयन्। व्याघ्रेण निहता धेनुर्वत्सोऽयं प्रतिगृह्यताम् ॥ ५७
एवं सा भक्षिता धेनुः सप्तभिस्तैस्तपोधनैः। वैदिकं बलमाश्रित्य क्रूरे कर्मणि निर्भयाः ॥ ५८
ततः कालापकृष्टास्ते व्याधा दशपुरेऽभवन्। जातिस्मरत्वं प्राप्तास्ते पितृभावेन भाविताः ॥ ५९
तत्र वै ज्ञानवैराग्यात्प्राणानुत्सृज्य धर्मतः। लोकैरवेक्ष्यमाणास्ते तीर्थान्तेऽनशनेन तु ॥ ६०
संजाता मृगरूपास्ते सप्त कालंजरे गिरौ। प्राप्तविज्ञानयोगास्ते तत्यजुस्तां निजां तनुम् ॥ ६१
ततः प्रपतनेनाथ जाता वैराग्यमानसाः। मानसे चक्रवाकास्ते संजाताः सप्त योगिनः ॥ ६२
नामतः कर्मतः सर्वे सुमनाः कुसुमो वसुः। छिद्रदर्शी सुदर्शी च ज्ञाता ज्ञानस्य पारगः ॥ ६३
ज्येष्ठानुरक्ताः श्रेष्ठास्ते सप्तैते योगपावनाः। योगभ्रष्टास्त्रयस्तेषां बभूवुश्चलचेतसः ॥ ६४
दृष्ट्वा विभ्राजमानं तं प्रमुहं स्त्रीभिरावृतम्। क्रीडन्तं विविधैर्भोगैर्महाबलपराक्रमम् ॥ ६५
पञ्चालान्वयसंभूतं प्रभूतधनवाहनम्। राज्यकामोऽभवत्त्वेकस्तेषां मध्ये जलौकसाम् ॥ ६६
पितृवर्ती तु यो विप्रः श्राद्धकृत्पितृवत्सलः। अपरौ मन्त्रिणौ दृष्ट्वा प्रभूतधनवाहनौ ॥ ६७
मन्त्रित्वे चक्रतुश्चेच्छामस्मिन्मर्त्ये द्विजोत्तमौ। वि(वै)भ्राजपुत्रस्त्वेकोऽभूद्ब्रह्मदत्त इति स्मृतः ॥६८
मन्त्रिपुत्रौ तथा चैव पुण्डरीकसुबालकौ। ब्रह्मदत्तोऽभिषिक्तस्तु काम्पिल्ये नगरोत्तमे ॥ ६९
पञ्चालराजो विक्रान्तः श्राद्धकृत्पितृवत्सलः। योगवित्सर्वजन्तूनां चित्तवेत्ताऽभवंत्सदा ॥ ७०
तस्य राज्ञोऽभवद्भार्या सुदेवस्याऽऽत्मजा तदा। संनतिर्नाम विख्याता कपिला याऽभवत्पुरा ७१
पितृकार्ये नियुक्तत्वादभवद्ब्रह्मवादिनी। तया चकार सहितः स राज्यं राजनन्दनः ॥ ७२
कदाचिद्गत उद्याने तया सह स पार्थिवः। ददर्श कीटमिथुनमनङ्गकलहान्वितम् ॥ ७३

---

१ ग. ङ. ज. क्षयान्ते। २ क. ग. घ. ङ. च. ज. °मानायां पापं नश्यति। ३ ग. घ. हिंसकास्ते। ४ क. ख. ग. घ. ङ. च. ज. °त्र विज्ञाय वैराग्यं प्राणा°। ५ ज. °मु। ममरुः प°। ६ क. ख. ङ. च. च्चित्तदर्शी। ग. घ. ज. चित्रदर्शी। ७ ग. झ. °तमुद्याने स्त्री°। ८ °मन्वहं स्त्री°। ९ क. ख. ग. घ. ङ. च. °तवलवा°। १० क. ख. ग. घ. ङ. च. ज. °वत्तदा। ११ क. ख. ग. घ. ङ. च. ज. °र्यां देवलस्या°। १२ घ. संतति°।

पिपीलिकामुपासन्तं पुरतः कीटकामुकः । पञ्चबाणाभितप्ताङ्गः सगद्गदमुवाच ह ॥ ७४

पिपीलक उवाच—

न त्वया सदृशी लोके कामिनी विद्यते क्वचित् । मध्ये क्षामाऽतिजघना बृहद्वक्त्राऽतिगामिनी ७५
सुवर्णवर्णसदृशी सद्वक्त्रा चारुहासिनी । आलक्ष्यते च वदनं गुडशर्करवत्सलम् ॥ ७६
भोक्ष्यसे मयि भुक्ते त्वं स्नासि स्नाते सदा मयि । प्रोषिते मयि दीना त्वं क्रुद्धे च भयचञ्चला ७७
किमर्थं वद कल्याणि सदाऽधोवदना स्थिता । सा तमाह तदा कोपात्किमालपसि वेगवान् ॥ ७८
त्वया मोदकचूर्णं तु मां विहायाभिभक्षितम् । प्रदत्तं चाप्यतिक्रम्य मामन्यस्यास्त्वयाऽधम ॥ ७९

पिपीलक उवाच—

त्वत्सादृश्यान्मया दत्तमन्यस्या वरवर्णिनि । तदेकमपराधं मे क्षन्तुमर्हसि शोभने ॥ ८०
नैवं पुनः करिष्यामि त्यज कोपं च सुस्तनि । स्पृशामि पादौ सत्येन प्रसीद प्रणतस्य मे ॥ ८१
रुष्टायां त्वयि सुश्रोणि मृत्युर्मे पुरतो भवेत् । तुष्टायां त्वयि वामोरु पूर्णाः सर्वमनोरथाः ॥ ८२
पूर्णचन्द्रोपमं वक्त्रं स्वादेऽमृतरसोपमम् । निर्भरं पिब सुश्रोणि कामासक्तस्य मे सदा ॥ ८३
एतन्मत्वा शुभे कार्या सर्वदा तु कृपा मयि । इति सा वचनं श्रुत्वा प्रसन्ना चाभवत्ततः ॥ ८४
आत्मानमर्पयामास मोहनाय पिपीलिका । ब्रह्मदत्तोऽपि तत्सर्वं ज्ञात्वा सस्मयमाहसत् ॥ ८५
सर्वसत्त्वरुतज्ञानात्प्रभावात्पूर्वकर्मणः ॥ ८६

भीष्म उवाच—

कथं सर्वरुतज्ञोऽभूद्ब्रह्मदत्तो नराधिपः । तच्चाभवत्कस्य कुले चक्रवाकचतुष्टयम् ॥ ८७
तन्मे कथय धर्मज्ञ कुले कस्य च जज्ञिवान् ॥ ८८

पुलस्त्य उवाच—

तस्मिन्नेव पुरे जाताश्चक्रवाका अथो नृप । वृद्धद्विजस्य दायादा विप्रा जातिस्मरा बुधाः ॥ ८९
धृतिमान्सर्वदर्शी च विद्याचन्द्रस्तपोधिकः । नामतः कर्मतश्चैव सुदरिद्रस्य ते सुताः ॥ ९०
तपसे बुद्धिरभवत्ततस्तेषां द्विजन्मनाम् । यास्यामः परमां सिद्धिमूचुस्ते द्विजसत्तमाः ॥ ९१
ततस्तद्वचनं श्रुत्वा स दरिद्रो महातपाः । उवाच दीनया वाचा किमेतदिति पुत्रकाः ॥ ९२
अधर्म एष वः पुत्राः पिता तानित्युवाच ह । वृद्धं पितरमुत्सृज्य दरिद्रं वनवासिनम् ॥ ९३
को नु धर्मोऽत्र भवतां मां त्यक्त्वाऽगतिमेव च । ऊचुस्ते कल्पिता वृत्तिस्तव तात बत शृणु ९४
वित्तमेतत्पुरा राज्ञा स ते दास्यति पुष्कलम् । धनं ग्रामसहस्राणि प्रभाते पठतस्तव ॥ ९५
कुरुक्षेत्रे तु ये विप्रा व्याधा दशपुरे तु ये । कालंजरे मृगीभूताश्चक्रवाकास्तु मानसे ॥ ९६
इत्युक्त्वा पितरं जग्मुस्ते वनं तपसे पुनः । वृद्धोऽपि स द्विजो राजञ्जगामाथार्थसिद्धये ॥ ९७
अणुहो नाम वैभ्राजः पञ्चालाधिपतिः पुरा । पुत्रार्थी देवदेवेशं पद्मयोनिं पितामहम् ॥ ९८
आराधयामास विभुं तीव्रव्रतपरायणः । ततः कालेन महता तुष्टस्तस्य पितामहः ॥

ब्रह्मोवाच—

वरं वृणीष्व भद्रं ते हृदये तेऽस्ति यन्नृप ॥ ९९

---

१ ग. नैव ते प्रकरिष्यामि त्यज कोपं च सुन्दरि । स्पृ°। झ. नैव तं प्रकरिष्यामि पुनः क्वापीह सु°। २ झ. चारुवक्त्रतः ३ झ. कुले । ४ झ. °पोत्सुकः । ५ झ. कलिंजरे ।

राजोवाच—

पुत्रं मां देहि देवेश महाबलपराक्रमम् । पारगं सर्वविद्यानां धार्मिकं योगिनां वरम् ॥ १००
सर्वसत्त्वरुतज्ञं मे देहि योगिनमात्मजम् । एवमस्त्विति विश्वात्मा तमाह परमेश्वरः ॥ १०१
पश्यतां सर्वभूतानां तत्रैवान्तरधीयत । ततः स तस्य पुत्रोऽभूद्ब्रह्मदत्तः प्रतापवान् ॥ १०२
सर्वसत्त्वानुकम्पी च सर्वसत्त्वबलाधिकः । सर्वसत्त्वरुतज्ञश्च सर्वसत्त्वेश्वरेश्वरः ॥ १०३
अथ सत्त्वेन योगात्मा स पिपीलकमागतः । यत्र तत्कीटमिथुनं रममाणमवस्थितम् ॥ १०४
ततः सा संनतिर्दृष्ट्वा तं हसन्तं सुविस्मितम् । किमप्याशङ्कमाना सा तमपृच्छन्नराधिपम् ॥ १०५

संनतिरुवाच—

अकस्मादेव हासोऽयं किमर्थमभवन्नृप । हास्यहेतुं न जानामि यदकाले कृतं त्वया ॥ १०६
अवदद्राजपुत्रोऽसौ तां पिपीलकभाषितम् । रागवद्विवशोत्पन्नमेतद्धास्यं वरानने ॥ १०७
न चान्यत्कारणं किंचिद्धास्यहेतुः(?) शुचिस्मिते । न साऽमन्यत तं देवी प्राहालीकमिदं तव ॥
अहमेवाद्य हसिता न जीविष्ये त्वयाऽधुना । कथं पिपीलिकालापमन्यो वेत्ति सुरादृते ॥ १०९
तस्मात्त्वयाऽहमेवाद्य हसिता किमतः परम् । ततो निरुत्तरो राजा जिज्ञासुस्तद्वचो हरेः ॥ ११०
आस्थाय नियमं तस्थौ सप्तरात्रमकल्मषः । स्वप्नान्ते प्राह तं ब्रह्मा प्रभाते पर्यटन्पुरम् ॥ १११
वृद्धद्विजोत्तमाद्वाक्यं सर्वं ज्ञास्यति ते प्रिया । इत्युक्त्वाऽन्तर्दधे ब्रह्मा प्रभाते च नृपः पुरात् ॥
निर्गच्छन्मन्त्रिसहितः सभार्यो वृद्धमग्रतः । गदन्तं विप्रमायान्तं तं वृद्धं स ददर्श ह ॥ ११३

ब्राह्मण उवाच—

ये विप्रमुख्याः कुरुजाङ्गलेषु दासास्तथा दासपुरे मृगाश्च ।
कालंजरे सप्त च चक्रवाका ये मानसे ते वयमत्र सिद्धाः ॥ ११४

इत्याकर्ण्य वचस्तस्य स पपात त्वरान्वितः । जातिस्मरत्वमगमत्तौ च मन्त्रिवरात्मजौ ॥ ११५
कामशास्त्रप्रणेता तु बाभ्रव्यस्त्वं तु पालकः । पाञ्चाल इति लोकेषु विश्रुतः सर्वशास्त्रवित् ॥ ११६
पुण्डरीकोऽपि धर्मात्मा वैद्यशास्त्रप्रवर्तकः । भूत्वा जातिस्मरौ शोकात्पतितावग्रतस्तथा ॥ ११७
हा वयं योगविभ्रष्टाः कामतः कर्मबन्धनात् । एवं विलप्य बहुधा त्रयस्ते योगपारगाः ॥ ११८
विस्मयाच्छ्राद्धमाहात्म्यमभिनन्द्य पुनः पुनः । स तु तस्मै धनं दत्त्वा प्रभूतग्रामसंयुतम् ॥ ११९
विसृज्य ब्राह्मणं तं च वृद्धं धनमदान्वितम् । आत्मीयं नृपतिः पुत्रं नृपलक्षणलक्षितम् ॥ १२०
विष्वक्सेनाभिधानं तु राजा राज्येऽभ्यषेचयत् । मानसे सलिले सर्वे ततस्ते योगिनां वराः ॥
ब्रह्मदत्तादयस्तस्मिन्पितृभक्ता विमत्सराः । संनतिश्चाभवद्दृष्टा मयैव तव दर्शितम् ॥ १२२
राजन्योगफलं सर्वं यदेतदभिलक्ष्यते । तथेति प्राह राजाऽपि पुरस्तादभिनन्दयन् ॥ १२३
त्वत्प्रसादादिदं सर्वं मयैव प्राप्यते फलम् । ततस्ते योगमास्थाय सर्व एव वनौकसः ॥ १२४
ब्रह्मरन्ध्रेण परमं पदमापुस्तपोबलात् । एवमायुर्धनं विद्यां स्वर्गं मोक्षं धनानि च ॥ १२५
प्रयच्छन्ति सुताद्राज्यं नृणां तुष्टाः पितामहाः । इदं यः पितृमाहात्म्यं ब्रह्मदत्तस्य भो नृप ॥ १२६

१ क. ख. ग. घ. ङ. च. ज. °द्विरसोत्प° । २ ख. ग. ङ. च. ज. °लापं मर्त्यो वे° । ३ अ. तेऽत्र वसन्ति सि° । ४ अ. °स्य सुबाल° । ५ ग. °त् । मन्त्रिणौ धर्मनिरतौ वेदशास्त्रप्रवर्तकौ । भू° । ६ क. ख. घ. ङ. च. ज. °त्मा ददृशा° । ७ क. ख. ङ. च. अ. °यं कर्मवि° । ८ ग. घ. च. °भिनेष्यते ।

द्विजेभ्यः श्रावयेद्विद्वाञ्शृणोति पठतेऽपि च । कल्पकोटिशतं साग्रं ब्रह्मलोके महीयते ॥ १२८

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पितृमाहात्म्यकथनं नाम दशमोऽध्यायः ॥ १० ॥

आदितः श्लोकानां समष्ट्यङ्काः—२०९०३

---

अथैकादशोऽध्यायः ।

---

भीष्म उवाच—

कस्मिन्वासरभागे तु श्राद्धं श्राद्धी समारभेत् । तीर्थेषु केषु वै श्राद्धं कृतं बहुफलं द्विज ॥ १

पुलस्त्य उवाच—

तीर्थं पुष्करकं नाम यत्तु श्रेष्ठतमं मतम्[१] । सर्वेषां द्विजमुख्यानां[२] मनोरथमिव स्थितम् ॥ २

तत्र दत्तं हुतं जप्तमानन्त्यं भवति ध्रुवम् । पितॄणां वल्लभं नित्यमृषीणां परमं प्रियम् ॥ ३

नन्दाऽथ ललिता तद्वत्तीर्थं[३] मायापुरी शुभा । तथा मित्रपदं राजंस्तथा केदारमुत्तमम् ॥ ४

गङ्गासागरमित्याहुः[४] सर्वतीर्थमयं शुभम् । तीर्थं ब्रह्मसरस्तद्वच्छतद्रुसलिलं शुभम् ॥ ५

तीर्थं तु नैमिषं नाम सर्वतीर्थफलप्रदम् । गङ्गोद्भेदस्तु गोमत्यां यत्रोद्भूतः सनातनः[५] ॥ ६

तथा यज्ञवराहस्तु देवदेवस्तु शूलधृक् । यत्र तत्काञ्चनं दानमष्टादशभुजो[६] हरः ॥ ७

नेमिस्तु धर्मचक्रस्य शीर्णो[७] यत्राभवत्पुरा । तदेतन्नैमिषारण्यं सर्वतीर्थनिषेवितम् ॥ ८

देवदेवस्य तत्रापि वराहस्य च दर्शनम् । यः प्रयाति स धर्मात्मा नारायणपुरं व्रजेत् ॥ ९

कोकामुखं परं तीर्थमिन्द्रमार्गोऽपि लक्ष्यते । अथापि पितृतीर्थं तु ब्रह्मणोऽव्यक्तजन्मनः+ ॥ १०

पुष्करारण्यसंस्थोऽसौ यत्र देवः पितामहः । विरिञ्चिदर्शनं श्रेष्ठमपवर्गफलप्रदम् ॥ ११

कृतं नाम महापुण्यं सर्वपापनिषूदनम् । यत्राऽऽद्यो नारसिंहस्तु स्वयमेव जनार्दनः ॥ १२

तीर्थमिक्षुमती नाम पितॄणां वल्लभं सदा । तुष्यन्ति पितरो नित्यं गङ्गायमुनसंगमे ॥ १३

कुरुक्षेत्रं महापुण्यं यत्र मार्गोऽपि लक्ष्यते । अद्यापि पितृतीर्थं[८] तत्सर्वकामफलप्रदम् ॥ १४

नीलकण्ठमिति ख्यातं पितृतीर्थं नराधिप । तथा भद्रसरः पुण्यं सरो मानसमेव च ॥ १५

मन्दाकिनी विपाशा च तथा पुण्या सरस्वती । सर्वमित्रपदं तद्वद्वैद्यनाथं[९] महाबलम् ॥ १६

क्षिप्रा[१०] नदी महापुण्या तथा कालंजरं शुभम् । वंशोद्भेदं हरोद्भेदं गर्भभेदं महालयम् ॥ १७

भद्रेश्वरं विष्णुपदं नर्मदाद्वारमेव च । गया पिण्डप्रदानेन समान्याहुर्महर्षयः ॥ १८

एतानि पितृतीर्थानि सर्वपापहराणि च । स्मरणादपि लोकानां किमु श्राद्धप्रदायिनाम् ॥ १९

ओंकारं पितृतीर्थं तु कावेरी कपिलोदकम् । संभेदश्चण्डवेगायां तथैवामरकण्टकम् ॥ २०

कुरुक्षेत्राद्दशगुणं[११] तस्मिन्स्नानादिकं भवेत् । शुक्लतीर्थं तु विख्यातं तीर्थं सोमेश्वरं परम्[१२] ॥ २१

---

+ एतदग्रे झ. पुस्तके 'तत्राऽऽदिवराहो राजन्देवदेवो जनार्दनः' इत्यर्धमधिकम् ।

---

१ क. ख. घ. ङ. च. स्मृतम् । २ क. ख. ग. घ. ङ. च. ज. °जपुण्यानां । ३ क. ख. ङ. च. ज. °तं सर्वमा° । ४ झ. °मायुःपु° । ५ क. ख. घ. ङ. च. ज. पूतात्मा । ६ क. ख. ङ. च. °कर्णमि° । ७ क. ग. घ. ङ. च. ज. °नी तथाऽच्छोदा विपाशा च स° । ८ क. ख. ग. घ. ङ. च. ज. °र्तीं । पूर्वं° । ९ ज. °द्वैजना° । १० ञ. शिप्रा । ११ क. ख. ग. घ. ङ. च. ज. गङ्गापि° । १२ क. ख. ग. घ. ङ. च. ज. °त्राच्च द्विग° ।

सर्वव्याधिहरं पुण्यं फलकोटिशताधिकम्[१]। श्राद्धदाने तथा होमे स्वाध्याये जपसंनिधौ ॥ २२
कायावरोहणं नाम देवदेवस्य शूलिनः। अवतारं रोचमानं ब्राह्मणावसथे शुभे ॥ २३
जातं तत्सुमहापुण्यं तथा चर्मण्वती नदी। गौतमी वरुणा तद्वत्तीर्थं हौताशनं परम् ॥ २४
भैरवं भृगुतीर्थं च गौरीतीर्थमनुत्तमम्। तीर्थं वैनायकं नाम वस्त्रेश्वरमतः परम् ॥ २५
तथा पापहरं नाम पुण्या वेत्रवती नदी। शूलतापी पयोष्णी च पयोष्णीसंगमस्तथा ॥ २६
महाबोधा पारणा च नागतीर्थप्रवर्तिनी। महावेणानदी पुण्या महाशालस्तथैव च ॥ २७
महारुद्रं नाम लिङ्गं दशार्णा च महानदी। शतरुद्रा शताह्वा च तथा पितृपदं परम् ॥ २८
अङ्गारवाहिका तद्वन्नदौ द्वौ शोणघर्घरौ। कालिका च नदी पुण्या पितरा च नदी शुभा ॥ २९
एतानि पितृतीर्थानि शस्यन्ते स्नानदानयोः। श्राद्धमेतेषु यद्दत्तं तदनन्तफलं स्मृतम् ॥ ३०
शिनीवाटनदी धारा शरद्वी च नदी तथा। द्वारका कृष्णतीर्थं च तथाऽर्बुदसरस्वती ॥ ३१
नदी [११]मणिमती नाम तथा च [१२]गिरिकर्णिका। धूतपापं तथा तीर्थं समुद्रे दक्षिणे तथा ॥ ३२
गोकर्णो गजकर्णश्च तथा च [१३]पुरुषोत्तमः। [*एतानि पितृतीर्थानि श्राद्धमानन्त्यमश्नुते ॥ ३३
तीर्थं मेघकरं नाम स्वयमेव जनार्दनः। यत्र शार्ङ्गधरो विष्णुर्मेकलायां व्यवस्थितः ॥ ३४
तथा मन्दोदरीतीर्थं तथा चम्पानदी तथा। तथा शामलनाथं च महाशालोदरी तथा ॥ ३५
चित्रकोटं महापुण्यं तथा जल्पेश्वरं महत्]। अर्जुनं च त्रिपुरुषं सिद्धेश्वरमतः[१५] परम्[१६] ॥ ३६
महेन्द्रं च महापुण्यं तथा पुण्या महानदी। एतेष्वपि सदा श्राद्धमनन्तफलदं भवेत् ॥ ३७
दर्शनादपि पुण्यानि सद्यःपापहराणि वै। तुङ्गभद्रा नदी पुण्या तथा चक्ररथा सरित् ॥ ३८
[१७]भीमेश्वरं कृष्णवर्णा कावेरी चाञ्जना नदी। नदी गोदावरी पुण्या त्रिसंध्यातीर्थमुत्तमम् ॥ ३९
तीर्थं त्रैयम्बकं नाम सर्वतीर्थनमस्कृतम्। यत्राऽऽस्ते भगवान्भीमः स्वयमेव त्रिलोचनः ॥ ४०
श्राद्धमेतेषु सर्वेषु दत्तं कोटिगुणं भवेत्। स्मरणादपि पापानि व्रजन्ति शतधा नृप ॥ ४१
श्रीपर्णा च नदी पुण्या व्यासतीर्थमनुत्तमम्। तथा मत्स्यनदी राका शिवधारा तथैव च ॥ ४२
भवतीर्थं च विख्यातं पुण्यतीर्थं च शाश्वतम्। पुण्यं रामेश्वरं तद्वद्वेवायुरमलं पुरम् ॥ ४३
अङ्गारकं च विख्यातमानन्दकमलं शुभम्। वत्सव्रातेश्वरं तद्वत्तथा मेकामुकं परम् ॥ ४४
गोवर्धनं हरिश्चन्द्रं पुरश्चन्द्रं पृथूदकम्। सहस्राक्षं हिरण्याक्षं तथा च कदलीनदी ॥ ४५
नामधेयानि च तथा तथा सोमसरान्तगा। इन्द्रनीलं महानादं तथा च वृषसेनकम् ॥ ४६

---

* धनुश्चिह्नान्तर्गतः पाठो झ.पुस्तकस्थः।

---

१ क. ख. घ. ङ. च. ज. 'टिशुमाधि°। २ क. ख. ग. घ. ङ. च. ज. जनसं°। ३ क. ङ च. कावेर्या चाकरोन्नाम। घ. ज. कार्यावाचाहरं ना°। ४ क. ख. ग. ङ. च. ज. °मनुत्तमम्। ५ क. ख. ङ. च. °लपाती प°। ६ क. ख. ङ. च. महौषधी। घ. महाबौधी ७ क. ख. ङ. च. ज. चारणा। ८ घ. अद्वार°। ९ क. च महानदी। ए°। १० क. ख. ङ. °म्। शता चटा नदी ज्वाला सरः क्षीरन°। च. °म्। शतानन्दा नदी ज्वाला सरः क्षीरन°। घ. ज. °म्। शता चाटा नदी वाचा सारः क्षीरन°। ११ क. ख. ग. ङ. च. ज. मालवती। १२ क. ख. ग. घ. ङ. च. च. गविकर्णिका। १३ क. ख ङ. च. चक्रनदी शुभा। ए°। १४ क. ग. घ. ङ. च. ज त्। श्रीशैलं शाक्रतीर्थं च नारसिंहम°। १५ झ. °पि महाश्रा°। १६ क. ख. ग. घ. ङ. ज. स्मृतम्। १७ क. च. भौमेश्वरं। १८ क. ग. घ. ङ. च. ज °द्वद्रेणायु°। १९ घ. ज. °रभृय-वि°। २० क. ख. ङ. च. °मात्मदर्शमलम्बुशम्। २१ क. च °म्। तत्संवाते°। २२ क. ख. ङ. च गोकामुखं। ज गोकामखं। २३ क. ख. घ. च. ज °था सौमित्रसंगतम्। इ°। ग. °था सौमित्रिसंगमः। इ°। २४ क. ख. ग. घ. ङ. च. ज. प्रियमेलकम्।

एतान्यपि सदा श्राद्धे प्रशस्तान्यधिकानि च । एतेषु सर्वदेवानां सांनिध्यं पठ्यते यतः ॥ ४७
दानमेतेषु सर्वेषु भवेत्कोटिगुणाधिकम् । बाहुदा च नदी पुण्या तथा सिन्धुवनं महत् ॥ ४८
तीर्थं पम्पाशुभं नाम नदी पर्यटिका तथा । श्राद्धमेतेषु सर्वेषु भवेत्कोटिगुणाधिकम् ॥ ४९
तथैव पितृतीर्थं तु यत्र गोदावरी नदी । युता लिङ्गसहस्रेण सव्येतरजलावहा ॥ ५०
जामदग्न्यस्य तत्तीर्थं मोदायतनमुत्तमम् । प्रतीकस्य भयात्सिद्धा यत्र गोदावरी नदी ॥ ५१
तीर्थं तद्धव्यकव्यानामप्सरोगणसंयुतम् । श्राद्धाग्निदानकार्यं च तत्र कोटिशताधिकम् ॥ ५२
तथा च साग्रलिङ्गं तु राघवेश्वरमुत्तमम् । सेन्द्रः काला नदी पुण्या यत्र दुःखाद्गतः पुरा ॥ ५३
निहत्य नमुचिं मित्रं तपसा स्वर्गमाप्तवान् । तत्र दत्तं नरैः श्राद्धमनन्तफलदं भवेत् ॥ ५४
पुष्करं नाम वै तीर्थं शालग्रामं तथैव च । शोणपातश्च विख्यातो यत्र वैश्वानरालयः ॥ ५५
तीर्थं सारस्वतं नाम स्वामितीर्थं तथैव च । मलंदरा नदी पुण्या कौशिकी चन्द्रिका तथा ॥ ५६
विदर्भा चाथ वेगा च पयोष्णी प्राङ्मुखा परा । कावेरी चोत्तराका च तथा जालंधरो गिरिः ॥
एतेषु श्राद्धतीर्थेषु श्राद्धमानन्त्यमश्नुते । लोहदण्डं तथा तीर्थं चित्रकूटस्तथैव च ॥ ५८
विन्ध्ययोगस्तु गङ्गायां तथा नन्दीतटं शुभम् । कुब्जाम्रकं तथा तीर्थमुर्वशीपुलिनं तथा ॥ ५९
संसारमोचनं तीर्थं तथैव ऋणमोचनम् । एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते ॥ ६०
अट्टहासं तथा तीर्थं गौतमेश्वरमेव च । तथा वसिष्ठतीर्थं च भारतं च ततः परम् ॥ ६१
ब्रह्मावर्तं कुशावर्तं हंसतीर्थं तथैव च । पिण्डारकं च विख्यातं शङ्खोद्धारं तथैव च ॥ ६२
खण्डेश्वरं बिल्वकं च नीलपर्वत एव च । तथा च बदरीतीर्थं रामतीर्थं तथैव च ॥ ६३
जयन्ती विजयं चैव शुक्रतीर्थं तथैव च । एषु श्राद्धप्रदातारः प्रयान्ति परमं पदम् ॥ ६४
तीर्थं मातृगृहं नाम करवीरपुरं तथा । सप्तगोदावरी नाम सर्वतीर्थेश्वरेश्वरम् ॥ ६५
तत्र श्राद्धं प्रदातव्यमनन्तफलमीप्सुभिः । कीकटेषु गया पुण्या पुण्यं राजगृहं वनम् ॥ ६६
च्यवनस्याऽऽश्रमं पुण्यं नदी पुण्या पुनःपुना* । यत्र गाथा विचरति ब्रह्मणा परिकीर्तिता ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ६८
इयं गाथा विचरति पुण्येष्वायतनेषु च । सर्वे मनुष्या राजेन्द्र कीर्तयन्तः समागताः ॥ ६९
किमस्माकं कुले कश्चिद्गयां यास्यति यः सुतः । प्रीणयिष्यति तान्गत्वा सप्त पूर्वांस्तथा परान् ॥
मातामहानामप्येवं श्रुतिरेषा चिरंतनी । गङ्गायां वाऽस्थिनिचयं गत्वा क्षेप्स्यति यः सुतः ॥ ७१
तिलैः सप्ताष्टभिर्वाऽपि दास्यते च जलाञ्जलिम् । अरण्यत्रितये वाऽपि पिण्डदानं करिष्यति ७२
प्रथमं पुष्करारण्ये नैमिषे तदनन्तरम् । धर्मारण्ये पुनः प्राप्य श्राद्धं भक्त्या प्रदास्यति ॥ ७३
गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा । गयाशीर्षे वटे चैव पितॄणां दत्तमक्षयम् ॥ ७४
व्रजेनायां नरो यस्तु अध्वानं परिसर्पति । नरकस्थान्पितॄंस्तद्वत्स्वर्गं नयति सत्वरः ॥ ७५

* अग्रे लिखितमर्धं क्वचित्पुस्तकेऽधिकम् । 'विषयाराधनं पुण्यं नद्यायास्तु(?)पुनः पुनः (?)' ।

१ क. ख. ग. घ. ङ. च. ज °टिशताधि° । २ क. ख. ग. घ. ङ. च. ज. °र्थे पाशुपतं चैव न° । ३ क. ख. ग. घ. ङ. च. ज पश्चतीर्थे । ४ क. ख. ग. घ. ङ. च. ज °था सहस्रलि° । ५ झ. दुःखं गतं परम् । नि° । ख. ङ. दुःखाद्गतिः पु° । ६ क. ख. ङ. च. °रा । विसृज्य नश्वरं गात्रं । ७ ज. नश्वरं मित्रं । ८ ग. घ आयुतीर्थे । ९ क. ख. ङ. च मनोहरा । घ. ज. मनन्दरा । १० ख. ख. ग. घ. ङ. च. च । दिव्यं सर्वत्र गङ्गायास्तथा° । ११ ञ. नद्यास्तटं । १२ क. ख. ङ. च. ज. °तेष्वपि च तीं° । १३ क. च. ज. भाण्डेश्वरं । १४ ञ. °ञ्जायामस्थि° । १५ ञ. °जन्कुर्यान्नरो ।

कुले तस्य न राजेन्द्र प्रेतो भवति कश्चन । प्रेतत्वमोक्षभावं च पिण्डदानाच्च गच्छति ॥ ७६

एको मुनिस्ताम्रकराग्रहस्तो ह्याम्रेषु मध्ये सलिलं ददाति ।
आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया द्व्यर्थकरी प्रसिद्धा ॥ ७७

गयायां पिण्डदानस्य नान्यद्दानं विशिष्यते । एकेन पिण्डदानेन तृप्तास्ते मोक्षगामिनः ॥ ७८

धान्यप्रदानं प्रवरं वदन्ति वस्त्रप्रदानं च तथा मुनीन्द्राः ।
गयासुतीर्थेषु नरैः प्रदत्तं तद्धर्महेतुः प्रवरं प्रदिष्टम् ॥ ७९

सर्वात्मना सुरुचिना महाचलमहानदी । ये तु पश्यन्ति तां गत्वा मानसे दक्षिणोत्तरे ॥ ८०

प्रणम्य द्विजमुख्येभ्यः प्राप्तं तैर्जन्मनः फलम् । [*यद्यदिच्छति वै मर्त्यस्तत्तदाप्नोत्यसंशयम् ॥

एष तूद्देशतः प्रोक्तस्तीर्थानां संग्रहो मया । वागीशोऽपि न शक्नोति विस्तरात्किमु मानुषः॥ ८२

सत्यं तीर्थं दयातीर्थं तीर्थमिन्द्रियनिग्रहः] । वर्णाश्रमाणां गेहेऽपि तीर्थं शम उदाहृतम् ॥ ८३

एषु तीर्थेषु यच्छ्राद्धं तत्कोटिगुणमिष्यते । गयायां वै तु यच्छ्राद्धं तच्छ्राद्धमपवर्गदम् ॥ ८४

यस्मात्तस्मात्प्रयत्नेन तीर्थे श्राद्धं समाचरेत् । प्रातःकालो मुहूर्तांस्त्रीन्संगवस्तावदेव तु ॥ ८५

मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परम् । सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत् ॥ ८६

राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु । अह्नो मुहूर्ता व्याख्याता दश पञ्च च सर्वदा ॥ ८७

तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः । मध्याह्नात्सर्वदा यस्मान्मन्दीभवति भास्करः॥ ८८

तस्मादनन्तफलदस्तत्राऽऽरम्भो विशिष्यते । खड्गपात्रं च कुतपस्तथा नेपालकम्बलम् ॥ ८९

रूक्मदर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः । पापं कुत्सितमित्याहुस्तस्य संतापकारिणः॥ ९०

अष्टावेते यतस्तस्मात्कुतपा इति कीर्तिताः । ऊर्ध्वं मुहूर्तात्कुतपान्मुहूर्तं तु(र्तानां)चतुष्टयम् ॥ ९१

मुहूर्तपञ्चकं चैव स्वधावाचनमिष्यते । विष्णुदेहसमुद्भूताः कुशाः कृष्णतिलास्तथा ॥ ९२

श्राद्धस्य लक्षणं कालमिति प्राहुर्दिवौकसः । तिलोदकाञ्जलिर्देयो जलान्ते तीर्थवारिभिः ॥ ९३

सदर्भहस्तेनैकेन गृहे श्राद्धं गमिष्यति । पुण्यं पवित्रमायुष्यं सर्वपापविनाशनम् ॥ ९४

ब्रह्मणा चैव कथितं तीर्थश्राद्धानुकीर्तनम् । शृणोति यः पठेद्वाऽपि श्रीमान्संजायते नरः ॥ ९५

श्राद्धकाले च वक्तव्यं तथा तीर्थनिवासिभिः । सर्वपापोपशान्त्यर्थमलक्ष्मीनाशनं यतः ॥ ९६

इदं पवित्रं यशसो निधानमिदं महापातकनाशनं च ।
ब्रह्मार्करुद्रैश्च सुपूजितं च श्राद्धस्य माहात्म्यमुशन्ति तज्ज्ञाः ॥ ९७

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे श्राद्धप्रकरणं नामैकादशोऽध्यायः ॥ ११ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२१०१७

---

अथ द्वादशोऽध्यायः ।

---

भीष्म उवाच—

सोमवंशः कथं जातः सर्वशास्त्रविशारद । तद्वंशे के तु राजानो बभूवुः कीर्तिवर्धनाः ॥ १

---

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. छ. मूले । २ घ. ये तपस्यन्ति । ३ झ. °स्य इत्याप° । ४ झ. [illegible] । ५ झ. जलस्थैस्तीर्थै° ।

पुलस्त्य उवाच—

आदिष्टो ब्रह्मणा पूर्वमत्रिः सर्वविधौ पुरा । अनुत्तरं नाम तपः सृष्ट्यर्थं तप्तवान्विभुः ॥ २
यदानन्दकरं ब्रह्म भगवान्क्लेशनाशनम् । ब्रह्मविष्ण्वर्करुद्राणामभ्यन्तरमतीन्द्रियम् ॥ ३
शान्तिं कृत्वा तु मनसा तदाऽत्रिः संयमे स्थितः । माहात्म्यं तपसो वाऽपि परमानन्दकारकम् ॥ ४
यस्मादुमापतिः सार्धं समये तदधिष्ठितम् । तं दृष्ट्वा चेष्टमानेन तस्मात्सोमोऽभवद्विभुः ॥ ५
अथ सुस्राव नेत्राभ्यां जलं तत्रात्रिसंभवम् । द्योतयद्विश्वमखिलं ज्योत्स्नया सचराचरम् ॥ ६
तद्दिशो जगृहुस्तत्र स्त्रीरूपेण सुतेच्छया । गर्भोऽभूदुदरे तासां स्थितः सोऽप्यत्रिसंभवः ॥ ७
आशाश्च मुमुचुर्गर्भमशक्ता धरणे ततः । समादायाथ तं गर्भमेकीकृत्य चतुर्मुखः ॥ ८
युवानमकरोद्ब्रह्मा सर्वायुधधरं नरम् । स्यन्दनेऽथ सहस्राख्ये देवशक्तिमये प्रभुः ॥ ९
आरोप्य लोकमनयदात्मीयं स पितामहः । ततो ब्रह्मर्षिभिः प्रोक्तमस्मत्स्वामी भवत्वयम् ॥ १०
ऋषिभिर्देवगन्धर्वैरप्सरोभिस्तथैव च । तुष्टुवे सामदैवत्यैर्ब्रह्माद्यैर्वेदसंग्रहैः ॥ ११
स्तूयमानस्य तस्याभूदधिकं महदन्तरम् । तेजोवितानादभवद्भुवि दिव्यौषधीगणः ॥ १२
तद्दीप्तिरधिका तस्माद्रात्रौ भवति सर्वदा । तेनौषधीशः सोमोऽभूद्द्विजेष्वपि हि गद्यते ॥ १३
वेदधामा रसश्चायं यदिदं मण्डलं शुभम् । क्षीयते वर्धते चैव शुक्ले कृष्णे च सर्वदा ॥ १४
ततो विंशास्त(विंशतिं च त)था सप्त दक्षः प्राचेतसो ददौ । रूपलावण्यसंयुक्तास्तस्मै कन्याः सुवर्चसः ॥
ततः पद्मसहस्राणां सहस्राणि दशैव तु । तपश्चचार शीतांशुर्विष्णुध्यानैकतत्परः ॥ १६
ततस्तुष्टः स भगवांस्तस्मै नारायणो हरिः । वरं वृणीष्व चोवाच परमात्मा जनार्दनः ॥ १७
ततो वव्रे वरं सोमः शक्रलोके यजाम्यहम् । प्रत्यक्षमेव भोक्तारो भवन्तु मम मन्दिरे ॥ १८
राजसूये सुरगणा ब्रह्माद्या ये चतुर्विधाः । रक्षपालः सुरोऽस्माकमास्तां शूलधरो हरः ॥ १९
तथेत्युक्तः समाजह्रे राजसूयं तु विष्णुना । होताऽत्रिर्भृगुरध्वर्युरुद्गाता च चतुर्मुखः ॥ २०
ब्रह्मत्वमगमत्तस्य उपद्रष्टा हरिः स्वयम् । सदस्याः सनकाद्यास्तु राजसूयविधिः(धौ) स्मृतः (ताः)
वसवोऽध्वर्यवस्तद्वद्विश्वेदेवास्तथैव च । त्रैलोक्यं दक्षिणा तेन ऋत्विग्भ्यः प्रतिपादिता ॥ २२
ततः समाप्तेऽवभृथे तद्रूपालोकनेच्छया । कामबाणाभितप्ताङ्गा नव देव्यः सिषेविरे ॥ २३
लक्ष्मीर्नारायणं त्यक्त्वा सिनीवाली च कर्दमम् । द्युतिर्विभावसुं त्यक्त्वा पुष्टिर्धातारमव्ययम् ॥
प्रभा प्रभाकरं त्यक्त्वा हविष्मन्तं कुहूः स्वयम् । कीर्तिर्जयन्तं भर्तारमंशुमाली च कश्यपम् ॥ २५
धृतिस्त्यक्त्वा पतिं नन्दं सोममेवाभजंस्तदा । स्वकीया इव सोमोऽपि कामयामास तास्तदा ॥
निर्वर्तयन्नकर्माणं दीक्षितां वेदपारगैः (गाः) । तं वा वारयितुं शक्ता न ते देवैः सवासवैः ॥ २७
भुक्तभोगास्तु मुनयो जटाजिनधरास्तथा । युवतीदर्शने क्षुब्धास्तत्क्षणे च मदं गताः ॥ २८
गम्यागम्याश्च युवतीः कामार्ताः पशवो यथा । न ते धारयितुं शक्ता वर्षासु च यथाऽऽपगाः ॥ २९
एवं कृतापचारास्तास्तासां भर्तृगणास्तथा । न शेकुरपराधं ते शप्तुं शक्ता विभुं(धुं) न च ॥ ३०

१ क. ख. घ. ङ. च. जः °म् । सोऽतिक्रत्वाऽऽत्मम° । २ क. ङ. च. °शस्तपः सार्धं समया त° । ३ घ. ज. °शस्तया सार्धं समया त° । ३ ञ. °ष्ट्वाऽऽचष्ट सोमेन । ४ क. ख. ङ. च. °त्राभिसंस्मृतम् । ज. °त्रात्रिसंभृतम् । झ. °त्रापि सं° । ५ झ. नृपम् । ६ क. ख. ग. घ. ङ. च. ज. °ख्ये वेदश° । ७ क. ख घ. ङ. च. ज. प्रोक्तः शश्वत्स्त्रा° । ग. ८ °भूत्तेजोवृद्धिस्तद° । ९ क. ख. ग. घ. ङ. च. ज. गण्यते । १० ख. ग. ङ. ज. सर्वदेवास्तु । ११ झ. °ता देवताः स्वयम् । रेतोऽन्वाधारितुं । १२ क. ख. ग. ङ. च. ज. °स्तदा । युं । १३ क. ख. ङ. च. क्षुब्धा वीक्ष्यन्ते च तदा द्विजाः । गं । ग. घ. क्षुब्धाः क्षरन्ते च मदं द्विजाः । ग° ।

तथा व्यराजच्च विभु(धु)र्दशधा भावयन्दिशः । सोमः प्राप्याथ दुष्प्राप्यमैश्वर्यं सृष्टिसत्कृतम् ॥ ३१
सप्तलोकेषु नाथत्वं प्राप्तः स तपसा तदा ॥ ३२

कदाचिदुद्यानगतामपश्यदनेकपुष्पाभरणोपशोभिताम् ।
बृहन्नितम्बस्तनभारखेदां पुष्पावभङ्गेऽप्यतिदुर्बलाङ्गीम् ॥ ३३
भार्यां च तां देवगुरोरनङ्गबाणाभिरामायतचारुनेत्राम् ।
तारां स ताराधिपतिः स्मरार्तः केशेषु जग्राह विविक्तभूमौ ॥ ३४
साऽपि स्मरार्ता सह तेन रेमे तद्रूपकान्त्या हृतमानसैव ।
चिरं विहृत्याथ जगाम तारां विधुर्गृहीत्वा स्वगृहं ततोऽपि ॥ ३५
न तृप्तिरासीत्स्वगृहेऽपि तस्य तारानुरक्तस्य सुखागमेषु ।
बृहस्पतिस्तद्विरहाग्निदग्धस्तद्ध्याननिष्ठैकमना बभूव ॥ ३६
शशाक शापं न च दातुमस्मै न मन्त्रशस्त्राग्निविषैरशेषैः ।
तस्यापकर्तुं विविधैरुपायैर्नैवाभिचारैरपि वागधीशः ॥ ३७
स याचयामास ततस्तु देवं सोमं स्वभार्यार्थमनङ्गतप्तः ।
स याच्यमानोऽपि ददौ न भार्यां बृहस्पतेस्तत्सुखपारवद्धः ॥ ३८
महेश्वरेणाथ चतुर्मुखेन साध्यैर्मरुद्भिः सह लोकपालैः ।
ददौ यदा तां न कथंचिदिन्दुस्तदा शिवः क्रोधपरो बभूव ॥ ३९
यो वामदेवः प्रथितः पृथिव्यामनेकरुद्रार्चितपादपद्मः ।
ततः स शिष्यो गिरिशः पिनाकी बृहस्पतेस्तद्वचसाऽपि बद्धः ॥ ४०
धनुर्गृहीत्वाऽजगवं पुरारिर्जगाम भूतेश्वरसिद्धजुष्टः ।
युद्धाय सोमेन विशेषदीप्ततृतीयनेत्रानलभीमवक्त्रः ॥ ४१
सहैव जग्मुश्च गणेश्वराणां विंशाधिका षष्टिरथोग्रमूर्तिः ।
यक्षेश्वराणां स गणैरनेकैर्युतोऽन्वगात्स्यन्दनसंस्थितानाम् ॥ ४२
वेतालयक्षोरगकिंनराणां पद्मेन चैकेन तथाऽर्बुदानाम् ।
लक्षैस्त्रिभिर्द्वादशभी रथानां सोमोऽभ्यगात्तत्र विवृद्धमन्युः ॥ ४३
नक्षत्रदैत्यासुरसैन्ययुक्तः शनैश्चराङ्गारकवृद्धतेजाः ।
जग्मुर्भयं सप्त तथैव लोका धरावनद्वीपसमुद्रगर्भाः ॥ ४४
स सोममेवाभ्यगमत्पिनाकी गृहीतदीप्तास्त्रविशालवह्निः ।
अथाभवद्भीषणभीमसोमसैन्यद्वयस्यास्य महाहवोऽसौ ॥ ४५
अशेषसत्त्वक्षयकृत्प्रवृद्धस्तीक्ष्णायुधास्त्रज्वलनैकरूपैः ।
अस्त्रैरथान्योन्यमशेषसैन्यं द्वयोर्जगाम क्षयमुग्रतीक्ष्णैः ॥ ४६
पतन्ति शस्त्राणि तथोज्ज्वलानि स्वर्भूमिपातालतलं दहन्ति ।
रुद्रः क्रोधाद्ब्रह्मशिरो मुमोच सोमोऽपि सोमास्त्रममोघवीर्यम् ॥ ४७

---

१ झ. °थाऽधिराज्यविभवे दश° । २ झ. °ष्टिसंस्कृत° । ३ ग. घ. °यैर्वैराभि° । ज. °यैर्वीराभि° । ४ क. ख. ग. घ ङ. च. ज. °स्पतेः कामवशेन मोहितः । म° । ५ घ. गाविशः । ६ क. ख. ग. घ. ङ. च. ज. °स्पतेः स्नेहवशानुब° । ७ क. घ. च. ज. विशाखिका । ८ क. ख. ग. घ. ङ. च. ज. °स्तीक्ष्णः प्रधानज्व° । ९ ञ. °पः । शस्त्रै° ।

तयोर्निपातेन समुद्रभूमेरथान्तरिक्षस्य च भीतिरासीत् ॥
तदस्त्रयुद्धं जगतां क्षयाय प्रवृद्धमालोक्य पितामहोऽपि ॥ ४८
अन्तः प्रविश्याथ कथंचिदेव निवारयामास सुरैः सहैव ।
अकारणं किं क्षयकृज्जनानां सोम त्वयाऽपीदमकार्यकार्यम् ॥ ४९
यस्मात्परस्त्रीहरणाय सोम त्वया कृतं युद्धमतीव भीमम् ।
सापत्रपस्त्वं भविता निजेषु शस्त्रोपलम्भे समयोऽपि नास्ति ॥ ५०
भार्यामिमामर्पय वाक्पतेस्त्वं न मान(नि)मान्योऽस्ति परापहारे(रः) ।
तथेति चोवाच हिमांशुमाली युद्धादपाक्रामदतः प्रशान्तः ॥
बृहस्पतिस्तामथ गृह्य तारां हृष्टो जगाम स्वगृहं सरुद्रः ॥ ५१

पुलस्त्य उवाच—

ततः संवत्सरस्यान्ते द्वादशादित्यसंनिभः । दिव्यपीताम्बरधरः पीताम्बरविभूषितः ॥ ५२
तारोदराद्विनिष्क्रान्तः कुमारः सूर्यसंनिभः । सर्वार्थशास्त्रविद्विद्वान्हस्तिशास्त्रप्रवर्तकः ॥ ५३
नाम यद्राजपुत्रीयं विश्रुतो राजवैद्यकः । राज्ञः सोमस्य पुत्रत्वाद्राजपुत्रो बुधः स्मृतः ॥ ५४
जनानामग्रतेजांसि सर्वाण्येवाक्षिपद्बली । ब्रह्माद्यास्तत्र चाऽऽजग्मुर्देवा ब्रह्मर्षिभिः सह ॥ ५५
बृहस्पतिगृहे सर्वे जातकर्मोत्सवे तदा । पप्रच्छुस्ते तदा तारां केन जातः कुमारकः ॥ ५६
ततः सा लज्जिता तेषां न किंचिदवदत्तदा । पुनः पुनस्तदा पृष्टा लज्जयन्ती वराङ्गना ॥ ५७
सोमस्येति चिरात्प्राह ततोऽगृह्णाद्विधुः सुतम् । बुध इत्यकरोन्नाम प्रादाद्राज्यं च भूतले ॥ ५८
अभिषेकं ततः कृत्वा प्रदानमकरोद्विभुः । ग्रहसाम्यं प्रदायाथ ब्रह्मा ब्रह्मर्षिसंयुतः ॥ ५९
पश्यतां सर्वभूतानां तत्रैवान्तरधीयत । इलोदरे च धर्मिष्ठं बुधः पुत्रमजीजनत् ॥ ६०
[*धर्मेण पालिता तेन सर्वलोकमया मही । ] अश्वमेधशतं साग्रमकरोद्यः स्वतेजसा ॥ ६१
पुरूरवा इति ख्यातः सर्वलोकनमस्कृतः । हिमाद्रिशिखरे रम्य आराध्य स पितामहम् ॥ ६२
लोकैश्वर्यमगाद्राजन्सप्तद्वीपपतिस्तदा । केशिप्रभृतयो दैत्यास्तद्भृत्यत्वमुपागताः ॥ ६३
उर्वशी यस्य पत्नीत्वमगमद्रूपमोहिता । सप्तद्वीपा वसुमती सशैलवनकानना ॥ ६४
धर्मेण पालिता तेन सर्वलोकहितैषिणा । चामरग्राहिणी कीर्तिः स्वयं चैवाङ्गवाहिका ॥ ६५
ब्रह्मप्रसादाद्देवेन्द्रो ददावर्धासनं तदा । धर्मार्थकामान्धर्मेण समवेतोऽभ्यपालयत् ॥ ६६
धर्मार्थकामास्तं द्रष्टुमागताः कौतुकान्विताः । जिज्ञासवस्तच्चरितं कथं पश्यति नः समम् ॥ ६७
भक्त्या चक्रे ततस्तेषामर्घपाद्यादिकं तथा । आसनत्रयमादाय दिव्यं कनकभूषणम् ॥ ६८
निवेश्याथाकरोत्पूजामीषद्धर्माधिकां पुनः । जग्मतुस्तौ च कामार्थावतिकोपं नृपं प्रति । ६९
अर्थः शापमदात्तस्मै लोभात्त्वं नाशमेष्यसि । कामोऽप्याह तवोन्मादो भविता गन्धमादने ॥ ७०
कुमारवनमागत्य वियोगाच्चोर्वशीभवात् । धर्मोऽप्याह चिरायुस्त्वं धार्मिकश्च भविष्यसि ॥ ७१

*धनुश्चिह्नान्तर्गतः पाठो झ.पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. ज. ततः । २ घ. °म् । पापोऽस्यलं नूनं मखाशिनां त्वं श° । ३ ज. °ताभरणभू° । ४ क. ग. घ. च. ज. °र्वाब्रशां । ५ झ. °पुत्रीयं । ६ झ. °श्रुतं गजा । ७ झ. °द्यकम् । रा° । ८ क. ख. ङ. च. °नानां तु सुते° । ग. घ. ज. °नानां तु स ते° ९ क. ख. ग. घ. ङ. च. ज. °वा देवर्षि° । १० क. ख. ग. घ. ङ. च. ज. °दत्सती । पु° । ११ ख. ग. घ. ङ. च. ज. रम्ये तदाऽऽराध्य । १२ क. ख. ग. घ. ङ. च. ज. ततः ।

संततिस्तव राजेन्द्र यावदाचन्द्रतारकम् । संततं वृद्धिमायाति न नाशं भुवि यास्यति ॥ ७२
षष्टिवर्षाणि चोन्माद उर्वशीकामसंभवः । अचिरादेवं तेनाऽऽशं(शु) वशमेष्यति तेऽप्सरा ॥७३
[*मन्वन्तरं समग्रं तु एवमेव न संशयः ] इत्युक्त्वाऽन्तर्दधुः सर्वे राजा राज्यं तदन्वभूत् ॥ ७४
अहन्यहनि देवेन्द्रं द्रष्टुं याति पुरूरवाः । कदाचिदारुह्य रथं दक्षिणायुधधारिणौ ॥ ७५
सार्धं शक्रेण सोऽपश्यन्नीयमानामथाम्बरे । केशिना दानवेन्द्रेण चित्रलेखामथोर्वशीम् ॥ ७६
तं विनिर्जित्य समरे विविधैर्युधपातनैः । बुधपुत्रेण वायव्यमस्त्रं मुक्त्वा यशोर्थिना ॥ ७७
पुरा शक्रोऽपि समरे येन चक्री विनिर्जितः । मित्रत्वमगमत्तेन प्रादादिन्द्राय चोर्वशीम् ॥ ७८
ततः प्रभृति मित्रत्वमगमत्पाकशासनः । सर्वलोकातिशयितं पुरूरवसमेव तम् ॥ ७९
प्राह वज्री तु संतुष्टो नीयतां नियमेन तु । सा पुरूरवसः प्रीत्यै गायन्ती चरितं महत् ॥ ८०
लक्ष्मीस्वयंवरं नाम भरतेन प्रवर्तितम् । मेनकां चोर्वशीं रम्भां नृत्यध्वमिति चाऽऽदिशत् ॥ ८१
ननर्त सलयं तत्र लक्ष्मीरूपेण चोर्वशी । सा पुरूरवसं दृष्ट्वा कामिनी कामपीडिता ॥ ८२
विस्मृताऽभिनयं सर्वं यत्पुरातनवेदितम् । शशाप भरतः कोपाद्वियोगाचस्य भूतले ॥ ८३
पञ्चपञ्चाशदब्दानि लताभूता भविष्यति । पुरूरवाः पिशाचत्वं तत्रैवाऽऽप्तो भविष्यति ॥ ८४
ततस्तमुर्वशी गत्वा भर्तारमकरोच्चिरम् । शापानुभवनान्ते तु उर्वशी बुधसूनुना ॥ ८५
अजीजनत्सुतानष्टौ नामतस्तान्निबोधत । आयुर्दृढायुर्वश्यायुर्धनायुर्धृतिमान्वसुः ॥ ८६
दिविजातः सुबाहुश्च सर्वे दिव्यबलौजसः । आयुषो नहुषः पुत्रो वृद्धशर्मा तथैव च ॥ ८७
रजिर्दम्भो विपाप्मा च वीराः पञ्च महारथाः । रजेः पुत्रशतं जज्ञे राजेया इति विश्रुताः ॥८८
रजिराराधयामास नारायणमकल्मषम् । तपसा तोषितो विष्णुर्वरं प्रादान्महीपते ॥ ८९
देवासुरमनुष्याणामभूत्स विजयी तदा । अथ देवासुरं युद्धं बभूवाब्दशतत्रयम् ॥ ९०
प्रह्लादशक्रयोर्भीमं न कश्चिद्विजयी तयोः । ततो देवासुरैः पृष्टः प्राह देवश्चतुर्मुखः ॥ ९१
अनयोर्विजयी कः स्याद्रजिर्यत्रेति सोऽब्रवीत् । जयाय प्रार्थितो राजा सहायस्त्वं भवस्व नः ॥
दैत्यैः प्राह यदि स्वामी वो भवामि ततस्त्वलम् । नासुरैः प्रतिपन्नं तत्प्रतिपन्नं सुरैस्तथा ॥ ९३
स्वामी भव त्वमस्माकं रणे नाशाय विद्विषः । ततो विनाशिताः सर्वे येऽवध्या वज्रपाणिनः ॥
पुत्रत्वमगमंस्तुष्टैस्तस्येन्द्रः कर्मणा विभुः । दत्त्वेन्द्राय पुरा राज्यं जगाम तपसे रजिः ॥ ९५
रजिपुत्रैस्तदा छिन्नं बलादिन्द्रस्य वै पदम् । यज्ञभागं च राज्यं च तपोबलगुणान्वितैः ॥ ९६
राज्यभ्रष्टस्तदा शक्रो रजिपुत्रनिपीडितः । प्राह वाचस्पतिं दीनः पीडितोऽस्मि रजेः सुतैः ॥
न यज्ञभागो राज्यं मे निर्जितस्य बृहस्पते । राज्यलाभाय मे यत्नं विधत्स्व धिषणाधिप ॥ ९८

---

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

---

१ क. ख. ग. घ. च. ज. शतशो । २ झ. °वमायातु व° । ३ क. ख. ग. ङ. च. ज. °णा । सिद्धमार्गेण राजेन्द्र नीय° । ४ ग. °धात्रंपा° । ५ ग. घ. तथा । झ. तदा । ६ ग. वज्री । ७ झ. °तं बलमूर्जस्वलं स्वयम् । ८ क. ख. ग. घ. ङ. च. ज. सनयं ९ क. ख. ग. घ. ङ. च. ज. नृत्यन्ती । १० घ. °गाच्चैव सर्वतः । प° । ११ क. ख. ङ. च. °युर्धृतायु° । ग. °युर्धूपायु° । ज. °युर्धुतायु° । १२ क. ख. ग. घ. ङ. च. ज. °युर्बलायुर्धृतिमा° । १३ क. ग. च. ज. दिव्यजायुः शतायुश्च । १४ क. ख. ग. घ. ङ. च. ज. °र्दण्डो विशाखश्च वी° । १५ ग. °था। त्वमस्माकं बलं त्राहि बलं नाशय। १६ क. ख. ग. घ. ङ. च. ज. °कं बलं नाशय । १७ क. ख. ङ. च. ज. °मत्रस्तस्त° ।१८ग. घ. °स्तस्य देवेन्द्रः कर्मणा हि सः । द° । १९ क ख. ङ. च. ज. ततः । २० क. ख. ग. घ. ङ. च. ज.यदा ।

ततो बृहस्पतिः शक्रमकरोद्बलदर्पितम् । ग्रहशान्तिविधानेन पौष्टिकेन च कर्मणा ॥ ९९
गत्वाऽथ मोहयामास रजिपुत्रान्बृहस्पतिः । *स्वं विमानं समास्थाय देवराज्याय वेदवित् १००
+ जिनधर्मं समास्थाय वेदबाह्यं स धर्मवित् । वेदत्रयीपरिभ्रष्टांश्चकार धिषणाधिपः ॥ १०१
वेदबाह्यान्परिज्ञाय हेतुवादसमन्वितान् । जघान शक्रो वज्रेण सर्वान्धर्मबहिष्कृतान् ॥ १०२
नहुषस्य च वक्ष्यामि पुत्रान्सप्तैव धार्मिकान् । यतिर्ययातिः संयातिरुद्भवः पर एव च ॥ १०३
वियतिर्विंध्यसातिश्च सप्तैते वंशवर्धनाः । यतिः कुमारभावेऽपि योगी वैखानसोऽभवत् ॥ १०४
ययातिरकरोद्राज्यं धर्मैकशरणः सदा । शर्मिष्ठा तस्य भार्याऽभूद्दुहिता वृषपर्वणः ॥ १०५
भार्गवस्याऽऽत्मजा चैव देवयानी च सुव्रता । ययातेः पञ्च दायादास्तान्प्रवक्ष्यामि नामतः ॥
देवयानी यदुं पुत्रं तुर्वसुं चाप्यजीजनत् । तथा द्रुह्यमणुं पुरुं शर्मिष्ठाऽजनयत्सुतान् ॥ १०७
यदुः पुरुश्च भवतस्तेषां वंशविवर्धनौ । पुरोर्वंशं प्रवक्ष्यामि यत्र जातोऽसि पार्थिव ॥ १०८
यदोस्तु यादवा जातास्तत्र तौ बलकेशवौ । भारावतरणार्थाय पाण्डवानां हिताय च ॥ १०९
यदोः पुत्रा बभूवुर्हि पञ्च देवसुतोपमाः । सहस्रजित्तथा ज्येष्ठः क्रोष्टा नीलोऽञ्जिको रघुः ॥ ११०
सहस्रजितो दायादः शतजिन्नाम पार्थिवः । शतजितश्च दायादास्त्रयः परमधार्मिकाः ॥ १११
हैहयश्च हयश्चैव तथोत्तालहयश्च यः । हैहयस्य तु दायादो धर्मनेत्रः प्रतिश्रुतः ॥ ११२
धर्मनेत्रस्य कुम्भिस्तु संहतस्तस्य चाऽऽत्मजः । संहतस्य तु दायादो महिमा नाम पार्थिवः ११३
आसीन्महिष्मितः पुत्रो भद्रसेनः प्रतापवान् । वाराणस्यामभूद्राजा कथितः पूर्वमेव तु ॥ ११४
भद्रसेनस्य पुत्रोऽभूद्दुर्दर्शो नाम पार्थिवः । दुर्दर्शस्य सुतो भीमः कनको नाम बुद्धिमान् ॥ ११५
कनकस्य सुता ह्यासंश्चत्वारो लोकविश्रुताः । कृताग्निः कृतवीर्यश्च कृतधर्मा तथैव च ॥ ११६
कृतौजाश्च चतुर्थस्तु कृतवीर्यस्य सोऽर्जुनः । जातो बाहुसहस्रेण सप्तद्वीपेश्वरो नृपः ॥ ११७
वर्षायुतं तपस्तेपे दुश्चरं पृथिवीपतिः । दत्तमाराधयामास कार्तवीर्योऽत्रिसंभवम् ॥ ११८
तस्मै दत्तो वरान्प्रादाच्चतुरः पुरुषोत्तमः । पूर्वं बाहुसहस्रं तु स वव्रे राजसत्तमः ॥ ११९
अधर्मं ध्यायमानस्य शब्दैश्चापि निवारणम् । युद्धेन पृथिवीं जित्वा धर्मेणावाप्य वै बलम् ॥ १२०
सङ्ग्रामे वर्तमानस्य वधश्चैवाधिकाद्भवेत् । एतेनेयं मही सर्वा सप्तद्वीपा सपत्तना ॥ १२१
सप्तोदधिपरिक्षिप्ता क्षात्रेण विधिना जिता । जज्ञे बाहुसहस्रं च इच्छतस्तस्य धीमतः ॥ १२२
सर्वे यज्ञा महाबाहोस्तस्याऽऽसन्भूरिदक्षिणाः । सर्वे काञ्चनयूपास्ते सर्वे काञ्चनवेदिकाः ॥ १२३
सर्वे देवैश्च संप्राप्ता विमानस्थैरलंकृताः । गन्धर्वैरप्सरोभिश्च नित्यमेवोपसेविताः ॥ १२४
यस्य यज्ञे जगौ गाथां गन्धर्वो नारदस्तथा । कार्तवीर्यस्य राजर्षेर्महिमानं निरीक्ष्य सः ॥ १२५
न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः । यज्ञैर्दानैस्तपोभिर्वा विक्रमेण श्रुतेन च ॥ १२६
सप्तद्वीपाननुचरन्नुद्योगे पवनोपमः । पञ्चाशीतिसहस्राणि वर्षाणां च नराधिपः ॥ १२७

* इदमर्धं क्वचिन्नास्ति । + इदमर्धं ञ. पुस्तके नास्ति ।

१ ग. वेदवित् । २ क. ख. ग. घ. ङ. च. ज. °दवाक्यं परि° । ३ झ. धर्मेण । ४ क. ख. ङ. च. ज. °तिः शर्यातिरुत्तरः प° । ५ ग. वियतिर्माघयाति° । घ. वियतिर्विंच्यशान्ति° । झ. विजातिर्मेच्यजाति° । ६ झ. °जिद्रथश्रेष्ठः क्रोषीनीलोऽञ्जिकारवः । स° । ७ ञ. °हिष्मान्नाम । ८ ञ. °हिष्मतः । ९ क. ख. घ. ङ. च. ज. °र्दमो नाम धार्मिकः । दु° १० ञ. भीमो धन° । ११ क. ख ग. घ. ङ. च. ज. वीर्यवान् । १२ ञ. धनकस्य । १३ झ. °तवर्माच कृ° । १४ झ. °द्वीपचरो नृ° । १५ ञ. °धर्मे ध्या° । १६ ञ. °स्य भक्तिश्चा° । १७ झ. °णाऽऽधार्यते ब°।

सप्तद्वीपपृथिव्याश्च चक्रवर्ती बभूव ह । स एव पशुपालोऽभूत्क्षेत्रपालः स एव हि ॥ १२८
स एव वृष्ट्या पर्जन्यो योगित्वादर्जुनोऽभवत् । योऽसौ बाहुसहस्रेण ज्याघातकठिनत्वचा १२९
भाति रश्मिसहस्रेण शरदीव दिवाकरः । एष नाम मनुष्येषु माहिष्मत्यां महाद्युतिः ॥ १३०
एष वेगं समुद्रस्य प्रावृट्काले भजेत वै । क्रीडन्निव मुखोद्गीर्णः प्रतिस्रोतो महीपतिः ॥ १३१
ललनाः क्रीडता तेन प्रतिबद्धोर्मिमालिनी । ऊर्मिभ्रुकुटिमाला सा शङ्किताऽभ्येति नर्मदा॥ १३२
एष एव मनोर्वंशे त्ववगाहेन्महार्णवम् । करेणोद्धृत्य वेगं तु कामिनीप्रीणनेन तु ॥ १३३
तस्य बाहुसहस्रेण क्षोभ्यमाणे महोदधौ । भवन्ति लीना निश्चेष्टाः पातालस्था महासुराः॥ १३४
मन्दरक्षोभचकिता अमृतोत्थानशङ्किताः । नता निश्चलमूर्धानो भवन्ति च महोरगाः ॥ १३५
एष धन्वी च चिक्षेप रावणं प्रति सायकान् । एष धन्वी धनुर्गृह्य उत्सिक्तं पञ्चभिः शरैः १३६
लङ्कायां मोहयित्वा स सबलं रावणं बलात् । विजित्य बद्ध्वा त्वानीय माहिष्मत्यां बबन्ध ह॥
ततो गतोऽहं तत्राऽऽशु अर्जुनं संप्रसादयन् । मुमोच पौत्रं मे राजन्कृत्वा सख्यं तु पार्थिवः १३८
तस्य बाहुसहस्रस्य बभूव ज्यातलस्वनः । युगान्ताग्निप्रवृत्तस्य राज्ञो ज्यातलनिस्वनः ॥ १३९
अहो बत विधेर्वीर्यं भार्गवः स यदाच्छिनत् । मृधे सहस्रं बाहूनां हैमं तालवनं यथा ॥ १४०
यं वसिष्ठस्तु संक्रुद्धो ह्यर्जुनं शप्तवान्प्रभुः । यस्माद्वनं प्रदग्धं ते विश्रुतं मम हैहय ॥ १४१
तस्मात्ते दुष्कृतं कर्म कृतमन्यो हनिष्यति । छित्त्वा बाहुसहस्रं ते प्रमथ्य तरसा बली ॥ १४२
तपस्वी ब्राह्मणश्च त्वां वधिष्यति स भार्गवः । तस्य रामश्च हन्ताऽऽसीन्मुनिशापेन धीमतः १४३
तस्य पुत्रशतं त्वासीत्पञ्च तत्र महारथाः । कृतास्त्रा बलिनः शूरा धर्मात्मानो महाव्रताः॥ १४४
शूरसेनश्च शूरश्च धृष्टो वै कृष्ण एव च । जयध्वजः स वै कर्ता अवन्तिश्च निशापतिः ॥ १४५
जयध्वजस्य पुत्रस्तु तालजङ्घो महाबलः । तस्य पुत्रशतान्येव तालजङ्घा इति श्रुताः ॥ १४६
तेषां पञ्च कुलान्येव हैहयानां महात्मनाम् । वीतिहोत्रश्च संजातो भोजश्चावन्तयस्तथा ॥ १४७
तुण्डिकेराश्च विख्यातास्तालजङ्घाश्च कीर्तिताः । वीतिहोत्रसुतश्चापि अनन्तो नाम वीर्यवान् ॥
दुर्जयस्तस्य पुत्रोऽभूत्स चैवामित्रकर्षणः । सद्भावेन महाराजः प्रजा धर्मेण पालयन् ॥ १४९
कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् । येन सागरपर्यन्ता धनुषा निर्जिता मही ॥ १५०
यस्तस्य कीर्तयेन्नाम प्रातरुत्थाय मानवः । न तस्य वित्तनाशः स्यान्नष्टं च लभते पुनः ॥ १५१
कार्तवीर्यस्य यो जन्म कथयेदिह धीमतः । इष्ट्वा यज्ञान्यथा दाता स्वर्गलोके महीयते ॥ १५२

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे यदुवंशकीर्तनं नाम द्वादशोऽध्यायः ॥ १२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२११६८

---

१ क. ख. ग. घ. ङ. च. ज. °डते स्वसुखायेति प्र° । २ क. ख. ग. घ. ङ. च. ज. °तिस्रोतोर्मि° । ३ ञ. °मू । करोत्युद्वर्तयोगेन अकामात्प्राव्रुडेव तु । ख. °मू । करोत्युद्वर्तयोगेन आकामात्प्राव्रुडेव तु । घ. °मू । करोत्युद्वर्तयोगेन सकामात्प्राव्रुडेव तु । ४ क. ख. ङ. च. °राः । तद्रुरुक्षो° । ५ क. ख. ग. घ. ङ. च. ज. तस्याग्रे अ° । ६ घ. °प्रयाचय° । ७ क. ख. ग. घ. ङ. च. ज. °च भावैः पौत्रं मे कृत्वा । ८ क. ख. ञ. च. ज. बलं । ९ क. ख. ग. घ. ङ. च. ज. करिष्यसि । १० झ. श्रवन्तिश्च । ११ ञ. रसापतिः । १२ क. ख. ग. घ. ङ. च. ज. विक्रान्तास्ता° । १३ झ. स्याद्वित्तं च । १४ ख. °तः । यथा यष्टा यथा ।

अथ त्रयोदशोऽध्यायः ।

---

पुलस्त्य उवाच*—

क्रोष्टोः शृणुष्व राजेन्द्र वंशमुत्तमपूरुषम् । यस्यान्ववाये संभूतो विष्णुर्वृष्णिकुलोद्वहः ॥ १
क्रोष्टोरेवाभवत्पुत्रो वृजिनीवान्महामनाः । तस्य पुत्रोऽभवत्स्वाती(च्छ्राही)कुशङ्कु(रुशेकु)स्तत्सुतोऽभवत् ॥ २
कुशङ्को(रुशेको)रभवत्पुत्रो नाम्ना चित्ररथोऽस्य तु । शशबिन्दुरिति ख्यातश्चक्रवर्ती बभूव ह ॥३
अत्रानुवंशश्लोकोऽयं गीतस्तस्मिन्पुराऽभवत् । शशविन्दोस्तु पुत्राणां शतानामभवच्छतम् ॥ ४
धीमतां चारुरूपाणां भूरिद्रविणतेजसाम् । तेषां शतप्रधानानां पृथुसाह्वा महाबलाः ॥ ५
पृथुश्रवाः पृथुयशाः पृथुतेजाः पृथूद्भवः । पृथुकीर्तिः पृथुमती राजानः शाशविन्दवः ॥ ६
शंसन्ति च पुराणज्ञाः पृथुश्रवसमुत्तमम्† । ततश्चास्याभवत्पुत्र उशना शत्रुतापनः ॥ ७
पुत्रश्चोशनसस्तस्य शिनेयुर्नाम सत्तमः । आसीच्छिनेयोः पुत्रो यः स रुक्मकवचो मतः ॥ ८
निहत्य रुक्मकवचः परानीकविनाशनः । धन्विनो विविधैर्बाणैश्चावाप्य पृथिवीमिमाम् ॥ ९
अश्वमेधे ददौ राजा ब्राह्मणेभ्यः सदक्षिणाम् । यज्ञे च रुक्मकवचः कदाचित्परवीरहा ॥ १०
जज्ञिरे पञ्च पुत्रास्तु महावीर्यपराक्रमाः । रुक्मेषुः पृथुरुक्मश्च ज्यामघः परिघो हरिः ॥ ११
परिघं च हरिं चैव विदेहेऽस्थापयत्पिता । रुक्मेषुरभवद्राजा पृथुरुक्मस्तदाश्रयः ॥ १२
ताभ्यां प्रव्राजितो राजा ज्यामघोऽवसदाश्रमे । प्रशान्तः स्वाश्रमस्थस्तु ब्राह्मणेनाववोधितः १३
जगाम धनुरादाय देशमन्यं ध्वजी रथी । नर्मदातट एकाकी केवलं वृत्तिकर्षितः ॥ १४
ऋक्षवन्तं गिरिं गत्वा भुक्तवन्य उपाविशत् । ज्यामघस्याभवद्भार्या शैब्या परिणता सती ॥१५
अपुत्रोऽप्यभवद्राजा भार्यामन्यां न विन्दति । तस्याऽऽसीद्विजयो युद्धे तत्र कन्यामवाप सः १६
भार्यामुवाच संत्रासात्स्नुषेयं ते शुचिस्मिते । एवमुक्ताऽब्रवीदेनं कस्य केयं स्नुषेति वै ॥ १७

राजोवाच—

यस्ते जनिष्यते पुत्रस्तस्य भार्या भविष्यति । तस्याः सा तपसोग्रेण कन्यायाः समसूयत ॥ १८
पुत्रं विदर्भं सुभगं शैब्या परिणता सती । राजपुत्रौ सुविद्वांसौ स्नुषायां क्रथकैशिकौ ॥ १९
लोमपादं तृतीयं तु पुत्रं परमधार्मिकम् । पश्चाद्विदर्भोऽजनयच्छूरात्रणविशारदान् ॥ २०
लोमपादात्मजो बभ्रुर्धृतिस्तस्य तु चाऽऽत्मजः । कैशिकस्य चिदिः पुत्रस्तस्माच्चैद्या नृपाः स्मृताः
क्रथो विदर्भपुत्रस्तु कुन्तिस्तस्याऽऽत्मजोऽभवत् । कुन्तेर्धृष्टस्ततो जज्ञे धृष्टात्पृष्टः प्रतापवान् ॥२२
पृष्टस्य[11] पुत्रो धर्मात्मा निर्वृतिः[12] परवीरहा[13] । दाशार्हो निर्वृतेः पुत्रो नाम्ना स तु विदूरथः ॥ २३

---

* एतदग्रे च. पुस्तके 'यदोः सहस्रजित्क्रोष्टा नलो रिपुरिति श्रुतः ' इत्यर्धमधिकम् । † एतदग्रे झ. पुस्तके ' अनन्तस्य परा स्यात्सु सुयज्ञस्तनयोऽभवत् । उशना तु सुयज्ञस्य यन्नाम्ना पृथिवी त्वियम् ॥ आजहाराश्वमेधानां शतमुत्तमधार्मिकम् ' इत्यधिकम् ।

---

१ क. ख. ग. घ. च. ज. °हायशाः । त° । २ °म् । तितिक्षोरभ° । ३ झ. °नः । मरुतस्तस्य तनयो राजर्षिर्नाम सत्तमः । आसीन्मनुस्तत्तनयो वीरकम्बलबर्हिषः । नि° । ४ क. ख. ग. घ. ङ. च. च. °वचो युद्धे युद्धविशारदः । धं° । ५ क. ङ. च. °शान्तः स वयस्थ° । °शान्तश्चाऽऽश्र° । ६ ख. °त्तिकीर्तितः । ७ घ. घ. ऋष्यवन्तं । ८ झ. °स्तु क्रान्ति° । ९ झ. °त् । क्रान्ते° । १० क. ख. ग. घ. ङ. च. ज. °ष्टात्सृष्टः । ११ क. ख. ग. घ. ङ. च. ज. सृष्टस्य ॥ १२ क. ख. ङ. च. निवृत्तिः । १३ क. ख. ङ. च. °हा । निवृत्तिपुत्रो दाशार्हो ना° ।

दाशार्हपुत्रो व्योम्नस्तु व्योम्नाज्जीमूत उच्यते । जीमूतपुत्रो विकलस्तस्य भीमरथः सुतः ॥ २४
अथ भीमरथस्यापि पुत्रो नवरथः किल । तस्य चाऽऽसीद्दृढरथः शकुनिस्तस्य चाऽऽत्मजः २५
तस्मात्करम्भस्तस्माच्च देवरातो बभूव ह । देवक्षत्रोऽभवद्राजा दैवरातिर्महायशाः ॥ २६
देवगर्भसमो जज्ञे देवक्षत्रस्य नन्दनः । मधुर्नाम महातेजा मधोः कुरुवशस्तथा ॥ २७
आसीत्कुरुवशात्पुत्रः पुरुषः पुरुषोत्तमः । जन्तुर्जज्ञेऽथ वैदर्भ्यां भद्रवत्यां पुरुद्वसुः ॥ २८
वेत्रकी त्वभवद्भार्या जन्तोस्तस्यां व्यजायत । सात्वतः सत्त्वसंपन्नः सात्वतां कीर्तिवर्धनः ॥२९
इमां विसृष्टिं विज्ञाय ज्यामघस्य महात्मनः । प्रजावानेति सायुज्यं राज्ञः सोमस्य धीमतः ॥३०
सात्वतात्सत्त्वसंपन्नात्कौशल्या सुषुवे सुतान् । भजिनं भजमानं तु दिव्यं देवावृधं नृपम् ॥ ३१
अन्धकं च महाभोजं वृष्णिं च तदनन्तरम् । तेषां सर्गाश्च चत्वारो विस्तारेणैव ताञ्शृणु ॥ ३२
भजमानस्य सृञ्जय्यां भौजनामा सुतोऽभवत् । सृञ्जय्यस्य सुतायां तु भौजकास्तु ततोऽभवन् ३३
तस्य भौजस्य भार्ये द्वे सुषुवाते सुतान्बहून् । विनयं करुणं चैव वृष्णिं परपुरंजयम् ॥ ३४
ते भाजकाः स्मृता यस्माद्भजमानाद्विजज्ञिरे । देवावृधः पृथुर्नाम मधूनां मित्रवर्धनः ॥ ३५
अपुत्रस्त्वभवद्राजा चचार परमं तपः । पुत्रः सर्वगुणोपेतो मम भूयादिति स्पृहन् ॥ ३६
संयोज्य कृष्णमेवार्थं पर्णाशाया जलं स्पृशन् । सदोपस्पर्शनात्तस्यै चकार प्रियमापगा ॥ ३७
कल्याणं चरतस्तस्य शुशोच निम्नगा ततः । चिन्तयाऽथ परीतात्मा जगामाथ विनिश्चयम् ॥३८
भूत्वा गच्छाम्यहं नारी यस्यामेवंविधः सुतः । जायेत तस्मादद्याहं भवाम्यस्य सुतप्रदा ॥ ३९
अथ भूत्वा कुमारी सा बिभ्रती परमं वपुः । ज्ञापयामास राजानं तामियेष नृपस्ततः ॥ ४०
अथ सा नवमे मासि सुषुवे सरितां वरा । पुत्रं सर्वगुणोपेतं बभ्रुं देवावृधात्परम् ॥ ४१
अत्र वंशे पुराणज्ञा गायन्तीति परिश्रुतम् । गुणान्देवावृधस्याथ कीर्तयन्तो महात्मनः* ४२
बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः । षष्टिः शतं च पुरुषाः सहस्राणि च सप्ततिः ॥ ४३
एतेऽमृतत्वं संप्राप्ता बभ्रोर्देवावृधादपि । यज्ञदानतपोधीरो ब्रह्मण्यः सुदृढव्रतः ॥ ४४
रूपवांश्च महातेजा भोजोऽतो मृतकावतीम् । शैरकान्तस्य दुहिता सुषुवे चतुरः सुतान् ॥ ४५
कुकुरं भजमानं च समीकं वलबर्हिषम् । कुकुरस्याऽऽत्मजो धृष्णुर्धृष्णोस्तु तनयो धृतिः ॥ ४६
कपोतरोमा तस्यार्थे नैमिचिस्तस्य चाऽऽत्मजः । तस्याऽऽसीत्सुसुतस्तस्माद्विद्वान्पुत्रो नरिः किल ॥
ख्यायते तस्य नामान्यच्चन्दनोदकदुन्दुभिः । अस्याऽऽसीदभिजित्पुत्रस्ततो जातः पुनर्वसुः ॥४८

* एतदग्रे झ. पुस्तके "यथैव शृणु मे दूरादपश्यामस्तथाऽन्तिके" इत्यर्धमाधिकम् ।

१ ञ. त्रो भीमस्तु भामाज्जी° । २ क. ख. ङ. च. °सोद्दृशर° । ३ झ. °धोरुरुरथस्त° । ४ झ. °सीद्रुरुरथात्पु° । ५ क. च. °रुहोत्रः प्रतापवान् । अंशुर्ज° । ६ ख. ङ. °मः । अंशुर्ज° । ७ ग. सुवर्चसः । ८ क. ख. ङ. च. °र्या अंशोस्त° । ९ क. ग घ. ङ. च. ज. °न्नात्कोशला सु° । १० झ. देवावृतं । ११ झ. महाभागं । १२ ञ. सृञ्जायां ! १३ झ. वाह्यनामा । १४ झ. वाह्यकास्तु । १५ झ. वाह्यस्य । १६ क. च. °न् । नेमिं च क्राकिणं । १७ झ. ते वाह्यकाः सृञ्जयस्यां भज° । १८ झ. °थ सदाऽऽस्ते जलसंस्पृशः । स° । १९ ञ. °स्य सांनिध्यं निम्नगा ह्यभूत् । क° । २० झ. °म् । नाधिग° । २१ झ. नारीं । २२ झ. °तं चक्रे देवाभृथं नृपः । अनुवं° । २३ क. ख. ङ. च. ब्रुवन्तीति । ज. भवन्तीति । २४ झ. °वाभृथस्यां° । २५ झ. पुत्राणां । २६ ग. घ. ऋर्करातस्य । २७ क. ख. ङ. च. च श्यामकं बलवार्षिकम् । ज. च श्यामकं । २८ ज. ङ. घृष्टिर्घृष्टेस्तु । ग. घ. वृष्टिर्वृष्टेस्तु । ञ. धृष्टिर्धृष्टेस्तु । २९ क. ख. ङ. °थ तित्तिरिस्त° । ग. °थ तैत्तिरस्त° । घ. °थ तैत्तिरिस्त° । ३० क. ख. ग. घ. ङ. च. ज. °सीद्बहुरूपस्तु विद्वा° ।

अपुत्रो ह्यभिजित्पूर्वमृषिभिः प्रेरितो मुदा । अश्वमेधं तु पुत्रार्थमाजहार नरोत्तमः ॥ ४९
तस्य मध्ये विचरतः सभामध्यात्समुत्थितः । अन्धस्तु विद्वान्धर्मज्ञो यज्ञदानात्पुनर्वसुः ॥ ५०
तस्याऽऽसीत्पुत्रमिथुनं वसोश्चारिजितः किल । आहुकश्चाऽऽहुकी चैव ख्याता मतिमतां वर ५१
इमांश्चोदाहरन्त्यत्र श्लोकांश्चातिरसात्मकान् ॥ ५२
सोपासङ्गानुकर्षाणां सध्वजानां वरूथिनाम् । रथानां मेघघोषाणां सहस्राणि दशैव तु ॥ ५३
नासत्यवादी नातेजा नायज्ञो नासहस्रदः । नाशुचिर्नाप्यविद्वांसो न भोजादधिकोऽभवत् ॥ ५४
आहुकान्तमनुप्राप्ता इत्येतेऽन्वय उच्यते ॥ ५५
आहुकश्चाप्यवन्तीषु स्वसारं चाऽऽहुकीं ददौ । आहुकस्यैव दुहिता पुत्रौ द्वौ समसूयत ॥ ५६
देवकं चोग्रसेनं च देवगर्भसमावुभौ । देवकस्य सुता वीरा जज्ञिरे त्रिदशोपमाः ॥ ५७
देववानुपदेवश्च सुदेवो देवरक्षितः । तेषां स्वसारः सप्तैव वसुदेवाय ता ददौ ॥ ५८
देवकी श्रुतदेवा च यशोदा च श्रुतिश्रवा । श्रीदेवा चोपदेवा च सुरापी चेति सप्तमी ॥ ५९
नवोग्रसेनस्य सुताः कंसस्तेषां तु पूर्वजः । न्यग्रोधश्च सुनामा च कङ्कः शङ्कुः सुभूश्च यः ॥ ६०
अन्यस्तु राष्ट्रपालश्च बद्धमुष्टिः सुमुष्टिकः । तेषां स्वसारः पञ्चाऽऽसन्कंसा कंसवती तथा ॥ ६१
सुरभी राष्ट्रपाली च कङ्का चेति वराङ्गनाः । उग्रसेनः सहापत्यो व्याख्यातः कुकुरोद्भवः ॥ ६२
भजमानस्य पुत्रोऽभूद्रथिमुख्यो विदूरथः । राजाधिदेवः शूरश्च विदूरथसुतोऽभवत् ॥ ६३
राजाधिदेवस्य सुतौ जज्ञाते वीरसंमतौ । क्षत्रव्रतेऽतिनिरतौ शोणाश्वः श्वेतवाहनः ॥ ६४
शोणाश्वस्य सुताः पञ्च शूरा रणविशारदाः । शमी च गदचर्मा च निमूर्तश्चक्रजिच्छुचिः ॥ ६५
शमीपुत्रः प्रतिक्षत्रः प्रतिक्षत्रस्य चाऽऽत्मजः । प्रतिक्षत्रसुतो भोजो हृदिकस्तस्य चाऽऽत्मजः ६६
हृदिकस्याभवन्पुत्रा दश भीमपराक्रमाः । कृतवर्माऽग्रजस्तेषां शतधन्वा च सत्तमः ॥ ६७
देवार्हश्च सुभानुश्च भीषणश्च महाबलः । अजातश्च विजातश्च कारकश्च करम्भकः ॥ ६८
देवार्हस्य सुतो विद्वाञ्जज्ञे कम्बलबर्हिषः । असमौजास्ततस्तस्य समौजाश्च सुतावुभौ ॥ ६९
अजातपुत्रस्य सुतौ प्रजायेते समौजसौ । समौजःपुत्रा विक्रान्तास्त्रयः परमधार्मिकाः ॥ ७०
सुदंशश्च सुरांशश्च कृष्ण इत्यनुनामतः । अन्धकानामिमं वंशं ये कीर्तयन्ति नित्यशः ॥ ७१
आत्मनो विपुलं वंशं प्रजामाप्नुवते ततः । गान्धारी चैव माद्री च क्रोष्टोर्भार्ये बभूवतुः ॥ ७२
गान्धारी जनयामास सुमित्रं मित्रनन्दनम् । माद्री युधाजितं पुत्रं ततो वै देवमीढुषम् ॥ ७३
अनमित्रं शिनिं चैव पञ्चात्र कृतलक्षणाः । अनुमित्रसुतो निघ्नो निघ्नस्यापि सुतावुभौ ॥ ७४
प्रसेनश्च महावीर्यः शक्तिसेनश्च तावुभौ । स्यमन्तकं प्रसेनस्य मणिरत्नमनुत्तमम् ॥ ७५
पृथिव्यां मणिरत्नानां राजेति समुदाहृतम् । हृदि कृत्वा स बहुशो मणिं तमभ्ययाचत ॥ ७६
गोविन्दश्च न तं लेभे शक्तोऽपि न जहार सः । कदाचिन्मृगयां यातः प्रसेनस्तेन भूषितः ॥ ७७

१ क. ख. ग. घ. ङ. च. ज. अधर्मवि° । २ क. ख. ङ. च. तनुत्राणां । ग. घ. ज. तनुजानां । ३ ख. ङ. °घोराणां । ४ झ. नास्तवित्तोऽपवि° । ५ ञ. °त्येषोऽन्व° । ६ क. ख. ङ. च. °कस्येन्दुदु° । ७ ग. घ. ज. सुताः पञ्च । ८ झ. संदेवो । ९ झ. °वा सप्तदेवी च । १० क. ख. ङ. च. स्वरूपा । ग. घ. सुरूपा । ज. सरूपा । ११ झ. कङ्कः संकरभूमयः । १२ °झ. सहामात्यो । १३ क. ख. ग. घ. ङ. च. ज. राजशर्मा । १४ क ग. घ. ज. °मूर्तः शत्रुजि° । १५ ख. ग. घ. ङ. ज. करंधमः । १६ ग. घ. ज. तमौजश्च । १७ झ. तमौजसौ । १८ झ. तमौजपुत्रा । १९ क. ख. ग. घ. ङ. च. ज. विख्यातास्त्र° । २० क. ख. ङ. च. ज. सुदंशश्च सुवंश° । घ. सुदेशश्च सुवंश° । २१ क. ङ. च. च. °स खनित्रं मित्रवत्सलम् । ग. घ. °स स्वमित्रं मित्रवत्सलम् । २२ झ. अनुमित्रं । २३ क. ख. ग. घ. ङ. च. ज. कुललक्षणाः । २४ क. ख. ग. घ. ङ. च. ज. °तः । विले श° ।

यदशब्दं स शुश्राव बिलात्सत्त्वेन कारितम् । ततः प्रविश्य स बिलं प्रसेन ऋक्षमासदत् ॥ ७८
ऋक्षः प्रसेनं च तथा ऋक्षश्चापि प्रसेनजित् । हत्वा ऋक्षः प्रसेनं तु ततस्तं मणिमाददत् ॥ ७९
गुहान्तस्थं विनिर्हृत्य प्रसेनमृक्ष आविशत् । प्रसेनं तु हतं ज्ञात्वा गोविन्दः परिशङ्कितः ॥ ८०
गोविन्देन हतो व्यक्तं प्रसेनो मणिकारणात् । प्रसेनस्तु गतोऽरण्यं मणिरत्नेन भूषितः ॥ ८१
तं दृष्ट्वा निहतस्तेन न त्यजन्तं स्यमन्तकम् । हन्मि चैनं शत्रुभूतं दुरात्मानं हि केशवः ॥ ८२
अथ दीर्घेण कालेन मृगयां निर्गतः पुनः । यदृच्छया च गोविन्दो बिलाभ्याशमथागमत् ॥ ८३
ततः शब्दं यथापूर्वं स चक्रे ऋक्षराड्वली । शब्दं श्रुत्वा तु गोविन्दः खड्गपाणिः प्रविश्य च ॥ ८४
अपश्यज्जाम्बवन्तं च ऋक्षराजं महाबलम् । ततस्तूर्णं हृषीकेशस्तमृक्षमतिरंहसा ॥ ८५
जाम्बवन्तं स जग्राह क्रोधसंरक्तलोचनः । दृष्ट्वा चैनं तथा विष्णुं कर्मभिर्वैष्णवीं तनुम् ॥ ८६
तुष्टाव ऋक्षराजोऽपि विष्णुसूक्तेन सत्वरम् । ततस्तु भगवांस्तुष्टो वरेण समरोचयत् ॥ ८७
इच्छे चक्रप्रहारेण त्वत्तोऽहं मरणं विभो । कन्या चेयं मम सुता भर्तारं त्वामवाप्नुयात् ॥ ८८
योऽयं मणिः प्रसेनात्तु हत्वा वै प्राप्तवानहम् । स त्वया गृह्यतां नाथ मणिरेष प्रवर्तते ॥ ८९
ततस्तु जाम्बवन्तं वै हत्वा चक्रेण केशवः । कृतकार्यो महाबाहुः कन्यां चाऽऽदाय वै हरिः ॥ ९०
ततः सत्राजिते चैनं मणिरत्नं स वै ददौ । यो लब्ध ऋक्षराजाच्च सर्वयादवसंसदि ॥ ९१
तेन मिथ्यापवादेन संतप्तोऽयं जनार्दनः । ततस्ते यादवाः सर्वे वासुदेवमथाब्रुवन् ॥ ९२
अस्माकं मनसि ह्यासीत्प्रसेनस्तु त्वया हतः । एकैकस्यां च सौ(सु)न्दर्यां दश सत्राजितः सुताः ॥ ९३
सुप्तोत्पन्नाः सुतास्तस्य शतमेकं च विश्रुताः । ख्यापितास्तु महावीर्या भङ्गकारस्तु पूर्वजः ॥ ९४
अथ व्रतवती तस्य भङ्गकारस्य पूर्वजा । सुषुवे सा कुमारांश्च महाबलपराक्रमान् ॥ ९५
असङ्गो युयुधानश्च शिनि(ने)स्तस्याऽऽत्मजस्तदा । तस्माद्युगंधरः पुत्राः शतं तस्य प्रकीर्तिताः ॥
अनमित्राह्वयो यो वै विख्यातो वृष्णिवंशजः । अनमित्राच्छिनिर्जज्ञे कनिष्ठाद्वृष्णिनन्दनः ॥ ९७
अनमित्राच्च संजज्ञे वृष्णिवीरो युधाजितः । अन्यौ तु तनयौ वीरौ ऋषभः क्षत्र एव च ॥ ९८
ऋषभः काशिराजस्य सुतां भार्यामविन्दत । जयन्तश्च जयन्तीं च शुभां भार्यामविन्दत ॥ ९९
जयन्तस्य जयन्त्यास्तु पुत्रः समभवच्छुभः । सदा यज्वाऽतिधीरश्च श्रुतवानतिथिप्रियः ॥ १००
अक्रूरः सुषुवे तस्मात्सुदीक्षो भूरिदक्षिणः । रत्नकन्या च शैब्या च अक्रूरस्ताप्नवाप्तवान् १०१
पुत्रानुत्पादयामास एकादश महाबलान् । उपलम्भं सदालम्भमुत्कलं चाऽऽर्यशैशवम् ॥ १०२
सुधीरं च सदापक्षं शत्रुघ्नं वारिमेजयम् । धर्मवृष्टिं च धर्मं च सृष्टमौलिं तथैव च ॥ १०३
सर्वे च प्रतिहर्तारो रत्नानां जज्ञिरे तु ते । अक्रूराच्छूरसेनायां सुतौ द्वौ कुलनन्दनौ ॥ १०४
देववानुपदेवश्च जज्ञाते देवसंमतौ । अश्विन्यां त्रिचतुष्पुत्राः पृथुर्विपृथुरेव च ॥ १०५

---

१ क. ख, ग. घ. ङ. च. ज. °व विनाशत्वे च कारणम् । २ क. ख. °था सिंहश्चा° । ३ क. ख. ग. ङ. च. ज. श्रुत्वा । ४ क. ग. घ. च. ज. नूनं । ५ झ. यथामेघं । ६ ख. °पाणिरदृश्य । ७ क. ख ङ. च. °ताः । तिस्रस्तासु सु° । ङ. घ. ज. °ताः । सत्त्वोत्प° । ८ ञ. सत्या । ९ क. ख. ङ. च. स्वप्ना । ग. घ. ज. कन्या । १० ग. ञ. अभङ्गो । ११ झ. अनुमि° । १२ क. ख. ङ. च °षभश्चित्र ए° । १३ क. ख. ङ. च. शुभां । १४ झ. °त्सुदक्षो । १५ क. ख. घ. ङ. च. ज. °शैशरम् । ग. °शैशिरम् । १६ क. ख. ङ. च. सदारं । १७ ग. ज. सदायक्षं । १८ क. ग. घ. च. ज. धर्मदृष्टिं । १९ क. ख. ङ. च. °न्यां चित्रतः पुत्राः ।

अश्वत्थामा सुबाहुश्च सुपार्श्वकगवेषणौ । रिष्टनेमिः सुवर्चा च सुधर्मा मृदुरेव च ॥ १०६

अभूमिर्बहुभूमिश्च स्थविष्ठोऽनुवितस्तथा । इमां मिथ्याभिशस्तिं यो वेद कृष्णस्य बुद्धिमान् ॥ १०७

न स मिथ्याभिशापेन अभिगम्यश्च केनचित् । ऐक्ष्वाकी सुषुवे पुत्रं शूरमद्भुतमीढुषम् ॥ १०८

मीढुषाज्जज्ञिरे शूराद्भोजायां पुरुषा दश । वसुदेवो महाबाहुः पूर्वमानकदुन्दुभिः ॥ १०९

देवभागस्तथा जज्ञे ततो देवश्रवाः पुनः । अनाधृष्टिः कुनिश्चैव नन्दिश्चैव सकृद्यशः ॥ ११०

श्यामः समीढुः शंसस्युः पञ्च चास्य वराङ्गनाः । श्रुतकीर्तिः पृथा चैव श्रुतदेवी श्रुतिश्रवाः ॥ १११

राजाधिदेवी च तथा पञ्चैता वीरमातरः । वृद्धस्य श्रुतदेवी च कारूषं सुषुवे नृपम् ॥ ११२

कैकेयाच्छ्रुतकीर्तेस्तु जज्ञे सैन्धवको नृपः । श्रुतश्रवसि चैद्यस्य सुनीथः समपद्यत ॥ ११३

राजाधिदेव्याः संभूतो(ता) धर्मभार्याऽभिमर्दिता । शूरः सख्येन वद्धोऽसौ कुन्तिभोजे पृथां ददौ

एवं कुन्ती समाख्याता वसुदेवस्वसा पृथा । कुन्तिभोजोऽददात्तां तु पाण्डोर्भार्यामनिन्दिताम् ॥

पाण्डोरर्थेऽसूत देवी देवपुत्रान्महारथान् । धर्माद्युधिष्ठिरो जज्ञे वाताज्जातो वृकोदरः ॥ ११६

इन्द्राद्धनंजयश्चैव शक्रतुल्यपराक्रमः । योऽसौ त्रिपुरुषाज्जातस्त्रिभिरंशैर्महारथः ॥ ११७

देवकार्यकरश्चैव सर्वदानवसूदनः । अवध्यश्चापि शक्रस्य दानवा येन घातिताः ॥ ११८

स्थापितौ यः स शक्रेण लब्धवर्चास्त्रिविष्टपे । कुशस्थलीं समानीतौ प्रतिमौ देवपूजितौ ॥ ११९

पाँरिजातोद्भवौ देवौ विश्वकर्मा चकार यौ । मर्त्यलोकमथाऽऽनीय नरनारायणावुभौ ॥ १२०

अर्जुनो वासुदेवश्च द्वौ देवौ तत्र चक्रतुः । तृतीयमर्जुनं चक्रे केशवार्धं तु केशवम् ॥ १२१

स्थापयित्वा पुनर्जातौ भुवो भारावतारणात् । माद्रवत्यां तु जनितावश्विनाविति नः श्रुतम् १२२

नकुलः सहदेवश्च रूपसत्त्वगुणान्वितौ । रोहिणी पौरवी नाम भार्या चाऽऽनकदुन्दुभेः ॥ १२३

लेभे ज्येष्ठं सुतं रामं सारणं च रणप्रियम् । दुर्धरं दमनं चैव पिण्डारकमहाहनुम् ॥ १२४

अथ माया त्वमावास्या देवकी या भविष्यति । तस्यां जज्ञे महाबाहुः पूर्वं तु स प्रजापतिः ॥

अनुजातोऽभवत्कृष्णः सुभद्रा भद्रभाषिणी । विजयो रोचमानस्तु वर्धमानश्च देवलम् ॥ १२६

एते सर्वे महात्मान उपदेव्यां प्रजज्ञिरे । अगावहं महात्मानं वृकदेव्यामजायत ॥ १२७

वृकदेव्यां स्वयं जज्ञे मन्दको नाम नामतः । सप्तमं देवकी पुत्रं रेमन्तं सुषुवे नृप ॥ १२८

गवेषणं महाभागं सङ्ग्रामेष्वपराजितम् । श्रद्धादेव्यां विहारे तु वने विचरता पुरा(?) ॥ १२९

वैश्यायां समधाच्छौरिः पुत्रं कौशिकमग्रजम् । श्रुतंधराऽथ राज्ञी तु सौरगन्धपरिग्रहः ॥ १३०

पुत्रं च कपिलं चैव वसुदेवात्मजो बली । जनानामभिषङ्गोऽभूत्प्रथमः स धनुर्धरः ॥ १३१

सौभद्रश्चाभवश्चैव महासत्त्वौ बभूवतुः । देवभागसुतश्चापि प्रस्तावः स बुधः स्मृतः ॥ १३२

पण्डितं प्रथमं वाहुदेवश्रवसमुत्तमम् । जज्ञ इक्ष्वाकुकुलतो अनाधृष्टेर्यशस्विनी ॥ १३३

निवृत्तशत्रुः शत्रुघ्नः शुद्धात्तस्मादजायत । गण्डूषायामपत्यानि तुष्टः कृष्णः शतं ददौ ॥ १३४

---

१ क. ख. ङ. च. °श्वग्रीवोऽश्वबा° । २ ग. घ. ज. °श्च श्रविष्ठः शुचिरस्त° । ख. ङ. °श्च श्राविष्ठाश्रवणे स्त्रियौ । इ° । ३ क. ख. ग. घ. ङ. च. ज. °मीकः सप्ताख्यः प° । ४ क. ख. ङ. च. संतर्दनो । ५ क. ख. ङ. च. धर्माभयविसर्जिता । ग. घ. ज. धर्मभार्या विसर्जिता । ६ झ. अत्र । ७ क. ख. घ. ङ. च. ज. पारियात्रोद्भवौ । ८ क. ख. ग. घ. ङ. च. ज. तुः । द्विती° । ९ झ. °नर्यातौ । १० ग. त्रिनयो । ११ ग. ज. °त्मानमुपदे° । १२ घ. °नं बृहद्देव्या° । १३ क. ख. घ. च. त्वङ्गदो । १४ ञ. सप्तमी । १५ क. ख. ङ. च. श्रुतदेव्या । घ. ज. श्राद्धदेव्यां । १६ घ. ज. °मत्रज° । १७ घ. ङ. ज. °नानां च विषादोऽभू° । १८ क. ख. घ. ङ. च. ज. यदिशं । ञ. पट्टिशे । १९ झ. °मुद्भवम् । २० क. ख. घ. ङ. च. ज. °तो सनस्विन्या यश° ।

सुचन्द्रं तु महाभागं वीर्यवन्तं महाबलम् । रतिपालश्च रक्षिश्च नन्दनस्य सुतावुभौ ॥ १३५
समीकपुत्राश्चत्वारो विक्रान्ताः सुमहाबलाः । विरजश्च धनुश्चैव व्योमस्तस्य सस्रञ्जयः ॥ १३६
अनपत्योऽभवद्व्योमः समीकस्तु वनं ययौ । यो जायमानो भोजत्वं राजर्षित्वमवाप्नवान् ॥ १३७
कृष्णस्य जन्माभ्युदयं यः कीर्तयति नित्यशः । शृणोति वा नरो नित्यं सर्वपापैः प्रमुच्यते १३८
अथ देवो महादेवः पूर्वं कृष्णः प्रजापतिः । विहारार्थं स देवेशो मानुषेष्वप्यजायत ॥ १३९
देवक्यां वसुदेवेन तपसा पुष्करेक्षणः । चतुर्बाहुस्तु संजातो दिव्यरूपो जनप्रियः ॥ १४०
श्रीवत्सलक्षणं देवं दृष्ट्वा देवैः सलक्षणम् । उवाच वसुदेवस्तं रूपं संहर वै प्रभो ॥ १४१
भीतोऽहं कंसदेवस्य ततस्त्वेतद्ब्रवीमि ते । मम पुत्रा हतास्तेन श्रेष्ठाः षड्भीमदर्शनाः ॥ १४२
वसुदेववचः श्रुत्वा रूपं *संहरदच्युतः । अनुज्ञाप्य तु तं शौरिर्नन्दगोपगृहं +नयत् ॥ १४३
दत्त्वा तं नन्दगोपाय रक्ष्यतामिति चाब्रवीत् । अतस्तु सर्वकल्याणं यादवानां भविष्यति ॥ १४४
अयं तु गर्भो देवक्या यावत्कंसं हनिष्यति । तावत्पृथिव्यां भविताऽक्षेमो भारवहः परम् ॥ १४५
ये तु दुष्टाश्च राजानस्तांस्तु सर्वान्हनिष्यति । कौरवाणां रणे भूते सर्वक्षत्रसमागमे ॥ १४६
सारथ्यमर्जुनस्यैष स्वयं देवः करिष्यति । निःक्षत्रियां धरां कृत्वा भोक्ष्यते शेषतां गताम् ॥
सर्वं यदुकुलं चैव देवलोकं नयिष्यति ॥ १४७

भीष्म उवाच—

क एष वसुदेवस्तु देवकी का यशस्विनी । नन्दगोपश्च कश्चैष यशोदा का महाव्रता ॥ १४८
या विष्णुं पोषितवती यां च मातेत्यभाषत । या गर्भं जनयामास या चैनं समवर्धयत् ॥ १४९

पुलस्त्य उवाच—

पुरुषः कश्यपश्चासावदितिस्तु प्रिया स्मृता । ब्रह्मणः कश्यपस्त्वंशः पृथिव्यास्त्वदितिस्तथा ॥
नन्दो द्रोणः समाख्यातो यशोदाऽथ धराऽभवत् । अथ कामान्महाबाहुर्देवक्याः समपूरयत् ॥
यत्तया काङ्क्षितं पूर्वमजातस्य महात्मनः । अचिरं स महादेवः प्रविष्टो मानुषीं तनुम् ॥ १५२
मोहयन्सर्वभूतानि योगाद्योगी समाययौ । नष्टे यज्ञे तथा धर्मे विष्णुर्वृष्णिकुले प्रभुः ॥ १५३
कर्तुं धर्मव्यवस्थानमसुराणां प्रणाशनम् । रुक्मिणी सत्यभामा च सत्या नाग्नजिती तथा ॥ १५४
सुमित्रा च तथा शैब्या गान्धारी लक्ष्मणा तथा । सुभीमा च तथा माद्री कौशल्या विरजा च या
एवमादीनि देवीनां सहस्राणि च षोडश । रुक्मिणी जनयामास पुत्रांत्रणविशारदान् ॥ १५६
चारुदेष्णं रणे शूरं प्रद्युम्नं च महाबलम् । सुचारुं चारुभद्रं च सदश्वं ह्रस्वमेव च ॥ १५७
सप्तमं चारुगुप्तं च चारुभद्रं च चारुकम् । चारुहासं कनिष्ठं च कन्यां चारुमतीं तथा ॥ १५८
जज्ञिरे सत्यभामायाः सप्त भीमरथक्षमाः । रोहितो दीप्तिमांश्चैव ताम्रबन्धो जलंधमः ॥ १५९

* अडभाव आर्षः । + अत्राप्यडभाव आर्षः ।

१ क. ख. ग. घ. ङ. च ज. रन्तिश्च नन्दिन ° । २ क. ख. ङ. च. °मः स्रञ्जयस्य धनञ्जयः । यो° । ग. घ. ज. °मः समीकपुधनञ्जयौ । ३ क. ख. ग. घ ङ. च. ज. देवोऽसौ । ४ क. ख. ग. घ ङ. च. ज. जनाश्रयः । ५ क. ख. ग. घ. ङ. च. ज. °मविक्रमाः । व° । ६ झ. °र्वान्दमिष्य° । ७ क. ख. ग. घ. ङ. च. ज. °लं देवादे° । ८ क. ख. ग. घ. ङ. च. ज. विजया तथा । ए° । ९ घ. दाराणां । १० क. ख. ग. घ. ङ. च. ज. °त्रान्शृणु वि° । ११ क. ख. ग. घ. ङ च. ज. °रुदीप्तं र° । १२ क. ख. ग. घ. ङ. च. ज. °माया भानुर्भीमरथः क्षणः । रो° । १३ क. ख. ङ. च. ताम्रवत्यो । १४ ख. घ. जलंधरः ।

ततस्ते जज्ञिरे तेषां स्वस्वारं च(चैव) यवीयसी । जाम्बवत्यां सुतो जज्ञे साम्ब इत्येव शोभनः ।
सौरशास्त्रस्य कर्ता च प्रतिमा मन्दिरस्य च । मूलस्थानं निवेशश्च कृतस्तेन महात्मना ॥ १६१
तुष्टेन देवदेवेन कुष्ठरोगो विनाशितः । सुमित्रं चारुमित्रं च मित्रविन्दं वराशनम् ॥ १६२
मित्रबाहुं सुनीथं च नाग्नजित्याः सुता अमी । एवमादीनि पुत्राणां सहस्राणि निबोधत॥१६३
*अशीतिश्च सहस्राणां वासुदेवसुतास्तथा+। प्रद्युम्नस्य च दायादो वैदर्भ्यां बुद्धिसत्तमः १६४
अनिरुद्धो रणे योद्धा जज्ञेऽस्य मृगकेतनी । काम्या सुपार्श्वतनया साम्बं लेभे तरस्विनम् १६५
सप्त प्रकृतयो देवाः पराः पञ्च प्रकीर्तिताः । तिस्रः कोट्यः प्रवीराणां यादवानां महात्मनाम् ॥
षष्टिः शतसहस्राणि वीर्यवन्तो महाबलाः । ते देवाः सर्व एवेह उत्पन्नास्ते महौजसः ॥ १६७
देवासुरे हता ये च असुरा वै महाबलाः । इहोत्पन्ना मनुष्येषु बाधन्ते सर्वमानवान् ॥ १६८
तेषामुत्सादनार्थाय उत्पन्नो यादवे कुले । कुलानां शतमेकं च यादवानां महात्मनाम्॥ १६९
†सर्वमेतत्कुले जातं वर्धने वैष्णवे कुले । विष्णुस्तेषां प्रणेता च प्रभुत्वे च व्यवस्थितः ॥
निदेशस्थायिनस्तस्य ऋध्यन्ते सर्वयादवाः ॥ १७०

भीष्म उवाच—

सप्तर्षयः कुबेरश्च यक्षो मणिधरस्तथा । सात्यकिर्नारदश्चैव सिद्धा धन्वन्तरिस्तथा ॥ १७१
आदिदेवस्तथा विष्णुरेभिस्तु सह दैवतैः । किमर्थं सह संभूताः सुरसंभूतयः क्षितौ ॥ १७२
भविष्याः कति चैवान्ये प्रादुर्भावा महात्मनः । ब्रह्मक्षत्रेषु सर्वेषु किमर्थमिह जायते ॥ १७३
यदर्थमिह संभूतो विष्णुर्वृष्ण्यन्धके कुले । पुनः पुनर्मनुष्येषु तन्मे त्वं ब्रूहि पृच्छतः ॥ १७४

पुलस्त्य उवाच—

शृणु भूप प्रवक्ष्यामि रहस्यातिरहस्यकम् । यथा दिव्यतनुर्विष्णुर्मानुषेष्विह जायते ॥ १७५
युगान्ते तु पुरा वृत्ते काले प्रशिथिले प्रभुः । देवासुरमनुष्येषु जायते हरिरीश्वरः ॥ १७६
हिरण्यकशिपुर्दैत्यस्त्रैलोक्यस्य प्रशासिता । बलिनाऽधिष्ठिते चैव पुनर्लोकत्रये क्रमात् ॥ १७७
सख्यमासीत्परमकं देवानामसुरैः समम् । युगाख्या दश संपूर्णा आसीदव्याकुलं जगत् ॥ १७८
निदेशस्थायिनश्चापि तयोर्देवासुराः स्वयम् । बद्धे बलौ विमर्दोऽयं संप्रवृत्तः सुदारुणः ॥ १७९
देवानामसुराणां च घोरः क्षयकरो महान् । कर्तुं धर्मव्यवस्थानं जायते मानुषेष्विह ॥
भृगोः शापनिमित्तं तु देवासुरकृते तदा ॥ १८०

भीष्म उवाच—

कथं देवासुरकृते हरिर्देहमवाप्तवान् । देवासुरं यथावृत्तं तन्मे कथय सुव्रत ॥ १८१

पुलस्त्य उवाच—

तेषां जयनिमित्तं वै सङ्ग्रामाः स्युः सुदारुणाः । अवतारा दश द्वौ च शुद्धा मन्वन्तरे स्मृताः ॥
नामतस्तु समासेन शृणु तेषां विवक्षितम् । प्रथमो नारसिंहस्तु द्वितीयश्चापि वामनः ॥ १८३

---

* एतदर्धस्थाने झ. पुस्तके 'शतसहस्रपुत्राणां संजातं तस्य धीमतः' इति दृश्यते । + एतदग्रे झ. पुस्तके "भूरीन्द्रसेनो भूरिश्च गवेषणसुतावुभौ" इत्यर्धमधिकं दृश्यते । † अस्यार्धस्य क्वापि संबन्धो नास्ति । इदं च झ. पुस्तक एव ।

१ज. °म् । अत्र सत्त्वप्रकृतयो देवाश्च परिकी° । २ ख. ग. घ. ङ. च. ज. °मुद्धरणार्थां° । ३ क. ख. ग. घ. ङ. च. ज. शिवो । ४ क. ख. ग. घ. ङ. च. ज. सर्वक्षेत्रेषु । ५ झ. यस्य । ६ झ. °ते व्यवहारं प्राप्तवांस्तु सः । ७ झ. जगन्नाभि° । ८ ज. च शण्डामर्कान्त° ।

तृतीयस्तु वराहश्च चतुर्थोऽमृतमन्थनः । संग्रामः पञ्चमश्चैव सुघोरस्तारकामयः ॥ १८४
षष्ठो ह्याजीवकाख्यश्च सप्तमस्त्रैपुरस्तथा । अष्टमश्चान्धकवधो नवमो वृत्रघातकः ॥ १८५
धातस्तु दशमश्चैवं ततो हालाहलः स्मृतः । प्रथितो द्वादशस्तेषां घोरः कोलाहलस्तथा ॥ १८६
हिरण्यकशिपुर्दैत्यो नरसिंहेन सूदितः । वामनेन बलिर्बद्धस्त्रैलोक्याक्रमणे पुरा ॥ १८७
हिरण्याक्षो हतो द्वंद्वे प्रतिवादे तु दैवतैः । दंष्ट्रया तु वराहेण समुद्रस्थो द्विधा कृतः ॥ १८८
प्रह्लादो निर्जितो युद्ध इन्द्रेणामृतमन्थने । विरोचनस्तु प्राह्लादिर्नित्यमिन्द्रवधोद्यतः ॥ १८९
इन्द्रेणैव व्यतिक्रम्य निहतस्तारकामये । अशक्नुवत्सु देवेषु गोचरे त्रिपुरे वसन् ॥ १९०
निहता दानवाः सर्वे त्रैलोक्ये त्र्यम्बकेण तु । असुराश्च पिशाचाश्च दानवाश्चान्धके वधे ॥ १९१
हता देवमनुष्यैस्ते पितृभिश्चैव सर्वशः । संपृक्तो दानवैर्वृत्रो घोरे कोलाहले हतः ॥ १९२
तदा विष्णुसहायेन महेन्द्रेण निपातितः । हते ध्वजे महेन्द्रेण मायाछन्नस्तु योगवित् ॥ १९३
ध्वजेन क्षणमाविश्य विप्रचित्तिः सहानुगः । दैत्याश्च दानवाश्चैव संजाताः कृत्स्नशस्तु ते १९४
जयकोलाहले सर्वैर्देवैः परिवृतो वृषः । यज्ञस्यावभृथे जित्वा शण्डामर्कास्तु(?) दैवतैः ॥ १९५
एते देवासुरा वृत्ताः सङ्ग्रामा द्वादशैव तु । देवासुरक्षयकराः प्रजानां च हिताय वै ॥ १९६
हिरण्यकशिपो राज्यं वर्षाणामर्बुदद्वयम् । द्विसप्ततिस्तथाऽन्यानि नियुतान्यधिकानि च ॥ १९७
अशीतिश्च सहस्राणि त्रैलोक्यैश्वर्यताऽभवत् । पर्यायेण तु राजाऽभूद्बलिर्वर्षार्बुदं पुनः ॥ १९८
षष्टिश्चैव सहस्राणि नियुतानि च विंशतिः । बले राज्याधिकारस्तु यावत्कालं बभूव ह ॥ १९९
तावत्कालं तु प्रह्लादो निर्वृतो ह्यसुरैः सह । इन्द्रार्थमेते विज्ञेया असुराणां महौजसाम् ॥ २००
त्रैलोक्यमिदमव्यग्रं महेन्द्रेणानुपाल्यते । [*असंपन्नमिदं सर्वं यावद्वर्षायुतं पुनः ॥ २०१
प्रह्लादस्य कृते ह्यस्मिंस्त्रैलोक्ये कार्यपर्ययात् । पर्यायेणैव संप्राप्ते त्रैलोक्ये पाकशासने ] ॥ २०२
ततोऽसुरान्परित्यज्य यज्ञो देवानगच्छत । यज्ञे देवानथ गते दितिजाः काव्यमब्रुवन् ॥ २०३

दैत्या ऊचुः—

हृतं मघवता राज्यं त्यक्त्वा यज्ञः सुरान्गतः । स्थातुं न शक्नुमो ह्यत्र प्रविशामो रसातलम् ॥
एवमुक्तोऽब्रवीदेतान्विषण्णान्सान्त्वयन्गिरा । मा भैष्ट धारयिष्यामि तेजसा स्वेन वोऽसुराः २०५
इष्टिश्चौषधयश्चैव धरायां यच्च वर्तते । मयि तिष्ठति तत्सर्वं पादमात्रं सुरेषु वै ॥ २०६
तत्सर्वं वः प्रदास्यामि युष्मदर्थे धृता मया । ततो देवास्तु तान्दृष्ट्वा धृतान्काव्येन धीमता २०७
आमन्त्रयन्त देवा वै सज्जाः सर्वे जिघृक्षया । काव्यो ह्येष इदं सर्वं व्यावर्तयति नो बलात् ॥ २०८
साधु गच्छामहे तूर्णं यावन्न च्यावयेत वै । प्रसह्य हत्वा शिष्टांस्तु पातालं प्रापयामहे ॥ २०९
ततो देवास्तु संरब्धा दानवानुपसृत्य ह । ततस्ते वध्यमानास्तु काव्यमेवाभिदुद्रुवुः ॥ २१०
ततः काव्यस्तु तान्दृष्ट्वा तूर्णं देवैरभिद्रुतान् । रक्षाकार्येण संहृत्य देवेभ्यस्तान्सुरार्दितान् ॥ २११

---

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

---

१ ग. घ. °मण्डनः । २ क. ख. ग. घ. ङ. ज. ध्वजश्च । ३ ग. ज. °व वृत्राख्यश्च ततः परम् । प्र° । ४ ञ. हालाहले । ५क. ख. ढ. च. ध्वजलक्ष° । ६ झ. एवं वब्रुंस्तदा दीनान्विषण्णांस्तांस्तपस्विराट् । मा भैष्ट आनयिष्यामि तेजसा स्वेन वोऽसुराः । वृष्टेर्निरोधतश्चैव रसावसुचयत्परम् । कृत्स्नानि मर्त्यैस्तिष्ठन्ति यावत्तेषां समूहकम् । त° । ७ ञ. °राः । मन्त्राश्चौ° । ८ ञ. वृता । ९ घ. ज. समन्वयति । १० झ. व्यावयेत । ११ क. ख. ङ. च. ज. जित्वा । १२ ग. °नवांश्च प्रगृह्य ह । १३ क, ख. ङ. च. °नास्तैः का° ।

काव्यं दृष्ट्वा स्थितं देवा निर्विशङ्कास्तु ते जहुः । ततः काव्यो विचिन्त्याथ ब्रह्मणो वचनं हितम्+
तानुवाच ततः काव्यः पूर्ववृत्तमनुस्मरन् । त्रैलोक्यं वो हृतं सर्वं वामनेन त्रिभिः क्रमैः ॥ २१३
बलिर्बद्धो हतो जम्भो निहतश्च विरोचनः । महासुरा द्वादशसु संग्रामेषु सुरैर्हताः ॥ २१४
तैस्तैरुपायैर्भूयिष्ठैर्निहतास्तु प्रधानतः । केचिच्छिष्टास्तु यूयं हि युद्धं नास्तीति मे मतम् ॥ २१५
तां नीतिं वो विधास्यामि उपास्ये कालपर्ययम् । यास्याम्यहं महादेवं मन्त्रार्थे विजयावहम् ॥
अप्रतीपांस्ततो मन्त्रान्देवात्प्राप्य महेश्वरात् । संयोत्स्यध्वे पुनर्देवैस्ततः प्राप्स्यथ वै जयम् ॥२१७
ततस्ते कृतसंवादा देवानूचुस्तदाऽसुराः । न्यस्तशस्त्रा वयं सर्वे निःसंनाहा रथं विना ॥ २१८
वयं तपश्चरिष्यामः संवृता वल्कलैस्तथा । प्रह्रादस्य वचः श्रुत्वा सत्याभिव्याहृतं ततः ॥ २१९
ततो न्यवर्तयन्सर्वे विज्वरा मुदिताश्च ये । न्यस्तशस्त्रेषु दैत्येषु विनिवृत्तास्तदा सुराः ॥ २२०
ततस्तानब्रवीत्काव्यः कंचित्कालमुपासिताः । निरुत्सिक्तास्तपोयुक्ताः कालकार्यार्थसाधकाः ॥
पितुराश्रमसंस्था वै मां प्रतीक्षथ दानवाः । तानुद्दिश्यासुरान्काव्यो महादेवमपद्यत ॥ २२२

शुक्र उवाच—

मन्त्रानिच्छाम्यहं देव ये न सन्ति बृहस्पतौ । पराभवाय देवानामसुराणां जयाय च ॥ २२३
एवमुक्तोऽब्रवीद्देवो व्रतं त्वं चर भार्गव । पूर्णवर्षसहस्रं तु कणधूममधःशिराः ॥ २२४
यदि पश्यसि भद्रं ते ततो मन्त्रानवाप्स्यसि । तथेति समनुज्ञाप्य शुक्रस्तु भृगुनन्दनः ॥ २२५
पादौ संस्पृश्य देवस्य बाढमित्यब्रवीद्वचः । व्रतं चराम्यहं देव त्वयाऽऽदिष्टोऽथ वै प्रभो॥ २२६
आदिष्टो देवदेवेन कृतवान्भार्गवो मुनिः । तदा तस्मिन्गते शुक्रे असुराणां हिताय वै ॥ २२७
मन्त्रार्थं तनुते काव्यो ब्रह्मचर्यं महेश्वरात् । तद्बुद्ध्वा नीतिपूर्वं तु राजन्यास्तु तदा सुखम् ॥
अस्मिंश्छिद्रे तदाऽमर्षाद्देवास्तानभिदुद्रुवुः । दंशिताः सायुधाः सर्वे बृहस्पतिपुरःसराः ॥ २२९
दृष्ट्वाऽसुरगणा देवान्प्रगृहीतायुधान्पुनः । उत्पेतुः सहसा सर्वे सहत्रासा वचोऽब्रुवन् ॥ २३०

दैत्या ऊचुः—

न्यस्तशस्त्रा वयं देवा आचार्ये व्रतमास्थिते । दत्त्वा भवन्तस्त्वभयं संप्राप्ता नो जिघांसया ॥
अनमर्षा वयं सर्वे त्यक्तशस्त्राश्च संस्थिताः । चीरकृष्णाजिनधरा निष्क्रिया निष्परिग्रहाः ॥२३२
रणे विजेतुं देवांश्च न शक्ष्यामः कथंचन । अयुद्धेन प्रपत्स्यामः शरणं काव्यमातरम् ॥ २३३
ज्ञापयामः कृच्छ्रमिदं यावन्नाभ्येति नो गुरुः । निवृत्ते च तथा शुक्रे योत्स्यामो दंशितायुधाः॥
एवमुक्त्वा च तेऽन्योन्यं शरणं काव्यमातरम् । प्रापद्यन्त ततो भीतास्तेभ्यो दत्त्वाऽभयं त सा॥

काव्यमातोवाच—

न भेतव्यं न भेतव्यं भयं त्यजथ दानवाः । मत्संनिधौ वर्ततां वो न भीर्भवितुमर्हति ॥ २३६
तया चाप्युपपन्नांस्तान्दृष्ट्वा देवांस्तु दानवान् । अभिजग्मुः प्रसह्यैतानविचार्य बलाबलम् ॥ २३७
ततः सा वध्यमानांस्तान्देवैर्दृष्ट्वाऽसुरांस्तथा । देवी क्रुद्धाऽब्रवीद्देवान्निद्रया मोहयाम्यहम् ॥ २३८
संवृत्य सर्वसंभारान्निद्रां सा व्यसृजत्तदा । संस्तभ्य देवी व्यचरद्योगयुक्ता तपोधना ॥ २३९

+ एतदग्रे झ. पुस्तके " उशना मन्त्रयुक्तश्च योगविद्दैत्यवर्धनः " इत्यर्धमधिकम् ।

१ क. ख. ग. घ. ङ. च. ञ. °यिष्ठा नि° । २ ञ. योत्स्यामहे । ३ क. ख. ग. घ. ङ. च. ज. °ष्टोऽद्य वै । ४ झ. ये । ५ क. ग. घ. च. ज. °वास्तदाऽसुरान् । ख. °वा मुदाऽसुरान् । ६ ख. ग. घ. ङ. च. ज. संभृत्य । ७ ख. ग. च. °दा । तस्तम्भ देवी च बलाचो° ।

ततस्तं स्तम्भितं दृष्ट्वा इन्द्रं देवांश्च मूढवत् । प्राद्रवन्त ततो भीता इन्द्रं दृष्ट्वा वशीकृतम् ॥
गतेषु सुरसंघेषु विष्णुरिन्द्रमभाषत ॥ २४०

विष्णुरुवाच—

मां त्वं प्रविश भद्रं ते नयिष्ये[३] त्वां सुरोत्तम । एवमुक्तस्ततो विष्णुं प्रविवेश पुरंदरः ॥ २४१
विष्णुना रक्षितं दृष्ट्वा देवी क्रुद्धाऽब्रवीद्वचः ॥ २४२

काव्यमातोवाच—

एषा त्वां विष्णुना सार्धं दहामि मघवन्बलात् । मिषतां सर्वभूतानां दृश्यतां मे तपोबलम् ॥२४३
भयाभिभूतौ तौ देवाविन्द्रविष्णू बभूवतुः । कथं मुच्येव सहितौ विष्णुरिन्द्रमभाषत ॥ २४४
इन्द्रोऽब्रवीज्जहीह्येनां यावन्नौ न दहेत्प्रभो । विशेषेणाभिभूतोऽस्मि तदिमां जहि मा चिरम् ॥२४५
ततः समीक्ष्य विष्णुस्तां स्त्रीवधे कृच्छ्रमास्थितः । अभिध्याय ततश्चक्रमापन्नं सत्वरं प्रभुः ॥ २४६
ततः स त्वरया युक्तः शीघ्रकारी भयान्वितः । ज्ञात्वा विष्णुस्ततस्तस्याः क्रूरं देव्याश्चिकीर्षितम् ॥
क्रुद्धश्चक्रं समादाय शिरश्चिच्छेद वै भयात् । तं दृष्ट्वा स्त्रीवधं घोरं चुक्रोध भृगुरीश्वरः ॥
ततोऽभिशप्तो भृगुणा विष्णुर्भार्यावधे कृते ॥ २४८

भृगुरुवाच—

यस्मात्ते जानता धर्ममवध्या स्त्री निषूदिता । तस्मात्त्वं सप्तकृत्वो ह मानुषेषूपयास्यसि ॥ २४९
ततस्तेनाभिशापेन नष्टे धर्मे पुनः पुनः । लोकस्य च हितार्थाय जायते मानुषेष्विह ॥ २५०
अथ व्याहृत्य विष्णुं स तदादाय शिरः स्वयम् । समानीय ततः कायं पाणौ गृह्येदमब्रवीत् ॥२५१

भृगुरुवाच—

एषा त्वं विष्णुना देवि हता संजीवयाम्यहम् । यदि कृत्स्नो मया धर्मो ज्ञायते चरितोऽपि वा ॥
तेन सत्येन जीवस्व यदि सत्यं ब्रवीम्यहम् । ततस्तां प्रोक्ष्य शीताभिरद्भिर्जीवेति सोऽब्रवीत् २५३
ततोऽभिव्याहृते तस्मिन्देवी संजीविता तदा । ततस्तां सर्वभूतानि दृष्ट्वा सुप्तोत्थितामिव ॥ २५४
साधु साध्विति दृष्ट्वैव वाचस्ताः सर्वतोऽब्रुवन् । एवं प्रत्याहृता तेन देवी सा भृगुणा तदा ॥२५५
मिषतां देवतानां हि तदद्भुतमिवाभवत् । असंभ्रान्तेन भृगुणा पत्नी संजीविता पुनः ॥ २५६
दृष्ट्वा चेन्द्रो नालभत शर्म काव्यभयात्पुनः । प्रजागरे ततश्चेन्द्रो जयन्तीमिदमब्रवीत् ॥ २५७
संधिकामोऽभ्यधाद्वाक्यं स्वां कन्यां पाकशासनः ॥ २५८

इन्द्र उवाच—

एष काव्यो ह्यनिन्द्राय व्रतं चरति दारुणम् । तेनाहं व्याकुलः पुत्रि कृतो मतिमता दृढम् ॥ २५९
*गच्छ मोहय तं काव्यं शीघ्रमायतलोचने । तैस्तैर्मनोनुकूलैश्च उपचारैरतन्द्रिता ॥ २६०
आराधय तथा पुत्रि यथा तुष्येत ते द्विजः । गच्छ त्वं तस्य दत्ताऽसि प्रयत्नं कुरु सुव्रते ॥ २६१
एवमुक्ता जयन्ती सा वचः संगृह्य तत्पितुः । अगच्छद्यत्र घोरं स तपो ह्यारभ्य तिष्ठति ॥ २६२

---

* इदमर्धं झ. पुस्तकस्थम् ।

---

१ झ. °वा मयूखत्र° । २ ग. घ. ज. °च—मा भैः प्र° । ३ ग. घ ज. रक्षिष्ये । ४ क. ग. घ. ङ. च. ज. °म् । तयाऽभि° । ५ ख. ग. ज. °पपत्स्यसे । त° । ६ क. ख. ग. घ. ङ. च. ज. सोऽपि । ७ क. ग. ङ. च. °त्याहृता । ८ झ. °र्भे कोपभ° । ९ झ. °ता । काव्यस्त्वया त° । १० क. ख. ग. घ. ङ. च. ज. मत्कृते ।

तं दृष्ट्वा तु पिबन्तं सा कणधूममधोमुखम् । यत्नेन याप्यमानं च कुण्डाधारेण पावनम् ॥ २६३
दृष्ट्वा तं यतमानं तु देवी काव्यमवस्थितम् । शत्रूपधानं श्राम्यन्तं दुर्बलस्थितिमास्थितम् ॥ २६४
पित्रा यदुक्तं वाक्यं सा काव्ये कृतवती तदा । गीर्भिश्चैवानुकूलाभिः स्तुवन्ती वल्गुभाषिणी ॥ २६५
गात्रसंवाहनैः काले सेवमाना त्वचः सुखैः । व्रतचर्यानुकूलाभिरुपास्य बहुलाः समाः ॥ २६६
पूर्णे धूमव्रते तस्मिन्घोरे वर्षसहस्रके । वरेण च्छन्दयामास शिवः प्रीतोऽभवत्तदा ॥ २६७

महेश्वर उवाच—

एतद्व्रतं त्वयैकेन चीर्णं नान्येन केनचित् । तस्माद्वै तपसा बुद्ध्या श्रुतेन च दमेन च ॥ २६८
ओजसा च सुरान्सर्वांस्त्वमेकोऽभिभविष्यसि । यच्च किंचिन्मयि ब्रह्मन्विद्यते भृगुनन्दन ॥ २६९
प्रतिदास्यामि तत्सर्वं त्वया वाच्यं न कस्य चित् । किं भाषितेन बहुना अवध्यस्त्वं भविष्यसि ॥
एवं दत्त्वा वरं तस्मै भार्गवाय भवः पुनः । प्रजेशत्वं धनेशत्वमवध्यत्वं च वै ददौ ॥ २७१
एताँल्लब्ध्वा वरान्काव्यः संप्रहृष्टतनूरुहः । एवमाभाष्य देवेशमीश्वरं नीललोहितम् ॥ २७२
प्रह्वः कविस्ततस्तस्मै प्राञ्जलिः प्रणतोऽभवत् । ततः सोऽन्तर्हिते देवे जयन्तीमिदमब्रवीत् ॥ २७३

भार्गव उवाच—

कस्य त्वं सुभगे का वा दुःखिते मयि दुःखिता । महता तपसा युक्ता किमर्थं मां जुगुप्ससि ॥ २७४
अनया संस्थिता भक्त्या प्रश्रयेण दमेन च । स्नेहेन चैव सुश्रोणि प्रीतोऽस्मि वरवर्णिनि ॥ २७५
किमिच्छसि वरारोहे कस्ते कामः समुद्धृतः । तत्ते संपादयाम्यद्य यद्यपि स्यात्सुदुष्करम् ॥ २७६
एवमुक्ताऽब्रवीदेनं तपसा ज्ञातुमर्हसि । चिकीर्षितं हि मे ब्रह्मंस्त्वं हि वेद यथातथम् ॥ २७७
एतच्छ्रुत्वा ब्रवीदेनां दृष्ट्वा दिव्येन चक्षुषा । मया सह त्वं सुश्रोणि शतवर्षाणि भामिनि ॥ २७८
सर्वभूतैरदृश्या नः संप्रयोगमिहेच्छसि । देवि इन्दीवरश्यामे वरार्हे वामलोचने ॥ २७९
एवं वृणोषि कामांस्त्वं यदि वै वल्गुभाषिणी । एवं भवतु गच्छावो गृहं मे मत्तकाशिनि ॥ २८०
ततः स गृहमागत्य जयन्त्या सह चोशना । तयाऽवसत्समं देव्या शतवर्षाणि भार्गवः ॥ २८१
अदृश्यः सर्वभूतानां मायया संशितव्रतः । कृतार्थमागतं ज्ञात्वा शुक्रं सर्वे दितेः सुताः ॥ २८२
अभिजग्मुर्गृहं तस्य मुदिताश्च दिदृक्षवः । गता ये नैव पश्यन्ति मायया संवृतं गुरुम् ॥ २८३
लक्षणं तस्य संबुध्य नाद्याऽऽगच्छति नो गुरुः । एवं ते स्वानि धिष्ण्यानि गताः सर्वे यथाऽऽगताः
ततो देवगणाः सर्वे गत्वाऽऽङ्गिरसमब्रुवन् ॥ २८४

देवा ऊचुः—

दानवालयं तु भगवान्गत्वा तत्र च तां चमूम् । मोहयित्वाऽऽत्मवशगां क्षिप्रमेव तथा कुरु २८५
धिषणस्तान्सुरानाह एवमेव व्रजाम्यहम् । तेन गत्वा दानवेन्द्रः प्रह्लादस्तु वशीकृतः ॥ २८६
शुक्रो भूत्वा स्थितस्तत्र पौरोहित्यं चकार सः । स्थितो वर्षशतं साग्रमुशना तावदागतः ॥ २८७
दनुपुत्रैस्ततो दृष्टः सभायां तु बृहस्पतिः । उशना एक एवात्र द्वितीयो बहिरागतः ॥ २८८
सुमहत्कौतुक चात्र भविता विग्रहो दृढः । किं वदिष्यति लोकोऽयं विरोधोऽयं व्यवस्थितः २८९
सभायामास्थितो योऽय गुरुः किं नो वदिष्यति । एवं प्रजल्पतां तेषां दनूनां कविरागतः ॥ २९०

---

१ घ. ज. मूढचारेण । २ क. ख. ङ. च ज. तपस्यन्तं । ३ झ. त्वहर्मुख । त्र° । ४ झ. °तं मयै° । ५ क ख ङ. च. ज. प्रज्ञान्वितस्त । ६ ञ. समुद्यतः । ७ क. ख. ज. एवमुक्तोऽब्र° । ८ झ. °णि दशव° । ९ झ. °व्या दशव° । १० क. ख. ग. घ. ङ. च. ज. °यं यतः स्थि° ।

*स्वरूपधारिणं तत्र दृष्ट्वाऽऽसीनं बृहस्पतिम् । उवाच वचनं क्रुद्धः किमर्थं त्वमिहाऽऽगतः॥२९१
शिष्यान्मोहयसे मह्यं युक्तं सुरगुरोस्तव । मूढास्त्वमी न जानन्ति त्वन्मायामोहिता ध्रुवम्॥२९२
तन्न युक्तं तव ब्रह्मन्परशिष्यप्रधर्षणम् । व्रजस्व देवलोकं त्वं तिष्ठन्धर्ममवाप्स्यसि ॥ २९३
शिष्यो हि मे कचः पूर्वं हतो दानवपुंगवैः । विद्यार्थी तनयो ब्रह्मंस्तवायोग्या गतिस्त्विह २९४
श्रुत्वा तु तस्य तद्वाक्यं स्मितं कृत्वा पुनः पुनः । सन्ति चोराः पृथिव्यां ये परद्रव्यापहारकाः॥
एवंविधा न दृष्टाश्च रूपदेहापहारिणः । वृत्रघातेन चेन्द्रस्य ब्रह्महत्या पुराऽभवत् ॥ २९६
लोकायतिकशास्त्रेण भवता सा तिरस्कृता । जानामि त्वामाङ्गिरसं देवाचार्यं बृहस्पतिम् ॥२९७
मद्रूपधारिणं प्राप्तं सर्वे पश्यत दानवाः । एष वो मोहनायालं प्राप्तो विष्णुर्विचेष्टितैः ॥ २९८
तदेनं शृङ्खलैर्बद्ध्वा क्षिप्यतां लवणार्णवे । पुनरेवाब्रवीच्छुक्रः +पुरोधाऽयं दिवौकसाम् ॥ २९९
मोहिता नूनमेतेन क्षयं यास्यथ दानवाः । भो भोऽहं दानवेन्द्रेह मोहितोऽसि दुरात्मना॥ ३००
किमर्थं भवता त्यक्तः कृतश्चान्यः पुरोहितः । देवाचार्योऽङ्गिरःपुत्र एष राजन्बृहस्पतिः ॥ ३०१
वञ्चितोऽसि न संदेहो हितार्थं तु दिवौकसाम् । त्यजस्वैनं महाभाग शत्रुपक्षजयावहम् ॥ ३०२
ननु शिष्यभयाद्यातः पूर्वमेवमहं विभो । जलमध्यस्थितः पीतो महादेवेन शंभुना ॥ ३०३
उदरस्थस्य मे जातं साग्रं वर्षशतं किल । उदराच्छुक्र इत्याह शिष्येवा(ष्व)हं प्रवेशितः॥ ३०४
वरदः प्राह मां देवः शुक्रेष्टं त्वं वरं वृणु । मया वृतो वरो राजन्देवदेवात्पिनाकिनः ॥ ३०५
मनसा चिन्तिताश्चार्था मे भवन्तु सुरेश्वर । अन्यच्च सकलमिष्टं प्रसादात्तव शंकर ॥ ३०६
एवमस्त्विति देवेन प्रेषितोऽस्मि तवान्तिकम् । तावदत्राभवच्चान्यः पुरोधास्ते बृहस्पतिः ॥ ३०७
दृष्टः सत्यं दानवेन्द्र मयोक्तं तन्निशामय । बृहस्पतिस्तदा वाक्यं प्रह्लादं प्रत्यभाषत ॥ ३०८

बृहस्पतिरुवाच—

नाहमेतं प्रजानामि देवं वा दानवं परम् । मद्रूपधारिणं राजन्वञ्चनार्थं तवाऽऽगतम् ॥ ३०९
ततस्ते दानवाः सर्वे साधु साध्विति चाब्रुवन् । पुरोधाः पौर्विको नोऽस्तु यो वा को वा भवत्विति
नानेन कार्यमस्माकं यातु ह्येष यथाऽऽगतः । सक्रोधमशपत्काव्यो दानवेन्द्रान्समागतान् ॥ ३११

काव्य उवाच—

त्यक्तो यथाऽहं युष्माभिस्तथा सर्वेऽचिरादिव । गतश्रीकान्गतप्राणान्पश्येऽहं दुःखजीविकान् ॥
सुघोरामापदं प्राप्तानचिरादेव सर्वशः । एवमुक्त्वा गतः काव्यो यदृच्छातस्तपोवनम् ॥ ३१३
तस्मिन्गते ततः शक्रे स्थितस्तत्र बृहस्पतिः । पालयन्दानवांस्तत्र कंचित्कालमतिष्ठत ॥ ३१४
ततो बहुतिथे काले व्यतिक्रान्ते नरेश्वर । संभूय दानवाः सर्वे पर्यपृच्छंस्तदा गुरुम् ॥ ३१५

* इदमर्धं झ.पुस्तकस्थम् । +संधिरार्ष एवमन्यत्रापि ।

१ क. ख. ङ. च. ज. °ढास्ते त्वां न । ग. घ. °ढास्ते मां न । २ ख. ङ. धर्मस्त्वं । क. ग. घ. च. ज. ब्रह्मंस्त्वं । ३ क. ख. ङ. च. ज. °ष्णुस्त्रिविष्टपैः । त° । ४ झ. कृष्यतां । ५ झ. अनु । ६ क. ख. ग. घ. ङ. च. ज. °यात्तस्य पू° । ७ ख. ग. घ. ङ. च. ज. शुक्र कृत्स्नं व° । ८ ख. ग. शृणु । ९ ग. °र्था मनसैवाऽऽगताः पुनः । भवन्तु मयि ते सर्वे प्र° । १० क. ख. ङ. च. ज. °चार्यं पु° । ११ घ. ज. नरम् । १२ ञ. °णाञ्शपेऽहं ।

दानवा ऊचुः—

संसारेऽस्मिन्नसारे तु किंचिज्ज्ञानं प्रयच्छ नः । येन मोक्षं व्रजामोऽत्र प्रसादात्तव सुव्रत ३१६
ततः सुरगुरुः प्राह काव्यरूपी तदा गुरुः ॥ ३१७

बृहस्पतिरुवाच—

ममाप्येषा मतिः पूर्वं या युष्माभिरुदाहृता । क्षणं कुर्वन्तु सहिताः शुचीभूत्वा समाहिताः॥३१८
ज्ञानं वक्ष्यामि वो दैत्या अहं च मोक्षदायि तु । एषा श्रुतिर्वैदिकी या ऋग्यजुःसामसंज्ञिता ३१९
वैश्वानरप्रसादात्तु दुःखदा इह प्राणिनाम् । यज्ञः श्राद्धं कृतं क्षुद्रैरैहिकस्वार्थतत्परैः ॥ ३२०
यथाऽऽसन्वैष्णवा धर्मा ये च रुद्रकृतास्तथा । कुधर्मा भार्यासहितैर्हिंसामायाः कृता हि ते॥३२१
अर्धनारीश्वरो रुद्रः कथं मोक्षं गमिष्यति । वृतो भूतगणैर्भूयो भूषितश्चास्थिभिस्तथा ॥ ३२२
न स्वर्गो नैव मोक्षोऽत्र लोकाः क्लिश्यन्ति वै वृथा । हिंसायामास्थितो विष्णुः कथं मोक्षं गमिष्यति
रजोगुणात्मको ब्रह्मा स्वां सृष्टिमुपजीवति । देवर्षयोऽथ ये चान्ये वैदिकं पक्षमाश्रिताः ॥ ३२४
हिंसामायाः सदा क्रूरा मांसादाः पापकारिणः । सुरास्तु मद्यपानेन मांसादा ब्राह्मणास्त्वमी ३२५
धर्मेणानेन कः स्वर्गं कथं मोक्षं गमिष्युति । यच्च यज्ञादिकं कर्म स्मार्तं श्राद्धादिकं तथा ॥ ३२६
तत्र नैवाऽपवर्गोऽस्ति यत्रैषा श्रूयते श्रुतिः । यूपं छित्वा पशून्हत्वा कृत्वा रुधिरकर्दमम् ॥ ३२७
यद्येवं गम्यते स्वर्गो नरकः केन गम्यते । यदि भुक्तमिहान्येन तृप्तिरन्यस्य जायते ॥ ३२८
दद्यात्प्रवसतः श्राद्धं न स भोजनमाहरेत् । आकाशगामिनो विप्राः पतिता मांसभक्षणात्॥३२९
न तेषां विद्यते स्वर्गो मोक्षो नैवेह दानवाः । जातस्य जीवितं जन्तोरिष्टं सर्वस्य जायते ॥३३०
आत्ममांसोपमं मांसं कथं खादेत पण्डितः । योनिजास्तु कथं योनिं श्रयन्ते जन्तवस्त्वमी ॥३३१
मैथुनेन कथं स्वर्गं यास्यन्ति दानवेश्वर । मृद्भस्मना यत्र शुद्धिस्तत्र शुद्धिस्तु का भवेत् ॥ ३३२
विपरीतमिमं लोकं पश्य दानव यादृशम् । विण्मूत्रस्य (त्रेऽपि) कृतोत्सर्गे शिश्नापानस्य शोधनम्
न संभवोऽस्ति वदने मृदा तोयेन वा पुनः । भुक्ते वा भोजने राजन्कथं नापानशिश्नयोः ३३४
क्रियते *शौचनं (?) तद्वद्विपरीता स्थिता स्थितिः । यत्र वै क्षालनं प्रोक्तं तत्र तेनैव कुर्वते ३३५
तारां बृहस्पतेर्भार्यां हृत्वा सोमः पुरा गतः । तस्यां जातो बुधः पुत्रो गुरुर्जग्राह तां पुनः॥३३६
गौतमस्य मुनेः पत्नी अहल्या नाम नामतः । अगृह्णात्तां स्वयं शक्रः पश्य धर्मो यथा स्थितः ॥
एतदन्यच्च जगति दृश्यते पारदारिकम् । एवंविधो यत्र धर्मः परमार्थो मतस्तु कः ॥ ३३८
वदस्व त्वं दानवेन्द्र वद भूयो वदामि ते । गुरोस्तु गदितं श्रुत्वा परमार्थान्वितं वचः ॥ ३३९
जातकौतूहलास्तत्र विरक्तास्तु भवार्णवात् ॥ ३४०

दानवा ऊचुः—

दीक्षयस्व गुरो सर्वान्प्रपन्नान्भक्तितः स्थितान् । येन नैव पुनर्मोहं व्रजामस्तव शासनात् ॥३४१
सुविरक्ताः स्म संसारे शोकसाहस्रदायिनि । उद्धरस्व गुरो सर्वान्केशाकर्षेण कूपतः ॥ ३४२

* शौचनमिति क्वचित्पाठः ।

१ झ. किं विज्ञानं । २ क. ग. घ. ङ. ज. °द्रैर्नम्रकैः स्वा° । ३ क. ख. ग. घ. ङ. च. ज. °तिः । यज्ञं कृत्वा प° । ४ श. खादन्त्यपाण्डिताः । यो° । ५ क. ख. ग. घ. ङ. च. ज. यस्य । ६ क. ख. ङ. च. ज. संभारोऽस्ति । घ. संभ्रमोऽस्ति । ७ घ. °थं वाऽपा° । ८ क. ख. ग. घ. ङ. च.ज. शक्रो यस्य धर्मो यथाविधः । ए° । ९ क. ख. ङ. च. पापदायकम् । ग. घ. च. पापदायिकम् । १० ञ. विविक्ता° । ११ क. ख. ग. घ. ङ. च. ज. °कमोहप्रदा° ।

कस्य देवस्य शरणं गच्छामो ब्राह्मणोत्तम । दैवतं च प्रपन्नानां प्रकाशय महामते ॥ ३४३
स्मरणेनोपवासेन ध्यानधारणया तथा । पूजोपहारे च कृते अपवर्गस्तु लभ्यते ॥ ३४४
विरक्ताः स्म कुटुम्बेन भूयो नात्र [१]यतामहे । एवं वै स गुरुश्छन्नस्तैरुक्तो दनुपुंगवैः ॥ ३४५
चिन्तयामास तत्कार्यं कथमेतत्करोम्यहम् । कथमेते मया पापाः कर्तव्या नरकौकसः ॥ ३४६
विडम्बनाच्छ्रुतिबाह्यास्त्रैलोक्ये हास्यकारिणः । इत्युक्त्वा धिषणो राजंश्चिन्तयामास केशवम् ॥
तस्य तच्चिन्तितं ज्ञात्वा [२]महामोहं जनार्दनः । समुत्पाद्य ददौ तस्मै प्राह चेदं बृहस्पतिम् ॥ ३४८

विष्णुरुवाच—

महामोहोऽयमखिलांस्तान्दैत्यान्मोहयिष्यति । भवता सहितः [३]सर्वान्वेदमार्गबहिष्कृतान् ॥ ३४९
एवमादिश्य भगवानन्तर्धानं जगाम ह । तपस्यभिरतान्सोऽथ मायामोहो [४]महामतिः ॥
तेषां समीपमागत्य बृहस्पतिमुवाच ह ॥ ३५०

महामोह उवाच—

*शुक्रेहि मामिदानीं वा इच्छामीति प्रबोधयन् । अनुग्रहार्थं युष्माकं भक्त्याऽऽहूतस्त्विहाऽऽगतः
ततो दिगम्बरो मुण्डो बर्हिपत्रधरो नृप । मायामोहोऽभवद्भूय इदं वचनमब्रवीत् ॥ ३५२

दिगम्बर उवाच—

भो भो दैत्याधिपतयो ब्रुवध्वं (वदत) तपसि स्थिताः । ऐहिकार्थं तु पारक्यं [६]तपसः फलमिच्छथ

दानवा [७]ऊचुः—

परत्र धर्मलाभाय तपश्चर्या हि नः कृता । अस्माभिरियमारब्धा किं वा तत्र विवक्षितम् ॥ ३५४

दिगम्बर उवाच—

कुरुध्वं मम वाक्यानि यदि मुक्तिमभीप्सथ । अर्हध्वं सर्वमेतच्च मुक्तिद्वारमसंवृतम् ॥ ३५५
धर्माद्विमुक्तिर[८]र्होऽ(र्थोऽ)यं न तदस्मा[९]त्परोऽवरः । अत्रैवाव[१०]स्थिताः स्वर्गं मुक्तिं चापि गमिष्यथ॥
एवंप्रकारैर्बहुभिर्युक्तिदर्शनवर्जितैः । मायामोहेन ते दैत्या वेदमार्गबहिष्कृताः ॥ ३५७
धर्मायैतदधर्माय सदेतदसदित्यपि । विमुक्तये त्विदं नैतद्विमुक्तिं संप्रयच्छति ॥ ३५८
परमार्थोऽयमत्यर्थं परमार्थो न चाप्ययम् । कार्यमेतदकार्यं च नैतदेव स्फुटं त्विदम् ॥ ३५९
दिग्वाससामयं धर्मो धर्मोऽयं [११]बहुसंमतः । इत्यनेकार्थवादांस्तु मायामोहेन [१२]ते यतः ॥ ३६०
तेन दर्शयता दैत्याः स्वधर्मं त्याजिता नृप । अर्हध्वं मामकं धर्मं मायामोहेन ते यतः ॥ ३६१
उक्तास्तमाश्रिता धर्ममार्हतास्तेन तेऽभवन् । त्रयीमार्गं समुत्सृज्य मायामोहेन तेऽसुराः ॥ ३६२
कारितास्तन्मया ह्यासंस्तथाऽन्ये तत्प्रबोधिताः । तैरप्यन्ये परे तैश्च तैरन्योन्यैस्तथाऽ[१३]परे ॥ ३६३
नमोऽर्हन्तायेति सर्वे संगमे स्थिरवादिनः । अल्पैरहोभिः संत्यक्तास्तैर्दैत्यैः प्रायशस्त्रयी ॥ ३६४

---

* इदमर्धं झ. पुस्तकस्थम् ।

---

१ झ. पतामहे । २ क. ख. ग. घ. ङ. च. ज. मायामोहं । ३ क. ख. ग. घ. ङ. च. ज. °र्वान्देवमा° । ४ क. ख. ग. घ. ङ. च. ज. महासुरान् । ५ ग. घ. ज. °क्त्या प्रीत° । ६ झ. °सः पालयिष्यत । दा° । ७ झ. °चुः । पारक्यध° । ८ ग. घ. ज. °मुक्तेर° । ९ क. °त्परात्परः । ग. ज. °त्परः परः । १० झ. °स्थितं स्वर्गं मुक्तिं चात्र ग° । ११ क. ख. घ. ङ. च. ज. बहुवाससाम् । १२ क. ग. घ. ज. °न नैकशः । उक्तास्तथाऽखिला दै° । १३ क. ख. ग. घ. ङ. च. ज. °रे । ते मोक्षवादिनः स° ।

पुना रक्ताम्बरधरो मायामोहो जितेक्षणः । सोऽप्यन्यानसुरान्गत्वा तानूचे मधुराक्षरम् ॥ ३६५

रक्ताम्बर उवाच—

स्वर्गार्थं यदि वो वाञ्छा निर्वाणार्थाय वा पुनः । तदलं पशुघातादिदुष्टधर्मैर्निबोधत ॥ ३६६
वि[illegible]नमयमेवैतदशेषमवगच्छथ । बुध्यध्वं मे वचः सम्यङ्मुग्धैरिव प्रमोहितम् ॥ ३६७
जगदेतदनाधारं भ्रान्तिज्ञानार्थतत्परम् । रागादिदुष्टमत्यर्थं भ्राम्यते भवसंकटे ॥ ३६८
नानाप्रकारवचनं स तेषां युक्तियोजितम् । तथा तथाऽवदद्धर्मं तत्यजुस्ते यथा यथा ॥ ३६९
केचिद्विनिन्दां वेदानां देवानामपरे नृप । यज्ञकर्मकलापस्य तथा चान्ये द्विजन्मनाम् ॥ ३७०
नैतद्युक्तिसहं वाक्यं हिंसा धर्मे जनिष्यते । हवींष्यनलदग्धानि फलान्यर्हन्ति कोविदाः॥ ३७१
यज्ञैरनेकैर्देवत्वमवाप्येन्द्रेण भुज्यते । शम्यादि यदि चेत्काष्ठं तद्वरं पत्रभुक्पशुः ॥ ३७२
निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते । स्वपिता यजमानेन किं वा तत्र न हन्यते ॥ ३७३
तृप्तये जायते पुंसो भुक्तमन्येन चेद्यदि । दद्याच्छ्राद्धं प्रवसतो न वहेयुः प्रवासिनः ॥ ३७४
जनाश्रद्धेयमित्येतदवगम्य ततो वचः । उपेक्ष्य श्रेयसे वाक्यं रोचतां यन्मयेरितम् ॥ ३७५
न ह्याप्तवादा नभसो निपतन्ति महासुराः । युक्तिमद्वचनं ग्राह्यं मयाऽन्यैश्च भवद्विधैः ॥ ३७६

दानवा ऊचुः—

तत्त्ववादे[११] वयं सर्वे प्रपन्नास्तव भक्तितः । कुरुष्वानुग्रहं चाद्य प्रसन्नोऽसि यदि प्रभो ॥ ३७७
संभारानाहरामोऽद्य दीक्षायोग्यांश्च सर्वशः । प्रसादात्तव येनाऽऽशु मोक्षो हस्तगतो भवेत् ॥
ततस्तानब्रवीत्सर्वान्मायामोहोऽसुरोत्तमान् ॥ ३७८

रक्ताम्बर उवाच—

प्रपन्नः शासने ह्येष मदीयो गुरुरग्र्यधीः । दीक्षयिष्यति युष्माकं निदेशान्मम सत्तमः ॥ ३७९
एतान्दीक्षय भो ब्रह्मन्वचनान्मम पुत्रकान् । *संदिश्यैवं गतो मोहो गतिं स्वां मनसः प्रियाम्॥
गते मोहे दानवास्ते भार्गवं वाक्यमब्रुवन् ॥ ३८१

दानवा ऊचुः—

दद[१२] दीक्षां महाभाग सर्वसंसारमोचनीम् । तथेत्याहोशना दैत्यान्गच्छामो नर्मदामनु ॥ ३८२
भो भोस्त्यजत वासांसि दीक्षां कारयितास्मि वः । एवं ते दानवा भीष्म भृगुरूपेण धीमता ॥
आङ्गिरसेन ते तत्र कृता दिग्वाससोऽसुराः । बर्हिपिच्छध्वजं तेषां गुञ्जिकाचारुमालिकाम् ३८४
दत्त्वा चकार तेषां तु शिरसो लुञ्चनं पुनः[१३] । केशानामुत्पाटनं च परमं धर्मसाधनम् ॥ ३८५
धनानामीश्वरो देवो धनदः केशलुञ्चनात् । सिद्धिं परमिकां प्राप्तः सदा वेषस्य धारणात् ३८६
मुनित्वं लभ्यते ह्येवं पुरा प्राहार्हतः स्वयम् । वालोत्पाटेन देवत्वं मनुष्यैर्लभ्यते त्विह ॥ ३८७

---

* इदमर्धं झ. पुस्तकस्थम् ।

---

१ क. ख. ङ. च. °म्यगबुधैश्च विमो° । ग. °म्यग्बुधैरेवमहोदित° । घ. °म्यगबुधैरिव मो° । २ क. ख. ग. घ. ङ. च. ज. °नानुत° । ३ ज. °म् । मायादि° । ४ ग. घ. ज. °तन्मुक्ति° । ५ झ. धर्मे विनेष्य° । क. ख. ङ. धर्माय नेष्य° । ६ झ. °नः । यत्र श्र° । ७ झ. °तोऽत्र वः । उ° । ८ झ. °म् । इत्याप्तवादे न° । ग. ज. °म् । यथाप्तवादतो भिन्ना नि° । घ. °म् । यथाप्तं वा ततो भिन्ना नि° । ९ झ. °नं श्रुत्वा तथाऽन्यै° । १० झ. °चुः—भो नग्नश्रवणक भोः प्र° । ११ ज. तनुवादे । १२ झ. भोगिन्यां चक्रवाकिन्यां दी° । १३ क. ख. ङ. च. ज. ततः । १४ क. ख. ग. घ. ङ. च. ज. नित्यत्वं ।

किं न कुर्वन्ति तत्तस्मान्महापुण्यप्रदं यतः। मनोरथो हि देवानां लोके वै मानुषे कदा ॥ ३८८
अस्मिन्वै भारते वर्षे जन्म वै श्रावके कुले। तपसा युक्तमात्मानं केशोत्पाटनपूर्वकम् ॥ ३८९
तीर्थकराश्चतुर्विंशत्तथा तैस्तु पुरस्कृतम्। छायाकृतं फणीन्द्रेण ध्यानमात्रप्रदेशिकम् ॥ ३९०
स्तुवन्तं मन्त्रवादेन स्वर्गो हस्तगतो हि सः। मोक्षो वा भविता नूनं विचारांशो न कथ्यते ३९१
कदा वा ऋषयो भूत्वा सूर्याग्निसाधने तपः। जप्त्वा विरागिणश्चैव मनुपश्चाङ्गकं तथा ॥ ३९२
तथा तपस्यतां मृत्युं गतानां कालपर्ययात्। पाषाणेन शिरो भग्नं भवते पुण्यकर्मणाम् ॥ ३९३
*दधिमिष्टान्नभक्तेषु पश्चाद्धि रोपणं कृतम्। अरण्ये निर्जने न्यासः कदा वै भविता हि नः॥३९४
कर्णजाप्यं श्रावकाश्च करिष्यन्ति समाहिताः। भो भो ऋषे न गन्तव्यं [+यथाऽऽह्वयन्ति ते सुराः
विघ्नं कर्तुं हि ते मत्वा त्याज्याः सर्वे दिवौकसः। क्षणविध्वंसिनो रौद्रा मायावन्तो दुरासदाः॥
यदि त्वामाह्वयेद्ब्रह्मा विष्णुर्वाऽपि महेश्वरः। वरुणः पावको वाऽपि न गन्तव्यं तथा त्वया ३९७
स्वर्गस्यार्धे बहिःस्थानमर्हतानां प्रतिष्ठितम्। तत्र त्वया च गन्तव्यं] मोक्षभागी यतो भवान् ३९८
लघूनीमानि स्थानानि भूयोवृत्तिकराणि च। त्याज्यानि तेन चैतानि सत्यमेवं वचो हि नः ३९९
अस्मदीयेन तपसा नियमैर्विविधैस्तथा। व्रज त्वं चोत्तमं स्थानं मोक्षमार्गे च ये बुधाः ॥ ४००
विन्दन्ति भक्तिभावेन तपोयुक्तास्तपस्विनः। अक्षेषु निग्रहो यत्र दया भूतेषु सर्वदा ॥ ४०१
तत्तपो धर्ममित्युक्तं सर्वा चान्या विडम्बना। ज्ञात्वैतद्भवता साधो गन्तव्यं परमं पदम् ॥ ४०२
यां वै तीर्थकरा याता यां गतिं योगिनो गताः। एवं वै देवताः पूर्वं विद्याधरमहोरगाः ॥४०३
मनोरथाभिलाषास्ते चिन्तयन्तो दिवानिशम्। यद्येष भावो युष्माकं संसारे विरतिः कृता ४०४
परित्यजध्वं दारान्वै स्वर्गमार्गार्गलानपि। यत्रासौ ते पिता जातस्तां योनिं सेवसे कथम् ॥४०५
आत्ममांसोपमं मांसं कथं खादन्ति मानवाः। ततस्ते दानवा भीष्म ऊचुः सर्वे गुरुं वचः॥४०६

दानवा ऊचुः—

दीक्षस्व नो महाभाग भ्रूणकानग्रतः स्थितान्। तथा कृत्वोशना चाऽऽह समेतान्स पुरोहितः ॥
प्रणामो नान्यदेवेषु कर्तव्यो वः कदाचन। एकस्य वै सदा भक्तं भोक्तव्यं करसंपुटे ॥ ४०८
तत्र पेयं स्थितैस्तोयं केशकीटविवर्जितम्। तुल्यं प्रियाप्रियं कार्यं नान्यद्दृष्टिहतं क्वचित् ॥ ४०९
भोक्तव्यमेतेन विभो आचारेण तथा कुरु*। भवध्वं सहिता यूयं तेन वो मोक्षभागिता ॥
एवं दत्त्वा च नियमान्कृत्वा तान्दनुपुंगवान् ॥ ४१०
जगाम धिषणो राजन्देवलोकं दिवौकसाम्। आचचक्षे स तत्सर्वं दानवानां च कारितम्॥४११
ततस्ते च सुरा जग्मुर्नर्मदामभितो नदीम्। दृष्ट्वा तान्दानवांस्तत्र प्रह्लादेन विना कृतान् ॥
देवराजस्तदा हृष्टो नमुचिं प्राह वै वचः ॥ ४१२

---

* इदमर्धं झ. पुस्तकस्थम्। + धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः। * एतदग्रे झ. पुस्तके 'सविशेषं हसन्देवी नामैरेतैः प्रसूचिता। इत्यर्धमधिकम्।

---

१ क. ख. घ. ङ. च. ज. किं तु कु°। ग. किं नु कु°। २ क. ख. ङ. च. ज. °मार्गे प्रदर्शितम्। ग. घ. °मार्गप्रदर्शिनम्। ३ क. ख. ग. घ. ङ. च. ज. °तोऽर्हतः। मो°। ४ क. ख. ङ. च. वासः। ५ ञ. लब्धानि यानि। ६ ञ. °जध्वं चो°। ७ क. ख. ग. घ. ङ. च. ज. जन्तवः। ८ क. ख. ग. घ. ङ. च. ज. कृत्वा स तानाह समयेन पु°। ९ क. ख. ग. घ. ङ. च. ज. °कस्थाने यदा। १० क. ख. घ. ङ. च. ज. ततः स्थाने स्थितं तोयं। ११ क. ग. घ. च. ज. °तोऽवसन्। दे°। ख. ङ. °तोऽभवन्। दे°।

हिरण्याक्षं यज्ञहनं धर्मघ्नं वेदनिन्दकम् । राक्षसं क्रूरकर्माणं प्रघसं विघसं तथा ॥ ४१३
नमुचिं च तथा बाणं वैरोचनमथापि च । महिषाख्यं तथा रौद्रं चण्डं प्रचण्डकं तथा ॥ ४१४
रोचमानं तथाऽत्युग्रं सुखदं दानवोत्तमम् । एतान्दृष्ट्वा तथा चान्यान्दानवेन्द्रानथाब्रवीत् ॥४१५

इन्द्र उवाच—

दानवेन्द्राः पुरा भूताः कृतराज्यास्त्रिविष्टपे । इदानीं कथमेवेदं व्रतं वेदावलोपकम् ॥ ४१६
भवद्भिः कर्तुमारब्धं नग्नमुण्डिकमण्डलु । मयूरध्वजधारित्वं कथं चैवेह तिष्ठथ ॥ ४१७

दानवा ऊचुः—

त्यक्तसर्वासुरभावा ऋषिधर्मे व्यवस्थिताः । धर्मवृद्धिकरं सर्वं वदामः सर्वजन्तुषु ॥ ४१८
त्रैलोक्यराज्यमखिलं भुङ्क्ष्व शक्र व्रजस्व च । तथेति चोक्त्वा मघवा पुनर्यातस्त्रिविष्टपम् ॥४१९
एवं ते मोहिताः सर्वे भीष्म देवपुरोधसा । नर्मदासरितं प्राप्य स्थिता दानवसत्तमाः ॥ ४२०
ज्ञात्वा शुक्रेण ते सर्वे व्रतात्समनुबोधिताः । तदा त्रैलोक्यहरणे चक्रुः क्रूरां पुनर्मतिम् ॥ ४२१

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे त्रयोदशोऽध्यायः ॥ १३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२१५८५

---

अथ चतुर्दशोऽध्यायः ।

---

भीष्म उवाच—

कथं त्रिपुरुषाज्जातो ह्यर्जुनः परवीरहा । कथं कर्णस्तु कानीनः सूतजः परिकीर्त्यते ॥ १
वैरं तयोः कथंभूतं निसर्गादेव तद्वद । बृहत्कौतूहलं मह्यं तद्भवान्वक्तुमर्हति ॥ २

पुलस्त्य उवाच—

छिन्ने वक्त्रे पुरा ब्रह्मा क्रोधेन महता वृतः । ललाटे स्वेदमुत्पन्नं गृहीत्वाऽताडयद्भुवि ॥ ३
स्वेदात्स पुरुषो जज्ञे सधनुः समहेषुधिः । सहस्रकवची धीरः किं करोमीत्युवाच ह ॥ ४
तमुवाच विरिञ्चोऽर्थं जय त्वं रुद्रमोजसा । हन्यतामेष दुर्बुद्धिर्जायते न यथा पुनः ॥ ५
ब्रह्मणोक्तं वचः श्रुत्वा धनुरुद्यम्य पृष्ठतः । संप्रतस्थे महेशस्य बाणहस्तोऽतिरौद्रदृक् ॥ ६
दृष्ट्वा पुरुषमत्युग्रं भीतस्तस्य त्रिलोचनः । अपक्रान्तस्ततो वेगाद्विष्णोराश्रममभ्यगात् ॥ ७
त्राहि त्राहीति मां विष्णो नरादस्माच्च शत्रुहन् । ब्रह्मणा निर्मितः पापो म्लेच्छरूपो भयानकः ॥
यथा मां न हनेत्क्रुद्धस्तथा कुरु जगत्पते । हुंकारध्वनिना विष्णुर्मोहयित्वा तु तं नरम् ॥ ९

---

१ क. ख. घ. च. ज. °षाक्षं बाष्कलं च च° । २ ग. घ. सुखेनं । ख. ङ. च. ज.सुषेणं । ३ ग. °न्द्राः सुरा भूत्वाः कृतं राज्यं त्रिवि° । ४ झ. नग्नं मुण्डं कमण्डलुम् । म° । ५ क. ख. ग. घ. ङ. च. ज. °रं कर्म चरामः । ६ झ. °णे क्रूरां मतिमथाकरोत् । इ° । ७ क. ख. ग. घ. ङ. च. ज. °नः स महान्परि° । ८ ग. ज. स्वेदभाकुण्डली ज° । ९ क. ख. ग. घ. ङ. च. ज. वीरः । १० क. ग. घ. ङ. च. ज. °थ दर्शयन्रुद्र° । ११ क. ख. ङ. च. °था हन्यान्न मां क्रुद्ध° । १२ ग. घ. °नेत्क्षुद्रस्त° । १३ झ. °ङ्गुर्वारयामास तं ।

अदृश्यः सर्वभूतानां योगात्मा विश्वभुग्विभुः[1] । तत्र प्राप्तं महादेवं सान्त्वयामास केशवः ॥ १०
ततः स प्रणतो भूमौ दृष्टो देवेन विष्णुना ॥ ११

विष्णुरुवाच[2]—

भगवंस्त्वं महारुद्रः किं ते काम्यं करोम्यहम् । दृष्ट्वा नारायणं देवं भिक्षां देहीत्युवाच ह ॥ १२
कपालं दर्शयित्वाऽग्रे प्रज्वलंस्तेजसोत्कटम् । कपालपाणिं संप्रेक्ष्य रुद्रं विष्णुरचिन्तयत् ॥ १३
कोऽन्यो योग्यो भवेद्भिक्षुर्भिक्षादानस्य सांप्रतम् । योग्योऽयमिति संकल्प्य दक्षिणं भुजमर्पयत् ॥
तं विभेदातितीक्ष्णेन शूलेन शशिशेखरः । प्रावर्तत ततो धारा शोणितस्य विभोर्भुजात् ॥ १५
जाम्बूनदरसाकारा वह्निज्वालेव निर्मला । निपपात कपालान्तः शंभुना सा प्रतीक्षिता ॥ १६
ऋज्वी वेगवती तीव्रा द्रवन्तीव ध्वजं रवेः । पञ्चाशद्योजना दैर्ध्याद्विस्ताराद्दशयोजना ॥ १७
दिव्यं वर्षसहस्रं सा समुवाह हरेर्भुजात् । इयन्तं कालमीशोऽसौ भिक्षां जग्राह भिक्षुकः ॥ १८
दत्तां नारायणेनाथ कपाले पात्र उत्तमे । ततो नारायणः प्राह हरं परमिदं वचः ॥ १९

नारायण उवाच—

संपूर्णं नेति वा पात्रं ततो वै परमेश्वरः । सतोयाम्बुदनिर्घोषं श्रुत्वा वाक्यं हरेर्हरः ॥ २०
शशिसूर्याग्निनयनः शशिशेखरशोभितः । कपाले दृष्टिमावेश्य त्रिभिर्नेत्रैर्जनार्दनम् ॥ २१
अङ्गुल्या घटयन्प्राह कपालं परिपूरितम् । श्रुत्वा शिवस्य तां वाणीं विष्णुर्धारां समाहरत् ॥ २२
पश्यतोऽथ हरेरीशः स्वाङ्गुल्या रुधिरं तदा । दिव्यं वर्षसहस्रं तु दृष्टिपातं ममन्थ सः ॥ २३
मथ्यमाने ततो रक्ते कललं बुद्बुदं क्रमात् । बभूव च ततः पश्चात्किरीटी सशरासनः* ॥ २४
बद्धतूणीरयुगलो वृषस्कन्धोऽङ्गुलित्रवान् । पुरुषो वह्निसंकाशः कपाले समदृश्यत ॥
तं दृष्ट्वा भगवान्विष्णुः प्राह रुद्रमिदं वचः ॥ २५

विष्णुरुवाच—

कपाले भगवन्कोऽयं प्रादुर्भूतोऽर्भवन्नरः । उक्तं श्रुत्वा स देवेशस्तमुवाच विभो शृणु ॥ २६
नरो नामैष पुरुषः परमास्त्रविदां वरः । भवतोक्तो नर इति नरस्तस्माद्भविष्यति ॥ २७
नरनारायणौ चोभौ युगे ख्यातौ भविष्यतः । संग्रामदेवकार्येषु लोकानां परिपालने ॥ २८
एष नारायण सखा नरस्तव भविष्यति । अथासुरवधे सख्यं(ख्य) तव कर्ता महामतिः ॥ २९
मुनिर्ज्ञानपरीक्षायां जेता लोके भविष्यति । तेजोधिकमिदं दिव्यं ब्रह्मणः पञ्चमं शिरः ॥ ३०
तेजसो ब्रह्मणो दीप्ताद्भुजस्य तव शोणितात् । मम दृष्टिनिपाताच्च त्रीणि तेजांसि यानि तु ॥
तत्संयोगात्समुत्पन्नः शत्रुं युद्धे विजेष्यते । अवध्या ये भविष्यन्ति दुर्जयास्तव चापरे ॥ ३२
शक्रस्य चामराणां च तेषामेष भयंकरः । एवमुक्त्वा ततः शंभुर्विस्मितस्य हरेरपि ॥ ३३
कपालस्थः स तत्रैव तुष्टाव हरकेशवौ । शिरस्यञ्जलिमाधाय तदा वीर उदारधीः ॥ ३४
किं करोमीति तौ प्राह इत्युक्त्वा प्रणतः स्थितः ॥ ३५

---

*एतदग्रे झ. पुस्तके 'सहस्रबाहू रक्ताक्षो धनुर्ज्यां संस्पृशन्मुहुः' इत्यर्धमधिकम् ।

---

१ क. च. ज. विश्वदृक्प्रभुः । ख. ङ. विश्वधृक्प्रभुः । घ. विश्वभुक्प्रभुः । २ क ख. ग. घ. ङ. च. ज. विरूपाक्षं । ३ क. ख. ग. घ. ङ. च. ज. °च । एह्येहि भगवन्रुद्र किं । ४ क. घ. च. जं. °रसोत्कर्षाद्वह्निं° । ५ क. ख. ङ. च. °त्रा स्पृशतीवाम्बरं जवात् । प° । ६ झ. केवलं । ७ झ. °षोऽर्जुनसं° । ८ ग. °भयंकरः । उ° । ९ झ. अन्धासु° । १० ख. ग. घ. ज. °धे मह्यं तपसश्च महाद्युतिः ।

तमुवाच हरः श्रीमान्ब्रह्मणा स्वेन तेजसा । सृष्टोऽसुरो धनुष्पाणिस्तमेनं त्वं निषूदय ॥ ३६
इत्युक्त्वाऽञ्जलिपुटकं स्तुवन्तं शंकरो नरम् । तथैवाञ्जलिसंबद्धं गृहीत्वा तु करद्वयम् ॥ ३७
उद्धृत्याथ कपालात्तं पुनर्वचनमब्रवीत् । स एष पुरुषो रौद्रो यो मयाऽऽवेदितस्तव ॥ ३८
विष्णुहुंकारसंबुद्धो मोहनिद्रामुपागतः । विबोधयैनं त्वरितमित्युक्त्वाऽन्तर्दधे हरः ॥ ३९
नारायणस्य प्रत्यक्षं मोहं प्राप्तं पदाऽहनत् । वामपादाहतः सोऽपि समुत्तस्थौ महाबलः ॥ ४०
ततो युद्धं समभवत्स्वेदरक्तजयोर्महत् । विस्फारितधनुःशब्दं नादिताशेषभूतलम् ॥ ४१
कवचं स्वेदजस्यैकं रक्तजस्य तथा भुजः । एवं समेतयोर्युद्धे दिव्यवर्षद्वयं गतम् ॥ ४२
*त्रिवर्षेणापि रुद्राणां शतानि दश सुद्विजाः । युध्यतोः समतीतानि स्वेदरक्तजयोर्नृप ॥ ४३
रक्तजं द्विभुजं दृष्ट्वा स्वेदजं चैककञ्चुकम् । विचिन्त्य वासुदेवोऽगाद्ब्रह्मणः सदनं परम् ॥ ४४
ससंभ्रममुवाचेदं ब्रह्माणं मधुसूदनः । रक्तजेनाद्य भो ब्रह्मंस्त्वदीयो विनिपातितः ॥ ४५
श्रुत्वैतदाकुलो ब्रह्मा बभाषे मधुसूदनम् । हरेऽन्यजन्मनि नरो मदीयं तु विजेष्यते ॥ ४६
तथा तुष्टेन साधूक्तं विष्णुनैवं भविष्यति । गत्वा तयो रणमपि निर्वार्याऽऽह च तावुभौ ॥ ४७
अन्यजन्मनि भविता कलिद्वापरयोर्मिथः । संधौ महारणो जाते तत्राहं योजयामि वाम् ॥ ४८
विष्णुना तु समाहूय ग्रहेश्वरसुरेश्वरौ । उक्ताविमौ नरौ भद्रौ पालनीयौ ममाऽऽज्ञया ॥ ४९
सहस्रांशो स्वेदजोऽयं स्वकीयोऽसौ रसातले । द्वापरान्तेऽवतार्योऽयं देवानां कार्यसिद्धये ॥ ५०
यदूनां तु कुले भावी शूरो नाम महाबलः । तस्य कन्या पृथा नाम रूपेणाप्रतिमा भुवि ॥ ५१
उत्पत्स्यते महाभागा देवकार्यार्थसिद्धये । दुर्वासास्तु वरं तस्यै मन्त्रग्रामं प्रदास्यति ॥ ५२
मन्त्रेण तेन यं देवं राज्ञी आवाहयिष्यति । देवस्य तस्य प्रसादात्तव(स्याः) पुत्रो भविष्यति ॥५३
सा च त्वामुदये दृष्ट्वा साभिलाषा रजस्वला । चिन्ताभिपन्ना तिष्ठन्ती भजितव्या विभावसो ५४
तस्या गर्भे त्वयं भावी कानीनः कुन्तिनन्दनः । भविष्यति सुतो देवे वसुषेणेति नामतः ॥ ५५
तथेति चोक्त्वा प्रोवाच तेजोराशिर्दिवाकरः । पुत्रमुत्पादयिष्यामि कानीनं बलगर्वितम् ॥ ५६
यस्य कर्णेति वै नाम लोकः सर्वो वदिष्यति । मत्प्रसादादस्य विष्णो विप्राणां भावितात्मनाम् ॥
अदेयं नास्ति वै यस्य वसु किंचिच्च केशव । एवंप्रभावं चैवैनं जनिष्ये वचनात्तव ॥ ५८
एवमुक्त्वा सहस्रांशुर्देवदानवघातिनम् । नारायणं महात्मानं तत्रैवान्तर्दधे रविः ॥ ५९
अदर्शनं गते देवे भास्करे वारितस्करे । वृद्धश्रवसमप्येवमुवाच प्रीतमानसः ॥ ६०
सहस्रनेत्र रक्तोत्थो नरोऽसौ मदनुग्रहात् । स्वांशभूतो द्वापरान्ते योक्तव्यो भूतले त्वया ॥ ६१
यदा पाण्डुर्महाभागः पृथां भार्यामवाप्स्यति । माद्रीं चापि महाभागां तदाऽरण्यं गमिष्यति ॥६२
तस्याप्यरण्यसंस्थस्य मृगः शापं प्रदास्यति । तेन चोत्पन्नवैराग्यः शतशृङ्गं गमिष्यति ॥ ६३
अभीप्सन्क्षेत्रजान्पुत्रान्भार्यां स प्रवदिष्यति । अनीप्सन्ती तदा कुन्ती भर्तारं सा वदिष्यति ॥६४

* इदमर्धं झ. पुस्तकस्थम् ।

१ क. क. ग. घ. ङ. च. ज. °ष्टो नरो । २ क. ख. ङ. च. ज. °ररचितमोहनिद्रां प्रवेशितः । ग. °ररावेण मोहितोऽयं निवेशितः । घ. °ररावेण मोहनिद्रां प्रवेशितः । ३ क. ख. घ. ङ. च. ज. विरोध° । ४ झ. कबन्धं । ५ घ. °थाऽद्भुतम् । ए° । ६ ञ. चैव संगतौ । वि° । ७ घ. °वार्य शुभवाक्यतः । अ° । ८ क. ख. ग. घ. ङ. च. भक्त्या । ९ ग. घ. °व देवकार्यार्थसिद्धये । त° । १० क. ख. ङ. च. वै लोके वस्तु किं° । ११ घ. °त्र मन्तव्यो नरोऽयं म° । १२ ग. घ. °हाराजः पृ° ।

नाहं मर्त्यस्य वै राजन्पुत्रानिच्छे कथंचन। दैवतेभ्यः प्रसादाच्च पुत्रानिच्छे नराधिप ॥ ६५

प्रार्थयन्त्यै त्वया शक्र कुन्त्यै देयो नरस्ततः। वचसा तु मदीयेन एवं कुरु शचीपते ॥ ६६

अथाब्रवीत्तदा विष्णुं सुरेशो दुःखितस्ततः[1]। अस्मिन्मन्वन्तरेऽतीते सप्तविंशतिके गते[2] ॥ ६७

अवतीर्य रघुकुले गृहे दशरथस्य च। रावणस्य विनाशार्थं शान्त्यर्थं च दिवौकसाम् ॥ ६८

रामरूपेण भवता सीतार्थमटता वने। मत्पुत्रो हिंसितो देव सूर्यपुत्रहितार्थिना ॥ ६९

वालिनामा वानरेन्द्रः सुग्रीवार्थे त्वया हतः। दुःखेन तेन तप्तोऽहं गृह्णामि न सुतं नरम् ॥ ७०

अगृह्णमानं देवेन्द्रं कारणान्तरवाचिनम्। हरिः प्राह शुनासीरं भुवो भारावतारणे ॥ ७१

अवतारं गमिष्यामि मर्त्यलोके त्वहं प्रभो। सूर्यपुत्रस्य नाशार्थं जयार्थमात्मजस्य ते ॥ ७२

साहाय्यं[3] च करिष्यामि नाशं कुरुकुलस्य च। ततो हृष्टोऽभवच्छक्रो विष्णुवाक्येन तेन ह ॥ ७३

प्रतिगृह्य नरं हृष्टः सत्यं चास्तु वचस्तव। एवमुक्त्वा वरं देवः प्रेषयित्वाऽच्युतः स्वयम् ॥ ७४

गत्वा च पुण्डरीकाक्षो ब्रह्माणं[4] ब्रह्मवेश्मनि। त्वया सृष्टमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ ७५

आवां कार्यस्य करणे सहायौ च तव प्रभो। स्वयं कृत्वा पुनर्नाशं कर्तुं देव न बुध्यसे ॥ ७६

कृतं जुगुप्सितं कर्म[5] भोस्त्वया विजिघांसता। त्वया च देवदेवस्य सृष्टः कोपेन वै पुमान् ॥ ७७

शुद्ध्यर्थमस्य पापस्य प्रायश्चित्तं परं कुरु। गृह्णन्वह्नित्रयं देव अग्निहोत्रमुपाहर ॥ ७८

पुण्यतीर्थे तथा देशे वने वाऽपि पितामह। स्वपत्न्या सहितो यज्ञं कुरुष्वास्मदनुग्रहात्[6] ॥ ७९

सर्वे देवास्तथाऽऽदित्या रुद्राश्चापि जगत्पते। आदिष्टं ते करिष्यन्ति यतोऽस्माकं भवान्प्रभुः ८०

एकस्तु गार्हपत्योऽग्निर्द्वितीयो दक्षिणः स्मृतः। आहवनीयस्तृतीयस्तु त्रिकुण्डेषु[7] प्रकल्पयेत् ॥ ८१

वर्तुले अर्पयाऽऽत्मानं मामथो धनुषा कृते। चतुष्कोणे हरं देवमृग्यजुःसामनामभिः ॥ ८२

अग्नीनुत्पाद्य तपसः परामृद्धिमवाप्य च। दिव्यं वर्षसहस्रं तु हुत्वाऽग्नीन्मां समेष्यसि ॥ ८३

अग्निहोत्रात्परं[8] नान्यत्पवित्रमिह पठ्यते। जुह्वते येऽग्निहोत्रेण परां यान्ति[9] गतिं द्विजाः ॥ ८४

पन्थानो देवलोकस्य दर्शयन्त्यग्रतस्त्वमी। एकोऽग्निः सर्वदाऽऽचार्या[10] ह्यक्षयोऽग्निर्द्विजन्मना[11] ॥

विनाऽग्निना द्विजेनेह गार्हस्थ्यं न तु लभ्यते ॥ ८५

भीष्म उवाच—

योऽसौ कपालादुत्पन्नो नरो नाम धनुर्धरः। किमेष माधवाज्जात उताहो स्वेन कर्मणा ॥ ८६

उत रुद्रेण जनितः कथं वा बुद्धिपूर्वकम्। विष्णुना वा भगवता ब्रह्मणा वा भवेदुत ॥ ८७

केन कस्मात्समुत्पन्नः शंकरादुत ब्रह्मणः। ब्रह्मा हिरण्यगर्भोऽयमण्डजातश्चतुर्मुखः ॥ ८८

अद्भुतं पञ्चमं[12] तस्य वक्त्रं तत्कथमुत्थितम्। सत्त्वे रजो न दृश्येत न सत्त्वं रजसि क्वचित् ॥ ८९

सत्त्वस्थो[13] भगवान्ब्रह्मा कथमुद्रेकमादधत्[14]। मूढात्मना नरो येन निहन्तुं प्रहितो हरम् ॥ ९०

पुलस्त्य उवाच—

महेश्वरहरी चैतौ द्वावेव सत्पथि स्थितौ। तयोरविदितं नास्ति सिद्धासिद्धं महात्मनोः ॥ ९१

---

१ क. ख. ग. घ. ङ. च. °खितो वचः। अ°। २ क ख. ङ. च. °ते चतुर्विंशतिके युगे। अ°। ३ घ. सहायार्थे। ४ क. च. ब्रह्मणे प्राह वै पुनः। त्व°। ग. ब्रह्मण्यो। ५ क. ख. ग. घ ङ. च. °र्म शंभोरंशं जि°। ६ क. ख. ग. घ. ङ. च. °ष्वाऽऽसपरिग्र°। ७ क. ख. ग. घ. ङ. त्रिदण्डेषु। ८ क. ख. ग. घ. ङ. च. °ते। सुकृतेनाग्नि°। ९ क. ख ङ. च °ण प्रशुध्यन्ति भुवि द्वि°। १० झ. °दा चीर्णो ह्य°। ११ क. ख. ङ. च. °र्यो गृहस्थेन द्विज°। १२ क. ख. ग. घ. ङ. च. परमं। १३ झ. सत्त्वं हि भ°। १४ झ. °मागतम्। मू°।

ब्रह्मणः पञ्चमं वक्त्रमूर्ध्वमासीन्महात्मनः । ततो ब्रह्माऽभवन्मूढो रजसा चोपबृंहितः ॥ ९२
ततोऽयं तेजसा सृष्टिममन्यत मया कृताम् । मत्तुल्यो नास्ति वै देवो येन सृष्टिः प्रवर्तिता ॥ ९३
सहदेवाः सगन्धर्वाः पशुपक्षिमृगाः कृताः । एवं मूढः स पञ्चास्यो विरिञ्चोऽभवदच्युतः ॥ ९४
प्राग्वक्त्रं मुख्यमेतस्य ऋग्वेदस्य प्रवर्तकम् । द्वितीयं वदनं चैव यजुर्वेदप्रवर्तकम् ॥ ९५
तृतीयं सामवेदस्य अथर्वार्थे चतुर्थकम् । साङ्गोपाङ्गेतिहासांश्च सरहस्यान्ससंग्रहान् ॥ ९६
वेदानधीते वक्त्रेण पञ्चमेनोर्ध्वचक्षुषा । सुरासुरास्तस्य सर्वे वक्त्रस्याद्भुततेजसा ॥ ९७
सर्वशो न प्रकाशन्ते दीपाः सूर्योदये यथा । स्वपुरे ह्यपि सोद्वेगा ह्यवर्तन्त विचेतसः ॥ ९८
न किंचिद्गणयेच्चान्यं तेजसा क्षिपते परान् । नाभिगन्तुं न च द्रष्टुं पुरस्तान्नोपसर्पितुम् ॥ ९९
शेकुस्त्रस्ताः सुराः सर्वे पद्मयोनिं महाप्रभुम् । अभिभूतमिवाऽऽत्मानं मन्यमाना हतत्विषः ॥ १००
सर्वे ते मन्त्रयामासुर्देवता(वास्तु) हितमात्मनः । गच्छामः शरणं शंभुं निस्तेजसोऽस्य तेजसा ॥ १०१

देवा ऊचुः—

नमस्ते सर्वदेवेश महेश्वर नमो नमः । यँज्ञयोने परं ब्रह्म भूताँतमस्त्वं सनातन ॥ १०२
प्रतिष्ठा सर्वजगतां त्वं हेतुर्विष्णुना सह । एवं संस्तूयमानोऽसौ देवर्षिपितृदानवैः ॥ १०३
अन्तर्हित उवाचेदं देवाः प्रार्थयतेप्सितम् । प्रत्यक्षदर्शनं दत्त्वा देहि देव यथेप्सितम् ॥ १०४
कृत्वा कारुण्यमस्माकं वरश्चापि प्रदीयताम् । यदस्माकं महावीर्यं तेजो यच्च पराक्रमः ॥ १०५
तत्सर्वं ब्रह्मणा ग्रस्तं पञ्चमास्यस्य तेजसा । विनेशुः सर्वतेजांसि त्वत्प्रसादात्पुनः प्रभो ॥ १०६
जायन्ते तद्यथापूर्वं तथा कुरु महेश्वर । ततः प्रसन्नवदनो देवैश्चापि नमस्कृतः ॥ १०७
जगाम यत्र ब्रह्माऽसौ रजोहंकारमूढधीः । देवाः स्तुवन्तो देवेशं परिवार्य उपाविशन् ॥ १०८
ब्रह्मा तमागतं रुद्रं न जज्ञे रजसा वृतः । सूर्यकोटिसहस्राणां तेजसा रञ्जयञ्जगत् ॥ १०९
तदाऽदृश्यत विश्वात्मा विश्वसृग्विश्वभावनः । स पितामहमासीनं सकलं देवमण्डलम् ॥ ११०
अभिगम्य ततो रुद्रो ब्रह्माणं परमेश्वरम् । अहोऽतितेजसा वक्त्रमधिकं देव राजते ॥ १११
एवमुक्त्वाऽट्टहासं तु मुमोच शशिशेखरः । वामाङ्गुष्ठनखाग्रेण ब्रह्मणः पञ्चमं शिरः ॥ ११२
चकर्त कदलीगर्भं नरः कररुहैरिव । छिन्नं तु तच्छिरः पश्चाद्रुद्रहस्ते स्थितं तदा ॥ ११३
ग्रहमण्डलमध्यस्थो द्वितीय इव चन्द्रमाः । उत्क्षिप्तकरकपालो ननर्त त्रिदशेश्वरः ॥ ११४
शिखरस्थेन सूर्येण कैलास इव पर्वतः । छिन्ने वक्त्रे ततो देवा हृष्टास्तं वृषभध्वजम् ॥
तुष्टुवुर्विविधैः स्तोत्रैस्तत्र देवं कपर्दिनम् ॥ ११५

देवा ऊचुः—

नमः कपालिने नित्यं महाकालाय शङ्किने । ऐश्वर्यज्ञानयुक्ताय सर्वभोगप्रदायिने ॥ ११६
नमो हर्षविलासाय सर्वदेवमयाय च । कालसंहारकर्ता त्वं महाकालः स्मृतो ह्यसि ॥ ११७
भक्तानां दुःखशमनो दुःखान्तस्तेन चोच्यसे । शंकरोऽथाऽऽशु भक्तानां तेन त्वं शंकरः स्मृतः
छित्त्वा ब्रह्मशिरो यस्मात्त्वं कपालं बिभर्षि च । तेन देव कपाली त्वं स्तुतो ह्यद्य प्रसीद नः ॥

---

१ क. ग. घ. च. ज. मत्तोऽन्यो ना° । २ घ °मृगाकुला । ए° । ३ क. ख. ग. घ. ङ. च. ज. °क्त्रं सुस्वरं त° । ४ क. ख. ग. घ. ङ. च. ज. °तवर्चसः । तेजसा न । ५ क. ख. ग. घ. ङ. च. ज. °र्वसत्त्वेश । ६ क. ख. ग. घ. ङ. च. ज. जगद्योने । ७ क. ख. ग. घ. ङ. च. ज. °तानां त्व सनातनः । प्र° । ८ ज. परमेष्ठिनम् । ९ क. ख. ग. घ. ङ. च. ज. °कालस्य कालिने । १० क. ख. ग. घ. ङ. च. ज. च । कलौ सं° ।

एवं स्तुतः प्रसन्नात्मा देवान्प्रस्थाप्य शंकरः। स्वानि धिष्ण्यानि भगवांस्तत्रैवाऽऽसीन्मुदाऽन्वितः।
विज्ञाय ब्रह्मणो भावं ततो वीरस्य जन्म च। तं प्रवीरस्य वाक्यात्तु लोकानां[1] लोपशान्तये ॥
शिरस्यञ्जलिमाधाय संतुष्टाव प्रणम्य तम्। तेजोनिधिं परं ब्रह्म ज्ञातुमिच्छन्प्रजापतिम् ॥ १२२
निरुक्तसूक्तरहस्यैर्ऋग्यजुःसामभाषितैः ॥ १२३

रुद्र उवाच—

अप्रमेय नमस्तेऽस्तु परस्य परमात्मने। अद्भुतानां प्रसूतिस्त्वं तेजसां निधिरक्षयः ॥ १२४
विजयाद्विश्वभावस्त्वं सृष्टिकर्ता प्रजापते[2]। ऊर्ध्ववक्त्र नमस्तेऽस्तु सत्त्वात्मक वैरात्मक ॥ १२५
जलस्थायिञ्जलोत्पन्न जलालय नमोऽस्तु ते। जलजोत्फुल्लपत्राक्ष जय देव पितामह ॥ १२६
त्वया चोत्पादितं पू(स)र्वं सृष्ट्यर्थं परमेश्वर। यज्ञाहुतिसदाहार यज्ञाङ्गेश नमोऽस्तु ते ॥ १२७
स्वर्णगर्भ पद्मगर्भ देवगर्भ प्रजापते। त्वं यज्ञस्त्वं वषट्कारः स्वधा त्वं पद्मसंभव ॥ १२८
वचनेन तु देवानां शिरश्छिन्नं मया प्रभो। ब्रह्महत्याभिभूतोऽस्मि मां त्राहि त्वं जगत्पते ॥
इत्युक्तो देवदेवेन ब्रह्मा वचनमब्रवीत् ॥ १२९

ब्रह्मोवाच—

सखा नारायणो देवः स त्वां पूतं करिष्यति। कीर्तनीयस्त्वया मान्यः स मे पूज्यो विभुः स्वयम्।
अनुध्यातोऽसि वै नूनं तेन देवेन विष्णुना। येन ते मतिरुत्पन्ना स्तोतुं मां भक्तिरुत्थिता ॥ १३१
शिरश्छेदात्कपाली त्वं सोमसिद्धान्तकारकः। *उद्धर्ता त्वं हि जन्तूनां भूरिशासनकारकः १३२
कोट्याः शतं तु विप्राणामुद्धर्ताऽसि महाद्युते। व्रतं त्वं (तु) ब्रह्महत्याया नान्यत्किंचन विद्यते ॥
अभाष्याः पापिनः क्रूरा ब्रह्मघ्नाः पापकारिणः। वैडालिका विकर्मस्था न ते पूज्याः कथंचन ॥
तैश्च दृष्टैः सदा कार्यं भास्करस्यावलोकनम्। अङ्गस्पर्शे कृते रुद्र सचैलो जलमाविशेत् ॥ १३५
एवं शुद्धिमवाप्नोति पूर्वं दृष्टं मनीषिभिः। स भवान्ब्रह्महन्ताऽसि शुद्ध्यर्थं व्रतमाचर ॥ १३६
चीर्णे व्रते पुनर्भूयः प्राप्स्यसे त्वं वरान्बहून्। एवमुक्त्वा गतो ब्रह्मा रुद्रस्तं नाभिर्जज्ञिवान् १३७
अचिन्तयत्तदा विष्णुं[10] ध्यानेगत्या गतः स्वयम्। लक्ष्मीसहायं वरदं देवदेवं सनातनम् ॥ १३८
अष्टाङ्गप्रणिपातेन नत्वा देवं त्रिलोचनः। तुष्टाव प्रणतो भूत्वा शङ्खचक्रगदाधरम् ॥ १३९

रुद्र उवाच—

परं पराणां परमं[11] पुराणं परात्परं विष्णुमनन्तवीर्यम्।
स्मरामि नित्यं पुरुषं वरेण्यं[12] नारायणं त्रिप्रथमं[13] पुराणम् ॥ १४०
परापरं पूर्वजमुग्रवेगं गम्भीरगम्भीरधियां प्रधानम्।
नतोऽस्मि देवं हरिमीशितारं परं परं धामपरं च धाम ॥ १४१
परापरं शुद्धपरं विशालं परापरेशं पुरुषं विशालम्।
नारायणं स्तौमि विशुद्धभावं परापरं सूक्ष्ममिदं ससर्ज ॥ १४२

---

* इदमर्धं झ. पुस्तकस्थम्।

---

१ ग. घ. ज. °नां कोप°। २ क. ख. ग. घ. ङ. च. ज. °मित्थं प्रजा°। ३ क. ग. घ. च. ज. महाद्युते। ४ क. ख. ग. घ. ङ. च. ज. धगात्मक। ५ क. ख. ग. घ. ङ. च. ज. धन्यः। ६ क. ख. घ. ङ. च. ज. वैतानिका। ७ क. ग. घ ङ. च. ज. भाष्याः। ८ झ. °जग्मिवा°। ९ झ. °नदृग्भ्यां ग°। १० क. ख. ङ. च. ज. °न देवदेवस्त्रिलो°। ११ क. ख. ग. घ. ङ. च. ज. ह्यमृतं। १२ झ. पुराणं। १३ क. ख. ङ. च. त्रिप्रतिमं।

सदास्थितत्वात्पुरुषः प्रधानो ज्ञानं प्रधानं शरणं ममास्तु ।
नारायणं वीतमलं पुराणं परापरं विष्णुमपारपारम् ॥ १४३
पुरातनं नीतिमतां प्रधानं धृतिक्षमाशान्तिपरं क्षितीशम् ।
शुभं सदा स्तौमि महानुभावं सहस्रमूर्धानमनेकपादम् ॥ १४४
अनन्तबाहुं शशिसूर्यनेत्रं क्षराक्षरं क्षीरसमुद्रनिद्रम् ।
नारायणं स्तौमि परं परेशं परात्परं यत्त्रिदशैरगम्यम् ॥ १४५
त्रिसर्गसंस्थं त्रिहुताशनेत्रं त्रितत्त्वलक्ष्यं त्रिलयं त्रिनेत्रम् ।
नमामि नारायणमप्रमेयं कृते सितं रक्ततनुं नरेशम् ॥ १४६
त्रेतायुगे पीततनुं नरेशं तथा हरिं द्वापरतः कलौ च ।
नमामि नारायणमप्रमेयं कृष्णं कृतात्मानमथो नमामि ॥ १४७
ससर्ज यो वक्त्रत एव विप्रं भुजान्तरे क्षत्रमथोरुयुग्मे ।
वैश्यं पदाग्रेषु तथैव शूद्रान्नमामि तं विश्वतनुं पुराणम् ॥ १४८
परात्परं पारगमप्रमेयं सुधाय(प)तिं कार्यत एव कृष्णम् ।
गदासिचक्राब्जस्तोग्रपाणिं नमामि नारायणमप्रमेयम् ॥ १४९

विश्वमूर्तिं महामूर्तिं नारायणं त्रिमूर्तिकम् । कवचं सर्वदेवानां नमस्ये वारिजेक्षणम् ॥ १५०
सहस्रशीर्षं देवेशं सहस्राक्षं महाभुजम् । जगत्संव्याप्य तिष्ठन्तं नमस्ये परमेश्वरम् ॥ १५१
शरण्यं शरणं देवं विष्णुं जिष्णुं सनातनम् । नीलमेघप्रतीकाशं नमस्ये शार्ङ्गपाणिनम् ॥ १५२
शुद्धं सर्वगतं नित्यं व्योमरूपं सनातनम् । भावाभावविनिर्मुक्तं नमस्ये सर्वगं हरिम् ॥ १५३
न चात्र किंचित्पश्यामि व्यतिरिक्तं तवाच्युत । त्वन्मयं च प्रपश्यामि सर्वमेतच्चराचरम् ॥ १५४
*एवं तु वदतस्तस्य रुद्रस्य परमेष्ठिनः ॥ १५५

इतीरिते तस्य सनातनः स्वयं युगाववोधाद्भुतरूपदर्शनः ।
रथा(ङ्ग)पाणिर्गरुडासनो गिरमुदीरयन्भास्करवत्समुत्थितः ॥ १५६
वरं वृणीष्वेति सनातनोऽब्रवीद्धरस्तवाहं वरदस्तवाऽऽगतः ।
इतीरिते शंभुरिदं जगाद कथं नु शुद्धिर्भविता सुरेश ।
न चास्य पापस्य हरं हि चान्यत्संदृश्यतेऽग्र्यं च ऋते भवन्तम् ॥ १५७

ब्रह्महत्याभिभूतस्य कृष्णा मेऽभूत्तनूरियम् । शावगन्धश्च मे गात्रे लोहस्याऽऽभरणानि मे ॥ १५८
कथं मे न भवेदेवमेतद्रूपं जनार्दन । किं करोमि महादेव येन मे पूर्विका तनूः ॥ १५९
त्वत्प्रसादेन भविता तन्मे कथय चाच्युत ॥ १६०

विष्णुरुवाच—

ब्रह्मवध्या परा चोग्रा सर्वकष्टप्रदा परा । मनसाऽपि न कुर्वीत पापस्यास्य तु भावनाम् ॥ १६१
भवता देववाक्येन निष्ठा चैषा निवेदिता । इदानीं त्वं महाबाहो ब्रह्मणोक्तं समाचर ॥ १६२
भूयः सर्वाणि चाङ्गानि त्रिकालं घर्षयेस्तनुम् । शिखायां कर्णयोश्चैव करे चास्थीनि धारय १६३
एवं ते कुर्वतो रुद्र कष्टं नैव भविष्यति । संदिश्यैवं स भगवान्गतोऽन्तर्धानमीश्वरः ॥ १६४

---

* इदमर्धमधिकम् ।

१ क. ख. ङ. च. ज. °धानः शान्तं प्र° । २ घ. शरण्यं । ३ क. ख. ग. घ. ङ. च. ज. सूक्ष्ममूर्तिं । ४ क. ख. ग. घ. ङ. च. ज. विद्यामूर्तिममूर्तिकम् । ५ झ. °वैकुण्ठप्र° । ६ ज. निबोधिता । ७ झ. कुष्ठं ।

लक्ष्मीसहायो गतवान्रुद्रस्तं नाभिजज्ञिवान् । कपालपाणिर्देवेशः पर्यटन्वसुधामिमाम् ॥ १६५
हिमवन्तं समैनाकं मेरुणा च सहैव तु । कैलासं सकलं विन्ध्यं नीलं चैव महागिरिम् ॥ १६६
काञ्चीं काशीं ताम्रलिप्तां मगधान्मालवांस्तथा । वत्सगुल्मं च गोकर्णं तथा चैवोत्तरान्कुरून् १६७
भद्राश्वं केतुमालं च वर्षं हैरण्यकं तथा । कामरूपं प्रभासं च महेन्द्रं चैव पर्वतम् ॥ १६८
ब्रह्महत्याभिभूतोऽसौ भ्रमंस्त्राणं न विन्दते । त्रपान्वितः कपालेन करस्थेन च शंकरः ॥ १६९
करौ विधुन्वन्बहुशो चिक्षिपंश्च मुहुर्मुहुः । यदाऽस्य धुन्वतो हस्तौ कपालं पतते न तु ॥ १७०
तदाऽस्य बुद्धिरुत्पन्ना व्रतं चैतत्करोम्यहम् । मदीयेनैव मार्गेण द्विजा यास्यन्ति सर्वशः ॥ १७१
ध्यात्वैवं सुचिरं देवो वसुधां विचचार ह । पुष्करं तु समासाद्य प्रविष्टोऽरण्यमुत्तमम् ॥ १७२
नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् । नानापक्षिसमाकीर्णं नानामृगगणाकुलम् ॥ १७३
द्रुमपुष्पभरामोदवासितं यत्सुवायुना । बुद्धिपूर्वमिव न्यस्तैः पुष्पैर्भूषितभूतलम् ॥ १७४
नानागन्धरसैरन्यैः पक्वापक्वैः फलैस्तथा । विवेश तरुमध्येन पुष्पामोदाभिनन्दितः ॥ १७५
अत्राऽऽराधयतो भक्त्या ब्रह्मा दास्यति वै वरम् । ब्रह्मप्रसादात्संप्राप्तं पौष्करं ज्ञानमीप्सितम्
पापघ्नं दुष्टशमनं पुष्टिश्रीबलवर्धनम् । तस्मात्सर्वप्रयत्नेन ये प्रपन्ना महेश्वरम् ॥ १७७
अपवर्गो भवेत्तेषां स्वर्गो वा प्रीतिदः स्मृतः । एवं वै ध्यायतस्तस्य रुद्रस्यामिततेजसः ॥ १७८
आजगाम ततो ब्रह्मा भक्तिप्रीतोऽथ पद्मजः । उवाच प्रणतं रुद्रमुत्थाप्य च पुनर्गुरुः ॥ १७९
दिव्यव्रतोपचारेण सोऽहमाराधितस्त्वया । भवता श्रद्धयाऽत्यर्थं मम दर्शनकाङ्क्षया ॥ १८०
व्रतस्था मां हि पश्यन्ति मानुषा देवतास्तथा । तदिच्छया प्रयच्छामि वरं यत्प्रवरं वरम् ॥ १८१
सर्वकामसमृद्ध्यर्थं व्रतं यस्मान्निषेवितम् । मनोवाक्कायभावैश्च संतुष्टेनान्तरात्मना ॥
कंचिदन्यं च वै कामं वद भो मे यथेप्सितम् ॥ १८२

रुद्र उवाच—

एष एवाद्य भगवन्सुपर्याप्तो मया वरः । यद्दृष्टोऽसि जगद्वन्द्य जगत्कर्तर्नमोऽस्तु ते ॥ १८३
महता यज्ञसाध्येन बहुकालार्जितेन च । प्राणव्ययकरेण त्वं तपसा देव दृश्यसे ॥ १८४
इदं कपालं देवेश न करात्पतते विभो । त्रपाकरा ऋषीणां च चर्यैषा कुत्सिता विभो ॥ १८५
त्वत्प्रसादाद्व्रतं चेदं कृतं कापालिकं च यत् । सिद्धमेतत्प्रपन्नस्य महाव्रतमिहोच्यताम् ॥ १८६
पुण्यप्रदेशे यस्मिंश्च क्षिपाम्येतद्वदस्व मे । पूतो भवामि येनाहं मुनीनां भावितात्मनाम् ॥ १८७
+लभामि देवशब्दत्वं प्रणमन्ति व्रतार्थिनः ॥ १८८

ब्रह्मोवाच—

अविमुक्तं भगवतः स्थानं चास्ति पुरातनम् । कपालमोचनं तीर्थं तव तत्र भविष्यति ॥ १८९
अहं च त्वं स्थितस्तत्र विष्णुश्चापि भविष्यति । दर्शने भवतस्तत्र महापातकिनोऽपि ये ॥ १९०
तेऽपि भोगान्समश्नन्ति विशुद्धा भवने मम । वरुणा च असी चापि द्वे नद्यौ सुरवल्लभे ॥ १९१

---

+ इदमर्धं झ. पुस्तकस्थम् ।

---

१ झ. °जग्मिवा° । २ घ. °त्तरं गिरिम् । भ° । ३ ख. ग. ङ. च. ज. °क्षिरवाकी° । घ. °क्षिगणाकी° । ४ क. ख. ग. घ. ङ. च. ज. षडर्तुकैः । ५ ख. ग. घ. ङ. च. ज. °रुद्रन्देन । ६ ञ. मे । ७ क. ख. घ. च. ज. °स्मात्पूर्वं° । ८ ञ. शान्तिदः । ९ क. ख. ग. घ. ङ. च. ज. °मप्रासिद्ध्य° । १० ञ. वरदस्ते य° । ११ क. ग. घ. ङ. च. ज. °गत्कीर्ते नमोऽ° । १२ झ. महता ।

अन्तरालं तयोः क्षेत्रे(त्रं) मध्ये न विशते क्वचित् । तीर्थानां प्रवरं तीर्थं क्षेत्राणा प्रवरं तव १९२
आ देहपतनाद्ये तु क्षेत्रं सेवन्ति मानवाः । ते मृता हंसयानेन स्वर्गं यान्त्यकुतोभयाः ॥ १९३
पञ्चक्रोशप्रमाणेन क्षेत्रं दत्तं मया तव । क्षेत्रमध्याद्यदा गङ्गा गमिष्यति सरिद्वरा ॥ १९४
तेन सा महती पुण्या पुरी रुद्र भविष्यति । पुण्या चोदङ्मुखी गङ्गा यत्र प्राची सरस्वती १९५
उदङ्मुखी योजने द्वे गच्छन्ती जाह्नवी नदी । तत्र ते विबुधाः सर्वे मया सह सवासवाः॥१९६
तत्र ते वासमेष्यन्ति कपालं तत्र मोचय । तस्मिंस्तीर्थे तु वै गत्वा पिण्डदानेन ये पितॄन् ॥१९७
श्राद्धैस्तु प्रीणयिष्यन्ति तेषां लोकोऽक्षयो दिवि । वाराणस्यां महातीर्थे नरः स्नातो विमुच्यते॥
सप्तजन्मकृतात्पापाद्दर्शनादेव मुच्यते । तत्तीर्थं सर्वतीर्थानामुत्तमं परिकीर्तितम् ॥ १९९
त्यजन्ति तत्र ये प्राणान्प्राणिनः प्रणतास्तव । रुद्रत्वं ते समासाद्य मोदन्ते भवता सह ॥ २००
तत्र त्वपि हि यद्दानं भक्त्या रुद्राय कल्पते । सर्वपापविनिर्मुक्तस्तव लोके वसिष्यति ॥ २०१
खण्डस्फुटितसंस्कारं तत्र कुर्वन्ति ये नराः । ते रुद्रलोकमासाद्य मोदन्ते सुखिनः सदा ॥ २०२
तत्र पूजा जपो होमः कृतो भवति देहिनाम् । अनन्तफलदं सर्वं रुद्रभक्तिरतात्मनाम् ॥ २०३
तत्र दीपप्रदानेन ज्ञानचक्षुरतीन्द्रियः । अश्वेतं तरुणं सौम्यं रूपवन्तं तु गोसुतम् ॥ २०४
योऽङ्कयित्वा मोचयति स याति परमं पदम् । पितृभिः सहितो मोक्षं गच्छते नात्र संशयः २०५
अथ किं बहुनोक्तेन तत्र यत्क्रियते नरैः । कर्म धर्मार्थमुद्दिश्य तदनन्तफलं भवेत् ॥ २०६
स्वर्गापवर्गदं क्षेत्रं तद्धि तीर्थं मतं भुवि । स्नानाज्जपात्तथा होमादनन्तफलसाधनम् ॥ २०७
गत्वा वाराणसीतीर्थं व्रतं चान्द्रायणं तथा । ये तत्र पञ्चतां यान्ति मोक्षं यान्ति न संशयः२०८
वसवः पितरो ज्ञेया रुद्राश्चैव पितामहाः । प्रपितामहास्तथाऽऽदित्या इत्येषा वैदिकी श्रुतिः२०९
त्रिविधः पिण्डदानाय विधिरुक्तो मयाऽनघ । मानुषैः पिण्डदानार्थं(नं च) कार्यमत्राऽऽगतैः सदा
पिण्डदानं च तत्रैव सुपुत्रैः कार्यमादरात् । सुपुत्रास्ते पितॄणां वै भवन्ति सुखदाः सदा ॥ २११
प्रोक्तं तीर्थं मया तुभ्यं दर्शनादपि मुक्तिदम् । स्नात्वा तु सलिले तत्र मुच्यते जन्मबन्धनात् ॥
विमुक्तो ब्रह्महत्यायास्तत्र रुद्र यथासुखम् । अविमुक्ते मया दत्ते तिष्ठ त्वं भार्यया सह॥ २१३

रुद्र उवाच—

पृथिव्यां यानि तीर्थानि तेष्वहं विष्णुना सह । तिष्ठामि तव चोक्तेन वर एष वृतो मया २१४
अहं देवो महादेव आराध्यो भवता सदा । वरान्दास्यामि ते चाहं संतुष्टेनान्तरात्मना ॥ २१५
विष्णोश्चापि प्रदास्यामि वरांश्च मनसेप्सितान् । सुराणां चैव सर्वेषां मुनीनां भावितात्मनाम् ॥
अहं दाता अहं याच्यो नान्यो भव्यः कदाचन ॥ २१६

ब्रह्मोवाच—

एवं करिष्येऽहं रुद्र यत्त्वयोक्तं वचः शुभम् । नारायणश्चापि तव वाक्यकर्ता न संशयः ॥ २१७

---

१ क. ख. घ. ङ. च. °रित्पातिम् । तें° । २ ख. घ. ङ. च. ज. °पाद्गमना° । ३ ख. ग. घ. ङ. ज तत्रापि हि तु यद्दत्तं दानं रुद्र यतात्मना । तन्महच्च फलं तेषां भवते भावितात्मनाम् । ख°। ४ क. च स्वाङ्गस्फुटितसंस्कारं । ५ क. ख. ग. घ. ङ. च. ज. °क्रियता°; ६ ग. घ. ज. °नेन स्थानं रुद्रनिषेवितम् । अ°। ञ. °ने तु स्थाने रुद्रनिषेविते । अव्यङ्गं त°। ७ क. ख. ग. घ. ङ. च ज. °र्गयोर्हेतुस्तद्धि । ८ क. ख. ङ. च. °र्थे भक्त्या रुद्रपरायणाः । ये । ग. घ. ज. °र्थे भक्त्या चा° । ९ ञ. °या तव । मा° । १० ञ. °दा । °आदिती° ।

विसृज्यैवं तदा रुद्रं ब्रह्मा चान्तरधीयत । वाराणस्यां महादेवो गत्वा तीर्थे विवेश च ॥ २१८

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे ब्रह्मरुद्राध्यानाध्यायश्चतुर्दशः ॥ १४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२१८०३

---

## अथ पञ्चदशोऽध्यायः ।

---

भीष्म उवाच—

किं कृतं ब्रह्मणा ब्रह्मन्प्रेक्ष्य[1] वाराणसीं पुरीम् । जनार्दनेन वा कर्म शंकरेण च यन्मुने ॥ १

कथं यज्ञः कृतस्तेन कस्मिंस्तीर्थे वदस्व मे । के सदस्या ऋत्विजश्च सर्वांस्तान्प्रब्रवीहि मे ॥

के देवास्तर्पितास्तेन एतन्मे कौतुकं महत् ॥ २

पुलस्त्य उवाच—

श्रीनिधानं पुरा[2] मेरोः शिखरं[3] रत्नचर्चितम् । अनेकाश्चर्यनिलयं बहुपादपसंकुलम् ॥ ३

विचित्रधातुभिश्चित्रं स्वच्छस्फटिकनिर्मलम् । लतावितानशोभाढ्यं शिखिशब्दनिनादितम्[4] ॥ ४

मृगेन्द्ररववित्रस्तगजयूथसमाकुलम् । निर्झराम्बुप्रपातोत्थशीकरासारशीतलम् ॥ ५

वाताहततरुव्रातप्रसन्नायतचित्रितम् । मृगनाभिचरामोदवासिताशेषकाननम् ॥ ६

लताग्रहरतिश्रान्तसुप्तविद्याधरानुगम् । प्रगीतकिंनरव्रातमधुरध्वनिनादितम् ॥ ७

तस्मिन्ननेकविन्यासशोभिताशेषभूमिकम् । वैराजं नाम भवनं ब्रह्मणः परमेष्ठिनः ॥ ८

तत्र दिव्याङ्गनोद्गीतमधुरध्वनिशब्दिता । पारिजाततरूत्पन्नमञ्जरीदाममालिनी ॥ ९

रत्नरश्मिसमूहोत्थबहुवर्णविचित्रिता । विन्यस्तस्तम्भकोटिस्तु निर्मलादर्शशोभिता ॥ १०

अप्सरोनृत्यविन्यासविलासोल्लासलासिता । बह्वातोद्यसमुत्पन्नसंमूहस्वननादिता ॥ ११

लयतालयुतानेकगीतवादित्रशोभिता । सभा कान्तिमती नाम देवानां शर्मदायिका ॥ १२

ऋषिसंघसमायुक्ता मुनिवृन्दनिषेविता । द्विजातिसामशब्देन नादिताऽऽनन्ददायिनी ॥ १३

तस्यां निविष्टं(ष्टो) देवेशं(शो) ध्यानासक्तं(क्तः) पितामहम् (हः)। ध्यायमानं(नः) परं देवं येनेदं निर्मितं जगत् ॥ १४

ध्यायतो बुद्धिरुत्पन्ना कथं यज्ञं करोम्यहम् । कस्मिन्स्थाने मया यज्ञः कार्यः कुत्र धरातले १५

काशी प्रयागस्तुङ्गा च नैमिषं पुष्करं तथा । काञ्ची भद्रा देविका तु कुरुक्षेत्रं सरस्वती ॥ १६

प्रभासादीनि तीर्थानि पृथिव्यामिह मध्यतः । क्षेत्राणि पुण्यतीर्थानि सन्ति यानीह सर्वतः ॥

ममाऽऽदेशात्तु रुद्रेण कृतान्यन्यानि भूतले । यथाऽहं सर्वदेवेषु आदिदेवो व्यवस्थितः ॥ १८

तथेदं परमं तीर्थमादिभूतं करोमि वै । अहं पद्मे समुत्पन्नः पद्मं तद्विष्णुनाभिजम् ॥ १९

पुष्करं प्रोच्यते तीर्थमृषिभिर्वेदपाठकैः । तस्यैवं चिन्तयानस्य ब्रह्मणो वै प्रजापतेः ॥ २०

---

१ क. ख. घ. च. ज. न्प्रेक्ष्य वा°। २ ञ. पुरं । ३ ञ. शिखरे । ४ क.ख.ग.ङ. च. ज. °तमधुरध्वनिनादित°। ५ क. ख. ङ. च. ज. °तपतत्पत्रा म° । ६ क. च. ज. °रीदाममानिता । र°। घ. °रीदामशोभिता । र° । ख. ङ. °रीदानभाविता । र° । ७ ख. ङ. °त्नराशीस° । ८ क. ख. घ. ङ. च. ञ. °हुरत्नवि° । ९ ग. °ता । लताविन्यस्तको° । १० ग. च. ज. °समहस्तनिना° । ११ क. ख. ङ. च. ज. °न्तिभवा ना° । १२ क. ख. ग. घ. ङ. च. ज. °नां नर्म° । १३ क. ख. ग. घ. ङ. च. ज. °शं संध्यास° । १४ ग. घ. ज. वरं । १५ क. ख. घ. ङ. च. ज. सृङ्खलं । ग. शृङ्खलं । १६ ञ. यद्यपि ।

मतिरेषा समुत्पन्ना व्रजाम्येष धरातले । प्राक्स्थलं तु समासाद्य प्रविष्टस्तद्वनोत्तमम् ॥ २१
नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् । नानापक्षिरवाकीर्णं नानामृगगणाकुलम् ॥ २२
द्रुमपुष्प[1]रसामोदैर्वासितं [2]यत्समन्ततः । बुद्धिपूर्वमिव न्यस्तैः पुष्पैर्भूषितभूतलम् ॥ २३
नानागन्धर[3]सैर्न्यैः पक्वापक्वैः षडर्तुकैः । फलैः सुवर्णरूपाढ्यैर्घ्राणदृष्टिमनोहरैः ॥ २४
जीर्णपत्रं तृणं यत्र शुष्ककाष्ठफलानि च । बहिः क्षिपति जातानि मारुतोऽनुग्रहादिव ॥ २५
नानापु[4]ष्पसमूहानां गन्धमादाय मारुतः । शीतलो वाति खं भूमिं दिशो यत्राभिवासयन् ॥ २६
हरितस्निग्धनिश्छिद्रैरकी[5]टवनकोटरैः । वृक्षैरनेकसंज्ञैर्यद्भूषितं शिखरान्वितैः ॥ २७
अरोगैर्दर्शनीयैश्च सुवृत्तैः कैश्चिदुज्ज्वलैः । कुटुम्बमिव विप्राणामृत्विग्जैर्भाति सर्वशः ॥ २८
शोभन्ते धातुसंकाशैरङ्कुरैः [6]प्रावृता द्रुमाः । कुलीनैरिव निश्छिद्रैः स्वगुणैः [7]प्रावृता नराः ॥ २९
पवनाविद्धशिखरैः स्पृशन्तीव परस्परम् । आजिघ्रन्तीव चान्योन्यं पुष्पशाखावतंसकाः ॥ ३०
नागवृक्षाः क्वचित्पुष्पैर्द्रुमवानीरकेशरैः । नयनैरिव शोभन्ते [8]धवलैः कृष्णतारकैः ॥ ३१
पुष्पसंपन्नशिखराः कर्णिकारद्रुमाः क्वचित् । युग्मैर्युग्मैर्द्विधा चेह शोभन्ते साधुदंपती ॥ ३२
सुपुष्पप्रभवाटोपैः सिन्धुवारद्रुपङ्क्तयः । मूर्तिमत्य इवाऽऽभा[9]न्ति पूजिता वनदेवताः ॥ ३३
क्वचित्क्वचित्कुन्दलताः स्वपुष्पाभरणोज्ज्वलाः । दिक्षु वृक्षेषु शोभन्ते बालचन्द्रा इवोदिताः ॥ ३४
अतिक्रम्य द्रुमाग्राणि भासन्ते यूथिकालताः । पुष्पिताः पुष्पनिकरैर्वीजयन्त्य इवोत्थिताः ॥ ३५
सर्जार्जुनाः क्वचिद्भान्ति वनोद्देशेषु पुष्पिताः । धौतकौशेयवासोभिः प्रावृताः पुरुषा इव ॥ ३६
अतिमुक्तकवल्लीभिः पुष्पिताभिस्तथा द्रु[10]माः । उपगूढा विराजन्ते नारीभिरिव सुप्रियाः ॥ ३७
*रू(चू)ताश्चतिलकाश्चैव मञ्जरीभिः करैरिव । वायुघातादि चान्योन्यं ढौकन्तीवाथ सज्जनाः ॥ ३८
अपरस्परसंसक्तैः शालाशोकाश्च पल्लवैः । हस्तैर्हस्तान्स्पृशन्तीव सुहृदश्चिरसंगताः ॥ ३९
फलपुष्पभरानम्राः पनसाः सरलार्जुनाः । अन्योन्यमर्चयन्तीव पुष्पैश्चैव फलैस्तथा ॥ ४०
वायुना वेगसंश्लिष्टैः पादपाः शालबाहुभिः । अभ्याशमागते लोके प्रीतिभावैरिवोत्थिताः ॥ ४१
पुष्पाणामवरोधेन स्वशोभा[11]र्थं व्रजन्ति वै । वसन्तमहमासाद्य पुरुषाः स्पर्धयेव हि ॥ ४२
पुष्पशोभाभरनतैः शिखरैर्वायुकम्पितैः । नृत्यन्तीव नराः प्री[12]ताः स्रगलंकृतशेखराः ॥ ४३
भृङ्गाः [13]पर्यन्तविक्षिप्ताः पुष्पावलिलतावृताः । [14]सर्वल्लीकाः प्रनृत्यन्ति [15]मानवा इव संगताः ॥ ४४
स्वपु[16]ष्पोन्नतवल्लीभिः पादपाः क्वचिदावृताः । भान्ति तारागणैश्चित्रं शरदीव नभस्तलम् ॥ ४५
द्रुमाणामथ वाऽग्रेषु पुष्पिता मालतीलताः । शेखरा इव शोभन्ते रचिता बुद्धिपूर्वकम् ॥ ४६
हरिताः काञ्चनच्छायाः फलिताः पुष्पिता द्रुमाः । सौहृदं दर्शयन्तीव नराः साधुसमागमे ॥ ४७
पुष्पकिञ्जल्ककपिला गताः स[17]र्वलतासु च । कदम्बपुष्पसंकाशा घोषयन्तीव षट्पदाः ॥ ४८

---

* अयं श्लोको झ. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. ज. °ष्पभरामो° । २ ग. घ ज. यत्सुरासुरान् । बु° । ३ क. ख. ङ. च. °रसैर्दिव्यैः प° । ग. घ. ज. °रसैं रम्यैः प° । ४ झ. °ष्पमहामोहं ग° । ५ ख. ग. च. ज. °टकवनोत्कटैः । वृ° । ६ क. ख. ग. घ. ङ. च. ज. प्रावृता । ७ ञ. प्रावृता । ८ ञ. चञ्चलैः । ९ क. घ. च. ज. °न्ति पूजिता वनदेवताः । १० झ. °माः । पुष्पिता इव भासन्ते । ११ झ. °र्थे निवेशिताः । व° । १२ झ. °ताः समलं° । १३ क. ख. ग. घ. ङ. च. ज. पवनावि° । १४ क. ख. ग. घ. च. ज. सावर्णिकाः । १५ क. ख. ग. घ. ङ. च. ज. माधवा इव सप्रियाः । स्त्र° । १६ ज. °पुष्पनत° । १७ क. ग. घ. ङ. च. ज. °र्वदिशासु ।

क्वचित्पुष्पासवक्षीवाः संपतन्ति यतस्ततः। पुंस्कोकिलगणा वृक्षगहनेष्विव सुप्रियाः ॥ ४९
शिरीषपुष्पसंकाशाः शुका मिथुनकुञ्चिताः। कीर्तयन्ति गिरश्चित्राः पूजिता ब्राह्मणा यथा ॥ ५०
सहचारिसुसंयुक्ता मयूराश्चित्रबर्हिणः। वनान्तेष्वपि नृत्यन्ति शोभन्त इव नर्तकाः ॥ ५१
कूजन्तः पक्षिसंघाता नानाद्रुमविचारिणः। कुर्वन्ति रमणीयं वै रमणीयतरं वनम् ॥ ५२
नानामृगगणाकीर्णं नित्यं प्रमुदिताण्डजम्। तद्वनं नन्दनसमं मनोदृष्टिविवर्धनम् ॥ ५३
पद्मपाणिस्तु भगवांस्तथारूपं वनोत्तमम्। ददर्शाऽऽदर्शवद्दृष्ट्या सौम्यया पाययन्निव ॥ ५४
ता वृक्षपङ्क्तयः सर्वा दृष्ट्वा देवं तथाऽऽगतम्। निवेद्य ब्रह्मणे भक्त्या मुमुचुः पुष्पसंपदः ॥ ५५
पुष्पप्रतिग्रहं कृत्वा पादपानां पितामहः। वरं वृणीध्वं भद्रं वः पादपानित्युवाच सः ॥ ५६
एवमुक्ता भगवता तरवो निरवग्रहाः। ऊचुः प्राञ्जलयः सर्वे नमस्कृत्वा विरिञ्चिनम् ॥ ५७

वृक्षा ऊचुः—

वरं ददासि चेद्देव प्रपन्नजनवत्सल। इहैव भगवन्नित्यं वने संनिहितो भव ॥ ५८
एष नः परमः कामः पितामह नमोऽस्तु ते। त्वं चेद्वससि देवेश वनेऽस्मिन्विश्वभावन ॥ ५९
सर्वात्मना प्रपन्नानां वाञ्छतामुत्तमं वरम्। वरकोटिभिरन्याभिरेष नो दीयतां वरः।
भवतः संनिधानेन तीर्थेभ्यः प्रवरं महत् ॥ ६०

ब्रह्मोवाच—

उत्तमं सर्वक्षेत्राणां पुण्यमेतद्भविष्यति। नित्यं पुष्पफलोपेता नित्यं सुस्थिरयौवनाः ॥
कामगाः कामरूपाश्च कामरूपफलप्रदाः। कामसंदर्शनाः पुंसां तपस्यन्ति(तां) फलप्रदाः ॥
श्रिया परमया युक्ता मत्प्रसादाद्भविष्यथ ॥ ६२

पुलस्त्य उवाच—

एवं स वरदो ब्रह्मा अनुजग्राह पादपान्। स्थित्वा वर्षसहस्रं तु पुष्करं प्राक्षिपद्भुवि ॥ ६३
क्षितिं निपतता तेन व्यकम्पत रसातलम्। विवशास्तत्यजुर्वेलां सागराः क्षुभितोर्मयः ॥ ६४
शक्राशनिहतानीव व्याघ्रव्यालावलीनि व। शिखराण्यप्यशीर्यन्त पर्वतानां सहस्रशः ॥ ६५
देवसिद्धविमानानि गन्धर्वनगराणि च। प्रचेलुर्बभ्रमुः पेतुर्विविशुश्च धरातलम् ॥ ६६
कपोतमेघाः खात्पेतुः पुटसंघातदर्शिनः। ज्योतिर्गणांश्छादयन्तो बभूवुस्तीव्रभास्कराः ॥ ६७
महता तस्य शब्देन मूकान्धबधिरीकृतम्। बभूव व्याकुलं सर्वं त्रैलोक्यं सचराचरम् ॥ ६८
सुरासुराणां सर्वेषां शरीराणि मनांसि च। अवसेदुश्च मम्लुश्च किमेतच्चैव जज्ञिरे ॥ ६९
धैर्यमालम्ब्य सर्वेऽथ ब्रह्माणं चाप्यलोकयन्। न च ते तमपश्यन्त क्व नु ब्रह्मा गतो ह्यभूत् ७०
किमर्थं कम्पिता भूमिर्निमित्तोत्पातदर्शनम्। तावद्विष्णुर्गतस्तत्र यत्र देवा व्यवस्थिताः ॥
प्रणिपत्य इदं वाक्यमुक्तवन्तो दिवौकसः ॥ ७१

देवा ऊचुः—

किमेतद्भगवन्ब्रूहि निमित्तोत्पातदर्शनम्। त्रैलोक्यं कम्पितं येन संयुक्तं कालधर्मणा ॥ ७२
जातं कल्पावसानं तु भिन्नमर्यादसागरम्। चत्वारो दिग्गजाः किं तु बभूवुरचलाश्चलाः ॥ ७३

---

१ ख. ग ङ. च. ज. नानारुतविराविणः। घ. नानानतविनोदिनः। २ क. ख. ग. घ. ङ. च. ज. °रः। संनिधानेन तीर्थेभ्य इदं तु प्र°। ३ ञ. तपःसिद्धुज्ज्वला दृशाम्। श्रि°। ४ क. ख. ग. घ. ङ. च. ज. प्रीत्या। ५ झ.° मेघाश्चात्यन्तपु°। ६ क. ख. ग. झ. ङ. च. ज. °मिरिति चोत्पा°। ७ क. ग. घ. च. ज. जातकम्पाव°।

धरा समावृता कस्मात्सप्तसागरवारिणा । उत्पत्तिर्नास्ति शब्दस्य भगवन्निष्प्रयोजना ॥ ७४
यादृशोऽयं स्मृतः शब्दो न भूतो नापि संश्रुतः । त्रैलोक्यमाकुलं येन चक्रे रौद्रेण तेजसा ॥७५
शुभाशुभोऽयं वा शब्दस्त्रैलोक्यस्य दिवौकसाम् । भगवन्यद्विजानासि किमेतत्कथयस्व नः ॥
एवमुक्तोऽब्रवीद्विष्णुः परमेणानुभावितः ॥ ७६

विष्णुरुवाच—

मा भैष्ट मरुतः सर्वे शृणुध्वं चात्र कारणम् । निश्चयेनानुविज्ञाय वदाम्येष यथाविधम् ॥ ७७
पद्महस्तो हि भगवान्ब्रह्मा लोकपितामहः । भूप्रदेशे पुण्यराशौ यज्ञं कर्तुं व्यवस्थितः ॥ ७८
अवरोहे पर्वतानां वने चातीव शोभने । कमलं तस्य हस्तात्तु पतितं धरणीतले ॥ ७९
तस्य शब्दो महानेष येन यूयं प्रकम्पिताः । तैत्रासौ तरुवृन्देन पुष्पामोदाभिनन्दितः॥ ८०
अनुगृह्याथ भगवान्वनं तत्सुमृगाण्डजम् । जगतोऽनुग्रहार्थाय तत्र वासमरोचयत् ॥ ८१
पुष्करं नाम तत्तीर्थं क्षेत्रपूषरमेव च । जनितं तद्भगवता लोकानां हितकारिणा ॥ ८२
ब्रह्माणं तत्र वै गत्वा तोषयध्वं मया सह । आराध्यमानो भगवान्प्रदास्यति वरान्वरान् ॥ ८३
इत्युक्त्वा भगवान्विष्णुः सह तैर्देवदानवैः । जगाम तद्वनोद्देशं यत्राऽऽस्ते स तु कंजजः ॥ ८४
प्रहृष्टास्तुष्टमनसः कोकिलालापलापिताः । पुष्पोच्चयोज्ज्वलं शस्तं विविशुर्ब्रह्मणो वनम् ॥ ८५
संप्राप्तं सर्वदेवैस्तु वनं नन्दनसंमितम् । पद्मिनीमृगैपुष्पाढ्यं सुदृढं शुशुभे तदा ॥ ८६
प्रविश्याथ वनं देवाः सर्वपुष्पोपशोभितम् । इह देवोऽत्र देवा वै बभ्रमुस्तद्दिदृक्षवः ॥ ८७
मृगयन्तस्ततस्ते तु सर्वे देवाः सवासवाः । अद्भुतस्य वनस्यान्तं न ते ददृशुराशुगाः ॥ ८८
विचिन्वद्भिस्तदा देवं देवैर्वायुर्विलोकितः । स तानुवाच ब्रह्माणं न द्रक्ष्यध्वे तपो विना ॥ ८९
तदा खिन्ना विचिन्वन्तस्तस्मिन्पर्वतरोधसि । दक्षिणे चोत्तरे चैव अन्तराले पुनः पुनः ॥ ९०
वायूक्तं हृदये कृत्वा वायुस्तानब्रवीद्वचः ॥ ९१

वायुरुवाच—

त्रिविधो दर्शनोपायो विरिञ्चेरस्य सर्वदा । श्रद्धाज्ञानेन तपसा योगेन च निगद्यते ॥ ९२
सकलं निष्कलं चैव यं पश्यन्ति च योगिनः । तपस्विनस्तु सकलं ज्ञानिनो निष्कलं परम् ॥९३
समुत्पन्ने तु विज्ञाने मन्दश्रद्धो न पश्यति । भक्त्या परमया क्षिप्रं ब्रह्म पश्यन्ति योगिनः ॥९४
द्रष्टव्यो निर्विकारोऽसौ प्रधानपुरुषेश्वरः । कर्मणा मनसा वाचा नित्ययुक्ताः पितामहम् ॥ ९५
तपश्चरध्वं भद्रं वो ब्रह्माराधनतत्पराः । ब्राह्मीं दीक्षां प्रपन्नानां भक्तानां च द्विजन्मनाम् ॥ ९६
सर्वकालं विजानाति दातव्यं दर्शनं मया । वायोस्तु वचनं श्रुत्वा हितमेतदवेक्ष्य वै ॥ ९७
ब्रह्मेच्छाविष्टमनसो वाक्पतिं च ततोऽब्रुवन् ॥ ९८

देवा ऊचुः—

मज्ञान विबुधास्माकं ब्राह्मीं दीक्षां वदस्व नः ॥ ९९

पुलस्त्य उवाच—

संदिदीक्षयिषुः क्षिप्रममरान्ब्रह्मदीक्षया । वेदोक्तेन विधानेन दीक्षयामास तान्गुरुः ॥ १००

---

१ क. ख. ङ. च. °तो न भविष्यति। त्रैं°। २ क. ख. ग. घ. ङ. च. ज. तदाऽसौ । ३ क. ख. ग. ङ. च. क्षेत्रमृषभमें° । घ. क्षेत्रं वृषभमें° । ४ झ. °ह्मणेच्छया । सं° । ५ क. ख. ङ. °गपक्षाढ्यं° । च. छ. °गपक्ष्याढ्यं । ६ क. ख. ग. घ. च. ज. सर्वेपु° । ७ क. ख. ग. घ. च. ज. श्रुतिज्ञानेन ।

विनीतवेषाः प्रणता अन्तेवासित्वमन्वयुः । ब्रह्मप्रसादं संप्राप्तः पौष्करं ज्ञानमीरितम् ॥ १०१
यज्ञं चकार विधिना धिषणोऽध्वर्युसत्तमः । पद्मं कृत्वा मृणालाढ्यं पद्मदीक्षाप्रयोगतः ॥ १०२
अनुजग्राह देवांस्तांन्परेच्छाप्रेरितो मुनिः । तेभ्यो ददौ विवेकिभ्यः स वेदोक्तविधानवित् ॥ १०३
दीक्षां वै विस्मयं त्यक्त्वा वृहस्पतिरुदारधीः । एकमग्निं च हुत्वाऽपि होमार्थे त्रिदिवौकसाम् ॥
प्रादादाङ्गिरसस्तुष्टो जाप्यं वेदोदितं च यत् । त्रिसुपर्णं त्रिमधु च पावमानीं च पावनीम् ॥ १०५
स हि जाप्यादिकं सर्वमशिक्षयदुदारधीः । आपो हिष्ठेति यत्स्नानं ब्राह्मं तत्परिपठ्यते ॥ १०६
पापघ्नं दुष्टशमनं पुष्टिश्रीवलवर्धनम् । सिद्धिदं कीर्तिदं चैव कलिकल्मषनाशनम् ॥ १०७
तस्मात्सर्वप्रयत्नेन ब्राह्मं स्नानं समाचरेत् । कुर्वन्तो मौनिनो दान्ता दीक्षिताः क्षपितेन्द्रियाः ॥
सर्वे कमण्डलुधरा मुक्तिकामाक्षमालिनः । दण्डिनश्चीरवस्त्राश्च जटाभिरभिशोभिताः ॥ १०९
स्थाने वीरासनरताः प्रज्ञाध्यानावधारिणः । परे ब्रह्मणि सन्तोऽन्ये नियताहारकाङ्क्षिणः ११०
अध्यात्मनिरताः शान्ताः सङ्गध्यानविवर्जिताः । एवं व्रतधराः सर्वे त्रिकालं स्नानमाचरन् १११
भक्त्या परमया युक्ता विधिना परमेण च । कालेन महता ध्यानाद्देवज्ञानमनोगताः ॥ ११२
ब्रह्मध्यानाग्निनिर्दग्धा यदा शुद्धैकमानसाः । आविर्वभूव भगवान्सर्वेषां दृष्टिगोचरः ॥ ११३
तेजसाऽऽप्यायितास्तस्य वभूवुर्भ्रान्तचेतसः । अतोऽवलम्ब्य ते धैर्यमिष्टदेवं यथाविधि ॥ ११४
षडङ्गवेदयोगेन हृष्टचित्तास्तु तत्पराः । शिरोगतैरञ्जलिभिः शिरोभिश्च महीं गताः ॥
तुष्टुवुः सृष्टिकर्तारं स्थितिकर्तारमीश्वरम् ॥ ११५

देवा ऊचुः—

ब्रह्मणे ब्रह्मदेहाय ब्रह्मण्यायाजिताय च । नमस्कुर्मः सुनियताः क्रतुवेदप्रदायिने ॥ ११६
भक्तानुकम्पिने देव सृष्टिरूपाय ते नमः । पश्चास्य शुभया भक्त्या वेदजाप्यस्तुताय च ॥ ११७
वहुरूपस्वरूपाय रूपाणां शतधारिणे । सावित्रीपतये देव गायत्रीपतये नमः ॥ ११८
पद्मासनाय पद्माय पद्मवक्त्राय ते नमः । वरदाय वराहाय कूर्माय च मृगाय च ॥ ११९
जटामुकुटयुक्ताय श्रुवश्रुच(श्रवश्रुति)निधारिणे । मृगाङ्क मृगधर्माय धर्मनेत्राय ते नमः ॥ १२०
विष्वक्सेनाय विश्वाय विश्वेशाय नमो नमः । धर्मनेत्र त्राणमस्मादधिकं कर्तुमर्हसि ॥ १२१
वाङ्मनःकायभावैस्त्वां प्रपन्नाः स्म पितामह । एवं स्तुतस्तदा देवैर्ब्रह्मा ब्रह्मविदां वरः ॥ १२२
प्रदास्यामि स्मृतो वाढममोघं दर्शनं हि वः । ब्रुवन्तु वाञ्छितं पुत्राः प्रदास्यामि न संशयः ॥
एवमुक्ता भगवता देवा वचनमब्रुवन् ॥ १२३

देवा ऊचुः—

एष एवाद्य भगवन्सुपर्यासो महान्वरः । जनितो नः सुशब्दोऽयं कमलं क्षिपता त्वया ॥ १२४
किमर्थं कम्पिता भूमिर्लोकाश्चाऽऽकुलिताः कृताः । नैतन्निरर्थकं देव उच्यतामत्र कारणम् १२५

ब्रह्मोवाच—

युष्मद्धितार्थमेतद्वै भयं विनिहितं कृतम् । देवतानां च रक्षार्थं श्रूयतामत्र कारणम् ॥ १२६

१ झ. °सादसं°। २ क. ख. ग. घ. ङ. च. ज. °प्राप्ताः पौं°। ३ क. ख. ग. ङ. च. ज. °स्तान्सुरे°। घ. °स्तान्सुरेक्षाप्रे°। ४ क. ख. ङ. च °ग्निं च संस्कृत्य महात्मा त्रि°। ग. घ. ज. °ग्निं वहून्कृत्वा माहात्म्यं त्रि°। ५ क. च. ज. मुक्तकक्षाक्ष°। ६ क. ख. घ. च. ज. प्रयत्नध्यानधा°। ७ ञ. °णः। मनो ब्रह्मणि संयोज्य नि°। ८ क. ख. ग. घ. ङ. च. ज. अनिष्टदर्शनालापशा°। ९ ख. ग. घ. ङ. च. ज. विश्वनाम्नेऽथ वि°। १० झ. °मैत्राता त्वमस्माकं सुधियां क°। ११ क. ख. ग. घ. ङ. च. ज. मया।

असुरो वज्रनाभोऽयं बालजीवापहारकः । अवस्थितस्त्ववष्टभ्य रसातलतलाश्रयम् ॥ १२७
युष्मदागमनं ज्ञात्वा उपस्थान्निहितायुधान् । हन्तुकामो दुराचारः सेन्द्रानपि दिवौकसः ॥ १२८
घातः कमलपातेन मया तस्य विनिर्मितः । स राज्यैश्वर्यदर्पिष्ठस्तेनासौ निहतो मया ॥ १२९
लोकेऽस्मिन्समये भक्ता ब्राह्मणा वेदपारगाः । मैव ते दुर्गतिं यान्तु लभन्तां सुगतिं पुनः १३०
देवानां दानवानां च मनुष्योरगरक्षसाम् । भूतग्रामस्य सर्वस्य समोऽस्मि त्रिदिवौकसः ॥ १३१
युष्मद्धितार्थं पापोऽसौ मया मन्त्रेण घातितः । माप्तः पुण्यकृतां लोकान्कमलस्यास्य दर्शनात् ॥
यन्मया पद्ममुक्तं तु तेनैवं पुष्करं भुवि । ख्यातं भविष्यते तीर्थं पावनं पुण्यदं महत् ॥ १३३
पृथिव्यां सर्वजन्तूनां पुण्यदं परिपठ्यते । कृतश्चानुग्रहो देवा भक्तानां भक्तिमिच्छताम् ॥ १३४
वनेऽस्मिन्नित्यवासेन वृक्षैरभ्यर्थितेन च । महाकालो वने त्वागादागतस्य ममानघाः ॥ १३५
तपस्यतां च भवतां महज्ज्ञानं प्रदर्शितम् । कुरुध्वं हृदये देवा स्वार्थे चैव परार्थकम् ॥ १३६
भवद्भिर्दर्शनीयं तु नानारूपधरैर्भुवि । द्विषन्वै ज्ञानिनं विप्रं पापेनाऽऽच्छादितो नरः ॥ १३७
न विमुच्येत पापेन जन्मकोटिशतैरपि । वेदाङ्गपारगं विप्रं न हन्यान्न च दूषयेत् ॥ १३८
एकस्मिन्निहते यस्मात्कोटिर्भवति घातिता । एकं वेदान्तगं विप्रं भोजयेच्छ्रद्धयाऽन्वितः ॥१३९
तस्य भुक्ता भवेत्कोटिर्विप्राणां नात्र संशयः । यः पात्रपूर्णां भिक्षां यतीनां तु प्रयच्छति १४०
विमुक्तः सर्वपापेभ्यो नासौ दुर्गतिमाप्नुयात् । यथाऽहं सर्वदेवानां ज्येष्ठः श्रेष्ठः पितामहः॥ १४१
तथा ज्ञानी सदा पूज्यो निर्ममो निरहंकृतः । संसारबन्धमोक्षार्थं ब्रह्मगुह्यमिदं व्रतम् ॥ १४२
मया प्रणीतं विप्राणामपुनर्भवकारणम् । अग्निहोत्रमुपादाय यस्त्यजेदजितेन्द्रियः ॥ १४३
निरयं स प्रयात्याशु प्रणीतो यमकिंकरैः । लोकयात्रावितण्डाच्च क्षुद्रं कर्म करोति यः ॥ १४४
सरागचित्तः शृङ्गारी नारीजनधनप्रियः । एकान्तभोजी मिष्टाशी कृषिवाणिज्यसेवकः ॥ १४५
अवेदो वेदनिन्दी च परभार्यां च सेवते । इत्यादिदोषदुष्टो यस्तस्य संभाषणादपि ॥ १४६
नरो नरकगामी स्याद्यश्च सद्वृत्तदूषकः । असंतुष्टं भिन्नवृत्तिं दुर्मतिं पापकारिणम् ॥ १४७
न स्पृशेदङ्गसङ्गेन स्पृष्ट्वा स्नानेन शुध्यति । एवमुक्त्वा स भगवान्ब्रह्मा तैरमरैः सह ॥ १४८
क्षेत्रं निवेशयामास यथावत्कथयामि ते । एतद्वै पुष्करं तीर्थं प्राची यावत्सरस्वती ॥ १४९
पूर्वं तु नन्दनात्कृत्स्नं यावत्क्रम्यं सपुष्करम् । वेदी ह्येषा कृता यज्ञे ब्रह्मणा लोककारिणा १५०
ज्येष्ठं तु प्रथमं ज्ञेयं तीर्थं त्रैलोक्यपावनम् । ख्यातं तद्ब्रह्मदैवत्यं मध्यमं वैष्णवं तथा ॥ १५१
कनिष्ठं रुद्रदैवत्यं ब्रह्मा पूर्वमकारयत् । आद्यमेतत्परं क्षेत्रं गुह्यं वेदे च पठ्यते ॥ १५२
अरण्यं पुष्कराख्यं तु ब्रह्मा संनिहितः प्रभुः । अनुग्रहो भूमिभागे कृतो वै ब्रह्मणा स्वयम् १५३
अनुग्रहार्थं सर्वेषां जन्तूनां भूमिचारिणाम् । सुवर्णवज्रपर्यन्ता वेदिकाङ्का मही कृता ॥ १५४
विचित्रकुट्टिमा रत्नैः कारिता सर्वशोभना । रमते तत्र भगवान्ब्रह्मा लोकपितामहः ॥ १५५
विष्णुरुद्रौ तथा देवौ वसवोऽप्यश्विनावपि । मरुतश्च महेन्द्रेण रमन्ते त्रिदिवौकसः ॥ १५६

१ झ. अथं स्थि° । २ क. ग. घ. च. ज. °पेनैवार्दितो । ३ क. ख. ग. घ. ङ. च. ज. निष्परिग्रहः । ४ झ. °गुप्तमिं° । ५ ज. °जेत जि° । ६ क. ख. ग. घ. ङ. च. ज. रौरवं । ७ झ. °विभण्डश्च क्षु° ८ ग. घ. ज. °कः । वेदकृद्वेद°। क. ख. ङ. च °कः । वेदहृद्वेद° । ९ क. ङ. च. °यश्च सद्व्रव्यदू° । झ. °यतः स ब्रह्मदू° । ज. °यश्च सद्रत्नदू° । १० क. ख ग. घ. ङ. च. ज. भिन्नचितं । । ११ ख. ग. घ. ङ. च. ज. ते । उत्तरे चन्द्रनद्यास्तु प्रा° । १२ ख. ग. घ. ङ. च. ज. °वत्कल्पं स° । १३ झ. °ह्मवेदाख्यं म° । १४ झ. पार्श्वे ।

एतत्ते तथ्यमाख्यातं लोकानुग्रहकारकम् । संहितानुक्रमेणात्र मन्त्रैश्च विधिपूर्वकम् ॥ १५७
वेदान्पठन्ति ये विप्रा अग्निशुश्रूषणे रताः । वसन्ति ब्रह्मसामीप्ये सर्वे तेनानुभाविताः ॥ १५८

भीष्म उवाच—

भगवन्केन विधिना अरण्ये पुष्करे नरैः । ब्रह्मलोकमभीप्सद्भिर्वस्तव्यं तीर्थवासिभिः ॥ १५९
किं मनुष्यैरुत स्त्रीभिरुत वर्णाश्रमान्वितैः । वसद्भिः किमनुष्ठेयमेतत्सर्वं ब्रवीहि मे ॥ १६०

पुलस्त्य उवाच—

नरैः स्त्रीभिश्च वस्तव्यं वर्णाश्रमनिवासिभिः । स्वधर्माचारनिरतैर्दम्भमोहविवर्जितैः ॥ १६१
कर्मणा मनसा वाचा ब्रह्मभक्तैर्जितेन्द्रियैः । अनसूयुभिरक्षुद्रैः सर्वभूतहितैर्नरैः ॥ १६२

भीष्म उवाच—

किं कुर्वाणो नरः कर्म ब्रह्मभक्तस्त्विहोच्यते । कीदृशा ब्रह्मभक्ताश्च स्मृता नृणां वदस्व मे॥१६३

पुलस्त्य उवाच—

त्रिविधा भक्तिरुद्दिष्टा मनोवाँक्कर्मसंभवा । लौकिकी वैदिकी चापि भवेदाध्यात्मिकी तथा १६४
ध्यानधारणया बुद्ध्या वेदार्थस्मरणं हि यत् । ब्रह्मप्रीतिकरी चैषा मानसी भक्तिरुच्यते॥ १६५
मन्त्रवेदनमस्कारैरग्निश्राद्धादिचिन्तनैः । जाप्यैश्चाऽऽरणकैश्चैव वाचिकी भक्तिरुच्यते ॥ १६६
व्रतोपवासनियमैश्चित्तेन्द्रियनिरोधिभिः । कृच्छ्रैः सांतपनैश्चान्यैस्तथा चान्द्रायणादिभिः ॥ १६७
ब्रह्मकृच्छ्रोपवासैश्च तथा चान्यैः शुभव्रतैः । कायिकी भक्तिराख्याता त्रिविधा तु द्विजन्मनाम् ॥
गोघृतक्षीरदधिभी रत्नदीपकुशोदकैः । गन्धैर्माल्यैश्च विविधैर्धातुभिश्चोपपादितैः ॥ १६९
घृतगुग्गुलधूपैश्च कृष्णागरुसुगन्धिभिः । भूषणैर्हेमरत्नाद्यैश्चित्राभिः स्रग्भिरेव च* ॥ १७०
नृत्यवादित्रगीतैश्च सर्वैर्वन्योपहारकैः । भक्ष्यभोज्योपहारैश्च या पूजा क्रियते नरैः॥ १७१
पितामहं समुद्दिश्य भक्तिः सा लौकिकी मता । ऋग्यजुःसामजाप्यानि संहिताध्यापनानि च ॥
क्रियते ब्रह्म उद्दिश्य सा भक्तिर्वैदिकी स्मृता । वेदमन्त्रहविर्योगैर्या क्रिया वैदिकी स्मृता॥१७३
दर्शे वा पौर्णमास्यां वा कर्तव्यमग्निहोत्रकम् । प्रशस्तं दक्षिणादानं पुरोडाशचरुक्रिया ॥ १७४
इष्टिर्धृतिः सोमपानं यज्ञीयं कर्म सर्वशः । अग्निभूम्यनिलाकाशानिशाम्बुकरभास्करम् ॥ १७५
समुद्दिश्य कृतं कर्म तत्सर्वं ब्रह्मदैवतम् । आध्यात्मिकी तु द्विविधा ब्रह्मभक्तिः स्थिता नृप१७६
संख्याख्या योगजा चान्या विभागं तत्र मे शृणु । चतुर्विंशतितत्त्वानि प्रधानादीनि संख्यया॥
अचेतनानि भोग्यानि पुरुषः पञ्चविंशकः । चेतनः पुरुषो भोक्ता न कर्ता तस्य कर्मणः॥ १७८
आत्मा नित्योऽव्ययश्चैव अधिष्ठाता प्रयोजकः। अव्यक्तः पुरुषो नित्यः कारणं च पितामहः ॥
तत्त्वसर्गो भावसर्गो भूतसर्गश्च तत्त्वतः । संख्यया परिसंख्याय प्रधानं च गुणात्मकम् ॥ १८०
ज्ञात्वा साधर्म्यवैधर्म्ये सततं च पृथक्पृथक् । प्रधानपुरुषेशानां साधर्म्यमिदमुच्यते ॥ १८१

* एतदग्रे झ. पुस्तके 'वासःप्रतिसरासूत्रैः पावकव्यतनोच्छ्रितैः' इत्यर्धमधिकम् ।

१ क. ख. ङ. च. ज. °त्ते तीर्थमाहात्म्यं लो° । ग. घ. °त्ते तथ्यमाहात्म्यं लो° । २ झ. °दान्यजन्ति । ३ ग. घ. ज. °प्रा अपि शु° । क. ख. ड. च. °प्रा गुरुशु° । ४ क. ख. घ. ङ. च. ञ. °हिते रतैः । भी° । ग. °हितैस्तथा । भी° । ५ झ. °दृशी ब्रह्मभक्तिश्च श्रोत्रीणां प्रब्रवीहि मे । ६ क. ख. ङ. च. ज. °वाक्कायसं° । ७ झ. वेदानां स्म° । ८ क. ग. घ. च. ज. °श्चाऽऽवश्यकै° । ९ क. ख. ग. घ. ङ. च. ज. °यतैश्चि° । १० क. ख. ग. घ. ङ. च. ज. सर्वरत्नोप° । ११ ग. °कैः । भोज्यान्नपेयपानैश्च । १२ झ. °र्तव्या अग्निहोत्रिका । प्र° । १३ झ. विविधा ।

[1]अजो नित्यमयोनित्वं चैतन्यं वा गुणात्मकम् । साधर्म्यमानमैश्वर्यं प्रधानं च विधर्मि च ॥ १८२
कारणत्वं च ब्रह्मत्वं कामित्वमिदमुच्यते । प्रयोज्यत्वं प्रधानस्य वैधर्म्यमिदमुच्यते ॥ १८३
सर्वत्र कर्तृता ब्रह्म पुरुषस्या[2]प्यकर्तृता । चेतनत्वं प्रधाने वा समत्वमिदमुच्यते ॥ १८४
तत्त्वान्तरं च तत्त्वानां कार्यकारणमेव च । प्रयोजनं च वै [3]योज्यं ज्ञात्वा तत्त्वं च संख्यया १८५
संख्[4]याऽस्तीत्युच्यते प्राज्ञैर्विनिश्चित्यार्थचिन्तकैः । इति तत्त्वस्य संभारं तत्त्वसंख्या च तत्त्वतः ॥
ब्रह्मतत्त्वादिकं चापि ज्ञा[5]त्वा तत्त्वं विदुर्बुधाः[6] । संख्याकृता भक्तिरेषा[7] सद्भिराध्यात्मिकी मता ॥
योगजामपि मे भक्त्या शृणु भक्तिं पितामहे । प्राणायामपरो नित्यं ध्यानवान्नियतेन्द्रियः ॥ १८८
भैक्ष्यभक्षी व्रती चापि सर्वप्रत्याहृतेन्द्रियः । धारणं हृदये कृत्वा ध्यायमानः प्रजेश्वरम् ॥ १८९
हृत्पद्मकर्णिकासीनं रक्तवस्त्रं सुलोचनम् । परितोद्योतितमुखं ब्रह्मसूत्रकटीतटम् ॥ १९०
रक्तवर्णं चतुर्बा[8]हुं वरदाभयहस्तकम् । योगजा मानसी सिद्धिर्ब्रह्मभक्तिः परा स्मृता ॥ १९१
य एवं भक्तिमान्देवे ब्रह्मभक्तः स उच्यते । वृत्तिं च शृणु मे राजन्या[9] स्मृता क्षेत्रवासिनाम् ॥
स्वयं देवेन ब्रह्मणा विष्ण्वादीनां समागमे । कथिता विस्तरात्पूर्वं सर्वेषां तत्र संनिधौ ॥ १९३
निर्ममा निरहंकारा निःसंगा निष्परिग्रहाः । बन्धुवर्गे च निःस्नेहाः समलोष्टाश्मकाञ्चनाः १९४
भूतानां कर्मभिर्नित्यं विविधैरभयप्रदाः । प्राणायामपरा नित्यं परध्यानपरायणाः ॥ १९५
जपेन शुचयो नित्यं यतिधर्मक्रियापराः । सांख्ययोगविधिज्ञा[11]श्च ब्रह्मज्ञाश्छिन्नसंशयाः ॥ १९६
यजन्ते[10] विधिनाऽनेन ये विप्राः क्षेत्रवासिनः । अरण्ये पौष्करे तेषां मृतानां[12] यत्फलं शृणु १९७
व्रजन्ति ते सुदुष्प्राप्यं ब्रह्मसायुज्यमक्षयम् । यत्प्राप्य न पुनर्जन्म लभन्ते मृत्युदायकम् ॥ १९८
पुनरावर्तनं हित्वा विद्यां ब्राह्मीं परां स्थिताः । पुनरावृत्तिरन्ये[13]षां प्रपन्नाश्रमवासिनाम् ॥ १९९
गार्हस्थ्यविधिमासाद्य षट्कर्मनिरतः सदा[14] । जुहोति विधिना सम्यङ्मन्त्रैर्यज्ञे नियोजितः ॥ २००
अधिकं फलमाप्नोति सर्वदुःखविवर्जितः । सर्वलोकेषु चाप्यस्य गतिर्न प्रतिहन्यते ॥ २०१
दिव्यैनैश्वर्ययोगेन स्वारूढः सपरिग्रहः । बालसूर्यप्रकाशेन विमानेन सुवर्चसा ॥ २०२
वृतः स्त्रीणां सहस्रैश्च स्वच्छन्दगमनाल[15]सः । विचरत्यनिवार्येण सर्व[16]लोकान्यदृच्छया ॥ २०३
स्पृहणीयतमः पुंसां सर्वधर्मोत्तमो धनी । स्वर्गच्युतः प्रजायेत कुले महति वीर्यवान्[17] ॥ २०४
धर्मज्ञो धर्मभक्तश्च सर्वविद्यार्थपारगः । तथैव ब्रह्मचर्येण गुरुशुश्रूषणेन च ॥ २०५
वेदाध्ययनसंयुक्तो भैक्षवृत्तिर्जितेन्द्रियः । नित्यं सत्यव्रते युक्तः स्वधर्मे[18]ष्वप्रमादवान्[19] ॥ २०६
स्वकर्मतत्स(?)मृद्धेन सर्वभोगावलम्बिना । सूर्येणेव द्वितीयेन विमाने[20]नानिवारितः ॥ २०७
गुह्यका नाम ब्रह्माख्यगणाः परमसंमताः । अप्रमेयबलैश्वर्या देवदानवपूजिताः ॥ २०८

---

१ झ. ब्रह्मा । २ झ. °स्याथ क° । ३ क. ख. ङ. च. योज्यमैश्वर्यं तच्च सं° । ४ ञ. °ख्या स्त्रीत्यु° । ५ क. ख. ग. घ. ङ. च. ज. श्रुत्वा । ६ ञ. °धाः । सांख्यकृद्भक्ति° । ७ ञ. °षा च स° । ८ क. ख. ङ. च. चतुर्वक्त्रं । ग. घ. ज. रक्तवस्त्रं । ९ क. ख. ङ. च. विप्राणां । १० क. ख. ग. घ. ङ. च. ज. याजिनः । ११ क. ख. ग. घ. ङ. च. ज. °श्च धर्मज्ञा° । १२ ग. घ. °नां सत्फ° । १३ क. ख. घ. ङ. च. ज. °षां प्रपन्नाश्र° । ग. °षां कथं चाऽऽश्र° । १४ झ. °दा । जुहोति विधिना सम्यङ्मन्त्रसूत्रैर्नियोजितैः । अ° । ख. ङ. °दा । गृहोक्तविधिना सम्यङ्मन्त्रैर्यज्ञे निमन्त्रितः । अ° । ग. घ. °दा । सदा जुहोति विधिना सम्यङ्मन्त्रैर्निमन्त्रितः । अ° । १५ ग. घ. °लयः । वि° । १६ क. ख. ग. घ. ङ. ज. सर्वांल्लोकान्दिवौकसाम् । स्पृ° । १७ क. ख. ग. घ. ङ. च. ज. रूपवान् । १८ ग. घ. ङ. च. ज. °र्मेषु प्रतापवा° । १९ क. ख. घ. ङ. च. ज. °न् । तं च कामसमृ° । २० ग. °मेन नि° ।

देवदानवमर्त्येषु भवत्यैधिकपूजितः ॥ २०९
तेषां स समतां याति पुण्यैश्वर्यसमन्वितः । देवदानवमर्त्येषु भवत्यैधिकपूजितः ॥ २१०
वर्षकोटिसहस्राणि वर्षकोटिशतानि च । एवमैश्वर्यसंयुक्तो विष्णुलोके महीयते ॥ २११
वसित्वाऽसौ विभूत्यैवं यदा प्रच्यवते पुनः । विष्णुलोकाद्रुद्राद्येषु स्वर्गस्थानेषु जायते ॥ २१२
पुष्करारण्यमासाद्य ब्रह्मचर्याश्रमे स्थितः । अभ्यासेन तु वेदानां वसते म्रियतेऽथवा ॥ २१३
मृतोऽसौ याति दिव्येन विमानेन सुतेजसा । पूर्णचन्द्रप्रकाशेन शशिवत्प्रियदर्शनः ॥ २१४
रुद्रलोकं समासाद्य गुह्यकैः सह मोदते । ऐश्वर्यं महदाभुङ्क्ते सर्वस्य जगतः प्रभुः ॥ २१५
भुक्त्वा युगसहस्राणि रुद्रलोके महीयते । प्रच्युतश्च ततस्तस्माद्रुद्रलो कात्क्रमेण तु ॥ २१६
नित्यं प्रमुदितस्तत्र भुक्त्वा सुखमनामयम् । द्विजानां संधने दिव्ये कुले महति जायते ॥ २१७
मानुषेषु स धर्मात्मा सुरूपो वाक्पतिर्भवेत् । स्पृहणीयश्च सुस्त्रीणां महाभोगपतिर्वशी ॥ २१८
वानप्रस्थसमाचारो ग्राम्यो पाधिविवर्जितः । सर्वलोकेषु चाप्यस्य गतिर्न प्रतिहन्यते ॥ २१९
शीर्णपत्रफलाहारः पुष्पमूलाम्बुभोजनः । कपोतेनाश्मकुट्टेन दन्तोलूखलिकेन च ॥ २२०
वृत्त्युपायेन जीवेत शीर्णवल्कलवाससौ । जटी त्रिषवणस्नायी त्यक्तदोषस्तु दण्डवान् ॥ २२१
कृच्छ्रव्रतपरो यस्तु श्वपचो यदि वा परः । जलशायी पञ्चतपा वर्षास्वभ्रावगाहकः ॥ २२२
कीटकण्टकपाषाणभूम्यां च स्वपनं तथा । स्थानवीरासनरतः संविभागी दृढव्रतः ॥ २२३
अरण्यौषधिभोक्ता च सर्वभूताभयप्रदः । नित्यं धर्मार्जनरतो जितक्रोधो जितेन्द्रियः ॥ २२४
ब्रह्मभक्तः क्षेत्रवासी पुष्करे वसते मुनिः । सर्वसङ्गपरित्यागी स्वारामो विगतस्पृहः ॥ २२५
यश्चात्र वसते भीष्म शृणु तस्यापि या गतिः । तरुणार्कप्रकाशेन वेदिकास्तम्भशोभिना ॥ २२६
ब्रह्मभक्तो विमानेन याति कामप्रचारिणा । विराजमानो नभसि द्वितीय इव चन्द्रमाः ॥ २२७
गीतवादित्रनृत्यज्ञैर्गन्धर्वाप्सरसां गणैः । अप्सरोभिः समायुक्तो वर्षकोटिशतान्यसौ ॥ २२८
यस्य कस्यापि देवस्य लोकं यात्यनिवारितः । ब्रह्मणोऽनुग्रहेणैव तत्र तत्र विराजते ॥ २२९
ब्रह्मलोकाच्युतश्चापि विष्णुलोकं स गच्छति । विष्णुलोकात्परिभ्रष्टो रुद्रलोकं च गच्छति ॥२२९
तस्मादपि च्युतः स्थानाद्वीपेषु स ह जायते । स्वर्गेषु च तथाऽन्येषु भुक्त्वा भोगान्यथेप्सितान् ॥
भुक्त्वैश्वर्यं नरस्तेषु पुनर्मर्त्येषु जायते । राजा वा राजपुत्रो वा जायते धनवान्सुखी ॥ २३१
सुरूपः सुभगः कान्तः कीर्तिमान्भक्तिभावितः । ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वा क्षेत्रवासिनः
स्वधर्मनिरता राजन्स्ववृत्त्याचारजीविनः । सर्वात्मना ब्रह्मभक्ता भूतानुग्रहकारिणः ॥ २३३
पुष्करे तु महाक्षेत्रे ये वसन्ति मुमुक्षवः । मृतास्ते ब्रह्मभवनं विमानैर्यान्ति शोभनैः ॥ २३४
अप्सरोगणसंघुष्टैः कामगैः कामरूपिभिः । अथवा संप्रदीप्तेऽग्नौ स्वशरीरं जुहोति यः ॥ २३५
ब्रह्मध्यायी महासत्त्वः स ब्रह्मभवनं व्रजेत् । ब्रह्मलोकोऽक्षयस्तस्य शाश्वतो विभवैः सह २३६

---

१ क. ख. ग. ङ. च. ज. °ति तुल्यैश्व° । २ क. ख. ग. घ. ङ. च. ज °त्यनियतायुधः । व° । ३ क. ख. ङ. च. ज. बुधः । ४ क. ख. ग. घ. ङ. च. ज °कात्स्वकृत्येषु । ५ ख. °ध व्रतच° । ६ क. ख. ग. घ. ङ. च. ज देवानां । ७ क. ख. ग. घ. ङ. च. ज. स्वतेजसा । ८ क. ख. ग. ङ. च. ज. सदने । ९ ग. घ. ज. °यवपुः स्त्री° । १० क. ख. ग. घ. ङ. च. ज. °तिर्बली । वा° । ११ क. ख. ग. घ. ङ. च. ज. ग्राम्यौषधि° । १२ झ. वर्णानां । १३ ज. झ. °साम् । ज° । १४ झ. °क्तदेशः स द° । १५ झ. स्वकीयो । १६ ग. घ. स्वागतो । १७ झ. घ. ज. भुक्तैश्वर्यवर° । १८ क. ख ग. घ. ङ. च. ज °न्सुधीः । सु° । १९ क. ख. ङ. च. °जन्सुवताश्चिर° । ग. घ. ज. °जन्सुवृत्ताश्चिर° । २० ग. घ. ब्रह्मव्यापी । २१ झ. वसेत् । २२ झ. °यस्तेषां वसन्ते ब्रह्मणा स° ।

सर्वलोकोत्तमो रम्यो भवतीष्टार्थसाधकः । पुष्करे तु महापुण्ये ये प्राणान्सलिलेऽत्यजन् ॥ २३७
तेषामप्यक्षयो भीष्म ब्रह्मलोको महात्मनाम् । साक्षात्पश्यन्ति ते देवं सर्वदुःखविनाशनम् ॥ २३८
सर्वामरनुतं देवं रुद्रविष्णुगणैर्युतम् । अनाशके मृताः शूद्राः पुष्करे तु च ये नराः ॥ २३९
हंसयुक्तैस्ततो यान्ति विमानैरर्कसंनिभैः । नानारत्नसुवर्णाढ्यैर्दृढैर्गन्धादिवासितैः ॥ २४०
अनौपम्यगुणै रम्यैरप्सरोगीतनादितैः । पताकाध्वजविन्यस्तैर्नानाघण्टानिनादितैः ॥ २४१
बह्वाश्चर्यसमोपेतैः क्रीडाविज्ञानशालिभिः । सुप्रभैर्गुणसंपन्नैर्मयूरवरवासिभिः ॥ २४२
ब्रह्मलोके गता वीरा रमन्तेऽनाशके मृताः । तत्र स्थित्वा चिरं कालं भोगान्भुक्त्वा यथेप्सितान्
धनी विप्रकुले भोगी जायते मर्त्यमागतः । कारीषीं साधयेद्यस्तु पुष्करे तु वने नरः ॥ २४४
सर्वलोकान्परित्यज्य ब्रह्मलोकं स गच्छति । ब्रह्मलोके वसेत्तावद्यावत्कल्पक्षयो भवेत् ॥ २४५
नैव पश्यति मर्त्यं हि क्लिश्यमानं स्वकर्मभिः । गतिस्तस्याप्रतिहता तिर्यगूर्ध्वमधस्तथा ॥ २४६
संपूज्यः सर्वलोकेषु यशो विस्तरयन्वशी । सदाचारविधिज्ञस्तु सर्वेन्द्रियमनोहरः ॥ २४७
नृत्यवादित्रगीतज्ञः सुभगः प्रियदर्शनः । नित्यमम्लानकुसुमो दिव्याभरणभूषितः ॥ २४८
नीलोत्पलदलश्यामो नीलकुञ्चितमूर्धजः । अजघन्याः सुमध्याश्च सर्वसौभाग्यपूरिताः ॥ २४९
सर्वैश्वर्यगुणोपेता यौवनेनातिगर्विताः । स्त्रियः सेवन्ति तत्रस्थाः शयने रमयन्ति च ॥ २५०
वीणावेणुनिनादैश्च सुप्तः संप्रतिबुध्यते । महोत्सवसुखं भुङ्क्ते दुष्प्राप्यमकृतात्मभिः ॥
प्रसादाद्देवदेवस्य ब्रह्मणः शुभकारिणः ॥ २५१

भीष्म उवाच—

आचारपरमा ये तु क्षेत्रधर्मपरायणाः । स्वधर्माचारनिरता जितक्रोधा जितेन्द्रियाः ॥ २५२
ब्रह्मलोकं व्रजन्तीति नैतच्चित्रं मतं मम । असंशयं च गच्छन्ति लोकानन्यानपि द्विजाः ॥ २५३
विना पद्मोपवासेन तथैव नियमेन च । स्त्रियो म्लेच्छाश्च शूद्राश्च पशवः पक्षिणो मृगाः ॥ २५४
मूका जडान्धबधिरास्तपोनियमवर्जिताः । तेषां वद गतिं विप्र पुष्करे ये त्ववस्थिताः ॥ २५५

पुलस्त्य उवाच—

स्त्रियो म्लेच्छाश्च शूद्राश्च पशवः पक्षिणो मृगाः । पुष्करे तु मृता भीष्म ब्रह्मलोकं व्रजन्ति ते ॥
शरीरैर्दिव्यरूपैश्च विमानैर्हेमसुप्रभैः । दिव्यव्यूहसमायुक्तैर्मणिप्रवरवेदिकैः ॥ २५७
सुवर्णवज्रसोपानमणिस्तम्भविभूषितैः । सर्वकामोपभोगाढ्यैः कामगैः कामरूपिभिः ॥ २५८
नभो विगाह्य गच्छन्ति स्त्रीसहस्रसमाकुलाः । ब्रह्मलोकं महात्मानो लोकानन्यान्यथेप्सितान् ॥
ब्रह्मलोकाच्च्युताश्चापि क्रमाद्द्वीपेषु यान्ति ते । कुले महति विस्तीर्णे धनी भवति स द्विजः २६०
तिर्यग्योनिगता ये च सर्वे कीटपिपीलिकाः । स्थलजा जलजाश्चैव स्वेदाण्डोद्भिज्जरायुजाः ॥ २६१
सकामा वाऽप्यकामा वा पुष्करैकवने मृताः । सूर्यप्रभविमानस्था ब्रह्मलोकं प्रयान्ति ते ॥ २६२
कलौ युगे महाघोरे प्रजाः पापसमीरिताः । नान्येनास्मिन्ह्युपायेन धर्मः स्वर्गश्च लभ्यते ॥ २६३
वसन्ति पुष्करे ये तु ब्रह्मार्चनरता नराः । कलिकाले कृतार्थास्ते क्लिश्यन्त्यन्ये निरर्थकाः ॥ २६४

---

१ झ. °कः । सर्वकामसमायुक्तो यः प्रा° । २ ख. गं. घ. ङ. च ज. °राः । सिंहयु° । ३ क. ख. ग. घ. ङ. च. °रन्यैर° । ४ ग. घ. च. ज °वाहिभिः । ५ क. ख. ग. घ. ङ. च. ज °के नरा धीरा । ६ झ. °षु स्वयं सोऽविचरन्व° । ७ ज. °शी । उपचारविधिप्राज्ञः स° । ८ झ. °नाऽपि क्षेत्रवा° । ९ क. ख. ग. घ. ङ. च. ज. °नै रविसप्र° । १० क. ग. घ. च. °युक्तैः सुवर्णवरकेतनैः । सु° । ११ क. ख. ग. घ. ङ. च. ज. °भिः । [illegible] प° ।

रात्रौ करोति यत्पापं नरः पञ्चभिरिन्द्रियैः। कर्मणा मनसा वाचा कामक्रोधवशानुगः ॥ २६५
प्रातःसवनमासाद्य पुष्करे तु पितामहम्। अभिगम्य शुचिर्भूत्वा तस्मात्पापात्प्रमुच्यते ॥ २६६
उदयादारभ्य यत्नेन यावद्दर्शनमूर्ध्वगम्। मानसाख्ये प्रसंचिन्त्य ब्रह्मचर्यं हरेदघम् ॥ २६७
दृष्ट्वा विरिञ्चिं मध्याह्ने नरः पापात्प्रमुच्यते। मध्याह्नास्तमयान्तं यदिन्द्रियैः पापमाचरेत् ॥ २६८
पितामहस्य संध्यायां दर्शनादेव मुच्यते। शब्दादीन्विषयान्सर्वान्भुञ्जानोऽपि सकामतः ॥ २६९
पुष्करे ब्रह्मभक्तो यो निवसेत्तपसि स्थितः। शीर्णपर्णाशनोपायः फलमूलाम्बुभोजनः ॥ २७०
वृक्षमूलेऽश्मकूटे वा सर्वदा तपते तपः। पुष्करारण्यसंस्थो यो मिष्टान्नास्वादभोजनः ॥ २७१
त्रिकालमपि भुञ्जानो वायुभक्षसमो मतः। वसन्ति पुष्करे ये तु नराः सुकृतकर्मिणः ॥ २७२
ते लभन्ते महाभोगान्क्षेत्रस्यास्य प्रभावतः। यथा महोदधेस्तुल्यो न चान्योऽस्ति जलाशयः ॥
तथा वै पुष्करस्यापि समं तीर्थं न विद्यते। देवाधिको यथा ब्रह्मा यथा नान्योऽधिको भवेत् ॥
पुष्करारण्यसदृशं तीर्थं नास्त्यधिकं गुणैः। अथ तेऽन्यान्प्रवक्ष्यामि येऽस्मिन्क्षेत्रे व्यवस्थिताः ॥
विष्णुना सहिताः सर्व इन्द्राद्याश्च दिवौकसः। गजवक्त्रः कुमारश्च रेवन्तः सदिवाकरः ॥ २७६
शिवदूती तथा देवी कन्या क्षेमंकरी वरा। *स्थिता हितार्थं जगतो ब्रह्मणो निलये सदा ॥ २७७
अलं तपोभिर्नियमैः सत्क्रियार्चनकारिणाम्। व्रतोपवासकर्माणि कृत्वाऽन्यत्र महान्त्यपि ॥ २७८
ज्येष्ठे तु पुष्करारण्ये यस्तिष्ठति निरुद्यमी। लभते सर्वकामित्वं योऽत्रैवाऽऽस्ते द्विजः सदा २७९
पितामहसमं याति स्थानं परममव्ययम्। कृते तु द्वादशैर्वर्षैस्त्रेतायां हायनेन तु ॥ २८०
मासेन द्वापरे भीष्म अहोरात्रेण तत्कलौ। फलं संप्राप्यते लोकैः क्षेत्रेऽस्मिंस्तीर्थवासिभिः २८१
इत्येवं देवदेवेन पुरोक्तं ब्रह्मणा मम। नातः परतरं किंचित्क्षेत्रमस्तीह भूतले ॥ २८२
तस्मात्सर्वप्रयत्नेनारण्यमेतत्समाश्रयेत्। गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ॥ २८३
यथोक्तकारिणः सर्वे गच्छन्ति परमां गतिम्। एकोऽयमाश्रमो धर्ममनुतिष्ठेद्यथाविधि ॥ २८४
अकामद्वेषसंयुक्तः स परत्र महीयते। चतुष्पदा हि निश्रेणी ब्रह्मणैषा प्रतिष्ठिता ॥ २८५
एतामाश्रित्य निश्रेणीं ब्रह्मलोके महीयते। +आयुषोऽपि चतुर्भागं ब्रह्मचर्यानसूयकः ॥ २८६
गुरौ वा गुरुपुत्रे वा वसेद्धर्मार्थकोविदः। कर्मातिरेकेण गुरोरध्येतव्यं बुभूषता ॥ २८७
दक्षिणानां प्रवादी स्यादाहूतो गुरुमाश्रयेत्। जघन्यशायी पूर्वं स्यादुत्थायी गुरुवेश्मनि ॥ २८८
यच्च शिष्येण कर्तव्यं कार्यमासेवनादिकम्। कृतमित्येव तत्सर्वं कृत्वा तिष्ठेत पार्श्वतः ॥ २८९
किंकरः सर्वकारी च सर्वकर्मसु कोविदः। शुचिर्दक्षो गुणोपेतो ब्रूयादिष्टमथोत्तरम् ॥ २९०
चक्षुषा गुरुमव्यग्रो निरीक्षेत जितेन्द्रियः। नाभुक्तवति चाश्नीयादपीतवति नो पिबेत् ॥ २९१
न तिष्ठति तथाऽऽसीत(ता) सुप्ते नैव तु संविशेत्। उत्तानाभ्यां च पाणिभ्यां पादावस्य तु संस्पृशेत्॥
दक्षिणं दक्षिणेनैव सव्यं सव्येन पीडयेत्। अभिवाद्य गुरुं ब्रूयादधीष्व भगवन्निति ॥ २९३
इदं करिष्ये भगवन्निदं चापि मया कृतम्। इति सर्वं च विज्ञाप्य निवेद्य गुरवे धनम् ॥ २९४

* इदमर्धं झ. पुस्तकस्थम्। + इदमर्धं झ पुस्तके वर्तते।

१ झ. °र्वान्यो भुनक्ति स°। २ क. ख. ङ. च. °तः। सुपुष्करे ब्रह्मभक्तो यः संतपति सत्तमः। शीं°। ग. घ. ज. °तः। सुपुष्करे ब्रह्मभक्तो वसंस्तपति सत्तपः। शीं°। ३ ग. ज. वा शयानस्तप्यते। ४ ग. घ. क्षेमा। ५ क. ख. ग. घ. ङ. च. ज. सदा। ६ क. ख. ग. घ. ङ. च. ज. योगैरास्ते। ७ क. ख. ग घ. ङ. च. ज. °स्य मृदु स्पृ°।

कुर्यात्कृतं च तत्सर्वमाख्येयं गुरवे पुनः । यांस्तु गन्धान्रसान्वाऽपि ब्रह्मचारी न सेवते ॥ २९५
सेवेत तान्समावृत्य इति धर्मेषु निश्चयः । विस्तरेण मयोक्ता हि नियमा ब्रह्मचारिणः ॥ २९६
तान्सर्वाननुगृह्णीयाद्भक्तः शिष्यश्च वै गुरोः । स एवं गुरवे प्रीतिमुपहृत्य यथाबलम् ॥ २९७
अग्राम्येष्वाश्रमेष्वेवं शिष्यो वर्तेत कर्मणा । वेदं वेदौ तथा वेदान्वेदार्थांश्च तथा द्विजः ॥ २९८
भिक्षाभुगप्यधःशायी समधीत्य गुरोर्मुखात् । वेदव्रतोपयोगी च चतुर्थांशेन योगतः ॥ २९९
गुरवे दक्षिणां दत्त्वा समावर्तेद्यथाविधि । धर्मलब्धैर्युतो दारैरग्नीनाधाय पूजयेत् ॥ ३००
द्वितीयमायुषो भागं गृहमेधी सदा वसेत् । गृहस्थवृत्तयः पूर्वं चतस्रो मुनिभिः कृताः ॥ ३०१
कुशूलधान्या प्रथमा कुम्भीधान्या द्वितीयका । अश्वस्तनी तृतीयोक्ता कापोत्यथ चतुर्थिका ॥ ३०२
आसां परा परा श्रेष्ठा धर्मतो लोकपूजिता । षट्कर्मवर्तकस्त्वेकस्त्रिभिरन्यः प्रवर्तते ॥ ३०३
द्वाभ्यां चैव चतुर्थस्तु द्विजः स ब्रह्मणि स्थितः । गृहमेधिव्रतादन्यन्महत्तीर्थं न चक्षते ॥ ३०४
नाऽऽत्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून् । प्राणी वा यदि वाऽप्राणी संस्कारायज्ञमर्हति ॥ ३०५
न दिवा प्रस्वपेज्जातु न पूर्वापररात्रयोः । न भुञ्जीतान्तरा काले नानृतं तु वदेत ह ॥ ३०६
नास्यानश्नन्वसेद्विप्रो गृहे कश्चिदपूजितः । तथाऽस्यातिथयः पूज्या हव्यकव्यवहाः सदा ॥ ३०७
वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः । स्वकर्मजीविनो दान्ताः क्रियावन्तस्तपस्विनः ॥ ३०८
तेषां हव्यं च वा कव्यमर्हणार्थं विधीयते । नश्वरैः संप्रयातस्य स्वैकर्मापगतस्य च ॥ ३०९
अपविद्धाग्निहोत्रस्य गुरोर्वाऽलीककारिणः । असत्याभिनिवेशस्य नाधिकारोऽस्ति कव्ययोः ॥ ३१०
संविभागोऽत्र भूतानां सर्वेषामेव शिष्यते । तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ ३११
विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः । अमृतं यज्ञशेषः स्याद्भोजनं हविषा समम् ॥ ३१२
संहृत्य शेषं योऽश्नाति तमाहुर्विघसाशिनम् । स्वदारनिरतो दान्तो ह्यनसूयुर्जितेन्द्रियः ॥ ३१३
ऋत्विक्पुरोहिताचार्यमातुलातिथिसंहतैः । वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः ॥ ३१४
मातापितृभ्यां जामात्रा भ्रात्रा पुत्रेण भार्यया । दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥ ३१५
एतान्विमुच्य संवादान्सर्वपापैः प्रमुच्यते । एतैर्जितैस्तु जयति सर्वलोकान्न संशयः ॥ ३१६
आचार्यो ब्रह्मलोकेशः प्राजापत्यः प्रभुः पिता । अतिथिः सर्वलोकेश ऋत्विग्वेदाश्रयः प्रभुः ॥ ३१७
जामाताऽप्सरसां लोके ज्ञातयो वैश्वदेविकाः । संबन्धिबान्धवा दिक्षु पृथिव्यां मातृमातुलौ ॥ ३१८
वृद्धबालातुराश्चैव आकाशे प्रभविष्णवः । पुरोधा ऋषिलोकेशः संश्रिताः साध्यलोकपाः ॥ ३१९
अश्विलोकपतिर्वैद्यो भ्राता तु वसुलोकपः । मरुल्लोकेश्वरी भार्या दुहिताऽप्सरसां गृहे ॥ ३२०
भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः । छाया च दासवर्गश्च दुहिता कृपणं परम् ॥ ३२१
तस्मादेतैरधिक्षिप्तः सहेन्नित्यमसज्वरः । गृहधर्मरतो विद्वान्धर्मनिष्ठो जितक्लमः ॥ ३२२

---

१ क. ख. घ. ङ. च. ज. °वृत्य इ° । २ क. ख. ग. घ. ङ. च. ज. °पकृत्य । ३ झ. °दं वेदार्थे वा पादं वेदार्थौश्चतुरो द्वि° । ४ झ. °माधत्ते यथा° । ५ क. ख. ज. धर्मान्वितैर्युतो । ६ क. ख. ग. घ. ङ. च. ज. °नावाद्य पू° । ७ क. ख. ग. घ. ङ. च. ज. सर्वाः । ८ झ. °कजित्तमाः । ष° । ९ ग. च. ज. °र्थे याच° । १० झ °येदिति । प्रा° । ११ ञ. न चाप्यश्नन्वदेद्वि° । १२ क. ग. घ. ज. स्मृताः । १३ क. ख. ङ. च. °श्वरेषु प्रतीत° । १४ ञ. स्वधर्मा° । १५ क. ख. ग. घ. ङ. च. °थैव पचमा° । झ. °थैव परमान्नेन प्र° । १६ ख. ङ. च. सभुक्तशे° । ञ. संभुक्तशे° । १७ क. ख. घ. ङ. च. ज. °न्तो दक्षोऽत्यर्थं जिते° । ग. °न्तो दक्षोऽप्यथ जिते° । १८ क. ख. ग. घ. ङ. च. ज. संश्रिताः । १९ क. ख. ग. घ. ङ. च. ज. चन्द्रलोकेश्वरी । २० झ. °नुः । कायस्था दासवर्गश्च ।

नाऽऽरभेद्बहुकार्याणि धर्मवान्किंचिदाचरेत् । गृहस्थवृत्तयस्तिस्रस्तासां निःश्रेयसं परम् ॥ ३२३
परस्परं तथैवाऽऽहुश्चातुराश्रम(म्य)मेव च । ये चोक्ता नियमास्तेषु सर्वकार्यं बुभूषता ॥ ३२४
कुम्भधान्यैरुञ्छशिलैः कापोतीं वृत्तिमास्थिताः । यस्मिंश्चैते वसन्त्यर्हास्तद्राष्ट्रमभिवर्धते ॥ ३२५
पूर्वापरान्दश परान्पुनाति च पितामहान् । गृहस्थवृत्तिमास्थाय वर्तते यो गतव्यथः ॥ ३२६
स चक्रधरलोकानां समानां प्राप्नुयाद्गतिम् । जितेन्द्रियाणामथवा गतिरेषा विधीयते ॥ ३२७
स्वर्गलोको गृहस्थानां प्रतिष्ठा नियतात्मनाम् । ब्रह्मणाऽभिहिता श्रेणी ह्येषा यस्याः प्रमुच्यते ॥
द्वितीयं[1] क्रमशः प्राप्य स्वर्गलोके महीयते । तृतीयमपि[2] पश्यामि वानप्रस्थाश्रमं शृणु ॥ ३२९
गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत् ॥ ३३०
गृहस्थव्रतखिन्नानां वानप्रस्थाश्रमौकसाम् । श्रूयतां भीष्म भद्रं ते सर्वलोकाश्रयात्मनाम् ॥ ३३१
दीक्षापूर्वं निवृत्तानां पुण्यदेशनिवासिनाम् । प्रज्ञाबलवतां पुंसां सत्यशौचक्षमावताम् ॥ ३३२
तृतीयमायुषो भागं वानप्रस्थाश्रमे वसन् । तानेवाग्नीन्परिचरेद्यजमानो दिवौकसः ॥ ३३३
नियतो नियताहारो विष्णुभक्तिप्रसक्तिमान् । तदग्निहोत्रमात्राणि यज्ञाङ्गानि च सर्वशः ॥ ३३४
अकृष्टं वै व्रीहियवं[3] नीवारं विघसानि च[4] । हवींषि संप्रयच्छेत मासेष्वत्रापि पञ्चसु ॥ ३३५
वानप्रस्थाश्रमे तेषां चतस्रो वृत्तयः स्मृताः । सद्यः प्रभक्षकाः केचित्केचिन्मासिकसंचयाः ॥ ३६
वार्षिकाः संचयाः केचित्केचिद्द्वादशवार्षिकाः(?) । *कुर्वन्त्यतिथिपूजार्थं यज्ञतन्त्रार्थमेव च ३३७
अभ्रावकाशा वर्षासु हेमन्ते जलसंश्रयाः । ग्रीष्मे पञ्चाग्नितपसः शश्वन्मृतभोजनाः ॥ ३३८
भूमौ विपरिवर्तन्ते तिष्ठन्ति प्रपदैरपि[6] । +स्थानासने च वर्तन्ते वसनेष्वपि[5] संस्थिते ॥ ३३९
दन्तोलूखलिनः केचिदश्मकुट्टास्तथाऽपरे । शुक्लपक्षे पिबन्त्येके यवागूं क्वथितां क्वचित् ॥ ३४०
कृष्णपक्षे पिबन्त्येके भुञ्जते च यथागमम् । मूलैरेके फलैरेके[7] पुष्पैरेके कृतव्रताः ॥ ३४१
वर्तयन्ते यथान्यायं वैखानस इव[8] व्रताः । एताश्चान्याश्च विविधा दीक्षास्तेषां मनीषिणाम् ॥ ३४२
चतुर्थश्चौपनिषदो धर्मः साधारणो मतः । वानप्रस्थो गृहस्थश्च स ततोऽन्यः प्रवर्तते ॥ ३४३
तस्मिन्नेव युगे तात विप्रैः सर्वार्थदर्शिभिः । अगस्त्यश्च सप्तर्षयो मधुच्छन्दा गवेषणः ॥ ३४४
सांकृतिः सुदिवो भाण्डिर्यवप्रोथः[9] कृतश्रमः[10] । अहोवीर्यस्तथा काम्यः स्थाणुर्मेधातिथिर्बुधः ३४५
मनोवाकः शिनीवाकः शून्यपालोऽकृतश्रमः[11] । एते धर्मसुविद्वांसस्ततः[12] स्वर्गमुपागमन् ॥ ३४६
एते प्रत्यक्षधर्माणस्तथाऽन्या या वराङ्गनाः । ऋषीणामुग्रतपसां धर्मनैपुण्यदर्शिनाम्[13] ॥ ३४७
अपास्योपरता मायां ब्राह्मणा वनमाश्रिताः । अनक्षत्रास्तथाऽधृष्या दृश्यन्ते ज्योतिषां गणाः ॥
जरया तु परिद्यूना व्याधिना परिपीडिताः । चतुर्थं स्वाश्रमं शेषं वानप्रस्थाश्रमाद्ययुः ॥ ३४९
सद्यपुष्कारि निर्वाप्य सर्वान्देवान्सदक्षिणाम्(?) । आत्मयाजी[14] सोपरतिरात्मक्रीडार्थसंश्रयः ३५०
आत्मन्याग्नीं समाधाय त्यक्त्वा सर्वपरिग्रहम् । सद्यश्चांश्च[15] यजेद्यज्ञानिष्टिं चैवेह सर्वदा ॥ ३५१

* इदमर्धं झ. पुस्तके । + इदमर्धं झ. पुस्तके ।

१ ञ. द्वितीयां । २ ञ. °तीयाम° । ३ क. ख. ग. घ. ङ. च. ज. °हिर्बीजं नी° । ४ क. ख. घ. ङ. च. ज. च । ग्रीष्मे हविष्यं प्रायच्छेत्समखेष्वपि । ५ क. ख. घ. ङ. च. ज. °मेऽप्येताश्चत° । ६ झ. प्रमदै° । ७ क. ख. घ. ङ. च. ज. °के जलैरेके दृढव्र° । ८ ञ. इति । ९ क. च. °प्रोथो ह्यवर्षगः । अ° । १० ज. कृतव्रणः । ११ ज. °तव्रणः । ए° । १२ झ. धर्माः सु° । १३ क. ग. घ. च. ज. °मू । सुरेश्वरं समाराध्य ब्रा° । १४ क. ख. ग. घ. ङ. च. ज. °जी सौम्यमति° । १५ झ. सद्यस्कांश्च ।

सदैव याजिनां यज्ञमात्मनीज्या प्रवर्तते । त्रींश्चैवाग्नीन्यजेत्सम्यगात्मन्येवाऽऽत्मना क्षणात् ३५२
प्राप्नुयाद्येन वा यच्च तत्प्राश्नीयादकुत्सयन् । केशलोमनखान्य(न्या)स्य वानप्रस्थो मुनिस्ततः ॥
आश्रमादाश्रमं सद्यः पूतो गच्छति कर्मभिः । अभयं सर्वभूतेभ्यो यो दत्त्वा प्रव्रजेद्द्विजः ॥
लोकास्तेजोमयांस्तस्य प्रेत्य चाऽऽनन्त्यमश्नुते ॥ ३५४

सुशीलवृत्तो व्यपनीतकल्मषो न चेह नामुत्र च रन्तमीहते ।
अरोषमोहो गतसंधिविग्रहः स चेदुदासीनवदात्मचिन्तया ॥ ३५५
यमेषु चैवान्यगतेषु नव्यथः स्वशास्त्रशून्यो हृदि नात्मविभ्रमः ।
भवेद्यथेष्टा गतिरात्मयाजिनि निःसंशयं धर्मपरे जितेन्द्रिये ॥ ३५६
अतः परं श्रेष्ठमतीव सद्गुणैरधिष्ठितं त्रीनतिवर्त्य चाऽऽश्रमान् ।
चतुर्थमुक्तं परमाश्रमं शृणु प्रस्तूयमानं परमं परायणम् ॥ ३५७

प्राप्यसंस्कारमेताभ्यामाश्रमाभ्यां ततः परम् । यत्कार्यं परमं तीर्थं तत्त्वमेकमनाः शृणु ॥ ३५८
काषायं धारयित्वा तु श्रेणिस्थानेषु च त्रिषु । प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम् ॥ ३५९
तद्भावनेन संन्यस्य वर्तनं श्रूयतां तथा । एक एव चरेद्धर्मं सिद्ध्यर्थमसहायवान् ॥ ३६०
एकश्चरति यः पश्यञ्जहाति न च हीयते । अनग्निरनिकेतस्तु ग्राममन्नार्थमाश्रयेत् ॥ ३६१
अश्वस्तनविधानः स्यान्मुनिर्भावसमन्वितः । लघ्वाशी नियताहारः सकृदन्नं निषेवयेत् ॥ ३६२
कपालं वृक्षमूलानि कुचेलमसहायता । उपेक्षा सर्वभूतानामेतावद्भिक्षुलक्षणम् ॥ ३६३
यस्मिन्वाचः प्रविशन्ति कूपे प्राप्ताः स्त्रिया(य) इव । न वक्तारं पुनर्यान्ति स कैवल्याश्रमं वसेत्
नैव पश्येन्न शृणुयान्न वाच्यं जातु कस्यचित् । ब्राह्मणानां विशेषण नैतद्ब्रूयात्कथंचन ॥ ३६५
यद्ब्राह्मणस्य कुशलं तदेव सततं वदेत् । तूष्णीमासीत निन्दायां कुर्वन्भैषज्यमात्मनः ॥ ३६६
येन पूर्णमिवाऽऽकाशं भवेदेकेन सर्वदा । शून्यं येन समाकीर्णं तं देवा ब्राह्मणं विदुः ॥ ३६७
येन केनचिदागच्छन्येन केनचिदासितः । यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः ॥ ३६८
अहेरिव गणाद्भीतः सौहृदान्नरकादिव । कृपणादिव नारीभ्यस्तं देवा ब्राह्मणं विदुः ॥ ३६९
न क्रुद्धो न प्रहृष्येत मानितोऽमानितः स्वयम् । सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः ॥ ३७०
नाभिनन्देत मरणं नाभिनन्देत जीवितम् । कालमेव प्रतीक्षेत तं देवा ब्राह्मणं विदुः ॥ ३७१
अनभ्याहतचित्तश्च दान्तश्चाहतधीस्तथा । निर्मुक्तः सर्वपापेभ्यो नरो गच्छेत्ततो दिवम् ॥ ३७२
अभयं सर्वभूतेभ्यो भूतानामभयं यतः । तस्य देहविमुक्तस्य भयं नास्ति च कुत्रचित् ॥ ३७३
यथा नागपदेऽन्यानि पदानि पदगामिनाम् । सर्वाण्येवावलीयन्ते त(य)था ज्ञानानि चेतसि ३७४
एवं सर्वमहिंसायां धर्मोऽर्थश्च महीपते । मृतः स नित्यं भवति यो हिंसां प्रतिपद्यते ॥ ३७५
एवं सर्वसमः सम्यग्धृतिमान्नियतेन्द्रियः । शरण्यः सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् ॥ ३७६
एवं प्रज्ञानतृप्तस्य निर्ममस्य मनीषिणः । न मृत्युराधिको भावः सोऽमृतत्वं च गच्छति ॥ ३७७
विमुक्तः सर्वसङ्गेभ्यो मुनिराकाशवत्स्थितः । विष्णुमेधकरं शान्तं तं देवा ब्राह्मणं विदुः ॥ ३७८

---

१ झ. यज्ञं तामतीत्य निव° । ञ. यज्ञानात्म° । २ झ. °त्ममोक्षणम् । प्राणिनां यजुषः पञ्च षड्वाऽश्नी° । ३ ग. घ. ज. °रमात्मार्थे । ४ क. ख. ङ. च. ज. °णस्यानुकूलं । ५ क. ग. च. ज. जनाकीर्णे । ६ ग. ध. °तेषु शुभद° । ७ क. ख. ग. घ. ङ. च. ज. °त निर्देशं कूपको यथा । अ° । ८ झ. °न्तश्च हतवाक्तथा । ९ झ. °भ्यो निरामित्रस्य किं भयम् । १० ज. °ते : आहिंसकस्ततः स° । ११ घ. च. ज. °महतस्य निर्भयस्य । १२ झ. °तः अश्वमेध° ।

जीवितं यस्य धर्मार्थे धर्मो रत्यर्थमेव च। अहोरात्राणि पुण्यार्थं तं देवा ब्राह्मणं विदुः ॥ ३७९
निराशिषमनारम्भं निर्नमस्कारमस्तुतिम्। योगेन क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥ ३८०

सर्वाणि भूतानि सुखं रमन्ते सर्वाणि दुःखानि भृशं भवन्ति।
तेषां भयोत्पादनजातखेदः कुर्याच्च कर्माणि हि श्रद्दधानः ॥ ३८१
दानं च भूताभयदक्षिणायाः सर्वाणि दानान्यधितिष्ठतीह।
तीक्ष्णं तनुं यः प्रथमं जुहोति सोऽनन्त्य(न्त)माप्नोत्यभयं प्रजाभ्यः ॥ ३८२
उत्तानमास्येन हविर्जुहोति लोकस्य तस्यैव जगत्प्रतिष्ठा।
तस्याङ्गसङ्गाद्दभिनिष्कृतं च वैश्वानरं सर्वमिदं प्रपेदे ॥ ३८३
प्रादेशमात्रे हृदि निःसृतो यस्तस्मिन्प्राणेनाऽऽत्मयाजी जुहोति।
तस्याग्निहोत्रं गृतमात्मसंस्थं सर्वेषु लोकेषु सदैवतेषु ॥ ३८४
देवं विधातुं त्रिवृतं सुवर्णं ये वै विदुस्तं परमार्थभूतम्।
ते सर्वलोकेषु महीयमाना देवाः समर्था अमृतं भजन्ति ॥ ३८५
वेदानुवेद्यं च विधिं च कृत्स्नमथो निरुक्तं परमार्थतां च।
सर्वं शरीरात्मनि यः प्रवेद तस्मै सदेवाः स्पृहयन्ति नित्यम् ॥ ३८६
भूमौ प्रसक्तं दिवि चाप्रमेयं हिरण्मयं चञ्चलमण्डलान्ते।
प्रदक्षिणं दक्षिणमन्तरिक्षे यो वेद दीप्तात्मनि मन्दरश्मेः ॥ ३८७
आवर्तमानमविवर्तमानं षण्नेमिनं द्वादशारं सुपर्व।
यस्येदमास्यं परिपाति विश्वं तत्कालचक्रं निहितं गुहायाम् ॥ ३८८
यतः प्रसादाज्जगतः शरीरं सर्वान्स लोकानधिगच्छतीह।
तस्मिंश्च संतर्पयतीह देवांस्ते वै तृप्तास्तर्पयन्ति स्म सम्यक् ॥ ३८९
तेजोमयो नित्यमतः पुराणो लोके भयेऽत्यर्थभयादुपैति।
भूतानि यस्मान्न भयं व्रजन्ति भूतेभ्यो यो नोद्विजते कदाचित् ॥ ३९०
अगर्हणीयो न च गर्हतेऽन्यान्स वै विप्रः परमात्मानमीक्षेत्।
व्यतीतविषो व्यपनीतकल्मषो नैवेह नामुत्र च योऽर्थमर्हति ॥ ३९१
अशेषमोहः समलोष्टकाञ्चनः प्रहीणरोषो गतसंधिविग्रहः।
व्यपेतनिन्दास्तुतिरप्रियाप्रियश्चरन्नुदासीनवदेव भिक्षुः ॥ ३९२

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे क्षेत्रवासमाहात्म्यकथनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२२१९५

---

१ ग. घ. ङ. ज. निवारितसमार°। २ क. ग. घ. ङ. च. ज. अक्षीणं। ३ ख. घ. ङ. च. ज. °ति अनन्तमाप्नोत्यमितः प्रतिष्ठाम्। त°। ४ झ. °ङ्गानि कृताकृतं। ५ क. ख. ग. घ. ङ. च. ज. °सृतं यत्तस्मि°। ६ ञ. °होत्रे हुत°। ७ ञ. देवी। ८ क. ख. ङ. च. वेदांश्च वे°। ग. घ. ज. वेद्याश्च वे°। ९ ञ तस्याभि सर्वे प्रचरन्ति। १० ज. °यं तं च सम°। ११ ञ. त्रिपर्वं। १२ झ. °यन्तीह। १३ ग. घ. च. ज. देवान्स वै विमुक्तो भवतीह नित्यम्। तें°। १४ ञ. °प्रः प्रवरं स्वात्मनीक्षे°। १५ क. ख. ग. घ. ङ. च. ज. विनीतमोहो। १६ क. ख. ग. घ. ङ. ञ. ज. °र्थमृच्छति। १७ क. ख. ग. घ. ङ. च. ज. अरोष°। १८ क. ख. ग. घ. ङ. च. ज. °णशोको ग°। १९ झ. °प्रियद्विषचरंस्तु भिक्षां न वदेत भि°।

अथ षोडशोऽध्यायः ।

भीष्म उवाच—

यदेतत्कथितं ब्रह्मंस्तीर्थमाहात्म्यमुत्तमम् । कमलस्याभिपातेन तीर्थं जातं धरातले ॥ १
तत्रस्थेन भगवता विष्णुना शंकरेण च । यत्कृतं मुनिशार्दूल तत्सर्वं परिकीर्तय ॥ २
कथं यज्ञो हि देवेन विभुना तत्र कारितः । के सदस्या ऋत्विजश्च ब्राह्मणाः के समागताः ॥ ३
के विभागास्तस्य यज्ञे किं द्रव्यं का च दक्षिणा । का वेदी किं प्रमाणं च कृतं तत्र विरिञ्चिना ४
यो याज्यः सर्वदेवानां वेदैः सर्वत्र पठ्यते । कं च काममभिध्याय वेधा यज्ञं चकार ह ॥ ५
यथाऽसौ देवदेवेशो ह्यजरश्चामरश्च ह । तथा चैवाक्षयः स्वर्गस्तस्य देवस्य दृश्यते ॥ ६
अन्येषां चैव देवानां दत्तः स्वर्गो महात्मना । अग्निहोत्रार्थमुत्पन्ना वेदाश्चैवाग्नयस्तथा ॥ ७
ये चान्ये पशवो भूमौ सर्वे ते यज्ञकारणात् । सृष्टा भगवता तेन इत्येषा वैदिकी श्रुतिः ॥ ८
तदत्र कौतुकं मह्यं श्रुत्वेदं तव भाषितम् । यं काममधिकृत्यैकं यत्फलं यां च भावनाम् ॥ ९
कृतवान्येन वै यज्ञं सर्वं शंसितुमर्हसि । शतरूपा च या नारी सावित्री सा त्विहोच्यते ॥ १०
भार्या सा ब्रह्मणः प्रोक्ता ऋषीणां जननी च सा । पुलस्त्याद्यान्मुनीन्सप्त दक्षाद्यांश्च प्रजापतीन्
स्वायंभुवादींश्च मनून्सावित्री समजीजनत् । धर्मपत्नीं तु तां ब्रह्मा पुत्रिणीमात्मनः प्रियाम् १२
पतिव्रतां महाभागां सुव्रतां चारुहासिनीम् । कथं स तां परित्यज्य भार्यामन्यामविन्दत ॥ १३
किंनाम्नी किंसमाचारा कस्य सा तनया विभो । क्व सा दृष्टा हि देवेन केन चास्य प्रदर्शिता
किंरूपा सा तु देवेन दृष्टा चित्तविमोहिनी ॥ १४
यां दृष्ट्वा च स देवेशः कामस्य वशमेयिवान् । वर्णतो रूपतश्चाऽऽसीत्सावित्र्यभ्यधिका मुने १५
या लोभितवती देवं सर्वलोकेश्वरं विभुम् । यथा गृहीतवान्देवो नारीं तां लोकसुन्दरीम् ॥ १६
यथा प्रवृत्तोऽसौ यज्ञस्तथा सर्वं प्रकीर्तय । तां दृष्ट्वा ब्रह्मणः पार्श्वे सावित्री किं चकार ह १७
सावित्र्यां वै तथा ब्रह्मा कां तु वृत्तिमवर्तत । संनिधौ कानि वाक्यानि सावित्री ब्रह्मणा तदा॥
उक्ताऽप्युक्तवती भूयः सर्वं शंसितुमर्हसि । किं कृतं तत्र युष्माभिः कोपो वाऽथ क्षमाऽपि वा१९
यत्कृतं तत्र यद्भूतं यच्चोक्तमभूत्तदा । विस्तरेण हि सर्वाणि कर्माणि परमेष्ठिनः ॥ २०
श्रोतुमिच्छाम्यशेषेण करग्रहविधिं परम् । कर्मणामानुपूर्व्यं च प्रारम्भो होत्रमेव च ॥ २१
होतुर्भक्षो यथाऽर्चाऽपि प्रथमा कस्य कारिता । कथं च भगवान्विष्णुः साहाय्यं केन कीदृशम् ॥
अमरैर्वा कृतं यच्च तद्भवान्वक्तुमर्हति । देवलोकं परित्यज्य कथं मर्त्यमुपागतः ॥ २३
गार्हपत्यं च विधिना अन्वाहार्यं च दक्षिणम् । अग्निमाहवनीयं च वेदीं चैव कुशं स्रुवम् ॥ २४
प्रोक्षणीयं स्रुचं चैव आवभृथ्यं तथैव च । आवापांस्त्रीणि यश्चक्रे हव्यकव्यप्रदानि वै ॥ २५
हव्यादांश्च सुरांश्चक्रे क्रव्यादांश्च पितॄनपि । भागार्थं यज्ञविधिना यो यज्ञो यज्ञकर्मणि ॥ २६
यूपान्समित्कुशं सोमं पवित्रं परिधीनपि । यज्ञियानि च द्रव्याणि यथा ब्रह्मा चकार ह ॥ २७

१ ञ. योऽस्तीज्यः । २ ञ. °दाश्चौषधय° । ३ झ. किं । ४ झ. °कं किं फलं । ५ झ. कां । ६ ग. देवताम् । ७ झ. त्यक्त्वा । ८ क. ख. ग. घ. ङ. च. ज. या मोहित° । ९ क. ख. ग. घ. ङ. च. ज. यद्दृष्टं य° । १० ञ. °वोक्तं मया त्विह । वि° । ११ ञ. °ण हरेर्यज्ञवि° । १२ क. ख. ङ. च. च । अग्नींस्त्रींश्च यथा चक्रे हव्यभागवहान्हि वै । १३ ञ. °न्ना ये यज्ञार्थ° । १४ झ. यूपांश्च स्रुक्स्रुव सो° ।

विबभ्राज पुरा यश्च पारमेष्ठ्येन कर्मणा । क्षणा निमेषाः काष्ठाश्च कालास्त्रैकाल्यमेव च ॥ २८
मुहूर्तास्तिथयो मासा दिनसंवत्सरं तथा । ऋतवः कालयोगाश्च प्रमाणं त्रिविधं पुरा ॥ २९
आयुः क्षेत्राण्यपचयं लक्षणं रूपसौष्ठवम् । त्रयो वर्णास्त्रयो लोकास्त्रैविद्यं पावकत्रयम् ॥ ३०
त्रैकाल्यं त्रीणि कर्माणि त्रयो वर्णास्त्रयो गुणाः । सृष्टा लोकाः पराः सृष्टा येनानन्येन चेतसा ॥
या गतिर्धर्मयुक्तानां या गतिः पापकारिणाम् । चातुर्वर्ण्यस्य प्रभवश्चातुर्वर्ण्यस्य रक्षिता ॥ ३२
चातुर्विद्यस्य यो वेत्ता चतुराश्रमसंश्रयः । यः परं श्रूयते ज्योतिर्यः परं श्रूयते तपः ॥ ३३
यः परं प्राह परतो यः परं परमात्मवान् । सेतुर्यो लोकसेतूनां मेध्यो यो मेध्यकर्मणाम् ॥ ३४
वेद्यो यो वेदविदुषां यः प्रभुः प्रभवात्मनाम् । असौ भूतश्च भूतानामग्निभूतोऽग्निवर्चसाम् ॥ ३५
मनुष्याणां मनोभूतस्तपस्विनां तपो महत् । विनयो नयवृत्तीनां तेजस्तेजस्विनामपि ॥ ३६
इत्येतत्परमं सर्वं सृजल्लोकान्पितामहः । यज्ञाद्गतिं स्वामनिच्छन्कथं यज्ञे मतिः कृता ॥ ३७
एष मे संशयो ब्रह्मन्नेष मे संशयः परः । आश्चर्यं परमं ब्रह्मन्देवदैत्यैश्च पठ्यते ॥
कर्मणैश्वर्यभूतस्य पठतस्तु इहोच्यते ॥ ३८

पुलस्त्य उवाच—

प्रश्नभारो महानेष त्वयोक्तो ब्रह्मणश्च यः । यथाशक्ति तु वक्ष्यामि श्रूयतां हि न संशयः ॥ ३९
सहस्राक्षं सहस्रास्यं सहस्रचरणं च यम् । सहस्राभरणं देवं सहस्रकरमव्ययम् ॥ ४०
सहस्रजिह्वं साहस्रं सहस्रपरमं प्रभुम् । सहस्रदं सहस्रादिं सहस्रभुजमव्ययम् ॥ ४१
हवनं सवनं चैव हव्यं होतारमेव च । पात्राणि च पवित्राणि वेदीं दीक्षां चरुस्रुवम् ॥ ४२
स्रुक्सोममवभृथं चैव प्रोक्षणीदक्षिणाधनम् । अध्वर्युं सामगं विप्रं सदस्यं सदनं सदः ॥ ४३
यूपं समित्कुशं दर्वीमुसलोलूखलानि च । प्राग्वंशं यज्ञभूमिं च होतारं बन्धनं च यत् ॥ ४४
ह्रस्वान्यतिप्रमाणानि स्थावराणि चराणि च । प्रायश्चित्तानि वा(चा)जांश्च स्थण्डिलानि कुशांस्तथा ॥
यज्ञभागं वह्निभागं भागं भागवहं च यत् । अग्रभुजं सोमभुजं हुतार्चिषमुदाहृतम् ॥ ४६
आहुर्वेदविदो विप्रा यो यज्ञः शाश्वतः प्रभुः । यां पृच्छसि महाभाग पुण्यां दिव्यामिमां कथाम् ॥
यदर्थं भगवान्ब्रह्मा भूमौ यज्ञमथाकरोत् । हितार्थं सुरमर्त्यानां लोकानां प्रभवाय च ॥ ४८
ब्रह्मा च कपिलश्चैव परमेष्ठी तथैव च । देवाः सप्तर्षयश्चैव त्र्यम्बकश्च महायशाः ॥ ४९
सनत्कुमारश्च महानुभावो मनुर्महात्मा भगवान्प्रजापतिः ।
पुराणदेवोऽथ तथाऽभिचक्रे प्रदीप्तवैश्वानरतुल्यतेजाः ॥ ५०
पुरा कमलजातस्य स्वपतस्तस्य कोटरे । पुष्करे यत्र संभूता देवा ऋषिगणास्तथा ॥ ५१
एष पौष्करको नाम प्रादुर्भावो महात्मनः । पुराणं कथ्यते यत्र वेदश्रुतिसमाहितम् ॥ ५२

---

१ क. ख. ग. घ. ङ. च. °मेषाश्च कला कालस्त्रै° । २ झ. °विध्यं पा° । ३ झ. वेद्यवि° । ४ क. ख. ङ. च. प्रभुतात्म° । ५ क. ख. ङ च. असुभू° । ६ क. ख. ग. घ. ङ. ञ. ज. °तत्सर्वमखिलान्सृज° । ७ झ. °ज्ञाहुतिं । ८ ज. °श्चर्यः परमो ब्रह्मा देवैर्दिव्यैश्च । ९ क. ख. ग. घ. ङ. च. ज कर्मणाऽऽश्चर्यभूतोऽपि तत्त्वतः स इ° । १० क. ख. ग. घ. ङ. च. ज. °तां तत्परं यशः । स° । ११ झ. यत् । १२ क ख. घ. ङ. च. ज. °र्वींचमसोलू° । १३ घ. चयनं । १४ क. ख. ग. घ. ङ. च. ज. °था । मन्त्रं यज्ञं च हवनं वह्निभागं भवं च । १५ क. ख. ग. घ. ङ. च. ज. °जं शुभार्चिषमुदायुधम् । १६ झ. आयुर्वेदयुतो विप्रो यो । १७ ञ.° भुः । यत्पृच्छ । १८ झ. °स्य तप° । १९ क. ख. घ. ङ. च. ज. °दस्मृतिसुसंहि° ।

वराहस्तु श्रुतिमुखः प्रादुर्भूतो विरिञ्चिनः । सहायार्थं सुरश्रेष्ठो वाराहं रूपमास्थितः ॥ ५३
विस्तीर्णं पुष्करे कृत्वा तीर्थं कोकामुखं हि तुं । वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः ॥ ५४
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः । अहोरात्रेक्षणो देवो वेदाङ्गश्रुतिभूषणः ॥ ५५
आज्यनासः स्रुवतुण्डः सामघोषधरो महान् । सत्यधर्मरतः श्रीमान्कर्मविक्रमसत्कृतः ॥ ५६
प्रायश्चित्तनखो वीरः पशुजानुर्महाकृतिः । उद्गात्रन्त्रो होमलिङ्गी फलबीजमहौषधीः(?) ॥ ५७
वाय्वन्तरात्मा मन्त्रास्थिः सुकृत्यः सोमशोणितः । वेदस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ॥
प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरर्चितः । दक्षिणाहृदयो योगी महासत्रमयो महान् ॥ ५९
उपाकर्मेष्टिरुचिरः प्रवर्ग्यावर्तभूषणः । छायापत्नीसहायो वै मणिशृङ्गमिवोच्छ्रितः ॥ ६०
सर्वलोकहितार्थाय दंष्ट्रया प्रोज्जहार गाम् । ततः स्वस्थानमानीय पृथिवीं पृथिवीधरः ॥ ६१
ततो जगाम निर्वाणं मेदिनी तस्य धारणात् । एवमादिवराहेण धृत्वा ब्रह्महितार्थिना ॥ ६२
उद्धृता पुष्करे पृथ्वी सागराम्बुगता पुरा । वृतः शमदमाभ्यां च दिव्ये कोकामुखे स्थितः ६३
आदित्यैर्वसुभिः साध्यैर्मरुद्भिर्दैवतैः सह । रुद्रैर्विश्वसहायैश्च यक्षराक्षसकिंनरैः ॥ ६४
दिग्भिर्विदिग्भिः पृथिवी नदीभिः सागरैस्तथा । चराचरगुरुः श्रीमान्ब्रह्मा ब्रह्मविदां वरः ॥ ६५
उवाच वचनं कोकामुखं तीर्थं त्वया विभो । पालनीयं सदा गोप्यं रक्षा कार्या मखे त्विह ६६
एवं करिष्ये भगवंस्तदा ब्रह्माणमुक्तवान् । उवाच तं पुनर्ब्रह्मा विष्णुं देवं पुरः स्थितम् ॥ ६७

ब्रह्मोवाच—

त्वं हि नः परमो देवस्त्वं हि नः परमा गतिः । त्वं हि मे परमं धाम इन्द्रादीनां सुरोत्तम ६८
उत्फुल्लामलपद्माक्ष शत्रुपक्षक्षयावह । यथा यज्ञे न मे ध्वंसो दानवैश्च विधीयते ॥ ६९
तथा त्वया विधातव्यं प्रणतस्य नमोऽस्तु ते ॥ ७०

विष्णुरुवाच—

भयं त्यजस्व देवेश क्षयं नेष्यामि चासुरान् । अन्येऽपि विघ्नकर्तारो यातुधानास्तथाऽसुराः ॥ ७१
पातयिष्यामि तान्सर्वान्स्वस्ति तेऽस्तु पितामह । एवमुक्त्वा स्थितस्तत्र साहाय्येन कृतक्षणः ७२
प्रववुश्च शिवा वाताः प्रसन्नाश्च दिशो दश । सुप्रभाणि च ज्योतींषि सूर्यं चक्रुः प्रदक्षिणम् ॥ ७३
न विग्रहं ग्रहाश्चक्रुः प्रसन्नाश्चापि सिन्धवः । *नीरजस्काभवन्मार्गाः सिक्तगन्धादयश्च ये ॥ ७४
जग्मुः स्वमार्गं सरितो नापि चुक्षुभुरर्णवाः । आसञ्शुभानीन्द्रियाणि नराणामन्तरात्मनाम् ॥ ७५
महर्षयो वीतशोका वेदानुच्चैरपाठयन् । यज्ञे तस्मिन्हविष्पाके शिवमाप च पावकः ॥ ७६
प्रवृत्तधर्मसंवृत्ता लोका मुदितमानसाः । विष्णोः सत्यप्रतिज्ञस्य श्रुत्वाऽरिनिधना गिरः ॥ ७७
ततो देवाः समायाता दानवा राक्षसैः सह । भूतप्रेतपिशाचाश्च सर्वे तेऽप्यागता द्रुताः ॥ ७८

* सधिरार्षः ।

१ अ. पुष्करं । २ अ. तत् । ३ अ. दिव्यो । ४ क. ग. सुचतु॰ । ५ क. ख. ग. घ. ङ. च. ज. ॰मैमयः श्री॰ । ६ ग. घ. ज ॰मान्क्रमवि॰ । ७ क. ख. ग. घ. ङ. च. ज. ॰मैखाक्ष॰ । ८ अ. ॰गी श्रद्धास॰ । ९ क. ॰कर्मस्वरु॰ । ग. घ. ज. ॰कर्मौष्टरुचकः प्र॰ । १० ग. घ. ॰तः । पूर्वलोकहितात्मा यो दं॰ । ११ ग. घ. ज. ॰रमो गुरुः । त्वं । १२ क. ख. ग. घ. ङ. च. ज. ॰वैरिह दृश्यते । १३ क. ख. ग. घ. ङ. च. ज. चन्द्रं । १४ क. ख. ग. घ. ङ. च. ज. ॰स्का भूमेरासीत्सकलाह्लादयत्रयः । ज॰ । १५ घ. शिवा आसंश्च पावकाः । प्र॰ । १६ झ. श्रुतिनिर्वचने गि॰ । १७ क. ख. ग. घ. ङ. च. ज. ॰गताः क्रमात् । ग॰ ।

गन्धर्वाप्सरसश्चैव नागा विद्याधरा गणाः । वानस्पत्याश्चौषधयो यच्चेहयच्च नेहति ॥ ७९
ब्रह्मादेशान्मारुतेन आनीताः सर्वतो दिशः । यज्ञपर्वतमासाद्य दक्षिणामभितो दिशम् ॥ ८०
सुरा उत्तरतः सर्वे मर्यादापर्वते स्थिताः । गन्धर्वाप्सरसश्चैव मुनयो वेदपारगाः ॥ ८१
पश्चिमां दिशमास्थाय स्थितास्तस्य महाक्रतोः । सर्वदेवनिकायाश्च दानवाश्चासुरा जनाः ॥ ८२
अमर्षं पृष्ठतः कृत्वा सुप्रीतास्ते परस्परम् । ऋषीन्पर्यचरन्सर्वे विप्राञ्शुश्रूषवस्तदा ॥ ८३
ऋषयो ब्रह्मर्षयश्चैव द्विजा देवर्षयस्तथा । राजर्षयो मुख्यतमास्तत्राऽऽयाताः समन्ततः ॥ ८४
कतमश्च सुरोऽप्यत्र क्रतौ याज्यो भविष्यति । पशवः पक्षिणः सर्वे तत्राऽऽयाता दिदृक्षवः ॥८५
ब्राह्मणा भोक्तुकामाश्च सर्वे वर्णानुपूर्वशः । आगत्य वरुणो[१] लोकादक्षश्चान्नं स्वयं पचेत् ॥ ८६
वायुर्भक्ष्यविकारांश्च रसपाची दिवाकरः । अन्नपाचनकृत्सोमो मतिदाता बृहस्पतिः ॥ ८७
धनदानं[२] धनाध्यक्षो वस्त्राणि विविधानि च । सरस्वती नदाध्यक्षो गङ्गादेवी सनर्मदा॥ ८८
याश्चान्याः सरितः पुण्याः कूपाश्चैव जलाशयाः। पल्वलानि तडागानि कुण्डानि विविधानि च॥
प्रस्रवणानि मुख्यानि देवखातानि[३] सर्वशः । जलाशयानि सर्वाणि समुद्राः सप्त एव वै ॥ ९०
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् । सप्त लोकाः सपातालाः सप्तद्वीपाः सपत्तनाः ॥ ९१
वृक्षा वल्लयः सतृणानि शाकानि च फलानि च । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥
सविग्रहाणि भूतानि धर्मशास्त्राणि चैव हि । वेदभाष्याणि सूत्राणि ब्रह्मणा निर्मितं हि यत् ९३
अमूर्तं मूर्तमन्यन्तं मूर्तदृश्यं तथा स्थितम् । एवं कृते तथा तस्मिन्यज्ञे पैतामहे तदा ॥ ९४
देवानां संनिधौ तत्र ऋषिभिश्च समागमे । ब्रह्मणो दक्षिणे पार्श्वे स्थितो विष्णुः सनातनः॥९५
वामपार्श्वे स्थितो रुद्रः पिनाकी[४] च जगत्प्रभुः । ऋत्विजां चापि वरणं कृतं तत्र महात्मना ॥९६
भृगुर्होता वृतस्तत्र पुलस्त्योऽध्वर्युसत्तमः । तत्रोद्गाता मरीचिस्तु ब्रह्मा वै नारदः कृतः ॥ ९७
सनत्कुमारादयश्चान्ये सदस्यास्तत्र तेऽभवन् । प्रजापतयो दक्षाद्या वर्णा ब्राह्मणपूर्वकाः ॥ ९८
ब्रह्मणश्च समीपे तु कृता[५] ऋत्विग्विकल्पना[६]ः । वस्त्रैराभरणैर्युक्ताः कृता वैश्रवणेन ते ॥ ९९
अङ्गुलीयैः सकटकैर्मुकुटैर्भूषिता द्विजाः । चत्वारो द्वौ दशान्ये च एवं ते षोडश द्विजाः ॥ १००
ब्रह्मणा पूजिताः सर्वे प्रणिपातपुरःसरम् । अनुग्राह्यो भवद्भिस्तु सर्वैरस्मिन्क्रताविह ॥ १०१
पत्नी ममैषा सावित्री यूयं मे शरणं द्विजाः । विश्वकर्माणमाहूय ब्रह्मणः शीर्षमुण्डनम् ॥ १०२
यज्ञे च विहितं तस्य कारितं द्विजसत्तमैः । [७]कौशेयानि वस्त्राणि दंपत्यर्थे तथा द्विजैः ॥ १०३
ब्रह्मघोषेण ते विप्रा नादयन्तस्त्रिविष्टपम् । पालयन्तो जगच्चेदं क्षत्रियाः सायुधाः स्थिताः १०४
भक्ष्यप्रकारान्विविधान्वैश्यास्तत्र प्रचक्रिरे । रसबाहुल्ययुक्तं च भक्ष्यभोज्यं कृतं ततः ॥ १०५
अश्रुतं प्रागदृष्टं च दृष्ट्वा तुष्टः पितामहः । प्राग्वाटेति[८] ददौ नाम वैश्यानां सृष्टिकृत्प्रभुः ॥ १०६
द्विजानां पादशुश्रूषा शूद्रैः कार्या सदैव हि । पादप्रक्षालनं भोज्यमुच्छिष्टस्य प्रमार्जनम् ॥ १०७
ते[९] तु चक्रुस्तदा चैव तेभ्यो भूयः पितामहः । शुश्रूषार्थं मया यूयं तुरीये तु पदे कृताः ॥ १०८
द्विजानां क्षत्रबन्धूनां वैश्यानां च भवद्विधैः । त्रिभ्यः शुश्रूषणा कार्या नाम नाम्नैकसंज्ञिता॥१०९
द्वाराध्यक्षं तथा शक्रं वरुणं रसदायकम् । वित्तप्रदं वैश्रवणं पवनं गन्धदायकम् ॥ ११०

१ झ. °णो रत्नान्दक्ष°। ञ. °णो लोकाद्यज्ञस्यान्तः स्वयं प° । २ क. ख. ङ. च. °नधान्यं ध° । ३ क. ख. ग. घ. ङ. च. ज. °तान्यनेकशः । ४ क. ख. ग. घ. ङ. च. ज. °की वरदः प्रभुः । ५ ञ. कृत्वा । ६ ञ. °ल्पनाम् । व° । ७ ञ. आतस्यानि । ८ झ. °ग्वाटोऽपि द° । ९ ञ. तेऽपि चक्रुस्तदा तत्र ब्रह्मणा यच्च संज्ञितम् । द्वा° ।

उद्योतकारिणं सूर्यं प्रभुत्वे माधवः स्थितः । सोमः सौम्यप्रदस्तेषां वामपक्षमथाऽऽश्रितः ॥ १११
सुसंस्कृता च पत्नी सा सावित्री च वराङ्गना । अध्वर्युणा समाहूता एहि देवि त्वरान्विता ॥ ११२
उद्धृताश्चाग्नयः सर्वे दीक्षाकाल उपागतः । व्यग्रा सा कार्यकरणे स्त्रीभावेनान्यतः स्थिता ॥ ११३
इह मे न कृतं किंचिद्द्वारे वै मण्डनं मया । भित्त्यां वै चित्रकर्माणि स्वस्तिकं प्राङ्गणे न तु ॥ ११४
प्रक्षालनं च भाण्डानां न कृतं किमपि त्विह । लक्ष्मीर्नाद्यापि आयाता सती नैवेह दृश्यते ॥ ११५
महताऽऽग्रहेणाऽऽहूता शक्राणी नाऽऽगता त्विह । मेधा श्रद्धा विभूतिश्च अनसूया धृतिः क्षमा ॥
गङ्गा सरस्वती चैव नाद्याऽऽगच्छन्ति कन्यकाः । इन्द्राणी इन्द्रपत्नी तु रोहिणी शशिनः प्रिया
अग्नेः पत्नी तथा स्वाहा धूम्रोर्णा तु यमस्य तु । वरुणस्य तथा गौरी वायोर्वै सुप्रभा तथा ॥ ११८
ऋद्धिर्वैश्रवणभार्या शंभोर्गौरी जगत्प्रिया । अरुन्धती वसिष्ठस्य सप्तर्षीणां च याः स्त्रियः ॥ ११९
अनसूयाऽत्रिपत्नी च तथाऽन्याः प्रमदास्त्विह । वध्वो दुहितरश्चैव सख्यो वै नग्निकास्तथा १२०
नाऽऽगच्छन्ति तु ताः सर्वा अहं तावत्स्थिता चिरम् । नाहमेकाकिनी यास्ये यावन्नाऽऽयान्ति ताः स्त्रियः
ब्रूहि गत्वा विरिञ्चिं तं तिष्ठ तावन्मुहूर्तकम् । सर्वाभिः सहिता चाहमागच्छामि त्वरान्विता १२२
सर्वैः परिवृतः शोभां देवैः सह महामते । भवान्प्राप्नोति परमां तथाऽहं तु न संशयः ॥ १२३
वदमानां तथाऽध्वर्युस्त्यक्त्वा ब्रह्माणमागतः ॥ १२४

अध्वर्युरुवाच—

सावित्री व्याकुला देव प्रसक्ता गृहकर्मणि । सख्यो नाभ्यागता यावत्तावन्नाऽऽगमनं मम १२५
एवमुक्तोऽस्मि वै देव कालश्चाप्यतिवर्तते । यद्वोऽद्य रुचिरं तावत्तत्कुरुष्व पितामह ॥
एवमुक्ते तदा वाक्ये किंचित्कोपसमन्वितः ॥ १२६

ब्रह्मोवाच—

पत्नीं चान्यां मदर्थे तु शीघ्रं शक्र समानय । यथा प्रवर्तते यज्ञः कालहीनो न जायते ॥ १२७
तथा शीघ्रं विधत्स्व त्वं नारीं कांचिदुपानय । यावद्यज्ञसमाप्तिर्मे वर्णे त्वं मा कृथा मनः ॥ १२८
भूयोऽपि तां प्रमोक्ष्यामि समाप्ते तु क्रताविह । एवमुक्तस्तथा शक्रो गत्वा सर्वं धरातलम् ॥ १२९
स्त्रियो दृष्टास्तु यास्तेन सर्वास्ताः सपरिग्रहाः । आभीरकन्यां रूपाढ्यां शुभास्यां चारुलोचनाम्
न देवी न च गन्धर्वी नासुरी न च पन्नगी । न चास्ति तादृशी कन्या यादृशी सा वराङ्गना ॥
ददर्श तां तु चार्वङ्गीं कमलायतलोचनाम् । संक्षिपतीं मनोवृत्तिविभवं रूपसंपदा ॥ १३२
यद्यत्तद्वस्तु सौन्दर्याद्विशिष्टं लभ्यते क्वचित् । तत्तच्छरीरसंलग्नं तन्वङ्ग्या ददृशे वरम् ॥ १३३
तां दृष्ट्वा चिन्तयामास यद्येषा कन्यका भवेत् । तन्मत्तः कृतपुण्योऽन्यो न देवो भुवि विद्यते ॥
योषिद्रत्नमिदं सेयं सद्भार्यायां पितामहः । सरागो यदि वा स्यात्तु सफलस्त्वेष मे श्रमः ॥ १३५
नीलाभ्रकनकाम्भोजविद्रुमाभां ददर्श ताम् । त्विषं संबिभ्रतीमङ्गैः केशगण्डेक्षणाधरैः ॥ १३६
मन्मथाशोकवृक्षस्य प्रोद्भिन्नां कलिकामिव । प्रदग्धहृच्छयेनेव नेत्रवह्निशिखोत्करैः ॥ १३७
धात्रा कथं हि सा सृष्टा प्रतिरूपमपश्यता । कल्पिता चेत्स्वयं बुद्ध्या नैपुण्यस्य गतिः परा ॥
उत्तुङ्गाग्राविमौ सृष्टौ यन्मे संपश्यतः सुखम् । पयोधरौ नातिचित्रं कस्य संजायते हृदि ॥ १३९

---

१ अ. °तः । गायत्री च कृता पत्नी सावि° । २ क. ङ. च. सुरात्मिके । ३ क. ख. ग. घ. ङ. च. ज. °ख्यो भगिनिका° । ४ झ. °घ्रं त्वं च समान° । ५ क. ख. ग. ङ. च. ज. सुनासां । ६ क. ख. ग. घ. ङ. च. ज. विभुः । ७ क. ख. ग. घ. ङ. च. ज. °मूर्ताऽवसि° ।

रागोपहतदेहोऽयमधरो यद्यपि स्फुटम् । तथाऽपि सेवमानस्य निर्वाणं संप्रयच्छति ॥ १४०
संहृद्भिरपि कौटिल्यमलकैः सुखमर्प्यते । दोषोऽपि गुणवद्भाति भूरिसौन्दर्यमाश्रितः ॥ १४१
नेत्रयोर्भूषणौ कौ(प्रा)न्तावाकर्णाभ्याशमागतौ । कारणाभावचैतन्यं न वदिष्यन्ति तद्विदः १४२
कर्णयोर्भूषणे नेत्रे नेत्रयोः श्रवणाविमौ । कुण्डलाञ्जनयोरन्तर्नावकाशोऽस्ति कश्चन ॥ १४३
न तद्युक्तं कटाक्षाणां यद्विधाका(क)रणं हृदि । तेव संबन्धिनो येऽत्र कथं ते दुःखभागिनः १४४
सर्वसुन्दरतामेति विकारः प्राकृतैर्गुणैः । वृद्धेक्षणगतानां तु दृष्टमेषां बलाबलम् ॥ १४५
धात्रा कौशल्यसीमेयं रूपोत्पत्तौ सुदर्शिता । करोत्येषा मनो नृणां सस्नेहं कृतिविभ्रमैः ॥ १४६
एवं विमर्शतस्तस्य तद्रूपापहृतत्विषः । निरन्तरोद्गतैश्छन्नमभवत्पुलकैर्वपुः ॥ १४७
तां वीक्ष्य तप्तहेमाभां पद्मपत्रायतेक्षणाम् । देवानामथ यक्षाणां गन्धर्वोरगरक्षसाम् ॥ १४८
न कदाचिन्मया दृष्टा ईदृशी रूपसंपदा । त्रैलोक्यान्तर्गतं यद्यद्वस्तु तत्तत्प्रधानतः ॥
समादाय विधात्राऽऽस्याः कृता रूपस्य संस्थितिः ॥ १४९

इन्द्र उवाच—

काऽसि कस्य कुतश्च त्वमागता सुभ्रु कथ्यताम् । एकाकिनी किमर्थं हि वीथीमध्ये च तिष्ठसि ॥
यान्येतान्यङ्गसंस्थानि भूषणानि बिभर्षि च । नैतानि तव भूषायै त्वमेतेषां हि भूषणम् ॥ १५१
न देवी न च गन्धर्वी नासुरी पन्नगी न च । किंनरी दृष्टपूर्वा वा यादृशी त्वं सुलोचने ॥ १५२
उक्ता मयाऽसि बहुशः कस्माद्दत्से हि नोत्तरम् । रूपान्विता तु सा कन्या शक्रं प्रोवाच वेपती

कन्योवाच—

गोपकन्या त्वहं वीर विक्रेतुमिह गोरसम् । नवनीतमिदं शुद्धं दधि चेदं विमण्डकम् ॥ १५४
दध्ना चैवाथ तक्रेण दुग्धेनापि परंतप । अर्थी येनासि त्वं ब्रूहि प्रगृह्णीष्व यथेप्सितम् ॥ १५५
एवमुक्तस्तदा शक्रो गृहीत्वा तां करे दृढम् । अनयत्तां विशालाक्षीं यत्र ब्रह्मा व्यवस्थितः १५६
रुदमाना तु सा देवी क्रोशन्ती +पितृमातरौ । हा तात मातर्हा भ्रातर्नयत्येष नरो बलात् १५७
यदि तेऽस्ति मया कार्यं पितरं मे प्रयाचय । स ते दास्यति मां नूनं भवतः सत्यमुच्यते ॥ १५८
का हि नाभिलषेत्कन्या भर्तारं भक्तिवत्सलम् । नादेयमस्ति ते किंचित्पिता मे भक्तवत्सलः १५९
प्रसादये त्वां शिरसा मां च तुष्टः प्रदास्यति । पितुश्चित्तमविज्ञाय यदाऽऽत्मानं ददामि ते १६०
धर्मो हि विप्रणश्येत तेन त्वां न प्रसादये । भविष्यामि वशे तुभ्यं यदि तातः प्रदास्यति १६१
इत्थमाभाष्यमाणस्तु तया शक्रोऽनयच्च ताम् । ब्रह्मणः पुरतः स्थाप्य प्राहास्यार्थे मयाऽबले ॥
आनीताऽसि विशालाक्षि मा शुचो वरवर्णिनि । गोपकन्या च तं दृष्ट्वा गौरवर्णं महाद्युतिम् ॥
कमलाक्षं सुबाहुंसं पुण्डरीकनिभेक्षणम् । तप्तकाञ्चनसद्भित्तिसदृशं पीनवक्षसम् ॥ १६४

---

+आर्षत्वात्पितृशब्दस्य पूर्वनिपातः ।

---

१ क. ख. ङ. च. °रो विद्रुमस्पृहः । त° । २ झ. °णौ पक्ष्मावा° । ३ क. ख. ग. घ. ङ. च. ज. कान्तौ प्रवीणाभ्यो समा° । ४ क. ख. ङ. च. °न्यं प्रवदिष्यन्ति तच्छिदः । ५ ख. ङ. °णां मद्विधा° । ६ क. ख. ग. घ. ङ. च. ज. तत्त्वसं° । ७ क. ख. ग. घ. ङ. च. ज. कथ्यन्ते । ८ क. ख. ग. घ. ङ. च. ज. °णशतानां तु दृष्टमेषा मया धनम् । ९ क. च. °त्यैव नृणां दृष्टिं सस्नेहेक्षिततत्रि° । १० ग. घ. ज. °म् । नाना दृष्टा मया नार्यो नेद° । ११ झ. °तस्य शुद्धस्य भृतं चेमं कलेवरम् । १२ क. ख. ग. घ. ङ. ज. नीयमाना । १३ झ. °य या वै कन्या स्वयंवरा । ध° । १४ क. ख. ग. घ. ङ. च. ज. °ते । १५ झ. °द्य अस्य चार्थे ।

मत्तेभहस्तवृत्तोरुं रक्तोत्तुङ्गनखत्विषम् । प्राप्तं साऽमन्यताऽऽत्मानं मन्मथस्येषुगोचरे ॥ १६५
तत्प्राप्तिहेतुकधिया गतचित्तेव लक्ष्यते । प्रभुत्वमात्मनो दाने गोपकन्याऽप्यमन्यत ॥ १६६
यद्येष मां सुरूपत्वादिच्छत्यादातुमाग्रहात् । नास्ति सीमन्तिनी काचिन्मया धन्यतरा भुवि ॥
अने[1]नाहं समानीता यच्चक्षुर्गोचरं गता । अस्य त्यागे भवेन्मृत्युरत्यागे जीवितं सुखम् ॥ १६८
भवेयमद्य यानाच्च विरूपा[2] दुःखदायिनी । दृश्यते चक्षुषाऽनेन याऽपि योषित्प्रसादतः ॥ १६९
साऽपि धन्या न संदेहः किं पुनर्या परिष्वजेत् । जगद्रूपमशेषं हि पृथक्संचारमाश्रितम् ॥ १७०
लावण्यं तदिहैकस्थं दर्शितं विश्वयोनिना । अस्योपमा स्मरः साध्वी मन्मथस्य प्रियोपमा ॥ १७१
तिरस्कृतस्तु शोकोऽयं माता[4] पिता न कारणम् । यदि मां नैष चाऽऽदत्ते स्वल्पं मयि न भाषते
अस्यानुस्मरणान्मृत्युर्[5] भविष्यति शापजः । अनागसि च पत्न्यां तु क्षिप्रं यातेयमीदृशी ॥ १७३
कुच[6]योर्मणिशोभायै[7] शुद्धाम्बुजसमद्युतिः[8] । मुखमस्य प्रपश्यन्त्यां मनो मे ध्यानतां गतम् ॥ १७४
अस्याङ्गस्पर्शसंयोगान्न[9] वाये(यो) बहु मन्यसे । स्पृशन्नटसि येन त्वं शरीरं[10] प्राणिनां वरम् १७५
अथं[11] वाऽस्य न दोषोऽस्ति यदृच्छाचारको ह्यसि । मुषितः स्मर नूनं त्वं मां रक्ष स्वां प्रियां रतिम्
[12]त्वत्तोऽपि दृश्यते येन रूपेण मन्मथाधिकः । ममानेन मनोरत्नं सर्वस्वं च हृतं दृढम्* ॥ १७७
शोभा या दृश्यते वक्त्रे सा कुतः शशलक्ष्मणि । नोपमा सकलङ्कस्य निष्कलङ्केन दृश्यते[13] ॥ १७८
समानभावतां याति पङ्कजं नास्य नेत्रयोः । [14]नोपमा जलशङ्खेन प्राप्तश्रवणशङ्खयोः ॥ १७९
विद्रुमोऽप्यधरस्यास्य लभते नोपमां ध्रुवम् । आत्मस्थममृतं ह्येष स्रवतीवेष्टकं ध्रुवम् ॥ १८०
यदि किंचिच्छुभं कर्म जन्मान्तरशतैः कृतम् । तत्प्रसादात्पुमान्भर्ता भवत्वेष ममेप्सितः ॥ १८१
एवं चिन्तापराधीना यावत्सा गोपकन्यका । तावद्ब्रह्मा हरिं प्राह यज्ञार्थं सत्वरं वचः ॥ १८२
देवी चैषा महाभाग[15] गायत्री नामतः प्रभो । एवमुक्ते तदा विष्णुर्ब्रह्माणं प्रोक्तवानिदम् ॥ १८३

विष्णुरुवाच—

तदेतामुद्वहस्वाद्य मया दत्तां तव प्रभो । गान्धर्वेण विवाहेन विकल्पं मा कृथाश्चिरम् ॥ १८४
अनुगृहाण देवेश अस्याः पाणिमनाकुलम् । गान्धर्वेण विवाहेन उपयेमे पितामहः ॥ १८५
तामवाप्य तदा ब्रह्मा जगादाध्वर्युसत्तमम् । कृता पत्नी मया ह्येषा सदने मे निवेशय ॥ १८६
मृगशृङ्गधरा बाला क्षौमवस्त्रावगुण्ठिता । पत्नीशालां तदा नीता ऋत्विग्भिर्वेदपारगैः ॥ १८७
औदुम्बरेण दण्डेन प्रावृतो मृगचर्मणा । महाध्वरे तदा ब्रह्मा धाम्नाऽपारेण[16] शोभते ॥ १८८
प्रारब्धं च ततो होत्रं ब्राह्मणैर्वेदपारगैः । भृगुणा सहितैः कर्म वेदोक्तं तैः कृतं तदा ॥ १८९
तथा युगसहस्रं तु स यज्ञः पुष्करेऽभवत् ॥ १९०

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे ब्रह्मयज्ञगायत्रीसंग्रहकथनं नाम षोडशोऽध्यायः ॥ १६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२२३८९

---

* इतः परं झ. पुस्तके 'दृष्ट्वा हरति तन्नोये दस्यवोत्पत्तिसंविना' इत्यर्धमधिकं दृश्यते ।

---

१ झ. °वेदस्यापययाताच्च । २ क. ख. ग. घ. ङ. च. ज. धिग्रूपा । ३ झ. °थस्योपमत्विषम् । ति° । ४ झ. मात्रा पित्रा न । ५ क. ख. ङ. च. °न्मृत्युः प्रभ° । ६ झ. °चयोः सा न शो° । ७ झ. °यै सदाऽम्बु° । ८ झ. °द्युतेः । मु° । ९ झ. °न्न चापो वहुधा न्यसेत् । स्पृ° । १० झ. °रं पाणिना व° । ११ झ. अथ तेन स दो° । १२ झ. ततोऽपि । १३ क. ख. घ. ङ. च. ज. शस्यते । १४ क. ख. घ. ङ. च. ज. कोपमा । १५ क. ख. ग. घ. ङ. च. ज. °भागा गा° । १६ क. घ. ङ. ज. °म्ना स्वेनैव शो° ।

अथ सप्तदशोऽध्यायः ।

भीष्म उवाच—

तस्मिन्यज्ञे किमाश्चर्यं तदाऽऽसीद्द्विजसत्तम । कथं रुद्रः स्थितस्तत्र विष्णुर्वाऽपि सुरोत्तमः ॥ १
गायत्र्या किं कृतं तत्र पत्नीत्वे स्थितया तदा । आभीरैः किं तु तत्त्वज्ञैः कृतं ज्ञात्वा पुनर्मुने ॥
एतत्सर्वं ममाऽऽचक्ष्व यथा ज्ञातं यथा कृतम् । आभीरैर्ब्रह्मणा चापि एतन्मे कौतुकं महत् ॥ ३

पुलस्त्य उवाच—

तस्मिन्यज्ञे यदाश्चर्यं वृत्तमासीन्नराधिप । कथयिष्यामि तत्सर्वं शृणुष्वैकमना नृप ॥ ४
रुद्रस्तु महदाश्चर्यं कृतवान्वै सदो गतः । ज्वालारूपधरो देवः स्थितोऽसौ द्विजसंनिधौ ॥ ५
विष्णुना न कृतं किंचित्प्राधान्येन यतः स्थितः । नाम श्रुत्वा च ते गोपा ज्ञात्वा गोपकुमारिकाः
गोप्यश्च तास्तदा सर्वा आगता ब्रह्मणोऽन्तिकम् । दृष्ट्वा तां मेखलाबद्धां यज्ञशालाव्यवस्थिताम्
हा पुत्रीति तदा माता पिता हा पुत्रिकेति च । स्वसेति बान्धवाः सर्वे सख्यः सख्येति हा सखि
केन त्वमिह चाऽऽनीता केन कस्मात्तु वेष्टिता । मुञ्जां त्रिवृतां कृत्वा तु कुत्र मुक्त्वा तु तं बालिम्
केन चेयं जटा पुत्रि रक्तसूत्रावकल्पिता । एवंविधानि वाक्यानि श्रुत्वोवाच पुरंदरः ॥
*प्रतिषिध्य तु तानेवं सर्वानेव प्रसादयन् ॥ १०

इन्द्र उवाच—

इह चास्माभिरानीता पत्न्यर्थं विनियोजिता । ब्रह्मणा नन्दिता बाला प्रलापं मा कृथास्त्विह ॥
पुण्या त्वेषा सुभाग्या च सर्वेषां कुलनन्दिनी । पुण्या यदेषा न भवेत्कथमागच्छते सदः ॥१२
एवं ज्ञात्वा महाभाग न त्वं शोचितुमर्हसि । गोपांस्त्ववष्टभ्य तदा शक्रवाक्यादनन्तरम् ॥ १३
उवाच स्निग्धया वाचा प्रतिनन्द्य हरिः पुनः ॥ १४

विष्णुरुवाच—

भो भो गोप सदाचार न त्वं शोचितुमर्हसि । कन्यैषा ते महाभागा प्राप्ता देवं विरिञ्चिनम् १५
योगिनी योगयुक्ता ये ब्राह्मणा वेदपारगाः । न लभन्ते प्रार्थमानास्तां गतिं दुहिताऽऽगता॥१६
कर्मवन्तं सदाचारं भवन्तं धर्मवत्सलम् । मया ज्ञात्वा तथा कन्या दत्ता चैषा विरिञ्चिने ॥ १७
अनया तारिता देव्या दिव्या लोका महोदयाः । युष्माकं च कुले चापि देवकार्यार्थसिद्धये १८
अवतारं करिष्येऽहं सा क्रीडा तु भविष्यति । यदा नन्दप्रभृतयो ह्यवतारं धरातले ॥ १९
करिष्यन्ति तदा चाहं वसिष्ये तेषु मध्यतः । युष्माकं कन्यकाः सर्वा रमिष्यन्ते मया सह ॥२०
तत्र दोषो न भविता न द्वेषो न च मत्सरः । करिष्यन्ति तदा गोपा भयं च न मनुष्यकाः २१
न वाऽऽसां भविता दोषः कर्मणाऽनेन कर्हिचित् । श्रुत्वा वाक्यं तदा विष्णुं प्रणिपत्याथ सादरम्

* इदमर्धं झ. पुस्तकस्थम् ।

१ क. ख. ङ. च निन्द्यरूपधरो । ग. घ. ज. जन्मरूपधरो । २ क. ख. ग. घ. ङ. च. ज. देवस्तत्रायाद्द्विज° । ३ क. ख. ग. घ. ङ. च. ज. °तः । नाशं तु गोपकन्याया ज्ञा° । ४ क. ख. ग. घ. ङ. च. ज. °मारकाः । ५ क. ख. घ. ङ. च. ज. °ता अलक्ताङ्का तु सुन्दरी । मु° । ग. °ता अवला वारसुन्दरी । मु° । ६ क. ख. ङ. च. °ता । शाटी निवृन्तां [illegible]त्वा तु केन युक्ता च कम्बली । कें° । ग. घ. ज. °ता । प्रजानिवृत्तां कृत्वा तु क्षेत्रयुक्ता च कम्बली । कें° । ७ क. ख. घ. [illegible] ज. लम्भिता । ८ क. ख. ग. ङ. च. ज. °या तारितो गच्छ दिव्याँल्लोकान्महोदयान् । यु° ।

गोपा ऊचुः—

एवमेष वरो देयो यो दत्तो भविता हि मे । अवतारः कुलेऽस्माकं कर्तव्यो धर्मसाधनः ॥ २३
भवतो दर्शनादेव भवामः स्वर्गवासिनः । शुभदा कन्यका चैषा तारणी नः कुलैः सह ॥ २४
एवं भवतु देवेश वरदानं विभोस्तव । अनुनीतास्तदा गोपाः स्वयं देवेन विष्णुना ॥ २५
ब्रह्मणाऽप्येवमेवं तु वामहस्तेन भाषितम् । त्रपान्विता दर्शने तु वधूनां वरवर्णिनी ॥ २६
केनाहं तु समाख्याता येनेमं देशमागताः । दृष्ट्वा तांश्च तदा प्राह गायत्री गोपकन्यका ॥ २७
वामहस्तेन ताः सर्वाः प्रणिपातपुरःसरम् ॥ २८

गायत्र्युवाच—

अत्र चाहं स्थिता मार्तब्रह्माणं समुपागता । भर्ता लब्धो मया देवः सर्वस्याऽऽद्यो जगत्पतिः २९
नाहं शोच्या भवत्या तु न पित्रा न च बान्धवैः । सखीगणश्च मे यातु भगिन्यः सह चारकैः ॥ ३०
सर्वेषां कुशलं वाच्यं स्थिताऽस्मि सह दैवतैः । गतेषु तेषु सर्वेषु गायत्री सा सुमध्यमा ॥ ३१
ब्रह्मणा सहिता रेजे यज्ञवाटगता सती । याचितो ब्राह्मणैर्ब्रह्मा वरान्नो देहि चेप्सितान् ॥ ३२
यथेप्सितं वरं तेषां तदा ब्रह्मा प्रदत्तवान् । तयाऽप्येवं तु गायत्र्या दत्तं तच्चानुमोदितम् ॥ ३३
सा तु यज्ञस्थिता साध्वी देवानां तु समीपगा । दिव्यं वर्षशतं साग्रं स यज्ञो ववृधे तदा ॥ ३४
यज्ञवाटं कपर्दी तु भिक्षार्थं समुपागतः । बृहत्कपालं संगृह्य पञ्चमुण्डैरलंकृतः ॥ ३५
ऋत्विग्भिश्च सदस्यैश्च आरात्तिष्ठजुगुप्सितः । कथं त्वमिह संप्राप्तो निन्दितो वेदवादिभिः॥ ३६
एवं प्रोत्सार्यमाणोऽपि निन्द्यमानः स तैर्द्विजैः । उवाच तान्द्विजान्सर्वान्स्मितं कृत्वा महेश्वरः ३७

महेश्वर उवाच—

अत्र पैतामहे यज्ञे सर्वेषां तुष्टिदायिनि । कश्चिन्नोत्सार्यते चान्य ऋते मां द्विजसत्तमाः ॥ ३८
उक्तः स तैः कपर्दी तु भुक्त्वा चान्नं ततो व्रज । कपर्दिना च ते उक्ता भुक्त्वा यास्यामि भो द्विजाः
एवमुक्त्वा निषण्णः स कपालं न्यस्य चाग्रतः । तेषां निरीक्ष्य तत्कर्म चक्रे कौटिल्यमीश्वरः॥ ४०
मुक्त्वा कपालं भूम्यां तु तान्द्विजानवलोकयन् । उवाच पुष्करं यामि स्नानार्थं द्विजसत्तमाः॥ ४१
तथेति गच्छ तैरुक्तः स गतः परमेश्वरः । व्यवस्थितः कौतुकेन मोह्य सर्वान्दिवौकसः ॥ ४२
स्नानार्थं पुष्करे याते कपर्दिनि द्विजातयः । कथं होमोऽत्र क्रियते कपाले सदसि स्थिते ॥ ४३
कपालान्तान्यशौचानि पुरा प्राह प्रजापतिः । विप्रोऽभ्यधात्सदस्यैकः कपालमुत्क्षिपाम्यहम् ४४
तदुद्धृतं सदस्येन प्रक्षिप्तं पाणिना स्वयम् । तावदन्यत्स्थितं तत्र पुनरेव समुद्धृतम् ॥ ४५
एवं द्वितीयं तृतीयं विंशतिस्त्रिंशतिस्तथा । पञ्चाशच्च शतं चैव सहस्रं शतमेव च ॥ ४६
एवं नान्तः कपालानां प्राप्यते राजसत्तम । नत्वा कपर्दिनं देवं शरणं समुपागताः ॥ ४७
पुष्करारण्यमासाद्य ज्ञात्वैव वैदिकं विभुम् । तुष्टुवुः सहिताः सर्वे तावत्तुष्टो हरः स्वयम् ॥ ४८
ततः स दर्शनं प्रादाद्द्विजानां भक्तितः शिवः । उवाच तांस्तदा देवो भक्तिनम्रान्द्विजोत्तमान् ॥

शिव उवाच—

पुरोडाशस्य निष्पत्तिः कपालं न विना भवेत् । कुरुध्वं वचनं विप्रा भागः स्विष्टकृतो मम॥ ५०
एवं कृते कृतं सर्वं मदीयं शासनं भवेत् । तथेति ते द्विजाः शंभुं कुर्मो वै तव शासनम् ॥ ५१

---

१ झ. °तर्ब्राह्मण्यं मे ह्युपागतम् । २ क. ख. ग. घ. ङ. च. ज. दारकैः । ३ क. ख. ङ. च. °माः । तूर्णं गच्छेति °
४ क. ख. ग. ङ. च. ज. वियत्स्थितः । ५ कर्मात्र । ६ ग. घ. °ष जाप्यैस्तु वैदिकानां°

कपालपाणिर्भगवान्भगवन्तं पितामहम् । वरं वरस्व भो ब्रह्मन्हृदि यत्ते प्रियं स्थितम् ॥ ५२
सर्वस्वं तव दास्यामि अदेयं नास्ति मे प्रभो ॥

ब्रह्मोवाच—

न ते वरं ग्रहीष्यामि दीक्षितोऽहं सदःस्थितः । सर्वकामप्रदश्चाहं यो मां प्रार्थयते त्विह ॥ ५३
एवं ब्रुवन्तं वरदं क्रतौ तस्मिन्पितामहम् । तथेति चोक्त्वा स रुद्रो वरं चास्य-त्वगृह्णत ॥ ५४
ततो मन्वन्तरे[२] जाते पुनरेव प्रभुः स्वयम् । ब्रह्मोत्तरं[१] क्रतुस्थानं स्वयं देवेन शंभुना[३] ॥ ५५
चतुर्ष्वपि च वेदेषु परिनिष्ठां गता हि ये । तस्मिन्काले तदा देवो नगरस्यावलोकने ॥ ५६
संभाषणे द्विजानां च कौतुकेन समागतः । तेनैवोन्मत्तवेषेण हुतशेषे महेश्वरः ॥ ५७
प्रविष्टो ब्रह्मणः सद्म[४] दृष्टो देवैर्द्विजोत्तमैः । प्रहसन्ति च केऽप्येनं केचिन्निर्भर्त्सयन्ति च ॥ ५८
अपरे पांसुभिः सिञ्चन्त्युन्मत्तस्य द्विजास्तथा । लोष्टैश्च लगुडैश्चान्ये शुष्मिणो बलदर्पिताः ॥ ५९
परस्परं चावहासैः कुर्वाणा हस्तसंविदम् । ततोऽन्ये वटवस्तत्र जटाभिर्गृह्य चान्तिकम् ॥ ६०
पृच्छन्ति व्रतचर्यां तां केनैषाऽतिनिदर्शिता । अत्रस्था याः स्त्रियः सन्ति तासामर्थे त्वमागतः ॥
केनैषा दर्शिता चर्या गुरुणा पापकारिणा । येन चोन्मत्तवद्वाक्यं वदन्मध्ये प्रधावसि ॥ ६२
शिश्नो मे ब्रह्मणो रूपं भगं चापि जनार्दनः । पुष्यमाणं त्वहं बीजं लोकः क्लिश्यति चान्यथा ॥
मयाऽयं जनितः पुत्रो जातश्चान्नेन चाप्यहम् । महादेवकृते सृष्टिः सृष्टा भार्या हिमालये ॥ ६४
उमा दत्ता तु रुद्रस्य कस्य सा तनयाऽभवत् । मूढा यूयं न जानीथ एवं वदत नो भयम् ॥ ६५
ब्रह्मणा न कृता भार्या[१२] दर्शिता नैव विष्णुना । गिरीशेनापि देवेन ब्रह्मवध्याकृतेन तु ॥ ६६
कथं विडम्बसे देवं वध्योऽस्माकं त्वमद्य वै । एवं तैर्वध्यमानस्तु ब्राह्मणैस्तत्र शंकरः ॥
स्मितं कृत्वाऽब्रवीत्सर्वा[१३]ञ्शंकरो वाक्यमुत्तमम् ॥ ६७

शिव उवाच—

किं मां न वित्थ भो विप्रा उन्मत्तं नष्टचेतसम् । यूयं कारुणिकाः सर्वे मैत्रभावैर्व्यवस्थिताः ६८
वदमानमिदं छद्म ब्रह्मरूपधरं हरम् ॥ ६९
मायया तस्य देवस्य मोहितास्ते द्विजोत्तमाः । कपर्दिनं निजघ्नुस्ते पाणिपादैश्च मुष्टिभिः ॥ ७०
दण्डैश्चापि सुकीलैस्त उन्मत्तं वेषधारिणम् । पीड्यमानस्ततस्तैस्तु द्विजैः कोपमथागमत् ॥ ७१
ततो देवेन ते शप्ता[१४] यूयं वेदविवर्जिताः । ऊर्ध्वजटाः[१५] क्रतुभ्रष्टाः परदारोपसेविनः ॥ ७२
वेश्यायां च रता द्यूते[१६] पितृमातृविवर्जिताः । न पुत्रः पैतृकं वित्तं विद्यां वा विगमिष्यति[१७] ॥ ७३
सर्वेऽपि मोहिताः सन्तु सर्वेन्द्रियविवर्जिताः । रौद्रां भिक्षामटिष्यन्ति परपिण्डोपजीविनः ॥ ७४
आशया वर्तयन्तश्च निर्ममा धर्मवर्जिताः[१८] । यैः कृताऽपि कृपा विप्रैरुन्मत्तवपुषो भवेत् ॥ ७५
तेषां धनं च पुत्राश्च दासीदासमजाविकम् । कुलोत्पन्नाश्च ते सर्वे सुखिनश्च[२]ं भविष्यथ ॥ ७६

---

१ झ. °रं कृतं स्था° । २ क. ख. घ. ङ. च. ज. दवेषु । ३ ग. °ने । कौतुकेन तदा द्रष्टुं तत्स्थानं पुनराग° । ४ झ. सदो ग° । ५ ग. घ. ऊर्ध्वशेफो । ६ झ. भृतो । ७ क. ख. ग. घ. ङ. च. ज. अत्र वामाः स्त्रि° । ८ क. ख. ग. घ. ङ. च. ज. °पदर्शिना । ये° । ९ झ. °कृता सृ° । १० क. ख. ग. ङ. च. ज. °या वद । मू° । ११ घ. °त् । यूयं जानीथ एवं वै वदतां भगवांस्तु वः । ब्र° । १२ झ. चर्या । १३ क. क. ख. ग. घ. ङ. च. ज. °र्वान्ब्राह्मणान्नृपसत्तम । किं । १४ ज. °यं वेन्दि° । १५ झ. ऊर्ध्वं मूढालसाः कूटाः प° । १६ झ. यूयं । १७ झ. °ति । शापोऽयमस्तु तोयैस्तु स° । १८ ग. घ. ज. झ. धनव° । [illegible] क. ग. घ. च. ज. °श्च वै नार्यो मयि तुष्टे भविष्य° ।

एवं शापं वरं चैव दत्त्वाऽन्तर्हित ईश्वरः । ततो द्विजा गते देवे मत्वा तं शंकरं विभुम् ॥ ७७
अन्वेषन्तोऽपि यत्नेन न चापश्यन्त ते यदा । तदा नियमसंपन्नाः पुष्करारण्यमागताः ॥ ७८
स्नात्वा ज्येष्ठसरो विप्रा जपन्तः शतरुद्रियम् । जप्यावसाने तान्रुद्रोऽशरीरिण्या गिराऽब्रवीत् ॥

शिव उवाच—

अनृतं न मया चोक्तं स्वैरेष्वपि कुतः पुनः । आगतानुग्रहं नाम भूयोऽपि करवाण्यहम् ॥ ८०
शान्ता दान्ता द्विजा ये तु भक्तिमन्तो मयि स्थिराः । न तेषां छिद्यते वेदो न धनं नापि संततिः ॥
अग्निहोत्ररता ये च भक्तिमन्तो जनार्दने । पूजयन्ति च ब्रह्माणं तेजोराशिं दिवाकरम् ॥ ८२
नाशुभं विद्यते तेषां येषां साम्ये स्थिता मतिः । एतावदुक्त्वा वचनं तूष्णींभूता तु सा गिरा ८३
लब्ध्वा वरं सप्रसादं देवदेवान्महेश्वरात् । आजग्मुः सहिताः सर्वे यत्र देवः पितामहः ॥ ८४
विरिञ्चिसहिता जाप्यैस्तोषयन्तोऽग्रतः स्थिताः । तुष्टस्तानब्रवीद्ब्रह्मा मत्तोऽपि व्रियतां वरः ॥
ब्रह्मणोऽप्यथ वाक्येन तुष्टास्ते तु द्विजोत्तमाः । को वरो याच्यतां विप्राः परितुष्टे पितामहे ८६
एके तत्राब्रुवन्विप्रा वेदान्वै वृणवामहै । नेति चान्ये धनं चान्ये व्रियतामविशङ्कितैः ॥ ८७
किमस्माकं धनेनेह कार्यं तुष्टे पितामहे । अग्निहोत्राश्च वेदाश्च शास्त्राणि विविधानि च ॥ ८८
सांतानिकाश्च ये लोका वरदानाद्भवन्तु नः । एवं प्रजल्पतां तत्र विप्राणां कोपमा(आ)विशत् ॥
के यूयमत्र प्रवरा वयं श्रेष्ठास्तथाऽपरे । नेति नेति तथा विप्रा द्विजांस्तांस्तत्र संस्थितान् ॥ ९०
ब्रह्मोवाच च तान्सर्वान्विप्रान्क्रोधसमन्वितान् । यस्माद्यूयं त्रिभिर्भागैः सभायां बाह्यतः स्थिताः
तस्मादामूलिको ह्येको गुल्मो भवतु वो द्विजाः । उदासीनाः स्थिता ये तु उदासीना भवन्तु ते॥
सायुधा बद्धनिस्त्रिंशा योद्धुकामा व्यवस्थिताः । कौशिकीति गणो नाम तृतीयो भवतु द्विजाः ॥
त्रिधा बद्धमिदं स्थानं सर्वं युष्मद्भविष्यति । बाह्यतो लोकवादेन उच्यमानाः प्रजास्त्विह ॥ ९४
अविक्रेयं नास्ति वोऽत्र सर्वस्वं वः प्रणश्यति । तृणानि भूमिरुदकं तथा वै दारुसंचयः ॥ ९५
प्रतिग्रहे चानुवृत्तिः कुपिताश्च परस्परम् । अभिप्रपन्नविप्राणां क्षमा वै नात्र काचन ॥ ९६
केवलं द्रव्यरुचयो लोभोपहतचेतसः । एवंविधा रुद्रशापाद्भवितारो न संशयः ॥ ९७
युष्माकं तु इदं स्थानं विष्णुः पालयिता ध्रुवम् । मया दत्तं चिरस्थायि अभङ्गं च भविष्यति ॥
एवमुक्त्वा तदा ब्रह्मा समाप्तिं तामवैक्षत । ब्रह्मणा सहितास्ते तु यज्ञार्थे विबुधैः सह ॥ ९९
अतिथिं भोजयानास्ते वेदशास्त्ररताश्च ये । एतच्च परमं क्षेत्रं पुष्करं नाम संज्ञितम् ॥ १००
तत्रस्था ये द्विजाः सन्तो वसन्ति क्षेत्रवासिनः । न तेषां दुर्लभं किंचिद्ब्रह्मलोके भविष्यति १०१
कोकामुखे कुरुक्षेत्रे नैमिषे ऋषिसंगमे । वाराणस्यां प्रभासे च तथा बदरिकाश्रमे ॥ १०२
गङ्गाद्वारे प्रयागे च गङ्गासागरसंगमे । रुद्रकोट्यां विरूपाक्षे मित्रस्यापि तथा वने ॥ १०३
तीर्थेष्वेतेषु सिद्धिर्या क्षेत्रेषु द्वादशाब्दिका । प्राप्यते मानवैर्लोके षण्मासाद्राजसत्तम ॥ १०४
पुष्करे न च संदेहो ब्रह्मचर्यमना यदि । तीर्थानां परमं तीर्थं क्षेत्राणामपि चोत्तमम् ॥ १०५
सदा तु पूजितं विप्रैर्भक्तिमद्भिः पितामहे । अतः परं प्रवक्ष्यामि सावित्र्या सह ब्रह्मणः ॥१०६
वादो यथाऽनुभूतस्तु परिहासकृतो महान् । सावित्रीगमने सर्वा आयाता देवयोषितः ॥ १०७

---

१ क. ख. ङ. च. ज. प्रभुम् । २ ग. घ. ज. धान्यं । ३ ञ. °नं विष्णुः पालयिता ध्रुवम् । मया । ४ घ. ज. °यः । अविज्ञेयमिदं । ५ ख. ग. घ. ङ. ज. तु क्रोधामर्षसमन्विताः । अ° । ६ ख. म. घ. ङ. ज. वेदाभ्यासर° । ७ क. ख. ग. घ. ङ. ज. °रं ब्रह्मसं° । ८ क. ख. ग. घ. ङ. ज. भ्रान्ता । ९ क. ङ. ज. सर्वेषु ।

भृगोः ख्यात्यां समुत्पन्ना विष्णुपत्नी यशस्विनी। आमन्त्रिता तदा लक्ष्मीस्तत्राऽऽयाता त्वरान्विता
मदिरा च महाभागा योगनिद्राविभूतिदा। श्रीः कमलालया भूतिः कान्तिः श्रद्धा मनस्विनी॥
तुष्टिपुष्टिप्रदा या तु देव्य एताः समागताः। सती या दक्षतनया उमेति पार्वती मता॥ ११०
त्रैलोक्यसुन्दरी देवी स्त्रीणां सौभाग्यदायिका। जया च विजया चैव मधुच्छन्दाऽमरावती॥
सुप्रिया जनकान्ता च सावित्र्या मन्दिरे शुभे। गौर्या सह समायाताः सुवेषाभरणान्विताः॥
पुलोमदुहिता चैव शक्राणी च महाप्सराः। स्वधा स्वाहा तथाऽऽयाता धूम्रवर्णा वरानना ११३
देवी तु राक्षसी चैव गौरी चैव महाधना। मनोजवा वायुपत्नी ऋद्धिश्च धनदप्रिया॥ ११४
देवकन्यास्तथाऽऽयाता दानव्यो दनुवल्लभाः। सप्तर्षीणां महापत्न्य ऋषीणां च तथैव च॥ ११५
एवं भगिन्यो दुहिता विद्याधरीगणास्तथा। पितॄणां रक्षसां कन्यास्तथाऽन्या लोकमातरः ११६
वधूभिश्च स्नुषाभिश्च सावित्री गन्तुमिच्छति। अदित्याद्यास्तथा सर्वा दक्षकन्याः समागताः ११७
ताभिः परिवृता साध्वी ब्रह्माणी कमलालया। काचिन्मोदकमादाय काचिच्छूर्पं वरानना ११८
फलपूरितमादाय प्रयाता ब्रह्मणोऽन्तिकम्। आढक्यः शणनिष्पावराजमाषांस्तथाऽपरा॥ ११९
दाडिमानि विचित्राणि मातुलिङ्गानि शोभनाः। करीराणि तथा चान्या गृहीत्वा कैरमर्दकान्॥
कौसुम्भकं जीरकं च खर्जूरं वा परा तथा। उत्तमान्यपरा गृह्य नालिकेराणि सर्वशः॥ १२१
द्राक्षया पूरितं पात्रं शृङ्गाटकं तथाऽपरा। कैर्पूराणि विचित्राणि जम्बूकानि शुभानि च॥ १२२
आक्षोटामलकान्गृह्य जम्बीराणि तथा परा। बिल्वानि परिपक्कानि चिपिटानि वरानना॥ १२३
अतुल्यान्नविकाराणि बहूनि विविधानि च। कार्पासतूलिकाश्चान्या वस्त्रं कौसुम्भकं तथा॥ १२४
एवमादीनि चान्यानि गृह्य शूर्पे वराननाः। सावित्र्या सहिताः सर्वाः संप्राप्तास्ताः सदः शुभाः॥
सावित्रीमागतां दृष्ट्वा भीतस्तत्र पुरंदरः। अधोमुखः स्थितो ब्रह्मा किमेषा मां वदिष्यति॥ १२६
त्रपान्वितौ विष्णुरुद्रौ सर्वे चान्ये द्विजातयः। सभासदस्तथा भीतास्तथा चान्ये दिवौकसः॥ १२७
पुत्राः पौत्राः प्रपौत्राश्च मातुला भ्रातरस्तथा। ऋभवो नाम ये देवा देवानामपि देवताः॥ १२८
वैलक्ष्ये तु स्थिताः सर्वे सावित्री किं वदिष्यति। ब्रह्मपार्श्वे स्थिता तत्र किं तु वै गोपकन्यका॥
मौनीभूता तु शृण्वाना सर्वेषां वदतां गिरः। अध्वर्युणा समाहूता नाऽऽगता वरवर्णिनी॥ १३०
शक्रेणान्या तथाऽऽभीराऽऽहूता सा विष्णुना स्वयम्। अनुमोदिता च रुद्रेण पित्रा दत्ता स्वयं तथा॥
कथं सा भविता यज्ञे(ज्ञः) समाप्तिं वा व्रजेत्कथम्। एवं चिन्तयतां तेषां प्रविष्टा कमलालया॥
वृतो ब्रह्मा सदस्यैस्तु ऋत्विग्भिर्दैवतैरथ। हूयन्ते चाग्नयस्तत्र ब्राह्मणैर्वेदपारगैः॥ १३३
पत्नीशालास्थिता गोपी एणशृङ्गा समेखला। क्षौमवस्त्रपरीधाना ध्यायन्ती परमं पदम्॥ १३४
पतिव्रता पतिप्राणा प्राधान्ये विनिवेशिता। रूपान्विता विशालाक्षी तेजसा भास्करोपमा॥ १३५
द्योतयन्ती सदस्तत्र सूर्यस्येव यथा प्रभा। ज्वलमानं तथा वह्निं श्रयन्ते ऋत्विजस्तथा॥ १३६
पशूनामिव गृह्णाना भागं स्वस्वचरोर्मुदा। यज्ञभागार्थिनो देवा विलम्बाद्ब्रुवते तदा॥ १३७
कालहीनं न कर्तव्यं कृतं न फलदं यतः। वेदेष्वेवमधीकारो दृष्टः सर्वैर्मनीषिभिः॥ १३८

---

१ ञ. धूमोर्णा च व°। २ क. ख. ग. घ. ङ. च. ज. यक्षी। ३ क. ग. घ. ङ. च. ज. °ढक्यश्च सनिष्पावा रा°। ४ क. ख. ग. घ. ङ. च. ज. कमलानि च। कौ°। ५ झ. कर्बूरा°। ६ क. ख. ग. घ. ङ. च. ज. पौत्रा भागिनेया मा°। ७ च. °मिह गृ°। ८ झ. भागमग्रं वरानना। य°। ९ झ. °तं यत्फलवर्जितम्। न दृष्टोऽयम°।

प्रवर्ग्ये क्रियमाणे तु ब्राह्मणैर्वेदपारगैः । क्षीरद्वयेन संयुक्तभूतेनाध्वर्युगा तथा(?) ॥ १३९
उपहूतेनाऽऽगतेन चाऽऽहूतेषु द्विजन्मसु । क्रियमाणे तथा भक्षे दृष्ट्वा देवी रुषान्विता ॥
उवाच देवी ब्रह्माणं सदोमध्ये तु मौनिनम् ॥ १४०

सावित्र्युवाच—

किमेवं बुध्यते देव कर्तुमेतद्विचेष्टितम् । मां परित्यज्य यत्कामात्कृतवानसि किल्बिषम् ॥ १४१
न तुल्या पादरजसा ममेयं गोपकन्यका । यद्वदन्ति जनाः सर्वे संगताः सदसि स्थिताः ॥ १४२
आज्ञामैश्वर्यभूतानां तत्कुरुष्व यदीच्छसि । भवता रूपलोभेन कृतं लोकविगर्हितम् ॥ १४३
न पुत्रेषु कृता लज्जा पौत्रेषु च न ते प्रभो । कामकारकृतं मन्य एतत्कर्म विगर्हितम् ॥ १४४
पितामहोऽसि देवानामृषीणां प्रपितामहः । कथं न ते त्रपा जाता आत्मनः पश्यतस्तनुम् ॥ १४५
लोकमध्ये कृतं हास्यमहं चापि विमानिता । यद्येष ते स्थिरो भावस्तिष्ठ देव नमोऽस्तु ते ॥ १४६
अहं कथं सखीनां तु दर्शयिष्यामि वै मुखम् । भर्त्रा मे विधृता पत्नी कथमेतदहं वदे ॥ १४७

ब्रह्मोवाच—

ऋत्विग्भिः संस्तुतश्चाहं दीक्षाकालादनन्तरम् । पत्नीं विना न होमोऽत्र शीघ्रं पत्नीमिहाऽऽनय
शक्रेणैषा त्विहाऽऽनीता दत्ता चेयं तु विष्णुना । संगृहीता मया सुभ्रूः क्षमस्वेदं मया कृतम् ॥
न चापराधं भूयोऽन्यं करिष्ये तव सुव्रते । पादयोः पतितस्तेऽहं क्षम देवि नमोऽस्तु ते ॥ १५०

पुलस्त्य उवाच—

एवमुक्ता तदा क्रुद्धा ब्रह्माणं शप्तुमुद्यता । यदि मेऽस्ति तपस्तप्तं गुरवस्तोषिता यदि ॥ १५१
सर्वे ब्रह्मसमूहेषु स्थानेषु विविधेषु च । न तु ते ब्राह्मणाः पूजां करिष्यन्ति कदाचन ॥ १५२
ऋते तु कार्तिकीमेकां पूजां सांवत्सरीं तव । करिष्यन्ति द्विजाः सर्वे[3] मर्त्या नान्यत्र भूतले १५३
एतद्ब्रह्माणमुक्त्वाऽऽह शतक्रतुमुपस्थितम् ॥ १५४

सावित्र्युवाच—

भो भोः शक्र त्वयाऽऽनीता आभीरी ब्रह्मणोऽन्तिकम् । तस्मात्ते क्षुद्रकं कर्म तस्मात्त्वं लप्स्यसे फलम्
यदा त्वं सङ्ग्राममुखे स्थाता शक्र भविष्यसि । तदा त्वं शत्रुभिर्बद्धो नीतः परमिकां दशाम् १५६
अकिंचनो नष्टसत्त्वः शत्रूणां नगरे स्थितः । पराभवं महत्प्राप्य(?)अचिरादेव मोक्ष्यसे ॥ १५७
शक्रं शप्त्वा तदा देवी विष्णुं वाक्यमथाब्रवीत् । भृगुवाक्येन ते जन्म यदा मर्त्ये भविष्यति ॥
भार्यावियोगजं दुःखं तदा त्वं तत्र भोक्ष्यसे । हृता सा शत्रुणा पत्नी परे पारे महोदधेः ॥ १५९
न च त्वं ज्ञास्यसे नीतां शोकोपहतचेतनः । भ्रात्रा सह परं(रां) कष्ट(ष्टा)मापदं प्राप्य दुःखितः
*यदा यदुकुले जातः कृष्णसंज्ञो भविष्यसि । पशूनां पालनं प्राप्य चिरं कालं भ्रमिष्यसि १६१
तथाऽऽह रुद्रं कुपिता यदा दारुवने स्थितः । तदा ते ऋषयः क्रुद्धाः शापं दास्यन्ति वै हर ॥
भो भोः कापालिक क्षुद्र स्त्रियोऽस्माकं जिहीर्षसि । तदेतद्दर्पितं देव भूमौ लिङ्गं पतिष्यति १६३
विहीनः पौरुषेण त्वं मुनिशापाच्च पीडितः । गङ्गातीरे स्थिता पत्नी सा त्वामाश्वासयिष्यति ॥

---

* इदमर्धं झ. पुस्तकस्थम् ।

---

१ झ. °युक्ते हुते° । ञ. °युक्तश्रुते° । २ क. ख. ग. घ. ङ. च. ज. ममैषा या शिरः कृता । य° । ३ ग. घ. ज. °वं सत्येनानेन मे यतौ । ए° । ४ क. ख. ग. घ. ङ. च. ज. नष्टसुतः । ५ झ. °तु । रघुवंशे यदा जन्म । ६ क. ख. ग. घ. ङ. च. ज. दासतां ।

अग्ने त्वं सर्वभक्षोऽसि पूर्वं पुत्रेण मे कृतः। भृगुणा धर्मनित्येन कथं दग्धं दहाम्यहम् ॥ १६५
जातवेदोऽसि रुद्रस्त्वां रेतसा प्लावयिष्यति। अमेध्येषु च ते जिह्वा अधिकं प्रज्वलिष्यति १६६
ब्राह्मणानृत्विजः सर्वान्सावित्री वै शशाप ह। प्रतिग्रहार्थेऽग्निहोत्रो वृथाटव्याश्रयाः सदा १६७
सदा क्षेत्राणि तीर्थानि लोभादेव भजिष्यथ। परान्नेषु सदा तृप्ता अतृप्ताः स्वगृहेषु च ॥ १६८
अयाज्ययाजनं कृत्वा कुत्सितस्य प्रतिग्रहम्। वृथा धनार्जनं कृत्वा व्ययं चैव तथा वृथा॥ १६९
मृतानामन्ते प्रेतत्वं भविष्यति न संशयः। एवं शक्रं तथा विष्णुं रुद्रं वै पावकं तथा ॥ १७०
ब्रह्माणं ब्राह्मणांश्चैव सर्वांस्तानशपद्रुषा। शापं दत्त्वा तथा तेषां निष्क्रान्ता सदसस्तथा॥ १७१
ज्येष्ठं पुष्करमासाद्य तदा सा च बहिः स्थिता। लक्ष्मीं प्राह सतीं तां च इन्द्राणीं च वराननाम्
युवतीस्तास्तथोवाच नाहं स्थास्यामि संसदि। तत्र चाहं गमिष्यामि यत्र श्रोष्ये न वै ध्वनिम्॥

पुलस्त्य उवाच—

ततस्ताः प्रमदाः सर्वाः प्रयाताः स्वं निकेतनम्। सावित्री च तदा तासां पुनः शापाय चोद्यता
यस्मान्मां तु परित्यज्य गतास्ता देवयोषितः। तासामपि तथा शापं प्रदास्ये कुत्सितं भृशम् ॥

सावित्र्युवाच—

नैकत्र वासो लक्ष्म्यास्तु भविष्यति कदाचन। क्षुद्रा सा चलचित्ता च मूर्खेषु च वसिष्यति ॥
म्लेच्छेषु पार्वतीयेषु कुत्सिते कुत्सिते तथा। मूर्खेषु चावलिप्तेषु अभिशप्ते दुरात्मनि ॥ १७७
एवंविधे नरे तुभ्यं वसतिः शापकारिता। शापं दत्त्वा ततस्तस्यै इन्द्राणीमशपत्तदा ॥ १७८
ब्रह्महत्यागते चेन्द्रे पत्यौ ते दुःखकारिणि। नहुषापहृते राज्ये दृष्ट्वा त्वां याचयिष्यति ॥ १७९
अहमिन्द्रः कथं चैषा नोपस्थास्यति बालिशा। सर्वान्देवान्हनिष्यामि न लप्स्येऽहं शचीं यदि॥
नष्टा त्वं च सदा त्रस्ता वाक्पतेर्दुःखिता गृहे। वसिष्यसे दुराचारे शापेन मम गर्विते ॥ १८१
देवभार्यासु सर्वासु तदा शापमयच्छत। न चापत्यकृतां प्रीतिं सर्वा ह्येव लभिष्यथ ॥ १८२
दह्यमाना दिवा रात्रौ वन्ध्याशब्देन दूषिताः। गौर्यप्येवं तदा शप्ता सावित्र्या वरवर्णिनी ॥
रुदमाना च सा दृष्टा विष्णुना च प्रसादिता॥ १८३

विष्णुरुवाच—

मा रोदीस्त्वं विशालाक्षि एह्यागच्छ सदः शुभे। प्रविश्य च सभां धेहि मेखलां क्षौमवाससी॥
गृहाण दीक्षां ब्रह्माणि पादौ च प्रणमामि ते ॥ १८५

पुलस्त्य उवाच—

एवमुक्ताऽब्रवीद्देवं नाहं कुर्वे वचस्तव। तत्राहं च गमिष्यामि यत्र श्रोष्ये न च ध्वनिम् ॥ १८६
एतावदुक्त्वा साऽऽरुह्य उच्चैः स्थाने गिरौ स्थिता। विष्णुस्तस्याः स्थिते स्थित्वा बद्ध्वा च करसंपुटम्
तुष्टाव प्रणतो भूत्वा भक्त्या परमया स्थितः ॥ १८७

विष्णुरुवाच—

सर्वगा सर्वभूतेषु द्रष्टव्या सर्वतो भुवि। सर्वलोकेषु यत्किंचिद्दृश्यं तन्न विना त्वया ॥ १८८

---

१ क. ख. ङ. च. ज. °था व्रज्या शुचा तथा। स°। २ क. ख. ग. घ. ङ. च. ज. °था। प्रेतानां तेन प्रे°। ३ झ. °न्तास्ताः स्त्रियस्त°। ४ क. ख. ग. घ. ङ. च. ज. °त्री कुपिता ता°। ५ क. ख. ग. घ. ङ. च. ज. कुपिता। ख. ग. घ. ङ. च. ज. वो। ७ क. ख. ग. घ. ङ. च. ज. °स्तस्याग्रतः स्थि°। ८ ज. सदसश्चैव य°।

तथाऽपि येषु स्थानेषु द्रष्टव्याऽसि त्वमीप्सुभिः । स्मर्तव्या भूतिकामैर्वा तानि वक्ष्यामि[1] तत्त्वतः
सावित्री पुष्करे नाम तीर्थानां प्रवरे शुभे । वाराणस्यां विशालाक्षी नैमिषे लिङ्गधारिणी १९०
प्रयागे ललिता देवी कामुका गन्धमादने । मानसे कुमुदा नाम विश्वकाया तथाऽम्बरे ॥ १९१
गोमन्ते[2] गोमती नाम मन्दरे कामचारिणी । मदोत्कटा चैत्ररथे जयन्ती हस्तिनापुरे ॥ १९२
कान्यकुब्जे तथा गौरी रम्भा मलयपर्वते । एकाम्रके[3] कीर्तिमती विश्वा विश्वेश्वरी तथा ॥ १९३
कर्णिके[4] पुरुहूतेति केदारे मार्गदायिनी । नन्दा हिमवतः पृष्ठे गोकर्णे भद्रकालिका ॥ १९४
स्थानेश्वरे भवानी तु विल्वके विल्वपत्रिका[5] । श्रीशैले माधवी देवी भद्रा भद्रेश्वरे तथा ॥ १९५
जया वराहशैले तु कमला कमलालये । रुद्रकोट्यां तु रुद्राणी[6] काली कालंजरे तथा ॥ १९६
महालिङ्गे तु कपिला कर्कोटे मुकुटेश्वरी । शालिग्रामे महादेवी शिवलिङ्गे जनप्रिया[8] ॥ १९७
नीलोत्पला मायापुर्यां संततिर्ललिते[9] तथा । उत्पलाक्षी सहस्राक्षे हिरण्याक्षे महोत्पला ॥ १९८
गयायां[11] मङ्गला नाम विमला पुरुषोत्तमे । विपाशायाममोघाक्षी पाटला पुण्ड्रवर्धने[12] ॥ १९९
नारायणी सुपार्श्वे तु त्रिकूटे रुद्रसुन्दरी[13] । विपुले विपुला नाम कल्याणी मलयाचले ॥ २००
कोटवी कोटितीर्थे तु सुगन्धा माधवने[14] । कुब्जाम्रके त्रिसंध्या तु गङ्गाद्वारे हरिप्रिया ॥ २०१
शिवचक्रे[15] शुभा चण्डा नन्दिनी देविकातटे । रुक्मिणी द्वारवत्यां तु राधा वृन्दावने तथा २०२
देवकी मथुरायां तु पाताले परमेश्वरी । चित्रकूटे तथा सीता विन्ध्ये विन्ध्यनिवासिनी ॥ २०३
सह्येऽद्रौ चैकवीरा तु हरिश्चन्द्रे तु चन्द्रिका[16] । रमणा रामतीर्थे तु यमुनायां मृगावती ॥ २०४
करवीरे महालक्ष्मीरुमादेवी विनायके । अरोगा वैद्यनाथे तु महाकाले महेश्वरी ॥ २०५
अभया[17] ष्णतीर्थे च अमृता विन्ध्यकन्दरे । माण्डव्ये माण्डवी देवी स्वाहा माहेश्वरे पुरे २०६
[18]वेगले तु प्रचण्डा तु चण्डिकाऽमरकण्टके । सोमेश्वरे वरारोहा प्रभासे पुष्करावती ॥ २०७
देवमाता सरस्वत्यां पारा पारतटे शुभा । महालये महापद्मा पयोष्ण्यां पिङ्गलेश्वरी ॥ २०८
सिंहिका[19] कृतशौचे च कार्तिकेये तु शांकरी । उत्पलावर्तके लोला सुभद्रा सिन्धुसंगमे[20] ॥ २०९
माता सिन्धुवने लक्ष्मीरनन्ता[21] भरताश्रमे । जालंधरे विश्वमुखी तारा किष्किन्धपर्वते ॥ २१०
देवदारुवने पुष्टिर्मेधा काश्मीरमण्डले । भीमादेवी हिमाद्रौ तु तुष्टिर्वस्त्रेश्वरे तथा ॥ २११
कपालमोचने शुद्धा[22] माता कायावरोहणे[23] । शङ्खोद्धारे ध्वनिर्नाम धृतिः पिण्डारके वने ॥ २१२
[24]कला तु चन्द्रभागायामच्छोदे सिद्धदायिनी । वेणायाममृतादेवी बदर्यामुर्वशी तथा ॥ २१३
औषधी चोत्तरकुरौ[25] कुशद्वीपे कुशोदका । मन्मथा [26]हेमकूटे तु कुमुदे सत्यवादिनी ॥ २१४

---

१ ग. ज. °मि तेऽग्रतः । २ ग. घ. ज. गोकर्णे । ३ ख. ङ. एकामके। घ. एकामुखे। ग. कोकामुखे। ज. गोकामुखे । ४ क. ख. ङ. च. तप्तकर्णिका। ग. घ. ज. तत्रकर्णिका । ५ ग. घ. ज. नामपत्रिका । ६ ग. घ. ज. चन्द्राणी । ७ क. ख. ग. घ. ङ. च. ज. मङ्गलेश्वरी । ८ क. ख. ग. घ. ङ. च. ज. जलप्रिया । ९ क. ख. ङ. च. °या । मायापुर्यां कुमारी तु सं° । १० ख. ङ. च. संताने ललिता त° । ग. घ. ज. संतती ललि° । ११ ग. घ. ज. गङ्गायां । १२ क. पुण्यवर्धने । ज. गुणवर्धने । १३ क. ख. ग. घ. ङ. च. ज. भद्रसुन्दरी । १४ क. ख. ङ. च. ज. माधवीवने । १५ ज. °वकुण्डे शिवानन्दा. न° । १६ क. ख. ग. घ ङ. च. ज. झ. °का । रमानामा रामतीर्थे य° । १७ ख. ङ. पुण्यतीर्थे । च. पुष्पतीर्थे । १८ क. वैकुण्ठे । ख. ग. घ. ज. व्यङ्कटे । ग. माङ्गले । १९ ख. ङ. कृतशैले । झ. कृतसौरे । २० क. ख. च. °मे । उमा सिद्धव° । २१ क. ख. ग. घ. ङ. च. ज. °नङ्गा भ° । २२ क. ग. घ. ङ. च. ज. श्रद्धा । २३ ख. ग. कामावरोहणे । २४ झ. कला ग. घ. ज. काली । २५ झ. °कुले कु° । २६ झ. हेमकण्ठे ।

अश्वत्थे वेन्दनीया तु निधिर्वैश्रवणालये । गायत्री वेदवदने सावित्री ब्रह्मसंनिधौ ॥ २१५
देवलोके तथेन्द्राणी ब्रह्मास्ये तु सरस्वती । सूर्ये विश्वप्रभा नाम मातॄणां वैष्णवी मता ॥ २१६
अरुन्धती सतीनां तु रामासु च तिलोत्तमा । चित्ते ब्रह्मकला नाम शक्तिः सर्वशरीरिणाम् २१७
एतद्भक्त्या मया प्रोक्तं नामाष्टशतमुत्तमम् । अष्टोत्तरं च तीर्थानां शतमेतदुदाहृतम् ॥ २१८
यो जपेच्छृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते । एषु तीर्थेषु यः कृत्वा स्नात्वा पश्येन्नरो हि यः २१९
सर्वपापविनिर्मुक्तः कल्पं ब्रह्मपुरे वसेत् । नामाष्टशतकं यस्तु श्रावयेद्ब्रह्मसंनिधौ ॥ २२०
पौर्णमास्याममायां वा बहुपुत्रो भवेन्नरः । गोदाने श्राद्धदाने वा अहन्यहनि वा पुनः ॥ २२१
देवार्चनविधौ शृण्वन्परब्रह्माधिगच्छति । एवं स्तुवन्तं सावित्री विष्णुं प्रोवाच सुव्रता ॥ २२२

सावित्र्युवाच—

सम्यक्स्तुता त्वया पुत्र अजेयस्त्वं भविष्यसि । अवतारे सदा वत्स पितृमातृषु (?) वल्लभः ॥
इह चाऽऽगत्य यो मां तु स्तवेनानेन संस्तुयात् । सर्वदोषविनिर्मुक्तः परं स्थानं गमिष्यति २२४
गच्छ यज्ञं विरिञ्चस्य समाप्तिं नय पुत्रक । कुरुक्षेत्रे प्रयागे तु भविष्ये चान्नदायिनी ॥
समीपगा स्थिता भर्तुः करिष्ये तव भाषितम् ॥ २२५

पुलस्त्य उवाच—

एवमुक्तो गतो विष्णुर्ब्रह्मणः सद उत्तमम् । गतायामथ सावित्र्यां गायत्री वाक्यमब्रवीत् ॥ २२६

गायत्र्युवाच—

शृण्वन्तु ऋषयो वाक्यं मदीयं भर्तृसंनिधौ । यदहं वच्मि संतुष्टा वरदानाय चोद्यता ॥ २२७
पूजयिष्यति ब्रह्माणं नरो भक्तिसमन्वितः । तस्य वस्त्रं धनं धान्यं दाराः पुत्राः सुखानि च २२८
अविच्छिन्नं तथा सौख्यं गृहे वै पुत्रपौत्रकम् । भुक्त्वा स सुचिरं कालमन्ते मोक्षं गमिष्यति ॥

पुलस्त्य उवाच—

ब्रह्माणं वा प्रतिष्ठाप्य सर्वयत्नैर्विधानतः । यत्पुण्यफलमाप्नोति तदेकाग्रमनाः शृणु ॥ २३०
सर्वयज्ञतपोदानतीर्थवेदेषु यत्फलम् । तत्फलं कोटिगुणितं लभते तत्प्रतिष्ठया ॥ २३१
पौर्णमास्युपवासं तु कृत्वा भक्त्या नराधिप ॥ २३२
अनेन विधिना यस्तु विरिञ्चिं पूजयेन्नृप । प्रतिपद्यां(दि) महाबाहो स याति ब्रह्मणः पदम् ॥
विरिञ्चेर्यः सदैवतमृत्विग्भिश्च विशेषतः(?) । कार्तिके मासि देवस्य रथयात्रा प्रकीर्तिता ॥ २३४
यां कृत्वा मानवा भक्त्या ते यान्ति ब्रह्मलोकताम् । कार्तिके मासि राजेन्द्र पौर्णमास्यां चतुर्मुखम्
मार्गेण ब्रह्मणा सार्धं सावित्र्या च परंतप । भ्रामयेन्नगरं सर्वं नानावाद्यैः समन्वितः ॥ २३६
स्नापयेद्भ्रामयित्वा तु सलोकं नगरं नृप । ब्राह्मणान्भोजयित्वाऽग्रे शाण्डिलेयं प्रपूज्य च ॥ २३७
आरोपयेद्रथे देवं पुण्यवादित्रनिःस्वनैः । रथाग्रे शाण्डिलीपुत्रं पूजयित्वा विधानतः ॥ २३८
ब्राह्मणान्वाचयित्वा च कृत्वा पुण्याहमङ्गलम् । देवमारोपयित्वा तु रथे कुर्यात्प्रजागरम् ॥ २३९
नानाविधैः प्रेक्षणकैर्ब्रह्मघोषैः सुपुष्कलैः । कृत्वा प्रजागरं त्वेकं प्रभाते ब्राह्मणान्नृप ॥ २४०
भोजयित्वा यथाशक्ति भक्ष्यभोज्यैरनेकशः । पूजयित्वा जनं धीर मन्त्रेण विधिवन्नृप ॥ २४१

---

१ ग. घ ज. अश्वेन्द्रे । २ क. ङ. च. वेदिनीया । ग. घ चन्दनीका । ख. वेदनीया । झ. वन्दनीका । ३ ञ. °ने पार्वती शिवसं° । ४ क. ख. ङ. च सूर्यबिम्बे प्र° । ५ क. ख. ङ. च. चित्रे । ६ क. ख. ग. घ. ङ. °तदुद्देशतः प्रो° । ७ झ. °धौ ... ° । ८ ग. ज सदारस्त्वं पि° । ९ झ. सुव्रतः । १० क. ख. ङ. च. ज. परमं । ११ झ. वीरं ।

आज्येन तु महाबाहो पयसा पायसेन च । ब्राह्मणान्वाचयित्वा तु स्वस्त्यादि विधिवन्नृप २४२
कृत्वा पुण्याहशब्दं च तद्रथं भ्रामयेत्पुरे । चतुर्वेदविदैर्विप्रैर्भ्रामयेद्ब्रह्मणो रथम् ॥ २४३
[*बह्वृचाऽऽथर्वणैर्वीर च्छन्दोगाध्वर्युभिस्तथा । भ्रामयेद्देवदेवस्य सुरश्रेष्ठस्य तं रथम् ] २४४
प्रदक्षिणं पुरं सर्वं मार्गेण सुसमेन च । न वोढव्यो रथो वीर शूद्रेण हितमिच्छता ॥ २४५
न चाऽऽरोहेद्रथं प्राज्ञो मुक्त्वैकं भोजनं(कं) नृप । ब्रह्मणो दक्षिणे पार्श्वे गायत्रीं स्थापयेद्रथे ॥
भोजकं वामपार्श्वे तु पुरतः पङ्कजं न्यसेत् । एवं तूर्यनिनादैस्तु शङ्खशब्दैस्तु पुष्कलैः ॥ २४७
भ्रामयित्वा रथं वीर पुरं सर्वमदक्षिणम् । स्वस्थाने स्थापयेद्देवं दत्त्वा नीराजनं बुधः ॥ २४८
य एवं कुरुते यात्रां भक्त्या यश्चापि पश्यति । रथं वा कर्षते यस्तु स गच्छेद्ब्रह्मणः पदम् २४९
+कार्तिके मास्यमावास्यां(?) यश्च दीपप्रदीपनम् । शालायां ब्रह्मणः कुर्यात्स गच्छेत्परमं पदम्[३]
सुगन्धपुष्पान्नवस्त्रैरात्मानं पूजयेत्तु यः । तस्यां प्रतिपदायां तु स गच्छेद्ब्रह्मणः पदम् ॥ २५१
महापुण्या तिथिरियं बलिराज्यप्रवर्तिनी । ब्रह्मणस्तुष्टये नित्यं गाङ्गेय परिकीर्तिता ॥ २५२
ब्रह्माणं पूजयेद्योऽस्यामात्मानमपि संयतः । स याति परमं स्थानं विष्णोरमिततेजसः ॥ २५३
चैत्रमासे महाबाहो रम्या प्रतिपदध्वरा । तस्यां यः श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तमः ॥ २५४
न तस्य दुरितं किंचिन्नाऽऽधयो व्याधयो नृप । भवन्ति कुरुशार्दूल तस्मात्स्नानं समाचरेत् ॥
दिव्यं नीराजनं तद्धि सर्वरोगविनाशनम् । गोमहिष्यादि यत्किंचित्तत्सर्वं भूषयेन्नृप ॥ २५६
तेन वस्त्रादिभिः सर्वैस्तोरणं बाह्यतो न्यसेत् । ब्राह्मणानां तथा भोज्यं कुर्यात्कुरुकुलोद्वह॥२५७
तिस्रो ह्येताः पुरा प्रोक्तास्तिथयः कुरुनन्दन । कार्तिकेऽश्वयुजे मासि चैत्रे वाऽपि तथा नृप ॥
[*स्नानं दानं शतगुणं कार्तिके या तिथिर्नृप । बलिराज्ञस्तु शुभदा पशूनां शुभदायिनी]॥२५९

गायत्र्युवाच—

यदुक्तं तु तया वाक्यं सावित्र्या कमलोद्भव । न तु तं ब्राह्मणाः पूज्यं करिष्यन्ति कदाचन २६०
मदीयं तु वचः श्रुत्वा ये करिष्यन्ति चार्चनम् । इह भुक्त्वा तु भोगांस्ते परत्र मोक्षभागिनः ॥
एवं ज्ञात्वा वरं पुंसां वरं तुष्टा प्रयच्छति(?) । शक्राहं ते वरं दद्मि सङ्ग्रामे शत्रुनिग्रहे ॥ २६२
तदा ब्रह्मा मोचयिता गत्वा शत्रुनिवेशनम् । स्वपुरं लप्स्यसे नष्टं शत्रुनाशात्परां मुदम् ॥ २६३
अकण्टकं महद्राज्यं त्रैलोक्यं ते भविष्यति । मर्त्यलोके यदा विष्णो अवतारं करिष्यसि ॥ २६४
[+भ्रात्रा सह परं दुःखं स्वभार्याहरणं च तत् । हत्वा शत्रुं पुनर्भार्यां लप्स्यसे सुरसंनिधौ २६५
गृहीत्वा तां पुना राज्यं कृत्वा स्वर्गं गमिष्यसि । एकादश सहस्राणि वर्षाणां च पुनर्दिवम् ]॥
†ख्यातिस्ते विपुला लोके अनुरागं[१२] जनैः सह[१३] । संतानकानामेतेषां लोकाः सन्ति शुभान्विताः॥

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + अयं श्लोकः क्वचित्पुस्तके नास्ति । * धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।+ धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । † ख्यातिं ते विपुला लोके अनुयान्ति जनैरिति क्वचित्पाठः ।

---

१ झ. मुक्त्वा कंजोद्भवं नृ° । २ क. ख. ग. घ. ङ. च. ज. °येन्नृप । भो° । ३ क. ख. ग. घ. ङ. च. ज. °म् । गन्धपुष्पैर्नैवेद्यैर्वस्त्रै° । ४ क. ख. ग. घ. ङ. च. ज. °ह्मणः सुप्रिया नि° । ५ क. ख. ग. घ. ङ. च. ज. वालेयी । ६ क. ख. ग. घ. ङ. च. ज. °त्मानं च विशेषतः । ७ ञ. पुण्या । ८ झ. तस्यां स्नानं । ९ झ. °णं चाग्रतो नयेत् । १० क. ग. घ. ङ. च. ज. तद्ब्रह्मणः पूजां क° । ११ क. ख. ङ. च. ज. स्वपुत्रं । ग. घ. सुपुत्रं । १२ क. ख. ग. घ. ङ. च. ज. °गं जनेश्वर । सं° । १३ ञ. °ह । सांतानिका नाम ते° । १४ क. ख. ग. ङ. च. ज. °काः स्थास्यन्ति भाविताः ।

त्वया ते तारिता देव रामरूपेण मानवाः । गायत्री तु तदा रुद्रं वरदा प्रत्यभाषत ॥ २६८

पतिते तु च ते लिङ्गे पूजां कुर्वन्ति मानवाः । ते पूताः पुण्यकर्माणः स्वर्गमोक्षस्य भाजनाः २६९

न तां गतिं चाग्निहोत्रेण कृतेनापि पावके । यां गतिं मनुजा यान्ति तव लिङ्गप्रपूजनात् ॥ २७०

गङ्गातीरे सदा लिङ्गं बिल्वपत्रेर्णं ते भव । पूजयिष्यन्ति ये मर्त्या अपवर्गस्य भाजनाः ॥ २७१

प्राप्य वै शर्वभक्तित्वं भवेयुः पुण्यभागिनः । त्वयि प्रीते सुराः सर्वे प्रीता वै नात्र संशयः १७२

त्वन्मुखेन हविर्देवैः पीतं पीते त्वयि ध्रुवम् । [*भुज्यते नात्र संदेहो वेदोक्तं वचनं यथा॥२७३

गायत्री ब्राह्मणांस्तांश्च सर्वानेवाब्रवीदिदम् ] । युष्माकं प्रीणनं कृत्वा सर्वतीर्थेषु मानवाः२७४

पूताः स्वर्गं गमिष्यन्ति वैराजाख्यं न संशयः । अन्नप्रकारान्विविधान्दत्त्वा दानान्यनेकशः॥ २७५

[+श्राद्धेषु प्रीणनं कृत्वा देवदेवा भवन्ति ते । ये चैव ब्राह्मणाः श्रेष्ठास्तेषामास्ये दिवौकसः]२७६

भुञ्जते च हविः क्षिप्तं कव्यं चैव पितामहाः । यूयं वै तारणैर्युक्तास्त्रैलोक्येऽपि न संशयः ॥ २७७

प्राणायामेन चैकेन सर्वे पूता भविष्यथ । विशेषात्पुष्करे स्नात्वा मां जप्त्वा वेदमातरम् ॥ २७८

प्रतिग्रहकृतान्दोषान्न प्राप्स्यथ द्विजोत्तमाः । पुष्करे चान्नदानेन प्रीताः स्युः सर्वदेवताः ॥ २७९

एकस्मिन्भोजिते विप्रे कोट्याः फलमवाप्स्यते । ब्रह्महत्यादिपापानि दुष्कृतानीह यानि च ॥ २८०

तरिष्यन्ति नराः सर्वे दत्त्वा युष्मत्करे धनम् । मदीयेन तु जाप्येन पूजनीयैस्त्रिभिः कृतैः ॥ २८१

ब्रह्महत्यासमं पापं तत्क्षणादेव नश्यति । दशभिर्जन्मजनितं शतेन तु पुराकृतम् ॥ २८२

त्रियुगं तु सहस्रेण गायत्री हन्ति किल्बिषम् । एवं ज्ञात्वा सदा पूता जाप्ये तु मम वै कृते ॥ २८३

भविष्यध्वं न संदेहो नात्र कार्या विचारणा । ओंकारेण त्रिमात्रेण अर्धेन च विशेषतः ॥ २८४

पूज्याः सर्वे न संदेहो जप्त्वा मां शिरसा सह । अष्टाक्षरा स्थिता चाहं जगद्व्याप्तं मया त्विदम्॥

माताऽहं सर्ववेदानां पदैः सर्वैरलंकृता । जप्त्वा मां परमां सिद्धिं यास्यन्ति द्विजसत्तमाः॥ २८६

प्राधान्यं मम जाप्येन सर्वेषां वो भविष्यति । गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः ॥ २८७

नायन्त्रितश्चतुर्वेदः सर्वाशी सर्वविक्रयी । यस्माद्विप्रेषु सावित्र्या शापो दत्तः सदस्यथ ॥ २८८

अत्र दत्तं हुतं चापि सर्वमक्षयकारकम् । दत्तो वरो मया तेन युष्माकं द्विजसत्तमाः ॥ २८९

अग्निहोत्ररता विप्रास्त्रिकालं होमदायिनः । स्वर्गं ते तु गमिष्यन्ति एकविंशतिभिः कुलैः ॥ २९०

पुलस्त्य उवाच—

एवं शक्रे तु विष्णौ तु रुद्रे वै पावके तथा । ब्रह्मणो ब्राह्मणानां च गायत्री वरमुत्तमम् ॥ २९१

तस्मिन्वै पुष्करे दत्त्वा ब्रह्मणः पार्श्वमागमत् । चारणैस्तु तदाऽऽख्यातं लक्ष्म्या वै शापकारणम्॥

युवतीनां च सर्वासां शापाञ्ज्ञात्वा पृथक्पृथक् । लक्ष्म्यास्तु वै वरं प्रादाद्गायत्री ब्रह्मणः प्रिया ॥

गायत्र्युवाच—

अकुत्सिता सदा भृत्यैर्नैकावासेन शोभिता । शोभिष्यासि न संदेहः सर्वेभ्यः प्रीतिदायिनी ॥

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. ज. °ण ये तव । पूजयिष्यन्ति सुप्रीता अ° । २ क. ख. ग. घ. ङ. च. ज. सर्वे । ३ क. ख. ङ. च. ञ. क्षिप्रं । ग. घ. क्षिप्तं । ४ क. ख. ग. घ. ङ. च. ज. वै धारणे शक्तास्त्रैलोक्यस्य न । ५ क- ख. ङ. च. ज. सर्वमेव भविष्यति । वि° । ६ क. ख. ग. झ. ङ. च. ज. °न श्रावणीयं° । ७ ग. घ. ज. सार्धेन । ८ ग. घ. °वंदे-त्यं वेदैः । ९ क. ख. ग. च. देवैः । १० ग. घ. ञ. भक्तितः ।

ये त्वया वीक्षिताः पुत्रि सर्वे ते पुण्यभाजनाः । परित्यक्तास्त्वया ये तु सर्वे ते दुःखभाजनाः ॥२९५
तेषां जातिः कुलं शीलं धर्मश्चैव वरानने । सभायां ते च शोभन्ते गण्यन्ते ते च पार्थिवाः ॥ २९६
अर्थित्वं चैव तेषां तु कुर्वन्ति वै द्विजोत्तमाः । सौजन्यं तेषु कुर्वन्ति त्वं नो भ्राता पिता गुरुः २९७
बान्धवोऽसि न संदेहो न जीवेऽहं त्वया विना । त्वयि दृष्टे प्रसन्ना मे दृष्टिर्भवति शोभना ॥ २९८
मनः प्रसीदतेऽत्यर्थं सत्यं सत्यं वदामि ते । एवंविधानि वाक्यानि त्वद्दृष्ट्या ये निरीक्षिताः ॥
सज्जनास्ते तु श्रोष्यन्ति जगतां प्रीतिदायकाः । इन्द्रत्वं नहुषः प्राप्य दृष्ट्वा त्वां याचयिष्यति ॥
त्वद्दृष्ट्या तु हतः पापो ह्यगस्त्यवचनाद्द्रुतम् । सर्पत्वं समनुप्राप्य प्रार्थयिष्यति तं मुनिम् ॥ ३०१
दर्पेणाहं विनष्टोऽस्मि शरणं मे मुने भव । वाक्येनानेन चास्यासौ नृपस्य भगवानृषिः ॥ ३०२
कृत्वा मनसि कारुण्यमिदं वाक्यं वदिष्यति । उत्पत्स्यति कुले राजंस्त्वदीये कुलनन्दनः ॥३०३
सर्परूपधरं दृष्ट्वा स ते शापं हि भेत्स्यति । तदा त्वं सर्पतां त्यक्त्वा पुनः स्वर्गं गमिष्यसि ॥ ३०४
अश्वमेधकृतेन त्वं भर्त्रा सह पुनर्दिवम् । प्राप्स्यसे वरदानेन मदीयेन सुलोचने ॥ ३०५

पुलस्त्य उवाच—

देवपत्न्यस्तदा सर्वास्तुष्टया परिभाषिताः । अपत्यैरपि हीनाः स्युर्नैव दुःखं भविष्यति ॥ ३०६
गौरी स्वेवं तु गायत्र्या तदा साऽपि विबोधिता । बृंहता परितोषेण वरान्दत्त्वा मनस्विनी ॥३०७
समाप्ति तस्य यज्ञस्य काङ्क्षन्ती ब्रह्मणः प्रिया । वरदां तां तथा दृष्ट्वा गायत्रीं वेदमातरम् ॥
प्रणिपत्य तदा रुद्रः स्तुतिमेतां चकार ह ॥ ३०८

रुद्र उवाच—

नमोऽस्तु ते वेदमातरष्टाक्षरविशोधिते । गायत्री दुर्गतरणी वाणी सप्तविधा तथा ॥ ३०९
[*सर्वाणि स्तुतिशास्त्राणि गाथाश्च नियमास्तथा ।] अक्षराणि च सर्वाणि लक्षणानि तथैव च
भाष्याणि सर्वशास्त्राणि त्वं तु देवि नमोऽस्तु ते । श्वेता त्वं श्वेतरूपाऽसि शशाङ्केन समानना
बिभ्रती विपुलौ बाहू कदलीगर्भकोमलौ । एणशृङ्गं करे गृह्य पङ्कजं च सुनिर्मलम् ॥ ३१२
वसाना वसने क्षौमे रक्तेनोत्तरवाससा । शशिरश्मिप्रकाशेन हारेणोरसि राजता ॥ ३१३
दिव्यकुण्डलपूर्णाभ्यां सुकर्णाभ्यां विराजिता । चन्द्रसापत्न्यभूतेन मुखेन त्वं विराजसे ॥ ३१४
मुकुटेनातिशुद्धेन केशबन्धेन शोभिता । भुजंगभोगसदृशौ भुजौ ते भूषणं दिवः ॥ ३१५
स्तनौ ते रुचिरौ देवि वर्तुलौ समचूचुकौ । जघनेनातिशुभ्रेण त्रिवलीभङ्गदर्शिना ॥ ३१६
सुमध्यवर्तिनी नाभिर्गम्भीरा शुभदर्शिनी । विस्तीर्णजघना देवी सुश्रोणी च सुमध्यमा ॥ ३१७
[+सुचारूकोरुयुगला सुजानुचरणा तथा] । त्रैलोक्यधारिणी सा त्वं भुवि सत्योपयाचना॥३१८
भविष्यसि महाभागे वरदा वरवर्णिनी । पुष्करे तु कृता यात्रा दृष्ट्वा त्वां संभविष्यति ॥ ३१९
ज्येष्ठमासे पौर्णमास्यामग्र्यां पूजां च लप्स्यसे । ये वा त्वां त्वत्प्रभावज्ञाः पूजयिष्यन्ति मानवाः
न तेषां दुर्लभं किंचित्पुत्रतो धनतोऽपि वा । कान्तारेष्वेव मग्नानामटव्यां च महार्णवे ॥ ३२१

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. घ. च. ज. °न्ते दृश्यन्ते ते च पार्थिवैः । अ° । २ ञ. अर्थितं । ३ झ. सौजन्यं । ४ झ. °ष्ट्वा पश्चात्सर्पोन्स्मे° । ५ झ. तस्य त्वमनुजांस्त्यक्त्वा । ६ क. ख. ग. घ. ङ. च. ज. बृंहिता । ७ ञ. °रक्षाक्ष° । ८ क. ख. ङ. च निखिलास्त° । ९ क. ग. घ. ङ. च ज. °ष्यादिस° । १० क. ख. ग. घ. ङ. च. ज. °दर्पिता । सु° । ११ क. ख. ग. ङ. च. ज. वरानने ।

दस्युभिर्वा निरुद्धानां त्वं गतिः परमा नृणाम्। त्वं सिद्धिः श्रीः भिया कीर्तिः क्रिया प्रीतिः क्षमा तथा
संध्या रात्रिः भिया निद्रा कालरात्रिस्त्वमेव च । अम्बा च कमला या वै ब्रह्माणी ब्रह्मचारिणी
जननी सर्वदेवानां गायत्री परमाङ्गना । जया च विजया चैव पुष्टिस्त्वं वरवर्णिनी ॥ ३२४
सावित्र्यवरजा चासि सदा चेष्टा पितामहे । बहुरूपा विश्वरूपा सुनेत्रा पद्मधारिणी ॥ ३२५
सुरूपा त्वं विशालाक्षी भक्तानां परिरक्षिणी । नगरेषु च मुख्येषु आश्रमेषु वरानने ॥ ३२६
वासस्तव महादेवि वनेषूपवनेषु च । ब्रह्मस्थानेषु सर्वेषु ब्रह्मणो वामतः स्थिता ॥ ३२७
दक्षिणेन तु सावित्री मध्ये ब्रह्मा पितामहः । अन्तर्वेदी च यज्ञानामृत्विजानां च दक्षिणा ३२८
सिद्धिस्त्वं हि नृपाणां च वेला सागरजा मता । ब्रह्मचारिण्यथो दीक्षा शोभा शोभावतां तथा
ज्योतिषां च प्रभा देवी लक्ष्मीर्नारायणे स्थिता। क्षमाऽसि त्वं मुनीनां च नक्षत्राणां च रोहिणी
राजद्वारेषु तीर्थेषु नदीनां संगमेषु च । पूर्णिमा पूर्णचन्द्रे तु बुद्धिर्नीत्यां क्षमाद्यतिः ॥ ३३१
उमा देवी च नारीणां श्रूयते वरवर्णिनी । इन्द्रस्य चारुदृष्टिस्त्वं सहस्रनयनोपगा ॥ ३३२
ऋषीणां धर्मबुद्धिस्त्वं देवानां च परायणा । कर्षकाणां च सीताऽसि भूतानां धरणी तथा ३३३
नृणां बन्धं वधं चैव पुत्रनाशं धनक्षयम् । व्याधिं मृत्युभयं चैव पूजिता नाशयिष्यसि ॥ ३३४
तथा तु कार्तिके मासि पौर्णमास्यां सुपूजिता । सर्वकामप्रदा देवि भविष्यसि वरप्रदे ॥ ३३५
यश्चेदं पठते स्तोत्रं शृणुयाद्वाऽपि भक्तितः । सर्वार्थसिद्धिं लभते नरो नास्त्यत्र संशयः ॥ ३३६

गायत्र्युवाच—

भविष्यत्येवमेवं तु यत्त्वया रुद्र भाषितम् । विष्णुना सहितः स्थानं सर्वं संभावयिष्यसि॥ ३३७

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे सावित्रीब्रह्मगायत्रीविवादशापवरप्रदानकथनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२२७२२

---

अथाष्टादशोऽध्यायः ।

---

भीष्म उवाच—

अत्यद्भुतमिदं ब्रह्मञ्श्रुतवानस्मि तत्त्वतः । अभिषेकं तु गायत्र्याः सदे तत्र तथा कृतम् ॥ १
विरोधं चैव सावित्र्या गायत्र्या च यथा श्रुतम् । विष्णुना च यथा देवी सर्वस्थानेषु कीर्तिता॥
गायत्री चापि रुद्रेण संस्तुता वरवर्णिनी । तच्छ्रुत्वा पूतमात्मानं विस्तरेण पितामह ॥ ३
प्रहृष्टानि च रोमाणि प्रसन्नं च मनो मम । श्रुत्वा मे परमा प्रीतिः कौतूहलमतीव हि ॥ ४
नारायणस्तु भगवान्कृत्वैतां परमां च वै । ब्रह्मपत्न्याः स्तुतिं भक्त्या न्यस्य तां पर्वतोपरि ॥५

---

१ क. ख. घ. ङ. च. ज. °द्धिः श्रीर्धृतिः कीर्तिर्ह्रीर्विद्या संनतिर्मतिः । सं° । २ क. ख. ग. घ. ङ. च. ज प्रभा । ३ क. ख. ग. घ. ङ. च. ज °स्त्वं च क्षमा दया । सा° । ४ क. ख. ग. घ. ङ. च. ज ब्रह्मचारिणी । ५ ख. ङ. च. ज. पुंरूपा । ६ क. ख. ग. घ. ङ. च. ज पुण्येषु । ७ झ. °षु ब्राह्मणा वा यतः स्थिताः । द° । ८ घ. सञ्ज्ञे । ९ क. ख. ङ. च. ज°भा च परमा मता । ज्यो°। ग. घ.°भा च परमा तथा । १० क ग. घ. च. ज. क्षमा सिद्धिर्मुनी°। ११ झ च । पर्वे तु पू° । १२ झ. °मा चन्द्रे दुर्विनी° । १३ झ. धनधान्यदा । नृ° । १४ झ. °था । स्त्रीणामवैधव्यकरी धनधान्यप्रदा तथा । व्या° । १५ क. ख. ग. घ. ङ. च. ज. शुभप्रदे । १६ क. ख. ग. घ. ङ. च. ज. पुत्र । १७ क. ख. ङ. च. ज °तमहं ब्र° । घ °तमहाब्र° । झ. °तमहं धर्मं श्रुत° । १८ झ. कथं । १९ क. ख. ग. घ. ङ. च. ज ज °वित्र्याः शापदानं तथा कृतम् । २० ञ. °नी । तं श्रुत्वा प्रतिमा° । २१ झ. °त्वैतत्सुमहोत्सवम् । ब्र° ।

उवाच वचनं विष्णुर्भक्तितुष्टिप्रदायकम् । श्रीमती ह्रीमती चैव या च देवीश्वरी तथा ॥ ६
एतदेव श्रुतं ब्रह्मंस्तव वक्त्राद्विनिःसृतम् । उत्तरं तत्र यद्भूतं यच्च तस्मिन्स्थले कृतम् ॥ ७
आनुपूर्व्या तु तत्सर्वं भगवान्वक्तुमर्हति । श्रुतेन मे देहशुद्धिर्भविष्यति न संशयः ॥ ८

पुलस्त्य उवाच—

यजतः पुष्करे तस्य देवस्य परमेष्ठिनः । शृणु राजेन्यथावृत्तं पूर्वमेव यथा कृतम् ॥ ९
आदौ कृतयुगे तस्मिन्यजमाने पितामहे । मरीचिरङ्गिराश्चैव पुलस्त्यः पुलहः क्रतुः ॥ १०
दक्षः प्रजापतिश्चैव नमस्कारं प्रचक्रिरे । विद्योतमानाः पुरुषाः सर्वाभरणभूषिताः ॥ ११
उपनृत्यन्ति देवेशं विष्णुमप्सरसां गणाः । ततो गन्धर्वतूर्येषु प्रतिनन्द्य विहायसम् ॥ १२
बहुभिः सह गन्धर्वैः प्रगायति च तुम्बरुः । महाश्रुतिश्चित्रसेन ऊर्णायुरनघस्तथा ॥ १३
गोमायुः सूर्यवर्चाश्च सोमवर्चाश्च कौरव । युगपच्च तृणायुश्च नन्दिश्चित्ररथस्तथा ॥ १४
त्रयोदशः शालिशिराः पर्जन्यश्च चतुर्दशः । कलिः पञ्चदशश्चात्र तारकश्चात्र षोडश ॥ १५
हाहा हूहूश्च गन्धर्वौ हंसश्चैव महाद्युतिः । इत्येते देवगन्धर्वा उपगायन्ति तं विभुम् ॥ १६
तथैवाप्सरसो दिव्या उपनृत्यन्ति तं विभुम् । धाताऽर्यमा च सविता वरुणोंऽशो भगस्तथा ॥ १७
इन्द्रो विवस्वान्पूषा च त्वष्टा पर्जन्य एव च । इत्येते द्वादशाऽऽदित्या ज्वलन्तो दीप्ततेजसः १८
चक्रुस्तस्मिन्सुरेशाश्च नमस्कारं पितामहे । मृगव्याधश्च शर्वश्च निर्ऋतिश्च महायशाः ॥ १९
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः । भवो विश्वेश्वरश्चैव कपर्दी च विशां पते ॥ २०
स्थाणुर्भगश्च भगवान्रुद्रास्तत्रावतस्थिरे । अश्विनौ वसवश्चाष्टौ मरुतश्च महाबलाः ॥ २१
विश्वेदेवाश्च साध्याश्च तस्मै प्राञ्जलयः स्थिताः । शेषजास्तु महानागा वासुकिप्रमुखाः स्थिताः ॥
कश्यपश्चापकन्दश्च तक्षकश्च महाबलः । *अधृष्यास्तेजसा दीप्ता महाक्रोधा महाबलाः ॥ २३
एते नागा महात्मानः प्रजानां पालने स्थिताः । तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्च महाबलः ॥ २४
वारुणिश्चाऽऽरुणिश्चैव वैनतेया व्यवस्थिताः । नारायणश्च भगवान्स्वयमागत्य लोकवान् ॥ २५
प्राह लोकगुरुं श्रीमान्सह सर्वैर्महर्षिभिः । त्वया ततमिदं सर्वं त्वया सृष्टं जगत्पते ॥ २६
तस्माल्लोकेश्वरश्चासि पद्मयोने नमोऽस्तु ते । यदत्र ते महत्कार्यं कर्तव्यं च तदादिश ॥ २७
एवमुक्त्वा च भगवान्सार्धं देवर्षिभिः स्वयम् । नमस्कृत्वा सुरेशाय ब्रह्मणेऽव्यक्तजन्मने ॥ २८
स तु तत्र स्थितो ब्रह्मा तेजसा भासयन्दिशः । श्रीवत्सलोमसंछन्नो हेमसूत्रेण राजता ॥ २९
सुरर्षिप्रतिमः श्रीमान्स्वयंभूर्भूतभावनः । शुचिरोमा महावृक्षः सर्वतेजोमयः प्रभुः ॥ ३०
यो गतिः पुण्यशीलानामगतिः पापकारिणाम् । योगसिद्धा महात्मानो यं विदुर्योगमुत्तमम् ॥ ३१
यस्याष्टगुणमैश्वर्यं यमाहुर्देवसत्तमम् । यं प्राप्य शाश्वतं विप्रा नियता मोक्षकाङ्क्षिणः ॥ ३२
जन्मतो मरणाच्चैव मुच्यन्ते योगभाविताः । यदेतत्तप इत्याहुः सर्वाश्रमनिवासिनः ॥ ३३

---

* इदमर्धं झ. पुस्तकस्थम् ।

---

१ क. ख. ग. घ. ङ. च. ज. °ष्णुस्तुष्टिपुष्टि° । २ क. ख. ग. घ. ङ. च. ज. °जन्निदं चित्रं पू° । ३ ग. °तिध्वनिगतेषु च । व° । ४ क. ख. ग. घ. ङ. च. ज. प्रयाति स ह तु° । ५ झ. उपासान्ति च तं । ६ ग. घ. ज. पिनाकी । झ. जाबाली । ७ झ. °र्भवश्च । ८ ग. घ. ज. °मुखादयः । कम्बलश्चापि क° । ९ क. °ताः । केवलश्चापि क° । १० क. ख. ग. घ. ङ. च. ज. °त्मानस्तस्मै प्राञ्जलयः स्थि° । ११ झ. °मान्भूर्भुवो भूत° । १२ झ. °नः । रुचिरोमा दर्भरोमा स° । १३ क. ख. ङ. च. °तिः सुखशी° । ग. घ. ज. °तिः सर्वशी° । १४ क. ख. ग. घ. ङ. च. ज. °दुर्लोकमु° ।

सेवन्ते नियताहारा दुश्चरं व्रतमास्थिताः । योऽनन्त इति[1] लोकेऽस्मिन्पठ्यते सर्वयोगिभिः ॥ ३४
सहस्रमूर्धा रक्ताक्षः शेषादिभिरनुत्तमैः । यो यज्ञ इति विप्रेन्द्रैरिज्यते स्वर्गलिप्सुभिः ॥ ३५
नानास्थानगतिः श्रीमानेकः कविरनुत्तमः । यं देवं वेत्ति वेत्तारं यज्ञभागप्रदायिनम् ॥ ३६
वृषाग्निचन्द्रसूर्याक्षं देवमाकाशविग्रहम्[3] । तं प्रपद्यामहे सर्वे भगवाञ्शरणार्थिनः ॥ ३७
शरण्यं शरणं देवं सर्वभूतभवोद्भवम् । ऋषीणां चैव स्रष्टारं लोकानां च सुरेश्वरम् ॥ ३८
प्रियार्थे चैव देवानां सर्वस्य जगतः स्थितौ । कव्यं पितॄणां सुचिरं सुराणां हव्यमुत्तमम् ॥ ३९
येन प्रवर्तितं सर्वं तं नताः स्मः सुरोत्तमम् । त्रेताग्निना तु यजता देवेन परमेष्ठिना ॥ ४०
यथा सृष्टिः कृता पूर्वं यज्ञसृष्टिस्तथा पुनः । तथा ब्रह्मा ह्यनन्तेन लोकानां स्थितिकारिणा ४१
अन्वास्यमानो भगवान्वृद्धोऽप्यथ च बुद्धिमान् । यज्ञवाटमचिन्त्यात्मा देवस्तत्र पितामहः ॥ ४२
धनाद्यैर्ऋत्विजैः पूर्णैः सर्वतः परिपालितम् । गृहीतेचापेन तदा विष्णुना प्रभविष्णुना ॥ ४३
दैत्यदानवराजानो राक्षसानां गणाः स्थिताः । आत्मानमात्मना चैव चिन्तयामास तं क्रतुम् ॥
चिन्तयित्वा यथार्थत्वं यज्ञं यज्ञः सनातनः । वरणं तत्र भगवान्कारयामास ऋत्विजाम् ॥ ४५
भृग्वाद्या ऋत्विजश्चापि यज्ञकर्मविशारदाः । चक्रुर्बह्वृचमुख्यैश्च प्रोक्तं पुण्यं यदक्षरम् ॥ ४६
तुष्टुवुस्ते मुनिश्रेष्ठा वितते यज्ञकर्मणि । यज्ञविद्यावेदविद्यापदक्रमविदां तथा ॥ ४७
घोषेण परमर्षीणां सभा वै चातिनादिता । यज्ञसंस्तवविद्भिश्च शिक्षाविद्भिस्तथा द्विजैः ॥ ४८
शब्दनिर्वचनार्थज्ञैः सर्वविद्याविशारदैः । मीमांसाहेतुवाक्यज्ञैः सर्वविद्याविशारदैः ॥ ४९
लोकायतिकमुख्यैश्च शुश्रुवुः शब्दमीरितम् । इतिहासपुराणज्ञैर्नैकविज्ञानमौनिनः ॥ ५०
तत्र तत्र च राजेन्द्र नियताः संशितव्रताः । जपहोमपरान्मुख्यान्ददृशुस्तत्र वै द्विजान् ॥ ५१
यज्ञभूमौ स्थितस्तस्यां ब्रह्मा लोकपितामहः । सुरासुरगुरुः श्रीमान्सेव्यमानः सुरासुरैः ॥ ५२
उपासते च तत्रैनं प्रजानां पतयः प्रभुम् । दक्षो वसिष्ठः पुलहो मरीचिश्च द्विजोत्तमः ॥ ५३
अङ्गिरा भृगुरत्रिश्च गौतमो नारदस्तथा । विद्यमानमन्तरिक्षं वायुस्तेजो जलं मही ॥ ५४
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च । विकृतिश्च विकारश्च यच्चान्यत्करणं महत् ॥ ५५
ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार एव च । शब्दश्छन्दो निरुक्तं च कल्पशिक्षासमन्विताः ५६
आयुर्वेदधनुर्वेदौ मीमांसा गणितं तथा । हस्त्यश्वज्ञानसहिता इतिहाससमन्विताः ॥ ५७
एतैरङ्गैरुपाङ्गैश्च वेदाः सर्वे विभूषिताः । उपासते महात्मानं सहोंकारं पितामहम् ॥ ५८
नयश्च क्रतवश्चैव संकल्पः प्राण एव च । एते चान्ये च बहवः पितामहमुपासते ॥ ५९
अर्थो धर्मश्च कामश्च द्वेषो हर्षश्च सर्वशः । शुक्रो बृहस्पतिश्चैव संवर्तो बुध एव च ॥ ६०
शनैश्चरश्च राहुश्च ग्रहाः सर्वे तथैव च । मारुतो विश्वकर्मा च पितरश्चापि भारत ॥ ६१

---

१ क. ख. ग. घ. ङ. च. ज. °ति नागेषु प्रोच्यते । २ क. ख. घ. ङ. च. ज. देवं । ३ क ख. ग. घ. ङ. च. ज. °वंदेवम° । ४ क. ख. ग. घ. ङ. च. ज. °वं तेन वै मखमुत्त° । ५ ख. ङ. नेत्राग्निना । झ. द्विताग्निना । ६ झ. °ह्यऽन्तरानन्तलो° । ७ झ. °कारणात् । आधास्य° । ८ क. ख. ग. घ. ङ. च. ज. सदस्यैः । ९ क. ख. ग. घ. ङ. च. ज. °तरूपेण त° । १० झ. विस्तारं । ११ क ख. ग. घ. ङ. च. ज. °म् । शुश्रुवु° । १२ क. ख. ङ. च. ज. °नाभक्तैः स° । ग. °नासक्तैः स° । १३ क. ख. ङ. च. ज. °ज्ञैः कृता नानाक्रिया मखे । लो° । १४ ग. घ. °यतनमु° । १५ झ. °सामयुक्ताश्च ते° । १६ क. ख. ग. घ. ङ. च. ज. °मुपस्थिताः । आत्मा ध° । १७ क. ख. ग. घ. ङ. च. ज. सर्वदा । १८ ज. मरुतो ।

पर्व

दिवाकरश्च सोमश्च ब्रह्माणं पर्युपस्थिताः[1] । गायत्री दुर्गतरणी[2] वाणी सप्तविधा तथा ॥ ६२
+सर्वाणि श्रुतिशास्त्राणि यमाश्च नियमास्तथा । अक्षराणि च सर्वाणि लक्षणानि[3] तथैव च ॥६३
भाष्याणि सर्वशास्त्राणि देहवन्ति विशां पते । क्षणा लवा मुहूर्ताश्च दिनं रात्रिस्तथैव च ॥ ६४
अर्धमासाश्च मासाश्च ऋतवः सर्व एव च । उपासते महात्मानं ब्रह्माणं दैवतैः सह ॥ ६५
अन्याश्च देव्यः प्रवरा ह्रीः कीर्तिर्द्युतिरेव[4] च । प्रभा धृतिः क्षमा भूतिर्नीतिर्विद्या मतिस्तथा ॥६६
श्रुतिः स्मृतिस्तथा कान्तिः शान्तिः पुष्टिस्तथा क्रिया । सर्वाश्चाप्सरसो दिव्या नृत्यगीतविशारदाः
उपतिष्ठन्ति ब्रह्माणं सर्वास्तं देवमातरः । विप्रचित्तिः शिविः शङ्कुरयःशङ्कुस्तथैव च[5] ॥ ६८
देववाक्[6]केतुमानुग्रः सोग्रो व्यग्रो महासुरः । परिघः पुष्करश्चैव शाम्बोऽश्वपतिरेव च ॥ ६९
प्रहादो वलिनां कुम्भः संहादो गगनप्रियः । अनुहादो वैरहरो[7] वराहश्च कुशो रजः ॥ ७०
योनिभक्षो वृषपर्वा लिङ्गभक्षोऽथ वै कुरुः[8] । विपुरुः प्रभवश्चैव तथैव च [illegible]दरः ॥ ७१
एकवक्त्रो[9] महावक्त्रो द्विवक्त्रः कुलसंभवः[10] । सुरभः सलभाक्षश्च क्रपथः क्रापथः क्रथः ॥ ७२
बृहत्कीर्तिर्महाजिह्वः शङ्कुकर्णो महाद्युतिः[11] । दीर्घजिह्वोऽर्कनयनो मृदुचापो[12] मृदुप्रियः ॥ ७३
वायुर्गरिष्ठो नमुचिः शम्बरो विज्वरो[13] महान् । चन्द्रहन्ता क्रोधहन्ता क्रोधवर्धन एव च ॥ ७४
कालकः[14] कालकक्षश्च कुण्डदः समरप्रियः । गरिष्ठश्च वरिष्ठश्च प्रलम्बो नरकः पृथुः ॥ ७५
इन्द्रतापनवातापी केतुमान्बलदर्पितः । अतिलोमा[15] विलोमा च बाष्कालिः प्रमदोऽमदः ॥ ७६
सृगालवदनश्चैव केशी च शरदस्तथा । एकाक्षश्चैव राहुश्च वृत्रः क्रोधविमोक्षणः ॥ ७७
एते चान्ये च बहवो दानवा बलदर्पिताः[16] । ब्रह्माणं पर्युपासन्त वाक्यं चैवमथोचिरे ॥ ७८

दानवा ऊचुः—

त्वया सृष्टाः स्म भगवंस्त्रैलोक्यं भवता हि नः । दत्तं सुरवरश्रेष्ठ देवेभ्यश्चाधिकाः कृताः ॥ ७९
किं कुर्मो भगवंश्चेह यज्ञे तव पितामह । यद्धितं[17] तच्च कुर्मो वै समर्थाः कार्यनिर्णये ॥ ८०
किमेभिस्तैर्वराकैश्च[18] अदितिगर्भसंभवैः । दैवतैर्निहतैः सर्वैः पराभूतैश्च सर्वदा ॥ ८१
पितामहोऽपि सर्वेषामस्माकं सह दैवतैः । तव यज्ञसमाप्तौ तु पुनरस्मासु दैवतैः ॥ ८२
श्रियं प्रति विरोधश्च भविष्यति न संशयः । इदानीं प्रेक्षणं कुर्मः सहिताः सर्वदानवैः ॥ ८३

पुलस्त्य उवाच—

सगर्वं च वचस्तेषां श्रुत्वा देवो जनार्दनः । शक्रेण सहितः शंभुमिदमाह महायशाः[19] ॥ ८४

---

+ इदमर्धं झ. पुस्तकस्थम् ।

---

१ क. ख ग. घ. ङ. च. ज. °र्युपासते । गा° । २ झ. °णी कन्दः सप्तविधस्तथा । ३ क. ख. ग. घ. ङ. च. ज. नक्षत्राणि । ४ क. ख. घ. च. ज. °तिरथ क्षान्तिः । ५ क. ख. ग. घ. ङ. च. ज. च । वेगवान्केतु° । ६ ज. °दोऽथ बलिः कु° । ७ क. ख. ग. ङ. च. हरिहरौ । ८ ख. ग. घ. ङ. च. °रुः । निष्प्रभः सप्रभः श्रीमांस्तथै° । ९ क. ग. घ. ङ. च. ज. °कचक्रो महाचक्रो द्विचक्रः कु° । १० क. ख. ग. ङ. च. ज. °वः । शरभः शलभश्चैव क्र° । ११ क. ख. ग. घ. ङ. च. ज. महाध्वनिः । १२ क. ख. ङ. च. ज. मृदुकायो । १३ क. ख. ङ. च. ज. विष्करो विभुः । विष्वक्सेनश्चन्द्रहर्ता क्रो° । ग. घ. विष्करो म° । १४ क. ख. ग. ङ. च. ज. कालकान्तश्च । घ. कालदन्तश्च । १५ क. ख. ग. घ. ङ. च. ज. असिलोमा सुलो° । १६ क. ख. ग. ङ. च. ज. बलवर्धनाः । १७ घ. °वैः । इह तै° । १८ क. च. ज. °तैरिह नः स° । १९ क. ख. ङ. च. °शाः । विघ्नं प्रकर्तुं वै रुद्र आयाता द° । ग. घ. ज. °शाः । विघ्नं प्रकुर्वते रुद्र आयाता द°

विष्णुरुवाच—

यज्ञे पैतामहे ये तु संप्राप्ता दनुपुंगवाः । ब्रह्मणाऽऽमन्त्रिताश्चेह विघ्नार्थं च यतन्ति ते ॥ ८५
अस्माभिश्च क्षमा कार्या यावद्यज्ञः समाप्यते । समाप्ते तु क्रतावस्मिन्युद्धं कार्यं दिवौकसाम् ॥ ८६
यथा निर्दानवा भूमिस्तथा कार्यं त्वया विभो । जयार्थं चैव शक्रस्य भवता च मया सह ॥ ८७
द्विजानां परिवेष्टारो मरुतः परिकल्पिताः । दानवानां धनं यच्च गृहीत्वा तद्यजामहे ॥ ८८
अध्वानिकेषु[1] विप्रेषु दुःखितेषु जनेष्विह । व्ययं तस्य करिष्यामो दासभावे निवेशिताः ॥
वदन्तमेवं विष्णुं च ब्रह्मा वचनमब्रवीत् ॥ ८९

ब्रह्मोवाच—

एते दनुसुताः क्रुद्धा युष्माकमपि नेप्सिताः[2] । भवता च क्षमा कार्या रुद्रेण सह दैवतैः ॥ ९०
कृते(त) युगावसा[illegible]समाप्ते तु क्रतौ सति । मया च प्रेषिता यूयमेते च दनुपुंगवाः ॥ ९१
संधिर्वा विग्रहो वाऽपि सर्वैः कार्यस्तदैव हि ॥ ९२

पुलस्त्य उवाच—

पुनस्तान्दानवान्ब्रह्मा वाक्यमाह स्वयं प्रभुः । दानवा[3] न विरोधोऽत्र सह देवैः कथंचन ॥ ९३
मैत्रभावस्थिता यूयमस्मत्कार्यपरायणाः ॥[4] ९४

दानवा ऊचुः—

सर्वमेतत्करिष्यामः शासनं ते पितामह । अस्माकमनुजा देवा भयं तेषां न विद्यते ॥ ९५

पुलस्त्य उवाच—

एतच्छ्रुत्वा तथा तेषां परितुष्टः पितामहः । मुहूर्तं तिष्ठतोऽप्येका ऋषिकोटिरुपागता ॥[5]
श्रुत्वा पैतामहं यज्ञं तेषां पूजां तु केशवः ॥ ९६
आसनानि तदा तेषां ददौ देवः पिनाकधृक् । वसिष्ठोऽप्यर्घमादाय ब्रह्मणा परिचोदितः ॥ ९७
गामर्घं च ततो दत्त्वा पृष्ट्वा कुशलमव्ययम् । निवेशं[6] पुष्करे[7] दत्त्वा स्थीयतामिति चाब्रवीत् ॥ ९८
ततस्ते ऋषयः सर्वे जटाजिनधरास्तथा । शोभयन्तः सदः श्रेष्ठं गङ्गामिव दिवौकसः ॥[8] ९९
मुण्डाः काषायवसनाः दीर्घश्मश्रुधराः परे । विरलैर्दशनैः केचिच्चिपिटाक्षास्तथाऽपरे* ॥ १००
दीर्घकर्णा विकर्णाश्च कर्णैश्च त्रुटितैस्तथा । दीर्घफाला[9] विफालाश्च स्नायुचर्मावगुण्ठिताः ॥ १०१
निर्गतं चोदरं तेषां मुनीनां भावितात्मनाम् । दृष्ट्वा ते पुष्करं तीर्थं [10]दीप्यमानं समन्ततः ॥ १०२
तीर्थलोभान्नरव्याघ्र तस्य तीरे व्यवस्थिताः । वालखिल्या महात्मानो अश्मकुट्टास्तथा परे ॥ १०३
दन्तोलूखलिनश्चान्ये संप्रख्यानास्तथा परे+ । नानानियमयुक्ताश्च तथा स्थण्डिलशायिनः ॥ १०४
सर्वे तस्मिन्मुखे[11] दृष्ट्वा सुरूपास्ते[12] क्षणादनु । किमेतदिति चिन्त्याथ निरीक्ष्य च परस्परम् ॥ १०५

*एतस्मादग्रे 'बृहत्तनूदराः केचित्केकराक्षास्तथाऽपरे' इत्यर्धमधिकं क्वचित्पुस्तके । + एतदग्रे ञ. पुस्तके 'वायुभक्षा जलाहाराः पर्णाहारास्तथाऽपरे' इत्यर्धमधिकम् ।

१ क. ख. ङ. अत्राऽऽगतेषु । ग. श्रद्धाधिकेषु । २ झ. पक्षगाः । ३ ग. घ. ज. °नवैर्न विरोधोऽत्र यज्ञे मम क° । ४ क. ख. ग. घ. ङ. च. ज. °त्कार्ये च नित्यशः । स° । ५ क. ख. ङ. च °ष्ठतां तेषामृषि° । ६ झ. °वेशः पुष्करे दत्तः स्थीयतामिति सादरम् । त° । ७ ग. °रे तेषां ददौ देवस्तु पद्मभूः । त° । ८ क. ख. ग. घ. ङ. च. ज. °न्तः सरश्रेष्ठं गङ्गेव हि दि° । ९ ख. °र्घशेफा लम्बकराः स्ना° । ग. घ. ज. °र्घशेफा लम्बफलाः स्ना° । १० क. ख. ग. घ. ङ. च. ञ. °दीप्यमानाः । ११ झ. सदे तस्मिन्सुसंहृष्टाः सु° । १२ झ. °स्ते सुरादयः । किं° ।

अस्मिंस्तीर्थे दर्शनेन मुखस्येह सुरूपता । मुखदर्शन इ(मि)त्येव नाम कृत्वा तु तापसाः ॥ १०६
स्नाता नियमयुक्ताश्च पुरुषास्ते तदाऽभवन् । देवपुत्रोपमा जाता अनौपम्यगुणान्विताः ॥ १०७
शोभमानाः सुरश्रेष्ठ (नरश्रेष्ठ) स्थिताः सर्वे वनौकसः । यज्ञोपवीतमात्रेण व्यभजंस्तीर्थमञ्जसा १०८
जुह्वतश्चाग्निहोत्राणि चक्रुश्च विविधाः क्रियाः । चिन्तयन्तो हि राजेन्द्र तपसा दग्धकिल्बिषाः ॥
न यास्यामोऽपरं तीर्थं श्रेष्ठभावे त्विदं स्मरैः । श्रेष्ठपुष्करमित्येव नाम चक्रुर्द्विजातयः ॥ ११०
तत्र कुब्जान्बहून्दृष्ट्वा स्थितांस्तीर्थसमीपतः । बभूवुर्विस्मितास्तत्र जना ये च समागताः ॥ १११
दत्त्वा दानं द्विजातिभ्यो भाण्डानि विविधानि च । श्रुत्वा सरस्वतीं प्राचीं स्नातुकामा द्विजा गताः ॥
सरस्वती तीर्थवरा नानाद्विजगणैर्युता । बदरेङ्गुदकाश्मर्यैः प्लक्षाश्वत्थविभीतकैः ॥ ११३
पौलोमैश्च पलाशैश्च करीरैः पीलुभिस्तथा । सरस्वतीतीर्थरुहैर्धन्वनैः स्यन्दनैस्तथा ॥ ११४
पारिभद्रैः कपित्थैश्च बिल्वैश्चाऽऽम्रातकैस्तथा । अतिमुक्तकखण्डैश्च पारिजातैश्च शोभिता ॥ ११५
कदलीवनभूयिष्ठा सर्वसत्त्वमनोरमा । वाय्वम्बुफलपर्णादैर्दन्तोलूखलिकैरपि ॥ ११६
तथाऽश्मकुट्टमुख्यैश्च मुनिभिर्बहुभिर्वृता । स्वाध्यायघोषसंघुष्टा मृगयूथशताकुला ॥ ११७
अहिंसैर्धर्मपरमैस्तथा चातीव शोभिता । सुप्रभा काञ्चनाख्या च प्राची नन्दा विशालिका ॥ ११८
स्रोतोभिः पञ्चभिस्तत्र वर्तते पुष्करे नदी । पितामहस्य सदसि वर्तमाने महीतले ॥ ११९
वितते यज्ञवाटे तु स्वागतेषु द्विजातिषु । पुण्याहघोषैर्विविधैर्देवानां नियमैस्तथा ॥ १२०
देवेषु चैव व्यग्रेषु तस्मिन्यज्ञविधौ तदा । तत्र चैव महाराज दीक्षिते च पितामहे ॥ १२१
यजतस्तस्य यज्ञेन सर्वकामसमृद्धिना । मनसा चिन्तिता ह्यर्था धर्मार्थकुशलास्तथा ॥ १२२
उपतिष्ठन्ति राजेन्द्र द्विजातींस्तत्र तत्र ह । जगुश्च देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥ १२३
वादित्राणि तु दिव्यानि वादयामासुरञ्जसा । तस्य यज्ञस्य संपत्त्या तुतुषुर्देवता अपि ॥ १२४
विस्मयं परमं जग्मुः किमु मानुषयोनयः । वर्तमाने तथा यज्ञे पुष्करस्थे पितामहे ॥ १२५
अब्रुवन्नृषयो भीष्म तदा तुष्टाः सरस्वतीम् । सुप्रभां नाम राजेन्द्र नाम्ना चैव सरस्वतीम् ॥ १२६
ते दृष्ट्वा मुनयः प्रीता वेगयुक्तां सरस्वतीम् । पितामहं मानयन्तीं क्रतुं ते बहु मेनिरे ॥ १२७
एवमेव सरिच्छ्रेष्ठा पुष्करेषु सरस्वती । पितामहार्थं संभूता तुष्ट्यर्थं च मनीषिणाम् ॥ १२८
*पुण्यस्य पुण्यतां कुर्वन्पञ्चस्रोताः(?) सरस्वती । यत्र ते मुनयः शान्ता नानास्वाध्यायवादिनः ॥
ते समागत्य ऋषयः सस्मरुर्वै सरस्वतीम् । साऽनुध्याता महाराज ऋषिभिः सत्रयाजिभिः १३०
समाश्रिता दिशं पूर्वां भक्तिप्रीता महानदी । प्राचीपूर्वा(र्वे)महानाम्ना मुनिवन्द्या यशस्विनी ॥
इदमन्यन्महाराज शृण्वाश्चर्यवरं भुवि । पुरा मङ्कणको विप्रः कुशाग्रेणेति नः श्रुतम् ॥ १३२
क्षतात्किल करे तस्य राजञ्शाकरसोऽस्रवत् । स वै शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्तवान् ॥ १३३

---

* अयं श्लोको झ. पुस्तकस्थः ।

---

१ ख. ङ. च. °श्च सुरूपास्ते । २ क. ख. ग. घ. ङ. च. ञ. °ता आत्मौप° । ३ क. ख. ङ. च. ज. ज्येष्ठभावे ४ क. ख. ग. घ. ङ. च. ज. °रः । ज्येष्ठ° । ५ क. ङ. च. झ. °चीं गन्तुकामा द्विजातयः । स° । ६ क. ख. ग. घ. ङ. च. ज. °था । करूषैः करवीरैश्च । ७ क. ख. ग. घ. ङ. च. ज. °दम्बव° । ८ झ. °का । पुष्करे पञ्चभिः स्रोतैर्वहते सा महान° । ९ झ. वेदयुक्तां । १० क. च. ज. भाषयन्तीं । ख. ङ. समायान्तीं । ञ. भासयंन्तीं । ११ क. ख. ग. घ. ङ. च. ज. महाभागा । १२ ञ. °पूर्ववहा° । १३ क. ख. ग. घ. ङ. च. ज. सरस्वती ।

ततस्तस्मिन्प्रनृत्ते तु स्थावरं जङ्गमं हि यत् । प्रनृत्तमभवद्वीर तेजसा तस्य मोहितम् ॥ १३४
विष्ण्वादिभिः सुरै राजन्नृषिभिश्च तपोधनैः । विज्ञप्तस्तैस्ततो ब्रह्मा नायं नृत्येत्तथा कुरु ॥ १३५
आदिष्टो ब्रह्मणा रुद्र ऋषेरर्थे नराधिप । नायं नृत्येद्यथा भीम तथा त्वं वक्तुमर्हसि ॥
गत्वा रुद्रो मुनिं दृष्ट्वा हर्षाविष्टमतीव ह ॥ १३६

रुद्र उवाच—

भो भो विप्रर्षभ त्वं हि नृत्यसे केन हेतुना । नृत्यमानेन भवता जगत्सर्वं च नृत्यति ॥ १३७
[*तेनायं वारितः प्राह नृत्यन्वै मुनिसत्तमः ] ॥ १३८

मुनिरुवाच—

किं न पश्यसि मे देवं कराच्छाकरसोऽस्रवत् । तं तु दृष्ट्वा प्रनृत्ये वै हर्षेण महताऽन्वितः ॥
तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम् ॥ १३९

रुद्र उवाच—

अहं न विस्मयं विप्र गच्छामीति प्रपश्य माम् ॥ १४०

पुलस्त्य उवाच—

एवमुक्तो मुनिश्रेष्ठो महादेवेन कौरव । ध्यायमानस्तदा कोऽयं प्रतिषिद्धोऽस्मि येन ह ॥ १४१
अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितस्तदा । ततो भस्म क्षताद्राजन्निर्गतं हिमपाण्डुरम् ॥ १४२
तद्दृष्ट्वा व्रीडितश्चासौ स मुनिः पादयोर्गतः । नान्यद्देवादहं मन्ये रुद्रात्परतरं महत् ॥ १४३
चराचरस्य जगतो गतिस्त्वमसि शूलधृक् । त्वया सृष्टमिदं सर्वं वदन्तीह मनीषिणः ॥ १४४
त्वामेव सर्वं विशति पुनरेव युगक्षये । देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया ॥ १४५
त्वयि सर्वे प्रदृश्यन्ते सुरा ब्रह्मादयोऽपि ये । सर्वं त्वमसि देवानां कर्ता कारयिता च यत् १४६
त्वत्प्रसादात्सुराः सर्वे भवन्तीहाकुतोभयाः । एवं स्तुत्वा महादेवं स तत्र प्रणतोऽब्रवीत् ॥ १४७
भगवंस्त्वत्प्रसादान्मे तपो न क्षरते त्विह । ततो देवः प्रीतमनास्तमृषिं पुनरब्रवीत् ॥ १४८

रुद्र उवाच—

तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रधा । प्राची(च्या)मेवेह वत्स्यामि त्वया सार्धमहं सदा १४९
सरस्वती महापुण्या क्षेत्रे चास्मिन्विशेषतः । न तस्य दुर्लभं किंचिदिह लोके परत्र च ॥ १५०
सरस्वत्युत्तरे तीरे यस्त्यजेदात्मनस्तनुम् । प्राचीतीरे जाप्यपरो न चेह म्रियते पुनः ॥ १५१
आप्लुतो वाजिमेधस्य फलं प्राप्नोति पुष्कलम् । नियमैश्चोपवासैश्च कर्षयन्देहमात्मनः ॥ १५२
जलाहारो वायुभक्षः पर्णाहारश्च तापसः । तथा स्थण्डिलशायी च यमान्वै नियमान्पृथक् ॥ १५३
ये तत्र कुर्वन्ति द्विजा नियमांश्च व्रतानि च । ते यान्ति शुद्धदेहाश्च ब्रह्मणः परमं पदम् ॥ १५४
तस्मिंस्तीर्थे तु यैर्दत्तं तिलमात्रं तु काञ्चनम् । मेरुदानसमं तत्स्यात्पुरा प्राह प्रजापतिः ॥ १५५
तस्मिंस्तीर्थे तु ये श्राद्धं करिष्यन्तीह मानवाः । एकविंशत्कुलोपेताः स्वर्गं यास्यन्ति ते नराः १५६
पितॄणां वल्लभं तीर्थं पिण्डेनैकेन तर्पिताः । ब्रह्मलोकं गमिष्यन्ति पुष्करेणेह तारिताः ॥ १५७

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. पुस्तकस्थः ।

१ क. ख. ग. च. ज. °त् । प्रानृत्यत जगत्सर्वं तें° । २ झ. विप्र । ३ झ. °ता द्विज । तं । ४ क. ख. ग. घ. ङ. ज. सुरासुरस्य । ५ क. ख. ग. घ. ङ. च. ज °णां च शुभं ती° । ६ क. ख. ग. ङ. च. ज °न्ति स्वपुत्रेणे° ।

भूयश्चात्र न वाञ्छन्ति मोक्षमार्गं व्रजन्ति ते। प्राचीनत्वं सरस्वत्या यथा भूतं शृणुष्व तत् ॥ १५८
सरस्वती पुरा प्रोक्ता देवैः सर्वैः सवासवैः । तटं त्वया प्रयातव्यं प्रतीच्यां लवणोदधेः ॥ १५९
वाडवाग्निमिमं नीत्वा समुद्रे निक्षिपस्व ह । एवं कृते सुराः सर्वे भवन्ति भयवर्जिताः ॥ १६०
अन्यथा वाडवाग्निस्तु दहते स्वेन तेजसा । तस्माद्रक्षस्व विबुधानेतस्मादतुलाद्भयात् ॥ १६१
मातेव भव सुश्रोणि सुराणामभयप्रदा । एवमुक्ता तु सा देवी विष्णुना प्रभविष्णुना ॥ १६२
आह नाहं[2] स्ववृत्ताऽस्मि पिता मे व्रियतां विराट् । तस्याऽऽज्ञाकारिणी नित्यं कुमारीह धृतव्रता
पित्रादेशाद्विना नाहं पदमेकमपि क्वचित् । गच्छामि तस्मात्कोऽप्यन्य उपायश्चिन्त्यतां हरे ॥
तत्स्वरूपं विदित्वाऽऽहुस्ते समेत्य पितामहम् ॥ १६४

देवा ऊचुः—

नान्येन शक्यते नेतुं वाडवोऽग्निः पितामह । अदृष्टदोषां मुक्त्वैकां कुमारीं तनयां तव ॥ १६५

पुलस्त्य उवाच—

सरस्वतीं समानीय कृत्वाऽङ्के वरवर्णिनीम् । शिरस्याघ्राय सस्नेहमुक्ता देवी सरस्वती ॥ १६६
मां च देवि सुरांश्चान्यान्सर्वान्पाहि यशस्विनि । नीत्वा विनिक्षिपस्वैनं वाडवं लवणाम्भसि १६७
पितुर्वाक्यं हि तच्छ्रुत्वा वियुक्ता कुररी यथा । पित्रा तथैव सा कन्या रुरोद दीनमानसा १६८
शोभते तन्मुखं तस्याः शोकवाष्पाविलेक्षणम् । सितं विकसितं यद्वत्पद्मं तोयकणोक्षितम् ॥ १६९
तत्तथाविधमालोक्य पितामहपुरःसराः । विबुधाः शोकभारस्य सर्वे वशमुपागताः ॥ १७०
संस्तभ्य हृदयं तस्याः शोकसंतापतापितम् । पितामहस्तामुवाच मा रोदीर्नास्ति ते भयम् १७१
अनलं वह देवि त्वं तव देवानुभावतः । नीत्वा क्षारोदमध्ये तं क्षिपस्व ज्वलनं सुते ॥ १७२
एवमुक्ता तु सा बाला वाष्पाकुलितलोचना । [*प्रणम्य पद्मजन्मानं गच्छाम्युक्तवती तु सा] १७३
मा भैरुक्ता सुरैः सर्वैः पित्रा चापि तथैव सा । त्यक्त्वा भयं हृष्टमनाः प्रयातुं समवस्थिता ॥ १७४
तस्याः प्रयाणसमये शङ्खदुन्दुभिनिःस्वनैः । मङ्गलानां च निर्घोषैर्जगदापूरितं शुभैः ॥ १७५
सिताम्बरधरा धन्या सितचन्दनमण्डिता । +हरहाससमं शुभ्रा सितस्रग्दाममण्डिता ॥ १७६
शरदम्बुदसच्छायतारहारविभूषिता । संपूर्णचन्द्रवदना पद्मपत्रायतेक्षणा ॥ १७७
शुभां कीर्तिं महेन्द्रस्य पूरयन्ती दिशो दश । स्वतेजसा तद्धृदयान्निसृता भासती जगत् ॥ १७८
अनुवव्राज तां गङ्गा तयोक्ता वरवर्णिनी । द्रक्ष्यामि त्वां पुनरहं कुत्र यातासि मे सखि ॥ ७९१
एवमुक्ता तया गङ्गा प्रोवाच मधुरां गिरम् । यदैवं यास्यसि प्राचीं दिशं मां पश्यसे शुभे ॥ १८०
विबुधैस्त्वं परिवृता दर्शनं तत्र सुव्रते । उदङ्मुखी तदा भूत्वा त्यज शोकं शुचिस्मिते ॥ १८१
गङ्गा चोदङ्मुखी पुण्या त्वं तु प्राची सरस्वती । तत्र क्रतुसमं पुण्यं स्नाने दाने च सुव्रते ॥ १८२
श्राद्धदाने तथा नित्यं पितॄणां दत्तमक्षयम् । ये करिष्यन्ति मनुजा विमुक्तास्ते ऋणैस्त्रिभिः १८३
मोक्षमार्गं गमिष्यन्ति विचारो नात्र विद्यते । तामापृच्छत्ततो गङ्गा पुनर्दर्शनमस्तु ते ॥ १८४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. ज पुस्तकस्थः । + इदमर्धं झ. पुस्तकस्थम् ।

---

१ अ. °श्चात्र न चेच्छन्ति । २ क. ख. ड. च. ज °हं स्वतन्त्राऽस्मि । ३ झ. °यते वरान् । त° । ४ क. ख. ग. घ. ङ. च. ज °भावस्य । ५ क. ख. ङ. च संवीक्ष्य । ६ ग. घ. ज °म् । मानलाभश्च भविता त° । ७ क. ख. ग. घ. ङ. च. ज °त्वा क्षीरो° । ८ क. ख. ग. घ. ङ. च. ज. °म्बुजस° । ९ झ. °म् । यां चैव । १० झ. पश्यतीं । ११ झ. तव । १२ अ. °ण्या तत्र प्रा° ।

गच्छ स्वमालयं भद्रे स्मर्तव्याऽहं त्वयाऽनघे। यमुनाऽपि तथैवं सा गायत्री च मनोरमा ॥१८५
सावित्र्या सहिताः सर्वाः सख्यः संप्रेषितास्तदा। ततो विसर्ज्य तान्देवान्नदीभूता सरस्वती ॥
विसङ्कस्याऽऽश्रमपद उद्भूता सा मनस्विनी। अधस्तात्प्लक्षवृक्षस्य अवरुह्य शतप्रभम् ॥ १८७
[३]अवतीर्णा महाभागा देवानां पश्यतां तदा। विष्णुरूपस्तरुः सोऽत्र सर्वदेवैः सुवन्दितः ॥ १८८
[४]संसेव्यते द्विजैर्नित्यं फलहेतोर्महोदयः। अनेकशाखावितनश्चतुर्मुख इवापरः ॥ १८९
तत्कोटरकुटीकोटिप्रविष्टानां द्विजन्मनाम्। श्रूयन्ते विविधारावाः सुराणां रक्तचेतसाम् ॥ १९०
[५]वनस्पतिरपुष्पोऽपि पुष्पितश्चोपलक्ष्यते। जातीचम्पकैवत्पुष्पैः शाखोलग्नैः शुकैः शुभैः ॥ १९१
केतकीव वलाकाभिरशोभत सरिद्वरा। कोकिलाभिः समालेव अपुष्पैः पुष्पितेव सा ॥ १९२
हरेणेव यथा गङ्गा प्लक्षेणेव हि सा तथा। तत्रस्था सा तदा देवं प्रोवाचाथ जनार्दनम् ॥ १९३

सरस्वत्युवाच—

समर्पयस्व तं वह्निं देवादेशं करोम्यहम्। एवमुक्तेन सा तेन प्रत्युक्ता विष्णुना तदा ॥ १९४

विष्णुरुवाच—

न ते दाहभयं तद्वत्त्वयेदं वह्निराट् स्वयम्(?)। पश्चिमं सागरं नेतुं वाडवं ज्वलनं शुभे ॥ १९५
एवं क्रमेण गच्छन्त्या(न्ती) तदाप्तं प्राप्स्यसे शुभे ॥ १९६

पुलस्त्य उवाच—

ततस्तं शातकौम्भस्थं कृत्वाऽसौ वडवानलम्। समर्पयत गोविन्दः सरस्वत्या महोदरे ॥ १९७
सा तं गृहीत्वा सुश्रोणी प्रतीच्यभिमुखी ययौ। अन्तर्धानेन संप्राप्ता पुष्करं सा महानदी*१९८
येषु तत्र कृतो होमः कुण्डेष्वासीद्विरिञ्चिना। तानि सर्वाणि संप्लाव्य तोयेनाप्युद्गता हि सा ॥
तत्र क्षेत्रे महापुण्या पुष्करे सा तथोत्थिता। तेन +तत्पूरणं प्रोक्तं वायुना जगदायुना ॥ २००
साऽपि तत्क्षेत्रमासाद्य पुण्यं पुण्या महानदी। सरस्वती स्थिता देवी मर्त्यानां पापनाशिनी२०१
तत्र ये शुभकर्माणः पुष्करस्थां सरस्वतीम्। पश्यन्ति ते न पश्यन्ति अधोगानामधोगतिम्॥२०२
यः पुनस्तत्र भावेन नरः स्नानं समाचरेत्। स ब्रह्मलोकमासाद्य ब्रह्मणा सह मोदते ॥ २०३
यस्तु दद्यात्तत्र दधि ब्राह्मणाय मनोरमम्। सोऽप्याग्निलोकमासाद्य भुङ्क्ते भोगान्सुशोभनान्२०४
वरं प्रावरणं योऽपि भक्त्या दद्याद्विजातये। सोऽपि तद्वस्त्रदानस्य फलं दशगुणं लभेत् ॥ २०५
ज्येष्ठकुण्डे नरः स्नात्वा यः संतर्पयते पितॄन्। स तानुद्धरते सर्वान्नरकादपि शुद्धधीः ॥ २०६
क्षेत्रे पैतामहे पूतां पुण्यां प्राप्य सरस्वतीम्। नरः किं प्रार्थयेदन्यत्तीर्थं ब्रह्मसुतोऽब्रवीत् ॥ २०७
तस्मात्सर्वेषु तीर्थेषु स्नातः प्राप्नोति यत्फलम्। तत्सर्वं प्राप्नुयान्मर्त्यो ज्येष्ठकुण्डे सकृत्प्लुतः २०८
किमत्र बहुनोक्तेन क्षेत्रे तीर्थे गतासुना। येनैतत्त्रितयं प्राप्तं प्राप्ता तेन गतिः परा ॥ २०९
काले क्षेत्रे तथा तीर्थे स्नात्वा हुत्वाऽपि तत्र यः। प्रयच्छति द्विजायाथ सोऽनन्तं सुखमश्नुते ॥

---

* एतदग्रे क्वचित्पुस्तके "मर्यादा वर्तते तस्मिंस्तद्भूता विमला सरित्। पुष्करारण्यं विपुलं सुरसिद्धनिषेवितम्। पितामहेन यत्राऽऽसीद्यत्र सत्रं निषेवितम्। सिद्ध्यर्थं मुनिमुख्यानामागता सा महानदी" इति श्लोकद्वयमधिकं दृश्यते।
+ तत्प्रवरमिति क्वचित्पाठः।

---

१ झ. °ह्य च तं तनुम्। २ झ. सुदर्शितः। ३ झ. °कसत्पु°। ४ झ. °खालैस्तैः सुकाननैः। के°। ५ ज. °कीभिः [illegible]भिरशोकैः सारिकेभ्भिव। कोकिलाभिः सुमनसां पुष्पकैः पुष्पि°। ६ क. ख. ङ. संपूर्णं। [illegible] ज.

कार्तिके मासि शुक्ले च वैशाखे शशिभूषणे । चन्द्रसूर्योपरागे च काले तु कुरुजाङ्गले ॥ २११
क्षेत्रेष्वेतेषु तीर्थानि यान्युक्तानि मुनीश्वरैः । तेषां पुण्यतमं तीर्थमिदमाह पितामहः ॥ २१२
कुण्डे तु मध्यमे स्नात्वा कार्तिक्यां यः पुमान्द्विजे । प्रयच्छते चापि द्रव्यं सोऽश्वमेधमवाप्नुयात् ॥
एवं कनीयस्यप्येव कुण्डे स्नात्वा समाधिना । यः प्रयच्छति विप्राय सुरूपामपि शालिकाम् ॥
स प्रयाति नरः क्षिप्रमग्निलोकं मनोरमम् । त्रिःसप्तकुलसंयुक्तो भुङ्क्ते तत्र महाफलम् ॥ २१५
तस्मात्सर्वप्रयत्नेन गमनाय मतिः स्थिरा । पुरुषेण तु कर्तव्या पुष्करावाप्तये सदा ॥ २१६
पुष्करारण्यमासाद्य प्राची यत्र सरस्वती । मतिः स्मृतिस्तथा[1] प्रज्ञा मेधा बुद्धिर्गिरा शुभा[2]॥२१७
सरस्वत्याः सुपर्यायाः षडेते संप्रकीर्तिताः । ततः प्रभृति यत्रासौ प्राचीभूता सरस्वती ॥ २१८
तत्रस्थं तज्जलं येऽपि पश्यन्ति तटसंस्थिताः । तेऽप्यश्वमेधस्य फलं[3] लभन्ते नात्र संशयः ॥२१९
योऽवतीर्य पुनस्तत्र कश्चित्स्नानं समाचरेत् । नरः समाधियुक्तात्मा ब्रह्मणस्यानुचरो[4] भवेत्[5] ॥२२०
शाकादिनाऽपि हि पितॄन्यस्तत्रार्चयते नरः । सोऽभ्येति विपुलान्भोगांस्तेषामेवानुभावतः[6]॥२२१
ये पुनर्विधिना तत्र श्राद्धं कुर्वन्ति मानवाः । ते नयन्ति पितॄन्स्वर्गं नरकादपि दुःखदात्[7]॥ २२२
नृत्यन्ति पितरस्तस्य यस्तत्र कुशमिश्रितम् । स्नात्वा प्रयच्छते तोयं पूतं तेषां तिलान्वितम् २२३
[*तेऽपि तुष्टाः पुनस्तस्य प्रयच्छन्त्यमितं फलम्] । सर्वेषामेव तीर्थानामिदमेवाधिकं स्मृतम् २२४
आदितीर्थमिदं तस्मात्तीर्थानां भुवि विश्रुतम् । धर्मापवर्गयोः क्रीडानिधिभूतमवस्थितम् ॥ २२५
सरस्वत्या पुनश्चैव समेतं गुणवत्तरम् । धर्मार्थकाममोक्षाणां चतुर्णामपि दायकम् ॥ २२६
येऽप्यत्र मलनाशाय पुमांसो विविशुर्जलम् । गोप्रदानसमं तेषां सुखेनैव फलं भवेत् ॥ २२७
सुवर्णदानेन सममेवमाहुर्मनीषिणः । तर्पणात्पिण्डदानाच्च नरकेष्वपि संस्थिताः ॥ २२८
स्वर्गं प्रयान्ति पितरस्तत्र पुत्रेण तारिताः । पुष्करेऽपि सरस्वत्यां ये पिबन्ति जलं जनाः ॥२२९
ते लभन्त्यक्षयाँल्लोकान्ब्रह्मविश्वेशशब्दितान्[8] । स्वर्गनिश्रेणिका भूता पुष्करे च सरस्वती ॥२३०
सा पुण्यवद्भिः संप्राप्तुं पुंभिः शक्या महानदी । मुनिभिर्धर्मतत्त्वज्ञैर्यत्र यत्र निषेविता ॥ २३१
तस्मात्सर्वत्र सा देवी पवित्रा सर्वतः स्थिता । पुष्करे तु विशेषेण पूतात्पूततमा हि सा ॥ २३२
नदी सरस्वती पुण्या सुलभा जगति स्थिता । दुर्लभा सा कुरुक्षेत्रे प्रभासे पुष्करे तथा ॥ २३३
तत्तीर्थं सर्वतीर्थानां प्रवरं विहितं भुवि । धर्मार्थकाममोक्षाणां चतुर्णामपि साधकम् ॥ २३४
प्राचीं सरस्वतीं प्राप्य योऽन्यत्तीर्थं हिमाग(समीह)ते । स करस्थं समुत्सृज्य अमृतं विषमिच्छति
ज्येष्ठे ज्येष्ठा प्रयागस्य मध्यमे मध्यमा स्मृता । प्रदक्षिणं ततो गच्छेत्कनीयांसं विचक्षणः ॥२३६
त्रिष्वप्येतेषु स्नायीत कुर्याच्चापि प्रदक्षिणम् । यत्नवान्प्रयतो नित्यं ततः पश्येत्पितामहम् २३७
अनुलोमविलोमाभ्यां तथा व्यस्तसमस्तयोः । स्नातव्यं पुष्करे नित्यं ब्रह्मलोकमभीप्सता ॥२३८
त्रीणि शृङ्गाणि शुभ्राणि त्रीणि प्रस्रवणानि च । पुष्कराँख्यानि सिद्धानि न विद्मस्तत्र कारणम्
कनीयांसं (?) मध्यमं च तृतीयं ज्येष्ठपुष्करम् । शृङ्गशब्दाभिधानानि[9] शुभ्रप्रस्रवणानि च ॥ २४०

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. ज. पुस्तके ।

१ क. ख. ग. घ. ङ. च. ज. शुभा । २ क. ख. ङ. च. ज. स्मृतिः शुभा प्रज्ञा मेधा बुद्धिर्दया परा । स॰ । घ. स्मृतिर्धृतिः प्रज्ञा मेधा बुद्धिर्दया परा । स॰ । ३ झ. ॰लं सुखेनैव लभन्ति वै । योऽ॰ । ४ ञ. ब्रह्मणोऽनु॰ । ५ ख. ॰त् । एकदिनेऽपि हि तत्र हरिं चार्च॰ । ६ झ ॰नुमोदितः । ७ झ. ॰रायानि । ८ क. ख. ङ. च. ज. ॰ह्मशुभ्राभि॰ । घ. ॰ह्मसागाभि॰ ९ झ. ॰च्दानिधा॰ ।

धर्मार्थकाममोक्षाणां संकल्पैरफलं नरः । यस्तत्र संत्यजेद्देहं मोक्षं याति न संशयः ॥ २४१
प्रयतः संयतस्तस्यां स्नात्वा दद्याद्द्विजे शुभाम् । गामेकां शास्त्रपूतात्मा लोकांश्चाऽऽप्नोति सोऽक्षयान्
किमत्र बहुनोक्तेन रात्रावपि हि योऽर्थिने । अर्थं प्रयच्छते स्नात्वा सोऽनन्तसुखभाग्भवेत् २४३
तत्र दानं प्रशंसन्ति [*तिलानां मुनिसत्तमाः । कृष्णपक्षे चतुर्दश्यां]स्नानं च विहितं सदा॥२४४
पिण्याकेन गुडेनापि पिण्डं तत्र प्रयच्छति । पितॄणां प्रयतो भूत्वा पितृलोकं च गच्छति ॥ २४५
पुष्करारण्यमासाद्य पुनस्तस्मात्सरस्वती । अन्तर्धानं स्थि(श्रि)ता गन्तुं प्रवृत्ता पश्चिमामुखी २४६
नातिदूरे ततस्तस्य पुष्करस्य सुशोभना । खर्जूरीवनमासाद्य फलपुष्पोपशोभितम् ॥ २४७
तत्रोद्भिन्ना पुनर्देवी वने मुनिमनोरमे । सर्वत्र कुसुमोपेते सिद्धचारणसेविते ॥ २४८
नन्दा नाम सरिच्छ्रेष्ठा त्रिषु लोकेषु विश्रुता । मीननक्रझषोपेता विमलोदकमण्डिता ॥ २४९

सूत उवाच—

अथ देवव्रतः प्राह किमन्या सा सरिद्वरा । एतन्मे कौतुकं ब्रह्मन्नन्दाशब्दा सरस्वती ॥ २५०
यथा भूता येन कृता कारणेन सरिद्वरा । एवमुक्ते पुलस्त्योऽसौ भीष्मायैतत्पुरातनम् ॥ २५१
आख्यातुमुपचक्राम नन्दा नामेति यत्स्मृतम् । क्षत्रव्रतधरो नित्यमासीद्राजा प्रभञ्जनः ॥ २५२
प्रवृत्तोऽसौ मृगान्हन्तुं वने तस्मिन्महाबलः । स ददर्श ततस्तस्मिन्मृगीं गुल्मान्तरे स्थिताम् २५३
मार्गणेन सुतीक्ष्णेन तां विव्याध पुरोगताम् । सा विलोक्य दिशः सर्वास्तं दृष्ट्वा शरपाणि(ति)नम्
आह तं किं कृतं मूढ त्वयैतत्कर्म दुष्कृतम् । स्तन्यं यावत्प्रयच्छामि सुतस्याधोमुखी स्थिता ॥
तावत्ते मांसलोभेन विद्धाऽहमकुतोभया । पिबन्तं चैव सुप्तं च मूढ मैथुनमागतम् ॥ २५६
एवंविधं मृगं राजा न हन्यात्प्राङ्मया श्रुतम् । स्तन्यं तु तनयस्यास्य प्रयच्छन्ती हता त्वया ॥
बाणेनाशनिकल्पेन निर्दोषा वनमध्यगा । तस्मात्त्वमपि दुर्बुद्धे क्रव्यादत्वमवाप्स्यसि ॥ २५८
वनेऽस्मिन्कण्टकाकीर्णे व्याघ्ररूपं त्वमाप्नुहि । शापप्रदानं श्रुत्वेत्थं स राजा पुरतः स्थितः ॥
प्रोवाच प्राञ्जलिर्भूत्वा तां मृगीं व्यथितेन्द्रियः ॥ २५९

राजोवाच—

स्तन्यं तु तनयस्येत्थं प्रयच्छन्ती न मे मता । अज्ञानेन हता भद्रे प्रसीद सुसमाधिना ॥ २६०
व्याघ्ररूपमहं मुक्त्वा प्राप्स्ये वै मानुषं कदा । एवंविधस्य शापस्य विमोक्षं शंस मेऽधुना २६१
एवमुक्ते मृगी तस्य प्रोवाच वचनं शुभा ॥ २६२

मृग्युवाच—

राजन्नब्दशतान्ते तु शापस्याऽऽगतया गवा । नन्दया सह संवादमासाद्यान्तो भविष्यति २६३

पुलस्त्य उवाच—

मृग्योक्तैर्वचनै राजा व्याघ्र एवाभवत्तदा । नखदंष्ट्रायुधोपेतो [12]घोररूपो विभीषणः ॥ २६४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग घ. ङ. च. ज. पुस्तकस्थः ।

---

१ ख. °ल्पैकफ° । ग. °ल्पैस्तु फ° । २ ख. ग. घ. ङ. च. ज. °कां मन्त्रपूतां च लो° । ३ क. ख. ङ. च. ज. स्नानं । ४ झ. °पं.नेङ्गुदेना° । ५ झ. नाभिभूता ततश्चास्य । ६ क. ख. ग. घ. ङ. च. ज. °त्रोपित्वा पु° । ७ क. ख. ङ. च. ज. ज. °ता । मांसलोभेन विद्धाऽहं तरसा अकु° । ८ क. ख. ग. घ. ङ.च. ज. °न्तं सुप्तवत्सं च गूढ° । ९ क. ख. ग. घ. ङ. च. ज. व्यथितेन्द्रियाम् । १० क. ग. ङ. च. ज. °स्नेह प्र° । ११ क. ख. ग. ङ. च. ज. मे मृगि । ए° । १२ क. च. ज. व्याघ्ररूपो ।

तत्रासौ भक्षयन्नास्ते मृगान्हत्वा चतुष्पदान् । द्विपदानपि तत्रस्थान्कालेन क्रमयोजितान् ॥ २६५
एवं तत्र वने तस्य वत्सराणां शतं गतम् । आत्मानं निन्दमानस्य मृगमांसानि खादतः ॥ २६६
कदाऽहं मानुषं भावं गमिष्ये पुनरीदृशम् । कुत्सितं न करिष्यामि वियोनिकरणं महत् ॥ २६७
पश्यतां मांसलोभेन मृगयां परिधावताम् । आपदा सहितं प्राप्तं मनुष्याणां भयावहम् ॥ २६८
दर्शनं दुःखदं मन्ये मृगाणां मानुषैः सह । पापेन पापतां [१]नीत आर्योऽपि सततं कुले ॥ २६९
उत्पन्नो विकृतिं नीतः पश्य कालस्य पर्ययम् । तस्मान्मे सुकृतं नास्ति हिंसाऽप्येका विगर्हिता
तया तु प्राप्यते दुःखं न च मोक्षो भविष्यति । कथं मे भविता मोक्षः कथं सत्या मृगी भवेत् ॥
गते वर्षशते तस्य वसतस्तु वने तदा । आयातं गोकुलं काले यवसोदककारणात् ॥ २७२
गोवाटवाटीसंस्थानं तत्तत्र समवस्थितम् । वनोपकण्ठे महता रवेणाऽऽपूरितं च यत् ॥ २७३
क्षीवैर्गोपैः समाकीर्णं यादवैरिव तद्वनम् । निशिवासरवोपेतं गोपानां तु शुभप्रदम् ॥ २७४
एवं तु वसतस्तस्य खर्जूरीवनसंसदि । हृष्टा पुष्टा तथा तुष्टा नन्दा वै नाम नामतः ॥ २७५
गोमण्डलस्य सा मुख्या हंसवर्णा घटस्रवा । दीर्घघोणा विभक्ताङ्गी वन्धुरौ च तनुत्वचा ॥ २७६
नीलकण्ठा शुभग्रीवा घण्टाली मधुरस्वरा । सा च यूथस्य सर्वस्य अग्रे चरति निर्भया ॥ २७७
घासस्थानं चरेच्छन्नं गत्वैका च यथासुखम् । यथेष्टकामं सुरभिरच्छिन्नं चरते तृणम् ॥ २७८
रोहितो नाम तत्रान्यः पर्वतः सरितस्तटे । अनेककंदरदरीगुहाशतनिषेवितः ॥ २७९
तस्य पूर्वोत्तरे भागे घोरे तृणसमाकुले । संकटे विषमे दुर्गे भैरवे लोमहर्षणे ॥ २८०
मृगसिंहसमाकीर्णे बहुश्वापदसेविते । वल्लीवृक्षैश्च गहने शिवाशतनिनादिते ॥ २८१
दुर्गेऽस्मिन्वसते रौद्रः कालरूपी भयंकरः । द्वीपी शोणितमांसाशी महादंष्ट्रो महाबलः ॥ २८२
महापर्वतसंकाशो मेघगर्जितनिःस्वनः । महागुहादरीवक्त्रस्तीक्ष्णदंष्ट्रो नखायुधः ॥ २८३
नन्दो नाम स धर्मात्मा स च गोपहिते रतः । अच्छिन्नाग्रैस्तृणैर्दीर्घैर्गोधनं परिरक्षति ॥ २८४
तस्य यूथपरिभ्रष्टा नन्दा सा तृणतृष्णया । चरन्ती व्याघ्रपुरतः सा वै धेनुरुपागता ॥
अभ्यद्रवच्च तां द्वीपी तिष्ठ तिष्ठेति चाब्रवीत् ॥ २८५

व्याघ्र उवाच—

त्वं मेऽद्य विहितो भक्षः स्वयं प्राप्ताऽसि धेनुके ॥ २८६

पुलस्त्य उवाच—

द्वीपिनश्च वचः श्रुत्वा निष्ठुरं लोमहर्षणम् । शुभ्ररूपान्वितं बालं भद्रमिन्दुसमप्रभम् ॥ २८७
सुतं स्मरति सा धेनुः स्नेहार्द्रा गद्गदस्वरा । दह्यन्ती पुत्रशोकेन नन्दा सा पुत्रवत्सला ॥ २८८
रुदती करुणं चैव निराशा पुत्रदर्शने । द्वीपी दृष्ट्वा तु तां धेनुं क्रन्दमानां सुदुःखिताम् ॥ २८९
उवाच वचनं घोरं धेनुके किं प्ररुद्यते । दैवान्मुखोपपन्नाऽसि भक्षस्त्वं मे यदृच्छया ॥ २९०
रुदत्या वा हसन्त्या वा नाद्य ते जीवनं भवेत् । विहितं भुज्यते लोके स्वयं प्राप्ताऽसि धेनुके ॥ २९१
मृत्युस्ते विहितोऽद्यैव वृथा किमनुशोचसि । पप्रच्छ तां पुनर्द्वीपी किमर्थं रुदितं त्वया ॥ २९२
कौतुकं सांप्रतं जातं महन्मे कथयस्व वै । व्याघ्रस्य वचनं श्रुत्वा नन्दा वाक्यमथाब्रवीत् ॥ २९३

---

१ ग. घ. नीतो ह्यपाप्यपि सतां कु° । २ क. ख. ग. घ. ङ. च. ज. तु व्रजे शुभे । ए° । ३ क. ख. ग. घ. ङ. च. °राङ्गी त° । ४ झ. ग्रामस्थानं । ५ क. ख. प. घ. ङ. च. ज. °हासत्त्वानि° । ६ ख. ग. घ. ङ. च. ज. गद्गदाक्षरम् । ७ घ. ज. °वात्सुखोप° । झ. °वाद्यथोप° ।

नन्दोवाच—

क्षन्तुमर्हसि मे सर्वं कामरूप नमोऽस्तु ते । त्वां समासाद्य लोकस्य परित्राणं न विद्यते ॥ २९४
जीवितं नैव शोचामि प्राप्तव्यं मरणं मया । जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥ २९५
तस्मादपरिहार्येऽर्थे न शोचामि मृगाधिप । देवैरपि तथा सर्वैर्मर्तव्यमवशैर्ध्रुवम् ॥ २९६
तस्मात्तु नाहमेवैका व्याघ्र शोचामि जीवितम् । किं तु स्नेहेन मे शोको दुःखेन रुदितं मया ॥
अस्ति मे हृदि संतापस्तं च त्वं श्रोतुमर्हसि । प्रथमे वयसि प्राप्ते प्रसूताऽहं मृगाधिप ॥ २९८
इष्टः प्रथमजः पुत्रो मम व्याघ्र महाबलः । क्षीरपायी च मे वत्सस्तृणं नाद्यापि जिघ्रति ॥ २९९
स च गोपकुले बद्धः क्षुधार्तो मामवेक्षते । तमहं चानुशोचामि कथं जीविष्यते सुतः ॥ ३००
तस्येच्छामि स्तनं दातुं पुत्रस्नेहवशं गता । पाययित्वा च तं वत्समवलिह्य च मूर्धनि ॥ ३०१
सखीनामर्पयित्वा तु संदिश्य च हिताहितम् । पुनः प्रत्यागमिष्यामि यथेष्टं भक्षयिष्यसि ॥ ३०२

पुलस्त्य उवाच—

स नन्दाया वचः श्रुत्वा मृगेन्द्रः पुनरब्रवीत् ॥ ३०३

व्याघ्र उवाच—

किं ते पुत्रेण कर्तव्यं मरणं किं न बुध्यसे । त्रसन्ति सर्वभूतानि मां निरीक्ष्य म्रियन्ति च ॥
त्वं पुनः कृपयाऽऽविष्टा पुत्र पुत्रेति भाषसे ॥ ३०४
न पुत्रा न तपो दानं न माता न पिता सुहृत् । शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ ३०५
कथं त्वं गोकुलं गत्वा गोपीजनसमाकुलम् । वृषभैर्नादितं रम्यं बालवत्सविभूषितम् ॥ ३०६
भूषणं देवलोकस्य स्वर्गतुल्यं न संशयः । नित्यप्रमुदितं दिव्यं सर्वदैवतपूजितम् ॥ ३०७
यत्पवित्रं पवित्राणां मङ्गलानां च मङ्गलम् । यत्तीर्थं सर्वतीर्थानां रम्याणां रम्यमुत्तमम् ॥ ३०८
[*समस्तगुणसंपन्नमीश्वरायतनं महत् । यत्ख्यातं सर्वतीर्थानां भूमिस्वर्गमनुत्तमम् ] ॥ ३०९
गोपीमन्थनशब्देन बालवत्सरवेण च । गवां हुंकारशब्देन अलक्ष्मीः प्रतिहन्यते ॥ ३१०
यत्र वत्साश्च हुंकारकरुणा मातृकाङ्क्षया । यद्गोपैः पालितं शूरैर्बाहुयुद्धकृतश्रमैः ॥ ३११
प्रगीतनृत्यसंलापं नन्दितास्फोटनादितम् । इतस्ततः स्थितैर्वत्सैर्नर्द्यमानैः समन्ततः ॥ ३१२
सरोवद्राजते गोष्ठं चलद्भिरिव पङ्कजैः । तच्छ्रीनिकेतनं रम्यं हृष्टपुष्टजनाकुलम् ॥ ३१३
गोलोकप्रतिमं दृष्ट्वा कथं प्रत्यागमिष्यसि । पञ्च भूतानि मे भद्रे पिबन्तु रुधिरं तव ॥
न निर्विण्णानि भूतानि वाङ्मात्रेण करोम्यहम् ॥ ३१४

नन्दोवाच—

अहं प्रथमवत्सा तु मृगेन्द्र शृणु मे वचः । दृष्ट्वा सखीः सुतं बालं गोपांश्च प्रतिपालकान् ॥ ३१५
गोपीजनमुपामन्त्र्य जननीं तां विशेषतः । शपथैरागमिष्यामि यदि मन्यसि मुञ्च माम् ॥ ३१६
यत्पापं ब्रह्महत्यायां मातापितृवधे तथा । तेन पापेन लिप्येऽहं +यद्यहं नाऽऽगमे पुनः ॥ ३१७

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । +अत्राऽऽर्षत्वात्साधुत्वं 'नाऽऽगमिष्यामि यद्यहम्' इति वा पाठ्यम् । एवमग्रेऽपि ।

---

१ झ. °स्य विहितो मृ° । २ ञ. °मजातश्च सुतस्तु मम बालकः । क्षीं° । ३ ग. प्रयन्ति । ४ झ. मन्त्रा । ५ झ. रम्यं । ६ ग. घ. °नां वश्यानां वश्यमु° । ज. °नां धन्यानां धन्यमु° । ७ झ. यत्स्नानं स° । ८ क. ख. ग. घ. ङ. च. ञ. सौम्यं । ९ झ. °सि । अहं [illegible] पिबामि रु° । १० झ. [illegible] ।

[*यत्पापं लुब्धकानां तु म्लेच्छानां गरदायिनाम् । तेन पापेन लिप्येऽहं यद्यहं नाऽऽगमे पुनः ]
गोष्ठविघ्नांश्च ये कुर्युः स्वपन्तं ताडयन्ति च । तेन पापेन लिप्येऽहं यद्यहं नाऽऽगमे पुनः ॥ ३१९
सकृद्दत्त्वा तु यः कन्यां द्वितीये दातुमिच्छति । तेन पापेन लिप्येऽहं यद्यहं नाऽऽगमे पुनः ॥ ३२०
द्विभार्यः पुरुषो यस्तु स्नेहादेकां प्रपश्यति । तेन पापेन लिप्येऽहं यद्यहं नाऽऽगमे पुनः ॥ ३२१
[+यस्त्वनर्हान्बलीवर्दान्विषमं वाहयेत्पुमान् । इत्येतैः पातकैर्घोरैः †कुर्वेऽहं शपथान्हरे ॥ ३२२
कथायां कथ्यमानायां विघ्नं कारयते तु यः । तेन पापेन लिप्येऽहं यद्यहं नाऽऽगमे पुनः] ॥ ३२३
गृहं यस्याऽऽगतं मित्रं निराशं प्रतिगच्छति । तेन पापेन लिप्येऽहं यद्यहं नाऽऽगमे पुनः ॥ ३२४
इत्येतैः पातकैर्घोरैरागमिष्याम्यहं पुनः । [+बुद्ध्वा संप्रत्ययं द्वीपी पुनर्वचनमब्रवीत् ॥ ] ३२५

द्वीप्युवाच—

संजातः प्रत्ययोऽस्माकं शपथैस्तव धेनुके । कदाचिन्मन्यसे गत्वा मूढोऽसौ वञ्चितो मया ॥ ३२६
अत्रापि केचिद्वक्ष्यन्ति शपथैर्नास्ति पातकम् । [†कामिनीषु विवाहेषु गवां मुक्तौ तथैव च ॥] ३२७
प्राणात्यये समुत्पन्ने श्रद्धातव्यं न च त्वया । लोकेऽस्मिन्नास्तिकाः केचिन्मूर्खाः पण्डितमानिनः ॥
भ्रामयिष्यन्ति ते बुद्धिं चक्रारूढमिव क्षणात् । कुतर्कहेतुदृष्टान्तैरज्ञानावृतचेतसः ॥ ३२९
मोहयन्ति नराः क्षुद्रा आगमार्थविशारदाः । अतथ्यान्यपि तथ्यानि दर्शयन्त्यतिपेशलाः ॥ ३३०
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः । प्रायः कृतार्थो लोकोऽयं मन्यते नोपकारिणम् ॥ ३३१
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् । न तं पश्यामि लोकेऽस्मिन्कृते प्रतिकरोति यः ॥ ३३२
सर्वस्य हि कृतार्थस्य मतिरन्या प्रजायते । ऋषिदेवासुरनरैः शपथाः कार्यसिद्धये ॥ ३३३
कृताः परस्परं पूर्वं तांस्तु मन्यामहे वयम् । सत्येनापि शपेद्यस्तु देवाग्निगुरुसंनिधौ ॥ ३३४
तस्य वैवस्वतो राजा धर्मस्यार्धं निकृन्तति । मा ते बुद्धिर्भवेदेवं शपथैरेष वञ्चितः ॥
त्वयैव दर्शितं सर्वं यथेष्टं कुरु सांप्रतम् ॥ ३३५

नन्दोवाच—

एवमेव मया साधो कस्त्वां वञ्चयितुं क्षमः । आत्मैव वञ्चितस्तेन यः परं वञ्चयिष्यति ॥ ३३६

द्वीप्युवाच—

धेनुके गच्छ पश्य त्वं पुत्रकं पुत्रवत्सले । पाययित्वा स्तनं वत्समवलिह्य च मूर्धनि ॥ ३३७
मातरं भ्रातरं दृष्ट्वा सखीस्वजनबान्धवान् । सत्यमेवाग्रतः कृत्वा शीघ्रमागमनं कुरु ॥ ३३८

पुलस्त्य उवाच—

एवं सा शपथान्कृत्वा धेनुर्वै सत्यवादिनी । अनुज्ञाता मृगेन्द्रेण प्रयाता पुत्रवत्सला ॥ ३३९
अश्रुपूर्णमुखी दीना वेपमाना सुदुःखिता । हम्भारवं प्रमुञ्चन्ती पतिता शोकसागरे ॥ ३४०
करीव चरणग्राहं गृहीतः सलिलाशये । अशक्ता तत्परित्राणे विलपन्ती मुहुर्मुहुः ॥ ३४१
सा तु वै गोकुलं प्राप्य इन्द्रनद्यास्तटे स्थितम् । श्रुत्वा तु वत्सं क्रोशन्तं पर्यधावत संमुखी ॥ ३४२

---

* धनुश्चिह्नान्तर्गतः पाठो ज.पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. पुस्तकस्थः । † कुर्वती शपथान्सतीति क्वचित्पाठः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । † धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ अ. गोषु वि° । २ क. ज. शपन्ते । ३ क. ख. ङ. च. ज. °मिदं क्ष° । ४ क. घ. ङ. च. ज. °तुवृत्तान्तै° । ५ ग. घ. कथम् । ६ ग. घ. °रेव निश्चितः । ७ अ. प्राप्ता हरिर्नद्या° ।

उपसृप्य तु तं बालं बाष्पपर्याकुलेक्षणा । संप्राप्य मातरं वत्सः शङ्कितः परिपृच्छति ॥ ३४३

वत्स उवाच—

न ते पश्यामि सौम्यत्वं शर्म नैवाद्य लक्षये। उद्विग्ना चापि ते दृष्टिर्भीता चातीव लक्ष्यसे ॥ ३४४

नन्दोवाच—

पिव पुत्र स्तनं मेऽद्य कारणं यदि पृच्छसि । अशक्ताऽहं तवाऽऽख्यातुं कुरु तृप्तिं यथेप्सिताम् ॥
अपश्चिमं तु ते पुत्र दुर्लभं मातृदर्शनम् । एकाहमद्य मे पीत्वा प्रभाते कस्य पास्यसि ॥ ३४६
मयाऽद्य पुत्र गन्तव्यं शपथैरागता ह्यहम् । क्षुत्क्षामस्य तु व्याघ्रस्य दातव्यं चाऽऽत्मजीवितम् ॥
[*नन्दायाश्च वचः श्रुत्वा वत्सो वचनमब्रवीत्] ॥ ३४७

वत्स उवाच—

अहं तत्र गमिष्यामि यत्र त्वं गन्तुमिच्छसि । श्लाघ्यं ममापि मरणं त्वया सह न संशयः ॥ ३४८
एकाकिनाऽपि मर्तव्यं मयाऽपि च त्वया विना । यदि मां सहितं मातर्वने व्याघ्रो हनिष्यति ॥
या गतिर्मातृभक्तानां ध्रुवं सा मे भविष्यति । तस्मादवश्यं यास्यामि त्वया सह न संशयः ३५०
अथवा तिष्ठ मातस्त्वं शपथाः सन्तु ते मम । जननीविप्रयुक्तस्य जीविते किं प्रयोजनम् ॥ ३५१
अनाथस्य च मे नित्यं को हि नाथो भविष्यति । नास्ति मातृसमो बन्धुर्बालानां क्षीर[३]पायिनाम्
नास्ति मातृसमो नाथो नास्ति मातृसमा गतिः । नास्ति मातृसमः स्नेहो नास्ति मातृसमं सुखम्
नास्ति मातृसमो देव इह लोके परत्र च । एतं वै परमं धर्मं प्रजापतिविनिर्मितम् ॥
ये तिष्ठन्ति सदा पुत्रास्ते यान्ति परमां गतिम् ॥ ३५४

नन्दोवाच—

ममैव विहितो मृत्युर्न त्वं पुत्राऽऽगमिष्यसि । [+न चायमल्पजीवानां मृत्युः स्यादन्यमृत्युना ॥
अपश्चिमस्त्वयं पुत्र मातृसंदेश उत्तमः । अत्र तिष्ठस्व मद्वाक्ये ततः शुश्रूषणं पुनः ] ॥ ३५६
जले[४] वने च विचरन्प्रमादं मा करिष्यसि । प्रमादात्सर्वभूतानि विनश्यन्ति न संशयः ॥ ३५७
न च लोभेन वं[५](स)र्तव्यं विषमस्थं तृणं क्वचित् । लोभाद्विनाशः सर्वेषामिह लोके परत्र च ३५८
समुद्रमटवीं दुर्[६]गं विशन्ते लोभमोहिताः । लोभादकार्यमत्युग्रं विद्वानपि समाचरेत् ॥ ३५९
लोभात्प्रमादाद्विश्रम्भात्त्रिविधैः क्षीयते जगत् । तस्माल्लोभं न कुर्वीत न प्रमादं न विश्वसेत् ॥
आत्मा हि सततं पुत्र रक्षणीयः प्रयत्नतः । सर्वेभ्यः श्वापदेभ्यश्च म्लेच्छचौरादिसंकटे ॥ ३६१
तिरश्चां पापयोनीनामेकत्र वसतामपि । विपरीतानि चित्तानि विज्ञायन्ते न पुत्रक ॥ ३६२
नखिनां च नदीनां च शृङ्गिणां शस्त्रधारिणाम् । विश्वासो नैव कर्तव्यः स्त्रीणां प्रेष्यजनस्य च
न विश्वसेदविश्वस्ते विश्वस्[७]ते नाति विश्वसेत् । विश्वासाद्भयमुत्पन्नं मूलादपि निकृन्तति ॥ ३६४
न विश्वसेत्स्वदेहेऽपि[८] बालेऽप्याभीतचेतसि । वक्ष्यन्ति गूढमत्यर्थं सुप्रमत्ते प्रमादतः ॥ ३६५
गन्धः सर्वत्र सततमाघ्रातव्यः प्रयत्नतः । गावः पश्यन्ति गन्धेन राजानश्चारचक्षुषा ॥ ३६६

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

१ क. ख. ङ. च. धैर्य । २ क. ख. ग. घ. ङ. च. ज. °सि । त्वां त्यक्त्वा पु° । ३ क. ख. ग. घ. ङ. च. ज. °रजीविनां° । ४ क. घ. ङ. °लेऽचले च । च. °ले स्थले च । ५ ञ. कर्तव्यं । ६ ञ. पुत्र । ७ झ. °स्तेऽपि न वि° । ८ ञ. °लान्यपि । ९ क. ख. ग. घ. ङ. च. ज. °पि बलेऽ° । १० क. ख. ग. ङ. च. सुप्रमत्तं । ञ. सुप्तं मत्तं प्र° ।

नैकस्तिष्ठेद्वने घोरे धर्ममेव प्रचिन्तयेत् । न चोद्वेगस्त्वया कार्यः सर्वस्य मरणं ध्रुवम् ॥ ३६७
यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति । विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥ ३६८
पुत्रानित्यं जगत्सर्वं तत्रैकः शोचसे कथम् । तावत्त्वं शोकमुत्सृज्य मद्वाक्यमनुपालय ॥ ३६९

पुलस्त्य उवाच—

शिरस्याघ्राय तं पुत्रमवलिह्य च मूर्धनि । शोकेन महताऽऽविष्टा बाष्पव्याकुललोचना ॥ ३७०
विनिश्वसती नागीव दीर्घमुष्णं मुहुर्मुहुः । पुत्रहीनं जगच्छून्यं प्रपश्यन्तीव साऽभवत् ॥ ३७१
महापङ्कनिमग्नेव तिष्ठन्ती चावसीदति । विलप्य नन्दिनी पुत्रमुवाचेदं पुनर्वचः ॥ ३७२

नन्दोवाच—

नास्ति पुत्रसमः स्नेहो नास्ति पुत्रसमं सुखम् । नास्ति पुत्रसमा प्रीतिर्नास्ति पुत्रसमा गतिः ॥
अपुत्रस्य गृहं शून्यमपुत्रस्य जनस्तथा । पुत्रेण लभते लोकानपुत्रो नरकं ध्रुवम् ॥ ३७४
लोको वदति वाक्यानि चन्दनं किल शीतलम् । पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः ॥ ३७५

पुलस्त्य उवाच—

इति पुत्रगुणानुक्त्वा निरीक्ष्य च पुनः पुनः । स्वमातरं सखीर्गोपीस्त्वरमाणा च पृच्छति ३७६

नन्दोवाच—

यूथस्याग्रे चरन्तीं मामाससाद मृगाधिपः । मुक्ताऽहं तेन शपथैः पुनर्यास्यामि तत्र वै ॥ ३७७
सुतं च मातरं चैव सखीर्द्रष्टुं च गोकुलम् । आगतां सत्यवाक्येन पुनर्यास्यामि तत्र वै ॥ ३७८
मातः क्षमस्व तत्सर्वं दौःशील्याद्यन्मया कृतम्[३] । सुतस्तवायं दौहित्रः किमन्यद्यद्ब्रवीम्यहम् ३७९
विपुले चम्पके[४] दामे भद्रे सुरभिमालिनि । वसुधारे प्रिये नन्दे महानन्दे घटस्रवे ॥ ३८०
अज्ञानाज्ज्ञानतो वाऽपि यदुक्तं किंचिदप्रियम् । तत्क्षमध्वं महाभागा यच्चान्यच्च कृतं मया ३८१
सर्वाः सर्वगुणोपेताः सर्वलोकस्य मातरः । सर्वाः सर्वप्रदा नित्यं क्षमध्वं मम बालकम् ॥ ३८२
अनाथं विकलं दीनं रक्षध्वं मम पुत्रकम् । मातृशोकाग्निसंतप्तं भगिन्यः पालयिष्यथ ॥ ३८३
भगिनीनामयं पुत्रो ह्यर्पितः स्वसुतो मया । पाल्यो बालश्च सर्वाभिः पोष्यः पाल्यश्च पुत्रवत् ३८४
तस्मादनाथं[६] मद्दीनं पुत्रवत्पालयिष्यथ । क्षमध्वं च महाभागा यास्येऽहं सत्यसंश्रयात् ॥ ३८५
न चिन्ता महती कार्या सखीभिश्च कथंचन । प्रथमस्यास्य जातस्य स्थितं मरणमग्रतः ॥ ३८६

पुलस्त्य उवाच—

श्रुत्वा तु नन्दावचनं माता सख्यश्च दुःखिताः । विषादं परमं जग्मुरिदमूचुः सुविस्मिताः ३८७

मातृसख्य ऊचुः—

अहोऽत्र महदाश्चर्यं यद्व्याघ्रवचनात्त्वया(?) । [७]वेष्टुमुद्यता भीमं नन्दिनी सत्यवादिनी ॥ ३८८
शपथैः सत्यवाक्येन वञ्चयित्वा महाभयम् । नाशितव्यं प्रयत्नेन आत्मरक्षा यथा तथा ॥ ३८९
नन्दे न चैव गन्तव्यमधर्मोऽयं कृतस्त्वया । यद्बालं स्वसुतं त्यक्त्वा सत्यलोभेन गम्यते॥ ३९०
अत्र गाथा पुरा गीता ऋषिभिर्धर्मवादिभिः । प्राणत्यागे समुत्पन्ने शपथैर्नास्ति पातकम् ॥ ३९१
उक्त्वाऽनृतं भवेद्यत्र प्राणिनां प्राणरक्षणम् । अनृतं तत्र सत्यं स्यात्सत्यमप्यनृतं भवेत् ॥ ३९२
कामिनीषु विवाहेषु गवां मुक्तौ तथैव च । ब्राह्मणानां विपत्तौ च शपथैर्नास्ति पातकम् ॥३९३

---

१ ख. घ. ङ. च. ज. °मेकं च चि° । २ झ. °मः । यत्रा° । ३ ग. घ. °म् । न्यासस्त° । ४ क. ख. ङ. च. ज. °के मातर्भद्रे । ५ ग. श्यामे । ६ क. ख. ङ. च. ज. °नाथमबलं पु° । ७ ञ. प्रकर्तुमु° ।

नन्दोवाच—

परेषां प्राणरक्षार्थं वदाम्येवानृतं वचः । नाऽऽत्मार्थमुत्सहे वक्तुं जीवितार्थे कथंचन ॥ ३९४
एकः संश्लिष्यते गर्भे मरणे *भरणे तथा । भुङ्क्ते चैकः सुखं दुःखमतः सत्यं वदाम्यहम् ॥३९५
सत्ये प्रतिष्ठिता लोका धर्मः सत्ये प्रतिष्ठितः।उदधिः सत्यवाक्येन मर्यादां न विलङ्घति ३९६
विष्णवे पृथिवीं दत्त्वा बलिः पातालमास्थितः।छद्मनाऽपि बलिर्बद्धः सत्यवाक्येन तिष्ठति ३९७
प्रवर्धमानः शैलेन्द्रः शतशृङ्गः समुच्छ्रितः । सत्येन संस्थितो विन्ध्यः प्रबन्धं नातिवर्तते ॥ ३९८
स्वर्गो मोक्षस्तथा धर्मः सर्वे वाचि प्रतिष्ठिताः । यस्तां लोपयते वाचमशेषं तेन लोपितम् ॥३९९
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । [+किं तेन न कृतं पापं चौरेणाऽऽत्मापहारिणा ॥
यास्यामि नरकं घोरं विलोप्याऽऽत्मानमात्मना।] तस्य वैवस्वतो राजा धर्मस्यार्धं निकृन्तति४०१
अगाधसलिले शुद्धे सत्यतीर्थे क्षमाह्रदे । स्नात्वा पापविनिर्मुक्तः प्रयाति परमां गतिम् ॥ ४०२
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ४०३

सत्यं साधु तपः श्रुतं च परमं क्लेशादिभिर्वर्जितं
साधूनां निकषं सतां कुलधनं सर्वाश्रमाणां वरम् ॥
स्वाधीनं च सुदुर्लभं च जगतः साधारणं भूषणं
यन्म्लेच्छोऽप्यभिधाय गच्छति दिवं तत्त्यज्यते वा कथम् ॥ ४०४

सख्य ऊचुः—

नन्दे सा त्वं नमस्कार्या सर्वैरपि सुरासुरैः । या त्वं परमसत्येन प्राणांस्त्यजसि दुस्त्यजान्४०५
ब्रूमः किं तत्र कल्याणि या त्वं धर्मधुरंधरा । सत्येनानेन नाप्राप्यं त्रैलोक्ये वस्तु किंचन॥४०६
अवियोगं च पश्यामस्त्यागादस्मात्सुतेन हि । नार्याः कल्याणचित्ताया नाऽऽपदः सन्ति कुत्रचित्

पुलस्त्य उवाच—

दृष्ट्वा गोपीजनं सर्वं परिक्रम्य च गोकुलम् । नन्दा संप्रस्थिता देवान्वृक्षांश्चाऽऽपृच्छ्य सा पुनः४०८
क्षितिं वरुणमग्निं च वायुं वाऽपि निशाकरम् । दश दिग्देवता वृक्षान्नक्षत्राणि ग्रहैः सह ॥
सर्वान्विज्ञापयामास प्रणिपत्य मुहुर्मुहुः ॥ ४०९

नन्दोवाच—

ये संश्रिता वने सिद्धाः सर्वाश्च वनदेवताः । वने चरन्तं शरणं ते रक्षन्तु सुतं मम ॥ ४१०
चम्पकाशोकपुंनागाः सरलार्जुनकिंशुकाः ॥ ४११
शृण्वन्तु पादपाः सर्वे संदेशं मम विक्लवम् । बालमेकाकिनं दीनं चरन्तं विषमे वने ॥ ४१२
रक्षध्वं वत्सलं बालं स्नेहात्पुत्रमिवौरसम् । मातापितृविहीनं च अनाथं दीनमानसम् ॥ ४१३
विचरन्तमिमां भूमिं क्रन्दमानं सुदुःखितम् । तस्येह क्रन्दमानस्य मत्पुत्रस्य महावने ॥ ४१४
महाशोकाभिभूतस्य क्षुत्पिपासातुरस्य च । शून्यस्यैकाकिनः सर्वं जगच्छून्यं प्रपश्यतः ॥ ४१५
चरमाणस्य कर्तव्यं सानुक्रोशैस्तु रक्षणम् । एवं संदिश्य बहुलं पुत्रस्नेहवशंगता ॥ ४१६

---

* भवन इति क्वचित्पाठः । + धनुश्चिह्नान्तर्गतः पाठो ग. घ. च. ज. पुस्तकस्थः ।

---

१ ञ. मारणे । २ ञ. स्वर्गापवर्गनरकाः स° । ३ झ. सत्ये । ४ क. ख. ग. घ. ङ. च. फलम् । ५ ञ. °म् । यस्मात्तं समवाप्य गच्छति दिवं संत्यज्यतेऽसौ कथं लोकैरत्र समागमे प्रतिदिनं सत्यं वदध्वं ध्रुवम् । ६ क. ख. ग. घ. ङ. च. ज. विस्तरम् ।

शोकाग्निनाऽतिसंदीप्ता[1] निराशा पुत्रदर्शने । वियुक्ता चक्रवाकीव लतेव पतिता तरोः ॥ ४१७
अन्धेव यष्टिरहिता प्रस्खलन्ती पदे पदे । अगच्छत्सा पुनस्तत्र यत्रासौ पिशिताशनः ॥ ४१८
आस्ते विस्फूर्जितमुखस्तीक्ष्णदंष्ट्रो भयावहः । तावत्तदग्रतो वत्स ऊर्ध्वपुच्छोऽतिवेगवान् ॥ ४१९
आगम्य मातुरग्रे स मृगेन्द्रस्याग्रतोऽभवत् । आगतं तु सुतं दृष्ट्वा मृत्युं तं चाग्रतः स्थितम् ॥
व्याघ्रं दृष्ट्वा तु सा धेनुरिदं वचनमब्रवीत् ॥ ४२०

नन्दोवाच—

भो भो मृगेन्द्राऽऽगताऽहं सत्यधर्मव्रते स्थिता । कुरु तृप्तिं यथाकामं मम मांसेन सांप्रतम् ॥ ४२१
तृप्यन्तु पञ्च भूतानि पिब त्वं शोणितं मम । मृतायां मयि च व्याघ्र भक्षस्वेमं सुपुत्रकम् ॥ ४२२

द्वीप्युवाच—

स्वागतं तव कल्याणि धेनुके सत्यवादिनि । न हि सत्यवतां किंचिदशुभं भवति क्वचित् ॥ ४२३
त्वयोक्तं धेनुके पूर्वं सत्यं प्रत्यागमे पुनः । तेन मे कौतुकं जातं प्राप्ताऽऽगच्छेत्कथं पुनः ॥ ४२४
तव सत्यपरीक्षार्थं प्रेषिताऽसि मया पुनः । अन्यथा मां समासाद्य जीवन्ती यास्यसे कथम् ॥
तच्च नः कौतुकं जातं सत्यम(स्या)न्वेषणं मम । तस्मादनेन सत्येन मुक्ताऽसि च मयाऽधुना ॥
भगिनी भवसे मह्यं भागिनेयः सुतस्तव । दत्तोपदेशाऽसि शुभे मम पापिष्ठकर्मणः ॥ ४२७
सत्ये प्रतिष्ठिता लोका धर्मः सत्ये प्रतिष्ठितः । सत्येन गौः क्षीरधारां प्रमुञ्चति हविष्प्रियाम् ॥
स वै धन्यतमो लोको यस्ते क्षीरेण जीवति । भूमेः प्रदेशा धन्यास्ते सतृणा वीरुधः शुभे ॥ ४२९
ते धन्यास्ते कृतार्थाश्च तैरेव सुकृतं कृतम् । तैराप्तं जन्मनः सारं ये पिबन्ति पयस्तव ॥ ४३०
मृगेन्द्रः प्रत्ययं दृष्ट्वा विस्मयं परमं गतः । प्रत्यादेशोऽयमस्माकं सत्यं देवैः प्रदर्शितः ॥ ४३१
सत्यमेवं गवां दृष्ट्वा न मे रोचति जीवितम् । तत्करिष्ये अहं कर्म येन मुञ्चामि किल्बिषात् ४३२
मया जीवसहस्राणि भक्षितानि हतानि[2] च । गतिं कां तु गमिष्यामि दृष्ट्वा गोसत्यमीदृशम् ४३३
अहं पापो दुराचारो नृशंसो जीवघातकः । कांस्तु लोकान्गमिष्यामि कृत्वा कर्म सुदारुणम् ४३४
गमिष्ये पुण्यतीर्थानि करिष्ये पापमोचनम् । पतिष्ये गिरिमारुह्य विशे वाऽपि हुताशनम् ॥ ४३५
धेनोऽद्य यन्मया कार्यं तपः[3] पापविशुद्धये । तदादिशस्व संक्षेपान्न कालो विस्तरस्य तु ॥ ४३६

धेनुरुवाच—

तपः कृते प्रशंसन्ति त्रेतायां ज्ञानकर्म च । द्वापरे यज्ञमेवाऽऽहुर्दानमेकं कलौ युगे ॥ ४३७
सर्वेषामेव दानानामिदमेवैकमुत्तमम् । अभयं सर्वभूतानां नास्ति दानमतः परम् ॥ ४३८
चराचराणां भूतानामभयं यः प्रयच्छति । स सर्वभयसंत्यक्तः परं ब्रह्माधिगच्छति ॥ ४३९
नास्त्यहिंसासमं दानं नास्त्यहिंसासमं तपः । यथा हस्तिपदे ह्यन्यत्पदं सर्वं प्रलीयते ॥ ४४०
सर्वे धर्मास्तथा व्याघ्र प्रतीयन्ते[4] ह्यहिंसया । योगवृक्षस्य या छाया तापत्रयविनाशिनी ॥ ४४१
धर्मज्ञानस्य[5](नं च) पुष्पाणि स्वर्गमोक्षफलानि च(क्षौ फले तथा) । दुःखत्रयाभिसंतप्तास्छायां योगतरोः श्रिताः ॥ ४४२
न बाध्यन्ते पुनर्दुःखैः प्राप्य निर्वाणमुत्तमम् । इत्येतत्परमं श्रेयः कीर्तितं ते समासतः ॥
ज्ञातं चैव त्वया सर्वं केवलं मां तु पृच्छसि ॥ ४४३

---

१ झ. विच्छिन्ना । २ क. ख. ग. घ. ङ. च. ज. शतानि । ३ क. ख. ग. घ. ङ. च. ज. ततः । ४ ञ. प्रलीय । ५. ञ. धर्मज्ञानेऽस्य ।

द्वीप्युवाच—

अहं मृग्या पुरा शप्तो व्याघ्ररूपेण संस्थितः । ततः प्राणिवधात्सर्वमशेषमपि विस्मृतम् ॥ ४४४

त्वत्संपर्कोपदेशेन संजातं स्मरणं मम । त्वं चाप्यनेन सत्येन गमिष्यसि परां गतिम् ॥ ४४५

तदहं त्वां पुनः पृच्छे प्रश्नमेकं हृदि स्थितम् । साग्रं वर्षशतं जातं चिन्तयानस्य मे शुभे ॥ ४४६

भवतीभाग्ययोगेन कदाचित्स्वर्गशोभने । कृतं धर्मस्य संस्थानं सतां मार्गे प्रतिष्ठितम् ॥

किं तेऽभिधानं कल्याणि ब्रूहि मे तच्च शोभनम् ॥ ४४७

नन्दोवाच—

मम नन्देति संज्ञा तु कृता नन्देन स्वामिना । सांप्रतं भक्षयस्वेति तिष्ठेस्त्वं केन हेतुना ॥ ४४८

पुलस्त्य उवाच—

नन्देति श्रुत्वा तन्नाम मुक्तः शापात्प्रभञ्जनः । पुनर्नृपत्वमापन्नो बलरूपसमन्वितः ॥ ४४९

एतस्मिन्नन्तरे धर्मस्तां नन्दां सत्यवादिनीम् । द्रष्टुं समागमत्तत्र प्राब्रवीच्च यशस्विनीम् ॥ ४५०

धर्म उवाच—

तव सत्यगिराऽऽकृष्टो धर्मोऽहमिह चाऽऽगतः । नन्दे वृणीष्व भद्रं ते वरं वरतमं हि यत् ॥

एवमुक्ता तु सा देवी नन्दा तं प्रार्थयद्वरम् ॥ ४५१

नन्दोवाच—

तवानुभावात्ससुता गच्छामि पदमुत्तमम् । भवत्विदं शुभं तीर्थं मुनीनां धर्मदायकम् ॥ ४५२

मन्नाम्ना च सरिदियं नन्दा नाम सरस्वती । वरप्रदानाद्देवेश तदेतत्प्रार्थितं मया ॥ ४५३

पुलस्त्य उवाच—

सा तत्क्षणाद्गता देवी स्थानं सत्यवतां शुभम् । प्रभञ्जनोऽपि तद्राज्यं संप्राप्तः प्रागुपार्जितम् ४५४

नन्दा येन गता स्वर्गं नन्दां प्राप्य सरस्वतीम् । तेनाऽऽख्येयं बुधैस्तस्याः कृता नन्दासरस्वती

सरस्वती पुनस्तस्माद्वनात्खर्जूरसंज्ञितात् ॥ ४५६

दक्षिणेन पुनर्याता पावयन्ती धरातलम् । आगच्छन्नपि यस्तस्या नाम गृह्णाति मानवः ॥ ४५७

स जीवन्सुखमाप्नोति मृतो भवति खेचरः । तत्र ये शुभकर्माणस्त्यजन्ति स्वां तनुं नराः ॥ ४५८

तेऽपि विद्याधरा राजन्भवन्ति सुखिनो जनाः । नराणां स्वर्गनिःश्रेणी स्नानात्पानात्सरस्वती ॥

तत्र स्नानं प्रकुर्वन्ति येऽष्टम्यां सुसमाहिताः । ते मृताः स्वर्गमासाद्य मोदन्ते सुखिनो नराः ॥

[+सरस्वती सदा स्त्रीणां तत्र सौभाग्यदायिका । उपोषिता तृतीयायां साऽपि सौभाग्यदायिका

तत्र तद्दर्शनेनापि मुच्यते पापसंचयात् । ] स्पृशन्ति ये नराः केचित्तेऽपि ज्ञेया मुनीश्वराः ॥

रजतस्य प्रदानेन रूपवाञ्जायते नरः । पुण्या पुण्यजलोपेता नदीयं ब्रह्मणः सुता ॥ ४६३

नन्दा नामेति विपुला प्रसन्ना दक्षिणामुखी । गत्वा ततो नातिदूरं पुनर्याता पराङ्मुखी ॥ ४६४

ततः प्रभृति सा देवी प्रसभं प्रकटा स्थिता । तस्यास्तटेषु रम्याणि तीर्थान्यायतनानि च ॥ ४६५

संसेवितानि मुनिभिः सिद्धैश्चापि समन्ततः । तेषु सर्वेषु भवति धर्महेतुः सरस्वती ॥ ४६६

+ धनुश्चिह्नान्तर्गतः पाठः क. ख. ग, घ. ङ. च, ज. पुस्तकस्थः ।

१ क, ख. ङ, च. ज्ञात्वा । ज. नत्वा । २ ग. घ. ज. °त्यव्रताहृष्टो । ३ झ. °रः । शुचयः शु° । ४ झ. ते विद्याधरराजानो भव° । ५ क, ख. ग. घ. ङ. च. ज. °न्ते सुमनोरमाः । स° ।

स्नानात्पानात्प्रदानाद्वा हिरण्यस्य महानदी । हाटकक्षितिगौरीणां नन्दातीर्थे महोदयम् ॥
दानं दत्तं नरैः स्नातैर्जनयत्यक्षयं फलम् ॥ ४६७

धान्यप्रदानं प्रवदन्ति शस्तं वस्त्रप्रदानं च तथा मुनीन्द्राः ।
यैस्तेषु तीर्थेषु नरैः प्रदत्तं तद्धर्महेतुः प्रवरं प्रदिष्टम् ॥ ४६८
प्रायोपवेशं प्रयतः प्रयत्नाद्यस्तेषु कुर्यात्प्रमदा पुमान्वा ।
तीर्थेषु सायुज्यमवाप्य चेत्थं भुङ्क्ते फलं ब्रह्मगृहे यथेष्टम् ॥ ४६९
तस्योपकण्ठे तु मृतास्तु ये वै कर्मक्षये स्थावरजङ्गमाश्च ।
तैश्चापि सर्वैः सहसा प्रसह्य लभ्येत यज्ञस्य फलं दुरापम् ॥ ४७०
ततस्तु सा धर्मफलप्रदा भवेज्जन्मादिदुःखार्दितचेतसां नृणाम् ।
सर्वात्मना पुण्यफला सरस्वती सेव्या प्रयत्नान्मनुजैर्महानदी ॥ ४७१

इति श्रीमहापुराणे पाद्मे नन्दाप्राचीमाहात्म्येऽष्टादशोऽध्यायः ॥ १८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२३१९३

---

अथैकोनविंशोऽध्यायः ।

---

भीष्म उवाच—

पुष्करस्य च नन्दायाः श्रुतं माहात्म्यमुत्तमम् । ऋषिकोटिर्यथा याता पुष्करे मुखदर्शनात् ॥ १
सर्वैः सुरूपता लब्धा सर्वमेतन्मया श्रुतम् । यज्ञोपवीतैर्भक्तानि यानि तानि वदस्व मे ॥ २
कथं तीर्थविभागस्तु कृतस्तैस्तु महात्मभिः । [*आश्रमा यानि तीर्थानि कृतान्यपि महर्षिभिः॥३
पदन्यासः कृतः पूर्वं विष्णुना यज्ञपर्वते । नागैस्तत्र पञ्चतीर्थं कृतं तैस्तु महाविषैः] ॥ ४
पिण्डप्रदानवापी च केन वै पूर्वनिर्मिता । उदङ्मुखी भूमिगता कथं गङ्गा सरस्वती ॥ ५
ब्राह्मणैर्वेदविद्वद्भिः कथं यात्रा त्रिपुष्करे । कृतायां यत्फलं पुंसां जायते तद्वदस्व मे ॥ ६

पुलस्त्य उवाच—

प्रश्नभारो महानेष भवता परिकल्पितः । तदेकाग्रमना भूत्वा शृणु तीर्थमहाफलम् ॥ ७
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् । विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ ८
[+प्रतिग्रहादुपावृत्तः संतुष्टो येन केनचित् । अहंकारनिवृत्तश्च स तीर्थफलमश्नुते ॥ ९
अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः । आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥] १०
ऋषीणां परमं गुह्यमिदं भरतसत्तम । पूर्वं यत्र महाराज सत्रे पैतामहे तदा ॥ ११
यतीनामुग्रतपसामृषिकोटिः समागता । मुखदर्शनमाश्रित्य स्थितास्ते ज्येष्ठपुष्करे ॥ १२
सुरूपतां परां लब्ध्वा प्रीतास्ते मुनिसत्तमाः । हर्षेण महताऽऽविष्टा ब्रह्मदर्शनकाङ्क्षिणः ॥ १३
यज्ञोपवीतैस्ते भूमिं प्राप्य सर्वे चतुर्दिशम् । कृत्वा तीर्थविभागं तु ते च भक्तिपरायणाः १४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ झ. °द्वा सहिरण्या म° । २ झ. °फलारणी भ° । ३ झ. रुचिरफला । ४ झ. शुभदर्शनात् । ५ ख. ङ. °स्तु सततैस्तु । ६ झ. °रिकीर्तितः । ७ ख. ङ. °ता । सुखद° । ग. घ. ज. °ता । अथ द° । ८ ग. घ. स्वरूपतां ।

आसन्नास्तु ततस्तेषां तदा तुष्टः पितामहः । कोटिं कृत्वा तदा तेषां मानं दृष्ट्वा मनीषिणाम् १५

ब्रह्मोवाच—

अद्यप्रभृति युष्माकं धर्मवृद्धिर्भविष्यति । इहाऽऽगत्य नरो यो वै सर्वाङ्गं प्रथमं जले ॥ १६
प्लावयिष्यति रूपार्थी रूपिता तीर्थकारिता । भविष्यति न संदेहो योजनायतमण्डले ॥ १७
अर्धयोजनविस्तीर्णं दैर्घ्ये सार्धद्वियोजनम् । एतत्प्रमाणं तीर्थस्य ऋषिकोटिसमावृतम् ॥ १८
गमनादेव राजेन्द्र पुष्करस्य त्वरिंदम । *राजसूयाश्वमेधाभ्यां फलमाप्नोति मानवः ॥ १९
सरस्वती महापुण्या प्रविष्टा ज्येष्ठपुष्करे । तत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ॥ २०
अभिगच्छन्ति राजेन्द्र चैत्रशुक्लचतुर्दशीम् । तत्राभिषेकं कुर्वीत पितृदेवार्चने रतैः ॥ २१
तदाऽभयमवाप्नोति कुलं चैव समुद्धरेत् । एवं तीर्थविभागस्तु कृतस्तैस्तु महर्षिभिः ॥ २२
पितॄन्देवांश्च संतर्प्य विष्णुलोके महीयते । तत्र स्नात्वा भवेन्मर्त्यो विमलश्चन्द्रमा यथा ॥ २३
ब्रह्मलोकमवाप्नोति गतिं च परमां व्रजेत् । त्रैलोक्ये देवदेवस्य तीर्थं त्रैलोक्यविश्रुतम् ॥ २४
पुष्करं नाम विख्यातं महापातकनाशनम् । दशकोटिसहस्राणि तीर्थानां वै महीपते ॥ २५
सांनिध्यं पुष्करे येषां त्रिसंध्यं कुरुनन्दन । आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः ॥२६
गन्धर्वाप्सरसश्चैव नित्यं संनिहिता विभो । यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा ॥ २७
दिव्ययोगा महाराज पुण्येन महताऽन्विताः । मनसाऽप्यभिकामस्य पुष्कराणि मनस्विनः ॥२८
पू(लू)यन्ते सर्वपापानि नाकपृष्ठे स पूज्यते । तस्मिंस्तीर्थे महाराज नित्यमेव पितामहः ॥ २९
उवास परमप्रीतो देवदानवसंमतः । पुष्करेषु महाराज देवाः सर्षिपुरोगमाः ॥ ३०
सिद्धिं सुमनसः प्राप्ताः पुण्येन महताऽन्विताः । तत्राभिषेकं यः कुर्यात्पितृदेवार्चने रतः ॥ ३१
अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः । अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः ॥ ३२
अन्नेन तेन सुप्रीता कोटिर्भवति भोजिता । तेनासौ कर्मणा भीष्म प्रेत्य चेह च मोदते ॥ ३३
शाकैर्मूलैः फलैर्वाऽपि येन वा वर्तते स्वयम् । तद्वै दद्याद्ब्राह्मणाय श्रद्धावाननसूयकः ॥ ३४
तेनैव प्राप्नुयात्प्राज्ञ हयमेधफलं नरः । ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तमः ॥ ३५
पितामहसरः पुण्यं पुष्करं नाम नामतः । वैखानसानां सिद्धानां मुनीनां पुण्यदं हि यत् ॥ ३६
सरस्वती पुण्यतमा यस्माद्याता महार्णवम् । आदिदेवो महायोगी यत्राऽऽस्ते मधुसूदनः ॥ ३७
ख्यातश्चाऽऽदिवराहेति नाम्ना त्रिदशपूजितः । हीनवर्णाश्च ये वर्णास्तीर्थे पैतामहे गताः ॥ ३८
न वियोनिं व्रजन्त्येते स्नात्वा तीर्थे महात्मनः । कार्तिक्यां तु विशेषेण योऽभिगच्छेत पुष्करम् ॥
फलं तत्राक्षयं तस्य भवतीत्यनुशुश्रुम । सायं प्रातः स्मरेद्यस्तु पुष्कराणि कृताञ्जलिः ॥ ४०
उपस्पृष्टं भवेत्तेन सर्वतीर्थेषु कौरव । जन्मप्रभृति यत्पापं स्त्रिया वा पुरुषस्य वा ॥ ४१
पुष्करे स्नानमात्रेण सर्वमेतत्प्रणश्यति । यथा सुराणां प्रवरः सर्वेषां तु पितामहः ॥ ४२

---

* इदमर्धं झ. पुस्तकस्थम् ।

---

१ झ. °षां समं दृष्ट्वा मनीषिणः । त्र° । २ क. ख. ग. घ. ङ. श. ज. °टिप्रवर्तनम् । ३ झ. प्रतिष्ठा । ४ क. ख. ग. ङ. च. ज. °तः । गोमेधं च तदाऽऽप्नो° । ग. °तः । गवां कोटिम° । ५ झ. °भिः । यः शृणोति महाराज वि° । ६ क. ख. ग. घ. ङ. च. ज. नृलोके । ७ क. ख. ङ. च. ज. देवलोकस्य । ८ झ. देवस्त° । ९ झ. °प्त्वा देवा त्र° । १० क. ख. ज. °वाच वचनं प्री° । ११ क. ख. ग. घ. ङ. च. ज. °र्द्धिं न समनुप्रा° ।

तथैव पुष्करं तीर्थं तीर्थानामादिरुच्यते[1] । तत्रेष्ट्वा दश वर्षाणि पुष्करे नियतः शुचिः ॥ ४३
क्रतून्सर्वानवाप्नोति ब्रह्मलोकं च गच्छति । यस्तु वर्षशतं पूर्णमग्निहोत्रमुपासते ॥ ४४
कार्तिकीमावसेदेकां पुष्करे सममेव तु । पुष्करे दुष्करो वासः पुष्करे दुष्करं तपः ॥ ४५
पुष्करे दुष्करं दानं गन्तुं चैव सुदुष्करम् । ब्राह्मणो ब्रह्मविद्वांस्तु गत्वा वै ज्येष्ठपुष्करे ॥ ४६
स्नानाद्भवेन्मोक्षभागी श्राद्धेन पितृतारकः । नाममात्रोऽपि यो विप्रो गत्वा संध्यामुपासते ॥४७
वर्षाणि द्वादशैवेह तेन संध्या ह्युपासिता । भवेत्तु नात्र संदेहः पुरा प्रोक्तं स्वयंभुवा ॥ ४८
सावित्रीकथितो दोषः कुले तस्य न जायते । या पत्नी ददते भर्तुः संध्योपास्तिं करिष्यतः ॥४९
करकेणाच्छताम्रेण तोयं मुक्ता दिवं व्रजेत् । ब्रह्मलोकमनुप्राप्य तिष्ठति ब्रह्मणो दिनम् ॥ ५०
एकाकिना गतेनापि संध्या वन्द्या यथाक्रमम् । पौष्करेणाथ तोयेन भृङ्गारेण हि तेन तु ॥ ५१
तेनापि द्वादशाब्दानि संध्योपास्त्वा न संशयः । भवेत्समीपगा पत्नी कुर्वतः पितृतर्पणम् ॥ ५२
दक्षिणां दिशमास्थाय गायत्र्या नृपसत्तम । पितॄणां परमा तृप्तिः क्रियते द्वादशाब्दिकी ॥ ५३
पुनः समग्रपिण्डेन श्राद्धेनाऽऽनन्त्यमश्नुते । एतदर्थं हि विद्वांसः कुर्वते दारसंग्रहम् ॥ ५४
तीर्थे गत्वा प्रदास्यामः पिण्डान्वै श्राद्धपूर्वकम् । तेषां पुत्रा धनं धान्यमविच्छिन्ना च संततिः ॥
भवेद्वै नात्र संदेह एतदाह पितामहः । तर्पयित्वा पितॄन्देवानग्निष्टोमफलं लभेत् ॥ ५६
आश्रमानपि ते वच्मि शृणुष्वैकमना नृप । अगस्त्येन कृतश्चात्र आश्रमो देवसंमितः ॥ ५७
सप्तर्षीणां पुरा चात्र आश्रमो देवसंमितः । ब्रह्मर्षीणां तथा चात्र मनूनां वै परंतप ॥ ५८
नागानां तु पुरी रम्या यज्ञपर्वतरोधसि । अगस्त्यस्य महाराज प्रभावममितात्मनः ॥ ५९
कथयामि समासेन शृणु त्वं सुसमाहितः । पूर्वं कृतयुगे भीष्म दानवा युद्धदुर्मदाः ॥ ६०
कालेया इति विख्याता गणाः परमदारुणाः । ते तु वृत्रं समाश्रित्य नानाप्रहरणोद्यताः ॥ ६१
समन्तात्पर्यधावन्त महेन्द्रप्रमुखान्सुरान् । ततो वृत्रवधे यत्नमकुर्वंस्त्रिदशाः पुरा ॥ ६२
पुरंदरं पुरस्कृत्य ब्रह्माणमुपतस्थिरे । कृताञ्जलिपुटान्सर्वान्परमेष्ठीत्युवाच ह ॥ ६३

ब्रह्मोवाच—

विदितं मे सुराः सर्वं यद्वः कार्यं चिकीर्षितम् । तमुपायं वदिष्यामि यथा वृत्रं वधिष्यथ ॥ ६४
दधीचिरिति विख्यातो महानृषिरुदारधीः । तं गत्वा सहिताः सर्वे वरं च समयाचत (तु याच्यताम्)
स वो दास्यति धर्मात्मा सुप्रीतेनान्तरात्मना । स वाच्यः सहितैः सर्वैर्भवद्भिर्जयकाङ्क्षिभिः ॥
स्वान्यस्थीनि प्रयच्छस्व त्रैलोक्यहितकाम्यया । स शरीरं समुत्सृज्य स्वान्यस्थीनि प्रदास्यति ॥
तस्यास्थिभिर्महाघोरं वज्रं संक्रियतां दृढम् । महच्छत्रुहनं दिव्यं सदस्त्रमशनिस्वनम् ॥ ६८
तेन वज्रेण वै वृत्रं वधिष्यति शतक्रतुः । एतद्वः सर्वमाख्यातं तस्माच्छीघ्रं विधीयताम् ॥ ६९

पुलस्त्य उवाच—

एवमुक्तास्ततो देवा अनुज्ञाप्य पितामहम् । शतक्रतुं पुरस्कृत्य दधीचेराश्रमं ययुः ॥ ७०
सरस्वत्याः परे पारे नानाद्रुमलतावृतम् । षट्पदोद्गीतनिनदैर्विघुष्टं सामगैरिव ॥ ७१

---

१ ग. ज. °ते । तं दृष्ट्वा द° । झ. °ते । उपोष्य द्वाद° । २ क. ख. ङ. च. होमः । ३ क. ख. ग. घ. ङ. च. ज. वस्तुं । ४ क. ख. ग. घ. ङ. च. ज. °णो वेदवि° । ५ °त्वा वेद्ये तु पु° । ६ झ. °शाब्देन सं° । ७ झ. °गायत्री तेन वै पि° । ८ झ. सावित्र्या । ९ झ. °रमां तृप्तिं कुर्वन्ति द्वा° । १० झ. °कीम् । पुरा स° । ११ क. ख. ङ. च. ज. °नाऽऽत्माऽत्र मुच्यते । १२ झ. दानसं° । १३ क. ग. ङ. च. ज. °माश्रित्य । १४ झ. सर्वात्मा ।

पुंस्कोकिलरवोन्मिश्रं जीवंजीवकनादितम् । [*महिषैश्च वराहैश्च सृमरैश्चमरैरपि ॥ ७२
तत्र तत्रानुचरितैः शार्दूलभयवर्जितैः । करेणुभिर्वारणैश्च प्रभिन्नकरटामुखैः ॥ ७३
स्वरोद्गारैश्च क्रीडद्भिः समन्तादनुनादितम् ] । सिंहव्याघ्रैर्महानादैर्नदद्भिरनुनादितम्¹ ॥ ७४
मयूरैश्चापि सल्लीनैर्गुहाकंदरवासिभिः । तेषु ²तेष्ववका³शेषु नादितं च मनोरमम् ॥ ७५
त्रिविष्टपसमप्रख्यं दधीच्याश्रममागमन् । तत्रापश्यंन्दधीचिं ते दिवाकरसमप्रभम् ॥ ७६
जाज्वल्यमानं वपुषा यथा लक्ष्म्या पितामहम्(?) । तस्य पादौ सुरा राजन्नभिवन्द्य प्रणम्य च ॥
अयाचन्त वरं सर्वे यथोक्तं परमेष्ठिना । ततो दधीचिः परमं⁴प्रीतितश्च सुरोत्तमान् ॥ ७८
[†उवाच प्रणतो भूत्वा इदं कार्यकरं वचः ॥

दधीचिरुवाच—

इन्द्राद्यास्त्वागता देवाः किमर्थं तद्वदस्व नः । पीड्यमानानहं लक्ष्ये हतप्रभसुरोत्तमाः ॥ ७९
यदर्थं पीडितात्मानस्तद्वदन्तु निराकुलम् ॥

देवा ऊचुः—

त्वदस्थिकृतशस्त्रेण देवाः सन्तु निरामयाः ॥ ८०

दधीचिरुवाच—

करोमि यद्वो हितमद्य देवाः स्वं चापि देहं त्विदमुत्सृजामि ] ।

पुलस्त्य उवाच—

स एवमुक्त्वा द्विपदां वरिष्ठः प्राणानथासौ सहसोत्ससर्ज ॥ ८१
सुरास्तदस्थीनि गतायुषस्ते यथोपयोगं जगृहुः समस्ताः ।
सुहृष्टरूपाश्च जयाय देवास्त्वष्टारमासाद्य⁵ समस्तमूचुः ॥ ८२
त्वष्टा तु तेषां वचनं निशम्य प्रहृष्टरूपः प्रयतः प्रयत्नात् ।
चकार वज्रं भृशमुग्रवीर्यं कृत्वा च शस्त्रं च जगाद वाचम् ॥ ८३

त्वष्टोवाच—

अनेन शस्त्रप्रवरेण देव भस्मी कुरुष्वाद्य सुरारिमुग्रम्⁶ ।
त्रैलोक्यराज्यं सगणः सुखी त्वं प्रशाधि कृत्स्नं त्रिदिवं दिविष्ठः ॥

पुलस्त्य उवाच—

त्वष्ट्रा तथोक्तस्तु पुरंदरश्च वज्रं प्रहृष्टः प्रयतः प्रगृह्य ॥ ८४
ततः शक्रो वज्रयुतो दैवतैरभिरक्षितः । आससाद ततो वृत्रं स्थितमावृत्य रोदसी ॥ ८५
कालकेयैर्महाकायैः समन्तादभिरक्षितम् । समुद्यतप्रहरणैः सशृङ्गैरिव पर्वतैः ॥ ८६
ततो युद्धं समभवद्देवानां सह दानवैः । मुहूर्तं भरतश्रेष्ठ लोकत्रासकरं महत् ॥ ८७
उद्यतः परिसृष्टानां खड्गानां वीरबाहुभिः । आसीत्सुतुमुलः शब्दः शरीरेष्वनिवारितः ॥ ८८
शिरोभिः प्रपतद्भिश्च अन्तरिक्षान्महीतलम् । तालैरिव महीपाल वृतं तैरेव दृश्यते ॥ ८९

* धनुश्चिह्नान्तर्गतः पाठो घ. ज. पुस्तकस्थः । † धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. ज. °म् । तत्परैः° । २ क. ख. ङ. च. तेषु च कुञ्जेषु । ३ ग. घ. ज. °कामेषु । ४ ञ. °मप्रतीतः सुरोत्तमांस्तानिदमित्युवाच । स ए° । ५ क. ग. घ. ङ. च. ज. °द्य तमर्थमू° । ६ क. ग. घ. ङ. च. ज. °म् । ततो हतारिः स° ।

ते हेमकवचा भूत्वा कालेयाः परिघायुधाः । त्रिदशानभ्यवर्तन्त दावदग्धा इव द्रुमाः ॥ ९१
तेषां वेगवतां वेगं सहितानां प्रधावताम् । न शेकुः सहिताः सोढुं भग्नास्ते प्राद्रवन्भयात् ॥ ९२
तान्दृष्ट्वा द्रवतो भीत्या सहस्राक्षः पुरंदरः । वृत्रं विवर्धमानं तु कश्मलं महदाविशत् ॥ ९३
तं शक्रं कश्मलाविष्टं दृष्ट्वा विष्णुः सनातनः । स्वतेजो व्यदधाच्छक्रे बलं तस्य व्यवर्धयत् ॥ ९४
विष्णुनाऽऽप्यायितं शक्रं दृष्ट्वा देवगणास्तदा । स्वं स्वं तेजः समादध्युस्तथा ब्रह्मर्षयोऽमलाः ॥
स समाप्यायितः शक्रो विष्णुना दैवतैः सह । ऋषिभिश्च महाभागैर्बलवान्समपद्यत ॥ ९५

ज्ञात्वा बलस्थं त्रिदशाधिपं तं ननाद वृत्रो महदानिनादम् ।
तस्य प्रणादेन धरा दिशश्च खं द्यौर्नभश्चैव चचाल सर्वम् ॥ ९६
ततो महेन्द्रः परमाभितप्तः श्रुत्वा रवं घोरतरं महान्तम् ।
भयेन मग्नस्त्वरितं मुमोच वज्रं महास्त्रं खलु तस्य राजन् ॥ ९७
स शक्रवज्राभिहतः पपात महासुरः काञ्चनमाल्यधारी ।
यथा महाशैलवरः पुरस्तात्स मन्दरो विष्णुकराद्विमुक्तः ॥ ९८
तस्मिन्हते दैत्यवरे भयार्तः शक्रः प्रदुद्राव सरः प्रवेष्टुम् ।
वज्रं स मेने स्वकरात्प्रमुक्तं वृत्रं भयाच्चैव हतं न पश्यति ॥ ९९
सर्वे च देवा मुदिताः प्रहृष्टा महर्षयश्चैवमथ स्तुवन्ति ।
ततश्च केचिन्मतिनिश्चयज्ञास्तांस्तानुपायान्परिचिन्तयन्तः ॥ १००
शेषांस्तु दैत्यांस्त्वरिताः समेत्य जघ्नुः सुरा वृत्रवधाभितप्तान् ।
ते वध्यमानास्त्रिदशैस्तदानीं महासुरा वायुसमानवेगाः ॥ १०१
समुद्रवेलां विविशुर्भयार्ताः प्रविश्य चैवोदधिमप्रमेयम् ।
झषाकुलं रत्नसमाकुलं च तदा स्म मन्त्रं सहिताः प्रचक्रुः ॥ १०२
त्रैलोक्यनाशाय मतिं स्मरन्तस्तत्र स्म केचिन्मतिनिश्चयज्ञाः ।
तांस्तानुपायाननुदर्शयन्तो भयार्दिता देवनिकायतप्ताः ॥ १०३
तेषां तु तत्र क्षयकालयोगाद्घोरा मतिश्चिन्तयतां बभूव ।
ये सन्ति विद्यातपसोपपन्नास्तेषां विनाशः प्रथमं तु कार्यः ॥ १०४
लोकाश्च सर्वे तपसा ध्रियन्ते तस्मात्त्वरध्वं तपसः क्षयाय ।
ये सन्ति केचिद्धि वसुंधरायां तपस्विनो धर्मविदश्च तज्ज्ञाः ॥ १०५
तेषां वधो हि क्रियतां च क्षिप्रं तेषु प्रनष्टेषु जगत्प्रनष्टम् ।
एवं हि सर्वे गतबुद्धिभावाज्जगद्विनाशे परमप्रहृष्टाः ॥
दुर्गं समाश्रित्य महोर्मिमन्तं रत्नाकरं वारुणमालयं स्म ॥ १०६

समुद्रं ते समासाद्य वारुणं निधिमम्भसः । कालेयाः समपद्यन्त त्रैलोक्यस्य विनाशने ॥ १०७
ते रात्रौ समभिक्रुद्धा भक्षयन्ति सदा मुनीन् । आश्रमेषु च ये सन्ति पुण्येष्वायतनेषु च ॥ १०८
वसिष्ठस्याऽऽश्रमे विप्रा भक्षितास्तैर्दुरात्मभिः । अशीतिः शतमष्टौ च वने चान्ये तपस्विनः ॥ १०९
च्यवनस्याऽऽश्रमं गत्वा पुण्यं द्विजनिषेवितम् । फलमूलाशनानां च मुनीनां भक्षितं शतम् ॥ ११०

---

१ झ. घोररूपं । २ ग. °न्ति महासु° ।

एवं रात्रौ स्म कुर्वन्ति विविशुश्चार्णवं दिवा । भरद्वाजाश्रमे गत्वा नियता ब्रह्मचारिणः ॥ १११
वाय्वाहाराम्बुभक्षाश्च विंशतिः परिसूदिताः । एवं क्रमेण भक्षार्थं मुनीनां दानवास्तदा ॥ ११२
निशायां पर्यधावन्त शक्ता भुजबलाश्रयाः । कालेन महता घ्नन्ति ततो मुनिगणान्बहून् ॥ ११३
न चैतानवबुध्यन्त मनुजा मनुजाधिप । निःस्वाध्यायवषट्कारं नष्टयज्ञोत्सवक्रियम् ॥ ११४
जगदासीन्निरुत्साहं कालेयभयपीडितम् । एवं प्रक्षीयमाणाः स्म मानवा मनुजेश्वरे ॥ ११५
आत्मत्राणपरा भीताः प्राद्रवन्ति दिशो दश । केचिद्गुहां प्रविविशुर्निर्झरांश्चापरे द्विजाः ॥ ११६
अपरे च भयोद्विग्ना भयात्प्राणान्समत्यजन् । केचिच्छूरा महेष्वासा वीराः परमदर्पिताः ॥ ११७
मार्गमाणाः परं यत्नं दानवानां प्रचक्रिरे । न चैताननुजग्मुस्ते समुद्रं समुपाश्रितान् ॥ ११८
श्रमं जग्मुश्च परममाजग्मुः क्षयमेव च । जगत्युपशमं याते नष्टयज्ञोत्सवक्रिये ॥ ११९
आजग्मुः परमामार्तिं त्रिदशा मनुजेश्वर । समेत्य समहेन्द्रास्तु भयान्मन्त्रं प्रचक्रिरे ॥ १२०
नारायणं पुरस्कृत्य वैकुण्ठमपराजितम् । ततो देवाः समेतास्ते समूचुर्मधुसूदनम् ॥ १२१

देवा ऊचुः—

त्वं नः स्रष्टा च गोप्ता च भर्ता च जगतः प्रभो । त्वया सृष्टं जगत्सर्वं यच्चेङ्गच्च नेङ्गति ॥ १२२
त्वया भूमिः पुरा नष्टा समुद्रात्पुष्करेक्षण । वाराहं रूपमास्थाय जगदर्थे समुद्धृता ॥ १२३
आदिदैत्यो महावीर्यो हिरण्यकशिपुस्त्वया । नारसिंहं वपुः कृत्वा सूदितः पुरुषोत्तम ॥ १२४
अवध्यः सर्वभूतानां बलिश्चापि महाबलः । वामनं वपुरास्थाय त्रैलोक्याद्भ्रंशितस्त्वया ॥ १२५
असुरश्च महेष्वासो जम्भ इत्यभिविश्रुतः । यज्ञक्षोभकरः क्रूरस्त्वया स विनिपातितः ॥ १२६
एवमादीनि कर्माणि येषां संख्या न विद्यते । अस्माकं भयभीतानां त्वं गतिर्मधुसूदन ॥ १२७
तस्मात्त्वां देवदेवेश लोकार्थं ज्ञापयामहे । रक्ष लोकांश्च देवांश्च शक्रं च महतो भयात् ॥ १२८
भवत्प्रसादाद्वर्तन्ते प्रजाः सर्वाश्चतुर्विधाः । स्वस्था भवन्ति मनुजा हव्यकव्यैर्दिवौकसः ॥ १२९
लोकास्त्वेवं प्रवर्तन्ते अन्योन्यं च समाश्रिताः । त्वत्प्रसादान्निरुद्विग्नास्त्वयैव परिरक्षिताः ॥ १३०
इदं च समनुप्राप्तं लोकानां भयमुत्तमम् । जानीमो न च केनेमे वध्यन्ते ब्राह्मणा निशि ॥ १३१
ब्राह्मणेषु च क्षीणेषु पृथिवी क्षयमेष्यति । त्वत्प्रसादान्महाबाहो लोकाः सर्वे जगत्पते ॥
विनाशं नाधिगच्छेयुस्त्वया वै परिरक्षिताः ॥ १३२

विष्णुरुवाच—

विदितं मे सुराः सर्वं प्रजायाः क्षयकारणम् । भवतां चापि वक्ष्यापि शृण्वन्तु विगतज्वराः ॥ १३३
कालेय इति विख्यातो गणः परमदारुणः । [*तैश्च कृत्स्नं समाश्रित्य जगत्सर्वं प्रबाधितम् ॥ १३४
ते वृत्रं निहतं दृष्ट्वा सहस्राक्षेण धीमता ] । जीवितं परिरक्षन्तः प्रविष्टा वरुणालयम् ॥ १३५
ते प्रविश्योदधिं घोरं नानाग्राहसमाकुलम् । उत्सादनार्थं लोकस्य रात्रौ भक्षन्ति वै मुनीन् ॥ १३६
न तु शक्याः क्षयं नेतुं समुद्रान्तर्हिता हि ते । समुद्रस्य क्षये बुद्धिर्भवद्भिः परिचिन्त्यताम् ॥ १३७

पुलस्त्य उवाच—

एतच्छ्रुत्वा वचो देवा विष्णुना समुदाहृतम् । परमेष्ठिनमासाद्य अगस्त्यस्याऽऽश्रमं ययुः ॥ १३८

*धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

१ क. ख. ङ. च. ज. °र्शुर्विकीर्णाश्चा° । ग. °र्शुर्विवरां° । २ क. ख. ङ. च. ज. °शिपुः पुरा । ना° । ३ क. ख. ग. घ. ङ. च. ज. महासुरः । ४ झ. जृम्भ । ५ क. ख. ग. घ. ङ. च. ज. °त्रौ घ्नन्ति मुनीनिह । न ।

तत्रापश्यन्महात्मानं वारुणं दीप्ततेजसम् । उपास्यमानमृषिभिस्तैश्चैव परिवारितम् ॥ १३९
तेऽभिगम्य महात्मानं मैत्रावरुणिमच्युतम् । अप्रमत्तं तपोराशिं वैर्मभिः स्वैरभिष्टुतम् ॥ १४०

देवा ऊचुः—

नहुषेणाभितप्तानां त्वं लोकानां गतिः पुरा । भ्रंशितश्च सुरैश्वर्याल्लोकार्थं लोककण्टकः ॥ १४१
क्रोधात्प्रवृद्धः सुमहान्भास्करस्य नगोत्तमैः । वचस्त्वत्रानतिक्रामन्विन्ध्यः शैलो न वर्धते ॥ १४२
तमसा चार्दिते लोके मृत्युनाऽभ्यर्दिताः प्रजाः । त्वामेव नाथमागत्य निर्वृतिं परमां गताः १४३
अस्माकं भयभीतानां नित्यशो भगवान्गतिः । ततस्त्वत्तः(तो वयं) प्रयाचामस्त्वां वरं वरदो ह्यसि

भीष्म उवाच—

किमर्थं सहसा विन्ध्यः प्रवृद्धः क्रोधमूर्छितः । एतदिच्छाम्यहं श्रोतुं विस्तरेण महामुने ॥ १४५

पुलस्त्य उवाच—

अद्रिराजं महाशैलं मेरुं कनकपर्वतम् । उदयास्तमने भानुः प्रदक्षिणमवर्तत ॥ १४६
तं तु दृष्ट्वा तदा विन्ध्यः शैलः सूर्यमथाब्रवीत् ॥ १४७

विन्ध्य उवाच—

यथा हि मेरुर्भवता नित्यं संपरिगम्यते । प्रदक्षिणश्च क्रियते मामेवं कुरु भास्कर ॥
एवमुक्तस्ततः सूर्यः शैलेन्द्रं प्रत्यभाषत ॥ १४८

सूर्य उवाच—

नाहमात्मेच्छया शैल करिष्ये तं प्रदक्षिणम् । एष मार्गः प्रदृष्टो मे येनेदं निर्मितं जगत् ॥ १४९

पुलस्त्य उवाच—

एवमुक्तस्तदा क्रोधात्प्रवृद्धः सहसाऽचलः । सूर्याचन्द्रमसोर्मार्गं रोद्धुमिच्छन्परंतप ॥ १५०

ततो हि देवाः सहितास्तु सर्वे सेन्द्राः समागम्य महाद्रिराजम् ।
निवारयामासुर्यथोत्पतन्तं न च स्म तेषां वचनं चकार ॥ १५१
अथाभिजग्मुर्मुनिमाश्रमस्थं तपस्विनं धर्मवतां वरिष्ठम् ।
अगस्त्यमत्यद्भुतदीप्तवीर्यं तं चार्थमूचुः सहिताः सुरास्ते ॥ १५२

देवा ऊचुः—

सूर्याचन्द्रमसोर्मार्गं नक्षत्राणां गतिं तथा । शैलराजो वृणोत्येष विन्ध्यः क्रोधवशानुगः ॥ १५३
तं च वारयितुं शक्तो न च कश्चिन्मुनीश्वर । तच्छ्रुत्वा वचनं विप्रः सुराणां शैलमन्वगात् १५४
सोऽभिगम्याब्रवीद्विन्ध्यं सादरं समुपस्थितम् ॥ १५५

अगस्त्य उवाच—

मार्गमिच्छाम्यहं दत्तं भवता पर्वतोत्तम । दक्षिणामभिगन्तास्मि दिशं कार्येण केनचित् ॥ १५६
यावदागमनं मह्यं तावत्त्वं परिपालय । निवृत्ते मयि शैलेन्द्र ततो वर्धस्व कामतः ॥ १५७

पुलस्त्य उवाच—

अद्यापि दक्षिणादेशाद्वारुणिर्न निवर्तते । एतत्ते सर्वमाख्यातं यथा विन्ध्यो न वर्धते ॥ १५८
अगस्त्यस्य प्रभावेण यथा त्वं परिपृष्टवान् । कालेयास्तु यथा जम्भाः सुरैः सर्वे निषूदिताः ॥

---

१ क. ख. ग. ङ. च. ज. °भिर्देवैरिव पितामहम् । २ ग. ज. °णिमुत्तमम् । ३ क. ख. ग. ङ. च. ज. कर्मभिः ।
४ क. ख. ङ. च. °मः । परं भवन्तं संजानान्वि° । ५ झ. °मयो भा° । ६ झ. °रतिप्रवीर न । ७ झ. सद्दारं ।

अगस्त्यंवरमासाद्य तन्मे निगदतः शृणु । त्रिदशानां वचः श्रुत्वा मैत्रावरुणिरब्रवीत् ॥ १६०

अगस्त्य उवाच—

किमर्थमिह याताश्च वरं मत्तः किमिच्छथ । एवमुक्तास्तदा तेन देवास्तं मुनिमब्रुवन् ॥ १६१

देवा ऊचुः—

इच्छाम एकं वरमद्भुतं ते पिबार्णवं देवमुने महात्मन् ॥
एवं त्वयेच्छाम कृते महर्षे महार्णवे पीयमाने महात्मन् ।
ततो वधिष्यामि (हनामापि) च सानुबन्धान्कालेयसंज्ञान्सुरविद्विषस्तान् ॥ १६२

त्रिदशाना वचः श्रुत्वा तथेति मुनिरब्रवीत् । करिष्ये भवतां कामं लोकनाथ सुरेश्वर ॥ १६३
एवमुक्त्वा ततोऽगच्छन्समुद्रं निधिमम्भसाम् । तपःसिद्धैस्तु मुनिभिः सार्धं देवैश्च सुव्रत १६४
मनुष्योरगगन्धर्वा यक्षाः किंपुरुषास्तथा । अनुजग्मुर्महात्मानं द्रष्टुकामास्तदद्भुतम् ॥ १६५
ततोऽभ्यगच्छन्सहसा समुद्रं भीमनिस्वनम् । नृत्यन्तमिव वीचीभिश्चलन्तमिव वायुभिः ॥ १६६
हसन्तमिव फेनौघैः स्खलन्तं कंदरेषु च । नानाग्राहसमाकीर्णं नानाद्विजसमाकुलम् ॥ १६७
अगस्त्यसहिता देवाः सगन्धर्वा महोरगाः । ऋषयश्च महाभागाः समासेदुर्महोदधिम् ॥ १६८
समुद्रं च समासाद्य वारुणिर्भगवानृषिः । उवाच सहितान्देवानृषींस्तांस्तु समागतान् ॥ १६९
पातुकामः समुद्रं तु अगस्त्य ऋषिसत्तमः ॥ १७०

अगस्त्य उवाच—

एष लोकहितार्थाय पिबामि वरुणालयम् । भवतां यदनुष्ठेयं तच्छीघ्रं संविधीयताम् ॥ १७१
एतावदुक्त्वा वचनं मैत्रावरुणिरग्रतः । समुद्रमपि च क्रु(बत्क्रु)द्धः सर्वलोकस्य पश्यतः ॥ १७२
पीयमानं समुद्रं तु दृष्ट्वा देवाः सवासवाः । विस्मयं परमं जग्मुः स्तुतिभिश्चाप्यपूजयन् ॥ १७३
त्वं नस्त्राता विधाता च लोकानां लोकभावनः । त्वत्प्रसादात्समुत्सेदं न गच्छेत्सामरं जगत् ॥

संपूज्यमानस्त्रिदशैर्महात्मा गन्धर्वमुख्येषु नदत्सु चैव ।
दिव्यैश्च पुष्पैरवकीर्यमाणो महार्णवं निःसलिलं चकार ॥ १७५
दृष्ट्वा कृतं निःसलिलं महार्णवं सुराः समस्ताः परमं प्रहृष्टाः ।
प्रगृह्य दिव्यानि वरायुधानि तान्दानवाञ्जघ्नुरदीनसत्त्वाः ॥ १७६
ते वध्यमानास्त्रिदशैर्महात्मभिर्महाबलैर्वेगयुतैर्नदद्भिः ।
न सेहिरे वेगवतां महात्मनां वेगं तदा धारयितुं दिवौकसाम् ॥ १७७

ते वध्यमानास्त्रिदशैर्दानवा भीमदर्शनाः । चक्रुः सुतुमुलं युद्धं मुहूर्तमिव भारत ॥ १७८
ते पूर्वं तपसा दग्धा मुनिभिर्भावितात्मभिः । यतमानाः परं शक्त्या त्रिदशैर्विनिषूदिताः॥ १७९
ते हेमनिष्काभरणाः कुण्डलाङ्गदधारिणः । निहता बह्वशोभन्त पुष्पिता इव किंशुकाः ॥ १८०
हतशिष्टास्ततः केऽपि कालेया दनुजोत्तमाः । विदार्य वसुधां देवीं पातालतलमाश्रिताः ॥ १८१
निहतान्दानवान्दृष्ट्वा त्रिदशा मुनिपुंगवम् । तुष्टुवुर्विविधैर्वाक्यैरिदं चैवाब्रुवन्वचः ॥ १८२

देवा ऊचुः—

त्वत्प्रसादान्महाभाग लोकैः प्राप्तं महत्सुखम् । त्वत्तेजसा च निहताः कालेयाः क्रूरविक्रमाः ॥

१ क. ख. ग. घ. ङ. च. ज. °स्त्वद्वार° । २ महत्सुखम् । ३ क. ख. ग. ङ. च. ज. °रच्युतः । ४ क. ख. ग. घ. ङ. च. ज. भीमनिद्रनाः । ५ झ. शब्दं । ६ क. ख. ग. घ. च. ज. भीमविक्रमाः ।

पूरयस्व महाविप्र समुद्रं लोकभावन । यत्त्वया सलिलं पीतं तदस्मिन्सर्वमुत्सृज ॥ १८४
एवमुक्तः प्रत्युवाच भगवान्मुनिपुंगवः ॥ १८५

अगस्त्य उवाच—

जीर्णं तद्धि मया तोयमुपायोऽन्यो विचिन्त्यताम् । पूरणार्थं समुद्रस्य भवद्भिर्यत्नमास्थितैः ॥

पुलस्त्य उवाच—

एतच्छ्रुत्वा तु वचनं महर्षेर्भावितात्मनः । विस्मिताश्च विषण्णाश्च बभूवुः सहिताः सुराः॥ १८७
परस्परमनुज्ञाप्य प्रणम्य मुनिपुंगवम् । प्रजाः सर्वा महाभाग विप्रजग्मुर्यथागतम् ॥ १८८
त्रिदशा विष्णुना सार्धमनुजग्मुः पितामहम् । पूरणार्थं समुद्रस्य मन्त्रयन्तः परस्परम् ॥ १८९
ऊचुः प्राञ्जलयः सर्वे सागरस्याभिपूरणम् । तानुवाच समेतांस्तु ब्रह्मा लोकपितामहः ॥ १९०

ब्रह्मोवाच—

गच्छध्वं विबुधाः सर्वे यथाकामं यथेप्सितम् । महता कालयोगेन प्रकृतिं यास्यतेऽर्णवः ॥ १९१
ज्ञातीस्तु कारणं कृत्वा महाराजो भगीरथः । गङ्गौघेन समुद्रं च पुनः संपूरयिष्यति ॥ १९२
एवं ते ब्रह्मणा देवाः प्रेषिता ऋषिसत्तमाः । उवाच भगवांस्तुष्टस्त्वगस्त्यमृषिसत्तमम् ॥ १९३

ब्रह्मोवाच—

देवकार्यं तु भवता दानवानां विनाशनम् । यत्त्वया कारितं देव तेन तुष्टोऽस्मि ते मुने ॥ १९४
अभिप्रेतो वरो यस्ते याचयस्व ददामि तम् । एवमुक्तस्तदाऽगस्त्यः प्रणिपातपुरःसरम्॥ १९५
इहस्थेन मया देव देवकार्यमिदं कृतम् । सर्वाश्रमाणां प्रवरो भवत्वेष ममाऽऽश्रमः ॥ १९६
त्वया चोक्तस्तु भगवन्भविता नात्र संशयः ॥ १९७

ब्रह्मोवाच—

यात्रां तु पुष्करे कृत्वा इहाऽऽगत्य नरास्तु ये । इह कुण्डे तु ये स्नानं तर्पणं पितृदेवयोः॥ १९८
अर्चनं चैव देवेषु सर्वमक्षयकारकम् । अन्नं चोच्चावचं गृह्यं शष्कुलीः पूपकांस्तथा ॥ १९९
दास्यन्ति द्विजमुख्येभ्यस्तेषां वासस्त्रिविष्टपे । श्राद्धेन पितरस्तुष्टा यावदाभूतसंप्लवम् ॥ २००
कन्दमूलफलैर्वाऽपि तर्पयिष्यन्ति ये मुनिम् । सप्तर्षिस्थानमासाद्य स्थास्यन्ति शाश्वतीः समाः॥ २०१
यज्ञपर्वतमारूढो दृष्ट्वा गङ्गाविनिर्गमम् । उदङ्मुखी देवनदी निर्गता पुष्करं प्रति ॥ २०२
अत्राभिषेकं यः कुर्यात्पितृदेवार्चने रतः । अश्वमेधफलं तस्य भवेदत्र न संशयः ॥ २०३
यस्त्वेकं भोजयेद्विप्रं कोटिर्भवति भोजिता । अक्षयं त्वन्नपानं च अत्र दत्तं मुनीश्वर ॥ २०४
यं यमिच्छति कामं तु सर्वस्तस्य च सिध्यति । न वियोनिं व्रजत्यत्र स्नातमात्रो नरो भुवि ॥
स्थानानां परमं स्थानं तीर्थानां तीर्थमुत्तमम् । मया दत्तं मुनिश्रेष्ठ भविष्यति न संशयः॥ २०६
जन्मप्रभृति यत्पापं स्त्रिया वा पुरुषस्य च । अत्रैव स्नातमात्रस्य सर्वमेतत्प्रणश्यति ॥ २०७
एवमुक्त्वा तु भगवान्ब्रह्मा लोकपितामहः । जगामाऽऽमन्त्र्य स मुनिमगस्त्यं मुनिसत्तमम्॥ २०८
अगस्त्योऽपि स्थितस्तत्र आश्रमे स्वे परंतपः । अगस्त्यस्याऽऽश्रमोत्पत्तिर्मया ते परिकीर्तिता॥ २०९
सप्तर्षीणामाश्रमं ते कीर्तयिष्ये कुरूद्वह । अत्रिर्वसिष्ठो भगवान्पुलस्त्यः पुलहः क्रतुः ॥ २१०
अङ्गिरा गौतमश्चैव सुमतिः सुमुखस्तथा । विश्वामित्रः स्थूलशिराः संवर्तश्च प्रतर्दनः ॥ २११

---

१ झ. निखिलं । २ क. ग. घ. ङ. च. ज. °स्मिन्पुनरुत्स° । ३ क. ख. ङ. च.ज. °ह्य शष्कुलाम्पूप° । घ. °ह्य कुण्डकान्पूर° झ. °ह्य पिण्डकान्पूप° । ४ झ. °वर्तः परिमर्द° ।

रैभ्यो बृहस्पतिश्चैव[1] च्यवनः कश्यपो भृगुः । दुर्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः ॥ २१२
उशना च भरद्वाजो यवक्रीतमुनिस्तथा । स्थूलाक्षो[2] मकराक्षश्च कण्वो मेधातिथिस्तथा ॥ २१३
नारदः पर्वतश्चैव स्वगन्धी च्यवनो द्विजः । तृणाम्बुः[3] सवलो धौम्यः शतानन्दोऽकृतव्रणः ॥ २१४
जामदग्नि(ग्न्य)स्तथा रामो ह्यष्टकश्चैवमादयः । कृष्णद्वैपायनश्चैव पुत्रशिष्यैः समन्वितः ॥ २१५
एते तु पुष्करं प्राप्य सप्तर्षीणां तथाऽऽश्रमे । चेष्टिता नियमैर्युक्ता दमयुक्तास्तपस्विनः ॥ २१६
इन्द्रियाभिजयो धैर्यं तपः सत्यं क्षमाऽऽर्जवम् । दया दानं तपश्चैव सर्वेषां तत्प्रतिष्ठितम् ॥ २१७
इह यत्क्रियते कर्म तत्परत्रोपभुज्यते । ज्ञात्वा तदित्थं मुनयः परमार्थपरायणाः ॥ २१८
न तत्र नास्तिका यान्ति न स्तेना नाजितेन्द्रियाः । न नृशंसा न पिशुना न कृतघ्ना न मानिनः
सत्यास्तपस्विनः शूरा दयावन्तः क्षमान्विताः । यज्वानो यज्ञशीलाश्च तत्र गच्छन्ति पुष्करम् ॥
न रोगो न जरा मृत्युर्भविता तु महात्मनाम् । न क्षुत्पिपासे न ग्लानिः सर्वेषां तु द्विजन्मनाम् ॥
न तत्र मूढा विशन्ति पुरुषा विषयात्मकाः । दम्भलोभमदद्रोहक्रोधमोहैरभिद्रुताः ॥ २२२
निर्ममा निरहंकारास्तत्र गच्छन्ति पुष्करे । तुल्यमानापमानाश्च निर्द्वंद्वाः संयतेन्द्रियाः ॥ २२३
ध्यानयोगपराश्चैव ते तु गच्छन्ति पुष्करम् । आश्रमेषु यथोक्तेषु यथोक्तं वै द्विजातयः ॥ २२४
[*ये वर्तन्तेऽपमत्रास्तु तेषां लोका महोदयाः । ये न हिंसन्ति भूतानि कर्मणा मनसा गिरा ॥
अनृशंसतराः सन्तः सर्वदा च प्रियंवदाः । अग्निहोत्ररता नित्यं नित्यं चातिथिपूजकाः ]॥ २२६
नित्यं स्वाध्यायशीलाश्च नित्यं स्नानपरायणाः । मातृवत्स्वसृवच्चैव तथा दुहितृवच्च ह ॥ २२७
परदारांश्च पश्यन्ति परद्रव्याणि लोष्टवत् । येऽधिक्षिप्ता न कुप्यन्ति न हिंसन्ति च हिंसिताः ॥
समदुःखसुखा दान्ता महात्मानो जितेन्द्रियाः । ते हि सर्वे प्रपश्यन्तः पुरा चेरुर्महीमिमाम् ॥
समाधिना जिगीषन्तो ब्रह्मलोकं सनातनम् । अथाभवदनावृष्टिः कदाचिन्महती तदा ॥ २३०
कृच्छ्रप्रायो ह्यभूत्तत्र सर्वलोकः क्षुधाऽर्दितः । ततो निरन्ने लोकेऽस्मिंश्चाऽऽत्मानं ते परीप्सवः २३१
मृतं कुमारमादाय कृच्छ्रप्रायास्तदाऽपचन् । अथ पर्यचरत्तत्र क्लिश्यमानान्हि तानृषीन् ॥
दृष्ट्वा राजा विषादार्तः प्रोवाचेदं वचस्तदा ॥ २३२

राजोवाच—

प्रतिग्रहो ब्राह्मणानां सृष्टा वृत्तिरनिन्दिता । तस्मात्प्रतिग्रहान्मत्तो गृह्णीध्वं मुनिसत्तमाः ॥ २३३
वरान्ग्रामान्व्रीहियवान्रसान्रत्नानि काञ्चनम् । गाश्च धेनुं ततः सर्वं मा मांसं पचत द्विजाः २३४

ऋषय ऊचुः—

राजन्प्रतिग्रहो घोरो मध्वास्वादो विषोपमः । तज्जाय(द्बुध्य)मानः कस्मात्त्वं कुरुषेऽस्मत्प्रलोभनम्
दशसूनासमश्चक्री दशचक्री(क्रि)समो ध्वजः । दशध्वजसमा वेश्या दशवेश्यासमो नृपः ॥ २३६
[+दशसूनासहस्राणि यो वाहयति शौण्डिकः । तेन तुल्यस्ततो राजा घोरस्तस्य प्रतिग्रहः २३७

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ झ. °तिर्धौम्यश्च्यव° । २ क. ख. ग. घ. ङ. च. ज. °लाक्षः सकलाक्ष° । ३ क. ख. ङ. च. ज. तृणधः । ग घ. तृणघ्नः झ. तृणाध्रः । । ४ क. ख. ग. घ. ङ. च. ज. °ल्यास्तेजस्वि° । ५ क. ख. ङ. च. ज. °न्ति सततं विगतस्पृहाः । ये° । ग. घ. °न्ति भवन्ति विगतस्पृहाः । ये° । ६ झ. °र्वे च पश्यन्ति पुष्करं नात्र संशयः । स° । ७ झ. जिगीषन्ति । ८ क. ख. ग. ङ. च. ज. °दाऽभवन् ।

यो राज्ञः प्रतिगृह्णाति ब्राह्मणो लोभमोहितः ] । तामिस्रादिषु घोरेषु नरकेषु स पच्यते ॥ २३८
तद्गच्छ कुशलं तेऽस्तु सह दानेन पार्थिव । अन्येषां दीयतामेतदित्युक्त्वा ते वनं ययुः ॥ २३९
अथ राजसमादेशात्तत्र गत्वाऽथ मन्त्रिणः । उदुम्बराणि व्यकिरन्हेमगर्भाणि भूतले ॥ २४०
ततो ह्यन्नं विचिन्वन्तो ह्यगृह्णंस्तत्र तान्यपि । गुरूणीह विदित्वा तु न ग्राह्याण्यत्रिरब्रवीत् ॥ २४१

अत्रिरुवाच—

नाऽऽस्महे मूढविज्ञाना नाऽऽस्महे मन्दबुद्धयः । हैमानीमानि जानीमः प्रतिबुद्धाः स्म ज्ञानिनः ॥
इहैवाऽऽत्तं वसु प्रीत्यै प्रेत्य वै कटुकोदयम्[1] । तस्मान्न ग्राह्यमेवैतत्सुखमानन्त्यमिच्छता ॥ २४३
शतेन गुणितं निष्कं सहस्रेण समन्वितम् । यश्चान्यतः प्रतीच्छेत्स[2] पापिष्ठां लभते गतिम् ॥ २४४
यत्पृथिव्यां व्रीहियवं हिरण्यं[3] वाससी स्त्रियः । न नूनं कस्य पर्याप्तमिति मत्वा शमं व्रजेत् २४५

वसिष्ठ उवाच—

धर्मार्थं संचयो यस्य द्रव्याणां च न शस्यते । तपःसंचय एवेह विशिष्टो धनसंचयात् ॥ २४६
त्यजतः संचयान्सर्वान्यान्ति नाशमुपद्रवाः । न हि संचयवान्कश्चित्सुखी भवति मानद ॥ २४७
यथा यथा न गृह्णाति ब्राह्मणः संप्रतिग्रहम् । तथा तथा हि संतोषाद्ब्रह्मतेजो विवर्धते ॥ २४८
अकिंचनत्वं राज्यं च तुलया समतोलयन् । अकिंचनत्वमधिकं राज्यादपि जितात्मनः[5] ॥ २४९

कश्यप उवाच—

अनर्थो ब्राह्मणस्यैष यदर्थनिचयो महान् । अर्थैश्वर्यविमूढो हि श्रेयसो भ्रश्यते द्विजः ॥ २५०
अर्थसंपद्विमोहाय विमोहो नरकाय च । तस्मादर्थमनर्थाय श्रेयोर्थी दूरतस्त्यजेत् ॥ २५१
यस्य धर्मार्थमर्थेहा तस्यानीहा गरीयसी । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ २५२
योऽर्थेन साध्यते धर्मः क्षयिष्णुः स प्रकीर्तितः । यः परार्थे परित्यागः सोऽक्षयो मुक्तिलक्षणम् ॥

भारद्वाज उवाच—

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः । जीविताशा धनाशा च जीर्यतोऽपि न जीर्यति ॥
चक्षुःश्रोत्राणि जीर्यन्ति तृष्णैका तरुणायते । सूच्या सूत्रं यथा वस्त्रे संसूचयति सूचिकः ॥ २५५
तद्वत्संसारसूत्रं हि तृष्णासूच्योपनीयते । यथा शृङ्गं रुरोः काये वर्धमाने च वर्धते ॥ २५६
*तथैव तृष्णा वित्तेन वर्धमानेन वर्धते । अनन्तपारा दुष्पूरा तृष्णा दोषशतावहा ॥
अधर्मबहुला चैव तस्मात्तां परिवर्जयेत् ॥ २५७

गौतम उवाच—

संतुष्टः को न शक्नोति फलैश्चाप्यनुवर्तितुम्[8] । सर्वस्त्विन्द्रियलोभेन संकटान्यवगाहते ॥ २५८
सर्वत्र संपदस्तस्य संतुष्टं यस्य मानसम्[9] । उपानद्गूढपादस्य ननु चर्मावृतेव[10] भूः ॥ २५९
संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् । कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ २६०
असंतोषः परं दुःखं संतोषः परमं सुखम् । सुखार्थी पुरुषस्तस्मात्संतुष्टः सततं भवेत् ॥ २६१

* इदमर्धं झ. पुस्तकस्थम् ।

१ क. ख. ङ. च. कुण्ठितोदयम् । २ झ. यथा बहु प्रतीच्छेत पा° । ३ क. ख. ग. घ. ङ. च. च. °ण्यं पशवः स्त्रि° । ४ क. ख. ङ. च. तपसां । ५ क. ख. ङ. च. ज. हितात्मनः । ग. यतात्मनः । ६ क. ख. ग. घ. ङ. च. ज. निरुपद्रवा । ७ क. ख. ग. घ. ङ. च. ज. °प्यातिव° । ८ क. ख. ङ. च. °म् । लुब्ध इन्द्रियलौल्येन । ९ क. ख. ग. घ. ङ. च. ज. °स्य तस्य च° । १० घ. °वृतैव ।

विश्वामित्र उवाच—

कामं कामयमानस्य यदि कामः समृध्यति । अथैनमपरः कामो भूयो विध्यति बाणवत् ॥ २६२
न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ २६३
कामानभिलषन्मोहान्न नरः सुखमेधते । श्येनालयतरुच्छायां व्रजन्निव कपिञ्जलः ॥ २६४
चतुःसागरपर्यन्तां यो भुङ्क्ते पृथिवीमिमाम् । तुल्याश्मकाञ्चनो यश्च स कृतार्थो न पार्थिवः॥२६५

जमदग्निरुवाच—

प्रतिग्रहसमर्थोऽपि नाऽऽदत्ते यः प्रतिग्रहम् । ये लोका दानशीलानां स तानाप्नोति शाश्वतान्
[*योऽर्थान्प्राप्य नृपाद्विप्रः शोचितव्यो महर्षिभिः । न स पश्यति मूढात्मा नरके यातनाभयम्॥]
प्रतिग्रहसमर्थोऽपि न प्रसज्येत्प्रतिग्रहे । प्रतिग्रहेण विप्राणां ब्रह्मतेजश्च हीयते ॥ २६८
प्रतिग्रहसमर्थानां निवृत्तानां प्रतिग्रहात् । य एव ददतां लोकः स एवाप्रतिगृह्णताम् ॥ २६९

अरुन्धत्युवाच—

विसतन्तुर्यथा नित्यमम्भस्थः सततं विशेत् । तृष्णा चैवमनाद्यन्ता तथा देहगता सदा ॥ २७०
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः । योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्

षैण्ढोवाच—

उग्राद्यतो भयादस्माद्बिभ्यतीमे महेश्वराः । वलीयांसो दुर्वलवत्तस्माच्चैव बिभेम्यहम् ॥ २७२

पशुसख उवाच—

यदाचरन्ति विद्वांसः सदा धर्मपरायणाः । तदेव विदुषा कार्यमात्मनो हितमिच्छता ॥ २७३
इत्युक्त्वा हेमगर्भाणि त्यक्त्वा तानि फलानि च । ऋषयो जग्मुरन्यत्र सर्व एव दृढव्रताः॥२७४
ततस्ते विचरन्तो वै मध्यमे पुष्करे गताः । ददृशुः सहसा प्राप्तं परिव्राजं शुनःसखम् ॥ २७५
तेन ते सहितास्तत्र गत्वा किंचिद्वनान्तरम् । सरः परमपश्यन्त वृतं पद्मैर्जलाशयम् ॥ २७६
निविष्टाः सरसस्तीरे चिन्तयन्तो गतिं शुभाम् । शुनःसखो मुनीन्सर्वानुवाच क्षुधितांस्तदा २७७

शुनःसख उवाच—

सर्वे वदन्तु सहिताः कीदृशी क्षुत्प्रवेदना । तमूचुः सहितास्ते तु परिव्राजं शुनःसखम् ॥ २७८

ऋषय ऊचुः—

शक्तिखड्गगदाभिश्च चक्रतोमरसायकैः । व्यथिते वेदना या तु क्षुधया साऽपि निर्जिता ॥ २७९
श्वासकासक्षयादीनां ज्वरापस्मार एव च । व्याधिभिर्निर्जितस्यापि क्षुधा तेभ्योऽ(तद)धिका भवेत्
हिरण्याङ्गदकेयूरैर्मुकुटोज्वलकुण्डलैः । मण्डिता न विराजन्ते तत्र ये संस्थिता नराः ॥ २८१
यथा भूमिगतं तोयं क्षुष्यते रविरश्मिभिः । तद्वच्छरीरजा नाड्यः शोष्यन्ते जठराग्निना ॥ २८२
न शृणोति न चाऽऽघ्राति चक्षुषा न च पश्यति । दह्यते वेपते मूढः शुष्यते च क्षुधाऽर्दितः २८३
न पूर्वां दक्षिणां वाऽपि पश्चिमां नोत्तरां तथा । न चैवाधो न चोर्ध्वं वा क्षुधाविष्टो ह विन्दति
मूकत्वं वधिरत्वं च जडत्वमथ पङ्गुता । भैरवत्वममर्यादा क्षुधायां संप्रवर्तते ॥ २८५

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ङ च. ज. लोकास्त ए° । २ ग. °मन्तस्थः । घ. °मध्यस्थः । ३ क. ख. ग. घ. ङ. च. ज. चाण्डाल उवाच । ४ क. ख. ङ. च. °स्माद्विस्मयो मे । ग. ज. °स्माद्विस्मयं मे । ५ झ. °मृ । पराप° । ६ क. ख. ग. घ. ङ. च. ज. °सकुष्ठक्ष° । ७ क. क्षुधिता । ८ झ. चाश्नाति । ९ क. ग. घ. च. ज. क्षिपते । ख. क्षीयते । ङ. क्षपते ।

जनिता जननी पुत्रा भार्या दुहितरस्तथा । भ्रातरः स्वजनो वाऽपि त्यज्यते क्षुधया द्विज ॥
न पितॄन्पूजयेत्सम्यग्देवान्वाऽपि गुरूंस्तथा । ऋषीनभ्यागतान्वाऽपि क्षुधाविष्टो न विन्दति ॥
एवमन्नविहीनस्य भवन्त्येतानि देहिनः । तदेव (तृप्तस्य) विपरीतानि तृप्तस्यैतानि वै भवेत् (भवेयुर्वै मुनीश्वर) ॥ २८८
अन्नात्परमतो लोके न भूतं न भविष्यति । अन्नमूलं जगत्सर्वमन्ने चैव प्रतिष्ठितम् ॥ २८९
पितरो देवदैत्याश्च यक्षराक्षसकिंनराः । मनुष्याश्च पिशाचाश्च सर्वे चान्नमयाः स्मृताः ॥ २९०
कुक्कुटा वायसाः श्वान आखुर्विलेशयास्तथा । मत्स्याः कीटाः [1]पिपीलाश्च सर्वे चान्नाशयाः स्मृताः
तस्मात्सर्वप्रयत्नेन अन्नं दद जुषस्व च । अन्नदस्तृप्तिमाप्नोति शाश्वतीं स्थितिमक्षयाम् ॥ २९२
तपः सत्यं जपो होमो ध्यानं योगः परा गतिः । स्वर्गश्चैव सुखप्राप्तिः सर्वमन्नात्प्रवर्तते ॥ २९३
चान्द्रो वारुणलोकश्च याम्यो कौवेरकस्तथा । गोलोको ब्राह्मलोको वा सर्वे चान्ने प्रतिष्ठिताः ॥
चन्दनागरुधूपानि[3] शिशिरेष्विन्धनानि च । अन्नदानस्य वै राजन्कलां नार्हन्ति षोडशीम्[4] २९५
कूपारामप्रपोत्सर्गवापीरायतनानि च । अन्नदानस्य चैतानि कलां नार्हन्ति षोडशीम् ॥ २९६
पानीयं भूमिगावश्च अन्नं च तुलया धृतम् । देवैरपि पुरा तात तेषामन्नं विशिष्यते ॥ २९७
अन्नं प्राणो बलं तेजो ह्यन्नं चैव पराक्रमः । अन्नात्संभवते तेजो ह्यन्नेनैव विवर्धते ॥ २९८
पौण्डरीकोऽश्वमेधश्च [5]उक्तः षोडशिकः क्रतुः । अग्निष्टोमस्त्रिरात्रश्च राजसूयो [6]महाधनः ॥ २९९
सौत्रामणिर्वाजपेयो मानुषोऽथ पशुस्तथा । अन्नमूलात्प्रवर्तन्ते सर्वे यज्ञाः सविस्तराः ॥ ३००
सपर्वतनदी वाऽपि पृथिवी सर्वकानना । विधिना तेन सा दत्ता योऽन्नं ददाति सर्वदा ॥ ३०१
*त्वं चाद्य श्रावितः सौम्य विकारं रक्तदत्तयोः(?) । क्षुधिते नित्यमन्नं वै दद्याच्छ्रद्धासमन्वितः ३०२
ब्रह्महत्यादिकं पापमन्नदश्चापकर्षति । किमज्ञानं तु ते सौम्य येनास्मान्परिपृच्छसि ॥ ३०३
ब्राह्मणेभ्यो महाप्राज्ञ क्षुधितेभ्यो विशेषतः । सर्वदानानि दत्तानि सर्वे यज्ञाः सदक्षिणाः ३०४
देवताः पूजिताः सर्वा योऽन्नं ददाति नित्यशः । स स्नातः सर्वतीर्थेषु स सर्वव्रतपारगः ॥ ३०५
क्षुधिते यः प्रयच्छेत अन्नं श्रद्धासमन्वितः । ब्रह्मभूतस्ततः सोऽथ ब्रह्मणा सह मोदते ॥ ३०६
सुसंस्कृतं च योऽप्यन्नं दद्यादहरहर्द्विजे । यः पठेदन्नदानं वै श्राद्धे चैव विशेषतः ॥ ३०७
एकाग्रमानसो भूत्वा अमावास्येन्दुसंक्षये । [7]भूतोपघातसंपूर्णे श्राद्धे श्रावयते सदा ॥ ३०८
पितरस्तस्य तुष्यन्ति यावज्जीवं न संशयः । देवद्विजसमीपस्थो [8]न समीपस्थितोऽपि वा ॥ ३०९
[9]बुद्धो वा प्रमत्तो वा [10]प्रमादादागतोऽपि वा । भक्त्या विरहितो वाऽपि सर्वपापैः प्रमुच्यते ॥ ३१०
[11]दमेन संयुता विप्राः सुखिनो धर्मभागि[12]नः । दमो दानं यमो यस्तु प्रोक्तस्तत्त्वार्थदर्शिभिः ॥ ३११
ब्राह्मणानां विशेषेण दमो धर्मः सनातनः । दमस्तेजो वर्धयति पवित्रो दम उत्तमः ॥ ३१२
विपाप्मा तेन तेजस्वी पुरुषो[13] दमतो भवेत् । ये केचिन्नियमा लोके ये च धर्माः [14]शुभक्रियाः ३१३

---

*इदमर्धं झ. पुस्तकस्थम् ।

---

१ ग. घ. पतङ्गाश्च । २ ग. °भ्यो वै वैष्णवस्त° । ३ ग. °नि शय्यावहसुखानि । घ. °नि सगन्धानि सुखानि । ४ झ. °मू । ददन्कन्यामलंकृत्य धर्मश्च सुमहाधनम् । अ° । ५ ग. उक्थश्च षोडशक्र° । ६ ग. घ. महाबलः । ७ ख. ङ. भूयोप° । ८ क. ख. घ. ङ. च. ज. न स दाता विमुच्यते । ९ ख. घ. ङ. च. ज. प्रवृद्धो । १० क. ख. घ. ङ. च. ज. प्रसङ्गादा° । ११ ञ. दानेन । १२ ख. ग. ङ. च. ज. °नः । यमो दमो वै नियमः प्रो° । १३ झ. °षो विन्दते महत् । १४ क. शुभान्विताः । ख. ग. घ. ङ. च. ज. शुभान्वयाः ।

११४

सर्वयज्ञफलं वाऽपि दमस्तेभ्यो विशिष्यते । +न दानस्य क्रियासिद्धिर्यथावदुपलभ्यते ॥ ३१४
ततो यज्ञस्ततो दानं दमादेव प्रवर्तते । किमरण्ये त्वदान्तस्य दान्तस्यापि किमाश्रमे ॥ ३१५
यत्र यत्र वसेद्दान्तस्तदरण्यं महाश्रमः । शीलवृत्तिनियुक्तस्य निगृहीतेन्द्रियस्य च ॥
आर्जवे वर्तमानस्य आश्रमैः किं प्रयोजनम् ॥ ३१६

वनेऽपि दोषाः प्रभवन्ति रागिणां गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते निवृत्तरागस्य गृहं तपोवनम् ॥ ३१७
स्वकर्मधर्मार्जितजीवितानां स्वेष्वेव दारेषु सदा रतानाम् ।
जितेन्द्रियाणामतिथिप्रियाणां गृहेऽपि मोक्षः पुरुषोत्तमानाम् ॥ ३१८
न शब्दशास्त्रे निरतस्य मोक्षो न वर्णसङ्गे निरतस्य चैव ।
न भोजनाच्छादनतत्परस्य न लोकचित्तग्रहणे रतस्य ॥ ३१९
एकान्तशीलस्य दृढव्रतस्य सर्वेन्द्रियप्रीतिनिवर्तकस्य ।
अध्यात्मयोगे गतमानसस्य मोक्षो ध्रुवं नित्यमहिंसकस्य ॥ ३२०

सुखेन दान्तः स्वपिति सुखं च प्रतिबुध्यते । समः सर्वेषु भूतेषु मनो यस्य प्रहृष्यति ॥ ३२१
न रथेन सुखं याति न हयेन न दन्तिना । यथाऽऽत्मना विनीतेन सुखं याति महापथम् ॥ ३२२
न तत्कुर्याद्धरिः स्पृष्टः सर्पो वाऽप्यतिरोपितः । अरिर्वा नित्यसंक्रुद्धो यथाऽऽत्मा दमवर्जितः ॥
[*न यमं यममित्याहुरात्मा वै यम उच्यते । आत्मा वै यमितो येन स यमस्तु विशिष्यते ३२४
यमो यम इति प्रोक्तो वृथा तूद्विजते जनः] । आत्मा वै यमितो येन यमस्तस्य करोति किं ॥ ३२५
क्रव्यादेभ्यश्च भूतेभ्योऽदान्तेभ्यश्च सदा भयम् । तेषां विप्रतिषेधार्थं दण्डः सृष्टः स्वयंभुवा ॥
[+दण्डो रक्षति भूतानि दण्डः पालयते प्रजाः । निवारयति पापिष्ठान्दण्डो दुर्जय एव वा ॥
श्यामो युवा लोहिताक्षः सर्व भूतभयावहः ] । दण्डः शास्ता मनुष्याणां यस्मिन्धर्मः प्रतिष्ठितः
अथाऽऽश्रमेषु भूतेषु दम एवोत्तमं व्रतम् । तानि लिङ्गानि वक्ष्यामि यैश्चापि स च धार्यते ॥ ३२९
अकार्पण्यमपारुष्यं संतोषः श्रद्दधानता । अनसूया गुरोः पूजा दया भूतेष्वपैशुनम् ॥ ३३०
सद्भिरेष दमः प्रोक्त ऋषिभिः शान्तबुद्धिभिः । दयाधीनौ धर्ममोक्षौ तथा स्वर्गश्च पार्थिव ३३१
अवमाने न कुप्येत संमाने न प्रहृष्यति । समदुःखसुखो धीरः प्रशान्त इति कीर्त्यते ॥ ३३२
सुखं ह्यवमतः शेते सुखं चैव प्रबुध्यति । श्रेयस्तरमतिस्तिष्ठेदवमन्ता विनश्यति ॥ ३३३
अपमानी तु न ध्यायेत्तस्य पापं कदाचन । स्वधर्ममपि चावेक्ष्य परधर्मं न दूषयेत् ॥ ३३४
आत्मानमपि जानीयात्परं दोषैस्तु नाऽऽक्षिपेत् । मन्त्रहीनं क्रियाभिर्वा जन्मनाऽप्यथ वा पुनः ॥
दमश्छादयते सर्वं हीनमङ्गं पटो यथा । ते निरर्थमधीयते नाभिजानन्ति ये दमम् ॥ ३३६

---

+ इदमर्धं झ. पुस्तकस्थम् । * धनुश्चिह्नान्तर्गतः पाठो ग. घ. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः ख. ग. घ. ङ. ज. पुस्तकस्थः ।

---

१ ञ. तपो । २ झ. °रण्यं प्रदा° । ३ झ. °न्तस्य अदान्तस्य किं° । ४ झ. °श्रमैः । यं° । ५ ग. घ. ज. °पि धर्मो नियमस्थितानाम् । ६ क. ख. ग. घ. ङ. च. ज. °कवृत्तप्र° । ७ ख. ग. घ. ङ. ज. प्रबुध्यते । ८ ख. ग. घ. ङ. ज. अश्वमेधेषु सर्वेषु । ९ ग. घ. °मि यैः शान्त इति कीर्त्यते । १० ञ. यैर्दान्त इति कीर्त्यते । ११ झ. °षः सुविधा° । १२ ख. ग. घ. ङ. ज. °म् । षड्भिरे° । १३ क. ख. ग. घ. ङ. च. ज. °वमानाद्विन° ।

श्रुतस्य[1] हि दमो मूलं दमो धर्मः सनातनः । यो ह्यात्मानं तुलयते सुवर्णतुलया धृतम्[2] ॥ ३३७
स तेन धृतिमान्ख्यातः स तदर्थेन मोहितः । व्रतानामपि सर्वेषां दम एव परायणम् ॥ ३३८
यद्यधीते षडङ्गानि वेदतत्त्वार्थविद्द्विजः[3] । दमेन तु विहीनश्च पूजां नैवेह गच्छति ॥ ३३९
दमेन हीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः ।
सांख्यं च योगश्च कुलं च जन्म तीर्थाभिषेकश्च निरर्थकानि ॥ ३४०
अमृतस्येव तृप्येत अपमानस्य योगवित् । विषवच्च जुगुप्सेत संमानस्य सदा द्विजः ॥ ३४१
अपमानात्तपोवृद्धिः संमानाच्च तपःक्षयः । अर्चितः पूजितो विप्रो दुग्धा गौरिव गच्छति (हीयते)
पुनराप्यायते धेनुः सतृणैः सलिलैर्यथा । एवं जपैश्च होमैश्च पुनराप्यायते द्विजः ॥ ३४३
आक्रोशकसमो लोके सुहृदन्यो न विद्यते । यस्तु दुष्कृतमादाय सुकृतं स्वं प्रयच्छति ॥ ३४४
आक्रोशमानान्नाऽऽक्रोशेन्मन्युः[4] स्वं विनिवर्तयेत् । संनियम्य तदाऽऽत्मानममृतेनाभिषिञ्चति ३४५
कपालं वृक्षमूलानि कुचेलमसहायता । अनपेक्षा ब्रह्मचर्यं नयन्ति परमां गतिम् ॥ ३४६
कामक्रोधौ विनिर्जित्य किमरण्यैः[5] करिष्यति । अन्नेन[6] धार्यते देहः कुलं शीलेन धार्यते ॥ ३४७
प्राणा मित्रेण धार्यन्ते क्रोधः सत्येन धार्यते । यस्तु क्रोधं समुत्पन्नं संधारयति चाऽऽत्मनः ३४८
अक्रोधने जयेद्वीरः कस्तेन सदृशो भुवि । यश्च क्रोधं समुत्पन्नं भयं संयम्य तिष्ठति[7] ॥ ३४९
उत्तमं सारथिं मन्ये[8] योऽरागे न विलम्बते । एष पैतामहो गुह्यो ब्रह्मराशिः सनातनः ॥ ३५०
धर्मस्यं[9] योऽस्ति हृदयं मया ते कथितोऽनघ । अन्ये च यज्विनां लोका [*अन्ये चापि तपस्विनाम्
अन्ये दमवतां लोकाः] सर्वे परमपूजिताः । एष क्षमावतां दोषो द्वितीयो नोपपद्यते ॥ ३५२
यदेनं क्षमया युक्तमशक्तं मन्यते जनः । न चैष दोषो मन्तव्यः क्षमा प्रज्ञावतां बलम् ॥ ३५३
प्रशमं[10][11] यो न जानाति इष्टापूर्तात्स हीयते । यत्क्रोधयुक्तो जपति जुहोति च यदर्चति ॥ ३५४
सर्वं क्षरति तत्तस्य भिन्नभाण्डादिवोदकम् । दमाध्यायमिदं पुण्यं प्रातरुत्थाय यः पठेत् ॥ ३५५
स धर्मनावमारुह्य दुर्गाण्यतितरिष्यति । दमाध्यायमिमं पुण्यं सततं श्रावयेद्द्विजः ॥ ३५६
स ब्रह्मलोकमाप्नोति तस्मान्न च्यवते पुनः । श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ॥ ३५७
आत्मनः प्रतिकूलानि परेषां न समाचरेत् । मातृवत्परदारांश्च परद्रव्याणि लोष्टवत् ॥ ३५८
आत्मवत्सर्वभूतानि यः पश्यति स पश्यति[12] । पचनं वैश्वदेवार्थे[13] सत्यार्थे यस्य जीवितम् ३५९
[+पुत्रार्थं मैथुनं यस्य स्वर्गार्थं तस्य जीवितं । एतद्भवेच्च सर्वस्वं धातूनामिव काञ्चनम् ॥ ३६०
सर्वभूतहितं राजन्नधीत्यामृतमश्नुते ॥

पुलस्त्य उवाच—

एवं[14] वै धर्मसर्वस्वमुक्त्वा[15] ते तु शुनःसखम् ॥ ३६१

---

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

---

१ झ. व्रतस्य । २ ग. °म्। एतस्य हि दमो मूलं न तु दर्पेण मों° । ३ ग. °त्स्वार्थमृत्विजः । ४ क. ख. ग. घ. ङ. च. ज °न्मन्युं स्वं । ५ झ. °भिगच्छाति । ६ क. ख. ङ. च. ज °मन्येन क° । ७ क. ख. ग. घ. ङ. च. ज. अभ्यासेन तु वै शास्त्रं कु° । ८ ज. °ति । तत्तःसारतमं मन्ये योऽस्मिन्सीदति वै युगे । ए° । क. ख. ङ. च. °ति । तं संसारतमं मन्ये योऽस्मिन्सीदति वै युगे । ए° । ९ ग. °न्ये क्रोधनिग्रहमेव तु । ए° । १० क. ख. ग घ. ङ. च. ज °स्य नियतो यो हि मया ते कथितो भृशम् । अ° । ११ क. ख. घ. ङ. च. ज. प्रसमं योऽभिजानाति इष्टापूर्तं महीपते । १२ क. ख. ङ. च. ज. °ति । मरणं चैव वेदार्थे । १३ झ. °र्थे यत्परार्थे विज्ञी° । १४ झ. एतद्धारतस° । १५ झ. °मेवर्वस्वं ।

सतेनैव सहिताः सर्वे गत्वा किंचिद्वनान्तरम् । सरोऽपश्यन्सुविस्तीर्णं पद्मोत्पलजलावृतम् ॥ ३६२
तत्रावतारं कृत्वा ते बिसानि च कलापशः । तीरे निक्षिप्य सरसश्चक्रुः पुण्यां जलक्रियाम् ३६३
अथोत्तीर्य जलात्तस्मात्ते समेत्य परस्परम् । बिसानि तान्यपश्यन्त इदं वचनमब्रुवन् ॥ ३६४

ऋषय ऊचुः—

केन क्षुधाऽभितप्तानामस्माकं पापकर्मणा । नृशंसेनापनीतानि बिसान्याहारकाङ्क्षिणा ॥ ३६५
ते शङ्कमानास्त्वन्योन्यं पर्यपृच्छन्द्विजोत्तमाः । चक्रुश्च निश्चयं सर्वे शपथं पथि पार्थिव ॥ ३६६

कौत्यायन उवाच—

सर्वत्र सर्वं हरतु न्यासे लोभं करोतु सः । कूटसाक्षित्वमभ्येतु बिसस्तैन्यं करोति यः ॥ ३६७
[*दम्भेन धर्मं चरतु राजानं चोपसेवताम् । मधुमांसं समश्नातु बिसस्तैन्यं करोति यः]॥ ३६८
अनृतं भाषतु सदा वार्धि(र्ध)क्यं चोपजीवतु । ददातु कन्या शुल्केन बिसस्तैन्यं करोति यः॥ ३६९

वसिष्ठ उवाच—

अनृतौ मैथुनं यातु दिवास्वप्नं निषेवतु । अन्योन्यातिथितामेतु बिसस्तैन्यं करोति यः ॥ ३७०
एककूपे वसेद्ग्रामे ब्राह्मणो वृषलीपतिः । तस्य सालोक्यतां यातु बिसस्तैन्यं करोति यः ॥ ३७१

भरद्वाज उवाच—

नृशंसस्तेषु सर्वेषु समृद्ध्या चाप्यहंकृतः । मत्सरी पिशुनश्चैव बिसस्तैन्यं करोति यः ॥ ३७२
प्रत्याक्रोशत्ववाक्रुष्टस्ताडयत्वन्यताडितः । विक्रीणातु रसांश्चैव बिसस्तैन्यं करोति यः ॥ ३७३

गौतम उवाच—

अतिथिं च सदा प्राप्य पाकभेदं करोतु सः । शूद्रान्नं वा सदाऽश्नातु बिसस्तैन्यं करोति यः॥ ३७४
दत्त्वा दानं कीर्तयतु परभार्यां स गच्छतु । एकाकी मिष्टमश्नातु बिसस्तैन्यं करोति यः ॥ ३७५

विश्वामित्र उवाच—

नित्यं कामपरः सोऽस्तु दिवा सेवतु मैथुनम् । नित्यं तु पातकी चैव बिसस्तैन्यं करोति यः ३७६
परापवादं वदतु परदारांश्च सेवतु । परनिन्दारतश्चास्तु बिसस्तैन्यं करोति यः ॥ ३७७

जमदग्निरुवाच—

मातरं पितरं चैव अवमन्यतु दुर्मतिः । स्वसुतादत्तवृत्तिः स्याद्बिसस्तैन्यं करोति यः ॥ ३७८
परपाकं सदाऽश्नातु परनारीं च सेवतु । गवां विक्रयकः सोऽस्तु बिसस्तैन्यं करोति यः ॥ ३७९

पाराशर उवाच—

परस्य यातु प्रेष्यत्वं क्रोधी जन्मनि जन्मनि । सर्वधर्मक्रियाहीनो बिसस्तैन्यं करोति यः ॥ ३८०

शुनःसख उवाच—

न्यायेन वेदाध्ययनं गृहस्थोऽस्तु प्रियातिथिः । सत्यं वदतु वाऽजस्रं बिसस्तैन्यं करोति यः ॥
अग्निं जुहोतु विधिवद्यज्ञं यजतु नित्यशः । ब्रह्मणः सदनं यातु बिसस्तैन्यं करोति यः ॥ ३८२

---

*धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. ज. सर्वेऽप° । २ क. ख. ग. घ. ङ. च. ञ. कश्यप । ३ ज. °दा विषयांश्चोपसेव° । ४ क. ख. ङ. च. ज. °प्य वाग्मेदं तु क° । ५ क. ख. ग. घ. ङ. च. ज. °भार्यासु तुष्यतु । ६ ज. °रस्याभिभवं चैव बि° । ७ क. ख. ङ. च. °तिः । स मातुरन्यवुद्धिः स्या° । ८ ग. घ. ज. °तु । वेदविक्रयकर्ताऽस्तु । ९ झ. °च—पुत्रस्याऽऽदेशकर्ता यः सोऽस्तु ज° ।

ऋषय ऊचुः—

इष्टमेतद्द्विजातीनां योऽयं ते शपथः कृतः । त्वया कृतं विसस्तैन्यं सर्वेषां नः शुनःसख ॥ ३८३

शुनःसख उवाच—

न्यस्ता ह्यन्तर्हितान्यासन्विसानीमानि वो द्विजाः । धर्मं वै श्रोतुकामेन जानीध्वं मां च वासवम्[१]॥

अलोभादक्षया लोका जिता वो मुनिसत्तमाः । विमानमधितिष्ठध्वं गच्छामस्त्रिदशालयम् ॥३८५

ततो महर्षयस्ते तु विज्ञायाथ पुरंदरम् । ऊचुः पुरंदरं चेदं वाक्यं वाक्यविशारदाः ॥ ३८६

ऋषय ऊचुः—

इहाऽऽगत्य नरो यस्तु मध्यमं पुष्करं विशेत्[२] । त्रिरात्रोपोषितो भूत्वा लभेद[३]नन्तकं फलम् ॥

द्वादशवार्षिकी दीक्षा स्मृता या तु वनौकसाम् । तस्याः फलं समग्रं स लभेदिह न संशयः ॥

नासौ दुर्गतिमाप्नोति स्वकुलैः[४] सह मोदते[५] । विरिञ्चेः स्थानमासाद्य तिष्ठति ब्रह्मणो दिनम् ॥

पुलस्त्य उवाच—

इन्द्रेण सह सुप्रीतास्तदा जग्मुस्त्रिविष्टपम् । एवं विलोभ्यमानास्ते भोगैर्बहुविधै[६]रपि ॥ ३९०

नैव लोभं तदा चक्रुस्तेन जग्मुस्त्रिविष्टपम् । इदं यः शृणुयान्नित्यमृषीणां चरितं म[७]हत् ॥

विमुक्तः सर्वपापेभ्यः स्वर्गलोके महीयते ॥ ३९१

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे सर्षिसंवादो नामैकोनविंशोऽध्यायः॥ १९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२३५८३

---

अथ विंशोऽध्यायः ।

---

भीष्म उवाच—

अत्याश्चर्यवती रम्या कथेयं पापनाशिनी । विस्तरेण च मे ब्रूहि याथातथ्येन पृच्छतः ॥ १

माहात्म्यं मध्यमस्यापि ऋषिभिः परिकीर्तितम् । फलं चान्नस्य कथितं माहात्म्यं च दमस्य तु ॥

विष्णुना च पदन्यासः कृतो यत्र महामुने । कनीयसस्तथोत्पत्तिर्यथा भूता वदस्व मे ॥ ३

पुलस्त्य उवाच—

पुरा रथंतरे कल्पे राजाऽऽसीत्पुष्पवाहनः । नाम्ना लोकेषु विख्यातस्तेजसा सूर्यसंनिभः ॥ ४

तपसा तस्य तुष्टेन चतुर्वक्त्रेण भारत । कमलं काञ्चनं दत्तं यथा वै कामगं नृप ॥ ५

*लोके तु सप्तद्वीपेऽपि ऋषिभिः सहितो नृप[८] । द्वीपानि नरलोकं च यथेष्टं व्यचर[९]त्सदा ॥ ६

कल्पादौ तु समं द्वीपं तस्य पुष्करवासिना । लोकेन पूजितं तस्मात्पुष्करद्वीपमुच्यते ॥ ७

तदेव ब्रह्मणा दत्तं यानमस्य ततोऽम्बुजम् । पुष्पवाहन इत्याहुस्तस्मात्तं देवदानवाः ॥ ८

नौपम्यमप्यस्ति जगत्त्रयेऽपि ब्रह्माम्बुजं[१०]स्या[११]स्य च तस्य राज्ञः ।

तपोनुभावादथ तस्य राज्ञी[१२] जनैः समस्तैरभिवन्द्यमाना ॥ ९

---

* इदमर्धं झ. पुस्तक एव दृश्यते ।

---

१ झ. °मां सवा° । २ ख. ङ. °याऽऽशु पु° । ३ क. ख. ग. घ. ङ. च. ज. °दावश्यकं । ४ क. च. स्वगणैः । घ. ज. स्वर्गणैः । ५ ञ. °ते । ऋषिस्थानं समा° । ६ ख. घ. ङ. च. ज. °धैरिह । नै° । ७ क. ख. ग. घ. ङ. च. ज. शुभम् । ८ क. ख. ग. घ. ङ. च. ज. °प । सप्तद्वीपानि लो° । ९ ग. °रत्तदा । १० ञ. °जस्थस्य । ११ ङ. °स्य वरस्य । १२ क. ख. ग. घ. ङ. च. ज. °ज्ञी नारीसहस्रैर° ।

नाम्ना च लावण्यवती बभूव या पार्वतीवेष्टतमा भवस्य ।
तस्याऽऽत्मजानामयुतं बभूव धर्मात्मनामग्र्यधनुर्धराणाम् ॥ १०

तदाऽऽत्मजांस्तानथ वीक्ष्य राजा मुहुर्मुहुर्विस्मयमाससाद ।
सोऽभ्यागतं पूज्य मुनिप्रवीरं प्रचेतसं वाचमिमां बभाषे ॥ ११

राजोवाच—

कस्माद्विभूतिरचलामेरमर्त्यपूज्या जाता च सर्गे विजिता च सुन्दरी ।
भार्या मयाऽल्पतपसा परितोषितेन दत्तं ममाम्बुजगृहं च मुनीन्द्रधात्रा ॥ १२

यस्मिन्प्रविष्टमपि कोटिशतं नृपाणां सामात्यकुञ्जररथौघजनावृतानाम् ।
नो लभ्यते क्व गतमम्बरगामिभिश्च तारागणेन्दुरविरश्मिभिरप्यगम्यम् ॥ १३

तस्मात्किमन्यजननीजठरोद्भवेन धर्मादिकं कृतमशेषजनातिगं स्यात् ।
सर्वैर्मयाऽपि तनयैरथवाऽनयाऽपि सद्भार्यया तदखिलं कथय प्रचेतः ॥ १४

पुलस्त्य उवाच—

सोऽप्यभ्यधादथ भवान्तरितं निरीक्ष्य पृथ्वीपते शृणु तदद्भुतहेतुवृत्तम् ।
जन्माभवत्तव तु लुब्धकुलेऽपि घोरं जातस्त्वमप्यनुदिनं किल पापकारी ॥ १५

वपुरप्यभूत्तव पुनः परुषाङ्गसंधि दुर्गन्धसत्त्वकुनखाभरणं समन्तात् ।
न च ते सुहृन्न सुतबन्धुजनो न तादृङ्नैव स्वसा न जननी च तदाऽभिशस्ता १६

अतिसंमता परमभीष्टतमाऽभिमुखी जाता महीश तव योषिदियं सुरूपा ।
अभूदनावृष्टिरतीव रौद्रा कदाचनाऽऽहारनिमित्तमस्मिन् ॥ १७

क्षुत्पीडितेन भवता तु यदा न किंचिदासादितं वन्यफलादि खाद्यम् ।
अथाभिदृष्टं महदम्बुजाढ्यं सरोवरं पङ्कजखण्डमण्डितम् ॥ १८

पद्मान्यथाऽऽदाय ततो बहूनि गतः पुरं वैदिशनामधेयम् ।
तन्मूल्यलाभाय पुरं समस्तं भ्रान्तं त्वयाऽशेषमहस्तदाऽऽसीत् ॥
क्रेता न कश्चित्कमलेषु जातः क्लान्तो भृशं क्षुत्परिपीडितश्च ॥ १९

उपविष्टस्त्वमेकस्मिन्सभार्यो भवनाङ्गणे । ततो रात्रौ भवांस्तत्र अश्रौषीन्मङ्गलध्वनिम् ॥ २०
[*सभार्यस्तत्र भगवान्यत्रासौ मङ्गलध्वनिः ] । तत्र मण्डलमध्यस्था विष्णोरर्चा विलोकिता २१
वेश्याऽनङ्गवती नाम विभूतिद्वादशीव्रतम् । समाप्य माघमासस्य द्वादश्यां लवणाचलम् ॥ २२
निवेदयन्ती गुरवे शय्यां चोपस्करान्विताम् । अलंकृत्य हृषीकेशं सौवर्णं सममादरात् ॥ २३
सा च दृष्टा ततस्ताभ्यामिदं च परिचिन्तितम् । किमेभिः कमलैः कार्यं वरं विष्णुरलंकृतः २४
इति भक्तिः सदा जाता दंपत्योस्तु नरेश्वर । तत्प्रसङ्गात्समभ्यर्च्य केशवं लवणाचलम् ॥ २५
शय्या च पुष्पप्रकरैः पूजिताऽभूच्च सर्वतः । अथानङ्गवती तुष्टा तयोर्धान्यशतत्रयम् ॥ २६
दीयतामादिदेशाथ कलधौतं पलत्रयम् । न गृहीतं ततस्ताभ्यां महासत्त्वावलम्बनात् ॥ २७

---

* धनुश्चिह्नान्तर्गतः पाठः ख. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ झ. °रचला° । २ झ. मम मर्त्य° । ३ क. ख. ग. घ. °ता कथं कमलजा सुदती सुराज्ञी । भा° । ४ क. ख. ङ. च. यत् । ५ झ. गतो । ६ च. °द्या जाङ्गव° । ७ च. भक्तिस्तदा । ८ ग. घ. ज. तयोर्धात्रीश° । झ. तदैव वसत° । ९ ख. ङ. च. °तं शतत्र° ।

अनङ्गवत्या च पुनस्तयोरन्नं चतुर्विधम् । आनीय व्याहृतं तेन भुज्यतामिति भूपते ॥ २८
ताभ्यां च तदपि त्यक्तं भोक्ष्यावः श्वो वरानने । प्रसङ्गादुपवासो नौ तवाद्यास्तु शुभावहः॥२९
जन्मप्रभृति पापिष्ठा वयं देवि दृढव्रते । प्रसङ्गात्तव सुश्रोणि धर्मलेशोऽस्तु नाविह ॥ ३०
इति जागरणं ताभ्यां तत्प्रसङ्गादनुष्ठितम् । प्रभाते च तया दत्ता शय्या सलवणाचला ॥ ३१
ग्रामश्च गुरवे भक्त्या विप्रेभ्यो द्वादशैव तु । वस्त्रालंकारसंयुक्ता गावश्च कनकान्विताः ॥ ३२
भोजनं च सुहृन्मित्रदीनान्धकृपणैः समम् । तच्च लुब्धकदांपत्यं पूजयित्वा विसर्जितम् ॥ ३३
स भवाल्लुँब्धको जातः सपत्नीको नृपेश्वरः । पुष्करप्रकरात्तस्मात्केशवस्य तु पूजनात् ॥ ३४
विनष्टाशेषपापस्य तव पुष्करमन्दिरम् । तस्य तस्य च माहात्म्यादलोभतपसा नृप ॥ ३५
प्रादात्तु कामगं यानं लोकनाथश्चतुर्मुखः । संतुष्टस्तव राजेन्द्र पुष्करं त्वं समाश्रय ॥ ३६
कल्पः स त्वं समासाद्य विभूतिद्वादशीव्रतम् । कुरु राजेन्द्र निर्वाणमवश्यं समवाप्स्यसि॥ ३७
एतदुक्त्वा स तु मुनिस्तत्रैवान्तरधीयत । राजा यथोक्तं च पुनरकरोत्पुष्पवाहनः ॥ ३८
इदमाचरतो राजन्नखण्डव्रतता भवेत् । यथाकथंचित्कालेन द्वादशद्वादशी नृप ॥ ३९
कर्तव्या शक्तितो देया विप्रेभ्यो दक्षिणाऽनघ । ज्येष्ठे गास्तु प्रदातव्या मध्यमे भूमिरुत्तमा ॥
कनिष्ठे काञ्चनं देयमित्येषा दक्षिणा स्मृता । प्रथमं ब्रह्मदैवत्यं द्वितीयं वैष्णवं तथा ॥
तृतीयं रुद्रदैवत्यं त्रयो देवाः पृथक्स्थिताः ॥ ४१

इति कलुषविदारणं जनानामपि पठति शृणोति चातिभक्त्या ।
मतिमपि च ददाति देवलोके स वसति रोमसमानि वत्सराणि ॥ ४२

अथातः संप्रवक्ष्यामि व्रेतानामुत्तमं व्रतम् । कथितं तेन रुद्रेण महापातकनाशनम् ॥ ४३
नैक्तमन्नं चरित्वा तु गवा सार्धं कुटुम्बिने । हेमचक्रं त्रिशूलं च दद्याद्विप्राय वाससी ॥ ४४
एवं यः कुरुते पुण्यं शिवलोके स मोदते । एतद्देव व्रतं नाम महापातकनाशनम् ॥ ४५
यस्त्वेकभक्तेन क्षिपेद्धेनुं वृषसमन्विताम् । धेनुं तिलमयीं दद्यात्स पदं याति शांकरम् ॥ ४६
एतद्रुद्रव्रतं नाम पापशोकविनाशनम् । यस्तु नीलोत्पलं हैमं शर्करापात्रसंयुतम् ॥ ४७
एकान्तरितनक्ताशी समान्ते वृषसंयुतम् । वैष्णवं स पदं याति नीलव्रतमिह स्मृतम् ॥ ४८
आषाढादिचतुर्मासमभ्यङ्गं वर्जयेन्नरः । [*भोजनोपस्करं दद्यात्स याति भवनं हरेः] ॥ ४९
जनप्रीतिकरं नृणां प्रीतिव्रतमिहोच्यते । वर्जयित्वा मधौ यस्तु दधिक्षीरघृतैक्षवम् ॥ ५०
दद्याद्वस्त्राणि सूक्ष्माणि रसपात्रैश्च संयुतम् । संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति ॥ ५१
एवं गौरीव्रतं नाम भवानीलोकदायकम् । पुँष्यादौ यस्त्रयोदश्यां कृत्वा नक्तमथो पुनः ॥ ५२
अशोकं काञ्चनं दद्यादिक्षुयुक्तं दशाङ्गुलम् । विप्राय वस्त्रसंयुक्तं प्रद्युम्नः प्रीयतामिति ॥ ५३
कल्पं विष्णुपुरे स्थित्वा विशोकः स्यात्पुनर्नृप। एतत्कामव्रतं नाम सदा शोकविनाशनम् ॥ ५४
[+आषाढादिव्रते यस्तु वर्जयेद्यः (त्तु) फलाशनम् । चातुर्मास्ये निवृत्ते तु घटं सर्पिर्गुडान्वितम्]
कार्तिक्यां तत्पुनर्हैमं ब्राह्मणाय निवेदयेत् । स रुद्रलोकमाप्नोति शिवव्रतमिदं स्मृतम् ॥ ५६

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

१ क. ग. घ. ङ. च. ज. °त्यं त्रयो देवास्त्रिषु स्थिताः । ख. °त्यं देवास्त्रिषु सदा स्थिताः । २ झ. व्रतं षष्ठीमनुत्तमम् । ३ ज. नक्तं पृष्ठं च° । ४ झ. वर्णमयीं । ५ ज. यश्च नीलोत्पलं देयं श° । ६ ख. ग. घ. ङ. च. ज. समाप्ते । ७ घ. पुष्करायत्न° । ग. ज पुष्करादयत्न° ।

वर्जयेद्यस्तु पुष्पाणि हेमन्ते शिशिरावृते। पुष्पत्रयं च फाल्गुन्यां शक्त्या कृत्वा च काञ्चनम् ॥५७
दद्याद्द्विकालवेलायां प्रीयेतां शिवकेशवौ। दत्त्वा परं पदं याति सौम्यव्रतमिदं स्मृतम् ॥ ५८
फाल्गुनादितृतीयायां लवणं यस्तु वर्जयेत्। समाप्ते[1] शयनं दत्त्वा गृहं चोपस्कारान्वितम् ॥ ५९
संपूज्य विप्रमिथुनं भवानी प्रीयतामिति। गौरीलोके वसेत्कल्पं सौभाग्यव्रतमुच्यते ॥ ६०
संध्यामौनं नरः कृत्वा समाप्ते[2] घृतकुम्भवत्। वस्त्रयुग्मं तिलान्घण्टां ब्राह्मणाय निवेदयेत् ॥ ६१
लोकं सारस्वतं याति पुनरावृत्तिदुर्लभम्। एतत्सारस्वतं नाम रूपविद्याप्रदं व्रतम् ॥ ६२
लक्ष्मीमभ्यर्च्य पञ्चम्यामुपवासी भवेन्नरः। समाप्ते[3] हेमकमलं दद्याद्धेनुसमान्वितम् ॥ ६३
स वै विष्णुपदं याति लक्ष्मीः स्याज्जन्मजन्मनि। एतल्लक्ष्मीव्रतं[4] नाम दुःखशोकाविनाशनम् ॥६४
कृत्वोपलेपनं शंभोरग्रतः केशवस्य च। यावदब्दं पुनस्तत्र देया धेनुर्घटस्तथा ॥ ६५
जन्मायुतं स राजा स्यात्ततः शिवपुरं व्रजेत्। एतदायुर्व्रतं नाम सर्वकामप्रदायकम् ॥ ६६
अश्वत्थं भास्करं गङ्गां प्रणम्यैकत्र[5] वाग्यतः। एकभुक्तं नरः कुर्यादब्दमेकं विमत्सरः ॥ ६७
व्रतान्ते विप्रमिथुनं पूज्य धेनुत्रयान्वितम्। वृक्षं हिरण्मयं दद्यात्सोऽश्वमेधफलं लभेत् ॥ ६८
एतत्कीर्तिव्रतं नाम भूतिकीर्तिफलप्रदम्। घृतेन स्नपनं कृत्वा शंभोर्वा केशवस्य वा ॥ ६९
अक्षताभिः[6] समं कुर्यात्पद्मं गोमयमण्डलम्। समाप्ते हेमकमलं[7] तिलधेनुसमन्वितम् ॥ ७०
शुद्धमष्टाङ्गुलं दद्याच्छिवलोके महीयते। साम गाययतश्चैव सामव्रतमिहोच्यते ॥ ७१
नवम्यामेकभक्तं तु कृत्वा कन्याश्च भक्तितः[8]। भोजयित्वा च गां दद्याद्धेमकञ्चुकवाससी ॥ ७२
हैमं सिंहं च विप्राय दत्त्वा शिवपदं व्रजेत्। जन्मार्बुदं सुरूपः स्याच्छत्रुभिश्चापराजितः ॥ ७३
एतद्वीरव्रतं नाम नारीणां च सुखप्रदम्। यावत्समापयेद्यस्तु[9][10] पञ्चदश्यां पयोव्रतम् ॥ ७४
समाप्ते तु सकृद्दद्याद्गाश्च पञ्च पयस्विनीः। वासांसि चाऽऽपिशङ्गानि[11] जलकुम्भयुतानि च ॥७५
स याति वैष्णवं लोकं पितॄणां तारयेच्छतम्। कल्पान्ते राजराजेन्द्रः पितृव्रतमिदं स्मृतम् ७६
चैत्रादिचतुरो मासाञ्जलं दद्यादयाचितम्। व्रतान्ते मणिकं दद्यादन्नवस्त्रसमान्वितम् ॥ ७७
तिलपात्रं हिरण्यं च ब्रह्मलोके महीयते। कल्पान्ते भूतिजननं[12] सानन्दव्रतमुत्तमम् ॥ ७८
पञ्चामृतेन स्नपनं कृत्वा संवत्सरं विभो। वत्सरान्ते पुनर्दद्याद्धेनुं पञ्चामृतैर्युताम् ॥ ७९
विप्राय दद्याच्छङ्खं च स पदं याति शांकरम्। राजा भवति कल्पान्ते[13] धृतिव्रतमिदं स्मृतम् ८०
वर्जयित्वा पुमान्मांसं व्रतान्ते गोप्रदो भवेत्। तद्वद्धेममृगं दद्यात्सोऽश्वमेधफलं लभेत् ॥ ८१
अहिंसाव्रतमित्युक्तं कल्पान्ते भूपतिर्भवेत्[14]। माघमास्युपासि स्नानं कृत्वा दांपत्यमर्चयेत् ॥ ८२
भोजयित्वा यथाशक्त्यॉ(क्ति)[15]नरो वस्त्रविभूषणैः। सूर्यलोके वसेत्कल्पं सूर्यव्रतमिदं स्मृतम् ॥
आषाढादिचतुर्मासं प्रातःस्नायी भवेन्नरः ॥ ८३
विप्रेषु भोजनं दद्यात्कार्तिक्यां गोप्रदो भवेत्। स वैष्णवं पदं याति विष्णुव्रतमिदं स्मृतम् ॥ ८४
अयनादयनं यावद्वर्जयेत्पुष्पसर्पिषी। तदन्ते पुष्पदामानि दत्त्वा तच्च द्विजातये ॥ ८५

---

१ ञ. समान्ते। २ ञ. समान्ते। ३ ञ. समान्ते। ४ झ. °तत्सर्वव्र°। ५ क. ख. ग. ङ. च. ज °म्यैकाग्रवा°। ६ क. ख. ङ. च. °भिः सपुष्पाभिः कृत्वा गो°! ७ क. ख. ग. घ. ङ. च. °कलशं ति°। ८ क. ख. ग. घ. ङ. च. ज. शक्तितः। ९ क. ख. ङ. च. °त्वा समं द°। ग. घ. ज. °त्वा समा द°। १० क. ख. ग. घ ङ. च. ज. °ते श्राद्धक°। ११ ग. घ. °सि च विचित्राणि ज°। ज. °सि च विशुद्धानि। १२ क. ख. ग. घ. ङ. च. ज. भूपतिर्नूनमान°। १३ ग. घ. ज. °न्ते घृत्तिव्र°। १४ क. ख. ग. घ. ङ. च. ज. °त्। कल्यमुत्थाय वै स्ना°। १५ क. ख. ग. घ. ङ. च. ज. °क्त्या माल्यव°।

दद्याद्द्विजातये राजन्घृत(तं)धेन्वा सहैव च । दत्त्वा शिवपदं याति विप्राय घृतपायसम् ॥ ८६
एतच्छीलव्रतं नाम शीलारोग्यप्रदायकम् । संध्यादीपप्रदो यस्तु घृतं तैलं च वर्जयेत् ॥ ८७
समाप्ते दीपकं दद्याच्चक्रं शूलं च काञ्चनम् । वस्त्रयुग्मं च विप्राय स तेजस्वी भवेदिह ॥ ८८
रुद्रलोकमवाप्नोति दीप्तिव्रतमनुत्तमम् । कार्तिकादितृतीयायां प्राश्य गोमूत्रयावकम् ॥ ८९
नक्तं चरेदब्दमेकमब्दान्ते गोप्रदो भवेत् । गौरीलोके वसेत्कल्पं ततो राजा भवेदिह ॥ ९०
एतद्रुद्रव्रतं नाम सदा कल्याणकारकम् । वर्जयेच्चतुरो मासान्यस्तु गन्धानुलेपनम् ॥ ९१
शुक्तिगन्धाक्षतान्दद्याद्विप्राय सितवाससी । वारुणं पदमाप्नोति दृढव्रतमिदं स्मृतम् ॥ ९२
वैशाखे पुष्पलवणं वर्जयेदथ गोप्रदः । भूत्वा विष्णुपदे कल्पं स्थित्वा राजा भवेदिह ॥ ९३
एतच्छान्तिव्रतं नाम कीर्तिकामफलप्रदम् । ब्रह्माण्डं काञ्चनं कृत्वा तिलराशिसमान्वितम् ॥ ९४
अहं(?)तिलप्रदो भूत्वा वह्निं संतर्प्य सद्द्विजम् । संपूज्य विप्रदांपत्यं माल्यवस्त्रविभूषणैः ॥ ९५
शक्तितस्त्रिपलादूर्ध्वं विश्वात्मा प्रियतामिति । पुण्येऽह्नि दद्यादपरे ब्रह्म यात्यपुनर्भवम् ॥ ९६
एतद्ब्रह्मव्रतं नाम निर्वाणफलदं नृणाम् । यश्चोभयमुखीं दद्यात्प्रभूतसकलान्विताम् ॥ ९७
दिनं पयोव्रतं तिष्ठेत्स याति परमं पदम् । एतद्धि सुव्रतं नाम पुनरावृत्तिदुर्लभम् ॥ ९८
त्र्यहं पयोव्रतः स्थित्वा काञ्चनं कल्पपादपम् । पलादूर्ध्वं यथाशक्त्या(क्ति) तण्डुलप्रस्थसंयुतम् ॥
दत्त्वा ब्रह्मपदं याति कल्पवृक्षव्रतं स्मृतम् । मासोपवासी यो दद्याद्धेनुं विप्राय शोभनाम् ॥ १००
स वैष्णवपदं याति भीमव्रतमिदं स्मृतम् । दद्याद्विंशत्पलादूर्ध्वं महीं कृत्वा तु काञ्चनीम् ॥ १०१
दिनं पयोव्रतस्तिष्ठेद्रुद्रलोके महीयते । धनप्रदमिदं प्रोक्तं सप्तकल्पशतानुगम् ॥ १०२
माघे मास्यथ चैत्रे वा गुडधेनुप्रदो भवेत् । गुडव्रतं तृतीयायां गौरीलोके महीयते ॥ १०३
महाव्रतमिदं नाम परमानन्दकारकम् । पक्षोपवासी यो दद्याद्विप्राय कपिलाद्वयम् ॥ १०४
स ब्रह्मलोकमाप्नोति देवासुरसुपूजितः । कल्पान्ते सर्वराजा स्यात्प्रभाव्रतमिदं स्मृतम् ॥ १०५
वत्सरं त्वेकभक्ताशी सभक्ष्यजलकुम्भदः । शिवलोके वसेत्कल्पं प्राप्तिव्रतमिदं स्मृतम् ॥ १०६
नक्ताशी त्वष्टमीषु स्याद्वत्सरान्तेषु धेनुदः । पौरंदरं पदं याति सुगतिव्रतमुत्तमम् ॥ १०७
इन्धनं यो ददेद्विप्रे वर्षादिचतुर ऋतून् । घृतधेनुप्रदोऽन्ते च स परं ब्रह्म गच्छति ॥ १०८
वैश्वानरव्रतं नाम सर्वपापप्रणाशनम् । एकादश्यां तु नक्ताशी यश्चक्रं विनिवेदयेत् ॥ १०९
कृत्वा समाप्ते सौपर्णं स विष्णोः पदमाप्नुयात् । एतत्स्वर्णव्रतं नाम कल्पान्ते राज्यभाग्भवेत् ॥
पायसाशी समाप्ते तु दद्याद्विप्राय गोयुगम् । लक्ष्मीलोके वसेत्कल्पमेतद्देवीव्रतं स्मृतम् ॥ १११
सप्तम्यां नक्तभुग्दद्यात्समाप्ते गां पयस्विनीम् । सूर्यलोकमवाप्नोति भानुव्रतमिदं स्मृतम् ॥ ११२
चतुर्थ्यां नक्तभुग्दद्यादब्दान्ते हैमवारणम् । व्रतं वैनायकं नाम शिवलोकफलप्रदम् ॥ ११३
महाफलानि यस्त्यक्त्वा चातुर्मास्यं द्विजातये । हैमानि कार्तिके दद्याद्धोमान्ते गोयुतं तथा ११४
एतत्सौरव्रतं नाम सूर्यलोकफलप्रदम् । द्वादश द्वादशीर्यस्तु समाप्योपोषणे पुनः ॥ ११५
गोवस्त्रकाञ्चनैर्विप्रान्पूजयेच्छक्तितो नरः । परं पदमवाप्नोति विष्णुव्रतमिदं स्मृतम् ॥ ११६
कार्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत् । शैवं पदमवाप्नोति वृषव्रतमिदं स्मृतम् ॥ ११७

---

१ ज. °न्घृतेनान्नं स° । २ घ. स्याद्वासरा° । ३ ञ. समान्ते । ४ क. ख. ङ. च. °तत्कृष्णव्र° । ५ क. ख. ग. घ. च. ज. °ज्वलाभकृत् । ६ ञ. समान्ते । ७ ञ. °द्याद्धेमन्ते । ८ ञ. °तद्वैनायकं नाम शिवलो° ।

कृच्छ्रान्ते गोप्रदः कुर्याद्भोजनं शक्तितः पदम् । विप्राणां शांकरं याति प्राजापत्यमिदं स्मृतम् ॥
चतुर्दश्यां तु नक्ताशी समाप्ते गोयुगप्रदः । रौद्रं पदमवाप्नोति त्रैयम्बकमिदं स्मृतम् ॥ ११९
सप्तरात्रोषितो दद्याद्घृतकुम्भं द्विजातये । वरव्रतमिदं प्राहुर्ब्रह्मलोकफलप्रदम् ॥ १२०
असौ काशीं समासाद्य धेनुं दत्ते पयस्विनीम् । शक्रलोके वसेत्कल्पमिति मित्रव्रतं स्मृतम् ॥ १२१
अनग्निपक्वमश्नाति तृतीयायां तु यो नरः । गां दत्त्वा शैवमभ्येति पुनरावृत्तिवर्जितम् ॥ १२२
बृहदानन्दकृत्पुंसां शिवव्रतमिदं स्मृतम् । हैमपलद्वयादूर्ध्वं रथमश्वयुगान्वितम् ॥ १२३
दद्यात्कृतोपवासः सन्दिवि कल्पशतं वसेत् । तदन्ते राजराजः स्यादश्वव्रतमिदं स्मृतम् ॥ १२४
तद्वत्पलद्वयादूर्ध्वं करिभ्यां संयुतं पुनः । हैमं रथं नरश्रेष्ठ सर्वोपकरणान्वितम् ॥ १२५
सत्यलोके वसेत्कल्पं सहस्रमपि भूमिपः । भवेदुपोषितो भूत्वा करिव्रतमिदं स्मृतम् ॥ १२६
मुखवासं परित्यज्य समाप्ते गोप्रदो भवेत् [*यक्षाधिपत्यमाप्नोति सुमुखव्रतमुच्यते ॥ १२७
निरा(शि) कृत्वा जले वासं प्रभाते गोप्रदो भवेत् ] वारुणं लोकमाप्नोति वारुणव्रतमुच्यते १२८
चान्द्रायणं च यः कुर्याद्धैमं चन्द्रं निवेदयेत् । चन्द्रव्रतमिदं प्रोक्तं चन्द्रलोकफलप्रदम् ॥ १२९
ज्येष्ठे पञ्चतपा योऽन्ते हेमधेनुप्रदो दिवम् । यात्यष्टमीचतुर्दश्यो रुद्रव्रतमिदं स्मृतम् ॥ १३०
सकृत्कृत्करपुटं कुर्यात्तृतीयायां शिवालये । समाप्ते धेनुदो याति भवानीव्रतमुच्यते ॥ १३१
माघेऽपि चाऽऽर्द्रवासाः स्यात्सप्तम्यां गोप्रदो भवेत् । दिवि कल्पं वसित्वेह राजा स्यात्तापकं व्रतम्
त्रिरात्रोपोषितो दद्यात्फाल्गुन्यां भवनं शुभम् । आदित्यलोकमाप्नोति धामव्रतमिदं स्मृतम् १३३
त्रिसंध्यं पूज्य दांपत्यमुपवासी विभूषणैः । ददन्मोक्षमवाप्नोति मोक्षव्रतमिदं स्मृतम् ॥ १३४
दत्त्वा सितद्वितीयायां विप्रे लवणभाजनम् । +कांस्यं सवस्त्रं राजेन्द्र दक्षिणासहितं तथा ॥ १३५
समाप्ते गोप्रदानं च प्रयाति शिवमन्दिरम् । कल्पान्ते राजराजः स्यात्सोमव्रतमिदं स्मृतम् ॥ १३६
प्रतिपत्स्वेकभक्ताशी समाप्ते[11] कमलप्रदः । वैश्वानरपदं याति अग्निव्रतमिदं स्मृतम् ॥ १३७
दशम्यामेकभक्ताशी समाप्ते दशधेनुदः । दीपं च काञ्चनं दद्यौ[12]द्ब्रह्माण्डाधिपतिर्भवेत् ॥ १३८
[13]एतद्विश्वव्रतं नाम महापातकनाशनम् । कन्यादानं[14] तु यः कुर्यादुद्वाहं कारयेच्च यः ॥ १३९
एकविंशत्कुलोपेतो ब्रह्मलोकं गमिष्यति । कन्यादानात्परं दानं न वाऽस्त्यभ्यधिकं क्वचित् १४०
पुष्करे तु विशेषेण कार्तिक्यां तु विशेषतः । ये करिष्यन्ति नृपते तेषां लोकोऽक्षयो दिवि १४१
तिलपिष्टमयं कृत्वा गजं रत्नविभूषितम् । विप्राय ये प्रयच्छन्ति जलमध्ये स्थिता नराः ॥ १४२
तेषां पौरंदरो लोको[16] भविष्यत्यद्भुतस्तु वा । यः पठेच्छृणुयाद्भक्त्या व्रतषष्टिमनुत्तमाम् ॥
मन्वन्तरशतं सोऽपि गन्धर्वाधिपतिर्भवेत् ॥ १४३

* झ. धनुश्चिह्नान्तर्गतः पाठो झ.पुस्तकस्थः । + इदमर्धं झ. पुस्तकस्थम् ।

१ झ. चातुर्मास्यं । २ क. ख. ग. घ. ङ च. ज. धेनुमन्ते प° । ३ ञ. मन्त्रव्रतं । ४ झ. °म् । गृहदानं सक्° । ५ ञ. समान्ते । ६ झ. °म् । अनुलेपनं च यः कु° । ७ क. ख. ङ. च. °कृद्विधानकं कु° । ८ क. ख ङ. च. स्यात्तापसं व्र° । ग. ज. स्यात्पवनं व्र° । घ. स्यात्तामसं व्र° । ९ क. °ति धर्मव्र° ग. घ. ज. °ति दीप्तव्र° । १० क. च. ज. °यायामिन्दोर्लव° । ११ ग. घः ज. °प्ते च फल° । १२ ग. घ. ङ. ज. °द्याद्ब्राह्मणाधि° । १३ क. ग. घ. ङ. च. ज. °द्विष्णुव्र° । १४ क. ग. घ. ङ. च. ज. तु कार्तिक्यां पुष्करे यः करिष्यति । ए° । १५ क. ङ. च.ज. °तः । विप्राय विधिवद्देयं ते° । ग. °तः । भवेद्वै देवदेवेशस्तेषां । १६ ग. घ. ज. °को भविताऽऽहूतसंप्लवम् । यः । ङ. °को भविताऽऽहूतसंप्लुतम् । यः । च. °को भविताऽऽभूतसंप्लवम् । यः । १७ क. ग. घ ङ. च. ज. °याद्वाऽपि व्र° ।

षष्टिव्रतं भारत पुण्यमेतत्तवोदितं विश्वजनीनमद्य ।
श्रोतुं यदीच्छा तव राजराज शृणु द्विजातेः करणीयमेतत् ॥ १४४
निर्मला भावशुद्धिर्हि विना स्नानं न विद्यते । तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते ॥१४५
गृहाम्बुभिरुद्धृतैर्वा जलैः स्नानं विधीयते । तीर्थं प्रकल्पयेद्विद्वान्मूलमन्त्रेण मन्त्रवित् ॥ १४६
नमो नारायणायेति मन्त्र एष उदाहृतः । दर्भपाणिस्तु विधिना आचान्तः प्रयतः शुचिः ॥१४७
चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः । प्रकल्प्य चाऽऽह्वयेद्गङ्गामेभिर्मन्त्रैर्विचक्षणः ॥ १४८
विष्णुपादप्रसूताऽसि वैष्णवी विष्णुपूजिता । पाहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात् १४९
तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् । दिवि भूम्यन्तरिक्षे च तानि ते सन्ति जाह्नवी
नन्दिनीत्येव ते नाम देवेषु नलिनीति च । दक्षा पृथ्वी च सुभगा विश्वकाया शिवाऽमृता १५१
विद्याधरी महादेवी तथा लोकप्रसादिनी । क्षेमा च जाह्नवी चैव शान्ता शान्तिप्रदायिनी १५२
एतानि पुण्यनामानि स्नानकाले प्रकीर्तयेत् । भवेत्संनिहिता तत्र गङ्गा त्रिपथगामिनी ॥ १५३
सप्तवाराभिजप्तेन करसंपुटयोजितम् । मूर्ध्नि कृत्वा जलं भूयस्त्रिचतुष्पञ्च सप्तधा ॥ १५४
स्नानं कृत्वा मृदा तद्वदामन्त्र्य तु विधानतः । अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे ॥१५५
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् । उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ॥ १५६
नमस्ते सर्वलोकानां प्रभवारणि सुव्रते । एवं स्नात्वा ततः पश्चादाचम्य तु विधानतः ॥ १५७
उत्थाय वाससी शुक्ले शुद्धे विपरिधाय च । ततस्तु तर्पणं कुर्यात्त्रैलोक्याप्यायनाय वै ॥ १५८
ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम् । देवा यक्षास्तथा नागा गन्धर्वाप्सरसोऽसुराः ॥१५९
क्रूराः सर्पाः सुपर्णाश्च तरवो जम्भकादयः । विद्याधरा जलधरास्तथैवाऽऽकाशगामिनः ॥१६०
निराधाराश्च ये जीवाः पापे धर्मे रताश्च ये । तेषामाप्यायनं चैव दीयते सलिलं मया ॥ १६१
कृतोपवीती देवेभ्यो निवीती च भवेत्ततः । मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा ॥ १६२
सनकश्च सनन्दश्च तृतीयश्च सनातनः । कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥ १६३
सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा । मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ॥ १६४
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च । देवान्ब्रह्मऋषीन्सर्वांस्तर्पयेत्साक्षतोदकैः ॥ १६५
अपसव्यं ततः कृत्वा सव्यं जानु च भूतले । अग्निष्वात्तांस्तथा सौम्यान्हविष्मन्तस्तथोष्मपान् ॥
सुकालिनो बर्हिषदस्तथा चैवाऽऽज्यपान्पुनः । तर्पयेच्च पितॄन्भक्त्या सतिलोदकचन्दनैः ॥ १६७
दर्भपाणिस्तु प्रयतः प्रेतांस्तांस्तर्पयेत्ततः । पित्रादीन्नामगोत्रेण तथा मातामहानपि ॥ १६८
संतर्प्य विधिवद्भक्त्या इमं मन्त्रमुदीरयेत् । येऽबान्धवा बान्धवा ये येऽन्यजन्मनि बान्धवाः १६९
ते तृप्तिमखिला यान्तु येऽप्यस्मत्तोयकाङ्क्षिणः । आचम्य विधिवत्सम्यगालिखेत्पद्ममग्रतः १७०
अक्षताभिः सपुष्पाभिः सलिलारुणचन्दनैः । अर्घ्यं दत्त्वा प्रयत्नेन सूर्यनामानुकीर्तनैः ॥ १७१
नमस्ते विश्वरूपाय नमस्ते ब्रह्मरूपिणे । सहस्ररश्मये नित्यं नमस्ते सर्वतेजसे ॥ १७२
नमस्ते रुद्रवपुषे नमस्ते भक्तवत्सल । पद्मनाभ नमस्तेऽस्तु कुण्डलाङ्गदभूषित ॥ १७३

---

१ क. ङ. च. ज. °स्मात्तनोर्विशु° । २ क. ग. घ. ङ. च. ज. °ते । अनुद्धृतैरु° । ३ झ. °मन्त्रश्च पठ्यते । न° । ४ ग. घ. °ति मूलमन्त्र उ° । ५ झ. °तुर्मन्त्रस° । ६ झ. °द्गङ्गां मन्त्रेणानेन मानवः । वि° । ७ क. ग. घ. ङ. च. ज. विष्णुदेवता । ८ क. ग. घ. ङ. च. ज. सुप्रसन्ना । ९ क. ग. घ. ङ. च. ज. °रसां वराः । १० ञ. °सुरीश्चै° । ११ क. ग. घ. ङ. च. ज. विधिना । १२ झ. °न्तु यश्च मत्तोऽभिवाञ्छति । आ° ।

नमस्ते सर्वलोकेषु सुप्तांस्तान्प्रतिबुध्यसे । सुकृतं दुष्कृतं चैव सर्वं पश्यसि सर्वदा ॥ १७४
सत्यदेव नमस्तेऽस्तु प्रसीद मम भास्कर । दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते ॥ १७५
एवं सूर्यं नमस्कृत्य त्रिश्च कृत्वा प्रदक्षिणम् । द्विजं गां काञ्चनं स्पृष्ट्वा पश्चाच्च स्वगृहं व्रजेत् १७६
आश्रमस्थां ततः पुण्यां प्रतिमां चापि पूजयेत् । भोजनं तु ततः पश्चाद्द्विजपूर्वं तु कारयेत् ॥
अनेन विधिना सर्वे ऋषयः सिद्धिमागताः ॥ १७७

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे स्नानविधिर्नाम विंशोऽध्यायः ॥ २० ॥

आदितः श्लोकानां समष्ट्यङ्काः—२३७६१

---

अथैकविंशोऽध्यायः ।

---

पुलस्त्य उवाच—
आसीत्पुरा बृहत्कल्पे धर्ममूर्तिर्नराधिपः । सुहृच्छक्रस्य निहता येन दैत्याः सहस्रशः ॥ १
सोमसूर्यादयो यस्य तेजसा विगतप्रभाः । भवन्ति शतशो येन शत्रवस्तु पराजिताः ॥ २
यथेच्छरूपधारी च मनुष्येष्वपराजितः । तस्य भानुमती नाम भार्या त्रैलोक्यसुन्दरी ॥ ३
लक्ष्मीरिव च रूपेण निर्जितामरसुन्दरी । राज्ञस्तस्याग्रमहिषी प्राणेभ्योऽपि गरीयसी ॥ ४
दशनारीसहस्राणां मध्ये श्रीरिव शोभते । नृपकोटिसहस्रेण न कदाचित्प्रमुच्यते ॥ ५
कदाचिदास्थानगतः पप्रच्छ स पुरोधसम् । विस्मयेनाऽऽवृतो नत्वा वसिष्ठमृषिसत्तमम् ॥ ६

राजोवाच—
भगवन्केन धर्मेण मम लक्ष्मीरनुत्तमा । कस्माच्च विपुलं तेजो मच्छरीरे सदोत्तमम् ॥ ७

वसिष्ठ उवाच—
पुरा लीलावती नाम वेश्या शिवपरायणा । तया दत्तश्चतुर्दश्यां पुष्करे लवणाचलः ॥ ८
हेमप्रतिमया सार्धं यथावद्विधिपूर्वकम् । शूद्रः सुवर्णकारश्च नाम्ना दासोऽभवत्तदा ॥ ९
भृत्यो लीलावतीगेहे तेन हैमीर्विनिर्मिताः । देवताप्रतिमा मुख्याः श्रद्धायुक्तेन पार्थिव ॥ १०
अतिरूपेण संपन्ना घटयित्वा सुशोभनाः । धर्मकार्यमिति ज्ञात्वा न गृहीतं च वेतनम् ॥ ११
प्रज्वालिताश्च ते पत्न्या सौवर्णाः पादपास्तथा । लीलावतीगृहे चापि परिचर्याश्च पार्थिव ॥ १२
कृतास्ताभ्यामशेषेण द्विजशुश्रूषणादिकाः । सा च लीलावती वेश्या कालेन महताऽनघ ॥ १३
सर्वपापविनिर्मुक्ता जगाम शिवमन्दिरम् । योऽसौ सुवर्णकारस्तु दरिद्रोऽप्यतिसत्त्ववान् ॥ १४
न मूल्यमादाद्वेश्यातः स भवानिह सांप्रतम् । सप्तद्वीपपतिर्जातः सूर्यायुतसमप्रभः ॥ १५
यथा सुवर्णकारश्च तरवो हेमदेवताः । सम्यगुज्ज्वलिताः पत्न्या सेयं भानुमती तथा ॥ १६

---

१ क. ङ. च. स्वगेहस्थां । ग. घ. ज. श्वश्रेयस्थां । २ क. च. °मेपूजिर्नै° । ख. ङ. °मेपूज्यो नरा° । ग. घ °मेकीर्तिर्नै° । ३ क. ख. ग. घ. ङ. च. ज °न दानवास्तु । ४ क. ख. ग. घ. ङ. च. ज. °ती भार्या सती त्रै° । ५ क. ख. ङ. च °ण न कदाचित्स उच्य° । ग. घ °ण स क° । ६ क. ख. घ. ङ. ज हेमवृक्षामरैः सा° । ग. हेमवृक्षैः परैः सा° । च. हेमवृक्षाम्बरैः सा° । ७ क. ख. ग. ङ. च. शूद्रः । घ. ज सूत्रः । ८ क. ग. घ. च. ज °श्च कर्मकृत्सोऽभ° । ९ क. च. हैमा विनिर्मिताः । तरवो हेमपुष्पाश्च श्र° । ग. घ. ज. हैमा विनिर्मिताः । तरवो हेममुख्याश्च श्र° । १० ख. घटितास्ते सु° ।

*उज्ज्वालनादुत्तमरूपमस्याः संजातमस्मिंस्तव चाऽऽधिपत्यम् ।
यस्मात्कृतं तत्परिकर्मणाऽत्र सेवाद्वयाभ्यां लवणाचलस्य ॥ १७
तस्मान्नृलोकेष्वपराजितस्त्वमारोग्यसौभाग्ययुता च लक्ष्मीः ।
तस्मात्त्वमप्यत्र विधानपूर्वं धान्याचलादीन्दशधा कुरुष्व ॥ १८

पुलस्त्य उवाच—
तथेति संपूज्य स धर्ममूर्तिर्वचो वसिष्ठस्य ददौ च सर्वान् ।
धान्याचलादीन्विधिना स्मरारेर्लोकं गतोऽसौ सुरपूज्यमानः ॥ १९
पश्येद्यदीमानुपमीयमानान्स्पृशेन्मनुष्यैरिह दीयमानान् ।
शृणोति भक्त्याऽथ मतिं ददाति विकल्मषः सोऽपि दिवं प्रयाति ॥ २०
दुःस्वप्नः प्रशममुपैति पठ्यमानैः शैलेन्द्रैर्भवभयभेदनैर्मनुष्यः ।
यः कुर्यात्किमु नृपपुंगवेह सम्यक्शान्तात्मा सकलगिरीन्द्रसंप्रदानम् ॥ २१

भीष्म उवाच—
किमभीष्टवियोगशोकसंघानलमुद्धर्तुमुपोषणं व्रतं वा ।
विभवोद्भवकारि भूतलेऽस्मिन्भवभीतेरपि कन्दनं च पुंसाम् ॥ २२

पुलस्त्य उवाच—
परिपृष्टमिदं जगत्प्रियं ते विबुधानामपि दुर्लभं महत्वात्+ ।
तव भक्तिमतस्तथाऽपि वक्ष्ये व्रतमिन्द्रासुरदानवेषु गुह्यम् ॥ २३

पुण्यमाश्वयुजे मासि विशोकद्वादशीव्रतम् । दशम्यां लघुभुग्विप्रः शमेन नियमेन च ॥ २४
उदङ्मुखः प्राङ्मुखो वा दन्तधावनपूर्वकम् । एकादश्यां निराहारः सम्यगभ्यर्च्य केशवम् ॥ २५
श्रियं चाभ्यर्च्य विधिवद्भोक्ष्येऽहं चापरेऽहनि । एवं नियमकृत्सुप्त्वा प्रातरुत्थाय मानवः ॥ २६
स्नानं सर्वौषधैः कुर्यात्पञ्चगव्यजलेन तु । शुक्लमाल्याम्बरस्तद्वत्पूजयेच्छ्रीपतिं नरः ॥ २७
विशोकाय नमः पादौ जङ्घे च वरदाय वै । श्रीशाय जानुनी तद्वदूरू च जलशायिने ॥ २८
कंदर्पाय नमो गुह्यं माधवाय नमः कटिम् । दामोदरायेत्युदरं पार्श्वे च विपुलाय वै ॥ २९
नाभिं च पद्मनाभाय हृदयं मन्मथाय वै । श्रीधराय विभोर्वक्षः करौ मधुभिदे नमः ॥ ३०
वैकुण्ठाय नमः कण्ठमास्यं यज्ञमुखाय वै । नासामशोकनिधये वासुदेवाय चक्षुषी ॥ ३१
ललाटं वामनायेति हरये च पुनर्भ्रुवौ । केशकान्माधवायेति किरीटं विश्वरूपिणे ॥ ३२
नमः सर्वात्मने तद्वच्छिर इत्यभिपूजयेत् । एवं संपूज्य गोविन्दं धूपमाल्यानुलेपनैः ॥ ३३
ततस्तु मण्डलं कुर्यात्स्थण्डिलं कारयेन्मृदा । चतुरस्रं समन्ताच्च रत्निमात्रमुदक्प्लवम् ॥ ३४
श्लक्ष्णं शुद्धं च परितो[10] वप्रद्वयसमावृतम् । त्रिरङ्गुलोच्छ्रितो वप्रस्तद्विस्तारो द्व्यङ्गुलः ॥ ३५

---

* अय श्लोको झ. पुस्तकस्थः । + एतदग्रे ग. पुस्तके 'अतिगुह्यतरं समस्तविश्वे न तु गम्यं हि जनस्य कस्यचित्तु' इत्यधिकम् ।

---

१ झ. °ना द्विजेभ्यो लोकेऽथ जातोऽमर° । २ झ. °पृच्छसि यं च संशयं मे वि° । ३ ञ. °ग्विद्वान्प्रारभेत य° । ४ झ. शिवं । ५ क. ख. ङ. च. °च्छ्री मुत्पलैः । वि° । ग. घ. ज. °च्छ्रीमदुत्पलैः । वि° । ६ ग. घ. ज. °द्वन्ठरं ज° । ७ क. ख. घ. ङ. च. ज. पद्ममुखाय । ८ घ. °कहृदये । ९ क. ख. घ. ङ. च. ज. हृयं । १० क. ख. ङ. °तो विप्रत्रय° । घ. ज. °तो वप्रद्वय° । ञ. °तो वप्रत्रय° ।

स्थण्डिलस्योपरिष्टाच्च भित्तिरष्टाङ्गुला भवेत् । नदीवालुकया तत्र लक्ष्मीप्रतिकृतिं न्यसेत् ॥ ३६
स्थण्डिले सूर्यमारोप्य लक्ष्मीमित्यर्चयेद्बुधः । नमो देव्यै नमः शान्त्यै नमो लक्ष्म्यै नमः श्रिये
नमस्तुष्ट्यै नमः पुष्ट्यै नमस्तृप्त्यै नमो नमः । विशोका दुःखनाशाय विशोका वरदाऽस्तु मे॥३८
विशोका मेऽस्तु संतत्यै विशोका सर्वसिद्धये । ततः शुक्लाम्बरैः सूर्यं वेष्ट्य संपूजयेत्फलैः ॥ ३९
भक्ष्यैर्नानाविधैस्तद्वत्सुवर्णकमलेन तु । राजतीषु च सर्वासु न्यसेद्दर्भोदकं बुधः ॥ ४०
ततस्तु नृत्यगीतानि कारयेत्सकलां निशाम् । यामत्रये व्यतीते तु तत उत्थाप्य मानवः ॥ ४१
अभिगम्य च विप्राणां मिथुनानि तथाऽर्चयेत् । शक्तितस्त्रीणि चैकं वा वस्त्रमाल्यानुलेपनैः ॥४२
शयनस्थानि पूज्यानि नमोऽस्तु जलशायिने । ततस्तु गीतवाद्येन रात्रौ जागरणे कृते ॥ ४३
प्रभाते च ततः स्नात्वा दांपत्यमर्चयेन्नरः । भोजयेच्च यथाशक्त्या(क्ति) वित्तशाठ्येन वर्जितः ॥
भुक्त्वा श्रुत्वा पुराणानि तद्दिनं चातिवाहयेत् । अनेन विधिना सर्वं मासि मासि समाचरेत् ॥
व्रतान्ते शयनं दद्याद्गुडधेनुसमन्वितम् । सोपधानकविश्रामं स्वास्तरावरणं शुभम् ॥ ४६
यथा लक्ष्मीर्नरेश त्वां न परित्यज्य गच्छति । तथा सुरूपताऽऽरोग्यमशोकं चास्तु मे सदा ४७
यथा देवेन रहिता न लक्ष्मीर्जायते क्वचित् । तथा विशोकता मेऽस्तु भक्तिरग्र्या च केशवे ४८
मन्त्रेणानेन शयनं गुडधेनुसमन्वितम् । सूर्यश्च लक्ष्म्या सहितो दातव्यो भूतिमिच्छता ॥ ४९
उत्पलं करवीरं वा बाणमम्लानकुङ्कुमम् । केतकं सिन्दुवारं च मल्लिका गन्धपाटला ॥
कदम्बकुब्जकं जाती शस्तान्येतानि सर्वदा ॥ ५०

भीष्म उवाच—

गुडधेनुविधानं च समाचक्ष्व मुनीश्वर । किंरूपा केन मन्त्रेण दातव्या तदिहोच्यताम् ॥ ५१

पुलस्त्य उवाच—

गुडधेनुविधानस्य यद्रूपमिह यत्फलम् । तदिदानीं प्रवक्ष्यामि सर्वपापविनाशनम् ॥ ५२
कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं विन्यसेद्भुवि । गोमयेनानुलिप्तायां दर्भानास्तीर्य सर्वतः ॥ ५३
लघ्वेणकाजिनं तद्वद्वत्सस्य परिकल्पयेत् । प्राङ्मुखीं कल्पयेद्धेनुं मुदा गां वा सवत्सकाम् ॥ ५४
उत्तमा गुडधेनुः स्यात्सदा भारचतुष्टयम् । वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता ॥ ५५
अर्धभारेण वत्सः स्यात्कनिष्ठा भारकेण तु । चतुर्थांशेन वत्सः स्याद्गृहवित्तानुसारतः ॥ ५६
धेनुवत्सौ तदा तौ तु सितसूक्ष्माम्बरावृतौ । शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ ॥ ५७
सितसूत्रशिरानालौ सितकंबलकंबलौ । ताम्रगण्डकपृष्ठौ तौ सितचामररोमकौ ॥ ५८
विद्रुमभ्रूयुगावेतौ नवनीतस्तनावृतौ । क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ ॥ ५९
नानाफलसमायुक्तौ घ्राणगन्धकरण्डकौ । इत्येवं रचयित्वा तु धूपदीपैः समर्चयेत् ॥ ६०
या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ ६१
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः । चन्द्रार्कशक्रशक्तिर्या धेनुरूपा तु सा शुभा

१ ख. घ. ङ. ज. °मः सृष्ट्यै न° । २ क. ख. घ. ङ. च. ज. संपत्त्यै । ३ घ. ज. °सु कर्तव्या वेदिका बुधैः । त° । झ. °सु विविदुर्वेदिकां बुधाः । त° । ४ झ. तु सुतामुत्था° । ५ घ. ज. °शोकः श्रीस्तु सर्वदा । ६ घ. साहितं । ७ क. ख. घ. ङ. च. ज. °व्यो भक्तिमि° । ८ क. ख. ङ. च. °द्वद्वत्सं च परिक° । घ. °द्वत्सम्यक्चैवाधिक° । ज. °द्वत्सम्यक्चैव विक° । ९ क. ख. घ. ङ. च. ज. उभाभ्यां । १० क. ख. ङ. च. °त्सौ कृतौ चोभौ सि° । घ. ज. °त्सौ व्रतस्यैतौ सि° । ११ क. ख. ङ. °तौ क्षौमपुच्छौ शुभावहौ । काञ्चनाक्षियुगोपेतौ नवनीतस्तनान्वितौ । कांस्यदोहाविन्द्रनीलशुभ्रातिकमनीयकौ । नाना° । १२ ग. घ. प्रिया ।

चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च । लक्ष्मीर्या लोकपालानां सा धेनुर्वरदाऽस्तु मे ॥ ६३
स्वधा त्वं पितृमुख्यानां स्वाहा क्रतुभुजां यतः । सर्वपापहरा धेनुस्तस्माद्भूतिं प्रयच्छ मे ॥ ६४
एवमामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत् । विधानमेतद्धेनूनां सर्वासामपि पठ्यते ॥ ६५
यास्तु पापविनाशिन्यः पठ्यन्ते दश धेनवः । तासां स्वरूपं वक्ष्यामि नामानि च नराधिप ॥ ६६
प्रथमा गुडधेनुः स्याद्घृतधेनुरथापरा । तिलधेनुस्तृतीया तु चतुर्थी जलनामिका ॥ ६७
क्षीरधेनुश्च विख्याता मधुधेनुस्तथाऽपरा । सप्तमी शर्करा धेनुरष्टमी लवणस्य तु ॥ ६८
रसधेनुश्च नवमी दशमी स्यात्स्वरूपतः । कुम्भाः स्यू रसधेनूनां गुडादीनां तु राशयः ॥ ६९
सुवर्णधेनुं चाप्यत्र केचिदिच्छन्ति मानवाः । नवनीतेन तैलैश्च तथाऽन्ये च महर्षयः ॥ ७०
एतदेव विधानं स्यात्त एवोपस्कराः स्मृताः । मन्त्रावाहनसंयुक्ताः सदा पर्वणि पर्वणि ॥ ७१
यथाश्रद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदाः । गुडधेनुप्रसङ्गेन सर्वास्तव मयोदिताः ७२
अशेषयज्ञफलदाः सर्वपापहराः शुभाः । व्रतानामुत्तमं यस्माद्विशोकद्वादशीव्रतम् ॥ ७३
तदङ्गत्वेन चैवात्र गुडधेनुः प्रशस्यते । अयने विषुवे पुण्ये व्यतीपातेषु वा पुनः ॥ ७४
गुडधेन्वादयो देया उपरागादिपर्वसु । विशोकद्वादशी चैषा सर्वपापहरा शुभा ॥ ७५
यामुपोष्य नरो याति तद्विष्णोः परमं पदम् । इह लोके स सौभाग्यमायुरारोग्यमेव च ॥ ७६
वैष्णवं पुरमाप्नोति मरणे स्मरणं हरेः । दशार्बुदसहस्राणि दश वाऽष्टौ च धर्मवित् ॥ ७७
न शोकदुःखदौर्गत्यं तस्य संजायते नृप । नारी वा कुरुते या तु विशोकद्वादशीमिमाम् ॥ ७८
नृत्यगीतपरा नित्यं साऽपि तत्फलमाप्नुयात् । यस्मादग्रे हरेर्नित्यमनन्तं गीतवादितम् ॥ ७९
इति पठति य इत्थं यः शृणोतीह सम्यङ्मधुमुरनरकारेरर्चनं वाऽथ पश्येत् ।
मतिमपि च जनानां यो ददातीन्द्रलोके वसति च विबुधौघैः पूज्यते कल्पमेकम् ॥ ८०

भीष्म उवाच—

भगवञ्श्रोतुमिच्छामि दानमाहात्म्यमुत्तमम् । यदक्षयं परे लोके देवर्षिगणपूजितम् ॥ ८१

पुलस्त्य उवाच—

मेरोः प्रदानं वक्ष्यामि दशधा नृपसत्तम । यत्प्रदाताऽनन्तलोकानाप्नोति सुरपूजितान् ॥ ८२
पुराणेषु तु वेदेषु यज्ञेष्वायतनेषु च । न तत्फलमधीतेषु कृतेष्विह यदश्नुते ॥ ८३
तस्माद्दानं प्रवक्ष्यामि पर्वतानामनुक्रमात् । प्रथमो धान्यशैलः स्याद्द्वितीयो लवणाचलः ॥ ८४
गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः । पञ्चमस्तिलशैलश्च षष्ठः कार्पास एव च ॥ ८५
सप्तमो घृतशैलः स्याद्रत्नशैलस्तथाऽष्टमः । राजतो नवमस्तद्वद्दशमः शर्कराचलः ॥ ८६
वक्ष्ये विधानमेतेषां यथावदनुपूर्वशः । अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ॥ ८७
शुक्लपक्षे तृतीयायामुपरागे शशिक्षये । विवाहोत्सवयज्ञेषु द्वादश्यामथवा पुनः ॥ ८८
शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे वा विधानतः । धान्यशैलादयो देयाः कार्तिक्यां ज्येष्ठपुष्करे ॥
तीर्थेष्वायतने चापि गोष्ठे वा भवनाङ्गणे । मण्डपं कारयेद्भक्त्या चतुरस्रमुदङ्मुखम् ॥ ९०
प्रागुदक्प्रवणं पुण्यं प्राङ्मुखं वा विधानतः । गोमयेनानुलिप्तायां भूमावास्तीर्य वै कुशान् ॥ ९१

१ घ. स्याच्छान्तिं प्र° । २ क. ख. ग. घ. ङ. च. ज. नव । ३ क. ख. ग. ङ. च. ज. °धेनुः पञ्चमी च म° । ४ क. ग. च. °नूनामितरासां तु । ५ क. ख. ङ. च. रत्नैश्च । ग. घ. ज. तैलेन । ६ घ. ज. स्यात्सर्वा एव यशस्कराः । म° । ७ झ. °ग्रे वसेन्नित्य° । ८ ख. ज. विबुधाद्यैः । ९ क. ख. ग. घ, ङ, च. ज. यद्दानानन्तरं लो° । १० ग. घ. ज. पुण्यार्के ।

तन्मध्ये पर्वतं कुर्याद्विष्कम्भपर्वतान्वितम् । धान्यद्रोणसहस्रेण भवेद्गिरिरिहोत्तमः ॥ ९२
मध्यमः पञ्चशतकैः कनिष्ठः स्यात्त्रिभिः शतैः ॥

मेरुर्महाव्रीहिमयः समन्तात्सुवर्णवृक्षत्रयसंयुतः स्यात् ।
मूर्धन्यवस्थानमथाम्बरेण कार्यं त्वनेकं च पुनर्द्विजाद्यैः ॥ ९३
चत्वारि शृङ्गाणि च राजतानि नितम्बभागेष्वपि राजतं स्यात् ।
पूर्वेण मुक्ताफलवज्रयुक्तो याम्येन गोमेदकपुष्परागैः ॥ ९४
पश्चाच्च गारुत्मतनीलरत्नैः सौम्येन वैडूर्यसरोजरागैः ।
श्रीखण्डखण्डै रुचिरप्रवालैर्लतान्वितः शुक्तिशिलातलः स्यात् ॥ ९५
ब्रह्माऽथ विष्णुर्भगवान्पुरारिर्दिवाकरोऽप्यत्र हिरण्मयः स्यात् ।
तथेक्षुवंशावृतकंदरस्तु घृतोदकप्रस्रवणश्च दिक्षु ॥ ९६
शुक्लाम्बराण्यम्बुधरावलिः स्यात्पूर्वेण पीतानि च दक्षिणेन ।
वासांसि पश्चादथ कर्बुराणि रत्नानि चैवोत्तरतो घनानि ॥ ९७
रौप्यान्महेन्द्रप्रमुखांस्तथाऽष्टौ संस्थाप्य लोकाधिपतीन्क्रमेण ।
नानाफलादीनि समन्ततः स्यान्मनोरमं माल्यविलेपनं च ॥ ९८
वितानकं चोपरिपञ्चवर्णमम्लानपुष्पाभरणं सितं च ।
इत्थं निवेश्यामरशैलमग्र्यं मेरोस्तु विष्कम्भगिरिं क्रमेण ॥ ९९
तुरीयभागेन चतुर्दिशं तु संस्थापयेत्पुष्पविलेपनाढ्यम् ।
पूर्वेण मन्दरमनेकफलैश्च युक्तं धान्यैर्गणैः कनकभद्रकदम्बयुक्तम् ॥ १००
कामेन काञ्चनमयेन विराजमानमाकारयेत्कुसुमवस्त्रविलेपनाढ्यम् ।
ततस्तु तं काञ्चनवद्विराजितं तं कारयेत्कुङ्कुमलेपनाढ्यम् ॥ १०१
क्षीरारुणोदसरसाऽथ वनेन चैव रौप्येण शक्तिघटितेन विराजमानम् ।
याम्येन गन्धमदनोऽत्र निवेशनीयो गोधूमसंचयमयः कलधौतवांश्च ॥ १०२
हैमेन यक्षपतिना घृतमानसेन वस्त्रैश्च राजतवनेन च संयुतः स्यात् ।
पश्चात्तिलाचलमनेकसुगन्धपुष्पं सौवर्णपिप्पलहिरण्मयहंसयुक्तम् ॥ १०३
आकारयेद्रजतपुष्पवनेन तद्वद्वस्त्रान्वितं दधिसितोदसरस्तथाऽग्रे ।
संस्थाप्य तं विपुलशैलमथोत्तरेण शैलं सुपार्श्वमपि माषमयं सवस्त्रम् ॥ १०४
पुष्पैश्च हेमवटपादपशेखरं तमाकारयेत्कनकधेनुविराजमानम् ।
सर्वेण माक्षिकरसेन विराजमानं रौप्येण भास्वरवता च युतं विधाय ॥ १०५
होमश्चतुर्भिरथ वेदपुराणविद्भिर्दान्तैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः ।
पूर्वेण हस्तमितमत्र विधाय कुण्डं कार्यस्तिलैर्यवघृतेन समित्कुशैश्च ॥ १०६
रात्रौ च जागरमनुद्धतगानपूर्वैरावाहनं च कथयामि शिलोच्चयानाम् ।

---

१ ञ. °द्विष्कुम्भप° । २ क. ख. ग. ङ. च. °मयस्तु मध्ये सुव° । घ. ज. °मयस्तु मध्ये सर्वत्र शृङ्गत्र° । ३ ञ. °कपद्मरा° । ४ क. ख. ग. घ. च. ज. °ण्डैरमितः प्र° । ५ ङ. च. °नावनाली च स° । ६ ञ. °क्तं कामेन काञ्चनमयेन विराजमानम् । याम्ये° । ७ ग. °म्बचिह्नम् । ८ म. घ. ज. °धिसरोद° । ९ ञ. मासमयं । १० क. ख. ग. ङ. च. सुवस्त्रम् । ११ झ. °कधेनुवि° । १२ झ. °मू । माक्षीकमद्ररससा वचनेन तद्वद्रौप्येण । १३ ञ. °रवितानयु° ।

त्वं सर्वदेवगणधामनिधे विरुद्धमस्मद्गृहेष्वमरपर्वत नाशयाऽऽशु ॥ १०७
क्षेमं विधत्स्व कुरु शान्तिमनुत्तमां नः संपूजितः परमभक्तिमता मया हि । १०८
त्वमेव भगवानीशो ब्रह्मा विष्णुर्दिवाकरः । मूर्तामूर्तं परं बीजमतः पाहि सनातन ॥ १०९
यस्मात्त्वं लोकपालानां विश्वमूर्तेश्च मन्दिरम् । रुद्रादित्यवसूनां च तस्माच्छान्तिं प्रयच्छ मे ॥ ११०
यस्मादशून्यममरैर्नारीभिश्च शिरस्तव । तस्मान्मामुद्धराशेषदुःखसंसारसागरात् ॥ १११
एवमभ्यर्च्य तं मेरुं मन्दरं चाभिपूजयेत् । यस्माच्चैत्ररथेन त्वं भद्राश्वेन च पर्वत ॥ ११२
शोभसे मन्दर क्षिप्रमतस्तुष्टिकरो भव । यस्माच्चूडामणिर्जम्बुद्वीपे त्वं गन्धमादन ॥ ११३
गन्धर्ववनशोभावानतः कीर्तिर्दृढाऽस्तु मे । यस्मात्त्वं केतुमालेन वैभ्राजेन वनेन च ॥ ११४
हिरण्मयोऽसि भगवांस्तस्मात्पुष्टिर्ध्रुवाऽस्तु मे । उत्तरे कुरुभिर्यस्तु सावित्रेण वनेन च ॥ ११५
सुपार्श्व राजसे नित्यमतः श्रीरक्षयाऽस्तु मे । एवमामन्त्र्य तान्सर्वान्प्रभाते विमले ततः ॥ ११६
स्नात्वाऽथ गुरवे दद्यान्मध्यस्थं पर्वतोत्तमम् । विष्कम्भपर्वतान्दद्यादृत्विग्भ्यः क्रमशो नृप ॥ ११७
गावो देयाश्चतुर्विंशदथ वा दश पार्थिव । शक्तितः सप्त चाष्टौ वा पञ्च दद्यादशक्तिमान् ॥ ११८
एका च गुरवे देया कपिला दुग्धा पयस्विनी । पर्वतानामशेषाणामेष एव विधिः स्मृतः ॥ ११९
त एव पूजने मन्त्रास्त एवोपस्करास्तथा । ग्रहाणां लोकपालानां ब्रह्मादीनां सभूभृताम् ॥ १२०
स्वमन्त्रेणैव सर्वेषु होमः शैलेषु कथ्यते । उपवासी भवेन्नित्यमशक्तौ नक्तमिष्यते ॥ १२१
विधानं सर्वशैलानां क्रमशः शृणु पार्थिव । दानकालेषु ये मन्त्राः पर्वतेषु यथाफलम् ॥ १२२
अन्नं ब्रह्म यतः प्रोक्तमन्नं प्राणाः प्रकीर्तिताः । अन्नाद्भवन्ति भूतानि जगदन्नेन वर्धते ॥ १२३
अन्नमेव यतो लक्ष्मीरन्नमेव हि सर्वतः । धान्यपर्वतरूपेण पाहि तस्मान्नगोत्तम ॥ १२४
अनेन विधिना यस्तु दद्याद्धान्यमयं गिरिम् । मन्वन्तरशतं साग्रं देवलोके महीयते ॥ १२५
अप्सरोगणगन्धर्वैराकीर्णेन विराजता । विमानेन दिवः पृष्ठमायाति नृपसत्तम ॥ १२६
कर्मक्षये राजराज्यं प्राप्नोतीह न संशयः । अथातः संप्रवक्ष्यामि लवणाचलमुत्तमम् ॥ १२७
यत्प्रदानान्नरो लोकमाप्नोति शिवसंयुतम् । उत्तमः षोडशद्रोणैः कर्तव्यो लवणाचलः ॥ १२८
मध्यमश्च तदर्धेन चतुर्भिरधमः स्मृतः । वित्तहीनो यथाशक्त्या(क्ति) द्रोणादर्धं च कारयेत् ॥ १२९
चतुर्थांशेन विष्कम्भपर्वतं कारयेत्पृथक् । विधानं पूर्ववत्कुर्याद्ब्रह्मादीनां च सर्वदा ॥ १३०
तद्वद्धेममयं सर्वं लोकपालनिवेशनम् । सरांसि वनवृक्षांश्च तद्वच्चान्यन्निवेशयेत् ॥ १३१
कुर्याज्जागरमत्रापि दानमन्त्रान्निबोधत । सौभाग्यरससंभूतो यतोऽसौ लवणो रसः ॥ १३२
तदात्मकत्वेन च मां पाहि पापान्नगोत्तम । यस्मादन्ये रसाः सर्वे नोत्कटा लवणं विना ॥
प्रियश्च शिवयोर्नित्यं तस्माच्छान्तिप्रदो भव ॥ १३३
विष्णुदेहसमुद्भूतो यस्मादारोग्यवर्धनः । तस्मात्पर्वतरूपेण पाहि मां शोकसागरात् ॥ १३४
अनेन विधिना यस्तु दद्याल्लवणपर्वतम् । उमालोके वसेत्कल्पं ततो याति परां गतिम् ॥ १३५
अतः परं प्रवक्ष्यामि गुडपर्वतमुत्तमम् । यत्प्रदानान्नरः स्वर्गं प्राप्नोति सुरपूजितः ॥ १३६

---

१ ग. घ. ज बीजं स नः पा° । २ क. ग. घ. ङ. च. ज. °रामुष्माद्दुःख° । ३ झ. भद्रं मे यच्छ पर्वत । शो° । ४ क. ख. ङ. च. °ष्मयाऽस्मसो(शो?) भावां° । ५ क. ख. ग. घ. ङ. च. ज पुनः । ६ क. ख. ग. घ. ङ. च. ज. °काऽग्नि गु° । ७ क. ख. ग. घ. ङ. च. ज. °नां च सर्वतः । स्व° । ८ ञ. °णादूर्ध्वं च । ९ ग. घ. ज. °मफलं स° । १० ञ. °संयुक्तो य° । ११ झ. नोत्कृष्टा ल° । १२ क. ख. ग. घ. ङ. च. ज. °हि संसारसा° ।

तन्मध्यत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्मतः । त्रिभिर्भारैः कनिष्ठः स्यात्तदर्धेनाल्प
मध्यत्तद्वदामन्त्रणं पूजा नैनिष्ठः स्युरर्चनम् । विष्कम्भपर्वतांस्तद्वत्सरांसि वनदेवत
होमं ... मेरुर्महाव्रीहिर्शिलाधिवासनम् । धान्यपर्वतवत्कुर्यादिमं मन्त्रमुदीरयेत् ॥ १४०
...सर्वेन्यस्मात्प्रवरोऽयं जनार्दनः । सामवेदस्तु वेदानां महादेवस्तु ... ॥ १४१
प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा । तथा रसानां प्रवरः सदैवेक्षुर... ॥ १४२
मम तस्मात्परां लक्ष्मीं ददातु गुडपर्वतः । यस्मात्सौभाग्यदायिन्या धा... गिरिम् ॥
निर्मितश्चासि पार्वत्या तस्मान्मां पाहि सर्वदा । [*अनेन विधिना यस्तु ... भवेत् ॥ १४४
स पूज्यमानो गन्धर्वैर्गौरीलोके महीयते । पुनः कल्पशतान्ते च सप्तद्वीपा... ॥ १४५
आयुरारोग्यसंपन्नः शत्रुभिश्चापराजितः । अथ पापहरं वक्ष्ये सुवर्णाचल... ॥ १४६
यस्य प्रदानाद्भवनं वैरिश्चं यान्ति मानवाः । उत्तमः पलसाहस्रो मध्य... शतैः ॥ १४६
तदर्धेनाधमस्तद्वदल्पवित्तोऽपि मानवः ] । दद्यादेकपलादूर्ध्वं यथाशक्ति... ॥ १४७
धान्यपर्वतवत्सर्वं विदध्याद्राजसत्तम । विष्कम्भशैलांस्तद्वच्च ऋत्विग्भ्यः प्रतिपादयेत् ॥ १४८
नमस्ते ब्रह्मबीजाय ब्रह्मगर्भाय वै नमः । यस्मादनन्तफलदस्तस्मा... शिलोच्चय ॥ १४९
यस्मादग्नेरपत्यं त्वं यस्मात्पुत्रो जगत्पतेः । हेमपर्वतरूपेण तस्मा... नगोत्तम ॥ १५०
अनेन विधिना यस्तु दद्यात्कनकपर्वतम् । स याति परमं ब्रह्म... नन्दकारकम् ॥ १५१
तत्र कल्पशतं तिष्ठेत्ततो याति परां गतिम् । अतः परं प्रवक्ष्या... शैलं विधानतः ॥ १५२
तत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम् । उत्तमो दशभिर्द्रोणैर्मध्यमः स्मृतः ॥ १५३
त्रिभिः कनिष्ठो राजेन्द्र तिलशैलः प्रकीर्तितः । पूर्ववच्चापरं ... कम्भपर्वतादिकम् ॥ १५४
दानमन्त्रं प्रवक्ष्यामि यथावन्मुनिपुंगव । यस्मान्मधुवने विष्णो... समुद्भवाः ॥ १५५
तिलाः कुशाश्च माषाश्च तस्माच्छान्तिप्रदो भव । हव्यक... तिला एव हि रक्षणम् ॥
भवात्तुद्धश्च शैलेन्द्र तिलाचल नमोऽस्तु ते । इत्यामन्त्र्य यो दद्यात्तिलाचलमनुत्तमम् ॥ १५७
स वैष्णवं पदं याति पुनरावृत्तिदुर्लभम् । [+दीर्घायुष्यमवाप्नोति पुत्रपौत्रैश्च मानवः] ॥ १५८
पितृभिर्देवगन्धर्वैः पूज्यमानो दिवं व्रजेत् । [*अतः परं प्रवक्ष्यामि कार्पासाचलमुत्तमम् ॥ १५९
यत्प्रदानान्नरो याति रौद्रं पदमनुत्तमम् । सर्वसौख्यप्रदं नृणामाप्नोति परमं पदम्] ॥ १६०
कार्पासपर्वतस्तद्वद्विंशद्भारैरिहोत्तमः । दशभिर्मध्यमः प्रोक्तः कनिष्ठः पञ्चभिर्मतः ॥ १६१
भारेणाल्पधनो दद्याद्वित्तशाठ्यविवर्जितः । धान्यपर्वतवत्सर्वमासाद्य राजसत्तम ॥ १६२
प्रभातायां तु शर्वर्यां दद्यादिदमुदीरयेत् । त्वमेव प्रावरो यस्माल्लोकानामिह सर्वदा ॥ १६३
कार्पासाद्रे नमस्तस्मादघौघध्वंसनो भव । इति कार्पासशैलेन्द्रं यो दद्यात्स(च्छ)र्वसंनिधौ ॥ १६४
रुद्रलोके वसेत्कल्पं ततो राजा भवेदिह । अतः परं प्रवक्ष्यामि घृताचलमनुत्तमम् ॥ १६५
तेजोमयं घृतं दिव्यं महापातकनाशनम् । विंशत्या घृतकुम्भानामुत्तमः स्याद्घृताचलः ॥ १६६

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो ग. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

---

१ ग. घ. ज °तः । नमस्तस्मा° । २ झ. °यिन्यन्नाता त्वं । ३ ग. ङ. °न्मधुवधे वि° । ज. °न्महेश्वराद्विष्णो° । ४ क. ग. घ. च. ज. °म् । लक्ष्मीं च कुरु शैं° । ५ ग. इत्यादिमन्त्रैरामन्त्र्य यो दद्यात्तिलपर्वतम् । ६ क. ख. ङ. च. °वारणं । ग. ज. प्रवरो ...

दशभिर्मध्यमः प्रोक्तः पञ्चभिस्त्वधमः स्मृतः । अल्पवित्तोऽपि कुर्वीत द्वाभ्यामिह विधानतः ।
विष्कम्भपर्वतांस्तद्वच्चतुर्भागेण कल्पयेत् । शालितण्डुलपात्राणि कुम्भोपरि निवेशयेत् ॥ १६८
कारयेत्संहतानुच्चान्यत्नवान्सविधानतः । वेष्टयेच्छुक्लवासोभिरिक्षुदण्डं फलादिकैः ॥ १६९
धान्यपर्वतवच्छेषं विधानमिह पठ्यते । अधिवासनपूर्वं हि तद्वद्धोमसुरार्चनम् ॥ १७०
प्रभातायां तु शर्वर्यां गुरवे विनिवेदयेत् । विष्कम्भपर्वतांस्तद्वद्दत्विग्भ्यः शान्तमानसः ॥ १७१
संयोगाद्धृतमुत्पन्नं यस्मादमृततेजसा । तस्माद्धृतार्चिर्विश्वात्मा प्रीयतामत्र शंकरः ॥ १७२
यस्मात्तेजोमयं ब्रह्म घृते चैव व्यवस्थितम् । घृतपर्वतरूपेण मामतः पाहि भूधर ॥ १७३
अनेन विधिना दद्याद्घृताचलमनुत्तमम् । महापातकयुक्तोऽपि लोकमायाति शांभवम् ॥ १७४
हंससारसयुक्तेन किङ्किणीजालमालिना । विमानेनाप्सरोभिश्च सिद्धविद्याधरैर्युतः ॥ १७५
विचरेत्पितृभिः सर्वं यावदाभूतसंप्लवम् । अतः परं प्रवक्ष्यामि रत्नाचलमनुत्तमम् ॥ १७६
मुक्ताफलसहस्रेण पर्वतः स्यादनुत्तमः । मध्यमः पञ्चशतिकः त्रिशतेनाधमः स्मृतः ॥ १७७
चतुर्भागेण विष्कम्भपर्वताः स्युः समन्ततः । पूर्वेण वज्रगोमेदौ दक्षिणेनेन्द्रनीलकौ ॥ १७८
पुष्परागयुतः कार्यो विद्वद्भिर्गन्धमादनः । वैडूर्यविद्रुमैः पश्चात्संमिश्रो विपुलाचलः ॥ १७९
पद्मरागैः ससौवर्णैरुत्तरेणापि विन्यसेत् । धान्यपर्वतवत्सर्वमत्रापि परिकल्पयेत् ॥ १८०
तद्वदावाहनं कृत्वा वृक्षान्देवांश्च काञ्चनान् । पूजयेत्पुष्पपानीयैः प्रभाते स्याद्विसर्जनम् ॥ १८१
पूर्ववद्गुरुऋत्विग्भ्य इमं मन्त्रमुदीरयेत् । यथा देवगणाः सर्वे सर्वरत्नेष्ववस्थिताः ॥ १८२
त्वं च रत्नमयो नित्यमतः पाहि महाचल । यस्माद्रत्नप्रदानेन तुष्टिमेति जनार्दनः ॥ १८३
पूजामन्त्रप्रदानेन तस्मान्नः पाहि सर्वतः । अनेन विधिना यस्तु दद्याद्रत्नमहागिरिम् ॥ १८४
स याति वैष्णवं लोकममरेश्वरपूजितः । यावत्कल्पशतं साग्रं वसेत्स्वर्गे नराधिप ॥ १८५
रूपारोग्यगुणोपेतः सप्तद्वीपाधिपो भवेत् । ब्रह्महत्यादिकं किंचिदत्रामुत्राथवा कृतम् ॥ १८६
तत्सर्वं नाशमायाति गिरिर्वज्रहतो यथा । अतः परं प्रवक्ष्यामि रौप्याचलमनुत्तमम् ॥ १८७
यत्प्रदानान्नरो याति सोमलोकं नृपोत्तम । दशभिः पलसाहस्रैरुत्तमो रजताचलः ॥ १८८
पञ्चभिर्मध्यमः प्रोक्तस्तदर्धेनाधमः स्मृतः । अशक्तो विंशतेरूर्ध्वं कारयेच्छक्तितः सदा ॥ १८९
विष्कम्भपर्वतांस्तद्वत्तुरीयांशेन कल्पयेत् । पूर्ववद्राजतान्कुर्यान्मन्दरादीन्विधानतः ॥ १९०
कलधौतमयांस्तद्वल्लोकेशान्कारयेद्बुधः । ब्रह्मविष्ण्वर्कवान्कार्यो नितम्बोऽत्र हिरण्मयः ॥ १९१
राजतं स्याद्यदन्येषां सर्वत्रेह च काञ्चनम् । शेषं च पूर्ववत्कुर्याद्धोमजागरणादिकम् ॥ १९२
[*दद्याच्चद्वत्प्रभातान्ते गुरवे रौप्यपर्वतम् । विष्कम्भशैलानृत्विग्भ्यः पूज्य वस्त्रविभूषणैः ॥ १९३
इमं मन्त्रं पठन्दद्याद्दर्भपाणिर्विमत्सरः । पितॄणां वल्लभं यस्माद्धरिणो]र्वा शंकरस्य च ॥ १९४
रजतं पाहि तस्मान्नः शोकसंसारसागरात् । इत्थं निवेश्य यो दद्याद्रजताचलमुत्तमम् ॥ १९५
गवामयुतसाहस्रफलं प्राप्नोति मानवः । सोमलोके स गन्धर्वैः किंनराप्सरसां गणैः ॥ १९६
पूज्यमानो वसेद्विद्वान्यावदाभूतसंप्लवम् । अथातः संप्रवक्ष्यामि शर्कराचलमुत्तमम् ॥ १९७

* धनुश्चिह्नान्तर्गतः पाठः क ख. घ. ङ. च. ज. पुस्तकस्थः ।

१ क. ख. ङ. च. °न्यथाशोभं वि° । २ क. ख. ङ. च. ज °वत्सर्वं त्रि° । ३ क. ख. ग. घ. ङ. च. ज°जसि । त° । ४ झ. °प्रसादेन । ५ ञ. °प्रसादेन । ६ क. ग. घ. ज. पर्वत । ७ क. ख. ङ. च. °सेत्तत्र न° । ८ झ. °त्प्रसादान्न° । ९ क. ख. ग. घ. ङ. च. ज. °शानर्चयेत्° । १० क. ख. ङ. च. °षां पर्वतानां च ।

यस्य प्रदानाद्विष्ण्वर्करुद्रास्तुष्यन्ति सर्वदा । अष्टाभिः शर्कराभारैरुत्तमः स्यान्महाचलः ॥ १९८
चतुर्भिर्मध्यमः प्रोक्तो भाराभ्यामधमः स्मृतः । भारेण चार्धभारेण कुर्याच्च स्वल्पवित्तवान् १९९
विष्कम्भपर्वतान्कुर्यात्तुरीयांशेन मानवः । धान्यपर्वतवत्सर्वं हैमामरसुसंयुतम् ॥ २००
मेरोरुपरि तद्वच्च स्थाप्यं हेमतरुत्रयम् । मन्दारः पारिजातश्च तृतीयः कल्पपादपः ॥
एतद्वृक्षत्रयं मूर्ध्नि पर्वतेषु निवेशयेत् ॥ २०१
हरिचन्दनसंतानौ पूर्वपश्चिमभागयोः । निवेश्यौ सर्वशैलेषु विशेषाच्छर्कराचले ॥ २०२
मन्दरे कामदेवश्च प्रत्यग्वक्त्रः सदा भवेत् । गन्धमादनशृङ्गे तु धनदः स्यादुदङ्मुखः ॥ २०३
प्राङ्मुखो हेममूर्तिस्तु हंसः स्याद्विपुलाचले । हैमी सुपार्श्वे तु भवेत्सुरभी दक्षिणामुखी ॥ २०४
धान्यपर्वतवत्सर्वमावाहनमखादिकम् । कृत्वाऽथ गुरवे दद्यान्मध्यमं पर्वतोत्तमम् ॥ २०५
ऋत्विग्भ्यश्चतुरः शैलानिमान्मन्त्रानुदीरयेत् । सौभाग्यामृतसारोऽयं परमः शर्कराचलः ॥ २०६
तस्मादानन्दकारी त्वं भव शैलेन्द्र सर्वदा । अमृतं पिवतां ये तु पतिता भुवि शीकराः ॥ २०७
देवानां तत्समुत्थस्त्वं पाहि नः शर्कराचल । मनोभवेतनोर्मध्यादुद्भूता शर्करा यतः ॥ २०८
तन्मयोऽसि महाशैल पाहि संसारसागरात् । यो दद्याच्छर्कराशैलमनेन विधिना नरः ॥ २०९
सर्वपापविनिर्मुक्तः प्रयाति[६] ब्रह्ममन्दिरम् । चन्द्रादित्यार्कसंकाशमधिरुह्यानुजीविभिः ॥ २१०
सहैव यानमुत्तिष्ठेत्स तु विष्णुप्रभो दिवि । ततः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् ॥ २११
आयुरारोग्यसंपन्नो यावज्जन्मायुतत्रयम् । भोजनं शक्तितः कुर्यात्सर्वशैलेष्वमत्सरः[७] ॥ २१२
स्वयं चाक्षारलवणमश्नीयात्तदनुज्ञया । पर्वतोपस्करान्सर्वान्प्रापयेद्ब्राह्मणालयम् ॥ २१३
एतत्ते सर्वमाख्यातं शैलदानमनुत्तमम् । यदन्यद्रोचते तुभ्यं तन्मां पृच्छस्व पार्थिव ॥ २१४

भीष्म उवाच—

भगवन्भवसंसारसागरोत्तारकारकम् । किंचिद्व्रतं ममाऽऽचक्ष्व स्वर्गारोग्यसुखप्रदम् ॥ २१५

पुलस्त्य उवाच—

सौरं धर्मं प्रवक्ष्यामि नाम्ना कल्याणसप्तमी । विशोकसप्तमी तद्वत्फलकाम्योपपादिनी ॥ २१६
शर्करासप्तमी पुण्या तथा चामलसप्तमी । सर्वाः पुण्यफलाः प्रोक्ताः सर्वदेवर्षिपूजिताः ॥ २१७
विधानमासां वक्ष्यामि यथावदनुपूर्वशः । यदा ह शुक्लसप्तम्यामादित्यस्य दिनं भवेत् ॥ २१८
सा तु कल्याणिनी नाम विजया तु निगद्यते । प्रातर्गव्येन पयसा स्नानं नद्यां समाचरेत् ॥ २१९
शुक्लाम्बरधरः पद्ममक्षतैः परिकल्पयेत् । प्राङ्मुखोऽष्टदलं मध्ये तद्वद्वृत्तां च कर्णिकाम्[११] ॥ २२०
सर्वेष्वपि दलेष्वेवं विन्यसेत्सर्वतः क्रमात् । पूर्वेण तपनायेति मार्तण्डायेति वै ततः ॥ २२१
याम्ये दिवाकरायेति विधात्र इति नैर्ऋते । पश्चिमे वरुणायेति भास्करायेति वाऽऽनिले ॥ २२२
सौम्ये विकर्तनायेति देवायेत्यष्टमे दले । आदावन्ते च मध्ये च नमोऽस्तु परमात्मने ॥ २२३
मन्त्रैरेतैः समभ्यर्च्य नमस्कारान्तदीपितैः । शुक्लवस्त्रैः फलैर्भक्ष्यैर्धूपमाल्यानुलेपनैः ॥ २२४

---

१ क. ख. ग. घ. ङ. च. ज. °र्ध्नि सर्वेष्वपि निवेदये° । २ क. ख. ङ. च. °खो वेदमूर्तिस्तु हैमः स्या° । ३ ज. °मी हिमांशुपार्श्वे तु सुर° । ४ ग. ज. °स्माद्दानं प्रशंसन्ति तव शै° । ५ क. ङ. च. °वधनुर्मे° । ६ ञ. °ति शिवम° । ७ क. ख. ङ. च. °रः । सर्वत्राक्षा° । ग. घ. ज. °रः । सर्वदाऽक्षारमश्नीयाच्छर्करां तद° । ८ ञ. °रकः । किं° । ९ क. ख. ङ. च. ज. °ग्यफलप्र° । १० ञ. °द्व्रतसप्तमी शुभसंसंमी । श° । ११ क. ख. ग. घ. ङ. च. ज. °मूं । पुष्पाक्षताद्भिर्देवेशं नि° ।

स्थण्डिले पूजयेद्भक्त्या गुडेन लवणेन च । ततो व्याहृतिमन्त्रेण विसर्ज्य द्विजपुंगवान् ॥ २२५
शक्तितस्तर्पयेद्भक्त्या गुडक्षीरघृतादिभिः । तिलपात्रं हिरण्यं च ब्राह्मणाय निवेदयेत् ॥ २२६
एवं नियमकृत्सुप्त्वा प्रातरुत्थाय मानवः । कृतस्नानजपो विप्रैः सदैव घृतपायसम् ॥ २२७
भुक्त्वा च वेदविदुषे[1] वैडालव्रतवर्जितम् । घृतपात्रं सकनकं सोदकुम्भं निवेदयेत् ॥ २२८
प्रीयतामत्र भगवान्परमात्मा दिवाकरः । अनेन विधिना सर्वं मासि मासि समाचरेत् ॥ २२९
ततस्त्रयोदशे मासि गाश्च दद्यात्त्रयोदश । वस्त्रालंकारसंयुक्ताः स्वर्णशृङ्गाः[3] पयस्विनीः ॥ २३०
एकामपि प्रदद्याद्गां वित्तहीनो विमत्सरः । न वित्तशाठ्यं कुर्वीत यतो मोहात्पतत्यधः ॥ २३१
अनेन विधिना यस्तु कुर्यात्कल्याणसप्तमीम् । सर्वपापविनिर्मुक्तः सूर्यलोके महीयते ॥ २३२
आयुरारोग्यमैश्वर्यमनन्तमिह जायते । सर्वपापहरा नित्यं सर्वदैवतपूजिता ॥ २३३
सर्वदुष्टोपशमनी सदा कल्याणसप्तमी । इमामनन्तफलदां यस्तु कल्याणसप्तमीम् ॥ २३४
शृणोति यः पठेद्वाऽपि सर्वपापैः प्रमुच्यते । विशोकसप्तमीं तद्वद्वक्ष्यामि नृपसत्तम ॥ २३५
यामुपोष्य नरः शोकं[6] नारी न लभते क्वचित् । माघे कृष्णतिलैः स्नातः पञ्चम्यां शुक्लपक्षतः ॥ २३६
कृताहारः कृशरया दन्तधावनपूर्वकम् । उपवासव्रतं कृत्वा ब्रह्मचारी निशि स्वपेत् ॥ २३७
ततः प्रभात उत्थाय कृतस्नानजपः शुचिः । कृत्वा च काञ्चनं पद्ममर्कायेति प्रपूजयेत् ॥ २३८
करवीरेण रक्तेन रक्तवस्त्रयुगेन च । यथा विशोकं भवनं त्वयैवाऽऽदित्य सर्वदा ॥ २३९
तथा [7]विशोकता मे स्यात्त्वद्भक्तिः प्रतिजन्म च । एवं संपूज्य षष्ठ्यां तु भक्त्या संपूज्य वै द्विजान्
स्तुत्वा संप्राश्य गोमूत्रमुत्थाय कृतनैत्यकः । संपूज्य विप्रान्यत्नेन गुडपात्रसमन्वितम् ॥ २४१
सद्वस्त्रयुग्मं पद्मं च ब्राह्मणाय निवेदयेत् । अतैललवणं भुक्त्वा सप्तम्यां मौनसंयुतः ॥ २४२
ततः पुराणश्रवणं कर्तव्यं भूतिमिच्छता । अनेन विधिना सर्वमुभयोरपि पक्षयोः ॥ २४३
कुर्याद्यावत्पुनर्माघशुक्लपक्षस्य सप्तमी । व्रतान्ते कलशं दद्यात्सुवर्णकमलान्वितम् ॥ २४४
शय्यां सोपस्करां दद्यात्कपिलां च पयस्विनीम् । अनेन विधिना यस्तु वित्तशाठ्यविवर्जितः २४५
विशोकसप्तमीं कुर्यात्स याति परमां गतिम् । यावज्जन्मसहस्राणां साग्रं कोटिशतं भवेत् ॥ २४६
तावन्न शोकमाप्नोति रोगद्रोहविवर्जितः । यं यं प्रार्थयते कामं तं तं प्राप्नोति पुष्कलम् ॥ २४७
निष्कामं कुरुते यस्तु स परं ब्रह्म गच्छति । यः पठेच्छृणुयाद्वाऽपि विशोकाख्यां तु सप्तमीम् २४८
सोऽपीन्द्रलोकमाप्नोति न दुःखी जायते क्वचित् । अन्यामपि प्रवक्ष्यामि नाम्ना तु फलसप्तमीम् ॥
यामुपोष्य नरः पापैर्विमुक्तः स्वर्गभाग्भवेत् । मार्गशीर्षे शुभे मासि पञ्चम्यां नियतव्रतः ॥ २५०
षष्ठीमुपोष्य कमलं कारयित्वा तु काञ्चनम् । शर्करासंयुतं दद्याद्ब्राह्मणाय कुटुम्बिने ॥ २५१
रूपं(?) च काञ्चनं कृत्वा फलस्यैकस्य कर्मवित् । दर्वोद्विकालवेलायां भानुर्मे प्रीयतामिति २५२
शक्त्या तु विप्रान्संपूज्य सप्तम्यां क्षीरभोजनम् । कृत्वा कुर्यात्फलत्यागं यावत्स्यात्कृष्णसप्तमी ॥
तामुपोष्याथ विधिवदनेनैव क्रमेण तु । तद्वद्धेमफलं दत्त्वा सुवर्णकमलान्वितम् ॥ २५४
शर्करापात्रसंयुक्तं वस्त्रमाल्यसमन्वितम् । संवत्सरमनेनैव विधिनोभयसप्तमीम् ॥ २५५

---

१ ग. घ. ज. °षे वैराजन्न° । २ ज. °कमलं सो° । ३ झ. सुवर्णाङ्काः । ४ ग. °ग्यसौभाग्यमैश्वर्यमि° । ५ ख. ग. ङ. ज. स च पा° । ६ क. ख. ग. घ. ङ. च. ज. °कं न कदाचिदिहाश्नुते । मा° । ७ ग. घ. विशेषमेवं स्या° । झ. विशोकमेव स्या° । ८ ग. घ. °द्भक्तिरस्तु सर्वदा । ए° । ९ क. ख. घ. ङ. च. ज. स्वयं । ग. संध्यां । १० क. ख. ग. ङ. च. ज. तद्वस्त्रयुग्मं । ११ झ °र्णशाकलान्वि° । १२ झ. °याद्वि का° ।

उपोष्य दद्यात्क्रमशः सूर्यमन्त्रमुदीरयेत् । भानुरर्को रविर्ब्रह्मा सूर्यः शक्रो हरिः शिवः ॥ २५६
श्रीमान्विभावसुस्त्वष्टा वरुणः प्रीयतामिति । प्रतिमासं च सप्तम्यामेकैकं नाम कीर्तयेत् ॥ २५७
प्रतिपक्षं फलत्यागमेतत्कुर्वन्समाचरेत् । [*व्रतान्ते विप्रमिथुनं पूजयेद्वस्त्रभूषणैः ॥ २५८
शर्कराकलशं दद्याद्धेमपद्मफलान्वितम् । यथा न विफलः कामस्त्वद्भक्तानां सदा भवेत् ॥]२५९
तथाऽनन्तफलावाप्तिरस्तु मे जन्मजन्मनि । इमामनन्तफलदां यः कुर्यात्फलसप्तमीम् ॥ २६०
सर्वपापविशुद्धात्मा सूर्यलोके महीयते । सुरापानादिकं किंचिद्यदत्रामुत्र वा कृतम् ॥ २६१
तत्सर्वं नाशमायाति यः कुर्यात्फलसप्तमीम् । भूतभव्यांश्च पुरुषांस्तारयेदेकविंशतिम् ॥ २६२
यः शृणोति पठेद्वाऽपि सोऽपि कल्याणभाग्भवेत् । शर्करासप्तमीं वक्ष्ये तद्वत्कल्मषनाशिनीम् ॥
आयुरारोग्यमैश्वर्यं ययाऽनन्तं प्रजायते । माधवस्य सिते पक्षे सप्तम्यां नियतव्रतः ॥ २६४
प्रातः स्नात्वा तिलैः शुक्लैः शुक्लमाल्यानुलेपनैः । स्थण्डिले पद्ममालिख्य कुङ्कुमेन सकर्णिकम् २६५
तस्मिन्नमः +सवित्रेति गन्धधूपं निवेदयेत् । स्थापयेदुदकुम्भं च शर्करापात्रसंयुतम् । २६६
शुक्लवस्त्रैरलंकृत्य शुक्लमाल्यानुलेपनैः । स्वर्णपुष्पसमायुक्तं मन्त्रेणानेन पूजयेत् ॥ २६७
विश्वेदेवमयो यस्माद्वेदवादीति पठ्यते । त्वमेवामृतसर्वस्वमतः शान्तिं प्रयच्छ मे ॥ २६८
पञ्चगव्यं ततः पीत्वा स्वपेत्तत्पार्श्वतः क्षितौ । सौरं सूक्तं जपन्नास्ते पुराणश्रवणेन च ॥ २६९
अहोरात्रे गते पश्चादष्टम्यां कृतनैत्यकः । तत्सर्वं वेदविदुषे ब्राह्मणाय निवेदयेत् ॥ २७०
भोजयेच्छक्तितो विप्राञ्शर्कराघृतपायसैः । भुञ्जीतातैललवणं स्वयमप्यथ वाग्यतः ॥ २७१
अनेन विधिना सर्वं मासि मासि समाचरेत् । संवत्सरान्ते शयनं शर्कराकलशान्वितम् ॥ २७२
सर्वोपस्करसंयुक्तं तथैकां गां पयस्विनीम् । गृहं च शक्तिमान्दद्यात्प्रशस्तोपस्करान्वितम् ॥२७३
सहस्रेणाथ निष्काणां कृत्वा दद्याच्छतेन वा । दशभिर्वा त्रिभिर्वाऽपि निष्केणैकेन वा पुनः ॥
एवं स्वशक्तितो दद्यात्पूर्ववन्मन्त्रपाठनम् । वित्तशाठ्यं न कुर्वीत कुर्वन्दोषान्समश्नुते ॥ २७५
अमृतं पिबतो वक्त्रात्सूर्यस्यामृतबिन्दवः । समुत्पेतुर्धरण्यां ये शालिमुद्गेक्षवः क्रमात् ॥ २७६
शर्कराया रसस्तस्मादिक्षुसारोऽमृतात्मवान् । इष्टा रवेरतः पुण्या शर्करा हव्यकव्ययोः ॥ २७७
शर्करासप्तमी चेयं वाजिमेधफलप्रदा । सर्वदुष्टोपशमनी पुत्रपौत्रविवर्धिनी ॥ २७८
यः कुर्यात्परया भक्त्या स परं ब्रह्म गच्छति । कल्पमेकं वसेत्स्वर्गे ततो याति परं पदम् २७९
इदमनघं शृणोति यः स्मरेद्वा परिपठतीह सुरेश्वरस्य लोके ।
मतिमपि च ददाति सोऽपि देवैरमरपुरे परिपूज्यते मुनीन्द्रैः ॥ २८०
अतः परं प्रवक्ष्यामि तद्वत्कमलसप्तमीम् । यस्याः संकीर्तनादेव तुष्यतीह दिवाकरः ॥ २८१
वसन्तामलसप्तम्यां संस्नातो गौरसर्षपैः । तिलपात्रे च सौवर्णं निधाय कमलं शुभम् ॥ २८२
वस्त्रयुग्मावृतं कृत्वा गन्धपुष्पैरथार्चयेत् । नमस्ते पद्महस्ताय नमस्ते विश्वधारिणे ॥ २८३
दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तु ते । ततो विकालवेलायामुदकुम्भसमन्वितम् ॥ २८४
विप्राय दद्यात्संपूज्य वस्त्रमाल्यविभूषणैः । शक्तिश्चेत्कपिलां दद्यादलंकृत्य विधानतः ॥ २८५

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. ज. पुस्तकस्थः । + संधिरार्षः ।

---

१ झ. ॰मन्त्रानुदी॰ । २ झ. ॰नैः । सुवर्णसुसं॰ । ३ अ. ॰श्चवेदम॰ । ४ झ. स्थितः । ५ ग. घ. ज. ॰त्रासीत्पुरा॰ । ६ झ. ॰वरस्वस्तिवाचनं॰ । ७ ग. घ. ज. सौवर्णे । ८ क. ख. ङ. च. ॰तो द्विका॰ । ९ क. ख. ङ. च. ज. ॰त्कमलं द॰ ।

अहोरात्रे गते पश्चादष्टम्यां भोजयेद्द्विजान् । यथाशक्त्यथ भुञ्जीत विमांसं तैलवर्जितम् ॥ २८६
अनेन विधिना शुक्लसप्तम्यां मासि मासि च । सर्वं समाचरेद्भक्त्या वित्तशाठ्यविवर्जितः॥ २८७
व्रतान्ते शयनं दद्यात्सुवर्णकमलान्वितम् । गाश्च प्रदद्याच्छक्त्या तु सुवर्णस्य पयस्विनीः ॥ २८८
भोजनासनदीपादीन्दद्यादिष्टानुपस्करान् । अनेन विधिना यस्तु कुर्यात्कमलसप्तमीम् ॥ २८९
लक्ष्मीमनन्तामभ्येति सूर्यलोकं च गच्छति । कल्पे कल्पे ततो लोकान्सप्त गत्वा पृथक्पृथक् ॥
अप्सरोभिः परिवृतस्ततो याति परां गतिम् ॥ २९०

पश्येदिमां यः शृणुयान्मुहूर्तं पठेच्च भक्त्याऽथ मतिं ददाति ।
सोऽप्यत्र लक्ष्मीममलामवाप्य गन्धर्वविद्याधरलोकनाथः ॥ २९१

अथातः संप्रवक्ष्यामि सर्वपापप्रणाशिनीम् । सर्वकामप्रदां पुण्यां नाम्ना मन्दारसप्तमीम् ॥ २९२
माघस्यामलपक्षे तु पञ्चम्यां लघुभुङ्नरः । दन्तकाष्ठं ततः कृत्वा षष्ठीमुपवसेद्बुधः ॥ २९३
विप्रांश्च पूजयित्वा तु मन्दारं प्रार्थयेन्निशि । ततः प्रभात उत्थाय कृतस्नानः पुनर्द्विजान् ॥ २९४
भोजयेच्छक्तितः कुर्यान्मन्दारकुसुमाष्टकम् । सौवर्णं पुरुषं तद्वत्पद्महस्तं तु शोभनम् ॥ २९५
पद्मं कृष्णतिलैः कृत्वा ताम्रपात्रेऽष्टपत्रकम् । इमं मन्दारकुसुमैर्भास्करायेति पूर्वतः ॥ २९६
नमस्कारेण तद्वत्तु सूर्यायेत्यमले दले । दक्षिणे तद्वदर्काय तथाऽर्यम्णे च नैर्ऋते ॥ २९७
पश्चिमे वेदधाम्ने च वायव्ये चण्डभानवे । पूष्णे चोत्तरतः पूज्य आनन्दायेत्यतः परम् ॥ २९८
कर्णिकायां च पुरुषः स्थाप्यः सर्वात्मनेऽपि च । शुक्लवस्त्रैः समावेष्ट्य भक्ष्यैर्माल्यफलादिभिः २९९
एवमभ्यर्च्य तत्सर्वं दद्याद्वेदविदे ततः । भुञ्जीतातैललवणं वाग्यतः प्राङ्मुखो गृही ॥ ३००
अनेन विधिना सर्वं मासि मासि समाचरेत् । कुर्यात्संवत्सरं यावद्वित्तशाठ्यविवर्जितः ॥ ३०१
एतदेव व्रतान्ते तु निधाय कलशोपरि । गोभिर्विभवतः सार्धं दातव्यं भूतिमिच्छता ॥ ३०२
नमो मन्दारनाथाय मन्दारभवनाय च । त्वं रवे तारयस्वास्मानस्मात्संसारसागरात् ॥ ३०३
अनेन विधिना यस्तु कुर्यान्मन्दारसप्तमीम् । विपाप्मा स सुखी मर्त्यः कल्पं च दिवि मोदते ३०४
इमामघौघपटलभीषणध्वान्तदीपिकाम् । गच्छन्संगृह्य संसारशर्वर्यां न स्खलेन्नरः ॥ ३०५
मन्दारसप्तमीमेतामीप्सितार्थफलप्रदाम् । यः पठेच्छृणुयाद्वाऽपि सोऽपि पापैः प्रमुच्यते ॥ ३०६
अथान्यामपि वक्ष्यामि शोभनां शुभसप्तमीम् । [*यामुपोष्य नरो रोगशोकौघात्तु प्रमुच्यते ३०७
पुण्यामाश्वयुजे मासि कृतस्नानजपः शुचिः । वाचयित्वा ततो विप्रानारभेच्छुभसप्तमीम् ]॥ ३०८
कपिलां पूजयेद्भक्त्या गन्धमाल्यानुलेपनैः । नमामि सूर्यसंभूतामशेषभुवनालयाम् ॥ ३०९
त्वामहं शुभकल्याणि स्वशरीरविशुद्धये । अथ कृत्वा तिलप्रस्थं ताम्रपात्रेण संयुतम् ॥ ३१०
काञ्चनं वृषभं तद्वद्वस्त्रमाल्यगुणान्वितम् । सोपधानकविस्तीर्णभाजनासनसंयुतम् ॥ ३११
फलैर्नानाविधैर्भक्ष्यैर्घृतपायससंयुतैः । दद्याद्विकालवेलायामर्यमा प्रीयतामिति ॥ ३१२
पञ्चगव्यं च संप्राश्य स्वपेद्भूमावसंस्तरे । ततः प्रभाते संजाते भक्त्या संतर्पयेद्द्विजान् ॥ ३१३
[+अनेन विधिना दद्यान्मासि मासि सदा नरः । वाससी वृषभं हैमं तद्वद्गां काञ्चनोद्भवाम् ॥
संवत्सरान्ते शयनमिक्षुदण्डगुडान्वितम् । ताम्रपात्रे तिलप्रस्थं सौवर्णवृषभं तथा ॥ ३१५

*धनुश्चिह्नान्तर्गतः पाठो ग. घ. ङ. च. ज पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग घ. ङ. च. ज.पुस्तकस्थः ।

१ क, घ; च, ज. °लोके स मोदते । क° । २ ग. °द्याद्विप्राय वै पुनः । भु° । ३ घ. ङ. च. ज. पुनः । ४ क. ख. ग. घ. ङ. ज. ज. °र्वं सप्तम्यां मासि मासि च । कु° । ५ ञ. °गुडान्वि° । ६ ञ. °गुणान्वि° ।

दद्याद्वेदविदे सर्वं विश्वात्मा प्रीयतामिति]। अनेन विधिना विद्वान्कुर्याद्यः शुभसप्तमीम् ॥ ३१६
तस्य श्रीर्विमला कीर्तिर्भवेज्जन्मनि जन्मनि। अप्सरसां गणैः सर्वैः पूज्यमानः सुरालये ॥ ३१७
वसेद्गणाधिपो भूत्वा यावदाभूतसंप्लवम्। कल्पादाववतीर्णश्च सप्तद्वीपाधिपो भवेत् ॥ ३१८
भ्रूणहत्यासहस्रस्य ब्रह्महत्याशतस्य च। नाशायालमियं पुण्या पठ्यते शुभसप्तमी ॥ ३१९

इमां पठेद्यः शृणुयान्मुहूर्तं पश्येत्प्रसङ्गादपि दीयमानम्।
सोऽप्यत्र सर्वाघविमुक्तदेहः प्राप्नोति विद्याधरनायकत्वम् ॥ ३२०
यावत्समाः सप्त नरः करोति यः सप्तमीं सप्तविधानयुक्ताम्।
स सप्तलोकाधिपतिः क्रमेण भूत्वा पदं याति परं मुरारेः ॥ ३२१

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पुष्करमाहात्म्य एकविंशतितमोऽध्यायः ॥ २१ ॥

आदितः श्लोकानां समष्ट्यङ्काः २४०८१

---

अथ द्वाविंशतितमोऽध्यायः।

---

भीष्म उवाच—

भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः। तपः सत्यं च सप्तैते देवलोकाः प्रकीर्तिताः ॥ १
पर्यायेण तु सर्वेषामाधिपत्यं कथं भवेत्। इह लोके शुभं रूपमायुरारोग्यमेव च ॥ २
लक्ष्मीश्चापि पुरा ब्रह्मन्कथं स्यात्सुरपूजिता।

पुलस्त्य उवाच—

पुरा हुताशनः सार्धं मारुतेन महीतले। आदिष्टः पुरुहूतेन विनाशाय सुरद्विषाम् ॥ ३
निर्दग्धेषु ततस्तेन दानवेषु सहस्रशः। तारकः कमलाक्षश्च कालदंष्ट्रः परावसुः ॥ ४
विरोचनश्च संह्रादः प्रयातास्ते तदाऽवसन्। [*अन्तःसमुद्रमाविश्य संनिवेशमकुर्वत ॥ ५
अशक्ता इति तेऽप्यग्निमारुताभ्यामुपेक्षिताः। ततः प्रभृति वै देवान्मनुष्यान्सभुजंगमान्] ॥ ६
संपीड्य च मुनीन्सर्वान्प्रविशन्ति पुनर्जलम्। एवं युगसहस्राणि ते वीराः पञ्च सप्त च ॥ ७
जलदुर्गबलाद्राजन्पीडयन्ति जगत्त्रयम्। ततः पुनरथो वह्निमारुतावमराधिपः ॥ ८
आदिदेशाचिरादम्बुनिधिरेष विशोष्यताम्। यस्मादस्मद्द्विषां चैष शरणं वरुणालयः ॥ ९
तस्माद्भवद्भ्यामद्यैव शोषमेष प्रणीयताम्। तावूचतुस्ततः शक्रं मयशम्बरसूदनम् ॥ १०

अग्निवायू ऊचतुः—

अधर्म एष देवेन्द्र सागरस्य विनाशनम्। यस्माज्जीवनिकायस्य महतः संक्षयो भवेत् ॥ ११
तस्मादुपायमन्यं त्वं समाश्रय पुरंदर। यस्य योजनमात्रेऽपि जीवकोटिशतानि वै ॥
निवसन्ति सुरश्रेष्ठ स कथं नाशमर्हति ॥ १२

पुलस्त्य उवाच—

एवमुक्तः सुरेन्द्रस्तु क्रोधसंरक्तलोचनः। उवाचेदं वचो रोषादुद्वमन्निव पावकम् ॥ १३

---

*धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः।

१ क. ख. ग. ङ. च. ज. °षादमरावग्निमारुतौ। न।

इन्द्र उवाच—

न धर्माधर्मसंयोगं प्राप्नुवन्त्यमराः क्वचित् । भवन्तौ तु विशेषेण माहात्म्येनावतिष्ठतः ॥ १४
ममाज्ञा न कृता यस्मान्मारुतेन समं त्वया । मुनिव्रतपरो भूत्वा परिगृह्य कलेवरम् ॥ १५
धर्मार्थशास्त्ररहितां योनिं प्रति विभावसो । तस्मादेकेन वपुषा मुनिरूपेण मानुषे ॥ १६
मारुतेन समं लोके तव जन्म भविष्यति । यदाऽपि मानुषत्वेऽपि त्वया गण्डूषशोषितः ॥ १७
भविष्यत्युदधिर्वह्ने तदा देवत्वमाप्स्यसि ॥ १८

पुलस्त्य उवाच—

इतीन्द्रशापात्पतितौ तत्क्षणात्तौ महाद्युती । अवाप्नवन्तौ देहं च कुम्भाज्जन्म ततोऽभवत् ॥ १९
मित्रावरुणयोर्वीर्याद्वसिष्ठश्चाऽऽत्मजोऽभवत् । ततोऽगस्त्य उग्रतपा बभूव मुनिमूर्धनि ॥ २०
अस्मद्भ्रातुः स वै भ्राता वसिष्ठस्यानुजो मुनिः ॥ २१

भीष्म उवाच—

कथं वै मित्रावरुणौ पितरावस्य तौ स्मृतौ । जन्म कुम्भादगस्त्यस्य यथाऽभूत्तद्वदाधुना ॥ २२

पुलस्त्य उवाच—

पुरा पुराणपुरुषः कदाचिद्गन्धमादने । भूत्वा धर्मसुतो विष्णुश्चचार विपुलं तपः ॥ २३
तपसा तस्य भीतेन विघ्नार्थे प्रेषितावुभौ । शक्रेण माधवानङ्गावप्सरोगणसंयुतौ ॥ २४
यदा च गीतवाद्येन भावहावादिना हरिः । मोहितः स तदा तैस्तु ततः खेदमुपागतः ॥ २५
तदा काममधुस्त्रीणां विषादमभजद्गणः । संक्षोभाय ततस्तेषामूरुदेशान्नराग्रजः ॥ २६
नारीमुत्पादयामास त्रैलोक्यस्यापि मोहिनीम् । संमोहितास्तया देवास्तौ तु चैव सुरावुभौ ॥ २७
अप्सरा इति संमान्या देवानामब्रवीद्धरिः । उर्वशीति च नाम्नेयं लोके ख्यातिं गमिष्यति ॥ २८
ततः कामयमानेन मित्रेणाऽऽहूय सोर्वशी । प्रोक्ता मां रमयस्वेति बाढमित्यब्रवीच्च सा ॥ २९
गर्भिण्येवान्तरा तद्वत्स्तोकमिन्दीवरेक्षणा । वरुणेन भृता पश्चाद्वचनं चाप्यभाषत ॥ ३०
मित्रेणाहं भृता पूर्वं मम सूर्यः पतिर्विभो । उवाच वरुणश्चित्तं मयि संत्यज्य गम्यताम् ॥ ३१
गतायां बाढमित्युक्त्वा मित्रः शापमदादथ । अद्यैव मानुषे लोके गच्छ सोमसुतात्मजम् ॥ ३२
भजस्वेति यतो मिथ्याधर्म एष त्वया कृतः । जलकुम्भे ततो वीर्यं मित्रेण वरुणेन च ॥ ३३
प्रक्षिप्तमथ संजातौ द्वावेव मुनिसत्तमौ । निमिर्नाम नृपः स्त्रीभिः पुरा द्यूतमदीव्यत ॥ ३४
*निमित्रामृत पुनः पुरा युग्ममजायत(?) । तदन्तरेऽभ्याजगाम वसिष्ठो ब्रह्मणः सुतः ॥ ३५
तस्य पूजामकुर्वाणं शशाप स मुनिर्नृपम् । विदेहस्त्वं भवस्वेति शप्तस्तेनाप्यसौ मुनिः ॥ ३६
अन्योन्यशापादुभयोर्विशरीरे तु तेजसी । जग्मतुः शापनाशाय ब्रह्माणं जगतः पतिम् ॥ ३७
अथ ब्रह्मसमादेशाल्लोचनेष्ववसन्निमिः । निमेषाः स्युश्च लोकानां तद्विश्रामाय पार्थिव ॥ ३८

---

* इदमर्धं झ. पुस्तकस्थम् ।

---

१ घ. °हितं शत्रुं प्र° । झ. °हितं शापं प्र° । २ क. ख. घ. ङ. च. ज. महीतले । ग. मनुस्थले । ३ झ. °वाप शक्रशापेन कुम्भजन्म तपोधन । मि° । ४ झ. °ष्ठस्याग्रजोऽ° । ५ क ख. ङ च. मुनिसत्तमः । ६ न. °स्याग्रजो । ७ झ. °रिः । न काममाधवाभ्यां च विषयं प्रति चक्रिरे । त° । ८ क. ख. घ. ङ. च. ज. °स्तदा दे° । ९ झ. ज. °शी । सूर्यं व्रजाम्यहं प्रोच्य बा° । १० क. ख. ङ. च. गच्छन्ती तु ततः सूर्यलोकमि° । घ. ज. गच्छन्तीमुत्तरं त° ।

वसिष्ठोऽप्यभवत्तस्मिञ्जलकुम्भे च पूर्ववत् । ततो जातश्चतुर्बाहुः साक्षसूत्रकमण्डलुः ॥ ३९
अगस्त्य इति शान्तात्मा बभूव ऋषिसत्तमः । मलयस्यैकदेशे तु वैखानसविधानतः ॥ ४०
सभार्यः संवृतो विप्रैस्तपश्चक्रे सुदुष्करम् । ततः कालेन महता तारकादिनिपीडितम् ॥ ४१
जगद्वीक्ष्य स कोपेन पीतवान्वरुणालयम् । ततोऽस्य वरदाः सर्वे बभूवुः शंकरादयः ॥ ४२
ब्रह्मा विष्णुश्च भगवान्वरदानाय जग्मतुः । वरं वृणीष्व भद्रं ते यश्चाभीष्टश्च वै मुने ॥ ४३

अगस्त्य उवाच—

यावद्ब्रह्मसहस्राणां पञ्चविंशतिकोटयः । वैमानिको भविष्यामि दक्षिणाम्बरवर्त्मनि ॥ ४४
मद्विमानोदयात्कुर्याद्यः कश्चित्पूजनं मम । स सप्तलोकाधिपतिः पर्यायेण भविष्यति ॥ ४५
यस्त्वाश्रमं पुष्करे तु मन्नाम्ना परिकीर्तयेत् । स चैव पुण्यतां यातु वर एष वृतो मया ॥ ४६
श्राद्धं येऽत्र करिष्यन्ति पिण्डपूर्वं तु [१]शक्तितः । तेषां पितृगणाः सर्वे मया सार्धं दिवि स्थिताः॥
एतत्कालं वसिष्यन्ति एष एव वरो मम । एवमस्त्विति तेऽप्युक्त्वा जग्मुर्देवा यथागतम् ॥
तस्मादर्घः प्रदातव्यो ह्यगस्त्यस्य सदा बुधैः ॥ ४८

भीष्म उवाच—

कथमर्घप्रदानादि कर्तव्यं तस्य वै मुने । विधानं यदगस्त्यस्य पूजने तद्वदस्व मे ॥ ४९

पुलस्त्य उवाच—

प्रत्यूषसमये विद्वान्कुर्यादस्योदये निशि । स्नानं शुक्लतिलैस्तद्वच्छुक्लमाल्याम्बरो गृही ॥ ५०
स्थापयेदव्रणं कुम्भं माल्यवस्त्रविभूषितम् । पञ्चरत्नसमायुक्तं घृतपात्रेण संयुतम् ॥ ५१

अङ्गुष्ठमात्रं पुरुषं तथैव सुवर्णमध्यायतबाहुदण्डम् ।
[३]चतुर्भुजं कुम्भमुखे निधाय धान्यानि सर्वाम्बरसंयुतानि ॥ ५२
सकांस्यपात्राक्षतशुक्तियुक्तं मन्त्रेण दद्याद्द्विजपुंगवाय ।
उत्क्षिप्य लम्बोदरदीर्घबाहुमनन्यचेतास्तमुदङ्मुखस्थम् ॥ ५३
श्वेतां च दद्याद्यदि शक्तिरस्ति रौप्यैः खुरैर्हेममुखीं सवत्साम् ।
धेनुं नरः क्षीरवतीं प्रणम्य स्रग्वस्त्रघण्टाभरणां द्विजाय ॥ ५४
आसप्तरात्रादुदये नृपास्य दातव्यमेतत्सकलं नरेण ।
यावत्समाः सप्तदशाथ वा स्युरथोर्ध्वमप्यत्र वदन्ति केचित् ॥ ५५

काशपुष्पप्रतीकाश अग्निमारुतसंभव । मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥ ५६
[५]प्रत्यब्दं च फलत्यागमेवं कुर्वन्न सीदति । होमं कुर्यात्ततः पश्चाद्वर्जयेन्मानवः फलम् ॥ ५७
अनेन विधिना यस्तु पुमानर्घं निवेदयेत् । इमं लोकमवाप्नोति रूपारो[६]ग्यसमन्वितः ॥ ५८
द्वितीयेन भुवर्लोकं स्वर्लोकं च ततः परम् । सप्तैव लोकानाप्नोति सप्तार्घान्यः प्रयच्छति ॥ ५९

इति पठति शृणोति वा य एतन्मुनिवरयुगसंभवस्य दानम् ।
मतिमपि च ददाति सोऽपि विष्णोर्भवनगतः परिपूज्यतेऽमराद्यैः ॥ ६०

भीष्म उवाच—

१ क. ख. ग. घ. ङ. च. ज. °भीष्टोऽत्र वै । २ क. ग. घ. ङ. च. ज. भक्तितः । ३ झ. चतुर्मुखं । ४ ञ. सप्ताच-लस्तं° । ५ झ. प्रत्यहं । ६ क. ख. ङ. च. ज °ग्यफलप्रदम् । द्वि° । ७ क. ख. ङ. च. °ति यो हि सम्यक्तदगस्त्यस्य समर्चनं च पश्येत् । म° ।

सौभाग्यारोग्यफलदममित्रक्षयकारकम् । भुक्तिमुक्तिप्रदं यच्च तन्मे ब्रूहि महामुने ॥ ६१

पुलस्त्य उवाच—

यदुमायाः पुरा देव उवाचान्धकसूदनः । कथासु संप्रवृत्तासु धर्म्यासु ललितासु च ॥
तदिदानीं प्रवक्ष्यामि भुक्तिमुक्तिफलप्रदम् ॥ ६२

गौर्युवाच—

दत्तः शापो हि सावित्र्या लक्ष्म्याः शैलसुरेश्वर । यथा लक्ष्मीप्रधानत्वमहं यामि सुरोत्तम ६३

शंकर उवाच—

शृणुष्वावहिता देवि तथैवान्यत्स्वयं कृतम् । नराणामथ नारीणामाराधनमनुत्तमम् ॥ ६४
नभस्ये चाथ वैशाखे पुण्ये मार्गशिरस्यथ । शुक्लपक्षे तृतीयायां स्नातः सन्गौरसर्षपैः ॥ ६५
गोरोचनं सगोमूत्रं गोशकृत्सकुशस्त(शं त)था । दधिचन्दनसंमिश्रं ललाटे तिलकं न्यसेत् ॥ ६६
सौभाग्यारोग्यकृद्यस्मात्सदा च ललिताप्रियम् । प्रतिपक्षं तृतीयायां पुमान्वाऽथ सुवासिनी ॥ ६७
धारयेद्रक्तवस्त्राणि कुसुमानि सितानि च । विधवा शुक्लवस्त्रं वै त्वेकमेव हि धारयेत् ॥ ६८
कुमारी शुक्लसूक्ष्मे च वाससी सुविधाय च । देवीं च पञ्चगव्येन ततः क्षीरेण केवलम् ॥ ६९
स्नापयेन्मधुना तद्वत्पुष्पगन्धोदकेन तु । पूजयेच्छुक्लपुष्पैस्तु फलैर्नानाविधैरपि ॥ ७०
धान्यलाजादिलवणगुडक्षीरघृतान्वितैः । शुक्लाक्षततिलैरर्चा कार्या देवि सदा त्वया ॥ ७१
पादयोरर्चनं कुर्यात्प्रतिपक्षं वरानने । वरदायै नमः पादौ तथा गुल्फौ श्रियै नमः ॥ ७२
अशोकायै नमो जङ्घे पार्वत्यै जानुनी तथा । ऊरू माङ्गल्यकारिण्यै वामदेव्यै तथा कटिम् ७३
पद्मोदरायै जठरमुरः कामश्रियै नमः । करौ सौभाग्यदायिन्यै बाहू च सुमुखश्रिये ॥ ७४
मुखं दर्पविनाशिन्यै स्मरदायै स्मितं पुनः । गौर्यै नमस्तथा नासामुत्पलायै च लोचने ॥ ७५
तुष्ट्यै ललाटमलकं कात्यायिन्यै नमः शिरः । नमो गौर्यै नमः पुष्ट्यै नमः कान्त्यै नमः श्रियै ॥
रम्भायै ललितायै च वासुदेव्यै नमो नमः । एवं संपूज्य विधिवदग्रतः पद्ममालिखेत् ॥ ७७
पत्रैर्द्वादशभिर्युक्तं कुङ्कुमेन सकर्णिकम् । पूर्वेण विन्यसेद्गौरीमपर्णां च ततः परम् ॥ ७८
[*भवानीं दक्षिणे तद्वद्रुद्राणीं च ततः परम् । ] विन्यसेत्पश्चिमे भागे सौम्यां मदविनाशिनीम्
वायव्ये पाटलामुग्रामुत्तरेण तथा उमाम् । साध्यां पथ्यां शुभां सौम्यां मङ्गलां कुमुदां सतीम् ८०
भद्रां च मध्ये संस्थाप्य ललितां कर्णिकोपरि । कुसुमैरक्षताद्भिर्वा नमस्कारेण विन्यसेत् ॥ ८१
गीतमङ्गलघोषं च कारयित्वा सुवासिनीम् । पूजयेद्रक्तवासोभी रक्तमाल्यानुलेपनैः ॥ ८२
सिन्दूरं स्नानपूर्वं च तासां शिरसि पातयेत् । सिन्दूरकुङ्कुमस्नानमतीवेष्टं यतस्ततः ॥ ८३

---

*धनुश्चिह्नान्तर्गतः पाठो ग. ज. पुस्तकस्थः ।

---

१ क. ग. घ. ङ. च. ज महामते । २ घ. कथां सुसंप्रवृत्तां च धर्मार्थसुखसंयुताम् । त°। ३ ग. घ. ञ. °पो ह्यचिन्त्यात्मन्विलक्ष्म्या यः सु° । ४ क. ख. ग. घ. ङ. च. ज. गोदुग्धं च घृतं तथा । ५ ज. °धिक्षीरेण सं°। ६ क. ख. ङ. च. ज. पुनः शुभ्रे च वाससी । धा° । ग. घ. पुनः शुभ्रे सुवाससी । धा° । ७ क. ख. ङ. च. °येदथ रक्ते तु नारी वै भर्तृसंयुता । ग. घ. ङ. °येदथ रक्तानि नारी चैतानि संयुता । ८ ख. ग. घ. ङ. च. ज. °वा धातुरक्तानि कुमारी शुक्लवाससी । दे° । ९ ख. ङ. °क्लवस्त्रैस्तु । १० झ. °र्चा तव देवि सदाऽर्चयेत् । पा° । ११ क. ख. ङ. च. ज °ठरं नमः कण्ठश्रि° । १२ ग. नासां पूजयेद्भक्तितस्ततः । तु° । १३ क. ख. ग. घ. ङ. च. ज. वामदेव्यै । १४ क. ख. ग. घ. च. ज क्रमेणैव । १५ ग. घ. °द्गौरीं सुवर्णां । ख. ङ. ज. °द्गौरीं सुपर्णां । १६ क. ख. घ. ङ. च. ज. °नचूर्णं च । ग. °नपूर्णं च ।

तथोपदेष्टारमपि पूजयेद्यत्नतो गुरुम् । न पूज्यते गुरुर्यत्र सर्वास्तत्राफलाः क्रियाः॥ ८४
पुष्पैश्च पूजयेद्गौरीमुत्पलैरसितैः सदा । बन्धुजीवैः प्रिये पूज्या कार्तिके मासि यत्नतः ॥ ८५
जातीपुष्पैर्मार्गशिरे पौषे पीतैः कुरण्टकैः । कुन्दैः कुसुम्भपुष्पैश्च देवीं माघेऽपि पूजयेत् ॥ ८६
सिन्दुवारेण जात्या च फाल्गुने चार्चयेन्नरः । चैत्रे तु मल्लिकाशोकैर्वैशाखे गन्धपाटलैः॥ ८७
ज्येष्ठे कमलमन्दारैराषाढे चैव जलाम्बुजैः । कदम्बैरथ मालत्या श्रावणे पूजयेत्सदा ॥ ८८
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । बिल्वपत्रार्कपुष्पे च यवगोशृङ्गवारि च ॥ ८९
पञ्चगव्यं च बिल्वं च प्राशयेत्क्रमशः सदा । एतद्भाद्रपदाद्यं तु प्राशनं समुदाहृतम् ॥ ९०
प्रतिपक्षं च मिथुनं तृतीयायां वरानने । भोजयित्वाऽर्चयेद्भक्त्या वस्त्रमाल्यानुलेपनैः ॥ ९१
पुंसः पीताम्बरे दद्यात्स्त्रियाः कौशेयवाससी । निष्पावजीरलवणमिक्षुदण्डगुडान्वितम् ॥ ९२
स्त्रियै दद्यात्फलं पुंसः सुवर्णोत्पलसंयुतम् । यथा न देवि देवस्त्वां संपरित्यज्य गच्छति ॥ ९३
तथा मामुद्धराशेषदुःखसंसारसागरात् । कुमुदा विमला नन्दा भवानी वसुधा शिवा ॥ ९४
ललिता कमला गौरी सती रम्भा च पार्वती । नभस्यादिषु मासेषु प्रीयतामित्युदीरयेत् ॥ ९५
व्रतान्ते शयनं दद्यात्सुवर्णकमलान्वितम् । मिथुनानि चतुर्विंशद्वादशाथ समर्चयेत् ॥ ९६
अष्टावष्टौ च मासान्ते चातुर्मास्येन पूजयेत् । पूर्वं दत्त्वाऽथ गुरवे शेषानभ्यर्चयेद्बुधः ॥ ९७
उक्ताऽनन्ततृतीयैषा सदाऽनन्तफलप्रदा । सर्वपापहरा देवी सौभाग्यारोग्यवर्धिनी ॥ ९८
न चैनां वित्तशाठ्येन कदाचिदपि लङ्घयेत्[११] । नरो वा यदि वा नारी सापत्न्या[१२] वाऽनपत्यका ॥
गर्भिणी सूतिका नक्तं कुमारी वाऽथ रोहिणी । यदाऽशुद्धा तदाऽन्येन कारयेत्प्रयता स्वयम् ॥
इमामनन्तफलदां तृतीयां यः समाचरेत् । कल्पकोटिशतं साग्रं शिवलोके महीयते ॥ १०१
वित्तहीनोऽपि कुर्वीत वर्षं तु समुपोषणैः । पुष्पमन्त्रविधानेन सोऽपि तत्फलमाप्नुयात् ॥ १०२
नारी वा कुरुते या तु[१३] कुमारी या तु चेच्छति । जन्म पौरुषमाप्नोति गौर्यनुग्रहकारितम् ॥१०३

इति पठति शृणोति वा य इत्थं गिरितनयाव्रतमिन्दुलोकसंस्थः ।
मतिमपि च ददाति सोऽपि देवैरमरवधूजनकिंनरैः सुपूज्यः ॥ १०४

अन्यामपि प्रवक्ष्यामि तृतीयां पापनाशिनीम् । रसकल्याणिनीमेनां पुरा कल्पविदो विदुः॥१०५
माघमासे तु संप्राप्य तृतीयां शुक्लपक्षतः । प्रातर्गव्येन पयसा तिलैः स्नानं समाचरेत् ॥ १०६
स्नापयेन्मधुना देवीं तथैवेक्षुरसेन तु । गन्धोदकेन च पुनः पूजनं कुङ्कुमेन वै ॥ १०७
दक्षिणाङ्गानि संपूज्य ततो वामानि पूजयेत् । ललितायै ततो देव्यै पादौ गुल्फौ ततोऽर्चयेत् ॥
जङ्घे जानू तथा शान्त्यै तथैवोरू श्रियै नमः । मदालसायै च कटिममलायै तथोदरम् ॥ १०९
*स्तनौ मदनवासिन्यै कुमुदायै च कंधराम् । भुजभुजाग्रं माधव्यै कमलायै मुखस्मिते ॥ ११०

---

* इदमर्धं झ. पुस्तकस्थम् ।

---

१ क. ख. घ. ङ. च. ज. °याः । जाप्यैश्च । ग. °याः । भाद्रे च पू° । २ क. ख. ङ. च. 'जीवर्षिभिर्भद्रात्कर्णिकैः शतपत्रकैः । जा° । ग. °जीवैः शिरीषैश्च कर्णिकैः शतपत्रकैः । जा° । घ. ज. °जीवर्षिभिः पूज्या कर्णिकैः शतपत्रकैः । जा° । ३ क. ख. ग. घ. ङ. च. ज. कुमुदपु° । ४ झ. चमचाम्बु° । ५ ख. ग. घ. ङ. ज. पीताम्बरे । ६ ञ. °ष्पावाजी° । ७ क. ख. ग. घ. ङ. च. ज. तस्मै । ८ क. ख. ग. घ. ङ. च. ज. रामा । ९ क. ख. ङ. च. ज. °वष्टाथ वा भूयश्चातुर्मास्येऽथ वाऽर्चये° । १० क. ख. ङ. च. °री सोपवासं व्रतं चरेत् । ग° । ११ झ. रोगिणी । १२ क. ख. ग. घ. ङ. च. ज. °येन्नृपते सदा । इ° । १३ क. ख. ग. घ. ङ. च. ज. तु आत्मनः शुभमिच्छती । जन्मनः फलमा° । १४ क. ख. ङ. च. °ल्पमवे वि° ।

भ्रूललाटं च रुद्राण्यै शंकरायै तथाऽलकम् । मदनायै ललाटं च मोहनायै पुनर्भ्रुवौ ॥ १११
नेत्रे चन्द्रार्धधारिण्यै तुष्ट्यै च वदनं पुनः । उत्कण्ठिन्यै नमः कण्ठममृतायै नमस्तनुम् ॥ ११२
रम्भायै च महाबाहुं विशोकायै नमः करौ । हृदयं मन्मथाधिक्यै पाटलायै तथोदरम् ॥ ११३
कटिं सुरतवासिन्यै तथोरुं पङ्कजश्रियै । [*जानुजङ्घे नमो गौर्यै गुल्फौ शान्त्यै तथाऽर्चयेत् ॥
धराधरायै पादं तु विश्वकायै नमः शिरः । नमो भवान्यै कामिन्यै वासुदेव्यै जगच्छ्रियै]॥११५
आनन्ददायै नन्दायै सुभद्रायै नमो नमः । एवं संपूज्य विधिवद्द्विजदांपत्यमर्चयेत् ॥ ११६
भोजयित्वाऽन्नदानेन मधुरेण विमत्सरः । सलड्डुकं वारिकुम्भं शुक्लवासोयुगद्वयम् ॥ ११७
दत्त्वा सुवर्णकमलं गन्धमाल्यैरथार्चयेत् । प्रीयतामत्र कुमुदा यत्कृतं लवणव्रतम् ॥ ११८
अनेन विधिना देवीं मासि मासि सदाऽर्चयेत् । लवणं वर्जयेन्माघे फाल्गुने च गुडं पुनः ॥११९
इक्षुदण्डं तथा चैत्रे वर्ज्यं च मधु माधवे । पानीयं ज्येष्ठमासे च आषाढे जीरकं तथा ॥ १२०
श्रावणे वर्जयेत्क्षीरं दधि भाद्रपदे तथा । घृतमाश्वयुजे तद्वदूर्जे वर्ज्यं च माक्षिकम् ॥ १२१
धान्यकं मार्गशीर्षे तु पौषे वर्ज्या च शर्करा । व्रतान्ते करकं पूर्णमेतेषां मासि मासि च ॥ १२२
दद्याद्विकालवेलायां भक्षपात्रेण संयुतम् । लड्डुकाः श्वेतवर्तिश्च संयावमथ पूरिका ॥ १२३
घारिका घृतपूर्णाश्च पिष्टपूर्णाश्च मण्डकाः । क्षीरशाकं च दध्यन्नं पिण्डशाकविवर्जितम् ॥ १२४
माघादिक्रमशो दद्यादेतानि करकोपरि । कुमुदा माधवी गौरी रम्भा भद्रा जया शिवा ॥ १२५
ललिता कमलाऽनङ्गा मङ्गला रतिलालसा । क्रमान्माघादिमासेषु प्रीयतामिति कीर्तयेत् ॥ १२६
सर्वत्र पञ्चगव्यं च प्राशनं समुदाहृतम् । उपवासी भवेन्नित्यमशक्तौ नक्तमिष्यते ॥ १२७
कुर्यादेवमिदं नारी रसकल्याणिनीव्रतम् । पुनर्माघे तु संप्राप्ते शर्कराकरकोपरि ॥ १२८
कृत्वा तु काञ्चनीं गौरीं पञ्चरत्नसमन्विताम् । स्वकीयाङ्गुष्ठमात्रां च साक्षसूत्रकमण्डलुम् ॥१२९
चतुर्भुजामिन्दुयुतां सितनेत्रपटावृताम् । तद्वद्गोमिथुनं शुक्लं सुवर्णस्य सिताम्बरम् ॥ १३०
सवस्त्रभाजनं दद्याद्भवानी प्रीयतामिति । अनेन विधिना यस्तु रसकल्याणिनीव्रतम् ॥ १३१
कुर्याच्च सर्वपापेभ्यस्तत्क्षणादेव मुच्यते । भवार्बुदसहस्रं तु न दुःखी जायते क्वचित् ॥ १३२
अग्निष्टोमसहस्रेण यत्फलं तदवाप्नुयात् । नारी वा कुरुते या तु कुमारी वा वरानने ॥ १३३
विधवा वा वराकी वा साऽपि तत्फलभागिनी । सौभाग्यारोग्यसंपन्ना गौरीलोके महीयते ॥

इति पठति य इत्थं यः शृणोति प्रसङ्गा-
त्सकलकलुषमुक्तः पार्वतीलोकमेति ।
मतिमपि च विधत्ते यो नराणां प्रियार्थं
विबुधपतिजनानां नायकः स्यादमोघम् ॥ १३५

तथैवान्यां प्रवक्ष्यामि तृतीयां पापनाशिनीम् । नाम्ना च लोके विख्यातामात्मानन्दकरीमिमाम् ॥
यदा शुक्लतृतीयायामषाढा च भवेत्क्वचित् । रोहिणी चाथ तु मघा हस्तो मूलमथापि वा १३७

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

१ क.ख.ग.घ. ङ च. ज. नमः स्तनम् । २ ञ. मन्मथाह्वायै । ३ क. ख. घ. ङ. च. ज. नवनीतं । ४ क. ख. ङ. च. ज. नन्दिकाः । घ. निन्दिकाः । ५ क. ख. ङ. च. °न्नं पिण्डशाकं तथैव च । मा° । झ. °न्नं कठशाकोकवर्तिका । मा° । ६ झ. °वा । उमा च शांभवी तद्वन्मङ्ग° । ७ ञ. °कलशोप° । ८ झ. गोधां । ९ झ. °म् । हैमामङ्गु° । १० क. ख. ङ. च. °र्णस्यासि° । ११ क. ख ङ. च. ज. लोकगः । १२ क. ख. ग. घ. ङ. च. ज. ब्रह्मर्क्षे ।

दर्भगन्धोदकैः स्नानं तदा सम्यक्समाचरेत् । शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ॥ १३८
भवानीमर्चयेद्भक्त्या शुक्लपुष्पैः सुगन्धिभिः । महादेवं च सकलमुपविष्टं महासने ॥ १३९
वासुदेव्यै नमः पादौ शंकराय नमो हरेः । जङ्घे शोकविनाशिन्यै आनन्दाय नमः प्रभोः १४०
रम्भायै पूजयेदूरू शिवाय च पिनाकिनः । आनन्दिन्यै कटिं देव्याः शूलिनः शूलपाणये ॥१४१
माधव्यै च तथा नाभिमथ शंभोर्भवाय वै । स्तनौ चानन्तकारिण्यै शंकरस्येन्दुधारिणे ॥ १४२
उत्कण्ठिन्यै नमः कण्ठं नीलकण्ठाय वै हरेः । करावुत्पलधारिण्यै रुद्राय जगतां पतेः ॥ १४३
बाहू च परिरम्भिण्यै नृत्यप्रीताय वै हरेः । देव्या मुखं विलासिन्यै वृषभाय पुनर्विभोः ॥१४४
[+स्मितं च स्मरणीयायै विश्ववक्त्राय वै विभोः] । नेत्रे मन्दरवासिन्यै विश्वधाम्ने त्रिशूलिने ॥
भ्रुवौ नृत्यप्रियायै च शंभोर्वै पाशशूलिने । देव्या ललाटमिन्द्राण्यै वृषवाहाय वै विभोः ॥१४६
स्वाहायै मुकुटं देव्या विभोर्गङ्गाधराय वै । विश्वकायौ विश्वमुखौ विश्वपादकरौ शिवौ ॥ १४७
प्रसन्नवदनौ वन्दे पार्वतीपरमेश्वरौ । एवं संपूज्य विधिवदग्रतः शिवयोः पुनः ॥ १४८
पद्मोत्पलानि रजसा नानावर्णेन कारयेत् । शङ्खचक्रे सकटके स्वस्तिकं शुभकारकम् ॥ १४९
यावन्तः पांसवस्तत्र रजसः पतिता भुवि । तावद्वर्षसहस्राणि शिवलोके महीयते ॥ १५०
चत्वारि घृतपात्राणि सहिरण्यानि शक्तितः । दत्त्वा द्विजाय करकमुदकान्नसमन्वितम् ॥ १५१
प्रतिपक्षं चतुर्मासं यावदेतान्निवेदयेत् । ततस्तु चतुरो मासान्पूर्ववत्करकोपरि ॥ १५२
चत्वारि घृतपात्राणि तिलपात्राण्यतः परम् । गन्धोदकं पुष्पवारि चन्दनं कुङ्कुमोदकम् ॥ १५३
अपक्वदधि दुग्धं च गोशृङ्गोदकमेव च । अब्जोदकं तथा वारि कुष्ठचूर्णान्वितं पुनः ॥ १५४
उशीरसलिलं तद्वद्यवचूर्णोदकं तथा । तिलोदकं च संप्राश्यं स्वपेन्मार्गशिरादिषु ॥ १५५
मासेषु पक्षद्वितयं प्राशनं समुदाहृतम् । सर्वत्र शुक्लपुष्पाणि प्रशस्तानि सदाऽर्चने ॥ १५६
दानकाले च सर्वत्र मन्त्रमेतमुदीरयेत् । गौरी मे प्रीयतां नित्यमघनाशाय मङ्गला ॥ १५७
सौभाग्यायास्तु ललिता भवानी सर्वसिद्धये । संवत्सरान्ते लवणं गुडकं तु विसर्जयेत् ॥ १५८
चन्दनं नेत्रपट्टं च सहिरण्याम्बुजेन च । उमामहेश्वरं हैमं तद्वदिक्षुफलैर्युतम् ॥ १५९
सास्तरां च वरां शय्यां सुविस्तीर्णां निवेदयेत् । सपत्नीकाय विप्राय गौरी मे प्रीयतामिति ॥
आत्मानन्दकरीं नाम्ना प्राप्नोति नवसंपदम् । आयुरारोग्यसंतत्या न क्वचिच्छोकमाप्नुयात् १६१
नारी वा कुरुते या तु कुमारी विधवाऽथ वा । साऽपि तत्फलमाप्नोति देव्यनुग्रहलालिता १६२
प्रतिपक्षमुपोष्यैवं मन्त्रार्चनविधानतः । रुद्राणीलोकमाप्नोति पुनरावृत्तिदुर्लभम् ॥ १६३
य इमां शृणुयान्नित्यं श्रावयेद्वाऽपि भक्तितः । शक्रलोकं स गत्वा तु पूज्यते कल्पसंस्थितः १६४

शंकर उवाच— [१२]

एवंविधा या भवति नारी व्रतपरायणा । सावित्री सा वराकी च तस्याः शापस्तु कीदृशः १६५

---

+ धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. पुस्तकस्थः ।

---

१ ज. °रनी(ली) लायै । २ घ. °वौ नित्य° । ३ झ. च ताण्डवेद्याय शू° । ४ ग. कर्कपात्राणि । ५ झ. ञ. °त्वारिंशत्तु पा° । ६ घ. पुष्पोदकं । झ. अब्दोदकं । ७ क. ख. घ. ङ. च. ज. °श्य सूर्ये मार्गे° । ८ क. ख. ग. घ. ङ. च. छ. °डकुङ्कुमसंयुतम् । च° । ९ क. ख. ङ. च. °न्दनेन युतं कुम्भं स° । १० क. च. °मायाः प्रतिये हैं° । ११ क. ख. ग. घ. ङ. चैं. ज. °द्राणां लो° । १२ झ. °री सर्वप° ।

न काचिद्गणना चास्ति यतस्त्रैलोक्यसुन्दरी । सा पूर्वस्यापि वन्द्या च लक्ष्मीविष्णुपरिग्रहात् १६६
यया पूर्वं तवार्थाय दक्षयज्ञस्तु नाशितः । लक्ष्म्यर्थे विष्णुना वाऽपि क्षीराब्धिर्मथितस्तथा ॥ १६७
आज्ञाकरौ भवत्योश्च मा कुरुष्व भयं क्वचित् । सावित्र्या मानना कार्या कुपितायाः प्रसादनम् १६८
मया च विष्णुना चैव ब्रह्मणा मानमीप्सुभिः । गमिष्ये ब्रह्मसदनं त्वं च तिष्ठ वरानने ॥ १६९
एवमुक्त्वा गतो रुद्रो गौरी तत्र व्यवस्थिता । कृतं युगं समग्रं तु यज्ञे तस्मिन्हुताशनः ॥ १७०
वहन्हव्यं तु देवानां प्रीणयानो जगत्रयम् । भोजयन्द्विजमुख्यांश्च दैवतेभ्यः स्वधामृतम् ॥ १७१
गन्धं गन्धर्वमुख्येषु भोगान्विद्याधरे गणे । कामावाप्तिं मनुष्येषु सर्वमेव ददौ प्रभुः ॥ १७२
रुद्रेणोक्तस्तदा विष्णुर्धर्मनिष्ठां प्रकीर्तय । गौरीधर्मान्सरस्वत्या व्रतं यत्परिकीर्तितम् ॥
इत्येवमुक्ते रुद्रं तु विष्णुः प्रोवाच सादरम् ॥ १७३

विष्णुरुवाच—

नाहं धर्मं ख्यापयिष्ये स्वकीयं शंकराधुना । भवानाख्यातु माहात्म्यं मदीयं सुरसत्तम ॥ १७४
त्वया वै कथितं पूर्वं कृते वै पापसंक्षयः । भविष्यति न संदेहो भवान्पूतो भविष्यति ॥ १७५

भीष्म उवाच—

मधुरा गीर्भवेत्केन व्रतेन मुनिसत्तम । तथैव जनसौभाग्यमतिविद्यासुकौशलम् ॥ १७६
अभेद्यं चापि दंपत्योस्तथा बन्धुजनेन च । आयुश्च विपुलं पुंसां तन्मे कथय सत्तम ॥ १७७

पुलस्त्य उवाच—

सम्यक्पृष्टं त्वया राजञ्शृणु सारस्वतं व्रतम् । यस्य संकीर्तनादेव देवी तुष्येत्सरस्वती ॥ १७८
यावद्भक्तः स्तवं कुर्यादेतद्व्रतमनुत्तमम् । प्राग्वासरादौ संपूज्य दिव्यं स्तवं समारभेत् ॥ १७९
अथवा रविवारेण ग्रहताराबलेन च । पायसं भोजयेद्विप्रान्कुर्याद्ब्राह्मणवाचनम् ॥ १८०
शुक्लवस्त्राणि दत्त्वा च सहिरण्यानि भक्तितः । गायत्रीं पूजयेद्भक्त्या शुक्लमाल्यानुलेपनैः ॥ १८१
यथा न देवि भगवान्ब्रह्मा लोकपितामहः । त्वां परित्यज्य तिष्ठेत तथा भव वरप्रदा ॥ १८२
वेदशास्त्राणि सर्वाणि नृत्यगीतादिकं च यत् । न विहीनं त्वया देवि तथा मे सन्तु सिद्धयः ॥
लक्ष्मीर्मेधा वरा पुष्टिर्गौरी तुष्टिः प्रभा मतिः । एताभिः पाहि चाष्टाभिस्तनुभिर्मां सरस्वति ॥
एवं संपूज्य गायत्रीं वीणाक्षमणिधारिताम् । शुक्लपुष्पाक्षतैर्भक्त्या सकमण्डलुपुस्तकाम् ॥ १८५
मौनव्रतेन भुञ्जीत सायं प्रातश्च धर्मवित् । पञ्चम्यां प्रतिपक्षं च पूजयेच्छब्दवासिनीम् ॥ १८६
तथैव तण्डुलप्रस्थं घृतपात्रेण संयुतम् । क्षीरं दद्याद्धिरण्यं च गायत्री प्रियतामिति ॥ १८७
संध्यायां च तथा मौनमेतत्कुर्वन्समाचरेत् । न रात्र्यां भोजनं कुर्याद्यावन्मासास्त्रयोदश ॥ १८८
समाप्ते तु व्रते दद्याद्भोजनं शुक्लतण्डुलैः । +पूर्णे सद्वस्त्रयुग्मं तु गां च विप्राय शोभनाम् ॥ १८९

+ इदमर्धं झ. पुस्तकस्थम् ।

१ अ. °री । सं(स)पूर्वमेव कथितो लक्ष्म्या विष्णुं (ष्णु)प्रतिग्रह(:) । म° । २ ख. ग. घ. ङ. च. ज. °पि वारिधिर्म° । ३ क. ख. ङ. च. ज. °थितः पुरा । आ° । ४ क. ख. ग. घ. ङ च. ज. वृद्धो । ५ ग. घ. युगसहस्रं तु । ६ झ. प्राणायामो । ७ अ. °जनं द्विजमुख्येभ्यो दै° । ८ झ °षु नागा° । ९ ग. घ. °वान्याख्या° । १० अ. °भेदश्चापि । ११ अ. °पत्योः स्वर्गा(र्गो) ब° । १२ क. ख. ग. घ. ङ. च. ज. शक्तितः । १३ क. ख. ग. घ. ङ. च. ज. धरा । १४ अ. तुष्टिर्जया म° । १५ क. ख. ग. घ. ङ. च. ज. °णाकमलधारिणीम् । १६ ग. घ. ज. °लुस्वस्तिका° । १७ क ख. ग. घ.ङ. च. ज. च गां च विप्राय शोभनाम् । १८ ख. ङ. च. °त् । नारा° । झ. °त् । नान्तरा भो° । १९ ग. घ. ज. °श । मया पुत्र ब्र° ।

दिव्यां वितानं घण्टां च सितनेत्रपटान्विताम् । चन्दनं वस्त्रयुग्मं च दध्यन्नं सुरसं पुनः ॥ १९०
तथोपदेष्टारमपि भक्त्या संपूजयेद्गुरुम् । वित्तशाठ्येन रहितो वस्त्रमाल्यानुलेपनैः ॥ १९१
अनेन विधिना यस्तु कुर्यात्सारस्वतं व्रतम् । विद्यासर्वस्वयुक्तस्तु सुष्ठुकण्ठश्च जायते ॥ १९२
[*सरस्वत्याः प्रसादेन ब्रह्मलोके महीयते] । नारी वा कुरुते या तु साऽपि तत्फलभागिनी १९३
ब्रह्मलोके वसेद्राजन्यावत्कल्पशतत्रयम् । सारस्वतं व्रतं यस्तु शृणुयादपि वा पठेत् ॥
विद्याधरपुरे सोऽपि वसेदष्टायुतत्रयम् ॥ १९४

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे गौरीव्रतकथनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२४२७४

---

अथ त्रयोविंशोऽध्यायः ।

---

भीष्म उवाच—

वैष्णवा ये तु वै धर्मा यान्रुद्रः प्रोक्तवानिह । तन्मे कथय विप्रेन्द्र कीदृशास्ते फलं तु किम् ॥ १

पुलस्त्य उवाच—

पुरा रथंतरे कल्पे परिपृष्टो महात्मना । मन्दरस्थो महादेवः पिनाकी ब्रह्मणा स्वयम् ॥ २
कथमारोग्यमैश्वर्यमनन्तं परमेश्वर । अल्पेन तपसा देव भवेन्मोक्षः सदा नृणाम् ॥ ३
किं तज्ज्ञानं महादेव त्वत्प्रसादादधोक्षज । अल्पकेनापि तपसा महाफलमिहोच्यते ॥ ४
इति पृष्टः स विश्वात्मा ब्रह्मणा लोकभावनः । उमापतिरुवाचेदं मनसः प्रीतिकारकम् ॥ ५

ईश्वर उवाच—

अस्माद्रथंतरात्कल्पाद्भूयो विंशतिमो यदा । वराहो भविता कल्पस्तदा मन्वन्तरे शुभे ॥ ६
वैवस्वताख्ये संप्राप्ते सप्तमे सर्वलोकधृक् । द्वापराख्ययुगं तस्मिन्सप्तविंशतिमं यदा ॥ ७
तस्यान्ते तु महातेजा वासुदेवो जनार्दनः । भारावतारणार्थाय त्रिधा विष्णुर्भविष्यति ॥ ८
द्वैपायन ऋषिस्तद्वद्रौहिणेयोऽथ केशवः । कंसारिः केशिमथनः केशवः कल्मषापहः ॥ ९
पुरी द्वारावती नाम सांप्रतं या कुशस्थली । दिव्यानुभावसंयुक्ता साऽधिवासाय शार्ङ्गिणः ॥ १०
त्वष्टा तदाज्ञया ब्रह्मन्करिष्यति जगत्पते । तस्यां कदाचिदासीनः सभायां सोऽमितद्युतिः ॥ ११
भार्याभिर्वृष्णिभिर्युक्तो विद्वद्भिर्भूरिदक्षिणैः । कुरुभिर्देवगन्धर्वैरभितः कैटभार्दनः ॥ १२
प्रवृत्तासु पुराणासु धर्मसंबन्धिनीषु च । कथासु भीमसेनेन परिपृष्टः प्रतापवान् ॥ १३
त्वया पृष्टस्य [+धर्मस्य वक्ष्याम्यस्य च भेदकृत् । भविता स तदा ब्रह्मन्कर्ता चैव वृकोदरः ॥ १४
प्रवर्तकोऽस्य] धर्मस्य पाण्डुसूनुर्महाबलः । यस्य तीक्ष्णो वृको नाम जठरे हव्यवाहनः ॥ १५
मया दत्तः स धर्मात्मा तेन चासौ वृकोदरः । अतीव स्वादशीलस्य नागायुतबलो महान् ॥ १६
धार्मिकस्याप्यशक्तस्य तीव्राग्नित्वादुपोषणम् । इदं व्रतमशेषाणां व्रतानामधिकं यतः ॥ १७

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ ख. ग. घ. ङ. च. ज. °म् । सौभाग्यमतियुक्तस्तु सूक्ष्मक° । २ ञ. °त्कल्पायुत° । ३ झ. °ल्पात्रयोविं° । ४ क. ख. ग. घ. ङ. च. ज. °सभागधृ° । ५ क. ख. ग. घ. ङ. च. ज. क्लेशनाशनः । ६ ग. °णः । युक्तस्तदा° । ७ ञ. °नः । प्रभाष्यते स । ८ ग. घ. ज. °व वाद° । झ. °व नाद° ।

कथयिष्यति विश्वात्मा वासुदेवो जगद्गुरुः । अशेषयज्ञफलदमशेषौघविनाशनम् ॥ १८
अशेषदुष्टशमनमशेषसुरपूजितम् । पवित्राणां पवित्रं यन्मङ्गलानां च मङ्गलम् ॥
भविष्यं च भविष्याणां पुराणानां पुरातनम् ॥ १९

वासुदेव उवाच—

यद्यष्टमीचतुर्दश्योर्द्वादशीष्वथ भारत । अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुम् ॥ २०
ततस्त्वन्यामिमां भीम तिथिं पापविनाशिनीम् । उपोष्य विधिनाऽनेन गच्छ विष्णोः परं पदम्
माघमासस्य दशमी यदा भीम भवेत्तदा । घृतेनाभ्यञ्जनं कृत्वा तिलैः स्नानं समाचरेत् ॥ २२
तथैवमर्चेद्विष्णुं च नमो नारायणाय च । कृष्णाय पादौ संपूज्य शिरः सर्वात्मनेऽपि च ॥ २३
वैकुण्ठायेति वै कण्ठमुरः श्रीवत्सधारिणे । शङ्खिने गदिने तद्वच्चक्रिणे वरदाय वै ॥ २४
सर्वं नारायणस्त्वे(णं त्वे)वं संपूज्याऽऽवाहनक्रमात् । दामोदरायेत्युदरं कटिं पञ्चजनाय वै ॥२५
ऊरू सौभाग्यनाथाय जानुनी भूतधारिणे । नमो नीलाय वै जङ्घे पादौ विश्वसृजे पुनः ॥ २६
नमो देव्यै नमः शान्त्यै नमो लक्ष्म्यै नमः श्रिये । नमस्तुष्ट्यै नमः पुष्ट्यै नमो व्युष्ट्यै नमो नमः
नमो विहंगनाथाय वायुवेगाय पक्षिणे । विषप्रमथनायेति गरुडं चाभिपूजयेत् ॥ २८
एवं संपूज्य गोविन्दमुमापतिविनायकौ । गन्धमाल्यैस्तथा धूपैर्भक्ष्यैर्नानाविधैरपि ॥ २९
गव्येन पयसा सिद्धां कृशरामथ वाग्यतः । सर्पिषा सह भुक्त्वा तां गत्वा पदशतं बुधः ॥ ३०
नैयग्रोधं दन्तकाष्ठमथवा खादिरं बुधः । गृहीत्वा धावयेद्दन्तानाचान्तः प्रागुदङ्मुखः ॥ ३१
ब्रूयात्सायंतनीं कृत्वा संध्यामस्तमिते रवौ । नमो नारायणायेति त्वामहं शरणं गतः ॥ ३२
एकादश्यां निराहारः समभ्यर्च्य च केशवम् । तां रात्रिं सकलां स्थित्वा शेषपर्यङ्कशायिनम् ३३
सर्पिषा विश्वदमनं हुत्वा ब्राह्मणपुंगवैः । सहैव पुण्डरीकाक्ष द्वादश्यां क्षीरभोजनम् ॥ ३४
करिष्यामि यथाऽऽत्मानं(नो) न विनाशमुपैति वै(ष्यति) । एवमुक्त्वा स्वपेद्भूमावितिहासकथां पुनः
श्रुत्वा प्रभाते संजाते नदीं गत्वा विशां पते । [*स्नानं कृत्वा मुदा तद्वत्पाखण्डानभिवर्जयेत् ॥
उपास्य संध्यां विधिवत्कृत्वा च पितृतर्पणम् । प्रणम्य च हृषीकेशं शेषपर्यङ्कशायिनम् ॥ ३७
गृहस्य पुरतो भक्त्या मण्डपं कारयेद्बुधः ] । [+वतुर्हस्तां शुभां कुर्याद्वेदीमरिनिषूदन ] ॥ ३८
दशहस्तप्रमाणं तु विन्यसेत्तत्र तोरणम् । सुस्तम्भे कलशं तत्र माषमात्रेण संयुतम् ॥ ३९
छिद्रेण जलसंपूर्णमधः कृष्णाजिने स्थितः । तस्य धारां च [*शिरसा धारयेत्सकलां निशम् ४०
धाराभिर्भूरिभिर्भूरि फलं वेदविदो विदुः । यस्मात्तस्मात्कुरुश्रेष्ठ कारयेत्प्रयतो द्विजः ॥ ४१
दक्षिणे चार्धचन्द्रं तु पश्चिमे वर्तुलं तथा । अश्वत्थपत्राकारं च उत्तरेण तु कारयेत् ॥ ४२
मध्ये तु पद्माकारं च कारयेद्वैष्णवो द्विजः । पूर्वतो वेदिकास्थानं स्थानं याम्ये च कल्पयेत् ॥ ४३
पानीयधारां ] शिरसि धारयेद्विष्णुतत्परः । द्वितीया वेदी देवस्य तत्र पद्मं सकर्णिकम् ॥ ४४

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग घ. ङ. च. ज. पुस्तकस्थः ।
* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

१ अ. °पूजनम् । २ अ. शुक्ला । ३ ग. घ. ज. रौद्रं । ४ क. ख. घ. ङ. च. ज. °श्वभुजे । ५ क. ख. ङ. च. °त्वा स्थानान्तरं पुनः । नै° । ६ ग. घ. ज. °म् । त्रिरात्रं सकलं स्थि° । झ. °म् । त्रिरात्रं सकलं स्नानं कृत्वा च पयसा ततः । स° । ७ क. ख. ग. घ. ङ. च. ज. °नं निर्विघ्नमस्तु तच्च मे । ए° । ८ क. ख. ग. घ. ङ. च. ज. चतुर्हस्तप्रमाणं । ९ क. ख. ग. घ. ङ. च. ज. °म् । मध्ये च क° ।

 

तस्य मध्यस्थितं देवं कुर्याद्वै पुरुषोत्तमम् । हस्तमात्राणि कुण्डानि कृत्वा तत्र त्रिमेखलम् ॥ ४५
योनिवक्त्राणि तान्येव ब्राह्मणो यवसर्पिषी । तिलांश्च विष्णुदैवत्यैर्मन्त्रैरेव ततो हुनेत् ॥ ४६
कृत्वा तु वैष्णवं सम्यग्यागं तत्र प्रकल्पयेत् । आज्यधारां मध्यमे तु कुण्डे दद्यात्तु यत्नतः॥ ४७
क्षीरधारां देवदेवे वारिधारात्मनोपरि । निष्पावार्धप्रमाणां वै धारामाज्यस्य पातयेत् ॥ ४८
स्वेच्छया क्षीरजलयोरविच्छिन्ना च शर्वरी । जलकुम्भान्महावीर्यं स्थापयित्वा त्रयोदश ॥ ४९
भक्ष्यैर्नानाविधैर्युक्तान्सितवस्त्रैरलंकृतान् । प्रतानौदुम्बरैः पात्रैः पञ्चरत्नसमन्वितैः ॥ ५०
चतुर्भिर्बह्वृचैर्होमः कार्यस्तत्र उदङ्मुखैः । रुद्रजाप्यश्चतुर्भिश्च यजुर्वेदपरायणैः ॥ ५१
वैष्णवानि च सामानि चतुर्भिः सामवेदिभिः । *अरिष्टवर्गसहितान्यभितः परिपाठयेत् ॥ ५२
एवं द्वादश वै विप्रान्वस्त्रमाल्यानुलेपनैः । पूजयेदङ्गुलीयैश्च कटकैर्हेमसूत्रकैः ॥ ५३
वासोभिः शयनीयैश्च वित्तशाठ्यविवर्जितः । एवं क्षपाऽतिवाह्या वै गीतमङ्गलनिस्वनैः ॥ ५४
उपाध्यायस्य च पुनर्द्विगुणं सर्वमेव तत् । ततः प्रभाते विमले समुत्थाय त्रयोदश ॥ ५५
गावो देयाः कुरुश्रेष्ठ सौवर्णोपस्करान्विताः । पयस्विन्यः शीलवत्यः कांस्यदोहसमन्विताः ५६
रौप्यखुराः सवस्त्राश्च चन्दनेनानुभूषिताः । तास्तु तेषां ततो भक्त्या भक्ष्यभोज्येन तर्पितान् ५७
कृत्वा वै ब्राह्मणान्सर्वान्वस्त्रैर्नानाविधैस्ततः । भुक्त्वा चाँक्षारलवणमात्मना च विसर्जयेत् ॥५८
अनुगम्य पदान्यष्टौ पुत्रभार्यासमन्वितः । प्रीयतामत्र देवेशः केशवः क्लेशनाशनः ॥ ५९
शिवस्य हृदये विष्णुर्विष्णोश्च हृदये शिवः । यथाऽन्तरं न पश्यामि तथा मे स्वस्ति चाऽऽयुषः
एवमुच्चार्य तान्कुम्भान्गाश्चैव शयनानि च । वासांसि चैव सर्वेषां गृहाणि प्रापयेद्बुधः ॥ ६१
अभावे बहुशय्यानामेकामपि सुसंस्कृताम् । शय्यां दद्याद्गृही भीम सर्वोपस्करसंयुताम् ॥ ६२
इतिहासपुराणानि वाचयित्वा च वाहयेत् । तद्दिनं कुरुशार्दूल यदीच्छेद्विपुलां श्रियम् ॥ ६३
तस्मात्त्वं सत्त्वमास्थाय भीमसेन विमत्सरः । कुरु व्रतमिदं सम्यक्स्नेहाद्गुह्यं मयोदितम् ॥ ६४
त्वया कृतमिदं वीर त्वन्नामाङ्कं भविष्यति । सा भीमद्वादशी ह्येषा सर्वपापहरा शुभा ॥
या तु कल्याणिनी नाम पुराकल्पेषु पठ्यते ॥ ६५

त्वं चाऽऽदिकर्ता भव सौकरेऽस्मिन्कल्पे महावीरवरप्रधान ।
यस्याः स्मृतेः कीर्तनतोऽप्यशेषं पापं प्रनष्टं त्रिदशाधिपस्य ॥ ६६
दृष्ट्वा च तामप्सरसामभीष्टां वेश्यीकृतामन्यभवान्तरेषु (?) ।
आभीरकन्या हि कुतूहलेन सैवोर्वशी संप्रति नाकपृष्ठे ॥ ६७
जाताऽथ वा वैश्यकुलोद्भवाऽपि पुलोमकन्या पुरुहूतपत्नी ।
तत्रापि तस्याः परिचारिकेयं मम प्रिया संप्रति सत्यभामा ॥ ६८
[+कृतं पुरा मङ्गलमेतदेव द्विजात्मजा वेदवती बभूव ] ।
स्नातः पुरा मण्डलमेव तद्वत्तेजोमयं स्वेदशरीरमाप ॥ ६९

---

* इदमर्धं झ. पुस्तकस्थम् । + धनुश्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. पुस्तकस्थः ।

१ ग. घ. ज. °वं मूर्ध्ना वै पु° । झ. °वं मूर्त्या वै पु° । २ ग. घ. ज. न्यसेत् । झ. जुहेत् । ३ अ. °च्छिन्नां च शर्वरीम् । ज° । ४ अ. °न् । युता° । ५ क. ख. ङ. च. °वर्णशृङ्गसंवृताः । ग. घ. ज. °वर्णमुखसंवृताः । ६ ख. ग. घ. ङ. च. ज. °न्सर्वाश्छत्रैर्ना° ७ ग. चाक्षीर° । ८ अ. °था सन्तु ममाऽऽशिषः । ९ क. ख. ङ. च. एवं गुर्वाज्ञया कुम्भा° । १० ग. घ. ज. °श्याहृता° । ११ ख. ङ. च. °मयः खेटपतिर्बभूव । अ° ।

अस्यां च कल्याणतिथौ विवस्वान्सहस्रधारेण सहस्ररश्मिभिः ।
इदमेव व्र(क्र)तं महेन्द्रमुख्यैर्बहुभिर्देवसुरारिकोटिभिश्च ॥ ७०
फलमस्येह न शक्यते प्रवक्तुं यदि जिह्वायुतकोट्यो मुखे स्युः ।
कलिकलुषविदारिणीमनन्तामपि कथयिष्यति यादवेन्द्रसूनुः ॥ ७१
अपि नरकगतान्पितॄनथैषा ह्यलमुद्धर्तुमिहैव यः करोति ।
इदमनघं शृणोति चातिभक्त्या परिपठतीह परोपकारहेतोः ॥ ७२
इह पङ्कजनाभिभक्तिमान्भवेदथ शक्रस्य स पूज्यतामुपैति ।
कल्याणिनी नाम पुरा विसर्गे या द्वादशी माघदिनेऽभिपूज्या ॥
सा पाण्डुपुत्रेण कृता भविष्यत्यनन्तपुण्याऽनघ भीमपूर्वा ॥ ७३

ब्रह्मोवाच—

वर्णाश्रमाणां प्रभवः पुराणेषु मया श्रुतः । सदाचारश्च भगवन्धर्मशास्त्राङ्गविस्तरैः ॥
पण्यस्त्रीणां समाचारं श्रोतुमिच्छामि तत्त्वतः ॥ ७४

महेश्वर उवाच—

तस्मिन्नेव युगे ब्रह्मन्सहस्राणि तु षोडश । वासुदेवस्य नारीणां भविष्यन्त्यब्जसंभव ॥ ७५
ताभिर्वसन्तसमये कोकिलालिकुलाकुले । पुष्पितोपवने फुल्लकह्लारसरसस्तटे ॥ ७६
निर्भरं सह पत्नीभिः प्रशस्ताभिरलंकृतः । रमयिष्यति विश्वात्मा कृष्णो यदुकुलोद्वहः ॥ ७७
कुरङ्गनयनः श्रीमान्मालतीकृतशेखरः । गच्छन्समीपमार्गेण साम्बः परपुरंजयः ॥ ७८
साक्षात्कंदर्परूपेण सर्वाभरणभूषितः । अनङ्गशरतप्ताभिः साभिलाषमवेक्षितः ॥ ७९
प्रवृद्धो मन्मथस्तासां भविष्यति यदाऽऽत्मनि । तदाऽवेक्ष्य जगन्नाथो देवेशो ध्यानचक्षुषा ॥८०
स्वयं वक्ष्यति ताः सर्वा वो हरिष्यन्ति दस्यवः । अपरोक्षं यतस्त्वेवं स्निग्धमेतद्विचिन्तितम् ॥८१
ततः प्रसादितो देव इदं वक्ष्यति शार्ङ्गभृत् । ताभिः शापाभितप्ताभिर्भगवान्भूतभावनः ॥ ८२
उत्तराश्रितंदाशानामुद्धर्ता ब्राह्मणप्रियः । उपदेक्ष्यत्यनन्तात्मा भाविकल्याणकारकम् ॥
भवतीनामृषिर्दाल्भ्यो यद्व्रतं कथयिष्यति ॥ ८३

पुलस्त्य उवाच—

इत्युक्त्वा ताः परित्यज्य गतोऽन्तर्धानमीश्वरः । ततः कालेन महता भारावतरणे कृते ॥ ८४
निर्वृत्ते मौसले तद्वत्केशवे दिवमागते । शून्ये यदुकुले चैव चौरैरपि जितेऽर्जुने ॥ ८५
हृतासु कृष्णपत्नीषु दासभोग्यासु चार्बुदे । तिष्ठन्तीषु च दौर्गत्यसंतप्तासु चतुर्मुखः ॥ ८६
प्रेषयिष्यति योगात्मा दाल्भ्यं नाम महामुनिम् । तास्तमर्घेण संपूज्य प्रणिपत्य पुनः पुनः ॥ ८७
आलप्यमाना बहुशो बाष्पपर्याकुलेक्षणाः । स्मरन्त्यो विपुलान्भोगान्दिव्यमाल्यानुलेपनैः ॥८८
भर्तारं जगतामीशमनन्तमपराजितम् । दिव्यानुभावां च पुरीं नानारत्नगृहाणि च ॥ ८९

---

१ क. च. °वसुरा° । ख. ग. ङ. च. ज. °वपुरा° । २ झ. °तोः । तिथिमिह सकलार्थभाग्भवेन्नरेन्द्र तदनुगतस्य सपत्नता° । ३ झ. °रा च गर्मे या । ४ झ. प्रवरः । ५ झ. गोपीभिः । ६ क. ख. ङ. च. ज. साम्बो जाम्बवतीसुतः । सा° । ७ क. ख. ङ. च. °न्नाथः सर्वज्ञो ध्या° । ८ झ. °वः । मत्परोक्षं च सर्वाभिर्लौल्यादेतच्चिकीर्षितं° । ९ झ. उत्तारभूतमारब्धं समुद्राद्ब्राह्म° । १० ग. घ. ज. °तमन्दारः समुद्राद्ब्राह्म° । ११ ञ. °तो द्वारवतीश्च° । १२ ञ. निवृत्ते । १३ ख. ग. घ. ङ. च. ज. °तेऽर्दते । हृ° । १४ ञ. आगमिष्यति । १५ ञ. दाल्भ्यो । १६ ञ. °हातपाः । ता° ।

द्वारकावासिनः सर्वान्देवरूपान्कुमारकान् । प्रश्नमेतं करिष्यन्ति मुनेरभिमुखं स्थिताः ॥ ९०

कृष्णपत्न्य ऊचुः—

दस्युभिर्भगवन्सर्वाः परिभुक्ता वयं बलात् । अधर्मव्यसनेऽस्माकमस्ति वै शरणं भवान् ॥ ९१

आदिष्टोऽसि पुरा ब्रह्मन्केशवेन च धीमता । कस्मादीशेन संयोगं प्राप्य वेश्यात्वमागताः ॥९२

वेश्यानामपि यो धर्मस्तं नो ब्रूहि तपोधन । कथयिष्ये (?) ततस्तासां यद्दाल्भ्यश्चैकितायनः ९३

दाल्भ्य उवाच—

जलक्रीडाविहारेषु पुरा सरसि मानसे । भवतीनां सगर्वाणां नारदोऽभ्याशमागतः ॥ ९४

हुताशनसुताः सर्वा भवत्योऽप्सरसः पुरा । अप्रणम्यावलेपेन परिपृष्टः स योगभृत् ॥ ९५

कथं नारायणोऽस्माकं भर्ता स्यादित्युपादिश । तस्माद्वरप्रदानं च शापश्चायमभूत्पुरा ॥ ९६

शय्याद्वयप्रदानेन मधुमाधवमासयोः । सुवर्णोपस्करोत्सङ्गा(र्गा)द्द्वादश्यां शुक्लपक्षतः ॥ ९७

भर्ता नारायणो नूनं भविष्यत्यन्यजन्मनि । यदकृत्वा प्रणामं मे रूपसौभाग्यमत्सरात् ॥ ९८

परिपृष्टोऽस्मि तेनाऽऽशु वियोगो वो भविष्यति । चौरैरपहृताः सर्वा वेश्यात्वं समवाप्स्यथ ९९

एवं नारदशापेन केशवस्य च धीमतः । वेश्यात्वमागताः सर्वा भवत्यः शापमोहिताः ॥ १००

इदानीमपि वो वक्ष्ये तच्छृणुध्वं वराङ्गनाः । पुरा देवासुरे युद्धे हतेषु शतशः सुरैः ॥ १०१

दानवासुरदैत्येषु राक्षसेषु ततस्ततः । तेषां दारसहस्राणि शतशोऽथ सहस्रशः ॥ १०२

परिणीतानि यानि स्युर्बलाद्भुक्तानि यानि वै । तानि सर्वाणि देवेशः प्रोवाच वदतां वरः १०३

वेश्याधर्मेण वर्तध्वमधुना नृपमन्दिरे । भक्तिमत्यो वरारोहास्तथा देवकुलेषु च ॥ १०४

राजानः स्वामिनस्तुल्यं ब्राह्मणा ये बहुश्रुताः । +तेषां गृहेषु तिष्ठध्वं भृतकं चापि तत्समम् ॥

भविष्यति च सौभाग्यं सर्वासामपि भक्तितः । [*न चैकस्मिन्रतिः कार्या पुरुषे धनवर्जिते १०६

अनुमान्यः प्रसाध्यश्च शुक्रदो देववत्सदा । सुरूपो वा विरूपो वा द्रव्यमेव प्रयोजनम् ॥ १०७

न तद्व्यतिक्रमः कार्यो ब्रह्महत्यामवा(ऽन्यथाऽऽ)प्नुयात् । न वाऽतिमत्सराभिश्च भाव्यं कौटिल्यबुद्धिभिः] ॥ १०८

यः कश्चिच्छुल्कमादाय गृहानेष्यति वः सदा । निश्छद्मनैवोपचर्यः शुद्धो वाऽप्यथ दाम्भिकः ॥

देवतानां पितृणां च पुण्येऽह्नि समुपस्थिते । गोभूहिरण्यधान्यानि प्रदेयानि च शक्तितः ॥ ११०

यद्व्रतं चोपदेक्ष्यामि तत्कुरुध्वं च सर्वशः । संसारोत्तारणायालमेतद्वेदविदो विदुः ॥ १११

यदा सूर्यदिने हस्तः पुष्यो वाऽथ पुनर्वसुः । भवेत्सर्वौषधीस्नानं सम्यङ्नारी समाचरेत् ॥ ११२

तदा पञ्चशरस्यापि संनिधातृत्वमिष्यते । अर्चयेत्पुण्डरीकाक्षमनङ्गस्यानुकीर्तनैः ॥ ११३

कामाय पादौ संपूज्य जङ्घे वै मोहकारिणे । मेढ्रं कंदर्पनिधये कटिं प्रीतिमते नमः ॥ ११४

नाभिं सौख्यसमुद्राय रामाय च तथोदरम् । हृदयं हृदयेशाय स्तनावाह्लादकारिणे ॥ ११५

उत्कण्ठायेति वै कण्ठमास्यमानन्दकारिणे । वामाङ्गं पुष्पचापाय पुष्पबाणाय दक्षिणम् ॥ ११६

+ इदमर्धं झ. पुस्तकस्थम् । * धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. ज °त् । स्वधर्मश्च्यवतेऽस्मा° । ञ. °त् । स्वधर्मश्च्यावितोऽस्माकमस्मिन्नः श° । २ ङ. °स्करान्सर्वान्द्वाद° ३ ञ. राजतः स्वामितश्चापि जीविकां च प्रलप्स्यथ । भ° । ४ ञ. शक्तितः । ५ ग. झ. °नां पवित्राणां पु° । ६ झ. यद्वाऽन्यद्व्रतं सम्यगुपदेक्ष्यामि तत्त्वतः । व्यभिचारेण सर्वाभिस्तुष्ठेयं च तत्पुनः । भ° । ७ ग. घ. ज. दृष्टः । ८ क. ख. ङ. च. °य वामनाय त° ।

नमोऽनङ्गाय वै मौलिं सुलोमायेति देहकम् । सर्वात्मने शिरस्तद्वद्देवदेवस्य पूजयेत् ॥ ११७
नमः श्रीपतये तार्क्ष्यध्वजाङ्कुशधराय च । गदिने पीतवस्त्राय शङ्खचक्रधराय च ॥ ११८
नमो नारायणायेति कामदेवात्मने नमः । नमः शान्त्यै नमः प्रीत्यै नमो रत्यै नमः श्रियै॥११९
नमः पुष्ट्यै नमस्तुष्ट्यै नमः सर्वार्थसंपदे । एवं संपूज्य गोविन्दमनङ्गात्मकमीश्वरम् ॥ १२०
गन्धमाल्यैस्तथा धूपैर्नैवेद्येन च भामिनी । तत आहूय धर्मज्ञं ब्राह्मणं वेदपारगम् ॥ १२१
अनङ्गायैवं संपूज्य गन्धपुष्पार्चनादिभिः । प्रदेयं तण्डुलप्रस्थं घृतपात्रेण संयुतम् ॥ १२२
तस्मै विप्राय वै दद्यान्माधवः प्रीयतामिति । यथेष्टाहारं कुर्वीत एवं द्विजमनुत्तमम् ॥ १२३
रत्यर्थं कामदेवोऽयमिति चित्तेऽवधारयेत् । यद्यदिच्छति विप्रेन्द्रस्तत्तत्कुर्याद्विलासिनी ॥ १२४
सर्वभावेन चाऽऽत्मानमर्पयेत्स्मितभाषिणी । एवमादित्यवारेण सर्वमेतत्समाचरेत् ॥ १२५
तण्डुलप्रस्थदानं च यावन्मासास्त्रयोदश । ततस्त्रयोदशे मासि संप्राप्ते चास्य भामिनी ॥ १२६
[*विप्रस्योपस्करैर्युक्तां शय्यां दद्याद्विचक्षणा । सोपधानां सविन्यासां स्वास्तरावरणां शुभाम्] ॥
दीपिकोपानहच्छत्रपादुकासनसंयुताम् । सपत्नीकमलंकृत्य हेमसूत्राङ्गुलीयकैः ॥ १२८
सूक्ष्मवस्त्रैः सकटकैर्धूपमाल्यानुलेपनैः । कामदेवं सपत्नीकं गुडकुम्भोपरि स्थितम् ॥ १२९
ताम्रपात्रे समारोप्य हेमनेत्रपटावृतम् । सुकांस्यभाजनोपेतमिक्षुदण्डसमन्वितम् ॥ १३०
दद्यादेतेन मन्त्रेण तथैवं गां पयस्विनीम् । यथाऽन्तरं न पश्यामि कामकेशवयोः सदा ॥ १३१
तथैव सर्वकामाप्तिरस्तु विष्णो सदा मम । यथा न कामिनी देहं प्रयाति तव केशव ॥ १३२
तथा ममापि देवेश शरीरेषु कुरु प्रभो । तथा च काञ्चनं देवं प्रतिगृह्य द्विजोत्तमः ॥ १३३
कोऽदात्कामोऽदादिति वैदिकं मन्त्रमुदीरयेत् । ततः प्रदक्षिणीकृत्य विसर्ज्य द्विजपुंगवम्॥ १३४
शय्यासनादिकं सर्वं ब्राह्मणस्य गृहं नयेत् । ततः प्रभृति योऽन्योऽपि रत्यर्थं गेहमागतः॥ १३५
स मान्यः सूर्यवारेण स संपूज्यो भवेत्सदा । एवं त्रयोदशं यावन्मासमेकं द्विजोत्तमम् ॥ १३६
तर्पयेच्च यथाकामं प्रेषयेच्चैव मन्दिरम् । तदनुज्ञया रूपवन्तं यावदस्याऽऽगमो भवेत् ॥ १३७
आत्मनोऽपि यदा विघ्नं गर्भसूतकराजकम् । दैवं वा मानुषं वा स्यादुपरागेण वा ततः ॥ १३८
सदारानथ पश्चाद्यथाशक्त्या(क्ति) समर्चयेत् । एतद्वै कथितं सम्यग्भवतीनां विशेषतः ॥ १३९
स्वधर्मोऽयं ततो भव्यो वेश्यानामिह सर्वदा । [+शय्यया त्यज्यते देव न कथंचिद्यथा भवान् ॥
शय्या ममाप्यशून्येयं तथाऽस्तु मधुसूदन । गीतवादित्रनिर्घोषं देवदेवस्य कारयेत् ] ॥ १४१
*एतद्वः कथितं सर्वं वेश्याधर्ममशेषतः । पुरुहूतेन यत्प्रोक्तं दानवीषु पुरा मया ॥ १४२
तदेतत्सांप्रतं सर्वं भवतीष्वपि युज्यते । सर्वपापप्रशमनमनन्तफलदायकम् ॥ १४३
कल्याणिनीनां कथितं तदेतद्दुश्चरं व्रतम् । +एतत्पार्थ मया पूर्वं गोपीनां तु प्रकाशितम् ॥ १४४
पुराणं धर्मसर्वस्वं वेश्याजनसुखप्रदम् ॥

---

* धनुश्चिह्नातर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ग. घ. च. ज. पुस्तकस्थः । * इदमर्धं झ. पुस्तकस्थम् । + अयं श्लोको झ. पुस्तकस्थोऽस्य न संगतिः समीचीना ।

---

१ क. ख ङ. च. °लिं विलोलायेति मूर्धजम् । ग. ज. °लिं विलोमाये । घ. °लिं विलोमायेति देहिक° । २ क. ख. ग. घ. ङ. च. ज. °मः शिवाय शान्ताय पाशाङ्कु° । ३ घ. सर्वाङ्गसुन्दरे । ४ झ. सा । ५ ख. ङ. च. ज. °येन्मित° । ६ झ. °न्यासवस्त्रेणाऽऽव । ७ ञ. विप्र । ८ ञ. °दात्कस्मा अदा° । ९ ञ. °र्पयित्वा य° । १० ञ. °तः । सा वारानष्टप° । ११ ञ. °मर्पये° ।

करोति याऽशेषमखण्डमेतत्कल्याणिनी माधवलोकसंस्था ।
सा पूजिता देवगणैरशेषैरानन्दकृत्स्थानमुपैति विष्णोः ॥ १४५

तपोधनः सोऽप्यभिधाय चैतदनङ्गदानव्रतमङ्गनानाम् ।
स्वस्थानमेष्यन्ति समस्तमित्थं व्रतं करिष्यन्ति च [१]देवयोने ॥ १४६

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डेऽनङ्गदानवेश्याव्रतकथनं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२४४२०

---

अथ चतुर्विंशोऽध्यायः ।

---

ब्रह्मोवाच—

भगवन्पुरुषस्येह स्त्रियाश्च [२]विरहादिकम् । शोकव्याधिभयं दुःखं न भवेद्येन तद्वद ॥ १

शंकर उवाच—

श्रावणस्य द्वितीयायां कृष्णायां मधुसूदनः । क्षीरार्णवे सलक्ष्मीकः सदा वसति केशवः ॥ २
तस्यां संपूज्य गोविन्दं सर्वान्कामानवाप्नुयात् । गोभूहिरण्यदानादि सप्तकल्प[३]शतानुगम्* ॥ ३
अशून्यशयना नाम द्वितीया सा प्रकीर्तिता । तस्यां संपूजयेद्विष्णुमेभिर्मन्त्रैर्विधानतः ॥ ४
श्रीवत्सधाम श्रीकान्त श्रीधाम श्रीपतेऽव्यय । गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामदम् ॥ ५
अग्नयो मा प्रणश्यन्तु मा प्रणश्यन्तु देवताः । पितरो न प्रणश्यन्तु मम दांपत्यभेदतः ॥ ६
लक्ष्म्या वियुज्यते देवो न कदाचिद्यथा हरिः । तथा कलत्रसंबन्धो देव मा मे वियुज्यताम् ॥ ७
लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा । शय्या ममाप्यशून्याऽस्तु तथैव मधुसूदन ॥ ८
गीतवादित्रनिर्घोषं देवदेवस्य कारयेत् । घण्टा[४]ऽभावे तु सर्वेषां सर्ववाद्यमयी यतः ॥ ९
एवं संपूज्य गोविन्दमश्नीयात्तैलवर्जितम् । नक्तमक्षारलवणं याव[५]न्मासचतुष्टयम् ॥ १०
ततः प्रभाते संजाते लक्ष्मीपतिसमन्विताम् । दीपान्नभोजनैर्युक्तां [+शय्यां दद्याद्विलक्षणाम् ॥ ११
पादुकोपानहच्छत्रचामरासनसंयुताम् । अभीष्टोपस्करैर्युक्तां] शुक्लपुष्पाम्बरावृताम् ॥ १२
अव्यङ्गाय च विप्राय वैष्णवाय कुटुम्बिने । दातव्या वेदविदुषे [६]न च कुव्रतिने क्वचित् ॥ १३
तत्रोपवेश्य दांपत्यमलंकृत्य विधानतः । पत्न्यास्तु भाजनं दद्याद्भक्ष्यभोज्यसमन्वितम् ॥ १४
ब्राह्मणस्यापि सौवर्णामुपस्करसमन्विताम् । प्रतिमां देवदेवस्य सोदकुम्भां निवेदयेत् ॥ १५
एवं यस्तु पुमान्कुर्यादशून्यश[७]यनव्रतम् । वित्तशाठ्येन रहितो नारायणपरायणः ॥ १६
न तस्य पत्न्या विरहः कदाचिदपि जायते । नारी वा विधवा ब्रह्मन्यावच्चन्द्रार्कतारकम् ॥ १७
न विरूपौ न शोकाढ्यौ दंपती जाय(ये)ते क्वचित् । न पुत्रपशुरत्नानि क्षयं यान्ति पितामह ॥
सप्त कल्पसहस्राणि सप्तकल्पशतानि च । कुर्वन्नशून्यशयनं विष्णुलोके महीयते* ॥ १९

---

* एतदग्रे क. ख. ग. घ. ङ. च. ज. पुस्तकेषु 'आवाहनादिकां पूजां पूर्ववत्परिकल्पयेत्' इत्यर्धमधिकम् । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । * अत्र ग. पुस्तके "इति पद्मपुराणेऽशून्यशयनं नाम" इति लिखित्वाऽध्यायसमाप्तिः कृता वर्तते ।

---

१ झ. वेदयोने । २ क. ख. ग. घ. ङ. च. ज. वरदायकम् । ३ ग. घ. ज. °ल्पगता° । ४ क. ख. ग. घ. ङ. च. ज. °ण्टा भवेदशक्तस्य स° । ५ ज. °वत्तत्स्याच्चतु° । ६ क. ख. ङ. च. न वन्ध्यापतये क्व° । ७ क. ख. ग. घ. ङ. च. ज °यनं हरेः । वि° ।

ब्रह्मोवाच—

कथमारोग्यमैश्वर्यं मतिर्धर्मे स्थिता तथा । अव्यङ्गाऽथ परे भक्तिर्विष्णौ वाऽपि भवेत्कथम् ॥२०

ईश्वर उवाच—

साधु ब्रह्मंस्त्वया पृष्टमिदानीं कथयामि ते । विरोचनस्य संवादं भार्गवस्य च धीमतः ॥ २१

प्रह्लादस्य सुतं दृष्ट्वा द्विरष्टपरिवत्सरम् । तस्य रूपमिदं ब्रह्मञ्जहास भृगुनन्दनः ॥ २२

भार्गव उवाच—

साधु साधु महाबाहो विरोचन शिवं तव । तत्तथा हसितं तस्य पप्रच्छ सुरसूदनः ॥ २३

विरोचन उवाच—

ब्रह्मन्किमर्थमेतत्ते हास्यमाकालिकं कृतम् । साधु साध्विति मामेवमुक्तवांस्त्वं वदस्व मे ॥ २४

तमेवंवादिनं शुक्र उवाच वदतां वरः । विस्मयाद्व्रतमाहात्म्याद्धास्यमेतत्कृतं मया ॥ २५

पुरा दक्षविनाशाय कुपितस्य त्रिशूलिनः । अपतद्भीमवक्त्रस्य स्वेदबिन्दुर्ललाटतः ॥ २६

भित्त्वा समस्तपातालमदहत्सप्त सागरान् । अनेकवक्त्रनयनो ज्वलज्ज्वलनभीषणः ॥ २७

वीरभद्र इति ख्यातः करपादायुतैर्युतः । कृत्वा स यज्ञमथनं पुनर्भूतस्य संप्लवम् ॥ २८

त्रिजगन्निर्दहन्भूयः शिवेन विनिवारितः ॥ २९

शिव उवाच—

कृतं त्वया वीरभद्र दक्षयज्ञविनाशनम् । इदानीमलमेतेन लोकदाहेन कर्मणा ॥ ३०

शान्तिप्रदानात्सर्वेषां ग्रहाणां प्रथमो भव । प्रेक्ष्य त्वां ते जनाः पूजां करिष्यन्ति कृतात्मनः ॥ ३१

अङ्गारक इति ख्यातिं गमिष्यसि धरात्मज । देवलोके द्वितीयं च त्वत्स्वरूपं भविष्यति ॥ ३२

ये च त्वां पूजयिष्यन्ति चतुर्थ्यां तु दिने नराः । रूपमारोग्यमैश्वर्यं तेष्वनन्तं भविष्यति ॥ ३३

भार्गव उवाच—

एवमुक्तस्तदा शान्तिमगमत्कामरूपधृक् । संजातस्तत्क्षणाद्राजन्ग्रहत्वमगमत्पुनः ॥ ३४

स कदाचिद्भवांस्तस्य पूजार्चादिकमुत्तमम् । दृष्टवान्क्रियमाणं च शूद्रेण त्वं व्यवस्थितः ॥ ३५

तेन त्वं रूपवाञ्जातोऽसुरः शत्रुकुलाशनिः । विविधा च रुचिर्जाता यस्मात्तव विदूरगा ॥ ३६

विरोचन इति प्राहुस्तस्मात्त्वां देवदानवाः । शूद्रेण क्रियमाणस्य चतुर्थ्यां तव दर्शनात् ॥ ३७

ईदृशी रूपसंपत्तिरिति विस्मितवानहम् । साधु साध्विति तेनोक्तमहो माहात्म्यमुत्तमम् ॥

पश्यतोऽपि भवेद्रूपमैश्वर्यं किमु कुर्वतः ॥ ३८

[*यस्माच्च भक्त्या धरणीसुतस्य विनिन्द्य(न्द)मानेन गवादिदानम् ।
आलोकितं तेन सुरारिगर्भे संभूतिरेषा तव दैत्य जाता] ॥ ३९

ईश्वर उवाच—

अथ तद्वचनं श्रुत्वा भार्गवस्य महात्मनः । प्रह्लादनन्दनो वीरः पुनः पप्रच्छ तं कविम् ॥ ४०

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ घ. °व्यग्राऽथ । २ क. ख. ङ. च. शिवे । ३ झ. °चनसुतो भवान् । त° । ४ ग. घ. ज. °माकस्मिकं । ५ क. ख. ग. झ. ङ. च. ज. प्रहृष्टास्ते ज° । ६ झ. च ग्रहत्वेन व्य° ।

विरोचन उवाच—

भगवंस्तद्व्रतं सम्यक्श्रोतुमिच्छामि तत्त्वतः । दीयमानं तु तद्दानं मया दृष्टं भवान्तरे ॥ ४१

माहात्म्यं च विधिं तस्य यथावद्वक्तुमर्हसि । इति तद्वचनं श्रुत्वा विप्रः प्रोवाच [1]विस्तरात् ॥ ४२

भार्गव उवाच—

चतुर्थ्यङ्गारकदिने यदा भवति दानव । मृदा स्नानं तदा कुर्यात्पद्मरागविभूषितः ॥ ४३

अग्निर्मूर्धा दिवो मन्त्रं जपेत्स्नात उदङ्मुखः । शूद्रस्तूष्णीं स्मरेद्भौममास्ते भोगविवर्जितः ॥ ४४

अथास्तमित आदित्ये गोमयेनानुलेपयेत् । प्राङ्गणं पुष्पमालाभिरक्षताद्भिः समन्ततः ॥ ४५

तेदभ्यर्च्याऽऽलिखेत्पद्मं कुङ्कुमेनाष्टपत्रकम् । कुङ्कुमस्याप्यभावेन रक्तचन्दनमिष्यते ॥ ४६

चत्वारः करकाः कार्या भक्ष्यभोज्यसमन्विताः । तण्डुलै रक्तशालेयैः पद्मरागसमन्वितैः ॥ ४७

चतुष्कोणेषु तान्कुर्यात्फलानि विविधानि च । गन्धमाल्यादिकं सर्वं तथैव विनिवेदयेत् ॥ ४८

सुवर्णशृङ्गीं कपिलामथाऽऽर्च्य रौप्यैः खुरैः कांस्यदोहां सवत्साम् ।
धुरंधरं रक्तखुरं च सौम्यं धान्यानि सप्ताम्बरसंयुतानि ॥ ४९

अङ्गुष्ठमात्रं पुरुषं तथैव सौवर्णमत्यायतबाहुदण्डम् ।
चतुर्भुजं हेममयं(?) च ताम्रपात्रे गुडस्योपरि सर्पि(?)युक्तम् ॥ ५०

सवेदशास्त्राय जितेन्द्रियाय वाग्रूपशीलान्वयसंयुताय ।
दातव्यमेतत्सकलं द्विजाय कुटुम्बिने नैव तु दम्भयुक्ते ॥ ५१

भूमिपुत्र महाभाग देहोद्भव पिनाकिनः । रूपार्थी त्वां प्रपन्नोऽहं गृहाणार्घ्यं नमोऽस्तु ते ॥ ५२

कुजाय लोहिताङ्गाय ग्रहमध्यस्थिताय च । कार्तिकेयानुरूपाय सुरूपाय नमो नमः ॥ ५३

शिवललाटसंभूत धरणीगर्भसंभव । [†रूपार्थी त्वां प्रपन्नोऽस्मि गृहाणार्घ्यं नमोऽस्तु ते] ॥ ५४

मन्त्रैरेतैस्तु दत्त्वाऽर्घ्यं रक्तचन्दनवारिणा । ततोऽर्चयेद्विप्रवरं रक्तमाल्याम्बरादिभिः ॥ ५५

दद्यादनेन मन्त्रेण भौमं गोमिथुनान्वितम् । शय्यां च शक्तिमान्दद्यात्सर्वोपस्करसंयुताम् ॥ ५६

यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे । तत्तद्गुणवते देयं तत्तस्याक्षयमिच्छता ॥ ५७

+ततः प्रदक्षिणं कृत्वा विसर्ज्य द्विजसत्तमम् । नक्तं क्षारलवणमश्नीयात्संयुतं (ततः) ॥ ५८

भक्त्या यस्तु पुमान्कुर्यादेवमङ्गारकाष्टकम् । चतुरो वाऽथ वा तस्य यत्पुण्यं तद्वदामि ते ॥ ५९

रूपसौभाग्यसंपन्नः पुनर्जन्मनि जन्मनि । विष्णौ चाथ शिवे भक्तः सप्तद्वीपाधिपो भवेत् ॥ ६०

सप्त कल्पसहस्राणि रुद्रलोके महीयते । तस्मात्त्वमपि दैत्येन्द्र व्रतमेतत्समाचर ॥ ६१

पुलस्त्य उवाच—

इत्येवमुक्त्वा भृगुनन्दनोऽपि जगाम दैत्योऽपि चकार सर्वम् ।
त्वं चापि राजन्कुरु सर्वमेतद्यतोऽक्षयं वेदविदो वदन्ति ॥ ६२

---

† धनुश्चिह्नान्तर्गतः पाठो ग. घ. ज. पुस्तकस्थः । + इदमर्धं झ. पुस्तकस्थम् ।

---

१ क. ख. ङ. च. सादरम् । २ झ. ततोर्व्यां त्रिलि° । ३ ग. °लै रक्तमाल्यैश्च प° । क. ख. ङ. च. °लै रक्तशाखोटैः प° । ज. °लैर्युक्तशाखोटैः प° । ४ क. ख. ग. घ. ङ. च. ज. °वेशयेत् । ५ झ. सवत्साम् । ६ ञ. °नि तप्ता° । ७ क. ख. ग. घ. ङ. च. ज. सामस्वरज्ञाय । ८ क. ख. ङ. च. स्वेदोद्भव । झ. महातेजा । ९ क. ख. ङ. च. °द्यात्तेनैव म° । ग. घ. ज. °द्यादेकेन ।

तथेति संपूज्य स भार्गवं तद्वाक्यं चकाराद्भुतवीर्यकर्मा ।
शृणोति यश्चैतदनन्यचेतास्तस्यापि [1]सिद्धिं भगवान्विधत्ते* ॥ ६३

भीष्म उवाच—

उपवासेष्वशक्तस्य तदेव फलमिच्छतः । अनभ्यासेन रोगाद्वा किमिष्टं व्रतमुच्यताम् ॥ ६४

पुलस्त्य उवाच—

उपवासेष्वशक्तानां नक्तभोजनमिष्यते । यस्मिन्व्रते तदप्यत्र श्रूयतां वै व्रतं महत् ॥ ६५
आदित्यशयनं नाम यथावच्छंकरार्चनम् । येषु नक्षत्रयोगेषु पुराणज्ञाः प्रचक्षते ॥ ६६
यदा हस्तेन सप्तम्यामादित्यस्य दिनं भवेत् । सूर्यस्य वाऽथ संक्रान्तिस्तिथिः सा सार्वकामिकी ॥ ६७
उमामहेश्वरौ देवावर्चयेत्सूर्यनामभिः । सूर्यार्चा शिवलिङ्गं च भक्तितः पूजयेद्यतः ॥ ६८
उमापते रवेश्चापि न भेदः क्वचिदिष्यते । यस्मात्तस्मान्नृपश्रेष्ठ गृहे भानुं समर्चयेत् ॥ ६९

हस्तेन सूर्याय नमोऽस्तु पादावर्काय चित्रासु च गुल्फदेशम् ।
स्वातीषु जङ्घे पुरुषोत्तमाय धात्रे विशाखासु च जानुदेशम् ॥ ७०
तथाऽनुराधासु नमोऽभिपूज्यमूरुद्वयं चैव सहस्रभानोः ।
ज्येष्ठास्वनङ्गाय नमोऽस्तु गुह्यमिन्द्राय भीमाय कटिं च मूले ॥ ७१
पूर्वोत्तराषाढयुगे च नाभिं त्वाष्ट्रे नमः सप्ततुरंगमाय ।
तीक्ष्णांशवे श्रवणे चाथ कुक्षिं कुक्षौ धनिष्ठासु विकर्तनाय ॥ ७२
वक्षस्थलं ध्वान्तविनाशनाय जलाधिपर्क्षे प्रतिपूजनीयम् ।
पूर्वोत्तराभद्रपदद्वये च बाहू नमश्चण्डकराय पूज्यौ ॥ ७३
साम्नामधीशाय करद्वयं च संपूजनीयं नृप रेवतीषु ।
नखानि पूज्यानि तथाऽश्विनीषु नमोऽस्तु सप्ताश्वधुरंधराय ॥ ७४
कण्ठं च भानोर्भरणीषु पूज्यो दिवाकरायेत्यभिपूजनीयः ।
ग्रीवाऽग्निपर्क्षेऽधरसंपुटे तु संपूजयेद्भारत रोहिणीषु ॥ ७५
मृगेऽर्चनीया रसना पुरारे रौद्रे तु दन्ता हरये नमस्ते ।
नमः सवित्रे इति शंकरस्य नासाऽभिपूज्या च पुनर्वसौ च ॥ ७६
ललाटमम्भोरुहवल्लभाय पुष्येऽलँकान्वेदशरीरधारिणे ।
सार्पेऽथ मौलिं विबुधप्रियाय मघासु कर्णाविति पूजनीयौ ॥ ७७
पूर्वासु गोब्राह्मणनन्दनाय गात्राणि संपूज्यतमानि शंभोः ।
अथोत्तराफाल्गुनिभे भ्रुवौ च विश्वेश्वरायेति च पूजनीये ॥ ७८
नमोऽस्तु पाशाङ्कुशपद्मशूलकपालसर्पेन्दुधनुर्धराय ।
गयासुरानङ्गपुरान्धकादिविनाशमूलाय नमः शिवाय ॥ ७९
इत्यादिगात्राणि च पूजयित्वा विश्वेश्वरायेति शिरोऽभिपूज्यम् ।
पश्चाच्च भोक्तव्यमतैलमन्नममांसमक्षारमभुक्तशेषम् ॥ ८०

---

* अत्र क. ग. च. पुस्तकेष्वध्यायसमाप्तिः कृता वर्तते ।

---

१ क. ग. घ. च. ज. सर्वे । २ झ. °न्न सुप्रेक्षेच्छाभयं म° । ३ च. उभयं । ज. वाग्यतः । ४ झ. पक्ष्मदेशम् । ५ ग. घ. ज. °पूज्यं करद्व° । ६ क. च. पृष्ठं । ७ क. ख. ङ. च. °लकांस्त्वर्थश° । ८ ग. नेत्राणि । ९ झ. °न्दुन तुंधुरा° ।

इत्येवं द्विजभक्तो यः कृत्वा दद्यात्पुनर्वसौ । शालेयतण्डुलप्रस्थमौदुम्बरम(?)थो घृतम् ॥ ८१
संस्थाप्य पात्रे विप्राय सहिरण्यं निवेदयेत् । सप्तमे वस्त्रयुग्मं तु पारणे त्वधिकं भवेत् ॥ ८२
चतुर्दशे तु संप्राप्ते पारणे भारतादिके । ब्राह्मणं भोजयेद्भक्त्या गुडक्षीरघृतादिभिः ॥ ८३
कृत्वाऽथ काञ्चनं पद्ममष्टपत्रं सकर्णिकम् । शुद्धमष्टाङ्गुलं तच्च पद्मरागदलाङ्कितम् ॥ ८४
शय्यां सुलक्षणां कृत्वा विरुद्धग्रन्थिवर्जिताम् । सोपधानवितानां च सुस्तरां व्यजनाश्रिताम् ८५
पादुकोपानहच्छत्रचामरासनदर्पणैः । भूषणैरपि संयुक्तां फलवस्त्रानुलेपनैः ॥ ८६
तस्यां निधाय तत्पद्ममलंकृत्य गुणान्विताम् । कपिलां वस्त्रसंयुक्तामतिशीलां पयस्विनीम् ॥ ८७
रौप्यखुरां हेमशृङ्गीं सवत्सां कांस्यदोहनाम् । दद्यान्मन्त्रेण पूर्वाह्णे वेलां नैवाभिलङ्घयेत् ॥ ८८
यथैवाऽऽदित्यशयनमशून्यं तव सर्वदा । कान्त्या धृत्या श्रिया पुष्ट्या तथा मे सन्तु वृद्धयः ॥ ८९
यथा न वेदविदुषस्त्वदन्यमनघं विदुः । तथा मामुद्धराशेषदुःखसंसारसागरात् ॥ ९०
ततः प्रदक्षिणीकृत्य प्रणिपत्य विसर्जयेत् । [*शय्यां गवादि तत्सर्वं द्विजस्य भवनं नयेत्] ॥ ९१

नैतद्विशीलाय न दाम्भिकाय प्रकाशनीयं व्रतमिन्दुमौलेः ।
गोविप्रदेवातिथिधार्मिकाणां यश्चापि निन्दामधिकां विधत्ते ॥ ९२
भक्ताय दान्ताय च गुह्यमेतदाख्येयमानन्दकरं शिवं च ।
इदं महापातकिनां नराणामघक्षयं वेदविदो वदन्ति ॥ ९३
न बन्धुपुत्रैर्न धनैर्वियुक्तः पत्नीभिरानन्दकरः सुराणाम् ।
नाभ्येति रोगं न च दुःखमोहं या चाथ नारी कुरुतेऽथ भक्त्या ॥ ९४
इदं वसिष्ठेन पुराऽर्जुनेन कृतं कुबेरेण पुरंदरेण ।
यत्कीर्तनादप्यखिलानि नाशमायान्ति पापानि न संशयोऽत्र ॥ ९५
इति पठति शृणोति वा य इत्थं रविशयनं पुरुहूतवल्लभः स्यात् ।
अपि नरकगतान्पितॄनशेषानपि दिवमानयतीह यः करोति ॥ ९६

अश्वत्थं च वटं चैवोदुम्बरं प्लक्षमेव च । नन्दीशं जम्बुवृक्षं च विदुः षष्ठं महर्षयः ॥ ९७
मार्गशीर्षादिमासाभ्यां द्वाभ्यां द्वाभ्यामथ क्रमात् । एकैकं दन्तधावनं वृक्षेष्वेतेषु कारयेत् ॥ ९८
दद्यात्समाप्ते दध्यन्नं वितानध्वजचामरम् । द्विजानामुदकुम्भांश्च पञ्चरत्नसमन्वितान् ॥ ९९
[*न वित्तशाठ्यं कुर्वीत कुर्वन्दोषानवाप्नुयात् ॥ १००

भीष्म उवाच—

दीर्घायुरारोग्यकुलातिवृद्धिभिर्युक्तः पुमान्रूपकुलान्वितः स्यात्] ।
मुहुर्मुहुर्जन्मानि येन सम्यग्व्रतं समाचक्ष्व च शीतरश्मेः ॥ १०१

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ङ. च. °वं नृप नक्तानि कु° । २ क. ख. ग. घ. ङ. च. ज. °लान्वित° । ३ झ. °त् । रथैरादि° । ४ झ. °ष्ट्या वियुक्तं न हि ते वपुः । य° । ५ घ. न देवाः श्रेयांसं त्वद° । ६ क. ख. ग. घ. ङ. च. ज. °देवर्षिवि-क्रमंयोगिनां य° । ७ क. ख. ग. घ. ङ च. ज. शिवस्य । इ° । ८ क. ख. ङ. च. च बिल्वं प्राहुर्मह° । ग. घ च म बिल्वखण्डं म° । ९ ञ. °श्व तदिन्दुमौलेः । पु° ।

पुलस्त्य उवाच—

त्वया पृष्टमिदं सम्यगक्षयस्वर्गकारकम् । रहस्यं तु प्रवक्ष्यामि यत्पुराणविदो विदुः ॥ १०२
रोहिणीचन्द्रशयनं नाम व्रतमिहोत्तमम् । तस्मिन्नारायणस्यार्चामर्चयेदिन्दुनामभिः ॥ १०३
यदा सोमदिने शुक्ले भवेत्पञ्चदशी क्वचित् । अथ ब्राह्मं च नक्षत्रं पौर्णमास्यां प्रजायते ॥ १०४
तदा स्नानं नरः कुर्यात्पञ्चगव्येन सर्षपैः । आप्यायस्वेति च जपेद्विद्वानष्टशतं पुनः ॥ १०५
शूद्रोऽपि परया भक्त्या पाखण्डालापवर्जितः । सोमाय वरदायाथ विष्णवे च नमो नमः ॥ १०६
कृतजप्यश्च भवनमागत्य मधुसूदनम् । पूजयेत्फलपुष्पैश्च सोमनामानि कीर्तयेत् ॥ १०७
सोमाय शान्ताय नमोऽस्तु पादावनन्तधाम्ने तु च जानुजङ्घे ।
ऊरुद्वयं चापि जलोदराय संपूजयेन्मेढ्रमनन्तबाहोः ॥ १०८
नमो नमः कामसुखप्रदाय कटिः शशाङ्कस्य सदाऽर्चनीया ।
अथोदरं चाप्यमृतोदराय नाभिः शशाङ्काय नमोऽभिपूज्या ॥ १०९
नमोऽस्तु चन्द्राय मुखं च नित्यं दन्ता द्विजानामधिपाय पूज्याः ।
आस्यं नमश्चन्द्रमसेऽभिपूज्यमोष्ठौ तु कौमोदवनप्रियाय ॥ ११०
नासाऽधिनाथाय वनौषधीनामानन्दबीजाय पुनर्भ्रुवौ च ।
नेत्रद्वयं पद्मनिभं तथेन्दोरिन्दीवरव्यासकराय शौरेः ॥ १११
नमः समस्ताऽसुरवन्दिताय कर्णद्वयं दैत्यनिषूदनाय ।
ललाटमिन्दोरुदधिप्रियाय केशाः सुषुम्नाधिपतेः प्रपूज्याः ॥ ११२
शिरः शशाङ्काय नमो मुरारेर्विश्वेश्वरायेति नमः किरीटम् ।
पद्मश्रिये रोहिणिनामलक्ष्मीसौभाग्यसौख्यामृतसागराय ॥ ११३
देवीं च संपूज्य सुगन्धिपुष्पैर्नैवेद्यधूपादिभिरिन्दुपत्नीम् ।
सुप्त्वाऽथ भूमौ पुनरुत्थितो यः स्नात्वाऽथ विप्राय हविष्ययुक्तः ॥ ११४
दद्यात्प्रभाते सहिरण्यवारिकुम्भं नमः पापविनाशनाय ।
संप्राश्य गोमूत्रममांसमन्नमक्षारमष्टावथ विंशतिं च ॥ ११५
ग्रासांश्च त्रीन्सर्पियुतानुपोष्य भुक्त्वेतिहासं शृणुयान्मुहूर्तम् ।
कदम्बनीलोत्पलकेतकानि जातीसरोजे शतपत्रिका च ॥ ११६
अम्लानकुब्जान्यथ सिन्दुवारं पुष्पं पुनर्भारत मल्लिकायाः ।
शुक्लं च पुष्पं करवीरपुष्पं श्रीचम्पकं चन्द्रमसे प्रदेयम् ॥ ११७
श्रावणादिषु मासेषु क्रमादेतानि सर्वदा । यस्मिन्मासे व्रतादिः स्यात्तत्पुष्पैरर्चयेद्धरिम् ॥ ११८
एवं संवत्सरं यावदुपोष्य विधिवन्नरः । व्रतान्ते शयनं दद्याच्छयनोपस्करान्वितम् ॥ ११९
रोहिणीचन्द्रमिथुनं कारयित्वा तु काञ्चनम् । चन्द्रः षडङ्गुलः कार्यो रोहिणी चतुरङ्गुला ॥ १२०
मुक्ताफलाष्टकयुतां सितनेत्रसमन्वितम् । क्षीरकुम्भोपरि पुनः कांस्यपात्राक्षतान्विताम् ॥ १२१

---

१ झ. °म्यग्नपुत्रक्षयका° । २ ग. घ. ज. शीताय । ३ झ. च पूज्य ज° । ४ झ. °ङ्घे । जानुद्व° । ५ क. ख. ङ. च. °नङ्गधाम्ने । न° । ग. घ. ज. °नङ्गवा° । ६ ग. घ. ज. सुखोदरं । ७ क. ख. ङ. च. °स्ताध्वरपूजिता° । ८ झ. पद्माश्रये । ९ झ. °लक्ष्मीं सौ° । १० झ. °ग्यकेशामृ° । ११ क. ख. ङ. च. °नपुष्पाण्यथ ।

[*दद्यान्मन्त्रेण पूर्वाह्णे शालीक्षुफलसंयुताम् । श्वेतामथ सुवर्णास्यां रौप्यखुरसमन्विताम् ] १२२
सवस्त्रभाजनां धेनुं तथा शङ्खं च भाजनम् । भूषणैर्द्विजदांपत्यमलंकृत्य गुणान्वितम् ॥ १२३
चन्द्रोऽयं विप्ररूपेण सभार्य इति कल्पयेत् । यथा ते रोहिणी कृष्ण शय्यां त्यक्त्वा न गच्छति॥
सोमरूपस्य ते तद्वन्न मे भेदो विभूतिभिः । यथा त्वमेव सर्वेषां परमानन्दमुक्तिदः ॥ १२५
भुक्तिर्मुक्तिस्तथा भक्तिस्त्वयि चन्द्र दृढाऽस्तु मे । इति संसारभीतस्य मुक्तिकामस्य वाऽनघ ॥
रूपारोग्यप्रदं[1] चेति व्रतमेकमनुत्तमम् । इदमेव पितॄणां च सर्वदा वल्लभं नृप ॥ १२७
त्रैलोक्याधिपतिर्भूत्वा सप्तकल्पशतत्रयम् । चन्द्रलोकमवाप्नोति विद्युद्भूत्वा विमुच्यते ॥ १२८
नारी वा रोहिणीचन्द्रशयनं या समाचरेत् । साऽपि तत्फलमाप्नोति पुनरावृत्तिदुर्लभम् ॥ १२९

इति पठति शृणोति वा य इत्थं मधुमथनार्चनमिन्दुकीर्तनेन ।
मतिमपि च ददाति सोऽपि शौरेर्भवनगतः परिपूज्यतेऽमरौघैः ॥ + १३०

भीष्म उवाच—

*जलस्थाने कथं विष्णुर्देवी वा पार्वती कथम् । तडागारामकूपेषु वापीषु नलिनीषु च ॥ १३१
[+विधिं वदस्व मे ब्रह्मन्देवतायतनेषु च]। के तत्र ऋत्विजो विप्रा वेदी वा कीदृशी भवेत् १३२
दक्षिणा[2] च भवेत्कीदृक्स्थानमाचार्य एव च । द्रव्याणि कानि शस्तानि सर्वमाचक्ष्व सुव्रत १३३

पुलस्त्य उवाच—

शृणु राजन्महाबाहो तडागादिषु यो विधिः । पुराणेष्वितिहासोऽयं पठ्यते राजसत्तम ॥ १३४
प्राप्य पक्षं शुभं शुक्लं[3] संप्राप्ते चोत्तरायणे । पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम्[4] ॥ १३५
अशुभैर्वर्जिते देशे तडागस्य समीपतः । चतुर्हस्तां समां वेदिं चतुरस्रां चतुर्मुखाम् ॥ १३६
तथा षोडशहस्तः स्यान्मण्डपश्च चतुर्मुखः । वेद्यास्तु परितो गर्ता रत्निमात्रास्त्रिमेखलाः[5] ॥ १३७
नव सप्ताथ वा पञ्च योनिवक्त्रा[6] नृपात्मज । वितस्तिमात्रा योनिः स्यात्षट्सप्ताङ्गुलविस्तृता ॥
गर्ताश्च[7] हस्तमात्राः स्युस्त्रिपर्वोच्छ्रितमेखलाः । सर्वाः[8] स्युः सर्ववर्णाः स्युः पताकाध्वजसंयुताः ॥
अश्वत्थोदुम्बरप्लक्षवटशाखाकृतानि च । मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत् ॥ १४०
शुभास्तत्राष्ट होतारो द्वारपालास्तथाष्ट वै । अष्टौ तु जापकाः कार्या ब्राह्मणा वेदपारगाः॥१४१
सर्वलक्षणसंपूर्णान्मन्त्रज्ञान्विजितेन्द्रियान् । कुलशीलसमायुक्तान्स्थापयेद्द्विजसत्तमान् ॥ १४२
प्रतिगर्तेषु (र्तं च) कलशान्यज्ञोपकरणानि च[9]। विमलं चाऽऽसनं दिव्यं ताम्रपात्रं सुविस्तरम्[10]१४३
ततस्त्वनेकवर्णाः[11] स्युर्बलयः प्रतिदैवतम् । आचार्यः प्रक्षिपेद्भूमावनुमन्त्र्य विचक्षणः ॥ १४४
अरत्निमात्रो यूपः स्यात्क्षीरवृक्षविनिर्मितः । यजमानप्रमाणो वा संस्थाप्यो भूतिमिच्छता १४५
हेमालंकारिणः कार्याः पञ्चविंशतिर्ऋत्विजः[12] । कुण्डलानि च हैमानि केयूरकटकानि च ॥ १४६

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. पुस्तकस्थः । + अत्र क. ख. ग. ङ. च. पुस्तकेष्वध्यायसमाप्तिरास्ति । + इदमर्धं झ. पुस्तकस्थम् । * धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. ज. °रोग्यायुष्यमेतद्विधायक° । २ क. ख ङ. च. °णा वलयस्कालस्थानमाचार्यमेव । ग. °णा संलयस्तत्र स्थानमार्जनमेव । घ. °णा वलयस्तत्र स्थानमार्गान्नमेव । ज. °णा वलयस्तत्र स्थानमार्जनमेव । ३ झ. शुक्लमतीते चो° । ४ झ. °म् । प्राक्च प्रस्रवणे दे° । ५ झ. °मात्रा तु मेखला । न° । ६ क. ख ग. घ. ङ च. ज. ऋजुवक्त्रा । ७ क. ख. ङ. च. गर्ताश्च । ८ ञ. सर्वतस्तु सुवर्णाः । ९ झ °तिस्तम्भे तु क° । १० ञ. व्यजनं । ११ ग. घ. ज. °तस्त्वेकस्य वर्णस्य बल° । १२ ग. ज. झ. °तिश्च द्विजाः । कु° ।

तथाऽङ्गुलिपवित्राणि वासांसि विविधानि च । दद्यात्समानि सर्वेषामाचार्ये द्विगुणं पुनः ॥
दद्याच्छयनसंयुक्तमात्मनश्चापि यत्प्रियम् । सौवर्णौ कूर्ममकरौ राजतौ मत्स्यदुन्दुभौ ॥ १४८
ताम्रौ कुलीरमण्डूकावायसौ शिशुमारकौ । एवमासाद्य तत्सर्वं स्वर्णपात्रे विशां पते ॥ १४९
शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः । सर्वौ[2]षध्युदकस्नातः स्नापितो [3]वेदपारगैः ॥ १५०
यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः । पश्चिमद्वारमासाद्य प्रविशेद्यागमण्डपम् ॥ १५१
ततो मङ्गलशब्देन [4]भेरीणां निस्वनेन च । रजोभिर्मण्डलं कुर्यात्पञ्चवर्णसमन्वितम् ॥ १५२
षोडशारं ततश्चक्रं पद्मगर्भं सुलोचनम् । [*चतुरस्रं तु परितो वृत्तं(त्तं) मध्ये सुशोभनम्] ॥ १५३
वेद्याश्चोपरि तत्कृत्वा ग्रहाँल्लोकपतींस्ततः । संन्यसेन्मन्त्रतः सर्वान्प्रतिदिक्षु विचक्षणः ॥ १५४
कलशं स्थापयेन्मध्ये वारुणं मन्त्रमाश्रितम् । ब्रह्माणं च शिवं विष्णुं तत्रैव स्थापयेद्बुधः ॥ १५५
विनायकं च विन्यस्य कमलामम्बिकां तथा । शान्त्यर्थं सर्वलोकानां भूतग्रामं न्यसेत्ततः ॥ १५६
पुष्पगन्धफलैर्युक्तमेवं कृत्वाऽधिवासनम् । कुम्भांश्च रत्नगर्भांस्तान्वासोभिः परिवेष्टयेत् ॥ १५७
पुष्पगन्धैरलंकृत्य द्वारपालांस्तथैव च । पठध्वमिति तान्ब्रूयादाचार्यं त्वभिपूजयेत् ॥ १५८
बह्वृचौ पूर्वतः स्थाप्यौ दक्षिणे याजुषौ क्रमात् । पश्चिमे सामगौ स्थाप्यावुत्तरेऽथर्वणौ तथा ॥
उदङ्मुखो दक्षिणतो यजमान उपाविशेत् । पठध्वमिति तान्ब्रूयाद्यजध्वमिति याजकम् ॥ १६०
उत्कृष्टमन्त्रजाप्येन तिष्ठध्वमिति जापकान् । एवमादिश्य तान्सर्वान्संधुक्ष्याग्निं स मन्त्रवित् ॥ १६१
जुहुयादाहुतीर्मन्त्रैराज्यं च समिधस्तथा । ऋत्विग्भिश्चैव होतव्यं वारुणैरेव सर्वतः ॥ १६२
ग्रहेभ्यो विधिवद्धुत्वा तथेन्द्रायेश्वराय च । मरुद्भ्यो लोकपालेभ्यो विधिवत्तत्र कर्मणि ॥ १६३
शान्तिसूक्तं च रौद्रं च पावमानं सुमङ्गलम् । जपेच्च पौरुषं सूक्तं पूर्वतो बह्वृचः पृथक् ॥ १६४
निर्कं रौद्रं च सौम्यं च [13]कौष्माण्डं जातवेदसम् । सौरं सूक्तं जपेदन्ते दक्षिणेन यजुर्विदः ॥ १६५
वैराजं पौरुषं सूक्तं सौपर्णं रुद्रसंहितम् । शैशवं पञ्चनिधनं गायत्रं ज्येष्ठसाम च ॥ १६६
वामदेव्यं बृहत्साम रौरवं च रथंतरम् । गवां व्रतं विकीर्णं च रक्षोघ्नं च यमं तथा ॥ १६७
गायेयुः सामगा राजन्पश्चिमं द्वारमाश्रिताः । आथर्वणाश्चोत्तरतः शान्तिकं पौष्टिकं तथा ॥ १६८
जपेयुर्मनसा देवमाश्रिता वरुणं प्रभुम् । पूर्वेद्युरभितो मन्त्रैरेवं कृत्वाऽधिवासनम् ॥ १६९
गजाश्वरथ्यावल्मीकसंगमाद्व्रजगोकुलात् । मृदमादाय कुम्भेषु प्रक्षिपेदौषधीस्तथा ॥ १७०
रोचनां च ससिद्धा[15]र्थां गन्धगुग्गुलमेव च । स्नपनं तस्य कर्तव्यं पञ्चगव्यसमन्वितम् ॥ १७१
[16]पूर्वं कर्तुर्महामन्त्रैरेवं कृत्वा विधानतः । अतिवाह्य क्षपामेवं विधियुक्तेन कर्मणा ॥ १७२
ततः प्रभाते विमले संजाते तु शतं गवाम् । ब्राह्मणेभ्यः प्रदातव्यं होमान्ते वाऽथवा पुनः ॥ १७३
पञ्चाशद्वाऽथ षट्त्रिंशत्पञ्चविंशतिर्वा पुनः । ततः संवत्सरे प्राप्ते शुद्धे लग्ने सुशोभने ॥ १७४

---

*धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. पुस्तकस्थः ।

---

१ ग. घ. ज °नः । दीक्षाशय° । २ ग. घ. ज. सर्वपुण्योद° । ३ झ. वेदपुंगवैः । ४ घ. ज. नारीणां । ५ क. ख. ङ. च. रजसा मण्ड° । ६ क. ख. ङ. च. ज. °वर्णेन तत्त्ववित् । षो° । ७ क. ख. ङ. च. चतुर्मुखम् । ८ क. ख. घ. ङ. च. ज. °ष्पभक्ष्यफ° । ९ क. ख. ङ. च. °तू । यजध्वमिति तान्ब्रूयाद्याजकान्पुनरेव तान् । उ° । १० ग. घ. ज. °यात्पाठयेदुत्तरे च तान् । उ° । ११ क. ख ङ. च °वह्निश्वकर्मणे । रात्रिसू° । ग. घ. ज. °वच स्वकर्मणा । धातृसू° । १२ घ. शार्ङ्गं । १३ झ. कूष्माण्डं । १४ झ. °माद्रदगो° । १५ ग. घ. ज. °द्धार्थागरुगु° । १६ झ. सूक्तं । १७ क. ख. ग. घ. ङ. च. ज. °तव्यमष्टषष्ट्यथ । ८१ ञ. ततश्चा:.सरप्रा° ।

वेदशब्दैः सगन्धर्वैर्वाद्यैश्च विविधैः पुनः। कनकालंकृतां कृत्वा जले गामवतारयेत् ॥ १७५
सामगाय च सा देया ब्राह्मणाय विशां पते। पात्रीमादाय सौवर्णी पञ्चरत्नसमन्विताम् १७६
ततो निक्षिप्य मकरं मत्स्यादींश्चैव सर्वशः। धृतां चतुर्भिर्विप्रैस्तु वेदवेदाङ्गपारगैः ॥ १७७
महानदीजलोपेतां दध्यक्षतविभूषिताम्। उत्तराभिमुखां न्युब्जां जलमध्ये तु कल्पयेत् ॥ १७८
अथर्वणेन सुस्नातां *पुनर्मायां(?) तथैव च। आपो हिष्ठेतिमन्त्रेण क्षिप्त्वाऽऽगत्य च मण्डपम् ॥
पूजयित्वा सदस्यान्वै बलिं दद्यात्समन्ततः। पुनर्दिनानि होतव्यं चत्वारि राजसत्तम ॥ १८०
चतुर्थीकर्म कर्तव्यं देयं तत्रापि शक्तितः। कृत्वा तु यज्ञपात्राणि यज्ञोपकरणानि च ॥ १८१
ऋत्विग्भ्यश्च समं दद्यान्मण्डपं विभजेत्पुनः। हेमपात्रं च शय्यां च विप्राय च निवेदयेत् १८२
ततः सहस्रं विप्राणामथवाऽष्टशतं तथा। भोजयेच्च यथाशक्ति पञ्चाशद्वाऽथ विंशतिम् ॥ १८३
एवमेष पुराणेषु तडागविधिरुच्यते। कूपवापीषु सर्वासु तथा पुष्करिणीषु च ॥ १८४
एष एव विधिर्दृष्टः प्रतिष्ठासु तथैव च। मन्त्रतस्तु विशेषः स्यात्प्रासादोद्यानभूमिषु ॥ १८५
अयं त्वशक्तावर्धेन विधिर्दृष्टः स्वयंभुवा। अन्येष्वेकाग्निवत्कार्यं वित्तशाठ्यादृते नृणाम् ॥ १८६
प्रावृट्कालस्थितं तोयमग्निष्टोमशतं स्मृतम्। शरत्कालस्थितं तोयं तदुक्तफलदायकम् ॥ १८७
वाजपेयातिरात्राभ्यां हेमन्ते शिशिरे स्थितम्। अश्वमेधसमं प्राहुर्वसन्तसमयस्थितम् ॥
ग्रीष्मेऽपि यत्स्थितं तोयं राजसूयफलाधिकम् ॥ १८८

एतान्महाराज विशेषधर्मान्करोति चोर्व्यामथ शुद्धबुद्धिः।
स याति ब्रह्मालयमेव शुद्धः कल्पाननेकान्दिवि मोदते च ॥ १८९
अनेकलोकान्विचरन्स्वरादीन्भुक्त्वा परार्धद्वयमङ्गनाभिः।
सहैव विष्णोः परमं पदं यत्प्राप्नोति तद्योगबलेन भूयः+ ॥ १९०

भीष्म उवाच—

पादपानां विधिं ब्रह्मन्यथावद्विस्तराद्वद। विधिना येन कर्तव्यं पादपारोपणं बुधैः ॥
ये च लोकाः स्मृता येषां तानिदानीं वदस्व मे ॥ १९१

पुलस्त्य उवाच—

पादपानां विधिं वक्ष्ये तथैवोद्यानभूमिषु। तडागविधिवत्सर्वं समाप्य जगतीश्वर ॥ १९२
ऋत्विङ्मण्डपसंभारमाचार्यं चापि तद्विधम्। पूजयेद्ब्राह्मणांस्तद्वद्धेमवस्त्रानुलेपनैः ॥ १९३
सर्वौषध्युदकैः सिक्तान्दध्यक्षतविभूषितान्। वृक्षान्माल्यैरलंकृत्य वासोभिरभिवेष्टयेत् ॥ १९४
सूच्या सौवर्णया कार्यं सर्वेषां कर्णवेधनम्। अञ्जनं चापि कर्तव्यं तद्वद्धेमशलाकया ॥ १९५
फलानि सप्त चाष्टौ वा क(का)लधौतानि कारयेत्। प्रत्येकं सर्ववृक्षाणां वेद्यां तानधिवासयेत् ॥
धूपोऽत्र गुग्गुलः श्रेष्ठस्ताम्रपात्रेऽध्वधिष्ठितान्। सर्वधान्यवृतान्कृत्वा वस्त्रगन्धानुलेपनैः ॥ १९७
कुम्भान्सर्वेषु वृक्षेषु स्थापयित्वाऽवनीश्वर। पूजयित्वा दिनान्ते तु कृत्वा बलिनिवेदनम् ॥१९८

---

* पुनर्यातामिति क्वचित्पाठः। + अत्र क. ख. ङ. च. पुस्तकेष्वध्यायसमाप्तिर्वर्तते।

---

१ ख. ङ. च. °मुखैर्न्यस्तां ज°। २ ग. घ. ज. °ण्डलम्। ३ घ. ज. °त्वा वटं तत्र व°। झ. °त्वा सुरांस्तत्र व°। ४ झ. °यं तु ऋत्विगाचार्ये वि(यैर्वि)धि°। ५ घ. ज. °कलात्मा। स°। ६ ग. घ. °दपे यजनं बु°। ७ झ. °रभूषणाच्छादनादिकम्। घ. ज. °रमथार्च्यां वाऽपि तद्विदः। पू°। ग. °रमथार्च्यां चापि भक्तितः। पू°। ८ ञ तान्याधि°। ९ क. ख. ङ. च. सप्तधा°। १० झ. °सिंदूर°।

यथावल्लोकपालानामिन्द्रादीनां विधानतः । वनस्पतेरधिवास एवं कार्यो द्विजातिभिः ॥ १९९
ततः शुक्लाम्बरधरां सौवर्णकृतशेखराम् । सकांस्यदोहां सौवर्णशृङ्गाभ्यामतिशालिनीम् ॥ २००
पयस्विनीं वृक्षमध्यादुत्सृजेद्गामुदङ्मुखीम् । ततोऽभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः ॥ २०१
ऋग्यजुःसाममन्त्रैश्च वारुणैरभितस्तदा । तैरेव कुम्भैः स्नपनं कुर्युर्ब्राह्मणपुंगवाः ॥ २०२
स्नातः शुक्लाम्बरस्तद्वद्यजमानोऽभिपूजयेत् । गोभिर्विभवतः सर्वानृत्विजः सुसमाहितान् ॥ २०३
हेमसूत्रैः सकटकैरङ्गुलीयपवित्रकैः । वासोभिः शयनीयैश्च तथोपस्करपादुकैः ॥ २०४
क्षीराभिषेचनं कुर्याद्यावद्दिनचतुष्टयम् । होमश्च सर्पिषा कार्यो यवैः कृष्णतिलैरपि ॥ २०५
पालाशसमिधः शस्ताश्चतुर्थेऽह्नि तथोत्सवः । दक्षिणा च पुनस्तद्वद्देया तत्रापि शक्तितः ॥ २०६
यद्यदिष्टतमं किंचित्तत्तद्दद्यादमत्सरी । आचार्ये द्विगुणं दत्त्वा प्रणिपत्य समापयेत् ॥ २०७
अनेन विधिना यस्तु कुर्याद्वृक्षोत्सवं बुधः । सर्वान्कामानवाप्नोति फलं चानन्तमश्नुते ॥ २०८
यश्चैवमपि राजेन्द्र वृक्षं संस्थापयेद्बुधः । सोऽपि स्वर्गे वसेद्राजन्यावदिन्द्रायुतत्रयम् ॥ २०९
भूतान्भव्यांश्च मनुजांस्तारयेद्रोमसंमितान् । परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ॥ २१०
य इदं शृणुयान्नित्यं श्रावयेद्वाऽपि मानवः । सोऽपि संपूज्यते देवैर्ब्रह्मलोके महीयते ॥ २११
अपुत्रस्य च पुत्रित्वं पादपा इह कुर्वते । तीर्थेषु पिण्डदानादीन्रोपकाणां ददन्ति ते ॥ २१२
यत्नेनापि च राजेन्द्र अश्वत्थारोपणं कुरु । स ते पुत्रसहस्राणामेक एव करिष्यति ॥ २१३
धनी चाश्वत्थवृक्षेण अशोकः शोकनाशनः । प्लक्षो यज्ञप्रदः प्रोक्तो निम्ब आयुष्प्रदः स्मृतः २१४
जम्बुकी कन्यदा प्रोक्ता भार्यादा दाडिमी तथा । अश्वत्थो रोगनाशाय पलाशो ब्रह्मदस्तथा ॥
प्रेतत्वं जायते पुंसो रोपयेद्यो विभीतकम् । अङ्कोले कुलवृद्धिस्तु खादिरे चाप्यरोगता ॥ २१६
निम्बप्ररोहकाणां तु तेषां तुष्येद्दिवाकरः । श्रीवृक्षे शंकरो देवः पाटलायां तु पार्वती ॥ २१७
शिंशपायामप्सरसः कुन्दे गन्धर्वसत्तमाः । तिन्तिडीके दासवर्गा वञ्जुलो दस्युदस्तथा ॥ २१८
पुण्यप्रदः श्रीप्रदश्च चन्दनः पनसस्तथा । सौभाग्यदश्चम्पकस्तु करीरः पारदारिकः ॥ २१९
अपत्यनाशकस्तालो वकुलः कुलवर्धनः । बहुभार्या(र्यो) नालिकेली(रो) द्राक्षा सर्वाङ्गसुन्दरी ॥
रतिप्रदा तथा कोली केतकी शत्रुनाशिनी । एवमादिनगाश्चान्ये ये नोक्तास्तेऽपि दायकाः ॥
प्रतिष्ठां ते गमिष्यन्ति ये नरा वृक्षरोपकाः* ॥ २२१

पुलस्त्य उवाच—

तथैवान्यत्प्रवक्ष्यामि सर्वकामफलप्रदम् । सौभाग्यशयनं नाम यत्पुराणविदो विदुः ॥ २२२
पुरा दग्धेषु लोकेषु भूर्भुवःस्वर्महादिषु । सौभाग्यं सर्वभूतानामेकस्थमभवत्तदा ॥ २२३
वैकुण्ठं सर्वमासाद्य विष्णोर्वक्षस्थले स्थितम् । ततः कालेन महता पुनः सर्गविधौ नृप ॥ २२४
अहंकारावृते लोके प्रधानपुरुषान्विते । स्पर्धायां च समृद्धायां कमलासनकृष्णयोः ॥ २२५
पिङ्गाकारा समुद्भूता वह्निज्वाला विभीषणा । तयाऽभितप्तस्य हरेर्वक्षसस्तद्विनिःसृतम् ॥ २२६

---

*अत्र ञ. पुस्तकेऽध्यायसमाप्तिर्दृश्यते ।

---

१ ख. ग. ज. °तमेखलाम् । २ झ. °सामाथर्वैश्च । ३ झ. क्षमापयेत् । ४ घ. ज. पदं । ५ क. ख. ग. घ. ङ. च. ज. °रु । शतपु° । ६ ख. ङ. च. °प्रोक्तः क्षीरी चाऽऽयु° । ग. प्रोक्तश्चिञ्चा चाऽऽयु° । ७ झ. अशोके । ८ ञ. °ञ्जुले दस्यवस्त° । ९ क. ख. ङ. च. °की पुत्रना° । १० क. ख. ग. ङ. च. लिङ्गाकारा । झ. पिङ्गेक्षणा ।

यद्वक्षस्थलमाश्रित्य विष्णौ सौभाग्यमास्थितम्[1] । रसं रूपं न तद्यावदाप्नोति वसुधातले ॥ २२७
उत्क्षिप्तमन्तरिक्षं तु ब्रह्मपुत्रेण धीमता । दक्षेण पीतमात्रं च रूपलावण्यकारकम् ॥ २२८
बलं तेजो महाजा(ह्ज्ञा)तं[2] दक्षस्य परमेष्ठिनः । शेषं यदपतद्भूमावष्टधा तद्व्यजायत ॥ २२९
ततस्त्वोषधयो जाताः सप्त सौभाग्यदायिकाः । इक्षवस्तरुराजश्च निष्पावा[3] राजधान्यकम् २३०
विकारवच्च गोक्षीरं कुसुम्भं कुं[4]सुमं तथा । लवणं चाष्टमं तद्वत्सौभाग्याष्टकमुच्यते ॥ २३१
पीतं यद्ब्रह्मपुत्रेण योगज्ञानविदा पुरा । सुता च साऽभवत्तस्य या सतीत्यभिधीयते ॥ २३२
लो[5]के नीलोत्पलनिभा ललिता तेन चोच्यते । त्रैलोक्यसुन्दरीं देवीमुपयेमे पिनाकधृक् ॥ २३३
त्रिविश्वसौभाग्यमयी भुक्तिमुक्तिफलप्रदा । तामाराध्य पुमान्भक्त्या नारी वा किं न विन्दति ॥

भीष्म उवाच—

कथमाराधनं तस्या जग[6]द्धात्र्या जनार्दन । यद्विधानं च जगतः शान्तये तद्वदस्व मे ॥ २३५

पुलस्त्य उवाच—

वसन्तमासमासाद्य तृतीयायां जनप्रियः । शुक्लपक्षस्य पूर्वाह्णे तिलस्नानं समाचरेत् ॥ २३६
तस्मिन्नहनि सा देवी किल विश्वात्मना सती । पाणिग्रहणकैर्मन्त्रैरुद्वोढा वरवर्णिनी ॥ २३७
तया सहैव देवेशं तृतीयायामथार्चयेत् । फलैर्नानाविधैर्दीपैर्धूपनैवेद्यसंयुतैः ॥ २३८
प्रतिमां पञ्चगव्येन तथा गन्धोदकेन च । स्नापयित्वाऽर्चयेद्गौरीमिन्दुशेखरसंयुताम् ॥ २३९
नमोऽस्तु पा[7]र्वतीदेव्यै पादौ देव्याः शिवस्य च । शिवायेति च संकीर्त्य जयायै गुल्फयोर्द्वयोः॥
त्र्यम्बकायेति रुद्रस्य भवान्यै जङ्घयोर्द्वयम् । शिरो भद्रेश्वरायेति विजयायै च जानुनी ॥ २४१
संकीर्त्य हरिकेशाय त[8]थैव वरदे नमः । ईशायेति कटिं रत्यै शंकरायेति शंकरम् ॥ २४२
कुक्षिद्वयं च कौटि[9]न्यै शूं[10]लिने शूलपाणये । मङ्गलायै नमस्तुभ्यमुदरं चाभिपूजयेत् ॥ २४३
सर्वात्मने नमो रुद्रमीशान्यै च कुचद्वयम् । शिवं[11] चिदात्मने तद्वद्रुद्राण्यै कण्ठमर्चयेत् ॥ २४४
त्रिपुरघ्नाय विश्वेशमनन्तायै करद्वयम् । त्रिलोचनायेति हरं बाहू[12] कालानलप्रिये ॥ २४५
सौभाग्यभवनायेति भूषणानि सदाऽर्चयेत् । स्वाहा[13] सुधायै च (?) मुखमीश्वरायेति शूलिनम् ॥
अशोकवनवासिन्यै पूज्यावोष्ठौ विभूतिदौ । स्थाणवे च हरं तद्वदास्यं चन्द्रमुखप्रिये ॥ २४७
नमोऽर्धनारीश हर असिताङ्गीति नासिकाम् । [*नम उग्राय लोकेशं ललितेति पुनर्भ्रुवौ॥२४८
शर्वाय पुरहन्तारं वासुदे[14]व्यै तथाऽलकान् । नमः श्रीकण्ठनाथाय शिवकेशांस्तथाऽर्चयेत्]॥२४९
नमो भीमोग्ररूपिण्यै शिरः सर्वात्मने नमः । हरमभ्यर्च्य विधिवत्सौभाग्याष्टकमग्रतः ॥ २५०
स्थापये[15]त्तत्र निष्पावान्कुसुम्भं क्षीरजीरकम् । तरुराजेक्षुलवणं कुं[16]सुमं च तथाऽष्टकम् ॥ २५१
दत्तं सौभाग्यमेतस्मात्सौभाग्याष्टकमित्युत । एवं निवेद्य तत्स[17]र्वमग्रतः शिवयोः पुनः ॥ २५२
चैत्रे शृङ्गाटकं प्राश्य स्वपेद्भूमावरिंदम । पुनः प्रभात उत्थाय कृतस्नानजपः शुचिः ॥ २५३

---

* धनुश्चिह्नान्तर्गतः पाठः ग. घ. ज पुस्तकस्थः ।

---

१ ग. घ °म् । न तद्रूपं समाप्नोति स्वरूपं व° । २ झ. महाज्ञानं । ३ ञ. °वा जातिधा° । ४ क. घ. ज कुमुदं । ५ क. ख. ग. घ. ङ. च. ज. लोकानतीत्य ललिता ल° । ६ ञ. ललिताया । ७ ञ. पाटलायै तु पा° । ८ ञ. तथोरुव° । ९ ञ. कोटव्यै । १० ञ. शूलिनं । ११ क. ख. ग. घ. ङ. च. ज. °वं वेदात्म° । १२ ग. घ. ज. °हू यन्मङ्गल° । १३ झ. °हा स्वधायेति मु° । १४ क. घ. ज. शिवः । १५ ञ. °येत्त्रिगधानि° । १६ ञ. कुस्तुम्बुरुमथाष्टमम् । १७ क. च. °त्सर्वं संपन्नः ।

संपूज्य द्विजदांपत्यं माल्यवस्त्रविभूषणैः । सौभाग्याष्टकसंयुक्तं सौवर्णप्रतिमाद्वयम् ॥ २५४
प्रीयतां मेऽत्र ललिता ब्राह्मणाय निवेदयेत् । एवं संवत्सरं यावत्तृतीयायां सदा नृप ॥ २५५
प्राशने दानमन्त्रे च विशेषोऽयं निबोध मे । [*गोशृङ्गाम्बु मधौ प्रोक्तं वैशाखे गोमयं पुनः २५६
ज्येष्ठे मन्दारकुसुमं बिल्वपत्रं शुचौ स्मृतम् । श्रावणे दधि संप्राश्यं नभस्ये तु कुशोदकम् ॥ २५७
क्षीरं चाऽऽश्वयुजे मासि कार्तिके पृषदाज्यकम् । मार्गे तु मासे गोमूत्रं पौषे संप्राशयेद्घृतम् २५८
माघे कृष्णतिलांस्तद्वत्पञ्चगव्यं च फाल्गुने । ललिता विजया भद्रा भवानी कुमुदा शिवा २५९
वासुदेवा तथा गौरी मङ्गला कमला सती । उमा च दानकाले तु प्रीयतामिति कीर्तयेत् ] २६०
तस्मिंस्तु द्वादशे मासि द्वादश्यां विष्णुमर्चयेत् । तथा लक्ष्मीं च तत्रैव भर्त्रा सह समर्चयेत् ॥ २६१
पौर्णमास्यामथो तद्वत्सपत्नीकः पितामहः । उपासनीयो विधिना परत्र गतिमिच्छता ॥ २६२
सौभाग्याष्टकं तद्वच्च दातव्यं भूतिमिच्छता । मल्लिकाशोककमलं कदम्बोत्पलचम्पकम् ॥ २६३
कुब्जकं करवीरं च बालमम्लानपङ्कजम् । सिन्दुवारं च सर्वेषु मासेषु कुसुमं स्मृतम् ॥ २६४
जपाकुसुम्भकुसुमं मालती शतपत्रिका । यथालाभं प्रशस्तानि करवीरं च सर्वदा ॥ २६५
एवं संवत्सरं यावदुपोष्य विधिवन्नरः । स्त्री वा नक्तं कुमारी वा शिवमभ्यर्च्य भक्तितः ॥ २६६
व्रतान्ते शयनं दद्यात्सर्वोपस्करसंयुतम् । उमामहेश्वरौ हैमौ वृषभं च गवा सह ॥ २६७
स्थापयित्वा तु शयनं ब्राह्मणाय निवेदयेत् । द्वादश्यां वत्सरं त्वेकं महालक्ष्म्या च केशवम् ॥
ब्रह्माणं सह सावित्र्या पूजयित्वा कुरूद्वह । सर्वान्कामानवाप्नोति मनसा यानभीप्सति ॥ २६९
अन्यान्यपि यथाशक्त्या(क्ति) मिथुनान्यम्बरादिभिः । धान्यालंकारगोदानैरन्यैश्च धनसंचयैः ॥
वित्तशाठ्येन रहितः पूजयेत्कृतनिश्चयः । एवं करोति या सम्यक्सौभाग्यशयनव्रतम् ॥ २७१
सर्वान्कामानवाप्नोति पदं वा नित्यमश्नुते । फलस्यैकस्य च त्यागमेतत्कुर्वन्समाचरेत् ॥ २७२
यशः कीर्तिमवाप्नोति प्रतिमासं नराधिप । सौभाग्यारोग्यरूपैश्च वस्त्रालंकारभूषणैः ॥ २७३
न वियुक्तो भवेद्राजन्सौभाग्यशयनप्रदः । यस्तु द्वादश वर्षाणि सौभाग्यशयनव्रतम् ॥ २७४
करोति सप्त वाऽष्टौ वा ब्रह्मलोकगतैर्नरैः । पूज्यमानो वसेत्सम्यग्यावत्कल्पायुतं नरः ॥ २७५
विष्णुलोकमथाऽऽसाद्य शिवलोकगतस्तथा । नारी वा कुरुते या तु कुमारी वा नरेश्वर ॥ २७६
साऽपि तत्फलमाप्नोति देव्यनुग्रहलालिता । शृणुयादपि यश्चैवं प्रदद्यादपि वा मतिम् ॥
सोऽपि विद्याधरो भूत्वा स्वर्गलोके चिरं वसेत् ॥ २७७

इदमिह मदनेन पूर्वमेव शतधनुषा च नरेश्वरेण तद्वत् ।
कृतमथ वरुणेन चण्डधाम्ना धननाथेन तथा महाद्भुतं स्यात् ॥ २७८

† इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे व्रतकथनं नाम चतुर्विंशतितमोऽध्यायः ॥ २४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२४६९८

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. पुस्तकस्थः । + अत्र "ग्र" पुस्तक एतत्खण्डस्य पूर्वार्धे समाप्तिं नीतम् ।

१ झ. °नकुङ्कुमम् । २ क. ख. ग. घ. ङ. च. ज. °त्वा नरास्त्विह । ३ ख. ग. घ. ङ. च. ज. धान्यं लक्ष्मीं च यज्ञार्थैरन्यत्र च न संशयः । वि° । ४ ख. घ. ङ. च. ज. °येद्गतविस्मयः । ५ ख. ग. घ. ङ. च. ज. °लोके महीयते । पू° । ६ क. ख. ङ. ज. °थ पवनेन नन्दिना च किमु जननाथ महाद्भुतं न वा स्या° । ७ ग घ. °न नन्दिना च किमु जननाथ महाद्भुतं न वा स्या° ।

अथ पञ्चविंशोऽध्यायः ।

---

भीष्म उवाच—

[*श्रुतमेतत्त्वत्प्रसादाद्द्विप्रवर्य पुरातनम् । यज्ज्ञात्वा मुच्यते पापैः श्रवणेन च पुण्यभाक् ॥ १
इदानीं श्रोतुमिच्छामि तीर्थमाहात्म्यमद्भुतम् । ब्रूहि विस्तरतो ब्रह्मन्यच्छ्रुत्वा मुच्यते नरः॥ २

पुलस्त्य उवाच—

सन्ति तीर्थान्यनेकानि पावनानि च सुव्रत । येषां कीर्तनतोऽपि स्यान्महापातकनाशनम् ॥ ३
तीर्थानां दर्शनं स्नानं पुनस्तत्रावगाहनम् । स्मरणं सर्वतीर्थानां वाञ्छितार्थफलप्रदम् ॥ ४
पर्वताश्च तथा नद्यस्तीर्थानि कथितानि वै। क्षेत्राणि चाऽऽश्रमा भीष्म मानसादिसरांसि च॥ ५
गच्छतस्तीर्थयात्रार्थं यान्युद्दिश्य पदे पदे । अश्वमेधादियज्ञानां फलं स्यान्नात्र संशयः ॥ ६
तेषां किंस्विद्वदाम्यत्र तत्त्वं मां वक्तुमर्हसि ॥ ७

भीष्म उवाच—

विष्णोश्चरितमिच्छामि श्रोतुं त्वत्तो द्विजोत्तम] । यज्ञपर्वतमासाद्य विष्णुना प्रभविष्णुना ॥ ८
पदानि चेह दत्तानि किमर्थं पदपद्धतिः । कृता वै देवदेवेन तन्मे वद महामते ॥ ९
कतमो दानवस्तेन विष्णुना दमितोऽत्र वै । कृत्वा वै पदविन्यासं तन्मे शंस महामुने ॥ १०
स्वर्लोके वसतिर्विष्णोर्वैकुण्ठेऽस्य महात्मनः । स कथं मानुषे लोके पदन्यासं चकार ह ॥ ११
देवलोकेषु वै देवं देवाश्चेन्द्रपुरोगमाः । तपसा महता ब्रह्मन्भक्त्या ये सततं प्रभुम् ॥ १२
न कश्चिदेनं शक्नोति द्रष्टुं भक्त्या विना प्रभुम् । श्रीवराहस्य वसतिर्महर्लोके प्रकीर्तिता ॥ १३
नृसिंहस्य तथा प्रोक्ता जनलोके महात्मनः । त्रिविक्रमस्य वसतिस्तपोलोके प्रकीर्तिता ॥ १४
लोकानेतान्परित्यज्य कथं भूमौ पदद्वयम् । क्षेत्रे पैतामहे चास्मिन्पुष्करे यज्ञपर्वते ॥ १५
पदानि कृतवान्ब्रह्मन्विस्तरान्मम कीर्तय । श्रुतेन सर्वपापस्य विनाशो भविता ध्रुवम् ॥ १६

पुलस्त्य उवाच—

सम्यक्पृष्टं त्वया वत्स शृणु त्वं तु समाहितः। यथा पूर्वं पदन्यासः कृतो देवेन विष्णुना ॥ १७
यज्ञपर्वतमासाद्य शिलापर्वतरोधसि । पुरा कृतयुगे भीष्म देवकार्यार्थसिद्धये ॥ १८
विष्णुना तु कृतं सर्वं पृथिव्यर्थे परंतप । त्रिदिवं सर्वमाक्रान्तं दानवैर्बलवत्तरैः ॥ १९
त्रैलोक्यं च समानीतं जित्वा देवान्सवासवान् । दानवा यज्ञभोक्तारस्तत्राऽऽसन्बलवत्तराः २०
कृता वाष्कलिना सर्वे दानवेन बलीयसा । एवंभूते तदा लोके त्रैलोक्ये सचराचरे ॥ २१
परमार्तिं ययौ शक्रो निराशो जीविते स्वके । स वाष्कलिर्दानवेन्द्रोऽप्यवध्यो मम संयुगे ॥ २२
ब्रह्मणो वरदानेन सर्वेषां तु दिवौकसाम् । तदहं ब्रह्मणो लोके वृतः सर्वैर्दिवौकसैः ॥ २३
व्रजामि शरणं देवं गतिरन्या न विद्यते । एवं विचिन्त्य देवेन्द्रो वृतः सर्वैर्दिवौकसैः ॥ २४
जगाम त्वरितो भीष्म यत्र देवः पितामहः । ब्रह्मणः सदनं प्राप्य वृतस्तैस्त्रिदिवौकसैः ॥
अब्रवीज्जगतः कार्यं प्रीतः प्राप्तं चाऽऽपदमुत्तमाम् ॥

---

* धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. ज. पूर्वे । २ ञ. परं तपः । त्रि° । ३ झ. प्राप्य ।

इन्द्र उवाच—

किं न जानासि वै देवं कुतो नो जीवनं तथा । दैत्यैः समाहृतं सर्वं वरदानाच्च ते प्रभो ॥ २६

कथितं वै मया सर्वं वाष्कलेश्च दुरात्मनः । क्रियतां चाविलम्बेन पिता त्वं नः पितामह ॥ २७

तत्त्वं चिन्तय देवेश शान्त्यर्थं जगतस्त्विह । तेषामपश्यतां किंचिच्छ्रौतस्मार्तादिकाः क्रियाः २८

प्रवर्तेरन्न हानिस्तु तैरस्माकं दिने दिने । यथा हि प्राकृतैः कैश्चित्स्वार्थमुद्दिश्य भाष्यते ॥ २९

विज्ञाप्यसे तथाऽस्माभिर्निरस्तोपकृतैः प्रभो । यद्येनोपकृतं यस्य सहस्रगुणितं पुनः ॥ ३०

यो न तस्योपकाराय तत्करोति वृथामतिः । तस्योपकारदग्धस्य निस्त्रपस्यासतः पुनः ॥ ३१

नरकेष्वपि न स्थानमस्य दुष्कृतकारिणः । नैतावतैव साधुत्वं कृते या तु प्रतिक्रिया ॥ ३२

स्वार्थैः कनिष्ठवुद्धीनामेतन्नापि प्रवर्तते । यद्यस्य नाभवत्स्थानं जगतो ह्यत्र दुःखदम् ॥ ३३

शतधा हृदयं दीर्णं तन्न तृप्तिमुपागतम् । तत्र वा यत्र गन्ताऽस्मान्निमग्नानुद्धरस्व नः ॥ ३४

उपायकथनेनापि येन तेजः प्रवर्धते । यथाख्यातां मया दृष्ट्वा जगतस्तामवस्थितिम् ॥ ३५

निःस्वाध्यायवषट्कारं निवृत्तोत्सवमङ्गलम् । त्यक्ताध्ययनसंयोगं मुक्तवार्तापरिग्रहम् ॥ ३६

दण्डनीत्या परित्यक्तं श्वासमात्रावशेषितम् । जगदार्तिमपि प्राप्तं पुनः कष्टतरां दशाम् ॥

एतावता हि कालेन वयं ग्लानिमुपागताः ॥ ३७

ब्रह्मोवाच—

जानामि वाष्कलिं क्षुद्रं वरदानाच्च गर्वितम् । अजेयं भवतां मन्ये विष्णुसाध्यो भविष्यति ॥ ३८

पुलस्त्य उवाच—

निरुध्य संस्थितो ब्रह्मा भावं तत्त्वमयं तदा । समाधिस्थस्य तस्यैव ध्यानमात्राच्चतुर्भुजः ॥ ३९

स्तोकेनैव हि कालेन चिन्त्यमानः स्वयंभुवा । आजगाम मुहूर्तेन सर्वेषामेव पश्यताम् ॥ ४०

विष्णुरुवाच—

भो भो ब्रह्मन्निवर्तस्व ध्यानादस्मान्निवारितः । यदर्थमिष्यते ध्यानं सोऽहं त्वां समुपागतः ॥ ४१

ब्रह्मोवाच—

महाप्रसाद एषोऽत्र स्वामिनोऽत्र प्रदर्शनम् । कस्यान्यस्य भवेदेषा चिन्ता या जगतः प्रभोः ४२

ममैव तावदुत्पत्तिर्जगदर्थे विनिर्मिता । जगदेतत्तदर्थोऽयं तत्त्वतो नास्ति विस्मयः ॥ ४३

भवता पालनं कार्यं संहारे रुद्र एव तु । एवंभूते जगत्यस्मिञ्शक्रस्यास्य महात्मनः ॥ ४४

हृतं राज्यं वाष्कलिना त्रैलोक्यं सचराचरम् । भृत्यस्य क्रियतां साह्यं(?) मन्त्रदानेन केशव ॥ ४५

वासुदेव उवाच—

भवतो वरदानेन अवध्यः स तु सांप्रतम् । बुद्धिसाध्यः स वै कार्यो बन्धनादिह दानवः ॥ ४६

वामनोऽहं भविष्यामि दानवानां विनाशकः । मया सह व्रजत्वेष बाष्कलेस्तु निवेशनम् ॥ ४७

तत्र गत्वा वरं त्वेष मदर्थे याचतामिमम् । वामनस्यास्य विप्रस्य भूमे राजन्पदत्रयम् ॥ ४८

---

१ ख. ङ. च. °व यतो नो भयमागतम् । दै° । २ ग. घ. ज. °था । तैरिदमावृतं । झ. °था । तैर्ममापकृतं । ३ ख. °त्वं प्रपितामहः । त° । ४ क. ख. ग. घ. ङ. च. ज. सदा । ५ ञ. यन्नगं तस्मिन्नि° । ६ क. ख. ग. घ. ङ. च. ज. °थाऽऽऽस्मानं मया दृष्टं जगत्तत्स्थमवोक्षितम् । ७ क. ख. ग. घ. ङ. च. ज. °लिं तं तु व° । ८ ग. °नः । देवकार्ये प्रवृत्तस्य शासनाद्भवतः प्रभो । ननु बाष्कलिना सर्वमन्यथा क्रियते प्रभो । तच्छ्रुत्वा ब्रह्मणो वाक्यं तमाह भगवान्प्रभुः । बु° । ९ झ. °नस्य सुरूपस्य ।

प्रयच्छस्व महाभाग याञ्चैषा तु मया कृता । शक्रेणोक्तो दानवेन्द्रो दद्यात्स्वमपि जीवितम् ॥ ४९
गृह्य प्रतिग्रहं तस्य दानवस्य पितामह । वञ्चयित्वा ततो[१] बद्ध्वा कृत्वा पातालवासिनम् ॥ ५०
शौकरं रूपमास्थाय वधार्थेऽस्य दुरात्मनः । भविष्यामि न संदेहो व्रज शक्र त्वरान्वितः ॥ ५१

पुलस्त्य उवाच—

विरराम तमुक्त्वैवमन्तर्धानं गतश्च वै । अथ कालान्तरे विष्णावदितेर्गर्भतां गते ॥ ५२
निमित्तानि[२] शुभान्येवं प्रादुर्भूतान्यनेकशः । समस्तजगदाधारे विष्णौ गर्भत्वमागते ॥ ५३
शोभनं हितैकालस्य निर्मित्तं वैरसूचितम् । मालतीकुसुमानां च सुगन्धः सुरभिर्ववौ ॥ ५४
अथ विहितविधानं कालमासाद्य देवस्त्रिदशगणहितार्थं सर्वभूतानुकम्पी ।
विमलविरलकेशश्चन्द्रखण्डोदयश्रीरदितितनयभावं देवदेवश्चकार ॥ ५५
अवतरति च विष्णौ सिद्धदेवासुराणामनिमिषनयनानां विप्रसेदुर्मुखानि ॥
अतिविगतरजोभिर्वायुभिः संवहद्भिर्दिनमपि च तदाऽऽसीज्जन्म विष्णोः सुगर्भे ॥ ५६
प्रविशति खलु गर्भे साऽपि देवी श्रमार्ता नतजघनभरार्ता मन्दसंचाररम्या ।
अलसवदनखेदं पाण्डुभावं वहन्ती गुरुतरमवगाढं गर्भमेवोद्वहन्ती ॥ ५७
ततः प्रविष्टे खलु गर्भवासं नारायणे भूतभविष्ययोगात् ।
विनाऽऽपदं प्राप्तमनोरथानि भूतानि सर्वाणि तदा बभूवुः ॥ ५८
समीरणो वाति च मन्दमन्दं पतत्सु वर्षेषु नगोद्भवेषु ।
विविक्तमार्गेषु दिगन्तरेषु जनेषु वै सत्यमुपागतेषु ॥ ५९
विमुच्यमाने गगने रजोभिः शनैः शनैर्नश्यति चान्धकारे ॥ ६०
उदरान्तर्गते विष्णौ द्रोहबुद्धिस्तदाऽभवत् । तां निशामय राजेन्द्र देवमातुर्यथाक्रमात् ॥ ६१
किमहं क्रमेण चैकेन लङ्घयामि त्रिविष्टपम् । वाष्कलिं दानवेन्द्रं च कुर्यां पातालवासिनम् ६२
शक्रस्य तु मया दत्तं धनं लावण्यमेव च । दानवानां विनाशाय एक एव भवाम्यहम् ॥ ६३
क्षिपामि शरजालानि चक्रपातान्यनेकशः । गदाघातांश्च विविधान्दानवानां विनाशने ॥ ६४
विबुधान्देवलोकस्थानधो भूमेस्तु दानवान् । करोमि कालक्षेपेण तत्तु कार्यमृते न मे ॥ ६५
निःसृता सहसा वाणी वक्त्रमेवाभिसंस्थिता । येनेदं चिन्त्यते पूर्वं यन्न दृष्टं न तु श्रुतम्[११] ॥ ६६
बन्धनं[१२] दनुमुख्यस्य कृतं कोपेन पश्य मे । कश्यपाय पुरा दत्तं धनं लावण्यमेव च ॥ ६७
किमयं चेतसोत्साहो वायवोऽथ समाकुलाः(?)। भ्रमतीव हि मे दृष्टिर्नेदृग्रूपं विचिन्तितम् ॥ ६८
आविष्टा किमहं वच्मि केनाप्यसदृशं वचः । विकल्पवशमापन्नाऽभीक्ष्णं हि विममर्श सा ॥ ६९
दधार दिव्यं वर्षाणां सहस्रं दिव्यमीश्वरम् । ततः समभवत्तस्यां वामनो भूतभावनः ॥ ७०
जातेन येन चक्षूंषि दानवानां हृतानि वै । जातमात्रे ततस्तस्मिन्देवदेवे जनार्दने ॥ ७१

---

१ क. ख. ग. घ. ङ. च. ज. °तो यत्नात्कृत्वा । २ ग. घ. ज. °त्तान्यतिघोराणि प्रा° । ३ क. ख. ङ. च. तदा जातं नि° । ४ क. ख. ङ. च. °त्तं चैवमूर्जित° । ग. घ. ज. °त्तं वैरभूषित° । ५ क. ख. ङ. च. °न्द्रशङ्खोपलब्धिर° । ग. घ. ज. °न्द्रशङ्खोद° । ६ क. घ. ज. °वितत° । ७ क. ख. म. घ. ङ. च. ज. °र्भे । अदितिरजनिगर्भा साऽ° । ८ क. ख. ङ. च. °र्ता सुतजठरभ° । ९ ञ. एकैव प्रभ° । १० क. ख. ग. घ. ङ. च. ज. °लयोगेन त° । ११ क. ख. ग. घ. ङ. च. ज. °म् । वधं वै द° । १२ क. ख. ङ. च. °यं विगतोत्साह ऋतवोऽथ स° । ग. घ. ज. °यं विगतोत्साह ऋतवोऽर्थस° । १३ क. ख. ग. घ. ङ. च. ज. °न्ना तीक्ष्णं ।

नद्यः स्वच्छाम्बुवाहिन्यो ववौ गन्धवहोऽनिलः । कश्यपोऽपि मुदं लेभे तेन पुत्रेण भास्वता ॥
सर्वेषां मानसोत्साहस्त्रैलोक्योदरवासिनाम्[1] ॥ ७२

संजातमात्रे तु ततो जनार्दने[3] स्वर्लोकतो दुन्दुभयो विनेदुः ।
अतिप्रहर्षात्तु जगत्त्रयस्य मोहश्च दुःखानि च नाशमीयुः ॥ ७३
जगौ च गन्धर्वगणोऽतिमात्रं तारस्वरैर्भर्तृविमिश्रितश्च ।
सुराङ्गना हि स्तनभारयुक्ता नृत्यन्ति तत्राप्सरसां समूहाः ॥ ७४
तथैव विद्याधरसिद्धसंघा विमानयानैर्मुदिता भ्रमन्ति ।
वदन्ति सत्यानृतकार्यनिर्णयं तथाऽभिरङ्गं प्रति दर्शयन्ति ॥ ७५
गायन्ति गेयं विनिवृत्तरागा मुहुर्मुहुर्दुःखसुखस्य भूताः ।
नृत्यन्ति तं स्वर्गगताश्च ते वै धर्मार्जितं स्वर्गमितो व्रजन्ति ॥ ७६

इति विगतविषादे निर्मले जीवलोके तिमिरनिकरमुक्ता निर्वृतिं प्राप्तुकामाः ॥* ७७

तत्रोचुः केचिदुच्चैर्जय जय भगवन्संप्रहृष्टाश्च केचि-
देवं प्रोक्तः प्रणादैरविरतमनसा साधुवादस्तथाऽन्यैः ।
ध्यायन्त्यन्ये निगूढं जननभयजरामृत्युविच्छेदहेतो-
रित्येवं कृत्स्नमासीज्जगदिदमखिलं सर्वतः संप्रहृष्टम् ॥ ७८

परमात्मा ह्ययं विष्णुर्ब्रह्मणा जगतः कृते । ग्राहितो व्यङ्गतामेतामाराच्च जगदीश्वरः ॥ ७९
एष ब्रह्मा च विष्णुश्च एष एव महेश्वरः । एष देवाश्च यज्ञाश्च स्वर्गश्चैष न संशयः ॥ ८०
विष्णुव्याप्तमिदं सर्वं जगत्स्थावरजङ्गमम् । एकः स तु पृथक्त्वेन स्वयंभूरिति विश्रुतः ॥ ८१
यथार्थवर्णके स्थाने विचित्रः स्फाटिको मणिः । ततो गुणवशात्तस्य स्वयंभोरनुरञ्जनम् (?)॥ ८२
यथाऽसौ गार्हपत्योऽग्निरन्यसंज्ञां पुनर्व्रजेत् । दक्षिणाहवनीयादिं ब्रह्मादिषु तथा ह्यसौ ॥ ८३
सर्वत्र वामनो देवो देवकार्यं करिष्यति । एवं चिन्तयतां तेषां भावितानां दिवौकसाम् ॥ ८४
जगाम शक्रसहितो बाष्कलेश्च निवेशनम् । दूरादेव च तां दृष्ट्वा पुरीं तस्य समावृताम् ॥ ८५
पाण्डुरैः खगमागम्यैः सर्वरत्नोपशोभितैः । शोभितां भवनैर्मुख्यैः सुविभक्तमहापथैः ॥ ८६
नित्यप्रभिन्नैर्मातङ्गैरञ्जनाचलसंनिभैः । देवनागकुलोत्पन्नैः शतसंख्यैर्विराजिताम् ॥ ८७
निर्मांसगात्रैस्तुरगैरल्पकर्णैर्मनोजवैः । दीर्घग्रीवाक्षिकूटैश्च मनोज्ञैरुपशोभिताम् ॥ ८८
पद्मगर्भसुवर्णाभाः पूर्णचन्द्रनिभाननाः । संलापोल्लापकुशलास्तत्र वेश्याः सहस्रशः ॥ ८९
न तत्पुण्यं न सा विद्या न तच्छिल्पं न सा कला । बाष्कलेर्न पुरेऽस्याथ निवासं प्रतिगच्छति
उद्यानशतसंबाधे समाजोत्सवमालिनि । अन्विते दनुमुख्यैश्च सर्वैरन्तकवर्जितैः ॥ ९१

* अस्योत्तरार्धं नष्टमिति ज्ञायते वृत्तभेदात् ।

१ क. ख ग. घ. ङ. च. ज. सुखं । २ झ. °सोन्मादस्त्रै° । ३ क. ख. ग. घ. ङ. च. ज. °देनजनार्दने । स्वर्गलोके दुन्दुभयो विनेदुस्तैस्तु ताडिताः । अ° । ४ ख. ङ. °नाश्चापि च भावयु° । ५ ग. °के युवतिनिकरयुक्ता° । ६ क. ख. ग. घ. ङ. च. ज. °दुर्व्यो जय । ७ क. ङ. च. °रत्नमनसश्चानुवा° । ग. घ. ज. °रत्नमनसः सानुवा° । ८ क. ख. ङ. च. °तें । जातोऽयं भवतामर्थे वामयो यदिपीश्व° । ९ क. ख. ग. घ. ङ. च. ज. °ष वेदाश्च । १० क. ख. ङ. च. ज. °नुवर्तन° । ग. घ. °नुवर्जनम् । ११ क. ख. ङ. च. ज. °त् । लभेत संज्ञां भगवान्ब्रह्मा° । १२ क. ख. ग. घ. ङ. च. ज. सर्वथा । १३ झ. महोक्षैरु° । १४ ग. घ. ज. विलासं ।

वीणावेणुमृदङ्गानां शब्दैः सर्वत्र नादिते । सदा प्रहृष्टा दनुजा बहुरत्नोपशोभिताः ॥ ९२
क्रीडमानाः प्रदृश्यन्ते मेराविव यथाऽमराः । ब्रह्मघोषो महांस्तत्र द्विजवृन्दैरुदीरितः ॥ ९३
साज्यधूमेन चाग्नीनां वायुना नष्टकिल्बिषे । सुगन्धधूपविक्षेपसुरभीकृतमारुतैः ॥ ९४
सुगन्धिदनुजाकीर्णे पुरे तस्मिंस्तु वाष्कलिः । त्रैलोक्यं तु वशे कृत्वा सुखेनाऽऽस्ते च दानवः ॥
तत्रस्थः पालयन्नास्ते त्रैलोक्यं सचराचरम् । धर्मज्ञश्च कृतज्ञश्च सत्यवादी जितेन्द्रियः ॥ ९६
सुदर्शः सर्वभूतानां नयानयविचक्षणः । ब्रह्मण्यश्च शरण्यश्च दीनानाथानुकम्पकः ॥ ९७
वेदमन्त्रप्रभूत्साहशक्तिभिश्च समन्वितः । षाड्गुण्यविषयोत्साहः स्मितपूर्वाभिभाषितः ॥ ९८
वेदवेदाङ्गतत्त्वज्ञो यज्ञयाजी तपोरतः । अक्षुद्रः शीलनियतः सर्वसत्त्वाविहिंसकः ॥ ९९
मान्यमानयिता शुद्धः सुमुखः पूज्यपूजकः । सर्वार्थविदनाधृष्यः सुभगः प्रियदर्शनः ॥ १००
बहुधान्यो बहुधनो बहुदानश्च दानवः । त्रिवर्गसाधको नित्यं त्रैलोक्यवरपूरुषः ॥ १०१
स्वपुरीनिलयो नित्यं देवदानवदर्पहा । स चैवं पालयामास त्रैलोक्ये सकलाः प्रजाः ॥ १०२
नाधर्मः कश्चिदप्यासीत्तस्मिन्राजनि दानवे । न दीनो व्याधितो वाऽपि अल्पायुर्वाऽथ दुःखितः ॥
मूर्खो वा मन्दरूपो वा दुर्भगो वा निराकृतः ॥ १०३

एकत्र देहे सकलं गुणौघं दृष्ट्वा च मत्वा च विशिष्टबुद्धिः ।
प्रसादयन्दैत्यवरं महात्मा पुरंदरः प्राप दनुप्रधानम् ॥ १०४

तेजोयुक्तं दानवं तं तपन्तमिव भास्करम् । त्रैलोक्यधारणे शक्तो विस्मितः स तदाऽभवत् १०५
अन्तःपुरेण वै गत्वा दानवेन्द्राय पार्थिव । इदमूचुस्तदा गत्वा दानवा युद्धदुर्मदाः ॥ १०६

दानवा ऊचुः—

आश्चर्यमिति वै कृत्वा इन्द्रोऽभ्येति पुरीं तव । एकाकी द्विजमुख्येन वामनेन सह प्रभो ॥ १०७
अस्माभिर्यदनुष्ठेयं शीघ्रं तन्नो वदस्व ह । दानवानब्रवीत्सर्वान्पुरे चास्मिन्नलंकृते ॥
प्रवेश्यतां देवराजः पूज्यः स तु मयाऽद्य वै ॥ १०८

पुलस्त्य उवाच—

एवमुक्त्वा दानवेन्द्रः प्रतिषिध्य च दानवान् । एकाकी निर्ययौ तत्र शक्रदर्शनकाङ्क्षया ॥ १०९
सप्तमायां तु कक्षायां पुरे तस्मिन्नलंकृते । एतस्मिन्नेव काले तु वामनः स च वासवः ॥ ११०
आगतौ दनुनाथेन प्रेम्णा चैवावलोकितौ । कृतार्थं मन्यता*ऽऽत्मानं प्रणिपातपुरःसरम् ॥ १११
उवाच राजा वचनं दानवानां धुरंधरः । अचिन्तयत्तदा हृष्टो नास्ति धन्यः समो मया ॥ ११२
योऽहं श्रिया वृतः शक्रं पश्यामि गृहमागतम् । अर्थितुं कामयानस्तु मामयं याचयिष्यति ॥ ११३
गृहागतस्य वाऽस्याहं दास्ये प्राणानपि ध्रुवम् । दारान्पुत्रांस्तथाऽगारं त्रैलोक्ये का कथा मम ॥

---

* परस्मैपदमार्षम् ।

---

१ क. ख. ग. घ. ङ. च. ज. °त्र पदत्र° । २ क. ख. ङ. ज. पूर्वदेवानां । ३ ग. घ. च. ज. °तः । न च. दुःशीलनिरतः स सर्वत्रावि° । ४ क. घ. ङ. ज. सुसखः । ग. सत्सुखः । ५ ग. °पूजकः । स्त्र° । ६ क. ख. ग. घ. ङ. च. ज. निराकृतिः । ७ क. ख. ग. घ. ङ. च. ज. च निविष्ट° । ८ ग. घ. ज. प्राह । ९ ग. विनाशं समचिन्तयत् । घ. ज. विनाशः शतधाऽभ° । १० क. ख. ग. घ. ङ. च. ज. °यं सांप्रतं नो व्र° । ११ ख. ङ. प्रेष्ठः । १२ ग. घ. °या । शक्रमायान्तमावेक्ष्य पु° । १३ क. ख. ङ. च. ज. अद्य वै त्रिषु लोकेषु ना° । १४ झ. वृतं । १५ क. ख. ङ. च. °थाऽङ्गं च त्रै° ।

आगतः संमुखस्तस्य अङ्कमानीय सादरम् । परिष्वज्याभिनन्द्यैनं गृहं प्रावेशयत्स्वकम् ॥
तस्यार्घाचमनीयाद्यैः कृत्वा पूजां प्रयत्नतः ॥ ११५

वाष्कलिरुवाच—

अद्य मे सफलं जन्म पूर्णाः सर्वे मनोरथाः । यस्त्वां पश्यामि शक्राद्य स्वयमेव गृहागतम् ॥ ११६
ख्याप्योऽहं दनुमुख्यानां देवराज त्वया कृतः । आगच्छता मम गृहं पुण्यता तु परा हि मे ॥ ११७
[*अग्निष्टोमादिभिर्यज्ञैः सम्यगिष्टैस्तु यत्फलम् । तत्फलं समवाप्येत त्वयि दृष्टे पुरंदर ॥ ११८
यत्फलं भूमिदानेन गवां दानेन ऋत्विजे । ममाद्य तत्फलं भूतमथवा राजसूयकम् ] ॥ ११९
नाल्पेन तपसा लभ्यं दर्शनं तव वासव । एवं गेहे मया यत्ते प्रियं कार्यं वदस्व तत् ॥ १२०
विकल्पोऽन्यो न भवता हृदि कार्यः कथंचन । कृतं तद्धि विजानीष्व यद्यपि स्यात्सुदुष्करम् १२१
पुण्योऽहं पुण्यतां प्राप्तो दर्शनात्तव शत्रुहन् । यत्ते देववरैर्वन्द्यौ वन्दितौ चरणौ मया ॥ १२२
किमागमनकृत्यं ते मयि सर्वं वद प्रभो । अत्याश्चर्यमिदं मन्ये तवाऽऽगमनकारणम् ॥ १२३

इन्द्र उवाच—

जानेऽहं दनुमुख्यानां प्रधानं त्वां तु वाष्कले । नात्याश्चर्यमिदं भाति त्वयि दृष्टेऽसुरोत्तमे ॥ १२४
विमुखा नार्थिनो यान्ति भवतो गृहमागताः । अर्थिनां कल्पवृक्षोऽसि दाता चान्यो न विद्यते ॥
प्रभया सूर्यतुल्योऽसि गाम्भीर्ये सागरोपमः । क्षमित्वेन धरातुल्यः श्रिया नारायणोपमः ॥ १२६
ब्राह्मणः कश्यपकुले जातोऽयं वामनः शुभे । प्रार्थितोऽहमनेनैव भूमेर्देहि क्रमत्रयम् ॥ १२७
ममाग्निशरणार्थाय येन कुर्यां मखं त्विह । तदस्य कारणं कृत्वा अर्थितैषा तव प्रभो ॥ १२८
लोकत्रयं मेऽपहृतं त्वया विक्रम्य वाष्कले । [3]निर्गतिको निर्धनोऽस्मि यद्दास्ये न तदस्ति मे ॥ १२९
भवन्तं याचयिष्यामि परार्थेनापि चाऽऽत्मनः । अर्थित्वं न ममाप्यस्य यद्योग्यं तत्समाचर १३०
जातोऽपि काश्यपे च त्वं वंशे वंशविवर्धनः । दित्यास्त्वं गर्भसंभूतः पिता त्रैलोक्यपूजितः ॥ १३१
एवंभूतमहं ज्ञात्वा तेन त्वां याचयाम्यहम् । अस्याग्निशरणार्थाय दीयतां तु क्रमत्रयम् ॥ १३२
अतीव ह्रस्वगात्रस्य वामनस्यास्य दानव । भूमिभागे च पारक्ये दातुं न त्वहमुत्सहे ॥ १३३
एतदेव मया दत्तं यद्भवानर्थितोऽसि मे । गुरवो यदि मन्यन्ते मन्त्रिणो वा यदाऽनुजाः ॥ १३४
बान्धवा वा तथा चान्ये भूमेरस्य पदत्रयम् । अर्थित्वेन मदीयेन स्व[4]कुलं चान्ववेक्ष्य च ॥ १३५
गृहायाते मयि तथा यद्योग्यं तत्समाचर । यदि ते [5]रुचिरं वीर दानवेन्द्र महाद्युते ॥
तदस्मै दीयतां शीघ्रं वामनाय [6]महामते ॥ १३६

वाष्कलिरुवाच—

देवेन्द्र स्वागतं तेऽस्तु स्वस्ति प्राप्नुहि मा चिरम् । त्वं समीक्षस्व चाऽऽत्मानं सर्वेषां च परायणम्
त्वयि भारं समावेश्य सुखमास्ते पितामहः । ध्यानधारणया युक्तश्चिन्तयानः परं पदम् ॥ १३८
सङ्ग्रामैर्बहुभिः खिन्नो जगच्चिन्तामपास्य तु । क्षीराब्धौ सद्मामाश्रित्य सुखं स्वपिति केशवः १३९
कैलासे पर्वतश्रेष्ठे कृत्तिवासा उमापतिः । रमते भार्यया सार्धं भारं त्वयि निवेश्य वै ॥ १४०

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. ज. नान्येन । २ क. ख. ग. घ. ङ. च. ज. °त्वा दुःखितै° । ३ क. ख. ग. घ. ङ. च. ज. निर्वृत्तिको । ४ क. ख. ङ. च. °कुले बान्धवेऽपि च । ग. घ. ज. °कुले बान्धवेषु च । ५ क. ख. ङ. च. उचितं । ६ क. ख. च. महात्मने । ७ क. ख. घ. ग. ङ. च. ज. °हः । प्राणधा° । ८ क. ख. ङ. च. °ब्धौ द्वीपमा° । ग. घ. ज. °ब्धौ यज्ञमा° ।

अन्ये तु दानवाः पूर्वे वलिभ्यो वलिनः सदा । असहायेन ते शक्र सर्वे ते विनिपातिताः॥१४१
आदित्या द्वादशैवेह रुद्राश्चैकादशापि वा । अश्विनौ वसवश्चैव धर्मश्चैव सनातनः ॥ १४२
त्वद्बाहुवलमाश्रित्य त्रिदिवे मखभागिनः । त्वया क्रतुशतैरिष्टं समाप्तवरदक्षिणैः ॥ १४३
त्वया च निहतो वृत्रो नमुचिः पाकशासन । त्वदाज्ञाकारिणा पूर्वं विष्णुना प्रभविष्णुना॥१४४
हिरण्यकशिपुर्योऽत्र जङ्घे चाऽऽरोप्य घातितः । वज्रपाणिनमायान्तमैरावणशिरोगतम् ॥ १४५
सङ्ग्रामभूमौ दृष्ट्वा त्वां सर्वे नश्यन्ति दानवाः । ये त्वया विजिताः पूर्वं दानवा बलवत्तराः १४६
सहस्रांशेन तुल्यस्ते न भवामि कथंचन । एवंविधोऽसि देवेन्द्र मम का गणना भवेत् ॥ १४७
मां समुद्धर्तुकामेन त्वयेहाऽऽगमनं कृतम् । करिष्यामि न संदेहो दास्ये प्राणानपि ध्रुवम् ॥१४८
किमर्थं देवराजोक्ता भूमिरेषा त्वया हि मे । इमे दाराः सुता गावो यच्चान्यद्विद्यते वसु ॥ १४९
त्रैलोक्यराज्यमखिलं विप्रस्यास्य मदीयतामृ । कृपाकरं भवेन्मह्यं पूर्वेषां च न संशयः ॥ १५०
गृहायातस्य शक्रस्य दत्तं वाष्कलिनो पुरा । अन्योऽपि योऽर्थी मे प्राप्तः स मे प्रियतरः सदा ॥
भवांस्तत्र विशेषेण विचारो नेह वा क्वचित् । बृहत्त्रपा मे देवेश यद्भूमेस्तु पदत्रयम् ॥ १५२
ब्राह्मणस्य विशेषेण प्रार्थितेन त्वया प्रभो । दास्ये ग्रामवरानस्य भवतस्तु त्रिविष्टपम् ॥ १५३
अश्वान्गजान्भूमिधनं स्त्रियश्चोद्भिन्नचूचुकाः । यासां दर्शनमात्रेण वृद्धोऽपि तरुणायते ॥ १५४
स्त्रियो वा वसुधा चैषा वामनस्य प्रतिग्रहम् । प्रतिदास्यामि देवेन्द्र प्रसादः क्रियतां हि मे १५५

पुलस्त्य उवाच—

एतावदुक्ते वचने तदा वाष्कलिना नृप । पुरोधा ह्युशना प्राह दानवेन्द्रं तदा वचः ॥ १५६

उशनोवाच—

भवान्राजा न संदेह ऐश्वर्येऽष्टविधे स्थितः । युक्तायुक्तं न जानासि देयं कस्य मया क्वचित् ॥
मन्त्रिभिः सुसमालोक्य युक्तायुक्तं समीक्ष्य च । प्राप्तं त्रैलोक्यराज्यत्वं जित्वा देवान्सवासवान् ॥
वाक्यस्यास्यावसाने तु भवान्प्राप्स्यति वन्धनम् । य एष वामनो राजन्विष्णुरेव सनातनः१५९
नास्य वै भवता देयं पिता ते घातितः स्वयम् । अयं ते पितृहा प्राप्तो मातृहा वन्धुघातकः१६०
वंशोच्छेदकरस्तुभ्यं भूतश्चैव भविष्यति । न चैष धर्मं जानाति देवानां च हिते रतः ॥ १६१
मायाविना दानवा ये मायया येन निर्जिताः । मायया ब्राह्मणं रूपं वामनं ते प्रदर्शितम् १६२
अत्र किं बहुनोक्तेन नास्य देयं तु किंचन । मक्षिकापादमात्रं तु(त्राया) भूमेरपि प्रतिग्रहम्(हात्)
विनाशमेष्यासि क्षिप्रं सद्यः सत्यं मयाऽऽश्रुतम् ॥ १६३

पुलस्त्य उवाच—

गुरुणाऽप्येवमुक्तस्तु भूयो वाक्यमथाब्रवीत् ॥ १६४

वाष्कलिरुवाच—

धर्मार्थिना मया सर्वं प्रतिज्ञातं गुरो त्विदम् । प्रतिज्ञापालनं कार्यं सतां धर्मः सनातनः ॥ १६५
यद्येष भगवान्विष्णुर्नास्ति धन्यतरो मया । गृह्य प्रतिग्रहं मत्तो यदि देवान्बुभूपति ॥ १६६
भूयोऽपि धन्यतां नीतो देवेनानेन वै गुरो । यं योगिनो ध्यानयुक्ता ध्यायमाना हि दर्शनम् ॥

---

१ क. ख. ग. घ. ङ. च. ज. सर्वे । २ क °दा । प्रगृह्य ये° । ख. ङ. च. °दा । प्रसह्य ये° । ग. °दा । स्वशक्त्या ये° । घ °दा । सशक्त्या ये° । ज. °दा । अशक्त्या ये° । ३ क. ख. ङ. च. °शिपोर्भ्राता हिरण्याक्षोऽपि घा° । ४ क. ख. ङ. च. °म् । अपकीर्तिर्भवे° । ५ क. ख. ङ. च. °ना न तु । अ° । ६ झ. °भिः सत्यमा° । ७ ज. °भ्यं भुवन्तं च वधिष्य° ।

न लभन्ते तथा विप्राः सोऽयं दृष्टो मया यदि । दानानि ये प्रयच्छन्ति सकुशोदकपाणिना ॥
प्रीयतां भगवान्विष्णुः परमात्मा सनातनः । एतस्मिन्नुक्ते वचने अपवर्गस्य भागिनः ॥ १६९
यदत्र कार्यकरणे विकल्पो मे बभूव ह । उपदिष्टो हि भवता बालत्वे चावधारितम् ॥ १७०
शत्रावपि गृहायाते नास्त्यदेयं तु किंचन । एतदेव विचिन्त्याहं प्राणानपि स्वकान्गुरो ॥ १७१
वामनस्य प्रदास्यामि शक्रस्यापि त्रिविष्टपम् । अपीडाकारि यद्दानं तद्दानमिह दीयते ॥
पीडाकरं न यद्दानं तदङ्गमलवत्पुनः ॥ १७२

पुलस्त्य उवाच—

एतच्छ्रुत्वा गुरुस्तत्र त्रपयाऽधोमुखस्थितः ॥ १७३

वाष्कलिरुवाच—

अर्थिता भवता देव देया सर्वधरा मया । त्रपाकरं भवेन्मह्यं यदस्य भूपदत्रयम् ॥ १७४

इन्द्र उवाच—

सत्यमेतद्दानवेन्द्र यदुक्तं भवता हि मे । भूमेः क्रमत्रयार्थित्वं द्विजेनानेन मे कृतम् ॥ १७५
एतावता त्वयं चार्थी मयाऽप्यस्य कृते भवान् । दनुपुत्र याचितोऽस्ति वरमेतत्प्रदीयताम् ॥ १७६

वाष्कलिरुवाच—

क्रमत्रयं वामनाय देवराज प्रयच्छ मे । तत्र त्वं सुचिरं कालं सुखी सुरपते वस ॥ १७७

पुलस्त्य उवाच—

[*एवमुक्त्वा वाष्कलिना वामनाय पदत्रयम् । तोयपूर्वं तदा दत्तं प्रीयतां मे हरिः स्वयम् १७८
दत्ते तु दानवेन्द्रेण त्यक्त्वा रूपं तु वामनम् । हरिराचक्रमे लोकान्देवानां हितकाम्यया] ॥ १७९
यज्ञपर्वतमासाद्य स्थित्वा देव उदङ्मुखः । देवस्य वामचरणे निविष्टो दानवालयः ॥ १८०
तत्र क्रमं स प्रथमं ददौ सूर्ये जगत्पतिः । द्वितीयं च ध्रुवे देवस्तृतीयेन च पार्थिव ॥ १८१
ब्रह्माण्डं ताडितं तेन देवेनाद्भुतकर्मणा । अङ्गुष्ठाग्रेण वै भिन्नं जलं भूरि विनिःसृतम् ॥ १८२
प्लावयित्वा ब्रह्मलोकं सर्वलोकाननुक्रमात् । ध्रुवस्थानं सूर्यलोकं प्लाव्य तं यज्ञपर्वतम् ॥ १८३
प्रविष्टा पुष्करं देवी गत्वा विष्णुपदानि सा । पदानि तानि जातानि वैष्णवानि धरातले १८४
तत्राऽऽश्रमे तु यो गत्वा स्नानं वाप्यां समाचरेत् । अश्वमेधफलं तस्य दर्शनादेव जायते १८५
एकविंशकुलोपेतो वैकुण्ठं लोकमाप्नुयात् । भुक्त्वा स विपुलान्भोगान्कल्पानां तु शतत्रयम् १८६
तदन्ते जायते राजा सार्वभौमः क्षिताविह । तोयधारा तु या भीष्म अङ्गुष्ठाग्राद्विनिःसृता १८७
नदी सा वैष्णवी प्रोक्ता विष्णुपादसमुद्भवा । अनेककारणैर्जाता गङ्गा विष्णुपदे नृप ॥ १८८
यया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् । अङ्गुष्ठाग्रक्षताद्दण्डाद्यत्प्रविष्टं जलं शुभम् ॥ १८९
प्राप्तं देवनदीत्वं च सा तु विष्णुपदी स्मृता । देवनद्या तया व्याप्तं ब्रह्माण्डं सचराचरम् १९०
विभूतिभिर्महाभाग सर्वानुग्रहकाम्यया । स वाष्कलिर्वामनेन उक्तः पूरय विक्रमान् ॥ १९१
अधोमुखस्तदा जात उत्तरं नास्य विन्दति । मौनीभूतं तु तं दृष्ट्वा पुरोधा वाक्यमब्रवीत् ॥ १९२

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. ज. तद्दानं समलं स्मृतम् । ए° । २ ञ. प्रतीच्छ । ३ झ. धौत्वा । ४ क. ख. ङ. च. ज. त्रीणि । ५ क. ख. घ. च. ज. °शगणोपे° ।

 

शुक्र उवाच—
स्वाभाविकी दानशक्तिर्न तु स्रष्टावयं क्षमः । यावतीयं धरा देव सा दत्ताऽनेन ते प्रभो ॥१९३

पुलस्त्य उवाच—
उक्तो बाष्कलिना विष्णुर्यावन्मात्रा वसुंधरा । या सृष्टा भवता पूर्वं सा मयाऽभ च गोपिता ॥
अल्पा भूमिर्भवान्दीर्घो न तु स्रष्टेरहं क्षमः । इच्छाशक्तिः प्रभवति प्रभूणां देव सर्वदा ॥ १९५
निरुत्तरं तदा विष्णुर्मत्वा तं सत्यवादिनम् । ब्रूहि दानवमुख्य त्वं कं ते कामं करोम्यहम् १९६
मम हस्तगतं तोयं त्वया दत्तं तु दानव । तेन त्वं वरयोग्योऽसि वराणां भाजनं शुभम् ॥ १९७
दास्येऽहं भवतः काममर्थी येन वृणुष्व ह । विज्ञप्तः स तदा तेन देवदेवो जनार्दनः ॥ १९८

बाष्कलिरुवाच—
भक्तिं वृणोमि देवेश त्वद्धस्तान्मरणं हि मे । व्रजामि श्वेतद्वीपं ते दुर्लभं यत्तपस्विनाम् ॥ १९९

पुलस्त्य उवाच—
आहैवमुक्तो विष्णुस्तं तिष्ठस्वैकं युगान्तरम् । वराहरूपी यदाहं प्रवेक्ष्यामि धरातलम् ॥ २००
तदा हनिष्येऽहं त्वां तु मदङ्गे लयमेष्यसि । उक्तोऽथ दानवस्तेन अपासर्पत्तदग्रतः ॥ २०१
वामनेन समाक्रान्ताः सर्वे लोका जिघृक्षता । असुरैस्तैस्तदा त्यक्ता देवानां सत्यरक्षणैः॥ २०२
[*पातालं च सदा तेन आक्रान्तं हरिमेधसा । असुरैस्तैस्तदा घोरैर्दशभिः शंतनोः सुत]॥ २०३
देवो हृत्वा च त्रैलोक्यं जगामादर्शनं विभुः । पातालनिलयश्चापि सुखमास्ते स बाष्कलिः २०४
शक्रोऽपि पालयामास विपश्चिद्भुवनत्रयम् । अयं त्रैविक्रमो नाम प्रादुर्भावो जगद्गुरोः ॥ २०५
गङ्गासंभवसंयुक्तः सर्वकल्मषनाशनः । विष्णोः पदानामेकान्त उत्पत्तिः कथिता नृप ॥ २०६
यां श्रुत्वा तु नरो लोके सर्वपापैः प्रमुच्यते । दुःस्वप्नो दुर्विचिन्ता च दुष्करं दुष्कृतानि च २०७
क्षिप्रं नाशं समायान्ति दृष्टे विष्णुपदत्रये । युगानुक्रमतो दृष्ट्वा पापिनो जन्तव(न्मिन)स्तथा २०८
सूक्ष्मता दर्शिता भीष्म विष्णुना पददर्शने । यस्त्वारोहति तस्मिंस्तु मौनवान्मानवो भुवि॥ २०९
कृत्वा त्रिपुष्करीं यात्रामश्वमेधफलं लभेत् । मुच्यते सर्वपापेभ्यो मृतो विष्णुपदं व्रजेत् ॥ २१०

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे विष्णुपदोत्पत्तिकथनं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२४९०८

---

अथ षड्विंशोऽध्यायः ।

---

भीष्म उवाच—
भगवन्महदाश्चर्यं बाष्कलेर्बन्धनं हि यत् । कृतं त्रिविक्रमं रूपं यदा संयमितो बलिः ॥ १
एतन्मया श्रुतं सर्वं कथ्यमानं द्विजोत्तमैः । पाताले वसतेऽद्यापि विरोचनसुतो बलिः ॥ २
नागतीर्थं यथा भूतं पिशाचानां च संभवम् । शिवदूती कथं चात्र केन क्षेमकरी कृता ॥ ३

---

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

---

१ ग. घ. ज. तु स्रष्टुं वयं क्षमाः । या° । २ क. ख. ग. घ. ङ. च. ज. °हं रक्षामि च ध° । ३ क. ख. ङ. च. °दग्रे च यदैव्य° । ४ क. ख. ङ. च. °कास्तदा नृप । अ° । ग. घ. ज. °का यदा नृप । अ° । ५ क. ख. ङ. थ. पूर्वे । ६ क. ख. ग. घ च. ज. °म् । देवी तु दूतिका चा° । ७ क. ख. ग. घ. च. ज. केनेयं मङ्गलीकृ° ।

अन्तरिक्षं पुष्करं तु केन नीतं महामुने । तदाचक्ष्व च मे सर्वं यथावद्बलिबन्धनम् ॥ ५

भूमेः प्रक्रमणं पूर्वं कृतं देवेन विष्णुना । द्वितीयं कारणं तच्च येन देवश्चकार ह ॥ ६

तत्त्वतस्त्वं हि मे सर्वं यथा भूतं तथा वद । पापक्षयकरं ह्येतच्छ्रोतव्यं भूतिमिच्छता ॥ ६

पुलस्त्य उवाच—

प्रश्नभारस्त्वया राजन्कौतुकादेव कीर्तितः । कथयामि हि ते सर्वं यथा पूर्वं नृपोत्तम ॥ ७

विष्णोः पदानुषङ्गेण वन्धनं वाष्कलेरिह । श्रुतं तद्भवता सर्वं मया ते परिकीर्तितम् ॥ ८

भूयोऽपि बलिना भीष्म प्राप्ते वैवस्वतेऽन्तरे । त्रैलोक्यं बलिनाऽऽक्रान्तं विष्णुना प्रभविष्णुना ।

गत्वा चैकाकिना यज्ञे तथा संयमितो बलिः । भूयोऽपि देवदेवेन भूमेः प्रक्रमणं कृतम् ॥ १०

प्रादुर्भावो वामनस्य तदा भूतो नराधिप । पुनस्त्रिविक्रमो भूतो वामनोऽभूदवामनः ॥ ११

उत्पत्तिरेषा ते सर्वा कथिता कुरुनन्दन । नागानां तु यथा तीर्थं तच्छृणुष्व महाव्रत ॥ १२

अनन्तो वासुकिश्चैव तक्षकश्च महाबलः । कर्कोटकश्च नागेन्द्रः पद्मश्चान्यः सरीसृपः ॥ १३

महापद्मस्तथा शङ्खः कुलिकश्चापराजितः । एते कश्यपदायादा एभिरापूरितं जगत् ॥ १४

एतेषां सुप्रसूत्या तु इदमापूरितं जगत् । कुटिला भीमकर्माणस्तीक्ष्णास्याश्च विषोल्वणाः ॥ १५

दृष्ट्वा संस्पृश्य मनुजान्कुर्युर्भस्म क्षणात्तु ते । तद्दर्शनादेव नाशो मनुष्याणां नराधिप ॥ १६

अहन्यहनि जायेत क्षयः परमदारुणः । आत्मनस्तु क्षयं दृष्ट्वा प्रजाः सर्वाः समन्ततः ॥ १७

जग्मुः शरण्यं शरणं ब्रह्माणं परमेश्वरम् । इममेवार्थमुद्दिश्य प्रजाः सर्वा महीपते ॥

ऊचुः कमलजं दृष्ट्वा पुराणं ब्रह्मसंज्ञकम् ॥ १८

प्रजा ऊचुः—

देवदेवेश लोकानां प्रसूते परमेश्वर । त्राहि नस्तीक्ष्णदंष्ट्राणां भुजंगानां महात्मनाम् ॥ १९

अहन्यहनि भूतानि भक्ष्यन्ते तैर्दुरात्मभिः । नश्येयुरुरगैर्दष्टा मनुष्याः पशवः प्रभो ॥ २०

[*दिने दिने भयं देव पश्याम उरगाद्भृशम् । मनुष्यं पशुयूथं वा तत्सर्वं भस्मसाद्भवेत्] ॥ २१

त्वया सृष्टिः कृता देव क्षीयते तु भुजंगमैः । एतज्ज्ञात्वा यदुचितं तत्कुरुष्व पितामह ॥ २२

ब्रह्मोवाच—

अहं रक्षां विधास्यामि भवतीनां न संशयः । व्रजध्वं स्वनिकेतानि नीरुजो गतसाध्वसाः ॥ २३

पुलस्त्य उवाच—

एवमुक्ते गताः सर्वा ब्रह्मणा व्यक्तमूर्तिना । आजग्मुः परमप्रीत्या स्तुत्वा चैव स्वयंभुवम् ॥ २४

प्रगतासु प्रजास्वेवं समाहूय भुजंगमान् । शशाप परमक्रुद्धो वासुकिप्रमुखांस्तथा ॥ २५

ब्रह्मोवाच—

यस्मान्मत्प्रभवान्नित्यं क्षयं नयत मानुषान् । अतोऽन्यस्मिन्भवे भूयान्मत्तः कोपात्सुदारुणात् २६

भवतां हि क्षयो घोरो भाव्यो वैवस्वतेऽन्तरे । तथाऽन्यः सोमवंशीयो राजा वै जनमेजयः ॥ २७

धक्ष्यते सर्पसत्रेण प्रदीप्ते हव्यवाहने । मातृष्वसुश्च वचनात्तार्क्ष्यो वो भक्षयिष्यति ॥ २८

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ झ. ह । एतदाख्याहि । २ क. ख. ग. घ. ङ. च. ज. त्रिष्णुना । ३ क. ख. ग. घ. ङ. च. ज. तथा । ४ ख. ग. घ. ङ. ज. मन्दांश्च । ५ क. ख. ग. घ. ङ. च. ज. °जं विष्णोः पु° । ६ झ. नीयते । ७ झ. यक्ष्यते ।

एवं वो भविता नाशः सर्वेषां दुष्टचेतसाम्[1] । शप्ताः कुलसहस्रस्य यावदेकं कुलं स्थितम् ॥ २९

पुलस्त्य उवाच—

एवमुक्ते तु वेपन्तो ब्रह्मणा भुजगोत्तमाः । निपत्य पादयोस्तस्य इदमूचुर्वचस्तदा ॥ ३०

सर्पा ऊचुः—

भगवन्कुटिला जातिरस्माकं भवता कृता । विषोल्बणत्वं क्रूरत्वं दंशकत्वं[2] च नः सदा ॥
संपादितं त्वया देव इदानीं शपसे कथम् ॥ ३१

ब्रह्मोवाच—

यदि नाम मया सृष्टा भवन्तः कुटिलाशयाः । ततः किं बहुना नित्यं भक्षयध्वं गतव्यथाः ॥ ३२

नागा ऊचुः—

मर्यादां कुरु देवेश स्थानं चैव पृथक्पृथक् । मनुष्याणां तथाऽस्माकं समयं[3] देव कारय[4] ॥ ३३
शापो यो भवता दत्तो मानुषो जनमेजयः । नाशं नः सर्पसत्रेण उल्बणं च करिष्यति ॥ ३४

ब्रह्मोवाच—

जरत्कारुरिति ख्यातो भवतां ब्रह्मवित्तमः । जरत्कन्या तस्य देया तस्यामुत्पत्स्यते सुतः ॥ ३५
रक्षाकर्ता स वो विप्रो भवतां कुलपालनः । तथा करोमि वो नागाः समयं मनुजैः सह ॥ ३६
तदेकमनसः सर्वे शृणुध्वं मम शासनम् । सुतलं वितलं चैव[5] तृतीयं च तलातलम् ॥ ३७
दत्तं च त्रिप्रकारं वै गृहं तत्र गमिष्यथ । तत्र भोगान्बहुविधान्भुञ्जाना मम शासनात् ॥ ३८
तिष्ठध्वं सप्तमं यावत्कालं तं तु पुनः पुनः । ततो वैवस्वतस्याऽऽदौ काश्यपेयो भविष्यति ॥ ३९
दायादः सर्वदेवानां सुपर्णस्य च धीमतः । तदा प्रसूतिः सर्पाणां दग्धा वै चित्रभानुना ॥
भवतां चैव सर्वेषां भविष्यति न संशयः ॥ ४०

ये ये क्रूरा भोगिनो दुर्विनीतास्तेषामन्तो भविता नान्यथैतत् ।
कालप्राप्तं भक्षयध्वं च सत्त्वं तथाऽपकारे च कृते मनुष्यम् ॥ ४१
मन्त्रौषधैर्गारुडैश्चैव तन्त्रैर्वन्धैर्जुष्टा[6] मानवा ये भवन्ति ॥
तेभ्यो भीतैर्वर्तितव्यं न चान्या[7] वृत्तिः कार्या चान्यथा वो विनाशः ॥ ४२

पुलस्त्य उवाच—

इतीरिते ब्रह्मणा वै भुजंगा जग्मुः स्थानं क्ष्मातलाख्यं हि सर्वे ।
तस्थुर्भोगान्भुञ्जमानाश्च सर्वे रसातले लीलया संस्थितास्ते ॥ ४३

एवं शापं तु ते लब्ध्वा प्रसादं च चतुर्मुखात् । तस्थुः पातालनिलये मुदितेनान्तरात्मना ॥ ४४
ततः कालान्तरे भूते पुनरेवं व्यचिन्तयन् । भविता भारतो राजा पाण्डवेयो महायशाः ॥ ४५
अस्माकं तु क्षयकरो दैवयोगेन केनचित् । कथं त्रिभुवने नाथः सर्वेषां च पितामहः ॥ ४६
सृष्टिकर्ता जगद्वन्द्यः शापमस्मासु दत्तवान् । देवं विरिञ्चिनं मुक्त्वा गतिरन्या न विद्यते ॥ ४७
वैराजे भवनश्रेष्ठे तत्र देवः स तिष्ठति । स देवः पुष्करस्थो वै यज्ञं यजति सांप्रतम् ॥ ४८
गत्वा प्रसादयामस्तं वरं तुष्टः प्रदास्यति । एवं विचिन्त्य ते सर्वे आगतास्ते त्रिपुष्करम् ॥ ४९

---

१ क. ख. ग. घ. ङ. च. ज. °म् । नागं कुलशतं तावद्यात्र° । २ क. ख. ग. घ. ङ. च. ज. दंदशूकत्वमेव च । सं° । ३ क. उपायं । ग. उल्बणं । ४ ग. वारय । ५ झ. °व हर्यक्षं च तृतीयकम् । ६ अ. °न्धैर्दुष्टा । ७ क. ख. ग. घ. ङ. च. ज. चान्यचित्ते कार्यं चा° ।

यज्ञपर्वतमासाद्य शैलभित्तिमुपाश्रिताः । दृष्ट्वा नागांस्तदा शान्तान्वारिधारौघशीतलान् ॥ ५०
उदङ्मुखी विनिष्क्रान्ता सर्वेषां तु सुखप्रदा । नागतीर्थं ततो जातं पृथिव्यां ख्यातिमागतम् ५१
नागकुण्डं तु वै केचित्सरिच्चान्ये तथाऽब्रुवन् । पुण्यकृत्सर्वतीर्थेषु सर्पाणां विषनाशनम् ॥ ५२
स्नानं कुर्वन्ति [3]ये मर्त्या भक्त्या श्रावणपञ्चमीम् । न तेषां तु कुले सर्पाः पीडां कुर्वन्ति कर्हिचित्
श्राद्धं पितॄणां ये तत्र करिष्यन्ति नरा भुवि । ब्रह्मा तुष्टः परं स्थानं दास्यते नात्र संशयः ॥५४
नागानां तु भयं ज्ञात्वा ब्रह्मा लोकपितामहः (?) । पूर्वोक्तं तु पुनर्वाक्यं ब्रह्मणा श्रावितास्तथा
पञ्चमी सा तिथिर्धन्या सर्वपापहरा शुभा । यतोऽस्यामेव सुतिथौ नागानां कार्यमुद्धृतम् ॥ ५६
एतस्यां सर्वतो यस्तु कट्वम्लं परिवर्जयेत् । क्षीरेण तर्पयेन्नागांस्ते तु यास्यन्ति मित्रताम् ॥ ५७

भीष्म उवाच—

शिवदूती यथा जाता येन चैव निवेशिता । तन्मे सर्वं यथातत्त्वं भवाञ्शंसितुमर्हति ॥ ५८

पुलस्त्य उवाच—

शिवा नीलगिरिं प्राप्ता तपसे धृतमानसा । रौद्री जटोद्भवा शक्तिस्तस्याः शृणु नृप व्रतम् ॥५९
तपः कृत्वा चिरं कालं पालयाम्यखिलं जगत् । एवमुद्दिश्य पञ्चाग्निं साधयामास भामिनी ६०
तस्याः कालान्तरे देव्यास्तपन्त्यास्तप उत्तमम् । रुरुर्नाम महातेजा ब्रह्मदत्तवरोऽसुरः ॥ ६१
समुद्रमध्ये र[6]त्नाख्यं पुरमस्ति महाधनम् । तत्र राजा स दैत्येन्द्रः सर्वदेवभयंकरः ॥ ६२
अनेकशतसाहस्रकोटिकोटिशतैर्तोत्तरैः । असुरैरन्वितः श्रीमान्द्वितीयो नमुचिर्यथा ॥ ६३
कालेन महता सोऽथ लोकपालपुरं ययौ । जिगीषुः सैन्यसंवीतो देवै[8]र्वैरमरोचयत् ॥ ६४
उत्तिष्ठतस्तस्य महासुरस्य समुद्रतोयं ववृधे तु वेगात् ।
अनेकनक्रग्रहमीनयुक्तं संप्लावयत्पर्वतसानुदेशान् ॥ ६५
अन्तस्थितानेकसुरारिसंघं विचित्रवर्मायुधचित्रशोभम् ।
भीमं बलं वलितचारुविचित्रयोधं विनिर्ययौ सिन्धुजलाद्विशालम् ॥ ६६
तत्र द्विपा दैत्यभटाभ्युपेताः सयानघण्टाश्च समृद्धियुक्ताः ।
विनिर्ययुः स्वाकृतिभिर्झषाणां समत्वमुच्चैः खलु दर्शयन्तः ॥ ६७
[*अश्वास्तथा काञ्चनसूत्रनद्धा रोहीतमत्स्या इव ते जलान्ते] ।
व्यवस्थितास्तैः सममेव तूर्णं विनिर्ययुर्लक्षशः कोटिशश्च ॥ ६८
तथा रविस्यन्दनतुल्यवेगाः सु[12]चक्रदण्डाक्षतवेणुयुक्ता[13]ः ।
रथाश्च यन्त्रोपरिपीडिताङ्गाः स्खलत्पताकाः स्वनितं विचक्रुः ॥ ६९
तथैव योधाः स्थगितेभवन्तस्तितीर्षवस्ते प्रवरास्त्रपाणयः ।
रणे रणे लब्धजयाः प्रहारिणो विरेजुरुच्चैर्सुरानुगा भृशम् ॥ ७०

* क. ख. ग. घ. ङ. च. ज. पुस्तकेष्वयं पाठः ।

१ ग. °दा श्रान्ता° । २ घ. °णां च विना° । ३ झ. ये भक्त्या शुक्लपक्षस्य प° । ४ क. ख. ग. घ. ङ. च. ज. °मुद्धृत° । ५ ञ. °लं प्रसिष्याम्य° । ६ क. ख. ङ. च. ज. रत्नाख्यं । ७ क. ख. ग. घ. ङ. च. ज. °तोत्तमैः । अ° । ८ ख. ङ. °वैश्वर्यमरोचयत् । झ. °वैर्दत्तवरोऽव्ययः । उ° । ९ झ. °द्रवेगं व° । १० क. ख. स. घ. ङ. च. ज. °युताचि° । ११ झ. °ताः सुरारिसंघास्तु समूहयु° । १२ क. ख. ङ. च. ज. °चण्डचण्डा° । घ. °चन्द्रचण्डा° । १३ झ. °क्ताः । समस्तथ° । १४ क. ख. ग. घ. ङ. च. ज. °[illegible]° ।

देवेषु चैव नष्टेषु विद्रुतेषु विशेषतः । असुराः सर्वदेवानामन्वधावंस्ततस्ततः ॥ ७१

ततो देवगणाः सर्वे द्रवन्तो भयविह्वलाः । नीलं गिरिवरं जग्मुर्यत्र देवी स्वयं स्थिता ॥ ७२

रौद्री तमोन्विता धन्या शांभवी शक्तिरुत्तमा । संहारकारिणी देवी कालरात्रीति यां विदुः ॥ ७३

सा तु दृष्ट्वा तदा देवान्भयत्रस्तान्विचेतसः । पप्रच्छ विस्मयाद्देवी प्रोत्फुल्लाम्बुजलोचना ॥ ७४

देव्युवाच—

पृष्ठतो वो न पश्यामि भयं किंचिदुपागतम् । कथं तु विद्रुता देवाः सर्वे शक्रपुरःसराः ॥ ७५

देवा ऊचुः—

अयमायाति दैत्येन्द्रो रुरुर्भीमपराक्रमः । चतुरङ्गेण सैन्येन महता परिवारितः ॥

तस्मोद्भीता वयं देवि भवतीं शरणं गताः ॥ ७६

पुलस्त्य उवाच—

देवानामिति सा श्रुत्वा वाक्यमुच्चैर्जहास तु । तस्या हसन्त्या निश्चेरुर्वराङ्ग्या वदनात्ततः ॥७७

पाशाङ्कुशधराः सर्वाः पीनोन्नतपयोधराः । सर्वाः शूलधरा भीमाः सर्वा दंष्ट्राङ्कुशाननाः ॥७८

बद्धोर्ध्वमुकुटाः सर्वाः संदष्टदशनच्छदाः । फूत्कारारावैरशिवैस्त्रासयन्त्यश्च दानवान् ॥ ७९

काश्चिच्छुक्लाम्बरधराः काश्चिच्चित्राम्बरास्तथा । सुनीलवसनाः काश्चिद्रक्तपानातिलालसाः ॥८०

नानारूपैर्मुखैस्तास्तु नानावेषवपुर्धराः । ताभिरेवं वृता देवी देवानामभयंकरी ॥ ८१

मा भैष्ट देवा भद्रं वो यावद्दूरेऽसुरादयः । चतुरङ्गबलोपेतो रुरुस्तावत्समागतः ॥ ८२

तन्नीलपर्वतवरं देवानां मार्गमार्गिणः । देवानामग्रतः सैन्यं दृष्ट्वा देवीसमाकुलम् ॥ ८३

तिष्ठ तिष्ठेति जल्पन्तो दैत्यास्ते समुपागताः । ततः प्रवृत्तं युद्धं च तासां तेषां महाभयम् ॥ ८४

नाराचैर्भिन्नदेहानां दैत्यानां भुवि सर्पताम् । रोषदण्डप्रभग्नानां सर्पाणामिव सर्पताम् ॥ ८५

शक्तिभिर्भिन्नहृदया गदासंचूर्णितोरसः । कुठारोच्छिन्नशिरसो मुशलैर्भिन्नमस्तकाः ॥ ८६

भिन्नोदरास्त्रिशूलाग्रैश्छिन्नग्रीवा वरासिभिः । क्षताश्वरथमातङ्गाः पदा ताः पेतुराहवे ॥ ८७

रणभूमिं समासाद्य दैत्याः सर्वे रुरुं विना । ततो हतं बलं दृष्ट्वा रुरुर्मायां समाददे ॥ ८८

तया ता मोहिता देव्यो देवाश्चापि रणाजिरे । तामस्या मायया देव्या सर्वमन्धं तमोऽभवत् ८९

ततो देवी महाशक्त्या तं दैत्यं समताडयत् । तया तु ताडितस्याऽऽजौ दैत्यस्य प्रगतं तमः ॥९०

मायायामथ नष्टायां तामस्यां दानवो रुरुः । पातालमाविशत्तूर्णं तत्रापि परमेश्वरी ॥ ९१

देवीभिः सहिता क्रुद्धा पुरतोऽभिमुखी स्थिता । रुरोस्तु दानवेन्द्रस्य भीतस्याग्रे गतस्य च ९२

नखाग्रेण शिरश्छित्त्वा चर्म चाऽऽदाय वेगिता । निर्ययावथ पातालात्पुष्करं सा पुनर्गिरिम् ॥

कन्यासैन्येन महता बहुरूपेण भास्वता । देवैस्तु विस्मितैर्दृष्टा(ष्टा) चर्ममुण्डधरा रुरोः ॥ ९४

स्वकीये तपसः स्थाने निविष्टा परमेश्वरी । ततो देव्यो महाभागाः परिवार्य व्यवस्थिताः ॥

याचयामासुरव्यग्रास्तां देवीं तु बुभुक्षिताः ॥ ९५

---

१ क. ख. ग. घ. ङ. च. ज. तपोन्विता । २ क. ख. घ. ङ. च. ज. °स्माद्दीना व° । ३ ख. ग. घ. ज. °दाः । शिवारावैरशिवैश्च त्रासयन्त्यश्चराचरम् । का° । ४ क. ख. ग. घ. ङ. च. ज. °श्चिच्छूलायुधध° । ५ क. ख. ङ. च. °त्राम्बरायुधाः । सु° । ग. घ. ज. °त्रायुधाधराः । सु° । ६ झ. °क्तपीता विलासिनीः । ना° । ७ ग. वो घातयिष्यामि तं द्रुतम् । च° । घ. वो यावदागमनं मम । च° । ज. वो यावद्यामि दानवः । त° । ८ क. ख. ङ. च. ज. °न्यं देवदे° ।

देव्य ऊचुः—

बुभुक्षिताः स्मो वरदे देहि नो भोजनं शुभे ॥ ९६

पुलस्त्य उवाच—

एवमुक्ता तदा देवी दध्यौ तासां तु भोजनम् । नाध्यगच्छद्यदा तासां भोजनं चिन्तितं महत् ॥

तदा दध्यौ महादेवं रुद्रं पशुपतिं विभुम् । सोऽपि ध्यानात्समुत्तस्थौ परमात्मा त्रिलोचनः ॥९८

उवाच रुद्रस्तां देवीं किं ते कार्यं विवक्षितम् । ब्रूहि देवि वरारोहे यत्ते मनसि वर्तते ॥ ९९

शिवदूत्युवाच—

छागगन्धेन ते देव च्छागरूपं च दृश्यते । एतास्त्वां भक्षयिष्यन्ति भक्ष्यं मांसं प्रदीयताम् १००

भक्ष्यार्थमासां देवेश किंचिद्दातुमिहार्हसि । खली कुर्वन्ति मामेता भक्ष्यार्थिन्यो महाबलाः १०१

अन्यथा मामपि बलाद्भक्षयेयुरिमा विभो । एवं मां तु समालक्ष्य भक्ष्यं कल्पय सत्वरम् ॥१०२

रुद्र उवाच—

शिवदूति ब्रवीम्येकं प्रवृत्तं यद्युगान्तरे । गङ्गाद्वारे दक्षयज्ञो गणैर्विध्वंसितो मम ॥ १०३

तत्र यज्ञो मृगो भूत्वा प्रदुद्राव स वेगवान् । मया बाणेन विद्धोऽसौ रुधिरेण प्रसिञ्चितः ॥१०४

अजगन्धस्तदा भूतो नाम देवैस्तु मे कृतम् । अजगन्धस्त्वमेवेति दास्ये चान्यत्तु भोजनम् ॥१०५

एतासां शृणु मे देवि भक्ष्यमेकं मयोदितम् । कथ्यमानं(?) वरारोहे कालरात्रि महाप्रभे ॥ १०६

या स्त्री सगर्भा देवेशि अन्यस्त्रीपरिधानकम् । परिधत्ते स्पृशेद्वाऽपि पुरुषस्य विशेषतः ॥ १०७

स भागोऽस्तु वरारोहे कासांचित्पृथिवीतले । अप्येकवर्षं बालं तु गृहीत्वा तत्र वै बलात् ॥१०८

भुक्त्वा तिष्ठन्तु सुप्रीता अपि वर्षशतान्बहून् । अन्यैः सूतिगृहच्छिद्रं गृह्णीयुस्तत्र पूजिताः ॥१०९

निवसिष्यन्ति देवेशि तथा वै जातहारिकाः । गृहे क्षेत्रे तडागे च वाप्युद्यानेषु चैव हि ॥ ११०

अन्येषु च रुदत्यो याः स्त्रियस्तिष्ठन्ति नित्यशः । तासां शरीरगाश्चान्याः काश्चित्तृप्तिमवाप्नुयुः ॥

शिवदूत्युवाच—

कुत्सितं भवता दत्तं प्रजानां परिपीडनम् । न च ते बुध्यते दातुं शंकरस्य विशेषतः ॥ ११२

त्रपाकरं यद्भवति प्रजानां परिपीडकम् । न तु तद्युज्यते दातुमासां भक्ष्यं तु शंकर ॥ ११३

रुद्र उवाच—

अवन्त्यां तु यदा स्कन्दो मया पूर्वं तु भक्षितः । चूडाकर्मणि वृत्ते च कुमारस्य तदा शुभे ॥११४

आगत्य मातरो भोज्यमपूर्वं तु प्रचक्रिरे । देवलोकाद्देवगणा मातरो भोज्यमागताः ॥ ११५

भुक्त्वा भवगृहे सर्वे ब्रह्माद्याः सुरसत्तमाः । गन्धर्वाप्सरसश्चैव यक्षाः सर्वे सगुह्यकाः ॥ ११६

मेर्वादयः शिखरिणो गङ्गाद्याः सरितस्तथा । सर्वे नागगणाः सिद्धाः पक्षिणोऽसुरसूदनाः ११७

---

१ क. ख. ग. घ. ङ. च. ज. महामाये । २ ख. ङ. च. ज. °गमध्ये तु वै देव च्छागरूपेण वर्तसे । ए° । ग. घ. °मध्ये तु वै देव च्छागरूपेण पश्यसे । ए° । ३ ग. घ. ज. याचयिष्यन्ति । ४ ख. ङ. च. भक्षमीप्सितमादरात् । भ° । ५ क. ख. ग. घ. ङ. च. °सि । शूली । ६ क. ख. ङ. च. ज. °युर्बुभुक्षिताः । एवं मां तु स° । ७ झ. °भो । अजगन्धं तमा° । ८ झ. °तः । मासाष्टमे व° । ९ झ. °हे गर्भेषु पृथि° । १० झ. °ले । एषु च्छिद्रेषु बालांश्च गृ° । ११ झ. °त् । लब्ध्वा तिष्ठन्ति सु° । ग. घ. ज. °त् । न चाऽऽति° । १२ ञ. °न्या भूर्ति गृहेऽच्छिद्रां गृ° । १३ ञ. °युस्तु ह्यपू° । १४ क. ख. ग. घ. ङ. च. ज. भवत्यां । १५ ञ. भक्षितः । १६ ग. घ. ज. भोग्यम° । १७ ञ. मातॄणां भोक्तुमा° । १८ ख. ङ. °ताः । तासां गृहे यदा स° । ग. घ. ज. °ताः । तेषां गृहे यदा स° ।

डाकिन्या सह वेताला भूताः प्रेता ग्रहैः सह । किमुक्तेनामुना देवि यत्सृष्टं ब्रह्मणा स्वयम् ॥
तत्सर्वं भोजनं तृप्त्यै स्वस्थानेषु विसर्जितम् ॥ ११८

शिवदूत्युवाच—

आसां हृद्यं देहि भोज्यं दुर्लभं यत्त्रिविष्टपे । स्नेहाक्तं सगुडं हृद्यं सुपक्वं परिकल्पितम् ॥
क्वचिन्नान्येन यद्भुक्तमपूर्वं परमेश्वर ॥ ११९

पुलस्त्य उवाच—

एवमुक्तस्तदा सोऽपि देवदेवो महेश्वरः । धर्मार्थं तास्तदोवाच पार्वत्याश्चैव संनिधौ ॥ १२०

शिव उवाच—

मया वै साधितं चान्नं प्रकारैर्बहुभिः कृतम् । तत्सर्वं च व्ययीभूतं न चान्यदिह विद्यते ॥ १२१
भवतीष्वागतास्वद्य किं देयं वै मया भवेत् । तृप्त्यर्थं भवतीनां यन्मया देयं विशेषतः ॥ १२२
आस्वादितं न चान्यैस्तु भक्ष्यार्थे च ददाम्यहम् । अधोभागे च मे नाभेर्वर्तुलौ फलसंनिभौ ॥
भक्षयध्वं हि सहिता लम्बौ मे वृषणाविमौ । अनेन चापि भोज्येन परा तृप्तिर्भविष्यति ॥ १२४

पुलस्त्य उवाच—

महाप्रसादमुदिता देव्यः कृत्वा स्तुतिं शुभाम् । प्रणिपत्य स्थिताः सर्वा इदं वचनमब्रवीत् १२५

रुद्र उवाच—

करिष्यन्ति शुभाचारा वि(न्वि)ना हास्येन ये नराः । तेषां धनं पशुः पुत्रा दाराश्चैव गृहादिकम्
भविष्यति मया दत्तं यच्चान्यन्मनसेप्सितम् । हास्येन दीर्घदशना दरिद्राश्चापि निन्दितात्(ताः)॥
तस्मान्न निन्दा हास्यं च कर्तव्यं तु विजानता । भवत्यो मातरः ख्याता ह्यस्मिँल्लोके भविष्यथ ॥
उपहारे नरा ये तु कारयिष्यन्ति कौमुदीर्म् । चणकान्पूरिकाश्चैव वृषणैः सह पूपकान् ॥ १२९
बन्धुभिः स्वजनैश्चैव तेषां वंशो न छिद्यते । अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ॥ १३०
रूपवान्सुभगो भोगी सर्वशास्त्रविशारदः । हंसयुक्तेन यानेन ब्रह्मलोके महीयते ॥ १३१
शिवदूति मयाऽप्येवं तासां दत्तं तु भक्षणम् । त्रपाकरं किं भवत्या उक्तोऽहं तन्निशामय ॥ १३२
जयस्व देवि चामुण्डे जय भूतापहारिणि । जय सर्वगते देवि कालरात्रि नमोऽस्तु ते ॥ १३३
विश्वमूर्ते शुभे शुद्धे विरूपाक्षि त्रिलोचने । भीमरूपे शिवे विद्ये महामाये महोदये ॥ १३४
मनोजये जये जम्भे भीमाक्षि क्षुभितक्षये । महामारि विचित्राङ्गि गेयनृत्यप्रिये शुभे ॥ १३५
विकरालि महाकालि कालिके पापहारिणि । पाशहस्ते दण्डहस्ते भीमरूपे भयानके ॥ १३६
चामुण्डे ज्वलमानास्ये तीक्ष्णदंष्ट्रे महाबले । सर्वयानस्थिते देवि प्रेतासनगते शिवे ॥ १३७
भीमाक्षि भीषणे देवि सर्वभूतभयंकरि । करालि विकराले च महाकालि करालिनि ॥ १३८
कालि करालवक्त्रान्ते कालरात्रि नमोऽस्तु ते । सर्वशस्त्रभृते देवि सर्वदेवनमस्कृते ॥ १३९
एवं स्तुता शिवदूती रुद्रेण परमेष्ठिना । तुतोष परमा देवी वाक्यं चेदमुवाच ह ॥ १४०

१ क. ख. ङ. च. °ला धृताः सर्वग्रहैस्तथा । किं° । ग. घ °ला वृताः सर्वग्रहैरपि । किं° । ज. °ला वृताः सर्वग्रहैः सह । किं° । २ क. ख. ग. घ. ङ. च. ज. °णा त्विह । त° । ३ ग. दत्तं । ४ क. ख. घ. ङ. च. ज. °प्त्यै स्वेच्छान्नं च नभोगत° । ५ क. ख. ग. घ. ङ. च. ज. कृते । ६ क. ख. ङ. च. ज. दुग्धं । ७ क. ख. ग. घ. ङ. च. ज. अपूर्वं । ८ क. °मू । कर्णिका° । ख. ङ. च. °मू । वर्णिका° । ९ क. ख. ग. घ. ङ. च. ज. महोदरे । १० क. ख. ङ. घ. °जये मनोदुर्गे भीं° । ग. °जवे जये दुर्गे भी° । ११ घ. च. दुर्गे । १२ क. ख. ग. घ. च. ज. भीमहस्ते । १३ क. च. ज. शवयानप्रिये । ख. शिवयानप्रिये । १४ क. ख. ङ. च. ज. °वंशास्त्र° ।

शिवदूत्युवाच—

वरं वृणीष्व देवेश यत्ते मनसि वर्तते ॥ १४१

रुद्र उवाच—

स्तोत्रेणानेन ये देवि स्तोष्यन्ति त्वां वरानने । तेषां त्वं वरदा देवि भव सर्वगता सती ॥ १४२
इमं पर्वतमारुह्य यः पूजयति भक्तितः । स पुत्रपौत्रपशुमान्समृद्धिमुपगच्छतु ॥ १४३
[*यश्चेमं शृणुयाद्भक्त्या तव देवि समुद्भवम् । सर्वपापविनिर्मुक्तः परं निर्वाणमृच्छतु] ॥ १४४
भ्रष्टराज्यो यदा राजा नवम्यां नियतः शुचिः । अष्टम्यां च चतुर्दश्यामुपवासी नरोत्तमः १४५
संवत्सरेण लभते राज्यं निष्कण्टकं पुनः । एषा ज्ञानात्मिका शक्तिर्वेदवेदाङ्गगामिनी ॥ १४६
एषैव राजसी शक्तिर्वैष्णवी परिकीर्तिता । एषा रौद्री तु या शक्तिः शिवदूतीति कथ्यते॥ १४७
य एवं शृणुयान्नित्यं भक्त्या परमया नृप । सर्वपापविनिर्मुक्तः परं निर्वाणमाप्नुयात् ॥ १४८
यश्चैतत्पठते भक्त्या स्नात्वा वै पुष्करे जले । सर्वमेतत्फलं प्राप्य ब्रह्मलोके महीयते ॥ १४९
यत्रैतल्लिखितं गेहे सदा तिष्ठति पार्थिव । न तत्राग्निभयं घोरं सर्पचौरादिसंभवम् ॥ १५०
यश्चेदं पूजयेद्भक्त्या पुस्तकेऽपि स्थितं बुधः । तेन चेष्टं भवेत्सर्वं त्रैलोक्यं सचराचरम् ॥ १५१
जायन्ते बहवः पुत्रा धनधान्यं वराः स्त्रियः । रत्नान्यश्वा गजा भृत्यास्तेषामाशु भवन्ति च ॥
यत्रेदं लिख्यते गेहे तस्येदं जायते ध्रुवम् ॥ १५२

इति श्रीमहापुराणे पाद्मे सृष्टिखण्ड उमामहेश्वरसंवादे शिवदूतीचरितं नाम षड्विंशोऽध्यायः ॥ २६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२५०६१

---

अथ सप्तविंशोऽध्यायः ।

---

भीष्म उवाच—

केन कर्मविपाकेन प्रेतत्वमुपजायते । केन चात्र प्रमुच्येत तन्मे शंसितुमर्हसि ॥ १

पुलस्त्य उवाच—

अहं ते संप्रवक्ष्यामि सर्वमेतदशेषतः । यच्छ्रुत्वा न पुनर्मोहं यास्यसे नृपसत्तम ॥ २
येन वै जायते प्रेतो येन चात्र प्रमुच्यते । प्राप्तोऽथ नरकं घोरं दुस्तरं त्रिदशैरपि ॥ ३
सतां संभाषणे चैव पुण्यतीर्थानुकीर्तने । मानवास्तु प्रमुच्यन्त आपन्नाः प्रेतयोनिषु ॥ ४
श्रूयते हि पुरा भीष्म ब्राह्मणः संशितव्रतः । पृथुः सर्वत्र विख्यातः संतोषे च सदा स्थितः ॥ ५
स्वाध्याययुक्तो होमेन नित्ययुक्तश्च योगवित् । जपयज्ञविधानेन युक्तः कालं क्षिपेत्तु सः ॥ ६
युक्तः शमदमाभ्यां च क्षान्त्या युक्तश्च तत्त्ववित् । अहिंसाहितचित्तश्च नित्ययुक्तः स्वकर्मवित् ७
ब्रह्मचर्यसमायुक्तस्तपोयुक्तस्तु संस्थितः । युक्तः स पितृकार्येषु युक्तो वैदिककर्मसु ॥ ८
परलोकभये युक्तो युक्तः सत्यवचः प्रति । युक्तो मधुरवाक्येषु युक्तश्चातिथिपूजने ॥ ९

---

* धनुश्चिह्नान्तर्गतः पाठः क. ग. घ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. ज. °तत्वं जायते पुनः । के° । २ क. ख. ग घ. ङ. च. ज. °न्मे ब्रूहि महामते । पु° । ३ क. ख. ग. घ. ङ. च. ज. लोके । ४ ग. गेहेषु । ५ क. ख. ग. घ. ङ. च. ज. °श्च मार्दवे च तथा स्थितः । ब्र° ।

इति योगसमायुक्तः सर्वद्वंद्वविसर्जने । स्वकर्मविधिसंयुक्तो युक्तः स्वाध्यायकर्मसु ॥ १०
एवं कर्माणि कुर्वन्स संसारविजिगीषया । बहून्यब्दान्यतीतानि ब्राह्मणस्य वने सतः ॥ ११
तस्य बुद्धिरियं जाता तीर्थाभिगमनं प्रति । पुण्यैस्तीर्थजलैरेतैत्पुण्यं कुर्यां कलेवरम् ॥ १२
प्रयतः पुष्करे स्नात्वा भास्करस्योदयं प्रति । कृतजाप्यनमस्कारोऽप्यध्वानं प्रतिपद्यते ॥ १३
अग्रतः पञ्च पुरुषानपश्यदतिभीषणान् । अरण्ये कण्टके देशे निर्जले[5] वृक्षवर्जिते ॥ १४
तान्दृष्ट्वा विकृताकारान्सुघोरान्पापदर्शनान् । ईषत्संत्रस्तहृदयो व्यतिष्ठन्निश्चलस्तदा ॥ १५
अवलम्ब्य ततो धैर्यं भयादुद्विग्नमानसः । पप्रच्छ मधुराभाषी के यूयं विकृताननाः ॥ १६
किं वा केन कृतं कर्म येन प्राप्ताश्च वैकृतम् । कथमेवंविधाः सर्वे प्रस्थिता वाऽथ चाध्वनि ॥ १७

प्रेता ऊचुः—

क्षुत्पिपासार्दिता नित्यं महादुःखसमावृताः । हृतबोधा वयं सर्वे नष्टसंज्ञा विचेतसः ॥ १८
न जानीमो दिशः क्वापि विदिशश्चापि काश्च न। नान्तरिक्षं महीं चापि न जानीमो दिवं तथा १९
यदेतद्दुःखमाख्यातमेतदेव सुखं भवेत् । प्रभातमिव संभाति भास्करोदयदर्शनात् ॥ २०
अहं पर्युषितो नाम सूचीमुखस्तथाऽपरः । शीघ्रगो [9]रोहकश्चैव पञ्चमो लेखकस्तथा ॥ २१

ब्राह्मण उवाच—

प्रेतानां कर्मजातानां नामानि भवतः कुतः । किं तत्कारणमुद्दिश्य येन यूयं सनामकाः ॥ २२

प्रेता ऊचुः—

अहं स्वादु सदा भुञ्जे दद्यां पर्युषितं द्विजे । एतत्कारणमुद्दिश्य नाम पर्युषितो मम ॥ २३
सूचिता बहवोऽनेन विप्रा अन्नादिकाङ्क्षिणः । एतत्कारणमुद्दिश्य सूचीमुखाभिधो मतः ॥ २४
शीघ्रं गतोऽस्मि विप्रेण याचितः क्षुधितेन वै । एतत्कारणमुद्दिश्य शीघ्रगो द्विजसत्तम ॥ २५
गृहोपरि सदा स्वादु भुङ्क्ते द्विजभयेन तु । उद्विग्नमानसस्तत्र तेन वै [10]रोहकः स्मृतः ॥ २६
मौनेनापि स्थितो नित्यं याचितो विलिखन्महीम् । अस्माकमपि पापिष्ठो लेखको नाम एष वै ॥
[11]कृच्छ्रेण लेखको याति रोहकस्तु अवाक्शिराः । शीघ्रगः पङ्गुतां प्राप्तः सूची सूचिमुखोऽभवत् ॥
पर्युषितो लम्बग्रीवो लम्बोदर उदाहृतः । बृहद्वृषणलम्बोष्ठः पापादस्मादजायत ॥ २९
एतत्ते सर्वमाख्यातमात्मवृत्तान्तसंभवम् । पृच्छस्व यदि ते श्रद्धा पृष्टाश्च कथयामहे ॥ ३०

ब्राह्मण उवाच—

ये जीवा भुवि तिष्ठन्ति सर्वेऽप्याहारमूलकाः । युष्माकमपि चाऽऽहारं श्रोतुमिच्छामि तत्त्वतः ॥

प्रेता ऊचुः—

शृणुष्वाऽऽहारमस्माकं सर्वसत्त्वविगर्हितम् । यं श्रुत्वा निन्दसे ब्रह्मन्भूयो भूयश्च नित्यशः ॥ ३२
श्लेष्ममूत्रपुरीषेण [12]योषिदङ्गमलेन च । गृहाणि त्यक्तशौचानि प्रेता भुञ्जन्ति तत्र वै ॥ ३३
[13]स्त्रीदग्धानि प्रकीर्णानि प्रकीर्णो[14]पस्कराणि च । मलेनापि जुगुप्सानि प्रेता भुञ्जन्ति तत्र वै ॥ ३४

---

१ क. च. इष्टापूर्तसमायुक्तो युक्तो द्वंद्वविवर्जितः । स्व॰ । ख. ङ. इष्टापूर्तसमायुक्तो युक्तो द्वं॰ । ग. ज. इष्टजातिसमायुक्तो युक्तो द्वंद्वविवर्जे॰ । २ क. ख. ङ. च. ॰स्य गृहे स॰ । ग. ॰स्य च यत्नतः । ३ क. ख. ग. घ. ङ. च. ज. ॰तत्क्लिष्टं कु॰ । ४ ञ. ॰ध्वतः । अ॰ । ५ क. ख. ङ. च. ॰र्जने पक्षिव॰ । ग. घ. ज. ॰र्जने वृ॰ । ६ क. ख. ग. घ. ङ. च. ज. ॰कृताः कुतः । किं । ७ ञ. ॰स्थिताः कुत्र चा॰ । ८ क. ख. ग. घ. ङ. च. ज. नष्टचित्ता । ९ झ. रोधक॰ । १० झ. रोधकः । ११ झ. मन्द्रेण । १२ क.ख.घ.ङ.च.ज. ॰षितां सुसमन्ततः।गृ॰। १३ ञ. स्त्रीषु जग्धानि कीं॰। १४ ग.ज. ॰र्णोच्छिष्टकानि च।

[+चित्तलज्जाविहीनानि पतितैः सेवितानि च । दस्युधर्मे च निरताः प्रेता भुञ्जन्ति तत्र वै॥ ३५
[1]बलिमन्त्रविहीनानि होमहीनानि यानि च । व्रतैश्चैव विहीनानि प्रेता भुञ्जन्ति तत्र वै ] ॥ ३६
गुरवो नैव पूज्यन्ते स्त्रीजितानि गृहाणि च । क्रोधलोभगृहीतानि प्रेता भुञ्जन्ति तत्र वै ॥ ३७
त्रपा मे जायते तात कथ्यमाने स्वभोजने । अस्मात्परतरं चान्यत्प्रवक्तुं नैव शक्यते ॥ ३८
निस्तीर्णाः(र्विण्णाः) प्रेतभावेन पृच्छामस्त्वां दृढव्रत । यथा न भवति प्रेतस्तन्मे वद तपोधन ॥

ब्राह्मण उवाच—

एकरात्रं[2]त्रिरात्रेण कृच्छ्रचान्द्रायणादिभिः । व्रतैरन्यैः कृतैर्नित्यं न प्रेतो जायते नरः[3] ॥ ४०
त्रीनग्नीन्पञ्च चैकं वा अहन्यहनि सेवते । सर्वभूतदयापन्नो न प्रेतो जायते नरः ॥ ४१
तुल्यो मानापमाने च तुल्यः काञ्चनलोष्टयोः । तुल्यः शत्रौ च मित्रे च न प्रेतो जायते नरः ॥
देवतातिथिपूजासु गुरुपूजासु नित्यशः । रतो वै पितृपूजासु न प्रेतो जायते नरः ॥ ४३
शुक्लाऽङ्गारकसंयुक्ता चतुर्थी जायते यदा । श्रद्धया[4] श्राद्धकृन्मर्त्यो न प्रेतो जायते नरः ॥ ४४
[5]जितक्रोधो नमात्सर्यस्तृष्णासङ्गविवर्जितः । क्षमावान्दानशीलश्च न प्रेतो जायते नरः ॥ ४५
गोब्राह्मणांश्च तीर्थानि पर्वतांश्च नदीस्तथा । देवांश्चैव तु यो वन्द्यान्न प्रेतो जायते नरः ॥ ४६

प्रेता ऊचुः—

श्रुताश्च विविधा धर्माः पृच्छामो दुःखिता मुने । येन वै जायते प्रेतस्तन्मे (नो) वद महामुने ४७

ब्राह्मण उवाच—

शूद्रान्नेन तु भुक्तेन ब्राह्मणस्तु विशेषतः । म्रियते ह्युदरस्थेन स वै प्रेतो भवेन्नरः[6] ॥ ४८
धर्मानाश्रमिणां त्यक्त्वा मद्यपस्त्रीनिषेवणम्(णः) । वृथामांसरतो (नित्यं) स वै प्रेतो भवेन्नरः ॥
अयाज्ययाजनाच्चैव याज्यानां च विसर्जनात् । रतो वै शूद्रसेवासु स प्रेतो जायते नरः ॥ ५०
न्यासापहर्ता मित्रस्य[7] शूद्रपाकरतः सदा । विश्रम्भघाती कूटस्थः स वै प्रेतो भवेन्नरः ॥ ५१
[*ब्रह्महा गोघ्नकः स्तेनः सुरापो गुरुतल्पगः । भूमिकन्यापहारी च स वै प्रेतो भवेन्नरः ] ५२
सामान्यां दक्षिणां लब्ध्वा गृह्णीते एक एव तु । नास्तिक्यभावे निरतः स वै प्रेतोऽभिजायते ॥
एवं ब्रुवति विप्रेन्द्र आकाशे दुन्दुभिस्वनः । पुष्पवृष्टिः पपातोर्व्यां देवैर्मुक्ता सहस्रशः ॥ ५४
प्रेतानां तु विमानानि आगतानि समन्ततः । अस्य विप्रस्य संभाषात्पुण्यसंकीर्तनेन च+ ॥ ५५
तस्मात्सर्वप्रयत्नेन सतां संभाषणं कुरु । यदि ते श्रेयसा कार्यं गङ्गासुत अतन्द्रितः ॥ ५६
तिलकं सर्वधर्मस्य[8] पञ्चप्रेतामिमां कथाम् । पठन्नरो लक्षमेकं न प्रेतः कुलजो भवेत् ॥ ५७
शृणोति वाऽप्यभीक्ष्णं वा श्रद्धया परयाऽन्वितः । भक्त्या समन्वितो वाऽपि न प्रेतो जायते नरः ५८

भीष्म उवाच—

अन्तरिक्षे किमर्थं तु पुष्करं परिकीर्त्यते । मुनिभिर्धर्मशीलैश्च लभ्यते तत्कथं त्विह ॥ ५९

---

प + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. ङ. च. ज. पुस्तकस्थः । + एतदग्रे ग. घ. पुस्तकयोः 'तस्माच्छ्रिवा द्विजाग्र्याणां तीर्थेभ्योऽपि गरीयसी' इत्यर्धमधिकम् ।

---

१ क. ख. ग. घ. ङ. च. ज. °ने । पापात्पापत° । २ क ख. ग. घ. ङ. च. ज. °त्रद्विरा° । ३ क. च. °रः । त्रिरात्रं पञ्चरात्रं वा । घ. ज. °रः । त्रिरात्रं पञ्च एकं । ४ झ. शुद्धायां । ५ ञ. °क्रोधविमर्शो यरत° । ६ क. ख. ग. घ ङ. च. ज. °रः । मातरं पितरं भ्रातॄन्भगिनीं सुतमेव च । अदृष्टदोषांस्त्यजति स प्रेतो जायते नरः । ७ ग. घ. ज. °त्रञ्जुक्शूद्र° । ८ क. ख. ग. घ. ङ. च. ज. °स्य दर्शयंश्च पठेन्नरः । लक्षमेकं कुले विप्र न प्रेतो जायते नरः । शृ° ।

येन तल्लभ्यते ब्रह्मल्लँब्धं चैव फलप्रदम् । तन्मेऽवद्यं समाचक्ष्व कौतुकादिह पृच्छतः ॥ ६०

पुलस्त्य उवाच—

ऋषिकोटिः समायाता दक्षिणापथवासिनाम् । स्नानार्थं पुष्करे राजन्पुष्करं च वियद्गतम् ॥ ६१
मत्वा ते मुनयः सर्वे प्राणायामपरायणाः । ध्यायमानाः परं ब्रह्म स्थिता द्वादश वत्सरान् ॥ ६२
ब्रह्मा महर्षयस्तत्र देवाः सेन्द्राश्च सर्वशः । ऋषयोऽन्तर्हिताः प्रोचुर्नियमांस्ते सुदुष्करान् ॥ ६३
आकारणं पुष्करस्य मन्त्रेण क्रियतां द्विजाः । आपो हिष्ठेति तिसृभिर्ऋग्भिः सांनिध्यमेष्यति ॥
अघमर्षणजप्तेन भवेद्वै फलदायकम् । विप्रवाक्यावसाने तु सर्वैस्तैस्तु तथा कृतम् ॥ ६५
कृतेन पुण्यतां प्राप्ता ये निदेशाच्च ते द्विजाः । गर्हिता धर्मशास्त्रेषु ते विप्रा दक्षिणोत्तराः ॥ ६६
ये चान्ये पार्वतीयाश्च श्राद्धे नार्हन्ति केचन । एतस्मात्कारणाद्राजन्वियत्यत्र स्थितं च तत् ॥ ६७
कार्तिक्यां पुष्करे स्नानात्पूततामभिगच्छति । ब्रह्मणा सहितं राजन्सर्वेषां पुण्यदायकम् ॥ ६८
तत्राऽऽगतास्तु ये वर्णाः सर्वे ते पुण्यवर्धनाः । द्विजैस्तुल्या न संदेहो विना मन्त्रेण ते नृप ॥ ६९
आग्नेयं च यदा ऋक्षं कार्तिक्यां भवति क्वचित् । महती सा तिथिर्ज्ञेया स्नानदानेऽपि चोत्तमा ॥
यदा याम्यं तु भवति ऋक्षं तस्यां तिथौ क्वचित् । तिथिः साऽपि महापुण्या मुनिभिः परिकीर्तिता ॥
प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप । सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभा ॥ ७२
मन्दे वाऽर्के गुरौ चापि वारेष्वेतेषु वै त्रिषु । त्रीण्येतानि च ऋक्षाणि स्वयं प्रोक्तानि ब्रह्मणा ॥
अत्राऽऽश्वमेधिकं पुण्यं स्नातस्य भवति ध्रुवम् । दानमक्षयतां याति पितॄणां तर्पणं तथा ॥ ७४
विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः । संयोगः पद्मको नाम पुष्करे स्वतिदुर्लभः ॥ ७५
अन्तरिक्षादवतीर्णे तीर्थे पैतामहे शुभे । स्नानं येऽत्र प्रकुर्वन्ति तेषां लोका महोदयाः ॥ ७६
न स्पृहां तेऽन्यपुण्यस्य कृतस्याप्यकृतस्य च । करिष्यन्ति महाराज सत्यमेतदुदाहृतम् ॥ ७७
तीर्थानां प्रवरं तीर्थं पृथिव्यामिह पठ्यते । नास्मात्परं पुण्यतीर्थं लोकेऽस्मिन्नृप पठ्यते ॥ ७८
कार्तिक्यां तु विशेषेण पुण्यं पापहरा परा । उदुम्बरवनात्तस्मादागता च सरस्वती ॥ ७९
तया तत्पूरितं तीर्थं पुष्करं मुनिसेवितम् । दक्षिणे शिखरं भाति पर्वतस्यास्याविदूरतः ॥ ८०
तिलाञ्जनचयप्रख्यं वर्णतो नीलशाद्वलम् । भाति तच्छिखरं तस्य खस्थितं पुष्करं यथा ॥ ८१
प्रावृट्काले ह्र्यैषत्पूर्णं घनवृन्दमिवोन्नतम् । कदम्बपुष्पगन्धाढ्यं कुटजार्जुनभूषितम् ॥ ८२
रथमार्गमिवाऽऽरोढुं रवेस्तच्छिखरं स्थितम् । वृक्षैः सपुलकैः स्निग्धैः स्त्रीणामिव पयोधरैः ॥ ८३
श्रीफलैः शिखरं भाति समन्तात्सुमनोहरैः । गुञ्जद्भिः षट्पदकुलैः समन्तादुपशोभितम् ॥ ८४
कोकिलारावरुचिरं शिखिकेकारवाकुलम् । शृङ्गे मनोरमे तस्मिन्नुद्गता सा सुमध्यमा ॥ ८५
पुण्या पुण्यजलोपेता नदीयं ब्रह्मणः सुता । वंशस्तम्बा सुविपुला प्रवृत्ता चोत्तरामुखी ॥ ८६
गत्वा ततो नातिदूरं पुनर्यात्यपराङ्मुखी । ततः प्रभृति सा देवी प्रसन्ना प्रकटा स्थिता ॥ ८७
अन्तर्धानं परित्यज्य प्राणिनामनुकम्पया । कनका सुप्रभा चैव नन्दा प्राची सरस्वती ॥ ८८

१ क. ख. ग. घ. ङ. च. ज. °न्मे सर्वं स° । २ घ. ज. °न् । कारणेन त्रिपद्यन्ते म° । झ. °न् । कारणेन वियद्यातं मन्त्रेणाऽऽहूय° । ३ क. ख. घ. ङ. च. ज. न । ग. ये । ४ क ख. ग. घ. ङ. च. ज. °न्यभाजनाः । ख. °न्यभोजनाः । ५ क. ख. ग. घ. ङ. च. ज. यतिभिः । ६ ञ. °भा । यदा वाऽर्के गुरौ सौम्ये वा° । ७ झ. °तॄणामक्षयं त° । ८ ञ. पुष्करो । ९ ञ. °न्यस्य पुण्यकृ° । १० क. ख. ङ. च. ज. °तस्य वि° । झ. °तस्यातिदू° । ११ क. ख. ङ. च. नीलाञ्जनचयप्रख्यं । १२ क. ख. घ. ङ. च. ज. वियत्पूर्णं । १३ क. ख. घ. ङ. च. ज. °वेस्तुहिनसंस्थि° । १४ ग. घ. ज. °ति मन्दांशुकम° । १५ क. ख. ग. घ. ङ. च. ज. मनोरमा । १६ ग. घ. तत्र ।

पञ्चस्रोताः पुष्करे तु ब्रह्मणा परिभाषिता । तस्यास्तटे तु रम्याणि तीर्थान्यायतनानि च ॥८९
संसेवितानि मुनिभिः सिद्धैश्चापि समन्ततः । तेषु सर्वेषु भविता धर्महेतुः सरस्वती ॥ ९०
*स्नानदा(पा)नात्प्रदानाद्वा हिरण्यादेर्महानदी । हाटकक्षितिगौरीणां तत्तीर्थेषु महोदयम् ॥
दानं दत्तं नरैः स्नातैर्जनयत्यक्षयं फलम् ॥ ९१

धान्यप्रदानं प्रवरं वदन्ति[1] वस्त्रस्य दानं च तथा मुनीन्द्राः ।
यैस्तेषु तीर्थेषु नरैः प्रदत्तं तद्धर्महेतुः प्रवरं प्रदिष्टम् ॥ ९२
प्रायोपवेशं प्रयतः प्रयत्नाद्यस्तेषु कुर्यात्प्रमदा पुमान्वा ।
तीर्थेषु सायुज्यमवाप्य चेत्थं भुङ्क्ते फलं ब्रह्मपुरे यथेष्टम् ॥ ९३
तस्योपकण्ठे म्रियते हि यैस्तु कर्मक्षयात्स्थावरजङ्गमैश्च ।
ते चापि सर्वे सकलं प्रसह्य लभन्ति यज्ञस्य फलं प्रधानम् ॥ ९४
ततस्तु सा धर्मफलारणी च जन्मादिदुःखार्दितमानसानाम् ।
सर्वात्मना रुचिरफला सरस्वती सेव्या प्रयत्नात्पुरुषैर्महानदी ॥ ९५

तत्र ये सलिलं पूतं पिबन्ति सततं नराः । न ते मनुष्या देवास्ते जगत्यामिह संस्थिताः ॥ ९६
यज्ञैर्दानैस्तपोभिश्च यत्फलं प्राप्यते द्विजैः । तदत्र स्नानमात्रेण शूद्रैरपि शुभान्वितैः[3] ॥ ९७
दर्शनात्पुष्करस्यापि महापातकिनोऽपि ये । तेऽपि तत्पापनिर्मुक्ताः स्वर्गं यान्ति तनुक्षये ॥ ९८
तत्रोपवासाद्यज्ञस्य पौण्डरीकस्य यत्फलम् । तदाप्नोति नरः क्षिप्रमल्पायासेन पुष्करे ॥ ९९
मासे[4] मासे तिलान्यस्तु प्रयच्छति च सद्द्विजे । यथाशक्त्या(क्ति)[5] च भक्त्या च स विष्णुभवने वसेत्
तत्रोपवासं स्नानं च पञ्चगव्याशनं तथा । यः करोति नरः सोऽपि देहान्ते स्वर्गमाप्नुयात् १०१
वसन्ति तत्समीपस्था येऽपि तस्करजातयः । तेऽपि तस्यानुभावेन स्वर्गं यान्ति न संशयः १०२
ये पुनः[6] शुद्धवृत्तिस्थास्त्रिरात्रोपोषिता नराः । प्रयच्छन्ति [7]द्विजेष्वर्थं ब्रह्मशक्तिसमन्विताः १०३
ते मृता यानमारूढाः पद्मासनचतुर्भुजाः । ब्रह्मणा सह सायुज्यं प्राप्नुवन्त्यपुनर्भवम् ॥ १०४
गङ्गोद्भेदं यत्र गङ्गा संप्राप्ता सरितां वरा । सरस्वती[8] द्रष्टुकामा[9] पुनस्तत्र समागता ॥ १०५
तत्र गत्वा[10] पयः पूतं सुरसिद्धनिषेवितम् । सारस्वतं च विमलं विद्याधरगणार्चितम्[11] ॥ १०६
पीतमेकाञ्जलिमृ(मि)तं येनाऽऽप्तं तेन तत्परम् । अवलोक्य दिशं पूर्वां हा गङ्गेति सखि त्वया ॥
एकाकिनी वियुक्ताऽस्मि क्व यास्येऽहमबान्धवा । तां विज्ञाय ततो गङ्गा रुदती शोककर्शिता ॥
पूर्वदेशात्समायाता द्रष्टुं तां दीनमानसाम् । दृष्ट्वा च तां महाभागां परिष्वज्य च पीडिताम् ॥
नेत्रे प्रमृज्य चैतस्याः प्राह गङ्गा वचः[12] शुभम् ॥ ११०

गङ्गोवाच—

मा रोदीस्त्वं महाभागे दुष्करं ते कृतं सखि । देवकार्यं यदन्येन कर्तुं शक्यं न कर्हिचित्॥ १११
एतस्माच्चे महाभागे द्रष्टुं देवाः समागताः । एषां च क्रियतां पूजा वाङ्मनःकायकर्मणा[13] ॥ ११२

* इदमर्धं झ. पुस्तकस्थम् ।

१ अ. °न्ति तिलप्रदा° । २ क. ख. घ. ङ. च. ज. दुरापम् । ३ क. ख. घ. ङ. च. ज. स्त्रभावजैः । ४ क ख. ग. घ. ङ. च. ज. माघमा° । ५ ग. घ. ज. °थाकान्त्या च । ६ क. ख ग. घ. ङ. च. ज. °नः शूद्रवृ° । ७ क. ख. ग. घ. ङ च. ज. द्विजश्रेष्ठा व्र° । ८ झ. °स्वतीं द्र° । ९ क. ख ङ. च. °मा सान्त्वार्थं प्राह तां वरान् । त° । १० झ. गङ्गाप° । ११ झ. °म् । तदेकान्तस्थितं तत्र येनापस्तेन । १२ क. ख. ग. घ. ङ. च. ज. वचस्तदा । मा । १३ क. ख. ङ. च. °णा । सरस्वती सु° ।

पुलस्त्य उवाच—

सा तत्त्वतः सुरेन्द्राणां कृत्वा पूजाविधिं क्रमात्। क्रमेण पद्मजा पश्चात्संगता तु सखीजनम् ११३
ज्येष्ठमध्यमयोर्मध्ये संगमो लोकविश्रुतः। पश्चान्मुखी ब्रह्मसुता जाह्नवी तु उदङ्मुखी॥ ११४
ततस्ते विबुधाः सर्वे पुष्करे तु समागताः। विदित्वा दुष्करं कर्म तस्याः स्तुतिमकारयन्॥११५

देवा ऊचुः—

त्वं धृतिस्त्वं मतिर्लक्ष्मीस्त्वं विद्या त्वं गतिः परा। त्वं श्रद्धा त्वं परा निष्ठा बुद्धिर्मेधा धृतिः क्षमा
त्वं सिद्धिस्त्वं स्वधा स्वाहा त्वं पवित्रं मतं महत्। संध्या रात्रिः प्रभा भूतिर्मेधा श्रद्धा सरस्वती
यज्ञविद्या महाविद्या गुह्यविद्या च शोभना। आन्वीक्षिकी त्रयीविद्या दण्डनीतिश्च कथ्यते ११८
नमोऽस्तु ते पुण्यजले नमः सागरगामिनि। नमस्ते पापनिर्मोके नमो देवि वराङ्गने॥ ११९

पुलस्त्य उवाच—

एवं स्तुता हि सा देवी दिव्या स्वार्थपरायणैः। एवं सा प्राङ्मुखी यत्र स्थिता देवी सरस्वती
सर्वतीर्थवरा देवी सर्वामरसमन्विता। प्राचीनैषा बुधैर्ज्ञेया ब्रह्मणो वचनं यथा॥ १२१
तत्र सुधावटं नाम तीर्थं पैतामहं स्मृतम्। दर्शनेनापि ते तस्य महापातकिनोऽपि ये॥ १२२
भोगिभोगान्समश्नन्ति विशुद्धा ब्रह्मणोऽन्तिके। प्रायोपवेशं ये तत्र प्रकुर्वन्ति नरोत्तमाः॥ १२३
ते मृता हंसयानेन शिवं यान्त्यकुतोभयाः। तत्राल्पमपि यद्दत्तं दानं ब्रह्मविदात्मनाम्॥ १२४
[*जन्मान्तरशतं तेषां यच्छन्ते भावितात्मनाम्। खण्डस्फुटितसंस्कारं तत्र कुर्वन्ति ये नराः॥
ते ब्रह्मलोकमासाद्य मोदन्ते सुखिनः सदा। तत्र पूजा जपो होमः कृतो भवति देहिनाम् १२६
अनन्तफलदं सर्वं ब्रह्मभक्तिरतात्मनाम्।] तत्र दीपप्रदानेन ज्ञानचक्षुरतीन्द्रियः॥ १२७
प्राप्नोति धूपदानेन स्थानं ब्रह्मनिषेवितम्। अथ किं बहुनोक्तेन संगमे यत्तु दीयते॥ १२८
तदनन्तफलं प्रोक्तं जीवतो वा मृतस्य च। स्नानाज्जपात्तथा होमादनन्तफलसाधकम्॥ १२९
रामेणाऽऽगत्य वै तत्र पिण्डं दशरथस्य तु। दत्तं श्राद्धं तत्र तेन मार्कण्डेयेन दर्शितम्॥ १३०
तत्र वापी चतुष्कोणा तत्र पिण्डप्रदा नराः। हंसयुक्तेन यानेन यान्ति सर्वे त्रिविष्टपम्॥ १३१
तस्मादुपरि वै ब्रह्मा पितृमेधं चकार ह। यज्ञं यज्ञविदां श्रेष्ठः समाप्तवरदक्षिणम्॥ १३२
वसवः पितरो ज्ञेया रुद्राश्चैव पितामहाः। आदित्याश्च ततस्तेषां विहिताः प्रपितामहाः॥ १३३
[†त्रिविधा अपि आहूय पुनरुक्ता विरिञ्चिना। भवद्भिः पिण्डदानाद्यं ग्राह्यमत्र स्थितैः सदा॥
यत्कृतं पितृकार्यं च तदनन्तफलं भवेत्। तृप्त्यर्थं पितरस्तेषां तुष्टाश्चैव पितामहाः]॥ १३५
लभन्ते तर्पणात्तृप्तिं पिण्डदानात्त्रिविष्टपम्। तस्मात्सर्वं परित्यज्य प्राचीने पिण्डदो भव॥ १३६
गत्वा पुत्रः प्रयत्नेन पितॄन्सर्वान्प्रतर्पयेत्। प्राचीनेश्वरदेवस्य पुरोभूतं प्रतिष्ठितम्॥ १३७
आदितीर्थं तदित्युक्तं दर्शनादपि मुक्तिदम्। स्पृष्ट्वा तु सलिलं तत्र मुच्यते जन्मबन्धनात्॥१३८

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः। † धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः।

१ ग. घ. ज. सा तन्वती सु°। २ झ. °श्चादालिङ्ग्य तु। ३ क. ख. ग. घ. ङ. च. ज. °त्वा पुष्करं धर्मं त°। ४ क. ख. ङ. च. त्वं बुद्धिस्त्वं। घ. ज. त्वं दुन्दुभिर्मति°। ५ ज. रतिः। ६ ज. घृतं। ७ क. ख. ग. घ. ङ. च. ज. जगत्प्रिये। ८ क. ख. ग. घ. ङ. च. ज. °र्थमयी दे°। ९ क. च. शुद्धावटं। ख. ग. ङ. ज. शुद्धवटं। १० ज. °ता ब्रह्मयानेन दिवं। ११ क. ख. ग. घ. ङ. च. ज. °त्र दत्तेन दा°। १२ क. ख. ग. घ. ङ. च. ज. मधुदानेन। १३ ग. °हाः। प्रपितामहास्तथाऽऽदित्याः श्रुतिरेषा सनातनी। त्रि°।

अवगाहनाद्ब्रह्मणोऽसौ भवत्यनुचरः सदा । आदितीर्थे नरः स्नात्वा यः प्रदद्यात्समाधिना १३९
अन्नमल्पमपि प्रायः प्रायशः स्वर्गमाप्नुयात् । यस्तत्र ब्रह्मभक्तानां स्नात्वा दद्यान्नरः सुधीः १४०
कृशरेणापि हेम्ना च स स्वर्गे मोदते सुखी । प्राची सरस्वती यत्र नरैः किं मृग्यते परम् ॥ १४१
तत्स्नानात्फलसंभूत्यै तपो जपादिलक्षणम् । ये पिबन्ति नराः पुण्याः प्राचीं देवीं सरस्वतीम् ॥
न ते नराः सुरा ज्ञेया मार्कण्डेयर्षिरब्रवीत् । सरस्वतीं नदीं प्राप्य न स्नाने नियमः क्वचित् ॥
भुक्ते वा यदि वाऽभुक्ते दिवा वा यदि वा निशि । तत्तीर्थं सर्वतीर्थानां प्राचीनं प्रवरं स्मृतम् ॥
पापघ्नं पुण्यजननं प्राणिनां परिकीर्तितम् । ये पुनर्भावितात्मानस्तत्र स्नात्वा जनार्दनम् ॥ १४५
पूजयन्ति यथाशक्त्या(क्ति) ते प्रयान्ति त्रिविष्टपम् । देवानां प्रवरो विष्णुस्तेन यत्र सरस्वती ॥
सेविता तत्परं तीर्थं क्षितौ ब्रह्मसुतोऽब्रवीत् । ततस्तस्मान्महातीर्थं[3] मन्यमाना महोदयम् ॥ १४७
मन्दाकिनीमुदीक्षन्ती स्थिता तत्र सरस्वती । तत्तीर्थं सर्वतीर्थानां परं स्वायंभुवोऽब्रवीत् ॥ १४८
मन्दाकिन्या समं यत्र प्राप्य पुण्यसमागमम् । तत्र सा संस्थिता देवैः स्तुता देवी सरस्वती १४९
तामालोक्य तथा दीनां दीनास्यां दीनमानसाम् । सखीं तदाऽसृजद्ब्रह्मा रूपिणीं विमलेक्षणाम्
रोहिणीं[4] हरिरप्याशु जज्ञे कमललोचनाम् । वज्रिणीमपि देवेशो वज्रपाणिर्विसृष्टवान् ॥ १५१
न्यङ्कुं[5] नगरुचिर्देवो नीलकण्ठो वृषध्वजः । सखीं संजनयामास सरस्वत्यास्त्रिलोचनः ॥ १५२
विनोद्यमाना[6] सा राजन्सखीभ्यः सुरसुन्दरी । प्रहृष्टा यातुमारब्धा देवादेशान्महानदी ॥ १५३
ततः सा सखिभिः सार्धं प्राचीना गन्तुमुद्यता । सरस्वती समस्तानां तासां श्रेष्ठतमा स्मृता ॥
प्राचीसरस्वतीतोयं ये पिबन्ति मृगा भुवि । तेऽपि स्वर्गं गमिष्यन्ति यज्ञैर्द्विजवरा यथा ॥ १५५
चिन्तामणिरिव ह्येषा प्राची ज्ञेया सरस्वती । तथा कामफलस्यालं हेतुभूता महानदी ॥ १५६
दक्षिणां दिशमालोक्य पुनः पश्चान्मुखी गता । उक्ता तया तथा गङ्गा दिशं प्राचीं व्रजस्व ह ॥
न तेऽहं विस्मरणीया व्रज देवि यथागतम् ॥ १५७

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पुष्करमाहात्म्ये तीर्थावतारो नाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२५२१७

---

## अथाष्टाविंशतितमोऽध्यायः ।

---

भीष्म उवाच—

मार्कण्डेयेन वै रामः कथमत्र प्रबोधितः । कथं समागमो भूतः कस्मिन्काले कदा मुने ॥ १
मार्कण्डेयः कस्य सुतः कथं जातो महातपाः । नाम्नोऽस्य निगमं ब्रूहि यथाभूतं महामुने ॥ २

पुलस्त्य उवाच—

अथ ते संप्रवक्ष्यामि मार्कण्डेयोत्पत्तिमुत्तमाम् । पुरा कल्पे मुनिः पूर्वं मृकण्डुर्नाम विश्रुतः ॥ ३
भृगोः पुत्रो महाभागः सभार्यस्तप्तवांस्तपः । तस्य पुत्रस्तदा जातो वसतस्तु वनान्तरे ॥ ४
स पञ्चवार्षिको जातो बाल एव गुणाधिकः । ज्ञानिना स तदा दृष्टो भ्रमन्बालस्तदङ्गणे[7] ॥ ५

---

१ ञ. °नां नरः स्नात्वा दद्देद्धनम् । कृ° । २ क. ख. ग. घ. ङ. च. ज. तस्याः स्नानान्नरस्तृप्त्यै तपोयज्ञादि° । ३ झ. °र्थे तीर्थमन्यन्महो° । ४ क. ख. ग. घ. ङ. च. ज. हरिणीं । ५ क. ख. ङ. च. °न् । सुकुरङ्गरु° । झ. °न् । त्यक्त्वा नगरुचिं देवो । ६ क. ख. ग. घ. ङ. च. ज. विलोक्यमाना । ७ क. ख. ग. घ. ङ. च. ज. °णे । पिता समुचितं कालं भाव्यर्थे प्रतिबोधितः । त° ।

स्थित्वा स सुचिरं कालं तज्जीवनमबुध्यत । तस्य पित्रा स वै पृष्टः कियदायुः सुतस्य मे ॥ ६
संख्ययाऽऽचक्ष्व वर्षाणि[1] तान्यस्याभ्यधिकानि च । मृकण्डुनैवमुक्तस्तु स ज्ञानी वाक्यमब्रवीत् ७

सिद्ध उवाच—

षण्मासमायुः पुत्रस्य धात्रा सृष्टं मुनीश्वर । नैव शोकस्त्वया कार्यः सत्यमेतदुदाहृतम् ॥ ८

पुलस्त्य उवाच—

*स तच्छ्रुत्वा वचो भीष्म ज्ञानिना यदुदाहृतम् । अथोपनयनं चक्रे बालकस्य पिता तदा ॥ ९
आह चैनं पिता पुत्रमृषिं त्वमभिवादय । एवमुक्तः स वै पित्रा संहृष्टश्चाभिवादनम् ॥ १०
न वर्णावर्णतां वेत्ति सर्ववर्णाभिवादनम्(ने) । पञ्च मासास्त्वतिक्रान्ता दिवसाः पञ्चविंशतिः ११
मार्गेणाथ समायातास्तेन सप्तर्षयोऽमलाः । बालेन तेन ते दृष्टाः सर्वे चाप्यभिवन्दिताः ॥ १२
आयुष्मान्भव तैरुक्तः स बालो दण्डमेखली । उक्त्वैवं ते पुनर्बालमपश्यन्क्षीणजीवितम् ॥ १३
दिनानि पञ्च तस्याऽऽयुर्ज्ञात्वा भीताश्च ते नृप । तं गृहीत्वा बालकं च गतास्ते ब्रह्मणोऽन्तिकम्
प्रतिमुच्य च तं बालं प्रणिपेतुः पितामहम् । अयमावेदितस्तैस्तु तेन ब्रह्माऽभिवादितः ॥ १५
चिरायुर्ब्रह्मणा बालः प्रोक्तः स ऋषिसंनिधौ । ततस्ते मुनयः प्रीताः श्रुत्वा वाक्यं पितामहात्
पितामह ऋषीन्दृष्ट्वा प्रोवाच विस्मयान्वितः । १६

ब्रह्मोवाच—

कार्येण येन चाऽऽयातः कोऽयं बालो निवेद्यताम् ॥ १७

पुलस्त्य उवाच—

ततस्त ऋषयो राजन्सर्वे तस्मै न्यवेदयन् । १८

ऋषय ऊचुः—

पुत्रो मृकण्डोः क्षीणायुः सायुषं कुरु बालकम् । अल्पायुषः सुतस्यास्य बद्ध्वेमां चापि मेखलाम्
यज्ञोपवीतं दण्डं च दत्त्वा तेन प्रबोधितः । यं कंचित्पश्यसे बाल भ्रमन्तं भूतले जनम् ॥ २०
तस्याभिवादनं कार्यमेवमाह पिता वचः । अभिवादनशीलोऽयं क्षितौ दृष्टः परिभ्रमन् ॥ २१
तीर्थयात्राप्रसङ्गेन दैवयोगात्पितामह । चिरायुर्भव पुत्रेति प्रोक्तोऽसौ तत्र बालकः ॥
कथं नानृतिनो देव भवामो भवता सह ॥ २२

पुलस्त्य उवाच—

एवमुक्तस्तदा तैस्तु ब्रह्मा लोकपितामहः । ऋतवाक्यादियं भूमिः संस्थिता सर्वतोभया ॥ २३

ब्रह्मोवाच—

मत्समश्चाऽऽयुषा बालो मार्कण्डेयो भविष्यति । [+ऋषीणां चापि मुख्यश्च मत्सहायो भविष्यति]
कल्पस्याऽऽदौ तथा चान्ते वृतो मुनिभिरुत्तमैः । २४

पुलस्त्य उवाच—

एवं ते मुनयो बालं ब्रह्मलोकात्पितामहम् । संसाध्य प्रेषयामासुर्भूयोऽप्येतं धरातलम् ॥ २५

* इदमर्धं झ. पुस्तकस्थम् । + धनुश्चिह्नान्तर्गतः पाठः क. ख ग. घ. ङ. च. ज. पुस्तकस्थः ।

१ झ. ज्ञानी । २ क. ख. ग. घ. ङ. च. ज. °णि ततोऽस्या° । ३ क. ख. ग. घ. ङ. च. ज. °त्रमासीनम° । ४ क. घ. च. ज. °तिपद्य च तं राजन्प्रणि° । ५ क. ख. ग. घ. ङ. च. ज. °याताः कोऽ° । ६ झ. ऋतं वाचः कथं भूताः सर्वे एवेह संस्थिताः । ब्र° । ७ क. ख. ग. घ. ङ. च. ज. °तो मे मुनिसत्तमः । ए° ।

तीर्थयात्रां गता विप्रा मार्कण्डेयो निजं गृहम् । जगाम तैर्गतैर्विप्रैः पितरं स्वमथाब्रवीत् ॥ २६

मार्कण्डेय उवाच—

ब्रह्मलोकमहं नीतो मुनिभिर्ब्रह्मवादिभिः । दीर्घायुश्च कृतश्चास्मि वरान्दत्त्वा विसर्जितः ॥ २७
एतदन्यच्च मे दत्तं ग्रतं चिन्ताकरं तव । कल्पस्याऽऽदौ तथा चान्ते भविष्ये समनन्तरे॥ २८
लोककर्तुर्ब्रह्मणोऽहं प्रसादात्तस्य वै मुने । पुष्करं वै गमिष्यामि[2] ब्रह्मलोकसमं हि तत्॥ २९
[*तत्राहं देवदेवेशमुपासिष्ये पितामहम् । सर्वकामावाप्तिकरं सर्वारातिनिवर्हणम् ॥ ३०
सर्वसौख्यप्रदं देवमिन्द्रादीनां परायणम् । ब्रह्माणं तोषयिष्यामि सर्वलोकपितामहम् ॥ ३१

पुलस्त्य उवाच—

मार्कण्डेयवचः श्रुत्वा मृकण्डुर्मुनिसत्तमः । जगाम परमं हर्षं क्षणमेकं समुच्छ्वसन् ॥ ३२
धैर्यं(धियं) सुमनसाऽऽस्थाय इदं वचनमब्रवीत् ।

मृकण्डुरुवाच—

अद्य मे सफलं जन्म जीवितं च सुजीवितम् । सर्वस्य जगतां स्रष्टा येन दृष्टः पितामहः ॥ ३३
त्वया दायादवानस्मि पुत्रेण वंशधारिणा । गच्छ पश्य त्वं देवेशं पुष्करस्थं पितामहम् ॥ ३४
दृष्टे तस्मिञ्जगन्नाथे न जरा मृत्युरेव च । नृणां भवन्ति सौख्यानि तथैश्वर्यं तथाऽक्षयम् ॥ ३५
त्रीणि शृङ्गाणि शुभ्राणि त्रीणि प्रस्रवणानि च।पुष्कराणि तथा त्रीणि न विद्म(द्म)स्तत्र कारणम्
कनीयांसं (?) मध्यमं च तृतीयं ज्येष्ठपुष्करम् । शृङ्गशब्दाभिधानानि शुभप्रस्रवणानि च ॥ ३७
ब्रह्मा विष्णुस्तथा रुद्रो नित्यं संनिहितास्त्रयः । पुष्करेषु महाराज नातः पुण्यतमं भुवि ॥ ३८
विरजं विमलं तोयं त्रिषु लोकेषु विश्रुतम् । ब्रह्मलोकस्य पन्थानं धन्याः पश्यन्ति पुष्करम्॥३९
ये तु वर्षशतं साग्रमग्निहोत्रमुपासते । कार्तिकीं वा वसेदेकां पुष्करे सममेव च ॥ ४०
कर्तुं मया न शकितं कर्मणा नैव साधितम् । तदयत्नात्त्वया तात मृत्युः सर्वहरो जितः ॥ ४१
तत्र दृष्टः स देवेशो ब्रह्मा लोकपितामहः । नान्यो मर्त्यस्त्वया तुल्यो भविता जगतीतले ॥ ४२
अहं वै तोषितो येन पञ्च(श्च)वार्षिकजन्मना । वरेण त्वं मदीयेन उपमां चिरजीविनाम् ॥ ४३
गमिष्यासि न संदेहस्तथाऽऽशीर्वचनं मम । एवं वदन्ति ते सर्वे व्रज लोकान्यथेप्सितान् ॥ ४४

पुलस्त्य उवाच—

एवं लब्धप्रसादेन मृकण्डुतनयेन च । आश्रमः स्थापितस्तेन मार्कण्डाश्रम इत्युत] ॥ ४५
तत्र स्नात्वा शुचिर्भूत्वा वाजपेयफलं लभेत् । सर्वपापविशुद्धात्मा चिरायुर्जायते नरः ॥ ४६
तथाऽन्यं संप्रवक्ष्यामि इतिहासं पुरातनम् । यथा रामेण वै तीर्थं पुष्करं तु विनिर्मितम् ॥ ४७
चित्रकूटात्पुरा रामो मैथिल्या लक्ष्मणेन च । अत्रेराश्रममागम्य पप्रच्छ मुनिसत्तमम् ॥ ४८

श्रीराम उवाच—

कानि तीर्थानि पुण्यानि किंवा क्षेत्रं महामुने । यत्र गत्वा नरो योगिन्वियोगं सह बन्धुभिः॥४९
नैव प्राप्नोति भगवंस्तन्ममाऽऽचक्ष्व सुव्रत । अनेन वनवासेन राज्ञस्तु मरणेन च ॥
भरतस्य वियोगेन परितप्ये ह्यहं त्रिभिः ॥ ५०

---

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

---

१ ख. ग. घ. ङ. च. ज. पितः । २ क. ख. ग. घ. ङ. च. ज. °मि तपस्तप्तुं समुद्यतः । तत्र स्ना° ।

पुलस्त्य उवाच—

तद्वाक्यं राघवेणोक्तं श्रुत्वा विप्रर्षभस्तदा । ध्यात्वा स सुचिरं कालमिदं वचनमब्रवीत् ॥ ५१

अत्रिरुवाच—

साधु पृष्टं त्वया वत्स रघूणां वंशवर्धन । मम पित्रा कृतं तीर्थं पुष्करं नाम विश्रुतम् ॥ ५२

पर्वतौ द्वौ च विख्यातौ मर्यादायज्ञपर्वतौ । कुण्डत्रयं तयोर्मध्ये ज्येष्ठमध्यकनिष्ठकम् ॥ ५३

तेषु गत्वा दशरथं पिण्डदानेन तर्पय । [*सुरासुरेषु वै श्रीमान्ब्रह्मा लोकपितामहः ॥ ५४

दृष्टे तस्मिञ्जगन्नाथे संसारस्थितिकारके । तत्र व्रजन्ति ये विप्रा राजानः श्रद्धयाऽन्विताः ॥ ५५

प्राप्नुवन्ति परं स्थानं यत्र देवः पितामहः । ] तीर्थानां प्रवरं तीर्थं क्षेत्राणामपि चोत्तमम् ॥ ५६

अवियोगा चतुरस्रा वापी रघुकुलोद्वह । तथा सौभाग्यकूपोऽन्यः सजलो रघुनन्दन ॥ ५७

तेषु पिण्डप्रदानेन पितरो मोक्षगामिनः । आभूतसंप्लवं कालमेतदाह पितामहः ॥

तत्र राघव गच्छस्व भूयोऽप्यागमनं कुथाः ॥ ५८

पुलस्त्य उवाच—

तथेति चोक्त्वा रामोऽपि गमनाय मनो दधे । ऋक्षवन्तमतिक्रम्य नगरं वैदिशं तथा ॥ ५९

चर्मण्वतीं समुत्तीर्य प्राप्तोऽसौ यज्ञपर्वतम् । तमतिक्रम्य वेगेन मध्यमे पुष्करे स्थितः ॥ ६०

पितॄन्संतर्पयामास अद्भिर्देवांस्तु सर्वशः । स्नानावसाने रामेण मार्कण्डो मुनिपुंगवः ॥ ६१

आगच्छञ्शिष्यसंयुक्तो दृष्टस्तत्रैव धीमता । गत्वा वै संमुखं तस्य प्रणिपत्य च सादरम् ॥ ६२

पृष्टोऽवियोगजं(दः) कूपं(पः) कतमस्यां दिशि प्रभो। सुतो दशरथस्याहं रामो नाम जनैः स्मृतः

सौभाग्यवापीं तां द्रष्टुमहं प्राप्तोऽत्रिशासनात् । तत्स्थानं भगवन्विप्र अधुना प्रब्रवीहि मे ॥ ६४

एवमुक्तस्तु रामेण मार्कण्डः प्रत्युवाच ह ॥ ६५

मार्कण्डेय उवाच—

साधु राघव भद्रं ते सुकृतं भवता कृतम् । तीर्थयात्राप्रसङ्गेन यत्प्राप्तोऽसीह सांप्रतम् ॥ ६६

पञ्चयां गच्छस्व पश्य त्वं वापीं तामवियोगजा(दा)म् । अवियोगश्च सर्वस्य सर्वेणास्य प्रजायते

ऐहिकेनाऽऽमुष्मिकेण जीवता च मृते न वा ॥ ६७

पुलस्त्य उवाच—

एतद्वाक्यं मुनीन्द्रस्य श्रुत्वा लक्ष्मणपूर्वजः । सस्मार रामो राजानं तदा दशरथं नृपम् ॥ ६८

भरतं सहशत्रुघ्नं मातॄरन्यांश्च नागरान् । एवं चिन्तयतस्तस्य संध्याकालो व्यजायत ॥ ६९

उपास्य पश्चिमां संध्यां मुनिभिः सह राघवः । सुष्वाप तां निशां तत्र भ्रातृभार्यासमन्वितः ७०

विभावर्यवसाने तु स्वप्नान्ते रघुनन्दनः । सह पित्रा तथा चान्यैरुपाध्यायान्वितः किल ॥ ७१

विवाहमङ्गले वृत्ते बहुभिर्बान्धवैः सह । समासीनः सभार्योऽसाद्दृषिभिः परिवारितः ॥ ७२

लक्ष्मणेनाप्येवमेव दृष्टो वै सीतया तथा । प्रभाते तु मुनीनां तु सर्वमेव न्यवेदयत् ॥ ७३

ऋषिभिश्च तथेत्युक्तः सत्यमेतद्रघूत्तम । मृतस्य दर्शने श्राद्धं कार्यमावश्यकं स्मृतम् ॥ ७४

---

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. ज. वीर । २ झ. °ध्यमकल्मषम् । ३ ग. च सुरसा वा° । ४ ख. ङ. जनैर्वृतः । ५ क. ख. ङ. च. ज. °नं तौ च वै कूपौ भगवन्प्रब्र° । ग. घ. °नं तं च वै कूपं भगवन्प्रब्र° । ६ क. ख. ग. घ. ङ. च. ज. °म् । एह्याग° । ७ ञ. सर्वैश्च कूप एवात्र जा° । ८ झ. सशिखां । ९ ख. ग. घ. ङ. च. ज. °न्यैरयोध्यायां स्थितः ।

तृप्तिकामास्तु पितरस्तथा चैवान्नकाङ्क्षिणः । ददन्ति दर्शनं स्वप्ने भक्तियुक्तस्य राघवं ॥ ७५
वियोगश्चैव ते मात्रा पित्रा च भरतेन च । चतुर्दशानां वर्षाणां भविता राघव ध्रुवम् ॥ ७६
कुरु श्राद्धं तथा वीर राज्ञो दशरथस्य तु । अमी च ऋषयः सर्वे तव भक्ताः कृतक्षणाः ॥ ७७
अहं च जमदग्निश्च भरद्वाजश्च लोमशः । देवरातः शमीकश्च षडेते च द्विजोत्तमाः ॥ ७८
श्राद्धे च ते महाबाहो संभारांस्त्वमुपाहर । मुख्यं चेङ्गुदिपिण्याकं वदरामलकैः सह ॥ ७९
श्रीफलानि च पक्वानि मूलं चोच्चावचं वहु । मार्गेणैवाथ मांसेन धान्येन विविधेन च ॥ ८०
तृप्तिं प्रयच्छ विप्राणां श्राद्धदानेन सुव्रत । पुष्करारण्यमासाद्य नियतो नियताशनः ॥ ८१
पितॄंस्तर्पयते यस्तु सोऽश्वमेधमवाप्नुयात् । स्नानार्थे च वयं राम गच्छामो ज्येष्ठपुष्करम् ॥ ८२
इत्युक्त्वा ते गताः सर्वे ऋषयो राघवं नृप । लक्ष्मणं चाब्रवीद्रामो मेध्यमाहर मे मृगम् ॥ ८३
सुलक्षणं च शशकं कृष्णशाकं तथा मधु । जम्बीराणि च मुख्यानि [*पनसान्युत्तमानि च॥८४
पारदानि च विल्वानि मधुराणि परंतप । शालूकानि कशेरूणि पीतवर्णां च कावराम् ॥ ८५
करीराणि च मुख्यानि शृङ्गाटाः शर्करोपमाः ।पक्वानि च कपित्थानि फलान्यन्यानि यानि च८६
तान्याहरस्व वै श्राद्धे क्षिप्रमेवाऽऽशु लक्ष्मण । तथा तत्कृतवान्सर्वं रामादेशाच्च राघवः ॥ ८७
वदरेङ्गुदशाकानि] मूलानि विविधानि च । तत्राऽऽहृत्य च रामेण कूटाकारः कृतो महान् ॥८८
परिपक्वं तु जानक्या सिद्धं रामे निवेदितम् । स्नात्वा रामो योगवाप्यां मुनींस्तानन्वपालयत् ॥
मध्याह्नाच्चलिते सूर्ये काले कुतपके तथा । आयाता ऋषयः सर्वे ये रामेणानुमन्त्रिताः ॥ ९०
तानागतान्मुनीन्दृष्ट्वा वैदेही जनकात्मजा । अप(पा)सर्पत्ततो दूरे विपापा मध्यतः स्थिता ॥ ९१
गुल्मैराच्छाद्य चाऽऽत्मानं निगूढा सा तदा स्थिता ।[+अपक्रान्तां तदा सीतां ज्ञात्वा राघवनन्दनः
विमृशित्वा चिरं कालं किमर्थमेषा सत्वरा ।अन्यत्र च गता सा तु मन्ये तां च त्रपान्विताम्९३
किं तावद्भोजये विप्रान्सीतामन्वेषयामि किम् ]।कारणं नेह जानामि श्राद्धकाले ह्युपस्थिते ॥९४
रामेण भोजिता विप्राः स्मृत्युक्तेन यथाविधि । वैदिकी च कृता सर्वा क्रिया या मानवी स्मृता
पुराणोक्तविधिश्चैव वैश्वदेविकपूर्वकः । भुक्तवत्सु च विप्रेषु दत्त्वा पिण्डान्यथाक्रमम् ॥ ९६
प्रेषिताश्च यथाशक्त्या(क्ति) दत्त्वा तेषु च दक्षिणाम् । गतेषु द्विजमुख्येषु प्रियां रामोऽब्रवीदिदम्

श्रीराम उवाच—

किमर्थं सुभ्रूर्नष्टाऽसि मुनीन्दृष्ट्वा इहाऽऽगतान् । तत्सर्वं मम तन्वङ्गि कारणं वद मा चिरम्॥ ९८
भवितव्यं कारणेन न ते गोप्यं प्रियं ममँ । शापिताऽसि मम प्राणैर्लक्ष्मणस्य शुचिस्मिते ॥ ९९

पुलस्त्य उवाच—

एवमुक्ता तदा भर्त्रा त्रपयाऽधोमुखी स्थिता । विमुञ्चती चाश्रुपातं राघवं वाक्यमब्रवीत् ॥१००

सीतोवाच—

शृणु त्वं नाथ यद्दृष्टमाश्चर्यमिह यादृशम् । गृहीतनामा रामेण राजेन्द्रस्त्विह चाऽऽगतः ॥ १०१

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

१ ञ. °व । अवियोगश्च ते पित्रा भ्रात्रा च । २ क. ख. ग. ङ. च. ज. शुद्धेक्षणं । ३ घ. शीघ्रं । ४ झ. °त्वाऽवियोगवाप्यां स मु° । ५ क. ख. ङ. च. °जा । रामान्तिकं परित्यज्य व्रीडिताऽन्यत्र संस्थिता। विस्मयोत्फुल्लनयना चिन्तयाना च वेपती । ब्राह्मणा नेह जानन्ति श्राद्धकाले ह्युपस्थिताः । रामेण । ६ क. ख. घ. ङ. च. ज. वैदेही च कृता सर्वा सा क्रिया या समीरिता । ७ ग. °म । संमिताऽ° । ८ ख. ङ. °चिव्रते ।

सर्वाभरणसंयुक्तौ द्वौ चान्यौ च तथाविधौ । द्विजानां देहसंसक्तास्त्रयस्ते रघुनन्दन ॥ १०२
पितरस्तु मया दृष्टा ब्राह्मणाङ्गेषु राघव । दृष्ट्वा त्रपान्विता चाहमपक्रान्ता तैवान्तिकात् ॥ १०३
त्वया वै भोजिता विप्राः कृतं श्राद्धं यथाविधि । वल्कलाजिनसंवीता कथं राज्ञः पुरःसरा १०४
भवामि रिपुवीरघ्न सत्यमेतदुदाहृतम् । कौशेयानि च वस्त्राणि कैकेयी चाप्यपाहरत् ॥ १०५
तदा प्रभृति चैवाहं धिग्राज्ञां चञ्चलाः श्रियः । ज्ञात्वाऽहं न वदे किंचिन्मा ते दुःखं भवत्विति
नाहं स्मरामि वै मातुर्न पितुश्च परंतप । कदा भविष्यते चान्तो वनवासस्य राघव ॥ १०७
एतद्दिवानिशं नाथ चिन्तयन्त्याः पुनः पुनः । व्रजन्ति दिवसा राम तव पादौ शपाम्यहम् १०८
स्वहस्तेन कथं रामो भोजनं दास्यति त्विदम् । दासानामपि ये दासा नोपभुञ्जति कर्हिचित् १०९
तादृशं तु कथं तस्मै क्षमं दातुं वदस्व ह । [*याऽहं राज्ञा पुरा दृष्टा सर्वालंकारभूषिता] ॥११०
वालव्यजनहस्ता च वीजयन्ती नराधिपम् । सा स्वेदमलदिग्धाङ्गी कथं पश्यामि भूमिपम् १११
व्यक्तं त्रिविष्टपं गतस्त्वया पुत्रेण तारितः । दृष्ट्वा मां दुःखितां वालां वने क्लिष्टामनागसम् ११२
शुचा स्यात्पार्थिवेन्द्रस्य तेन नष्टाऽस्मि राघव । भवान्प्राणसमो नाथ न ते गोप्यं मम त्विह ११३
सत्येनानेन ते नाथ स्पृशामि चरणौ च ते । ११४

पुलस्त्य उवाच—

तच्छ्रुत्वा राघवः प्रीतः प्रियां तां प्रियवादिनीम् । अङ्कमानीय सुदृढं परिष्वज्य च सादरम् ॥
भुक्तौ भोज्यं तदा वीरौ पश्चाद्भुक्ता च जानकी । एवं स्थितौ तदा सा च तां रात्रिं तत्र राघवौ
उदिते च सहस्रांशौ गमनाय मनो दधुः । प्रत्यङ्मुखो गतः क्रोशं ज्येष्ठं यावच्च पुष्करम् ॥११७
पूर्वभागे पुष्करस्य यावत्तिष्ठति राघवः । शुश्राव च ततो वाचं देवदूतेन भाषिताम् ॥ ११८

देवदूत उवाच—

भो भो राघव भद्रं ते तीर्थमेतत्सुदुर्लभम् । अस्मिन्स्थाने स्थितो वीर आत्मनः पुण्यतां कुरु ॥
देवकार्यं त्वया कार्यं हन्तव्या देवशत्रवः । ततो हृष्टमना रामो ह्यब्रवील्लक्ष्मणं वचः ॥ १२०

श्रीराम उवाच—

अनुगृहीताः सौमित्रे देवदेवेन ब्रह्मणा । अत्राऽऽश्रमपदं कृत्वा मासमेकं तु लक्ष्मण ॥
व्रतं चरितुमिच्छामि कायशोधनमुत्तमम् । १२१

पुलस्त्य उवाच—

तथेति लक्ष्मणेनोक्तो व्रतं परिसमाप्य तु । पिण्डदानादिभिर्दानैः श्राद्धैश्चैव पितामहान् ॥१२२
त्रिपुष्करे तदा रामोऽतर्पयद्विधिवत्तथा । कनका सुप्रभा चैव नन्दा प्राची सरस्वती ॥ १२३
पञ्चस्रोताः पुष्करेषु पितॄणां प्रीतिदायिनी । दैनंदिनीमृषीणां तु पूँज्य तां (?) पितृपूर्व(र्वि)काम्
प्रीणयित्वा तथा रामो लक्ष्मणं वाक्यमब्रवीत् ॥ १२५

* इदमर्धं झ. पुस्तकस्थम् ।

१ झ. °सक्ताः पितरस्ते रघूद्वह । ततस्त्वं च मया दृष्टौ ब्राह्मणेषु च रा° । २ ग. घ. ज. पिता तव मया दृष्टो ब्रा° । ३ झ. तदाऽऽश्रमात् । ४ क. ख. ग. घ. ङ. च. ज. °रा । तवाऽऽज्ञया रघुप्राज्ञ स° । ५ क. ख. ङ. च. °हं चीरिणी तु वनाश्रयम् । झा° । ग. °हं वैरिणीं तां महाश्रियम् । झा° । घ. ज. °हं वैरिणीं तीं चलां श्रियम् । झा° । ६ क. ख. ग. घ. ङ. च. ज. °म् । दास्यो दासा भोजयन्ति गृहे तं वै क्वचित्क्वचित् । एतादृशी कथं त्वस्मै संप्रदातुं समुत्सहे । वा° । ७ ञ. पूजां तां ।

श्रीराम उवाच—

एहि लक्ष्मण शीघ्रं त्वं पुष्कराज्जलमानय । पादप्रक्षालनं कृत्वा शयनं कुरु सत्वरम् ॥ १२६
विभावर्यां निवृत्तायां यास्यामो दक्षिणां दिशम् । लक्ष्मणस्त्वब्रवीद्रामं सीता आनयतां पयः ॥
नाहं राम सर्वकालं दासभावं करोमि ते । इयं च पुष्टा सुभृशं पीवरी चैव ममाप्युत ॥ १२८
करिष्यसि किमनया भार्यया वद सांप्रतम् । किं वा मृतस्य ते प्रेत्य इयं यास्यति ते प्रिया १२९
रक्षसि त्वं सदाकालं सुपुष्टां चैव सर्वदा । करोषि क्लेशवाहनं सततं मां रघूद्वह ॥ १३०
मय्यपि क्लेशिते राम परत्र जायते क्षतिः । त्वत्कृते च सदा चाहं पिपासां क्षुधया सह ॥ १३१
सुसहामि न संदेहः परत्र च निशामय । मृतानां पृष्ठतः कश्चिद्गतो नैवेह दृश्यते ॥ १३२
भार्या सुतो धनं वाऽपि एवमाहुर्मनीषिणः । मृतश्च ते पिता राम त्यक्त्वा राज्यमकण्टकम् १३३
विनिक्षिप्य वने त्वां मां कैकेय्याः प्रियकाम्यया । इह स्थिता सा कैकेयी धनं सर्वे च बान्धवाः
महाराजो दशरथ एक एव गतो गतिम् । मन्येऽहं तु त्वया सार्धं प्रेत्य यास्यामि वै ध्रुवम् १३५
करिष्यसे किमनया वद राघव सांप्रतम् । श्रुत्वा स नोक्तपूर्वं तु वाक्यं लक्ष्मणभाषितम् ॥१३६
विमना राघवस्तस्थौ सीता चापि वरानना । यदुक्तं लक्ष्मणेनाथ सीता सर्वं चकार ह ॥१३७
स्नात्वा भुक्त्वा च तौ वीरौ पुष्करे पुष्करेक्षणौ । नीत्वा विभावरीं तत्र गमनाय मनो दधुः ॥

श्रीराम उवाच—

एह्युत्तिष्ठस्व सौमित्रे व्रजामो दक्षिणां दिशम् ॥ १३९

पुलस्त्य उवाच—

सौमित्रिरब्रवीद्रामं नाहं यास्ये कथंचन । व्रज त्वमनया सार्धं भार्यया कमलेक्षण ॥ १४०
नान्यद्वनं गमिष्यामि नैवायोध्यां च राघव । अस्मिन्वने वसिष्यामि वर्षाणि च चतुर्दश ॥ १४१
मया विना त्वयोध्यायां यदि त्वं न गमिष्यासि । अनेनैव पथा भूय आगन्तव्यं त्वया विभो १४२
यदि जीवामि तत्कालं पुनर्यास्ये पुरं पितुः । तापसो वा भविष्यामि मया त्वं किं करिष्यसि १४३
व्रज सौम्य शिवः पन्था मा च ते परिपन्थिनः । पश्यामि त्वां पुनः प्राप्तं सभार्यं कमलेक्षण १४४
पितृपैतामहं राज्यमयोध्यायां नराधिप । शत्रुघ्नभरतौ चोभौ त्वदाज्ञाकरणे स्थितौ ॥ १४५
अहं ते प्रतिकूलस्तु वनवासे विशेषतः । अनारतं दिवा चाहं रात्रौ चैव परंतप ॥ १४६
कर्म कर्तुं न शक्नोमि व्रज सौम्य यथासुखम् । एवं ब्रुवाणं सौमित्रिमुवाच रघुनन्दनः ॥ १४७

श्रीराम उवाच—

कथं पूर्वमयोध्याया निर्गतोऽसि मया सह । वने वत्स्याम्यहं राम नव वर्षाणि पञ्च च ॥ १४८
न तु त्वया विरहितः स्वर्गेऽपि निवसे क्वचित् । या गतिस्ते नरव्याघ्र मम साऽपि भविष्यति १४९
प्रसादः क्रियतां मह्यं नय मामपि राघव । इदानीमधर्ममार्गे त्वं कथं स्थातासि शत्रुहन् ॥ १५०

पुलस्त्य उवाच—

लक्ष्मणस्त्वब्रवीद्रामं नाहं गन्ता वने पुनः । लक्ष्मणं तु स्थितं ज्ञात्वा रामो वचनमब्रवीत् ॥१५१
मा म(माऽ)नुव्रज सौमित्र एको यास्यामि काननम् । द्वितीया मे त्वियं सीता रामेणोक्तस्तु लक्ष्मणः
अथ गृह्य समुत्तस्थौ रामवाक्यं स लक्ष्मणः । मर्यादापर्वतं प्राप्तौ क्षेत्रसीमां परंतप ॥ १५३

---

१ ज. च समाऽप्यु° । २ ग. घ. ज. °स्य प्रत्यूष इ° । ३ क. ख. ङ. च. °दा । हृष्टा चैषा क्लेशयन्ती स° । ग. घ. ज. °दा । हृष्टा चैषा क्लेशयता स° । ४ क. ख. ग. घ. ङ. च. ज. °त्वा चाश्रुतपू° । ५ झ. अनुगृह्य ।

अजगन्धं च देवेशं देवदेवं पिनाकिनम् । अष्टाङ्गप्रणिपातेन नत्वा रामस्त्रिलोचनम् ।। १५४
तुष्टाव प्रणतः स्थित्वा भगवन्तमुमापतिम् । कृताञ्जलिपुटो भूत्वा रोमाञ्चितशरीरकः ।। १५५
सात्त्विकं भावमापन्नो विनिर्धूतरजस्तमाः । लोकानां कारणं देवं बुबुधे विबुधाधिपम् ।। १५६

श्रीराम उवाच—

कृत्स्नस्य योऽस्य जगतः सचराचरस्य कर्ता कृतस्य च तथा सुखदुःखहेतुः ।।
संहारहेतुरपि यः पुनरन्तकाले तं शंकरं शरणदं शरणं व्रजामि ।। १५७
यं योगिनो विगतमोहतमोरजस्का भक्त्यैकतानमनसो विनिवृत्तकामाः ।
ध्यायन्ति निश्चलधियोऽमितदिव्यभावं तं शंकरं शरणदं शरणं व्रजामि ।। १५८
यश्चेन्दुखण्डममलं विलसन्मयूखं बद्ध्वा सदा प्रियतमां शिरसा बिभर्ति ।
यश्चार्धदेहमददाद्गिरिराजपुत्र्यै तं शंकरं शरणदं शरणं व्रजामि ।। १५९
योऽयं सकृद्विमलचारुविलोलतोयां गङ्गां महोर्मिविषमां गगनात्पतन्तीम् ।
मूर्ध्नाऽऽददे स्रजमिव प्रतिलोलपुष्पां तं शंकरं शरणदं शरणं व्रजामि ।। १६०
कैलासशैलशिखरं प्रति कम्प्यमानं कैलासशृङ्गसदृशेन दशाननेन ।
यः पादपद्मपरिवादनमादधानस्तं शंकरं शरणदं शरणं व्रजामि ।। १६१
येनासकृद्दितिसुताः समरे निरस्ता विद्याधरोरगगणाश्च वरैः समग्राः ।।
संयोजिता मुनिवराः फलमूलभक्षास्तं शंकरं शरणदं शरणं व्रजामि ।। १६२
[*दग्ध्वाऽध्वरं च नयने च तथा भगस्य पूष्णस्तथा दशनपङ्क्तिमपातयच्च ।
तस्तम्भ यः कुलिशयुक्तमहेन्द्रहस्तं तं शंकरं शरणदं शरणं व्रजामि] ।। १६३
एनस्कृतोऽपि विषयेष्वपि सक्तभावा ज्ञानान्वयश्रुतगुणैरपि नैव युक्ताः ।
यं संश्रिताः सुखभुजः पुरुषा भवन्ति तं शंकरं शरणदं शरणं व्रजामि ।। १६४
अत्रिप्रसूतिरविकोटिसमानतेजाः संत्रासनं विबुधदानवसत्तमानाम् ।।
यः कालकूटमपिबत्समुदीर्णवेगं तं शंकरं शरणदं शरणं व्रजामि ।। १६५
ब्रह्मेन्द्ररुद्रमरुतां च सषण्मुखानां योऽदाद्वरांश्च बहुशो भगवान्महेशः ।
नन्दिं च मृत्युवदनात्पुनरुज्जहार तं शंकरं शरणदं शरणं व्रजामि ।। १६६
आराधितः सुतपसा हिमवन्निकुञ्जे धूम्रव्रतेन मनसाऽपि परैरगम्यः ।
संजीवनीं समददाद्भृगवे महात्मा तं शंकरं शरणदं शरणं व्रजामि ।। १६७
नानाविधैर्गजविडालसमानवक्त्रैर्दक्षाध्वरप्रमथनैर्बलिभिर्गणौघैः ।
योऽभ्यर्च्यतेऽमरगणैश्च सलोकपालैस्तं शंकरं शरणदं शरणं व्रजामि ।। १६८
क्रीडार्थमेव भगवान्भुवनानि सप्त नानानदीविहगपादपमण्डितानि ।
सब्रह्मकानि व्यसृजत्सुकृताहितानि तं शंकरं शरणदं शरणं व्रजामि ।। १६९
यस्याखिलं जगदिदं वशवर्ति नित्यं योऽष्टाभिरेव तनुभिर्भुवनानि भुङ्क्ते ।
यः कारणं सुमहतामपि कारणानां तं शंकरं शरणदं शरणं व्रजामि ।। १७०

*धनुश्चिह्नान्तर्गतः पाठः ख. घ. ङ. च. ज. पुस्तकस्थः । ०

१ झ. संसार° । २ झ. °रिपीडन° । ३ म. °कृद्दनुसु° । ४ ग. घ. ज. °षमेत्र° । ५ ग. घ. ज °वत्प्रसभं सुदीप्तं । ६ ज. °त्सुक्षता° ।

शङ्खेन्दुकुन्दधवलं वृषभप्रवीरमारुह्य यः क्षितिधरेन्द्रसुतानुयातः ।
यात्यम्बरे हिमविभूतिविभूषिताङ्गस्तं शंकरं शरणदं शरणं व्रजामि ॥ १७१
शान्तं मुनिं यमनियोगपरायणं तैर्भीमैर्यमस्य पुरुषैः प्रतिनीयमानम् ।
भक्त्या नतं स्तुतिपरं प्रसभं ररक्ष तं शंकरं शरणदं शरणं व्रजामि ॥ १७२
यः सव्यपाणिकमलाग्रनखेन देवस्तत्पञ्चमं प्रसभमेव पुरः सुराणाम् ।
ब्राह्मं शिरस्तरुणपद्मनिभं चकर्त तं शंकरं शरणदं शरणं व्रजामि ॥ १७३
यस्य प्रणम्य चरणौ वरदस्य भक्त्या स्तुत्वा च वाग्भिरमलाभिरतन्द्रिताभिः ।
दीप्तैस्तमांसि नुदते स्वकरैर्विवस्वांस्तं शंकरं शरणदं शरणं व्रजामि ॥ १७४
ये त्वां सुरोत्तमगुरुं पुरुषा विमूढा जानन्ति नास्य जगतः सचराचरस्य ।
ऐश्वर्यमाननिगमानुशयेन पश्चात्ते यातनां त्वनुभवन्त्यविशुद्धचित्ताः ॥ १७५

पुलस्त्य उवाच—

तस्यैवं स्तुवतो वाचा शूलपाणिर्वृषध्वजः । उवाच वचनं हृष्टो राघवं तुष्टमानसः ॥ १७६

रुद्र उवाच—

रामे तुष्टोऽस्मि भद्रं ते जातस्त्वं निर्मले कुले । त्वं चापि जगतां वन्द्यो मानुषो देवरूपधृक् १७७
त्वया नाथेन वै देवाः सुखिनः शाश्वतीः समाः । एधिष्यन्ते चिरं कालं गते वर्षे चतुर्दशे ॥ १७८
अयोध्यायामागतं त्वां ये द्रक्ष्यन्ति नरा भुवि । सुखिनस्ते भविष्यन्ति स्वर्गवासस्तथाऽक्षयः १७९
देवकार्यं महत्कृत्वा आगच्छेथाः पुनः पुरीम् । राघवस्तु तदा देवं नत्वा शीघ्रं विनिर्गतः १८०
इन्द्रमार्गीं नदीं प्राप्य जटाजूटं नियम्य च । विहस्य लक्ष्मणेत्युक्त्वा इदमर्पय मे धनुः ॥ १८१
रामवाक्यं तु तच्छ्रुत्वा सीतां वै लक्ष्मणोऽब्रवीत् । किमर्थं देवि रामेण त्यक्तोऽहं कारणं विना ॥
अपराधं न जानामि कुपितो येन मे प्रभुः । रामेणाहं परित्यक्तः प्राणांस्त्यक्ष्याम्यसंशयम् १८३
नैव मे जीवितेनार्थो धिङ्मां वै कुलपांसनम् । आर्यस्य येन वै मन्युर्जनितः पापकारिणा ॥ १८४
कान्वै लोकान्गमिष्यामि अपध्यातो महात्मना । उभौ हस्तौ मुखे कृत्वा साश्रुकण्ठोऽब्रवीदिदम्
नापराध्यामि रामस्य कर्मणा मनसा गिरा । स्पृष्टौ ते चरणौ देवि मम नान्या गतिर्भवेत् ॥ १८६
ततः सीताऽब्रवीद्रामं त्यक्तः किमनुजस्त्वया । वैषम्यं त्यज्यतां बाले लक्ष्मणे लक्ष्मिवर्धने ॥ १८७
राघवस्त्वब्रवीत्सीतां नाहं त्यक्ष्यामि लक्ष्मणम् । न कदाचिदपि स्वप्ने लक्ष्मणस्येदृशं प्रिये १८८
श्रुतपूर्वं च सुश्रोणि क्षेत्रस्यास्य विचेष्टितम् । अत्र क्षेत्रे न सौभ्रात्रं सर्वे हि स्वार्थतत्पराः ॥ १८९
परस्परं न मन्यन्ते स्वार्थनिष्ठैकहेतवः । न शृण्वन्ति पितुः पुत्राः पुत्राणां च तथा पिता ॥ १९०
न शिष्यो हि गुरोर्वाक्यं शिष्यस्यापि तथा गुरुः । अर्थानुबन्धिनी प्रीतिर्न कश्चित्कस्यचित्प्रियः

पुलस्त्य उवाच—

[illegible]न्येवं कथयन्नेव प्राप्तो रेवां महानदीम् । चक्रेऽभिषेकं काकुत्स्थः सानुजः सह सीतया ॥ १९२
[illegible]यित्वा च सलिलैः स्वपितॄन्दैवतान्यपि । ववन्दाते मुहुः सूर्यं देवताश्च समाहितौ ॥ १९३

१ क. ख. ग. घ. ङ. च. °म्बरं प्रलयमेघविभूषितं च तं शं° । २ क. ख. ङ. च. °मैर्महोग्रपु° । ३ क. ख ङ. च. ज. पुराणमालम् । ग. घ. पुराणमालाम् । ४ क. ख. ग. घ ङ. च. ज. °म दृष्टो° । ५ ख. ग. घ. ङ. च. ज. सेविष्यन्ते । ६ झ. नियम्य । ७ क. ख. ग. घ. ङ. च. ज. °तो यो महाभुजः । रा° । ८ ग. °म्यहं पुरः । नै° । ९ क. ख. ङ. च. वै मृत्युर्गदितः । १० क. ख. ग. घ. ङ. च. ज. पश्यन्ति ।

कृताभिषेकस्तु रराज रामः सीताद्वितीयः सह लक्ष्मणेन ।
कृत्वाऽभिषेकं सह शैलपुत्र्या गुहेन सार्धं भगवानिवेशः ॥ १९४

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे मार्कण्डेयाश्रमवर्णनं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९४११

---

अथैकोनत्रिंशोऽध्यायः ।

---

भीष्म उवाच—

कस्मिन्काले भगवता ब्रह्मणा लोककर्तृ(कारि)णा । यज्ञियैर्यष्टुमारब्धं तद्भवान्वक्तुमर्हति ॥ १
किंनामान ऋत्विजस्ते ब्रह्मणा ये प्रकल्पिताः । का चैव दक्षिणा तेषां दत्ता तेन महात्मना ॥२
यथा भूतं यथा वृत्तं तथा त्वं मे प्रकीर्तय । सुमहत्कौतुकं जातं यज्ञं पैतामहं प्रति ॥ ३

पुलस्त्य उवाच—

पूर्वमेव मयाऽऽख्यातं यदा स्वायंभुवो मनुः । सृष्ट्वा प्रजापतीन्सर्वानुक्त्वा सृष्टिं कुरुष्व(त) वै॥४
स्वयं तु पुष्करं गत्वा कृत्वा यज्ञस्य विस्तरम् । स संभारान्समानाय्य वन्यागारे स्थितोऽभवत्[1]॥
देवान्सर्वांस्तथा निन्ये गन्धर्वाप्सरसोऽपि हि । ब्रह्मोद्गाता होताऽध्वर्युश्चत्वारो यज्ञवाहकाः ॥६
एकैकस्य त्रयश्चान्ये परिवाराः स्वयंकृताः । ब्रह्मा वा ब्राह्मणाच्छंसी[2] पोताऽथाऽऽग्नीध्र एव च॥७
आन्वीक्षिकी त्रयीविद्या ब्राह्मी ह्येषा चतुष्टिका[3](ष्टयी)। उद्गाता च प्रत्युद्गाता प्रतिहर्ता सुब्रह्मण्यः
द्वितीया च चतुष्ट्येषा उ(ष्टय्येपो)द्गातुश्च प्रकीर्तिता । होता समैत्रावरुणिस्तथाऽच्छावाक एव च
ग्रावस्तुच्च चतुर्थोऽत्र तृतीया च चतस्रका(ष्टयी) । अध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेता तथैव च१०
चतुर्थी चतस्रका(ष्टयी) प्रोक्ता शंतनुनन्दन । एते वै षोडश प्रोक्ता ऋत्विजो वेदवित्तमैः॥ ११
शतानि त्रीणि षष्टिश्च यज्ञाः[4] सृष्टाः स्वयंभुवा । एतांश्चैतेषु[5] सर्वेषु प्रवदन्ति सदा द्विजान्[6] ॥ १२
सदस्यं केचिदिच्छन्ति[7] चमसाध्वर्यवो दश । ब्रह्माणं नारदं कृत्वा ब्राह्मणाच्छंसी गौतमः[8]॥१३
देवरातं[9] तु पोतारमाग्नीध्रं चैव देवलम् । उद्गातारमङ्गिरसं प्रस्तोता पुलहस्तथा ॥ १४
नारायणः प्रतिहर्ता सुब्रह्मण्योऽत्रिरुच्यते । तस्मिन्यज्ञे भृगुर्होता वसिष्ठो मैत्र एव च ॥ १५
अच्छावाकः क्रतुः प्रोक्तो ग्रावस्तुच्च्यवनः स्मृतः । पुलस्त्योऽध्वर्युरेवाऽऽसीत्प्रतिष्ठाता च वै शिविः
बृहस्पतिस्तत्र नेष्टा उन्नेता सांशपायनः[10] । धर्मः सदस्यस्तत्राऽऽसीत्पुत्रपौत्रसहायवान् ॥ १७
भरद्वाजः शमीकश्च पुरुकुत्स्यो युगंधरः । एणकस्ताण्डिकश्चैव[11] कोणः कुतप एव च ॥ १८
गार्ग्यो[12] वेदशिराश्चैव चमसाध्वर्यवः[13] कृताः[14] । कण्वादयस्तथा चान्ये मार्कण्डोऽगस्तिरेव[15] च ॥ १९
पुत्रपौत्रसमेतास्ते सशिष्याः सहबान्धवाः । कर्माणि तत्र कुर्वाणा रात्रिंदिवमतन्द्रिताः ॥ २०
मन्वन्तरे व्यतीते तु यज्ञस्यावभृथोऽभवत् । दक्षिणा ब्रह्मणे दत्ता प्राची होतुस्तु दक्षिणा ॥ २१

---

१ क. ख. ङ. च. °त् । गायन्ति नित्यं गन्धर्वा नृत्यन्त्यप्सरसां गणाः । ब्र° । २ झ. ब्रह्मवाक्शंसी । ३ क. ख. ङ. च. चतुर्विधा। ४ घ. ज. यज्ञे । ५ झ. एते वै ते° । ६ झ. द्विजाः । ७ क. ख. ङ. च. °न्ति त्रिसामाध्वर्युमेव च । ब्र° । ८ झ. गोतमम् । ९ क. ख. ग. घ. ङ. च. ज. देवगर्भ । १० झ. सांपरायनः । ञ. शांशपायनः । ११ क ख. ग. घ. ङ. च. ज. एनकस्तीर्णकश्चैव केशः कु° । १२ ञ. गर्गो । १३ क. ख. ग. घ. ङ. च. ज. त्रिसामाध्वर्यवः । १४ झ. °ताः । सनकाद° । १५ क. ख. ङ. च. ज. °ण्डो गण्डिरे° ।

अध्वर्यवे प्रतीची तु उद्गातुश्चोत्तरा तथा । त्रैलोक्यं सकलं ब्रह्मा ददौ तेषां तु दक्षिणाम् ॥ २२
धेनूनां च शतं प्राज्ञैर्दातव्यं यज्ञसिद्धये । अष्टौ तु यज्ञवाहेभ्यश्चत्वारिंशाधिकास्तथा ॥ २३
द्वितीयस्थानिनां चैव चतुर्विंशाः प्रकीर्तिताः । षोडशैव तृतीयानां देया वै धेनवः शुभाः ॥ २४
द्वादशैव तथा चान्या आग्नीध्राद्येषु दापयेत् । अनया संख्यया चैव ग्रामान्दासीरजाविकम् ॥ २५
षड्रसभोज्यं दातव्यं स्नाने चावभृथे कृते । यजमानेन सर्वस्वं देयं स्वायंभुवोऽब्रवीत् ॥ २६
अध्वर्यूणां सदस्यानां स्वेच्छया दानमिष्यते । विष्णुं चाऽऽहूय वै ब्रह्मा वाक्यमाह मुदाऽन्वित

ब्रह्मोवाच—

अभिप्रसाद्य सावित्रीं त्वमिहाऽऽनय केशव[5] । त्वयि दृष्टे न सा कोपं करिष्यति शुभानना २८
स्निग्धैः शुभान्वितैर्वाक्यैर्हेतुयुक्तैर्विशेषतः[6] । त्वं सदा मधुराभाषी जिह्वा ते स्रवतेऽमृतम् ॥ २९
यो न कुर्याच्च ते वाक्यं त्रैलोक्ये न स दृश्यते । गन्धर्वैः सहितो गत्वा प्रियां मम प्रसादय ३०
त्वया प्रसादिता साध्वी तुष्टा सा मे भविष्यति । विलम्बो न त्वया कार्यो व्रज माधव मा चिरम्
लक्ष्मीस्ते पुरतो यातु सावित्र्याः सदनं शुभा । तस्यास्त्वं पदवीं गच्छ सान्त्वयस्व प्रियां मम ॥
न च ते विप्रियं देवि विविक्तं कर्तुमिच्छति । मुखं प्रेक्ष्य सदाकालं वर्तते तव सुन्दरि ॥ ३३
एवंविधानि वाक्यानि मधुराणि बहूनि च । श्रावितव्या त्वया देवि यथा तुष्टा भवेत्पुनः ॥ ३४

पुलस्त्य उवाच—

एवमुक्तस्तदा विष्णुर्ब्रह्मणा लोककर्तृ(कारि)णा । जगाम त्वरितो भूत्वा सावित्री यत्र तिष्ठति ॥
दूरादेवाऽऽगच्छमानं पत्न्या सह च केशवम् । उत्तस्थौ सत्वरा भूत्वा विष्णुना साऽभिवादिता

विष्णुरुवाच—

नमस्ते देवदेवेशि ब्रह्मपत्नि नमोऽस्तु ते । त्वां नमस्कृत्य सर्वो हि जनः पापात्प्रमुच्यते ॥ ३७
पतिव्रता महाभागा ब्रह्मणस्त्वं हृदि स्थिता । त्वां चिन्तयन्नहरहः प्रसादं तेऽभिकाङ्क्षति ॥ ३८
*तस्यैवं दुःखतप्तस्य प्रसादं कर्तुमर्हसि । सखीं चैनां प्रियां पृच्छ लक्ष्मीं भृगुसुतां शुभाम् ॥ ३९
यदि च श्रद्धधानाऽसि वाक्यादस्मात्सुलोचने । एवमुक्त्वा ततः शौरिः सावित्र्याश्चरणौ शुभौ
उभाभ्यां चैव हस्ताभ्यां क्षम देवि नमोऽस्तु ते । जगद्वन्द्ये जगन्मातः प्रणिपत्य च सादरम् ४१
संकोच्य पादौ सा देवी स्वकरेण करौ हरेः । उवाच प्रणतं विष्णुं सर्वं[13] क्षान्तं मयाऽच्युत ॥ ४२
इयं लक्ष्मीः सदा वत्स हृदये ते निवत्स्यति । विना त्वया न चान्यत्र रतिं यास्यति कर्हिचित्
भृगोः पत्न्यां समुत्पन्ना पत्न्येषा तव सुव्रता । देवदानवयत्नेन संभूता तूदधौ पुनः ॥ ४४
भगवान्यत्र तत्रैषा अवतारं च कुर्वती[15] । देवत्वे देवदेहा वै मानुषत्वे च मानुषी ॥ ४५
त्वत्सहाया न संदेहो दंपती(ति)व्रतमाचिरम् (चर) । यन्मया चात्र कर्तव्यं मां वदस्व च वै विभो

* इदमर्धं झ. पुस्तकस्थम् ।

१ झ. °तं साग्रं दात° । २ झ. °हेभ्यो दत्त्वा विंशा° । ३ झ. °म् । सहस्रभो° । ४ ग. सर्वेषामत्र स्वा° । ५ क. ख. ग. घ. ङ. च. ज. सुव्रत । ६ क. ख. ग. घ. ङ. च. ज. °ग्धैः सानुनयैर्वा° । ७ झ. त्वं स्वरान्मधु° । ८ क. ख. ग. घ. ङ. च. ज. समानय । ९ ञ. सा त्वेष्यति ध्रुवम् । वि° । १० क. ग. घ. च. ज. °र्तुमर्हति । ख. ङ. °र्तुमीहते । मु° । ११ क. ख. ग. घ. ङ. च. ज. तुष्टाऽचिराद्भवेत् । पु° । १२ ञ. सतीम् । १३ ख. ग. घ. ङ ज. सर्वकार्ये जयोऽस्तु ते । इ° । १४ झ. ख्यात्यां । १५ झ. °ती द्रुत° ।

विष्णुरुवाच—

यज्ञावसानं संजातं प्रेषितोऽहं तवान्तिकम् । सावित्रीमानय क्षिप्रं मया स्नानं समाचरेत् ॥ ४७
आगच्छ त्वरिता देवि तत्र याहि मुदाऽन्विता । पश्यस्व स्वपतिं गत्वा देवैः सर्वैः समन्वितम् ॥

लक्ष्मीरुवाच—

आर्य उत्तिष्ठ शीघ्रं त्वं याहि यत्र पितामहः । विना त्वया न यास्यामि स्पृष्टौ पादौ मया तव॥
हस्तं गृहीत्वा चोत्थाप्य दक्षिणेनैव दक्षिणम् । चिरायमाणां सावित्रीं ज्ञात्वा देवः पितामहः ५०
समीपस्थं महादेवमिदं वचनमब्रवीत् । गच्छ त्वमनया सार्धं पार्वत्यां शशिभूषण ॥ ५१
गौरी त्वदग्रतो यातु पश्चात्त्वं गच्छ शंकर । प्रतिबोध्य त्वयाऽऽनेया शीघ्रमायाति तत्कुरु ॥५२

पुलस्त्य उवाच—

एवमुक्तो गतो रुद्रः पार्वती ब्रह्मणः प्रियाम् । तया दृष्टौ दंपती तौ पार्वतीपरमेश्वरौ ॥ ५३
देवी सा संमुखी ताभ्यामुत्थिता परमेश्वरी । दूरादेव तु रुद्रेण ब्रह्माणी चाभिवादिता ॥ ५४

शिव उवाच—

ब्रह्मा प्रतीक्षते देवि मा विलम्बस्व शोभने । बृहत्कृत्यं त्वया तत्र करणीयं पतिव्रते ॥ ५५
पृच्छस्वेमां वरारोहां गौरीं पर्वतनन्दिनीम् । लक्ष्मीं चैतां विशालाक्षीमिन्द्राणीं वा शुभानने ५६
यासां वा श्रद्दधासि त्वं पृच्छ देवि नमोऽस्तु ते । आशीर्वादस्त्वया दत्तो देवदेवस्य शूलिनः ५७

सावित्र्युवाच—

शरीरार्धे च ते गौरी सदा स्थास्यति शंकर । अनया शोभसे देव त्वं तु त्रैलोक्यसुन्दरः॥ ५८
सुखभागी जगत्सर्वं त्वया नाथेन शत्रुहन् । एवं ब्रुवती सावित्री गृहीता ब्रह्मणः प्रिया ॥ ५९
गौर्या च वामहस्ते तु लक्ष्म्या वै दक्षिणे करे । अभिवन्द्य तु तां देवीं शंकरो वाक्यमब्रवीत् ६०

शिव उवाच—

एह्यागच्छ महाभागे यत्र तिष्ठति ते पतिः । तत्र गच्छ वरारोहे स्त्रीणां भर्ता परा गतिः ॥ ६१
+एषा गौरी समायाता भ्रातृभार्या तवानघा । बृहदाग्रहेण देवी प्रणयाद्गन्तुमिच्छति ॥ ६२
लक्ष्मीश्चैषा पार्वती च स्थिता देवी तवाग्रतः । एतासां वचसां देवि आवयोश्च शुभानने ॥ ६३
मानभङ्गं न ते कर्तुं बुध्यते ब्रह्मणः प्रिये । अस्मदभ्यर्थनाद्देवि न विलम्बितुमर्हसि ॥ ६४

*गौर्युवाच—

अहं च ते प्रिया देवि सर्वदा वदसे स्वयम् । लक्ष्मीश्च ते करे लग्ना दक्षिणे च मया धृता ॥ ६५
एह्यागच्छ महाभागे यत्र तिष्ठति ते पतिः । नीता सा तु तदा ताभ्यां देवी स्वमध्यतः कृता६६
पुरःसरौ विष्णुरुद्रौ शक्राद्याश्च तथा सुराः । गन्धर्वाप्सरसश्चैव त्रैलोक्यं सचराचरम् ॥ ६७
तत्राऽऽयाता च सा देवी सावित्री ब्रह्मणः प्रिया। सावित्रीं संमुखीं दृष्ट्वा सर्वलोकपितामहः६८
गायत्र्या सहितो ब्रह्मा इदं वचनमब्रवीत् । एषा देवी कर्मकरी अहं ते वशगः स्थितः ॥ ६९
मामादिश वरारोहे यत्तु कार्यं मया त्विह । एवमुक्ता तु सावित्री स्वयं देवेन ब्रह्मणा ॥ ७०
त्रपयाऽधोमुखी देवी न वक्तुं किंचिदिच्छति । पादयोः पतिता तस्या गायत्री ब्रह्मचोदिता ७१

+ इदमर्धं झ. पुस्तकस्थम् । * इत आरभ्य ब्रह्मणः प्रियेत्यन्तो ग्रन्थो झ. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. ज. सर्वैर्मुदाऽन्वि° । २ झ. हस्तौ । ३ ञ. °क्षिणा दक्षिणे करे । चि° । ४ क. ख. ग. घ. ङ. च. ज. °त्वाऽमरम् । ५ क. ख. ग. घ. ङ. च. ज. समये । ६ क. ख. ग. घ. ङ. च. ज. यत्ते का° ।

ब्रह्मोवाच—

कृतवत्यपराधं ते क्षम देवि नमोऽस्तु ते । आलिङ्गय सादरं कण्ठे परिष्वज्य च पीडिताम् ॥७
गायत्रीं सान्त्वयामास मान्यश्चैष पतिर्मम । कर्तव्यं वचनं तस्य स्त्रीणां प्राणेश्वरः पतिः ॥ ७
उक्तं भगवता पूर्वं सृष्टिकाले विरञ्चिना । न च स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ॥ ७४
भर्ता यद्वदते वाक्यं तत्तत्कुर्यादकुत्सया । भर्तृनिन्दां या कुरुते श्वश्रूनिन्दां तथैव च ॥ ७५
परिवादं प्रलापं वा नरकं सा तु गच्छति[2] । पत्यौ जीवति या नारी उपवासव्रतं चरेत् ॥ ७६
आयुष्यं हरते भर्तुर्मृता नरकमृच्छति । एवं ज्ञात्वा त्वया भद्रे न कार्यं विप्रियं पतौ ॥ ७७
न चास्य दक्षिणं त्वङ्गं त्वया स्पृश्यं कथंचन । सर्वकार्ये त्वहं चास्य दक्षिणं पक्षमास्थिता ॥७८
सव्यं त्वमास्थिता साध्वी पार्श्वे नारदपुष्करौ । ब्रह्मस्थानानि चान्यानि स्थितान्यायतनानि च
उभे वै शोभमाने हि यावत्सृष्टिः प्रजापतेः । भवत्या च मया चैव स्थातव्यं तु न संशयः ॥८०
पुष्करे ब्रह्मणः पार्श्वे वामं पक्षमुपाश्रिता । अनेन चोपदेशेन[6] सुखं तिष्ठ मयाऽन्विता ॥ ८१

गायत्र्युवाच—

एवमेतत्करिष्यामि भवत्यादेशकारिका । त्वदाज्ञया मया स्थेयं त्वं मे प्राणेश्वरी सखी ॥ ८२
अहं ते त्वनुजा देवि सदा मां पातुमर्हसि । देवदेवस्ततो ब्रह्मा पुष्करे विष्णुना सह ॥ ८३
स्नानावसाने देवानां सर्वेषां प्रददौ वरान् । देवानामधिपं शक्रं ज्योतिषां च दिवाकरम् ॥ ८४
नक्षत्राणां तथा सोमं रसानां वरुणं तथा । प्रजापतीनां दक्षं च नदीनां सागरं तथा ॥ ८५
कुबेरं च धनाध्यक्षं तथा च यक्षरक्षसाम् । भूतानां चैव सर्वेषां गणानां च पिनाकिनम् ॥ ८६
मानवानां मनुं चैव पत्रिणां गरुडं तथा । ऋषीणां च वसिष्ठं च ग्रहाणां च प्रभाकरम् ॥ ८७
एवमादीनि वै दत्त्वा देवदेवः पितामहः । विष्णुं च शंकरं चैव ब्रह्मा प्रोवाच सादरः ॥ ८८

ब्रह्मोवाच—

पृथिव्यां सर्वतीर्थेषु भवन्तौ पूज्यसत्तमौ । भवद्भ्यां न विना तीर्थं पुण्यतामेति कर्हिचित् ॥८९
लिङ्गं वा प्रतिमा वाऽपि दृश्यते यत्र कुत्रचित् । तत्तीर्थं पुण्यतामेति सर्वमेव फलप्रदम् ॥ ९०
माल्यवस्तूपहारैश्च ये करिष्यन्ति पूजनम् । युष्माकं मां पुरस्कृत्य तेषां रोगभयं कुतः ॥ ९१
येषु राज्येषु युष्माकं मत्पूर्वं पूजनादिकाः । प्रवत्स्यन्ति क्रियाः सर्वा यत्फलं तेषु तच्छृणु ॥९२
नाऽऽधयो व्याधयश्चैव[10] नोपसर्गो न क्षुद्भयम् । विप्रयोगो न वाऽपीष्टैरनिष्टैर्नापि संगतिः ॥ ९३
नाक्षिरोगः शिरोर्तिर्वा नाभिशूलभयं न च । [11]नातिसारभयं तत्र नाश्मरी न विषूचिका ॥ ९४
[12]वृष्टिर्निकामतस्तस्मिन्सम्यग्बुद्धिरनुत्तमा । आरोग्यं सर्वतश्चैव [13]दीर्घमायुः प्रवर्धते ॥ ९५
नाकाले भविता मृत्युर्गावो नाल्पपयोमुचः । नाकाले फलिनो वृक्षा नोत्पातभयमण्वपि ॥
एतच्छ्रुत्वा ततो विष्णुर्ब्रह्माणं स्तोतुमुद्यतः ॥ ९६

---

१ क. ख. ङ. च. °व्यं च न संदेहः स्त्री° । २ घ. °ति । जीवत्पुत्री तु या । ३ क. च. सति । ४ ग. °क्षिणस्थाने वसितव्यं क° । ५ क. ख. ङ. च. ज सेव्यं । ६ झ. गोपवेषेण । ७ झ. मां शास्तुम° । ८ क. ख. ग. घ. ङ च. ज. प्रहाणां । ९ क. ख. ग. ङ. च. मानवी ह्युप° । ज. मानयन्त्युप° । १० ग. घ. °र्वा पित्तशूलभगंदराः । ना° । ११ क. ख. ङ. च. ज. नाभिचारभयं तत्रापस्मारो न । १२ ञ. वृद्धिर्नि° । १३ क. ख. ग. ङ. च. ज. दीर्घायुश्च प्रजाधनम् । ना° । घ. दीर्घायुश्च प्रजावनम् । ना° ।

विष्णुरुवाच—

नमोऽस्त्वनन्ताय विशुद्धचेतसे स्वरूपरूपाय सहस्रबाहवे ।
सहस्ररश्मिप्रभवाय वेधसे विशुद्धदेहाय[1] विशुद्धकर्मणे ॥ ९७
समस्तविश्वार्तिहराय शंभवे सहस्रसूर्यानलतिग्मतेजसे[2,3] ।
समस्तविद्यायतनाय चक्रिणे समस्तधीस्थानधृते सदा नमः ॥ ९८
अनादिदेवाच्युत शेषशेखर[4] प्रभो भवद्भूतपते[5] महेश्वर ।
मरुत्पते सर्वपते जगत्पते भुवः पते भुवनपते सदा नमः ॥ ९९
जलेश[6] नारायण विष्णुशंकराक्षितीश[8] विश्वेश्वर विश्वलोचन ।
शशाङ्कसूर्याच्युतवीरविश्वप्रतर्क्यमूर्तेऽमृतमूर्त[7] अव्यय ॥ १००
ज्वलद्धुताशार्चिनिरुद्धमण्डल प्रपाहि नारायण विश्वतोमुख ।
समस्तदेवार्तिहरामृताव्यय प्रपाहि मां शरणगतं तथा विभो[9] ॥ १०१
वक्त्राण्यनेकानि विभो तवाहं पश्यामि शुद्धस्य गतिं पुराणम् ।
ब्रह्माणमीशं जगतां प्रसूतिं नमोऽस्तु तुभ्यं प्रपितामहाय ॥ १०२
संसारचक्रक्रमणैरनेकैः क्वचिद्भवान्देववराऽऽदिदेव ।
सन्मार्गविज्ञानविशुद्धदेहैरुपास्यसे किं प्रणमाम्यहं त्वाम् ॥ १०३
एकं[10] भवन्तं प्रकृतेः परस्ताद्यो वेत्त्यसौ[11] सर्वविदां वरिष्ठः[12] ।
गुणान्वितेषु प्रसभं विवेद्यो विशालमूर्तिस्त्विह सूक्ष्ममूर्तिः ॥ १०४
वाक्पाणिपादैर्विगतेन्द्रियोऽपि पद्मी[13] भवान्भो[14] विगतिर्विकर्मा ।
संसारवांस्त्वं निहतेन्द्रियोऽपि पुनः कथं देव[15] करोषि सृष्टिम् ॥ १०५
मूर्तादमूर्तं न तु लभ्यते परं परं वपुर्देव विशुद्धभावैः ।
संसारविच्छित्तिकरैर्यजद्भिस्ततोऽवगीयेत[16] चतुर्मुखत्वम् ॥ १०६
परं न जानन्ति यतो वपुस्ते देवादयश्चाद्भुतरूपधारिन्[17] ।
विभोऽवतारोग्रतनुं[18] पुराणमाराधयेयुः कमलासनस्थम् ॥ १०७
न ते तत्त्वं विश्वसृजोऽपि योनिमेकान्ततो वेत्ति विशुद्धभावः ।
परं त्वहं वेद्मि[19] कथं पुराणं भवन्तमाद्यं तपसा विशुद्धम् ॥ १०८
पद्मासनो वै जनकः प्रसिद्ध एवं प्रसूतिर्ब्रह्मसकृत्पुराणे ।
संचिन्त्यते नाथ विभुं भवन्तं[20] जानाति नैव तपसा विहीनः ॥ १०९
अस्मादृशैश्च प्रवरैरबोध्यं त्वां देव मूर्खाः स्वमतिं विभज्य ।
प्रबोद्धुमिच्छन्ति न तेषु बुद्धिरुदारकीर्तिष्वपि[21] देव हीनाः ॥ ११०

---

१ क. ख. ग. घ. ङ. च. ज. विशालदेहाय । २ ग. घ, ज. समस्तसू° । ३ ग. घ. ज. °से । ममोऽस्तु वि° । ४ ञ. °तशेख° । ५ ञ. भवोद्भवद्भू° । ६ क. ख. ङ. च. ज. यज्ञेश । ७ क. ख. ङ. च. °प्रवृत्तिमू° । ग. °प्रशान्तमू° । ८ क. ख. घ. ङ. च. ज. प्रजेश । ग. पृथ्वीश । ९ क. ख. घ, ङ. च. ज. °भो । चित्राण्य° । ग. °भो । चङ्क्रम्यमाणैकवि° । १० क. ख. ग. घ, ङ. च. ज. एवं । ११ झ. विरोद्धा । ञ. विरोधात् । १२ क. ख. घ. ङ. च. ज. °तिर्न हि सूक्ष्मरूपः । वाक्योऽपि मान्यावग° । १३ क. ख. घ. ङ. च. ज. °वान्यो विगतैकक° । १४ क. ख. घ. ङ. च. ज. °स्कन्धं न हिते° । १५ घ. ज. °ववरादिवेद्य । मू° । १६ क. ख. ग. घ. ङ. च. ज. °वसीये° । १७ झ. °न् । ऋतेऽन्° । १८ क. ख. ङ. च. ज. °प्रतरं पु° । १९ क. ख. ग. घ. ङ. च. ज. मे । २० ग. °वन्तमनुत्तमं नै° । २१ ग. घ, ज. °पि वेदही° ।

जन्मान्तरैर्वेदविवेकबुद्धिर्भवेद्यथा वा यदि वा प्रकाशः ।
तल्लाभलुब्धस्य तु मानुषत्वं न देवगन्धर्वपतिः शिवः स्यात् ॥ १११
न विष्णुरूपो भगवान्सुसूक्ष्मः स्थूलोऽसि देवः कृतकृत्यतायाः ।
स्थूलोऽपि सूक्ष्मः सुलभोऽसि देव त्वद्बाह्यकृत्या नरके पतन्ति ॥ ११२
किमास्यते वा भवति स्थितेऽस्मिन्रवीन्दुवस्वर्कमरुन्महीभिः ।
तत्त्वैः सरूपैः समरूपधारिन्नात्मस्वरूपे विततप्रभावः ॥ ११३
इति स्तुतिं मे भगवन्ननन्त जुषस्व भक्तस्य विशेषतश्च ।
समाधियुक्तस्य विशुद्धचेतसस्तद्भावभावैकमनोनुगस्य ॥ ११४
सदा हृदिस्थोऽसि भवन्नमस्ते नै सर्वगम्योऽसि पृथग्व्यवस्थः ।
इति प्रकाशं कृतमेतमीश स्तवं मया सर्वगतं हि बुद्ध्वा ॥
संसारचक्रक्रमणादियुक्त्या भीतं पुनर्मां प्रतिपालयस्व ॥ ११५

ब्रह्मोवाच—

सर्वज्ञस्त्वं न संदेहो ज्ञानराशिश्च केशव । देवानां प्रथमः पूज्यः सर्वदा त्वं भविष्यसि ॥ ११६
नारायणादनन्तरं रुद्रो भक्त्या विरिञ्चिनम् । तुष्टाव प्रणतो भूत्वा ब्रह्माणं कमलोद्भवम् ॥ ११७
नमः कमलपत्राक्ष नमस्ते भवपद्मज । नमः सुरासुरगुरो कारिणे परमात्मने ॥ ११८
नमस्ते सर्वदेवेश नमो वै मोहनाशन । विष्णोर्नाभ्युत्थितवते कमलासनजन्मने ॥ ११९
नमो विद्रुमरक्ताङ्गपाणिपल्लवशोभिने । शरणं त्वां प्रपन्नोऽस्मि त्राहि मां भवसंसृतेः ॥ १२०
पूर्वं नीलाम्बुदाकारं कुड्मलं ते पितामह । दृष्ट्वा रक्तमुखं भूयः पत्रकेसरसंयुतम् ॥ १२१
पद्मं चानेकपत्रान्तमसंख्यातं निरञ्जनम् । तत्र स्थितेन त्वयैषा सर्वा सृष्टिः प्रवर्तिता ॥ १२२
त्वां मुक्त्वा नान्यतस्त्राणं जगद्वन्द्य नमोऽस्तु ते । सावित्रीशापदग्धोऽहं लिङ्गं मे पतितं क्षितौ ॥
इदानीं कुरु मे शान्तिं त्राहि मां सह भार्यया । ब्रह्मा वै पातु मे पादौ जङ्घे तु कमलासनः ॥
विरिञ्चो मे कटिं पातु [*सृष्टिकृद्गुह्यमेव तु । नाभिं पद्मनिभः] पातु जठरं चतुराननः ॥ १२५
उरस्तु विश्वसृट् पातु हृदयं पातु पद्मजः । सावित्रीपतिर्मे कण्ठं हृषीकेशो मुखं मम ॥ १२६
पद्मवर्णस्तु नयने परमात्मा शिरो मम । एवं न्यस्य गुरोर्नाम शंकरो लोकशंकरः ॥ १२७
नमस्ते भगवन्ब्रह्मन्नित्युक्त्वा विरराम ह । ततस्तुष्टो हरं ब्रह्मा वाक्यमेतदुवाच ह ॥ १२८

ब्रह्मोवाच—

कं ते कामं करोम्यद्य पृच्छ मां यद्यदिच्छसि ॥ १२९

रुद्र उवाच—

यदि प्रसन्नो मे नाथ वराहो यदि वा मतः । तदेकं मे वद विभो यस्मिन्स्थाने भवान्स्थितः ॥ १३०
केषु केषु च स्थानेषु त्वां पश्यन्ति सदा द्विजाः । नाम्ना च केन ते स्थानं शोभते धरणीतले ॥
तन्मे वदस्व सर्वेश तव भक्तिरतस्य च ॥ १३१

---

* धनुश्चिह्नान्तर्गतः पाठः ख. ग घ. ङ. च. ज. पुस्तकस्थः ।

१ ञ. °न्ति । विमुच्यते । २ ञ. °स्मिन्नस्येन्दु° । ३ ख. ङ. च. ज. नमामि नित्यं भगवन्पुराणम् । इ° । ४ ख. घ. ज. °भू । दृष्ट्वा तु प्र° । ५ झ. °तकर क° । ६ ख. ग. पद्मं चान्तस्त्वमकरोः सम्यक्ख्यातं । ग. पद्मस्यान्तर्गतो देवो ब्रह्मा तं च नि° । ७ क. ख. ग. घ. ङ. च. ज. °रो नाम शं° । ८ क. ख. ग. घ. ङ. च. ज. वरदो यदि वा मम । त° ।

ब्रह्मोवाच—

[*पुष्करेऽहं सुरश्रेष्ठो गयायां च चतुर्मुखः । कान्यकुब्जे देवगर्भो भृगुकक्षे पितामहः ॥ १३२
कावेर्यां[1] सृष्टिकर्ता च नन्दीपुर्यां बृहस्पतिः । प्रभासे पद्मजन्मा च वानर्यां च सुरप्रियः] ॥ १३३
द्वारवत्यां तु ऋग्वेदो वैदिशे भुवनाधिपः । पौण्ड्रके पुण्डरीकाक्षः पिङ्गाक्षो हस्तिनापुरे ॥ १३४
जयन्त्यां विजयश्चास्मि जयन्तः पुष्करावते । उग्रेषु पद्महस्तो वै[2] श्यामलायां भवोरुदः ॥ १३५
अहिच्छत्रे जयानन्दः कान्तिपुर्यां[3] जनप्रियैः[4] । ब्रह्माऽहं पाटलिपुत्र ऋषिकुण्डे मुनिस्तथा ॥ १३६
महिलारोप्ये[5] कुमुदः श्रीकण्ठः श्रीनिवासिते । कामरूपे शुभाकारो वाराणस्यां शिवप्रियः ॥ १३७
मल्लिकाख्ये[6] तथा विष्णुर्महेन्द्रे भार्गवस्तथा । गोनर्दे[7] स्थविराकार उज्जयिन्यां पितामहः ॥ १३८
कौशाम्ब्यां तु महाबोधिरयोध्यायां च राघवः । मुनीन्द्रश्चित्रकूटे तु वाराहो विन्ध्यपर्वते ॥ १३९
गङ्गाद्वारे परमेष्ठी हिमवति च शंकरः । देविकायां स्रुचाहस्तः स्रुवहस्तश्चतुष्पथे ॥ १४०
वृन्दावने पद्मपाणिः कुशहस्तश्च नैमिषे । गोप्लक्षे[8] चैव गोपीन्द्रः सुचन्द्रो यमुनातटे ॥ १४१
भागीरथ्यां पद्मतनुर्जनानन्दो जनस्थले । कौङ्कणे[9] चैव मद्राक्षः काम्पिल्ये कनकप्रियः ॥ १४२
खेटके[10] चान्नदाता च शंभुश्चैव कुशस्थले[11] । लङ्कायां तु पुलस्त्योऽहं काश्मीरे हंसवाहनः ॥ १४३
वसिष्ठश्चार्बुदे चैव नारदश्चोत्पलावते । मेधके[12] श्रुतिदाताऽहं प्रयागे[13] यजुषां पतिः ॥ १४४
सामवेदस्तथा यज्ञे मधुरे मधुरप्रियः । अङ्कोलके[14] यज्ञगर्भो ब्रह्मवाहे सुतप्रियः ॥ १४५
नारायणश्च [15]गोमन्ते विदर्भायां द्विजप्रियः । ऋषिवेदे दुराधर्षः[16] पम्पायां सुरमर्दनः ॥ १४६
[17]विरजायां महारूपः सुरूपो[18] राष्ट्रवर्धने । पृथूदरस्तु मालव्यां शाकंभर्यां रसप्रियः ॥ १४७
पिण्डारके तु गोपालः[19] शुष्कंधो भोगवर्धने । कादम्बके प्रजाध्यक्षो देवाध्यक्षः समस्थले[20] ॥ १४८
गङ्गाधरो भद्रपीठे[21] सुपीठे जलमालिनम्(कः) । त्र्यम्बके त्रिपुराधीशः श्रीपर्वते त्रिलोचनः १४९
महादेवः पद्मपुरे कैलापे[22] वैधसस्तथा । शृङ्गवेरपुरे शौरिर्नैमिषे चक्रपाणिकः ॥ १५०
दण्डपुर्यां विरूपाक्षो गोतमो धूतपातके । माल्यवति हंसनाथो द्विजेन्द्रो वालिके तथा ॥ १५१
[23]इन्द्रपुर्यां देवनाथो[24] धूताषाढ्यां धुरंधरः । हंसवाहस्तु लम्बायां चण्डायां गरुडप्रियः ॥ १५२
महोदये महायज्ञः[25] सुयज्ञो यूपकेतने[26] । सिद्धेश्वरः पद्मवने विभायां पद्मबोधनः ॥ १५३
देवदारुवने लिङ्ग उदक्पथ उमापतिः । विनायको मातृस्थाने अलकायां धनाधिपः[27] ॥ १५४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. कौबेर्यां । २ क. ख. ग. घ. ङ. च. ज. वै तमोनद्यां तमोनुदः । ३ क. ख. ग. घ. ङ. च. ज. काञ्चिपु° । ४ झ. °यः । पालाटपुरे ब्रह्माऽहमृषिकुक्षे मु° । ५ क. ख. ग. घ. ङ. च. ज. °हिनारे मुकुन्दश्च श्री° । ६ क. ख. घ. ङ. च. ज. मल्लिकाक्षे । ग. मल्लिकाद्रौ । ७ क. ख. ग. घ. ङ. च. ज. °तुर्वटे । वृ° । ८ झ. गोपलक्षे तु चोपेन्द्रः । ९ ग. कौण्डिणे चैव मन्दारः का° । १० क. ख. ङ. च. ज. वेङ्कटे । ११ क. ख. ग. ङ. च. ज. कतुस्थले । १२ ग. घ. ज. मेलके । १३ क. ख. घ. च. ज. प्रपाते यादसां प° । ग. प्रभाते । ङ. प्रतापे । १४ क. ख. ङ. च. °ङ्कोटे यज्ञभोक्ता च ब्रह्मवादे सुरप्रि° । १५ क. ख. ङ. च. गोविन्दे मायापुर्यां द्वि° । १६ क. च. °धर्षो रेवायां । ज. °धर्षो पापायां । झ. °धर्षश्चेचायां । १७ क. ग. च. ज. विजयायां । १८ ग. निरूपो । १९ क. ङ. च. °लः शङ्खोद्धारेऽङ्गवर्धनः । का° । ख. ग. घ. °लः स्वच्छन्दे नागवर्धनः । का° । ज. °लः स्वच्छन्देह्यगवर्धनः । २० घ. समङ्गले । २१ ग. घ. ज. °ठे जलशायिनमर्बुदे । त्र्य° । ञ. °ठे जलशय्युरुमर्बुदे । त्र्य° । २२ क. ख. ङ. च. कपाले । २३ क. ख. ग. घ. ङ. च. ज. इन्दुपुर्यां । २४ क. ङ. च. ज. °थो धूतपायां पुरंदरः । ख. घ. ङ. °थो भूतापाढ्यां पुरंदरः । २५ ग. °यज्ञो यूपके यज्ञवाहनः । सिद्धिस्मरे पद्मवर्णो वि° । २६ क. ख. ङ. च. ज. यज्ञकेतने । २७ क. ख. घ. ङ. च. ज. कुलाधिपः ।

त्रिकूटे चैव गोनर्दः पाताले वासुकिस्तथा । पद्माध्यक्षश्च केदारे कूष्माण्डे सुरतप्रियः ॥ १५५
भूतवाप्यां शुभाङ्गस्तु सोवल्यां भषकस्तथा । अक्षरे पापहा चैव अम्बिकायां सुदर्शनः ॥ १५६
वरदायां महावीरः कान्तारे दुर्गनाशनः । अनन्तश्चैव वूर्णादे प्रकाशायां दिवाकरः ॥ १५७
विरजायां पद्मनाभः-सुवृद्धश्च वृकस्थले । मार्कण्डो वठके चैवं रोहिण्यां नागकेतनः ॥ १५८
पद्मावत्यां पद्मगृहो गगने पद्मकेतनः । अष्टोत्तरं स्थानशतं मया ते परिकीर्तितम् ॥ १५९
यत्र वै मम सांनिध्यं त्रिसंध्यं त्रिपुरान्तक । एतेषामपि यस्त्वेकं पश्यते भक्तिमान्नरः ॥ १६०
स्थानं स विमलं लब्ध्वा मोदते शाश्वतीः समाः । मानसं वाचिकं चैव कायिकं यच्च दुष्कृतम् ॥
तत्सर्वं नाशमायाति नात्र कार्या विचारणा । यस्त्वेतानि च सर्वाणि गत्वा मां पश्यते नरः ॥
भवते मोक्षगामी च यत्राहं तत्र वै स्थितः । पुष्पोपहारैर्धूपैश्च ब्राह्मणानां च तर्पणैः ॥ १६३
ध्यानेन च स्थिरेणाऽऽशु प्राप्स्यते परमेश्वरम् । तस्य पुण्यफलं चाग्र्यमन्ते मोक्षफलं तथा १६४
स ब्रह्मलोकमासाद्य तत्कालं तत्र तिष्ठति । पुनः सृष्टौ भवेद्देवो वैराजानां महातपाः ॥ १६५
ब्रह्महत्यादिपापानि इह लोके कृतान्यपि । अकामतः कामतो वा तानि नश्यन्ति तत्क्षणात् ॥
इह लोके दरिद्रो यो भ्रष्टराज्योऽथवा पुनः । स्थानेष्वेतेषु वै गत्वा मां पश्यति समाधिना ॥
कृत्वा पूजोपहारं च स्नानं च विधिपूर्वकम् । कृत्वा पिण्डप्रदानं च सोऽचिराद्दुःखवर्जितः १६८
एकच्छत्रो भवेद्राजा सत्यमेतन्न संशयः । इह जन्मनि सौभाग्यं धनधान्यं वरस्त्रियः ॥ १६९
भवन्ति विविधास्तेषां यैर्यात्रा पुष्करे कृता । इदं यात्राविधानं यः कुरुते कारयेत वा ॥ १७०
शृणोति वा स पापैस्तु सर्वैरेव प्रमुच्यते । अगम्यागमनं येन(?) कृतं जानाति मानवः ॥ १७१
ब्रह्मक्रियाया लोपेन वहुवर्षकृतेन च । यात्रां चेमां सकृत्कृत्वा वेदसंस्कारमाप्नुयात् ॥ १७२
किमत्र वहुनोक्तेन इदमस्तीह शंकर । अप्राप्यं प्राप्यते तेन पापं चापि विनश्यति ॥ १७३
सर्वयज्ञफलैस्तुल्यं सर्वतीर्थफलप्रदम् । सर्वेषां चैव वेदानां समाप्तिस्तेन वै कृता ॥ १७४
यैः कृता पुष्करे संध्या सावित्री समुपासिता । स्वपत्नीहस्तदत्तेन पौष्करेण जलेन तु ॥ १७५
भृङ्गारकेण करकेण मृन्मयेनापि शंकर । आनीय तज्जलं पुण्यं संध्योपास्तिर्दिनक्षये ॥ १७६
समाधिना समाधेया सा प्राणायामपूर्विका । तस्यां कृतायां यत्पुण्यं तच्छृणुष्व हराद्य मे॥१७७
तेन द्वादश वर्षाणि भवेत्संध्या तु वन्दिता । अश्वमेधफलं स्नाने दाने दशगुणं भवेत् ॥ १७८
उपवासेऽप्यनन्तं च स्वयं प्रोक्तं मयाऽनघ । सावित्र्याः पुरतो यस्तु दंपत्योर्भोजनं ददेत् १७९
तेनाहं भोजितस्तत्र भवामीह न संशयः । द्वितीयं भोजयेद्यस्तु भोजितस्तेन केशवः ॥ १८०
लक्ष्मीसहायो वरदो वरांस्तस्य प्रयच्छति । उमासहायस्तृतीये भोजितोऽसि न संशयः ॥ १८१
अथवा या कुमारीणां भक्त्या कुर्यात्तु भोजनम् । तस्याः कुले भवेद्वन्ध्या न कदाचिच्च दुर्भगा॥
न कन्याजननी क्वापि न भर्तुर्या न वल्लभा । तस्मात्सर्वप्रयत्नेन सावित्र्यग्रे तु भोजनम्॥१८३
पारत्रमैहिकं चापि कामयद्भिर्नरैः सदा । दातव्यं सर्वदा भीष्म कटुतैलविवर्जितम् ॥ १८४

---

१ ञ. कुण्डवाप्यां । २ क. ख. ग. घ. ङ. ङ. च. ज. सारण्यां तक्षक° । ३ क. ख. ङ. च. अक्षोटे । ४ क. ख. ग. घ. ङ. च. ज. पर्णाटे । ५ क. ख. ङ. च. °भः स्वरुद्रश्च । ग. °भः स्वरुचिश्च । घ. °भः स्वरुद्र° । ६ क. ग. घ. च. ज. °व वाहिन्यां मृग° । ७ क. ख. ग. घ. ङ. च. ज. पितृतर्पणम् । ८ क. ख. ग. घ. ङ. च. ज. °र । प्राच्यं वा प्रा° । ९ क. ख. घ. ङ. च. ज. °ने चतुर्गुणं तथा । उ° । ग. °ने चैकगुणं तथा । उ° । १० झ. °वा गोकु° । ११ ग. घ. न दुर्लभा ।

न चाम्लं न च वै क्षारं[1] स्त्रीणां भोज्यं कदाचन । पञ्चप्रकारं मधुरं हृद्यं सर्वसुसंस्कृतम् ॥ १८५
घृतपूर्णं सुपक्वं च बहुक्षीरसमन्वितम् । पूपकास्तादृशाः कार्या द्वितीयाऽशोकवर्तिका ॥ १८६
तृतीया पूरिका कार्या खर्जूरेण[2] सुपूरिता । चतुर्थश्चैव संयावो गुडघृतसमन्वितः ॥ १८७
शिखरिणी पञ्चमी च दधिक्षीरसमन्विता । आह्लादकारिणी पुंसां स्त्रीणां चातीव वल्लभा ॥ १८८
धनधान्यं जनोपेतं नारीनर[3]शताकुलम् । पूपकैः शष्कुलैस्तस्या जायते नात्र संशयः ॥ १८९
न ज्वरो न च संतापो न दुःखं न वियोगिता । [4]असौ तारयते स्वानां कुलानामेकविंशतिम् ॥
बन्धुभिः ससुतैश्चापि दासीदासैरनन्तकैः । पूरितं च कुलं तस्याः पूरिकां या प्रदास्यति ॥ १९१
एधते सुचिरं कालं पुत्रपौत्रसमन्वितम्[6] । कुलं[5] सबान्धवं तस्याः संयावं या प्रयच्छति ॥ १९२
पुत्रिण्यो वै दुहितरो बन्धुभिः सहिताः कुले । शिखरिणीप्रदात्रीणां युवतीनां न संशयः ॥ १९३
मोदते तु कुलं तस्याः[7] सर्वर्द्धिपरिपूरितम् । मोदकानां प्रदानेन एवमाह प्रजापतिः ॥ १९४
एतदेव तु गौरीणां भोजनं हर शस्यते । सुभगा पुत्रिणी साध्वी धन[8]धान्यसमन्विता ॥ १९५
सहस्रभोजिनी शंभो जन्म जन्म भविष्यति[9] । पानानि चैव मुख्यानि हृद्यानि मधुराणि च १९६
द्राक्षा[10]पानं तथाऽन्येषां गुडखण्डसमन्वितम्[11] । सारस्वतेन तोयेन कृत्वा खण्डं[12] नरैः शुभम् १९७
सुवासिनीनां पेयानि[13] दातव्यानि द्विजन्मनाम् । [14]इतरैरितरासानां(सां तु) वर्णयोग्यानि यानि च
मद्यानि चैव पेयानि तासु योग्यानि दापयेत् । प्रतिपूज्य विधानेन वस्त्रदानैः सकञ्चुकैः ॥ १९९
कुङ्कुमेन विलिप्ताङ्गीः स्रग्दामाभिरलंकृताः । दत्त्वा उपानहौ रक्ते नालिकेरं करे तथा ॥ २००
अक्ष्णोश्चैवाञ्जनं दत्त्वा सिन्दूरं चैव मस्तके । [15]पूगीफलानि हृद्यानि [16]वासितानि मृदूनि च ॥ २०१
हस्ते दत्त्वा सपात्राणि प्रणिपत्य विसर्जयेत् । स्वयं भुञ्जीत वै पश्चात्सबन्धुर्बालकैः सह ॥ २०२
अथवा नैव संपत्तिस्तीर्थे दातुं च भोजनम् । गृहे गतस्तु दास्यामि तुष्टो देव भवस्व मे ॥ २०३
एवमेव पितॄणां च आगत्य स्वे च मन्दिरे । पिण्डप्रदानपूर्वं तु श्राद्धं कुर्याद्विधानतः ॥ २०४
पितरस्तस्य वै तृप्ता भवन्ति ब्रह्मणो दिनम् । तीर्थादष्टगुणं पुण्यं स्वगृहे ददतां शिव ॥ २०५
न च पश्यन्ति वै नीचाः श्राद्धं दत्तं द्विजातिभिः । एकान्ते तु गृहे गुप्ते पितॄणां श्राद्धमिष्यते ॥
नीचदृष्ट्याहतं तच्च पितॄणां नोपतिष्ठति । तस्मात्सर्वप्रयत्नेन श्राद्धं गुप्तं च कारयेत् ॥ २०७
पितॄणां तृप्तिदं प्रोक्तं स्वयमेव स्वयंभुवा । गौरीभक्त्यधिका या तु शस्ता ज्ञातक्रिया तु या २०८
राजसी सा समाख्याता जनानां कीर्तिदायिनी । गुप्तदानं सदा देयमात्मनो हितमिच्छता २०९
पक्वान्नं दृश्यतामेति दीयमानं जनैर्भुवि । दृश्यमानं तु तत्तुष्ट्यै भवते नेह कर्हिचित् ॥ २१०
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता । भवने नात्र संदेहः सत्यं पौराणिकं वचः ॥ २११
तीर्थेषु ब्राह्मणं नैव परीक्षेत कथंचन । अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् ॥ २१२

---

१ क. ख. ग. झ. ङ. च. ज. °रं स्वाभाव्यं न क° । २ झ. °धिगुडस° । ३ क. ख. ग. घ. ङ. च. ज. °रीणां च शतं कु° । ४ झ. अशोकवर्तिदानेन स कुलान्येक° । ५ क. ख.ङ. च. ज. °लं च सकुलं तस्य शष्कुलं यः प्र° । ६ क. ख. ङ. च. ज. °हितं कुलम् । शि° । ७ क. ख. ग. ङ. च. ज. तस्य सर्वसिद्धिप्रपू° । ८ क. ख. ग. ङ.च. ज. °नक्रद्धिस° । ९ क. ख. ङ. च. ज. °ति । पूपानि चैव पुष्पाणि कृतानि म° । घ. °ति । पूपानि चैव पुण्यानि कृतानि म° । १० क. ख. घ. ङ. च. ज. °क्षारसप्रपाणं च गु° । ११ ख. ङ. च. °म् । शारदेन तु धान्येन । घ. ज. °म् । सारसेन तु धान्येन । १२ ख. ङ. च. °ण्डं विमिश्रितम् । १३ क. ख. घ. ङ. च. ज. °नि भव्यानि च द्वि° । १४ क. ख. घ. ङ. च. ज. इह रोचितवासांसि व° । घ. इह रौचितवासांसि व° । १५ क. ख. ग. घ. ङ. च. ज. गुडफलानि । १६ क. ख. ग. घ. ङ. च. ज. वाञ्छितानि ।

सक्तुभिः पिण्डदानं च संयावैः पायसेन वा । कर्तव्यमृषिभिर्दृष्टं पिण्याकेनैङ्गुदेन च ॥ २१२
तिलपिण्याककैर्देयं भक्तिमद्भिर्नरैः सदा । +श्राद्धं तत्र तु कर्तव्यमर्घावाहनवर्जितम् ॥ २१३
श्वध्वाङ्क्षगृध्रकाका वा नैव दृश्या हनन्ति(?) ते । श्राद्धं तत्तैर्थिकं प्रोक्तं पितॄणां तुष्टिदं परम् २१४
कर्तव्यं तत्प्रयत्नेन भक्तिरेवात्र कारणम् । भक्त्या तुष्यन्ति पितरस्तुष्टाः कामान्ददन्ति ते २१५
पुत्रपौत्रधनं धान्यं कामान्यान्मनसेच्छति । भक्त्या वाऽऽराधिता रुद्र नृणां प्रीताः पितामहाः ॥
अकालेऽप्यथ काले वा तीर्थे श्राद्धं सदा नरैः । प्राप्तैरेव सदा स्नानं कर्तव्यं पितृतर्पणम् ॥ २१७
पिण्डदानं च वै शस्तं पितॄणां चातिवल्लभम् । पितरो हि निरीक्षन्ते गोत्रजं समुपागतम् ॥ २१८
आशया परया युक्ताः काङ्क्षन्ते सलिलं च ते । विलम्बो नैव कर्तव्यो नैव विघ्नं समाचरेत् २१९
अच्छिन्ना संततिस्तेषां सदाकालं भविष्यति । पितरः पुत्रदातारो वृद्धिश्राद्धाभिकाङ्क्षिणः ॥ २२०
तेन ते संततिच्छेदं न प्रकुर्वन्ति कर्हिचित् । अतः श्राद्धं पुरा प्रोक्तं स्वयमेव स्वयंभुवा ॥ २२१
गुणोत्तरं तु यत्कार्यं द्विजैः पितृपरायणैः । तीर्थे क्षेत्रे गृहे वाऽपि संक्रान्तौ ग्रहणेऽपि वा ॥ २२२
विषुवे अयने चापि जन्मर्क्षे च प्रपीडिते । एतान्वै श्राद्धकालांस्तु पुरा स्वायंभुवोऽब्रवीत् ॥ २२३
कृते श्राद्धे न वै पुंसां पीडा भवति देहजा । तदा पुत्रकृतं वाऽपि सर्वं त्यजति दुष्कृतम् ॥ २२४
यथा न भवते पीडा ग्रहचौरनृपादिकात् । दुष्कृतं नश्यते सर्वं परत्र च गतिं शुभाम् ॥ २२५
लभते नात्र संदेहः प्रजापतिवचो यथा । कृते युगे पुष्कराणि त्रेतायां नैमिषं स्मृतम् ॥ २२६
द्वापरे च कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत् । दुष्करः पुष्करे वासो दुष्करं पुष्करे तपः ॥ २२७
[*दुष्करं पुष्करे दानं दुष्करः पुष्करे जपः ] । यदन्यत्र कृतं पापं तीर्थे तद्याति लाघवम् २२८
न तीर्थकृतमन्यत्र क्वचित्पापं व्यपोहति । सायं प्रातः स्मरेद्यस्तु पुष्कराणि कृताञ्जलिः ॥ २२९
उपस्पृष्टं भवेत्तेन सर्वतीर्थेषु भारत । सायं प्रातरुपस्पृश्य पुष्करे नियतेन्द्रियः ॥ २३०
क्रतून्सर्वानवाप्नोति ब्रह्मलोकं च गच्छति । द्वादशाब्दं द्वादशाहं मासं मासार्धमेव च ॥ २३१
यो वसेत्पुष्करे नित्यं स गच्छेत्परमां गतिम् । सर्वेषामेव लोकानां ब्रह्मलोको+परि स्थितः २३२
य इच्छेत्पुष्करं गन्तुं सोऽनुसेवेत पुष्करम् । यथा लोमविलोमाभ्यां तथा व्यस्तसमस्तयोः २३३
स्नातस्तु पुष्करे सम्यक्कोट्या च फलमश्नुते । विधिवत्क्रियमाणेषु सर्वतीर्थेषु यत्फलम् ॥ २३४
पुष्करालोकनादेव नरः प्राप्नोति तत्फलम् । दशकोटिसहस्राणि तीर्थानां वै महीतले ॥ २३५
सांनिध्यं पुष्करे तेषां त्रिसंध्यं कुरुनन्दन । यावत्तिष्ठन्ति गिरयो यावत्तिष्ठन्ति सागराः ॥ २३६
तावत्पुष्करमृत्यूनां ब्रह्मलोको न संशयः । जन्मान्तरसहस्रैश्च आजन्ममरणान्तिकम् ॥ २३७
निर्दहेद्दुष्कृतं सर्वं सकृत्स्नात्वा तु पुष्करे । पुष्करे वाऽजगन्धं ये प्रपश्यन्ति स्म मानवाः ॥ २३८
तेऽप्यशेषाघनिर्मुक्ता यान्ति रुद्रसलोकताम् । तत्रोष्य रजनीमेकां भवस्य सदने शुचिः ॥ २३९
अम्बुभक्षो वायुभक्षः शिवसायुज्यतां व्रजेत् । अजकर्णे ह्रदे स्नात्वा दृष्ट्वा माहेश्वरं पदम् ॥ २४०

---

+ इत आरभ्याग्रे त्रिंशाध्याये त्रयोविंशश्लोकपर्यन्तो ग्रन्थो नास्ति क्वचित्पुस्तके । * धनुश्चिह्नान्तर्गतः पाठो ज. पुस्तकस्थः । + आर्षः संधिः ।

---

१ क. ख. ग. घ. ङ. च. ज. °केन गुडेन वा । ति° ।

१२५

सुवर्णमौलिमालोक्य किं पुनः परितप्यते । एकहंसं कुरुक्षेत्रे गङ्गाभेदं च नैमिषे ॥
पुष्करे तु अजं दृष्ट्वा मुक्तिरेषा विशिष्यते ॥ २४१

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे ब्रह्मयज्ञवर्णनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९६९२

अथ त्रिंशोऽध्यायः ।

भीष्म उवाच—

क्षेमंकरी तु या देवी स्थिता पुष्करपर्वते । तस्या उत्पत्तिमाचक्ष्व परं कौतूहलं हि मे ॥ १

पुलस्त्य उवाच—

या सा क्षेमंकरी देवी सर्वसत्त्वबलोत्कटा । सात्त्विकी परमा शक्तिः पुष्करं प्राप कारणे(?)॥ २
शुभवस्त्राम्बुजा देवी नीलायतविलोचना । तस्यास्तपन्त्याः कालेन महत्त्वात्कुपितं मनः ॥ ३
तस्य क्रोधात्समुत्तस्थुः कुमार्यः सौम्यलोचनाः । नीलकुञ्चितकेशान्ता बिम्बोष्ठाः पद्मलोचनाः॥४
नितम्बरसनादामनूपुराढ्याः सुवर्चसः । एवंविधाः स्त्रियो देव्याः क्षुभिते मनसि द्रुतम् ॥ ५
सहस्रशः समुत्तस्थुः कोटिशो विविधामलाः । सृष्ट्वा कुमारीस्ता देवीस्तस्मिन्नेव गिरौ शुभाः॥ ६
तपसा निर्मितं देव्या पुरमाकाशगं महत् । विशालरथसौवर्णप्राकारेणोपशोभितम् ॥ ७
अन्तर्जलानि वेश्मानि मणिसोपानवन्ति च । रत्नजालगवाक्षाणि आसन्नोपवनानि च ॥ ८
प्राधान्येन प्रवक्ष्यामि कन्यानामानि तेऽनघ । विद्युत्प्रभा चन्द्रकान्तिः सूर्यकान्तिस्तथाऽपरा ॥९
गम्भीरा दारुकेशी च सुकेशी चापि सुन्दरी । नीलकेशी घृताची च उर्वशी शीलमण्डना ॥१०
चारुकर्णा वि[*शालाक्षी धन्या पीनपयोधरा । चन्द्रप्रभा गिरिसुता तथा सूर्यप्रभानना ॥ ११
स्वयंप्रभा चारुमुखी सर्वदूती विभावरी । जया च विजया चैव तथा चैवापराजिता ॥ १२
एताश्चान्याश्च] शतशः कन्यास्तस्मिन्पुरोत्तमे । देव्या अनुचर्यः सर्वाः पाशाङ्कुशधराः शुभाः ॥
ताभिः परिवृता देवी सिंहासनगता स्थिता । यौवनस्था महाभागा पीनोन्नतपयोधरा ॥ १४
चम्पकाशोकपुंनागनागकेसरदामभिः । सचामरार्चिता देवी यावदास्ते तपोन्विता ॥ १५
तावदागतवांस्तत्र नारदो ब्रह्मणः सुतः । तं दृष्ट्वा सहसाऽऽयातं ब्रह्मपुत्रं तपोनिधिम् ॥ १६
विद्युत्प्रभामुवाचेदमासनं दीयतामिति । पाद्यमाचमनीयं च क्षिप्रमस्मै प्रदीयताम् ॥ १७
एवमुक्ता तदा देवी कन्या विद्युत्प्रभा शुभा । आसनं पाद्यमर्घ्यं च नारदाय न्यवेदयत् ॥ १८
ततः कृतासनं दृष्ट्वा प्रणतं नारदं मुनिम् । उवाच वचनं देवी हर्षेण महताऽन्विता ॥ १९

देव्युवाच—

स्वागतं ते मुनिश्रेष्ठ कस्माल्लोकादिहाऽऽगतः । किं कार्यं देव यत्कृत्यं मा नः कालात्ययो भवेत्

पुलस्त्य उवाच—

इत्येवमुक्तः स मुनिर्नारदः प्राह लोकवित् ॥ २०

* धनुश्चिह्नान्तर्गतः पाठो ज. पुस्तकस्थः ।

१ ज. °स्त्राम्बुजवि° ।

नारद उवाच—

ब्रह्मलोकादिन्द्रलोकं तस्माद्रौद्रमथाचलम् । इहस्थां त्वां च वै देवि द्रष्टुमभ्यागतो ह्यहम् ॥ २२

पुलस्त्य उवाच—

एवमुक्त्वा मुनिवरस्तां देवीं संनिरीक्ष्य च । अहोऽभयमहो धैर्यमहो कान्तिरहो वयः ॥ २३
अहो निष्कामता देव्या इति खेदमुपाययौ । देवगन्धर्वसिद्धानां यक्षकिंनररक्षसाम् ॥ २४
न रूपमीदृशं क्वापि स्त्रीष्वन्यास्विह दृश्यते । एवं संचिन्त्य मनसा नारदो विस्मयान्वितः ॥ २५
प्रणम्य देवीं वरदामुत्पपात नभस्तलम् । गतश्च त्वरया युक्तः पुरीं दैत्येन्द्रपालिताम् ॥ २६
महिषाख्येन या भीष्म समुद्रान्तःस्थिता तदा । तत्राऽऽससाद भगवान्महिषं दानवाकृतिम् २७
दृष्ट्वा लब्धवरं वीरं देवसैन्यान्तकं महत् (हान्) । स तेन पूजितो भक्त्या नारदो मुनिपुंगवः २८
प्रीतात्मा नारदस्तस्मै देव्या रूपमनुत्तमम् । आचख्यौ तद्यथान्यायं यद्दृष्टं पुष्करे तथा ॥ २९

नारद उवाच—

असुरेन्द्र शृणुष्वैकं कन्यारत्नसमन्वितम् । येन लब्धेन लब्धं स्यात्त्रैलोक्यं सचराचरम् ॥ ३०
ब्रह्मलोकादहं दैत्य पुष्करारण्यमागतः । तत्र देवीपुरं दृष्टं कुमारीशतसंकुलम् ॥ ३१
तत्र प्रधाना या कन्या तापसीव्रतधारिणी । आदेवदैत्ययक्षाणां मध्ये काचिन्न दृश्यते ॥ ३२
तादृशी तु शुभा दैत्य तादृग्ब्रह्माण्डमध्यतः । तादृशी भ्रमता दृष्टा न कदाचिन्मया सती ॥ ३३
तस्याश्च देवगन्धर्वाः सिद्धकिंनरचारणाः । उपासां चक्रिरे सर्वे ये चान्ये दैत्यनायकाः ॥ ३४
तां दृष्ट्वा च शुभां देवीं त्वां द्रष्टुं समुपागतः । अजित्वा देवताः सर्वा न तां लभेत कर्हिचित् ३५

पुलस्त्य उवाच—

एवमुक्त्वा क्षणं स्थित्वा तमनुज्ञाप्य नारदः । यथागतं ययौ धीमानन्तर्धानेन तत्क्षणात् ॥ ३६
गते तु नारदे दैत्यश्चिन्तयामास तां शुभाम् । श्रुता या नारदमुखात्स्मृत्वा विस्मितमानसः ॥ ३७
तामेव चिन्तयञ्शर्म न लेभे दैत्यसत्तमः । तत्त्वज्ञान्सर्वमन्त्राणां मन्त्रिणः समुपाह्वयत् ॥ ३८
तस्याष्टौ मन्त्रिणः शूरा नीतिमन्तो बहुश्रुताः । प्रघसो विघसश्चैव शङ्कुकर्णो विभावसुः ॥ ३९
विद्युन्माली सुमाली च पर्जन्योऽक्रूर एव च । एते मन्त्रिवराः सर्वे प्राधान्येन प्रकीर्तिताः ॥ ४०
ते दानवेन्द्रमासाद्य ऊचुः कृत्यं विधीयताम् । तेषां तद्वचनं श्रुत्वा दानवेन्द्रो महाबलः ॥
उवाच कन्यालाभाय नारदावाप्तनिश्चयः ॥ ४१

महिषासुर उवाच—

मह्यं हि कथिता बाला नारदेन सुरर्षिणा । बिम्बोष्ठी चारुसर्वाङ्गी चन्द्रकान्ततरा हि सा ॥ ४२
स्तनौ च पीनौ कठिनौ संहतौ चारुदर्शनौ । मृणालकोमलौ बाहू नयने च सुतारके ॥ ४३
गम्भीरा वर्तुला नाभिस्त्रिवलीशोभनोदरा । विस्तीर्णजघना चैव सुश्रोणी मृदुगामिनी ॥ ४४
कदलीगर्भसंकाशमूरुयुग्मं च शोभनम् । चरणौ सुप्रभौ तस्या धरण्यां सुप्रतिष्ठितौ ॥ ४५
परोपकारिणा तेन मुनिना भावितात्मना । एवंविधा मे कथिता श्रुता या [1]वीर्यहारिणी ॥ ४६
पुंसां वै श्राविते लिङ्गे दृष्टा प्राणहरा हि सा । अवश्यं सा मया ग्राह्या युष्माकं संनिधौ रणे ॥
[*सा(तां) वाऽजित्वा सुरान्यक्षान्न लभेत(य) किलाङ्गनाम् । एतदर्थं भवन्तो मे कथयन्तु विनिश्चयम्]

---

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

---

1 ज. वीरहारिणी ।

कथं सा लभ्यते बाला कथं देवाश्च निर्जिताः । भवेयुरिति मे(ते) सर्वे मन्त्रिणो दानवेश्वरम् ४९
ऊचुः संमन्त्रिताः सर्वे कथयामो वयं तव । एवमुक्त्वा वचोऽवोचत्प्रघसो दानवेश्वरम् ॥ ५०

प्रघस उवाच—

या सा ते कथिता दैत्य नारदेन महासती । सा शक्तिः परमा देवी वैष्णवी लोकधारिणी ५१
गुरुपत्नीं भृत्यपत्नीं तथा सामन्तयोषितः । जिघृक्षन्म्रियते राजन्नगम्यागमनेन च ॥ ५२
साऽग्निज्वाला तृणं त्वं च सा च त्वां निर्दहिष्यति । एवं ज्ञात्वा न भावं तु कर्तुमर्हसि दानव॥
सुरर्षिणा सुरकार्यं कर्तुकामेन कीर्तिता ॥ ५३

पुलस्त्य उवाच—

प्रघसेनैवमुक्ते तु तद्देवीं प्रति पार्थिव । दैत्येश्वरमथाऽऽहेदं विघसो नयकोविदः ॥ ५४

विघस उवाच—

वारणीया कदाचित्तु सर्वदा विजिगीषुभिः । अन्यतन्त्रेण कन्यायाः कार्यं क्वापि प्रधर्षणम् ॥५५
यदि ते रोचते वाक्यं मदीयं राजसत्तम । इदानीं तां शुभां देवीं गत्वा याचतु कश्चन ॥ ५६
यो महात्मा भवेत्तस्य बन्धुस्तं याचयामहे । साम्नैवाऽऽदौ ततः पश्चात्करिष्यामः प्रयाणकम् ५७
ततो भेदं करिष्यामस्ततो दण्डं क्रमेण वै । अनेन क्रमयोगेण यदि सा नैव लभ्यते ॥ ५८
ततः संनह्य गच्छाम बलाद्गृह्णाम तां तदा । साधूक्तो विघसेनैष यत्नः प्रति वराननाम् ॥ ५९
तदेव क्रियतां शीघ्रं दूतस्तत्र विसृज्यताम् । यः सर्वशास्त्रनीतिज्ञः शुचिः शौचसमन्वितः ॥ ६०
सत्यं ज्ञात्वा तु तां देवीं वर्णतो रूपतो गुणैः । पराक्रमेण शौर्येण वयसा च बलेन च ॥ ६१
बन्धुवर्गेण सामग्र्या मानेनाऽऽभरणेन च । एवं ज्ञात्वा तु तां देवीं ततः कार्यं विधीयताम् ॥
ततो महिषसैन्यस्य तत्स(तं स) मासाद्य साधुभिः ॥ ६२

पुलस्त्य उवाच—

प्रशस्य तस्य तद्वाक्यं विघसं मन्त्रिसत्तमम् । प्रशस्य सर्वे तं दूतं संदेष्टुमुपचक्रमुः ॥ ६३
विद्युत्प्रभं महाभागं बहुमायाविदं शुभम् । विसर्जयित्वा तं दूतं विघसो वाक्यमब्रवीत् ॥ ६४

विघस उवाच—

संनह्यतां दानवेन्द्र चतुरङ्गबलेन च । क्रियतां विजयं ता(यस्ता)वद्देवसैन्यं प्रति प्रभो ॥ ६५
असुरेन्द्र सुरैर्भग्नैस्त्वत्पराक्रमभीषितैः । सा कन्या वश्यतामेति त्वयि शक्रत्वमागते ॥ ६६
लोकपालैर्जितैः सर्वैस्तथैव मरुतां गणैः । नागैर्विद्याधरैः सिद्धैर्गन्धर्वैः सर्वतोजितैः ॥ ६७
रुद्रैर्वसुभिरादित्यैस्त्वमेवेन्द्रो भविष्यसि । इन्द्रस्य ते सतः कन्या देवगन्धर्वयोषितः ॥
वशमेवाऽऽगमिष्यन्ति सर्वदा भयपीडिताः ॥ ६८

पुलस्त्य उवाच—

एवमुक्तस्तदा दैत्यः सेनापतिमुवाच ह । विरूपाक्षं महामेघं नीलाञ्जनसमप्रभम् ॥ ६९

महिषासुर उवाच—

आनीयतां द्रुतं सैन्यं हस्त्यश्वरथपत्तिमत् । येन देवांश्च गन्धर्वाञ्जयामो युधि दुर्जयान् ॥ ७०

पुलस्त्य उवाच—

एवमुक्तो विरूपाक्षस्तं गृहीत्वा स मूर्धनि । उवाच तं दानवेन्द्रं प्रणिपत्य प्रशस्य च ॥ ७१

१ ज. शृणु ।

विरूपाक्ष उवाच—

अविरोधेन देवानां तिष्ठ राजञ्शतं समाः । जीवद्भिः प्राप्यते सौख्यं भोगान्राज्यं धनानि च ॥
एतन्मत्वा न विरोधं सुरैर्गच्छ महाद्युते । ब्रह्मणा ते वरो दत्तस्त्वजेयस्त्वं दिवौकसाम् ॥ ७३
अनेनैव वरेण त्वं स्वस्थाने तिष्ठ वै सुखम् । देवानां दानवानां च कन्या या रूपतोऽधिका: ७४
पतिस्तासां दानवेन्द्र सर्वे कर्तास्मि ते वचः । अतीव स्पर्धते लोको जेतुं स्वेन बलेन च ॥ ७५
तेषां प्रधानभूतानां कोटयस्त्वर्बुदानि च । येषां स्वबलमायाति शतकोट्या(व्य)युताधिकम् ॥ ७६
तेषां दैत्यसहस्राणि दानवानां महात्मनाम् । संमतं चक्रुरव्यग्रास्तदा दैत्याः प्रहारिणः ॥
प्रयाणं रोचयामास देवसैन्यजिघांसया ॥ ७७

पुलस्त्य उवाच—

ततो महिषदैत्यस्तु कामरूपी महाबलः । मत्तं नागं समारूढो यियासुर्मेरुपर्वतम् ॥ ७८
तत्रेन्द्रपुरमासाद्य देवैः सह शतक्रतुम् । अभिदुद्राव दैत्येन्द्रस्ततोऽदेवाः क्रुधाऽन्विताः ॥ ७९
शितान्यादाय शस्त्राणि वाहनानि विशेषतः । अधिष्ठाय सुरानाजौ दुद्रुवुर्मुदिता भृशम् ॥ ८०
तेषां प्रवव्रते युद्धं महतां भीमविक्रमम् । घोरं प्रचण्डयोधानामन्योन्यमतिगर्जितम् ॥ ८१
तत्राञ्जनो नीलकुक्षिर्मेघवर्णो वलाहकः । उदराक्षो ललाटाक्षो महाक्षो भीमविक्रमः ॥ ८२
स्वर्भानुर्वसुरष्टौघः सर्वे दुद्रुवुराहवे । यथासंख्येन तद्वच्च दैत्या द्वादश चापरे ॥ ८३
आदित्यान्दैत्यसंघास्ते तेषां प्राधान्यतः शृणु । भीमाक्षो गजकर्णश्च शङ्कुकर्णस्तथैव च ॥ ८४
रक्ताक्षो भीमदंष्ट्रश्च विद्युज्जिह्वस्तथैव च । अतिकायो महाकायो दीर्घबाहुः कृतान्तकृत् ॥ ८५
एते द्वादश दैत्येन्द्रा आदित्यानभिदुद्रुवुः । स्वं स्वं बलमुपादाय तद्वदन्येऽपि दानवाः ॥ ८६
यथासंख्येन रुद्रांस्तु दुद्रुवुर्भीमविक्रमाः । शेषान्देवाञ्शेषदैत्या यथायोग्यमुपाद्रवन् ॥ ८७
स्वयं महिषदैत्यस्तु इन्द्रं दुद्राव वेगतः । स चातिबलवान्दैत्यो ब्रह्मणो वरदर्पितः ॥ ८८
अवध्यः पुरुषेणाऽऽजौ यद्यपि स्यात्पिनाकधृक् । आदित्यैर्वसुभिः सर्वै रुद्रैश्चापि महद्भृशम्(?)८९
असुरा यातुधानाश्च संख्यापूरणकेवलाः । देवानामपि सैन्यानि निहतान्यसुरैर्युधि ॥ ९०
एवंभूते तदा भग्ने देवेन्द्रे विद्रुताः सुराः । अर्दिता विविधैः शस्त्रैः शूलपट्टिशमुद्गरैः ॥ ९१
गतवन्तो ब्रह्मलोकमसुरैरर्दिताः सुराः । अथ विद्युत्प्रभो दैत्यस्तदा दूतो विसर्जितः ॥ ९२
देव्याः सकाशं गत्वा तु उवाच तनुमध्यमाम् । प्रणम्य प्रणतो भूत्वा कुमारीशतसंकुलाम् ॥ ९३
आस्थाने विनयायत्तस्तथा वचनमब्रवीत् । देवि पूर्वमृपिस्त्वासीदादिसर्गेषु संभवः ॥ ९४
संवत्सरशताज्जातः सुपार्श्वो नाम वै भुवि । तस्याभवन्महातेजाः सिन्धुद्वीपः प्रतापवान् ॥ ९५
स हि तीव्रं तपस्तेपे माहिष्मत्यां सुरोत्तमे । कुर्वन्स्थितस्तपो घोरं निराहारस्त्वशोभने ॥ ९६
दैत्यस्य विप्रचित्तेस्तु सुता सुरसुतोपमा । माहिष्मतीति विख्याता रूपेणासदृशी भुवि ॥ ९७
सखीभिः सा परिवृता विहरन्ती यदृच्छया । आगता मन्दरद्रोणीं तत्रापश्यत्तपोवनम् ॥ ९८
[illegible]नेरम्बरसंसक्तविविधद्रुममालिकम् । लतागृहैः सुविहितैर्बकुलैराम्रतिन्दुकैः ॥ ९९
चन्दनैर्बदरैः शालैः सरलैरुपशोभितम् । विचित्रवनखण्डैश्च भूषितं तन्महात्मभिः ॥ १००
दृष्ट्वोत्तमं वनं रम्यमासुरी कन्यका शुभा । माहिष्मती वरारोहा चिन्तयामास भामिनी ॥ १०१
भीषयित्वाऽहमेतांस्तु तापसानाश्रमे स्वयम् । तिष्ठामि क्रीडती सार्धं सखीभिः परमार्चिता १०२

१ ज. °मू । मेघपर्वतमा° । २ ज. देवान्क्रुधाऽन्वितः । शतान्या° ।

एवं संचिन्त्य सा देवी महिषी संबभूव ह । महिषीभिः सह सर्वाभिस्तीक्ष्णशृङ्गाग्रधारिणी १०३
तमृषिं भीषितुं ताभिर्महानादं ननाद सा। असौ च भीषितस्ताभिस्तां ज्ञात्वा ज्ञानचक्षुषा १०४
आसुरीं क्रोधसंपन्नां(न्नः) शशाप च सुलोचनाम् । यस्माद्भीषयसे मां त्वं महिषीरूपधारिणि ॥
अतो भव महिष्येव पापकर्मे शतं समाः । एवमुक्ता तदा सा तु सखीभिः सह *वेपती ॥१०६
पादयोर्न्यपतत्तस्य शापान्तं कुरु जल्पती । तस्यास्तद्वचनं श्रुत्वा स मुनिः करुणान्वितः ॥१०७
शापान्तमकरोत्तस्या वाक्यं चेदमुवाच ह ॥ १०८

मुनिरुवाच—

अनेनैव तु रूपेण पुत्रमेकं प्रसूयसे । शापान्तो भविता भद्रे मद्वाक्यं न मृषा भवेद् ॥ १०९

पुलस्त्य उवाच—

एवमुक्ता गता सा तु नर्मदातीरमुत्तमम् । यत्र तेपे तपो घोरं सिन्धुद्वीपः प्रतापवान् ॥ ११०
तत्र विद्युन्मती नाम दैत्यकन्याऽतिरूपिणी । सा दृष्टा तेन मुनिना विवस्त्रा मज्जती जले ॥१११
चस्कन्द स मुनिः शुक्रं शिलाद्रोण्यां महातपाः। तच्च माहिष्मती दृष्ट्वा दिव्यगन्धि सुगन्धि च ॥
निजां सखीमुवाचेदं पिबामि च जलं शुभम् । एवमुक्त्वा तु सा पीत्वा तच्छुक्रं मुनिसंभवम् ॥
प्राप गर्भं मुनेर्वीर्याद्वत्सरं जठरे धृतम् । तस्याः पुत्रोऽभवच्छ्रीमान्महाबलपराक्रमः ॥ ११४
महिषेति स्मृतो नाम्ना ब्रह्मवंशविवर्धनः । सुराणामपहृत्याऽऽजौ त्रैलोक्यं संमतोऽनघे ॥ ११५
आगम्य दास्यते सुभ्रु तव देवि महासुरः । तस्याऽऽत्मनः प्रदानेन कुरु देवि महत्कृतम् ॥११६
आत्मना स्वयमात्मानं शोचमाना सुखी भव । वृथा त्वं यौवनं प्राप्ता पीनौ चेमौ पयोधरौ ११७
यदि तस्याङ्गसंलग्नौ सफलं जीवितं भवेत् । भवत्या न तु संदेहः प्राप्तं वै जन्मनः फलम्॥ ११८
मा क्लेशय वृथा देवि वयश्चेदं सयौवनम् । सभाग्या भव सुश्रोणि पतिं प्राप्नुहि दानवम् ॥ ११९
किमनेन तु वक्त्रेण यन्मुखे तस्य नार्प्यते । सुधारसस्याभ्यधिकमास्वादं लभ शोभनम् ॥ १२०
एवमुक्ता तदा देवी तेन दूतेन शोभना । जहास परमा देवी वाचं नोवाच किंचन ॥ १२१
तस्या हसन्त्याः सहितं त्रैलोक्यं सचराचरम् । ददर्श कुक्षौ संभ्रान्तस्तत्क्षणात्समपद्यत ॥ १२२
ततो देव्याः प्रतीहारी जया नामासितेक्षणा । देव्या हृदि स्थितं वाक्यमुवाच तनुमध्यमा १२३
कन्यार्थं यत्त्वया दूत वचनं समुदीरितम् । यदि नाम व्रतं वा स्यात्कौमारं सार्वकालिकम् १२४
अन्या अपि कुमार्योऽत्र सन्ति देव्याः पदानुगाः । तासामेकाऽपि नो लभ्या किमु देवी स्वयं शुभा
याहि दूत त्वरावांस्त्वं किंचिदन्यद्भविष्यति । एवमुक्तस्ततो दूतस्तावद्व्योम्नि महामुनिः॥ १२६
आयातो नारदस्तूर्णमेतदूचे महातपाः । देवि देवैरहं प्रीत्या प्रेषितोऽस्मि तवान्तिकम् ॥ १२७
देवाः सर्वे जिता मेरुं विहाय ब्रह्मणोऽन्तिकम् । विगता देवि दैत्येन महिषाख्येन निर्जिताः ॥
त्वां ग्रहीतुं हि यत्नं स कृतवान्देवि दैत्यराट् । एवमुक्ताऽसि देवि त्वं योधयस्व वरानने॥१२९
स्थिरी भूत्वा महादेवि तं दैत्यं प्रति घातय । उक्त्वैवान्तर्हितः सद्यो नारदः स्वेच्छया ययौ ॥
देवी च कन्याकोव्य(टी)स्ताः संनह्यन्तामुवाच ह। ततः कन्या महाभागाः सर्वास्ता देविशासनात्
बभूवुर्घोररूपिण्यः खड्गचर्मधनुर्धराः । संग्रामहेतोः संतस्थुः सैन्यविध्वंसनाय वै ॥ १३२
तच्च देवबलं त्यक्त्वा सा वै दैत्यचमूर्द्रुतम् । आगता यत्र सा देवी संनद्धं स्त्रीबलं महत् ॥ १३३
ततस्ता युयुधुः कन्या दानवैः सह दर्पिताः । क्षणेन तद्बलं ताभिश्चतुरङ्गं निपातितम् ॥ १३४

---

* नुमभाव आर्ष एवमग्रेऽपि ।

शिरांसि तत्र केषांचिच्छिन्नानि पतितानि च । इतरेषां विदार्याऽऽशु क्रव्यादाः शोणितं पपुः॥
अन्ये कबन्धभूतास्तु ननृतुस्तत्र दानवाः । एवं क्षणेन ते सर्वे विध्वस्ताः पापचेतसः ॥ १३६
अपरे विद्रुताः सर्वे यत्रासौ महिषासुरः । ततो हाहाकृतं सर्वं तदा दैत्यबलं महत् ॥ १३७
एवं तदाकुलं दृष्ट्वा महिषो वाक्यमब्रवीत् । सेनापते किमेतद्धि बलं भग्नं ममाग्रतः ॥ १३८
ततो यज्ञहतो नाम दैत्यो हस्तिस्वरूपवान् । उवाच भग्नमेतद्धि कुमारीभिः समन्ततः ॥ १३९
भवानपूर्वकन्यार्थी कथितं नारदेन ते । तया हतमिदं सर्वं मन्ये त्वां तु हनिष्यति ॥ १४०
ततो दुद्राव महिषस्तां कन्यां शुभलोचनाम् । गदामुशलहस्तश्च कन्यां दुद्राव तां बलात् ॥ १४१
यत्र तिष्ठति सा देवी देवगन्धर्वपूजिता । तत्रैव सोऽसुरः प्राप यत्र देवी व्यवस्थिता ॥ १४२
सा तु दृष्ट्वा तमायान्तं विंशत्पाणिर्बभूव ह । धनुः खड्गं तथा शक्तिः शरः शूलं तथा गदा १४३
सहस्रारं तथा चक्रं मुशलं भिण्डिमा(न्दिपा)लकम् । परशुर्डमरुश्चैव तथा घण्टा विशालिनी १४४
शतघ्नी मुद्गरो घोरो भुशुण्डी कुन्तमेव च । दण्डपाशौ ध्वजश्चैव पद्मं चेतीह विंशतिः ॥ १४५
भूत्वा विंशभुजा देवी सिंहमास्थाय दंशिता । सस्मार रुद्रं देवेशं रौद्रं संहारकारिणम् ॥ १४६
ततो वृषध्वजः साक्षाद्रुद्रस्तत्रैव संययौ । तया प्रणम्य विज्ञप्तः सर्वान्दैत्याञ्जयाम्यहम् ॥ १४७
त्वयि संनिहिते देवे विष्णोश्चा(ष्णौ चा)पि परंतप । युष्मत्संनिधिमात्रे तु पश्य देव सनातन ॥
एवमुक्त्वाऽसुरान्सर्वाञ्जिघांसुः परमेश्वरी । मुक्त्वा तमेकं महिषं वधार्थं सा तमभ्यधा(गा)त् ॥
तथा देवीं ततः सोऽपि दृष्ट्वा दुद्राव चेश्वरीम् । क्वचिद्युध्यति दैत्येन्द्रः क्वचिच्चैव पलायते॥ १५०
क्वचित्पुनर्भृशं चक्रे क्वचित्पुनरुपागमत् । एवं वर्षसहस्राणि दश तस्य तया सह ॥ १५१
देव्या विनिर्गतानि स्युर्युध्यतस्तस्य शोभने(नम्) । बभ्राम सकलं त्वाजौ ब्रह्माण्डं भीतमानसम्
ततः कालेन महता शतशृङ्गे महागिरौ । दैत्येश्वरं च तं दृष्ट्वा देवी वचनमब्रवीत् ॥ १५३
रूपलोभात्त्वया नीच दूतो योऽसौ ममान्तिकम् । प्रेषितो यत्त्वया तस्य संदिष्टं तद्वदस्व मे १५४
न मया तच्छ्रुतं पूर्वमिदानीं ते मुखात्पुनः । श्रोतुमिच्छामि तद्वाक्यं भवाननुभविष्यति ॥ १५५
पद्भ्यामाक्रम्य शूलेन निहतो दैत्यसत्तमः । छिन्ने शिरसि खड्गेन तत्कण्ठादुत्थितः पुमान् ॥ १५६
रौद्रोऽपि स गतः स्वर्गं देव्या शस्त्रनिपातितः । ततो देवगणाः सर्वे महिषं वीक्ष्य निर्जितम् ॥
सेन्द्राद्यास्तु स्तुतिं चक्रुर्देव्यास्तुष्टेन चेतसा ॥ १५७

देवा ऊचुः—

नमो देवि महाभागे गम्भीरे भीमदर्शने । नयस्थे स्थितिसिद्धान्ते त्रिनेत्रे विश्वतोमुखि ॥ १५८
विद्याविद्ये जपे जाप्ये महिषासुरमर्दिनि । सर्वगे सर्वविघ्नेशि विश्वरूपिणि वैष्णवि ॥ १५९
वीतशोके ध्रुवे देवि पद्मपत्रायतेक्षणे । शुद्धसत्त्वव्रतस्थे च चँण्डरूपे विभावरि ॥ १६०
ऋद्धिसिद्धिप्रदे देवि सर्वसत्त्वमये ध्रुवे । विद्यापुराणशिल्पानां जननि भूतधारिणि ॥ १६१
सर्ववेदरहस्यानां सर्वसत्त्ववतां शुभे । नमोऽस्तु ते महादेवि नमोऽस्तु परमेश्वरि ॥ १६२
नमोऽस्तु सर्वभूतानां मातर्नित्येऽक्षयेऽव्यये । न तेषां(तस्य) जायते किंचिदशुभं रणसंकटे १६३
यस्तु व्याघ्रभये घोरे चौरराजभये तथा । *सर्वभूताभया देवी क्षेम्या क्षेमंकरीति च ॥ १६४

* इत आरभ्य शंकर इत्यन्तो ग्रन्थो नातितरां संगतः ।

१ ज. कन्यकाः । २ झ. यज्ञहनो । ३ झ. 'ह । दिव्यानि विगता' । ४ झ. 'क्यं तद्भवा' । ५ ज. 'सपुंगवः । छि' । ६ ज. भवे । ७ ज. बहुरूपे ।

विभावरी भावरी च सर्वस्थितिकरी तथा । सर्वासां भगवान्रुद्रः सर्वगत्वात्पतिः स्मृतः ॥१६५
यावत्यस्तु महाशक्त्यस्तावद्रूपस्तु शंकरः । निगडस्थोऽपि यो देवि त्वां स्मरिष्यति मानवः १६६
सोऽपि बन्धात्प्रमुच्येत स सुखं वसते सुखी ॥ १६७

पुलस्त्य उवाच—

एवं स्तुता सुरैर्देवी प्रणिपातपुरस्कृता । उवाच देवी सुश्रोणी वृणुध्वं वरमुत्तमम् ॥ १६८

देवा ऊचुः—

देवि पुष्करसंस्थां त्वां स्तुवन्त्यनेन भक्तितः । ते सर्वकामसंपन्ना भवन्तु वर एष वै ॥ १६९

पुलस्त्य उवाच—

एवमस्त्विति तान्देवानुक्त्वा देवी परावरान् । विसर्जयित्वा तान्देवी स्वयं तत्रैव संस्थिता१७०
एवं यः शृणुते जन्म देव्याः कुरुकुलोद्वह । सदा सेवेत विरज इदं गच्छत्यनामयम् ॥ १७१
यः क्षेमंकरीवृत्तान्तं ब्रह्मशक्तिसमुद्भवम् । स पुत्रपौत्रपशुमान्समृद्धिमुपगच्छति ॥ १७२
यश्चेदं शृणुयाद्भक्त्या देवीस्तोत्रमनुत्तमम् । सर्वबाधाविनिर्मुक्तं पदं निर्वाणमृच्छति ॥ १७३
य एतां वेद वै देव्या उत्पत्तिं त्रिविधा स्थितः । सर्वपापविनिर्मुक्तः पदं निर्वाणमृच्छति ॥१७४
भ्रष्टराज्यमदा राजा स(ज्योऽपि शृणुयात्स)प्तम्यां नियतः शुचिः । अष्टम्यां च नवम्यां च उपवासी नरोत्तम ॥ १७५
संवत्सरेण लभते राज्यं निष्कण्टकं नृपः । या सा त्रिवेद उत्तिष्ठा वेदशक्तिः परावरा ॥ १७६
एषा ज्ञानात्मिका सर्वा सात्त्विकी ब्रह्मसंज्ञिता । एषैव रक्ता राजसी वैष्णवी परिकीर्तिता१७७
एषैव कृष्णा तामसी रौद्री देवी प्रकीर्तिता । परमात्मा यथा देव एक एव त्रिधा स्थितः॥१७८
अपरा च परा चैव तथा चान्या परावरा । त्रिधा व्यवस्थिता शक्तिरेकैका त्रिविधा भवेत्१७९
य एवं शृणुयात्सर्वं क्षेम्यायाः परमं शिवम् । सर्वपापविनिर्मुक्तः पदं निर्वाणमाप्नुयात् ॥ १८०
यश्चैवं पठते भक्त्या नवम्यां नियतः शुचिः । स राज्यापत्यलाभेन भयेभ्यः परिमुच्यते॥ १८१
यत्रैवं लिखिता गेहे सदा तिष्ठति धारिता । न तत्राग्निभयं घोरं चौरसर्पादिकं नृप ॥ १८२
यश्चैतत्पूजयेद्भक्त्या पुस्तके लिखितं बुधः । तेन चेष्टं भवेत्सर्वं त्रैलोक्यं सचराचरम् ॥ १८३
जायन्ते पशवः पुत्रास्तथा धान्यं वरस्त्रियः । रत्नान्यश्वा गजा भृत्या ग्रामाश्चाऽऽशु भवन्त्युत ॥
यस्येदं तिष्ठते गेहे तस्याप्येतद्ध्रुवं भवेत् । एतदेव रहस्यं मे कीर्तितं नृपसत्तम ॥ १८५
क्षेमंकरीभवं ते तु सर्वं क्षेमकरं शुभम् । क्षेम्या क्षेमंकरी देवी सर्वेषां भयनाशिनी ॥ १८६
रुद्रस्य खलु माहात्म्यं देवीनां संभवस्तथा । नव कोट्यस्तु चामुण्डाभेदभिन्ना व्यवस्थिताः १८७
या रौद्री तामसी शक्तिः सा चामुण्डा प्रकीर्तिता । अष्टादश तथा कोट्यो वैष्णव्या भेद उच्यते
या सा तु राजसी शक्तिः पालने चैव वैष्णवी । या ब्राह्मी शक्तिः सत्त्वस्था सा चानन्ता प्रकीर्तिता
क्षेमंकर्या न संख्या तु ब्राह्मी शक्तिः परावरा । ब्रह्माणी सा भुवि ज्ञेया सृष्टिरूपा जगत्स्थिता
एतासां सर्वभेदेषु पृथगेकैकशोभनः (ऽनघ)। सर्वासां भगवान्रुद्रः सर्वगत्वात्पतिः स्मृतः॥१९१
यावत्यस्ता महाशक्त्यस्तावद्रूपाणि शंकरः । कृत्तिवासास्तु भजते पतिरूपेण सर्वदा ॥ १९२
यश्चाऽऽराधयते तास्तु तस्य रुद्रोऽपि तुष्यति । सिध्यन्ते तास्तदा देव्यो मन्त्रिणो नात्र संशयः॥

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे क्षेमंकर्युत्पत्तिर्नाम त्रिंशोऽध्यायः ॥ ३० ॥

आदितः श्लोकानां समष्ट्यङ्काः—२५८४४

---

१ झ. स्थिता । २ ज. पण्डिताः ।

अथैकत्रिंशोऽध्यायः ।

भीष्म उवाच—

या संभूता शरीरात्तु ब्रह्मणोऽव्यक्तजन्मनः । गायत्र्यष्टभुजा भूत्वा ख्याता विंशभुजा तथा ॥ १
सैव चान्याऽभवद्देवी देवकार्यचिकीर्षया । महिषाख्यासुरवधं कुर्वती ब्रह्मणो रता ॥ २
वैष्णव्या निहतो दैत्यः कतमो यो महाबलः । चामुण्डया रुद्रशक्त्या कतमो दानवो हतः ॥ ३

पुलस्त्य उवाच—

इदं जगत्स्थितं भीष्म गङ्गासिकतसंख्यया । यत्किंचिद्भवते वृत्तं तत्परं वेद सर्ववित् ॥ ४
स्वायंभुवे हतो दैत्यो वैष्णव्या मन्दरे गिरौ । महिषाख्योऽभिभाष्यश्च स च वैवस्वते पुनः ॥ ५
नन्दया निहतो विन्ध्ये महाबलपराक्रमः । अथवा ज्ञानशक्तिश्च महिषोऽज्ञानमूर्तिमान् ॥ ६
अज्ञानं ज्ञानसाध्यं तु भवतीह न संशयः । मूर्तिपक्षे चेतिहासो म(सस्त)न्मूर्त्तिः स्वेन बाध्यते ७
ख्याप्यते वेदवादैस्तु अहन्तै(हन्त तै)र्वेदवादिभिः । इदानीं शृणु मे राजन्पञ्चपातकनाशनम् ॥ ८
यजनं देवदेवस्य ब्रह्मपुत्रवसुप्रदम् । इह जन्मनि दारिद्र्यव्याधिकुष्ठादिपीडितः ॥ ९
अलक्ष्मीवानपुत्रस्तु यो भवेत्पुरुषो भुवि । तस्य सद्यो भवेल्लक्ष्मीरायुर्वर्चः सुताः सुखम् ॥ १०
दृष्ट्वा तु मण्डलगतं लोकपालसमन्वितम् । ब्रह्माणं तु परं देवं यः पश्यति विधानतः ॥ ११
पूजितं तेन सकलं जगत्स्थावरजङ्गमम् । आचार्य दर्शितं देवं मन्त्रमूर्तिमयोनिजम् ॥ १२
कार्तिके मासि शुक्लायां पौर्णमास्यां विशेषतः । सर्वासु वा यजेद्देवं पूर्णिमासु विधानतः ॥ १३
संक्रान्तौ च महाबाहो चन्द्रसूर्यग्रहेऽपि वा । यः पश्यति विभुं देवं पूजितं गुरुणा नृप ॥ १४
तस्य सद्यो भवेत्तुष्टिः पापध्वंसश्च जायते । स मान्यो [३]देवतानां च भवतीति नराधिप ॥ १५
ब्राह्मणक्षत्रियविशां भक्तानां तु परीक्षणम् । संवत्सरं गुरुः कुर्याज्जातिशौचक्रियादिभिः ॥ १६
उपपन्नमिति ज्ञात्वा हृदयेनावधारयेत् । तेऽपि भक्तमथो ज्ञात्वा आत्मानं परमेश्वरम् ॥ १७
संवत्सरं गुरोर्भक्तिं कुर्युर्विष्णुसमं तथा । संवत्सरे ततः पूर्णे गुरुमेवं प्रसादयेत् ॥ १८
भगवंस्त्वत्प्रसादेन संसारार्णवतारणम् । परब्रह्मोपदेशेन विरिञ्च्याराधने रतः ॥ १९
सहस्रशीर्षाजाप्येन मण्[४]डलब्राह्मणेन च । ध्यानेन धारणा वा(याऽ)पि उपदेशः प्रदीयताम् २०
इच्छामश्चैहिकां लक्ष्मीं विशेषेण निगद्यताम् । एवमभ्यर्च्य(र्थ्य) मेधावी ब्रह्मविष्णुशिवाग्रतः २१
अभ्यर्थितस्त्वसौ या तु कार्तिकस्य चतुर्दशी । क्षीरवृक्षसमुद्भूतं दापयेद्दन्तधावनम् ॥ २२
ते च तं भ(तद्भ)क्षयेयुर्हि नदीं गत्वा समुद्रगाम् । देवखातं तडागं वा गृहे वाऽपि विधानतः २३
[*ब्राह्मे मुहूर्ते चोत्थाय बद्धपद्मासनः कृती । ध्यात्वा गुरुं सहस्रारे श्वेतवस्त्रोपवीतकम् ॥ २४
श्वेतमाल्याम्बरधरं श्वेतगन्धानुलेपनम् । ततो गच्छेद्बहिर्नद्यां कृत्वा नित्यमतन्द्रितः ] ॥ २५
दन्तकाष्ठं तु मन्त्रेण मन्त्रितं परमेष्ठिनः । आपो हिष्ठेति मन्त्रेण सप्तकृत्वो[५]ऽभिमन्त्रितम् ॥ २६
देवस्य त्वेति वै जप्त्वा युञ्जानेति करे न्यसेत् । ईशावास्येति प्रक्षाल्य ब्रह्मोदनेति वै मुखे ॥ २७
भक्षयित्वा क्षिपेद्दूरं पतितं च[६] निरीक्षयेत् । संमुखं[७] वा पराङ्मुखं विदिशं वाऽपि चाऽऽगतम् २८

*धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

१ ज. °भिमायश्च । २ ज. यतेद्दे° । ३ ज. देवतायां । ४ झ. °ण्डलं व्रा° । ५ ग. °त्वो हि संस्कृत° । घ. ज. °त्वो हि संवृत° । ६ झ. न । ७ क. ख. ग. ङ. च. ज. °खं प्राङ्मुखं वाऽपि वि° ।

संमुखे देवतालब्धम(ब्धिर्म)न्त्रसिद्धिश्च जायते । पराङ्मुखे दन्तकाष्ठे सर्वे देवाः पराङ्मुखाः २९
उत्तरेण गते तस्मिन्सिद्धिर्भवति वा न वा । दक्षिणेन भवेन्मृत्युर्गुरोस्तस्य न संशयः ॥ ३०
प्रेक्षयित्वा स्वपेद्यो हि देवदेवस्य संनिधौ । स्वप्नान्दृष्ट्वा गुरोरग्रे श्रावयेत्सुविचक्षणः ॥ ३१
ततः शुभाशुभं तत्र लक्षयेत्परमो गुरुः । पौर्णमास्यामथ स्नात्वा ततो देवालयं व्रजेत् ॥ ३२
गुरुश्च मण्डलं भूमौ कल्पितायां तु वर्तयेत् । लक्षणैर्विविधैर्भूमिं लक्षयित्वा विधानतः ॥ ३३
षोडशारं लिखेत्पद्मं नवधारमथापि वा । अष्टपत्रमथो वाऽपि लिखित्वा दर्शयेद्बुधः ॥ ३४
नेत्रबन्धं तु कुर्वीत सितवस्त्रेण यत्नतः । *वर्णानुक्रमतः शिष्यान्पुष्पहस्तान्प्रवेशयेत् ॥ ३५
नवनाभं यदा कुर्यान्मण्डलं वर्णकैर्बुधैः । तदानीं पूर्वतो देवमिन्द्रमैन्द्र्यां तु पूजयेत् ॥ ३६
लोकपालैः समं तद्वदग्निं संपूजयेन्नृप । दिशि वह्नेर्यमं याम्यां नैर्ऋत्यां चैव निर्ऋतिम् ॥ ३७
वरुणं वारुणायां वा वायुं वायव्यगोचरे । धनदं चोत्तरे न्यस्य रुद्रमीशानगोचरे ॥ ३८
कमण्डलुं पूर्वतो हि स्रुवं वै दक्षिणे तथा । हंसं वै पश्चिमायां तु उत्तरायां स्रुवं तथा ॥ ३९
आग्नेय्यां च बृषीं दद्यान्नैर्ऋत्यां पादुके तथा । वायव्यां योगपट्टं च ईशान्यां च गलन्तिकाम् ॥
विष्णुस्तु पूर्वतः पूज्यो दक्षिणे चापि शंकरः । पश्चिमे च रविर्देव ऋषयश्चोत्तरे तथा ॥ ४१
सव्ये स्वयं पद्मजन्मा गायत्री दक्षिणे तथा । उत्तरे चैव सावित्री देवी पद्मदलेक्षणा ॥ ४२
ऋग्वेदं पूर्वतो न्यस्य यजुर्वेदं च दक्षिणे । पश्चिमे सामवेदं च अथर्वं चोत्तरे तथा ॥ ४३
इतिहासपुराणानि च्छन्दोज्योतिषमेव च । धर्मशास्त्राणि सर्वाणि इन्द्रादि दिक्षु विन्यसेत् ॥ ४४
पूर्वपत्रे बलं पूज्य प्रद्युम्नं दक्षिणे दले । पश्चिमे चानिरुद्धं च वासुदेवमथोत्तरे ॥ ४५
पूजयेद्वासुदेवं च सर्वपातकनाशनम् । ईशानं पूर्वतः स्थाप्य सद्योजातं तु दक्षिणे ॥ ४६
वामं पश्चिमतः स्थाप्य तत्पुरुषं चोत्तरे तथा । अघोरः सर्वतः पूज्य एषा पूजा तु मण्डले ॥ ४७
पूर्वतो भास्करं पूज्य दक्षिणेन दिवाकरम् । प्रभाकरं पश्चिमे तु ग्रहराजमथोत्तरे ॥ ४८
एवं पूज्य विधानेन ब्रह्माणं परमेष्ठिनम् । दिङ्मण्डलेषु विन्यस्य अष्टौ कुम्भान्विधानतः ॥ ४९
ब्राह्मं च कलशं मध्ये नवमं तत्र कल्पयेत् । स्नापयेन्मुक्तिकामं तु ब्रह्मणो वै घटेन ह ॥ ५०
श्रीकामं वैष्णवेनेह कलशेन तु पार्थिव । राज्यार्थिनं स्नापयेच्च ऐन्द्रेण कलशेन तु ॥ ५१
द्रव्यंप्रतापकामं तु आग्नेयघटवारिणा । मृत्युंजयविधानाय याम्येन स्नापयेन्नरम् ॥ ५२
दुष्टप्रध्वंसनायालं नैर्ऋतेन विधीयते । [*स्नापयेद्वारुणेनाऽऽशु पापनाशाय चैव हि ॥ ५३
शरीरारोग्यकामं तु वायव्येनाभिषेचयेत् । द्रव्यसंपत्तिकामस्य कौबेरेण विधीयते] ॥ ५४
रौद्रेण ज्ञानकामस्य लोकपालघटास्त्विमे । एकैकेन नरः स्नात्वा सर्वपापविवर्जितः ॥ ५५
जायते ब्रह्मसदृशो राजा सद्योऽथवा नरः । अथवा दिक्षु सर्वासु यथासंख्येन लोकपान् ॥ ५६
पूजयेत स्वनाम्ना तु कुम्भैरेव विधानतः । एवं संपूज्य देवांस्तु लोकपालान्प्रसन्नधीः ॥ ५७
पश्चात्परीक्षिताञ्शिष्यान्बद्धनेत्रान्प्रवेशयेत् । दग्ध्वाऽऽग्नेय्या धारणया वायुना विधुनेत्ततः ॥ ५८

* चतुरः क्रमत इति क्वचित्पाठः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. पुस्तकस्थः ।

१ ख. ग. घ. ङ. च. ज. °वमानर्द्धिर्मन्त्र° । २ ञ. प्रेक्ष्याशुभं क्षयेद्भूमौ दे° । ३ ञ. °वनाभम° । ४ ञ. °धः । इन्द्राणीपूर्वकं दे° । ५ ख. ग. घ. ङ. च. ज. स्रुचं । ६ ख. ग. घ. ङ. च. ज. स्रुवं । ७ झ. °षभश्चो° । ८ क. ख. ग. घ. ङ. च. ज. °था । मध्ये स्वयं जगन्माता गा° । ९ ञ. °रे । पूर्वतो वामदेवं च स° । १० ञ. °णे । ईशानं पश्चिमे स्था° । ११ झ. °शं चैकं न° । १२ ञ. °व्यकामं तु आग्नेय्यां स्नापयेद्द्° । १३ झ. तु षड्भिरेवं वि° ।

सोमेनाऽऽप्यायितान्कृत्वा श्रावयेत्समयांस्ततः । न निन्द्याद्ब्राह्मणान्देवान्विष्णुं ब्रह्माणमेव च ॥
इन्द्रमादित्यमग्निं च लोकपालान्ग्रहांस्तथा । गुरुं च ब्राह्मणं चापि मुनीन्द्रं पूर्वदीक्षितम् ॥ ६०
एवं तु समयाञ्श्राव्य पश्चाद्धोमं तु कारयेत् । ओं नमो ब्रह्मणे भगवते सर्वरूपिणे हुं फट्स्वाहा
षोडशाक्षरमन्त्रेण होमयेज्ज्वालितेऽनले । गर्भाधानादिकाः सर्वा आहुतीः संप्रदापयेत् ॥ ६२
ए(आ)भिस्त्रिस्त्रिभिराहुतिभिर्देवदेवस्य संनिधौ । होमान्ते दीक्षितः पश्चाद्दापयेद्गुरुदक्षिणाम् ६३
हस्त्यश्वयानशकटहेमग्रामादिकं नृप । दापयेद्गुरवे प्राज्ञो मध्यमे मध्यमं तथा ॥ ६४
दापयेदित(दप)रे युग्मं सहिरण्यं तु तद्गुरोः । एवं कृते तु यत्पुण्यं माहात्म्यं जायते तथा ॥ ६५
तन्न शक्यं हि गदितुमपि वर्षशतैरपि । दीक्षितात्मा पुरो भूत्वा पाद्मं वै शृणुयाद्यदि ॥ ६६
तेन वेदाः पुराणानि सर्वे मन्त्राः ससंग्रहाः । जप्ताः स्युः पुष्करे तीर्थे प्रयागे सिन्धुसागरे ॥ ६७
देवह्रदे कुरुक्षेत्रे वाराणस्यां विशेषतः । ग्रहणे विषुवे चैव यत्फलं जपतो लभेत् ॥ ६८
तत्फलं शतगुणं तस्य पुष्करस्थं पितामहम् । दृष्ट्वा प्राप्नोति विविधान्कामान्कामयते यदि ॥ ६९
पूजां वैधानिकीं कृत्वा दीक्षितो यः शृणोति च । देवा अपि तपः कृत्वा ध्यायन्ते च वदन्ति च
कदा नो भारते वर्षे जन्म स्यादिति पार्थिव । दीक्षिताश्च भविष्यामः पाद्मं श्रोष्यामहे कदा ७१
पाद्मं तु षोडशात्मानं न्यस्य देहे कदा वयम् । यास्यामः परमं स्थानं यद्गत्वा न पुनर्भवेत् ॥ ७२
एवं जल्पन्ति विबुधा मनसा चिन्तयन्ति च । ब्रह्मयज्ञं च कार्तिक्यां कदा द्रक्ष्यामहे नृप ॥ ७३
एवं ते विधिरुद्दिष्टो मयाऽयं कुरुनन्दन । देवगन्धर्वयक्षाणां सर्वदा दुर्लभो ह्यसौ ॥ ७४
एवं यो वेत्ति तत्त्वेन यश्च पश्यति मण्डलम् । यश्चेमं शृणुयाच्चैव स विमुक्त इति श्रुतिः ॥ ७५
अतः परं प्रवक्ष्यामि रहस्यमिदमुत्तमम् । येन लक्ष्मीर्धृतिस्तुष्टिः पुष्टिश्चापि भवेन्नृणाम् ॥ ७६
सर्वे ग्रहाः सदा सौम्या जायन्ते येन पार्थिव । आदित्यवारं हस्तेन पूर्वमादाय भक्तितः ॥ ७७
नक्तेन क्षपयेत्तावद्यावत्सप्त च संख्यया । ततस्तु सप्तमे पूर्णे कुर्याद्ब्राह्मणभोजनम् ॥ ७८
आदित्यं चैव सौवर्णं कृत्वा यत्नेन मानवः । रक्तवस्त्रयुगच्छन्नं छत्रिकां पादुके तथा ॥ ७९
उपानहौ च दातव्ये स्थापयेत्ताम्रभाजने । घृतेन स्नपनं कृत्वा संपूर्णाङ्गद्विजातये ॥ ८०
दापयेत्कृत्यविदुषे ब्राह्मणाय विशेषतः । एवं कृत्वा फलं तस्य भवेदारोग्यमुत्तमम् ॥ ८१
द्रव्यसंपत्सुतप्राप्तिरिति पौराणिकी क्रिया । अविसंवादिनी चेयं शान्तिपुष्टिप्रदा नृणाम् ॥ ८२
तद्वच्चित्रासु संगृह्य सोमवारं विचक्षणः । नक्तेन क्षपयेदष्टौ सोमवारान्प्रयत्नतः ॥ ८३
प्रत्येकं ब्राह्मणान्भोज्य यथाशक्ति विचक्षणः । नवमे तु ततः पूर्णे कुर्याद्ब्राह्मणभोजनम् ॥ ८४
वस्त्रयुग्मं च दातव्यं ततः सोमं प्रदापयेत् । कांस्यभाजनसंस्थं तु क्षीरं संपूरितं ततः ॥ ८५
तद्वच्छत्रं पादुके च तथोपानत्समन्वितम् । संपूर्णाङ्गाय दातव्यं ब्राह्मणाय विशेषतः ॥ ८६
स्वात्यामङ्गारकं गृह्य क्षपयेन्नक्तभोजनैः । अष्टावेवं च यावच्च ततो ब्राह्मणभोजनम् ॥ ८७
अङ्गारकं तु सौवर्णं स्थापयेत्ताम्रभाजने । दापयेद्ब्राह्मणार्याय संपूर्णाङ्गाय चैव हि ॥ ८८
नक्षत्रानुक्रमेणैवं गृह्य वारांस्तु सप्त वै । उपोष्य चोत्तरं पश्चात्सौवर्णान्दापयेत्सुधीः ॥ ८९
अग्निकार्यं तु कुर्वीत यथादृष्टं विधानतः । एवं कृते भवेद्यद्वै तन्निबोध नराधिप ॥ ९०

---

१ क. ख. ङ. च. °मधान्यादि° । २ झ. सागरे । ३ क. ख. ग. घ. ङ. च. ज. सर्वे मुक्ता इ° । ४ झ. °सतिसं° । ५ झ. °येत्कल्पवि° । ६ झ. °पूर्णपात्रं दा° । ७ क. ख. ग. घ. ङ. च. ज. पूज्य । ८ क. ख. ग. घ. ङ. च. ज. °व क्षिपेन्नक्तानि स° । ९ क. ख. ङ. च. वै । अष्टमे तु क्रमात्खेटान्सौव° । १० झ. °वर्णे दाप° ।

असौम्याश्च ग्रहाः सर्वे सौम्यरूपा भवन्ति च । सर्वे रोगा विनश्यन्ति तुष्टिमायान्ति देवताः ॥ ९१
न विरुध्यन्ति तं नागाः पितरस्तर्पितास्तथा । दुःस्वप्ननाशो भवति पठतां शृण्वतामथ ॥ ९२
यदि भौमो रविसुतो भास्करो राहुणा सह । केतुश्च मूर्तौ तिष्ठन्ति रौद्राः पीडाकरा ग्रहाः ॥ ९३
अनेन कृतमात्रेण सर्वे सौम्या भवन्ति हि । एवं यः कुरुते राजन्सदा भक्तिसमन्वितः ॥ ९४
[*तस्य सानुग्रहाः सर्वे यच्छन्ति विजयं मृधे । यश्चैनं शृणुयात्कल्पं ग्रहाणां पठतेऽथवा] ॥ ९५
तस्य सानुग्रहाः सर्वे शान्तिं यच्छन्ति नान्यथा । शनैश्चरं राहुकेतू लोहपात्रेषु विन्यसेत् ॥ ९६
लोहेन कारयेच्चैतान्ब्राह्मणेभ्यश्च दापयेत् । कृष्णं वस्त्रयुगं देयमेतेषां प्रीणनाय वै ॥ ९७
सौवर्णकाश्च दातव्याः शान्तिश्रीविजयेप्सुभिः । व्रतान्ते सर्व एते हि ग्रहाः सौवर्णका नृप ॥ ९८
दातव्याः शान्तिमिच्छद्भिर्व्रतान्ते द्विजभोजनम् । यथाशक्ति दक्षिणाश्च ग्रहाणां प्रीतये तथा ॥ ९९
अल्पायासेन राजेन्द्र सर्वान्कामानवाप्नुयात् । शंकराज्ज्ञानमन्विच्छेदारोग्यं भास्करात्तथा ॥ १००
हुताशनात्स्वर्गमिच्छेद्द्रतिमिच्छेज्जनार्दनात् । मोक्षं पितामहाच्चैव सर्वजन्तुप्रशान्तिदम् ॥ १०१

भीष्म उवाच—

यस्त्वया कथितो यज्ञो यज्विनां तु फलं महत् । +तथाऽऽयुषः खल्पतया अन्यैः प्राप्तुं न शक्यते
अल्पायासेन यत्पुण्यं संवत्सरमुपोषितम् । भवेत्तन्मे मुनिश्रेष्ठ कथयस्व महाफलम् ॥ १०३

पुलस्त्य उवाच—

इममर्थं महाराज श्वेतो राजा महायशाः । वसिष्ठं पृष्टवाँन्स्वर्गे क्षुधया पीडितो भृशम् ॥ १०४
आसीदिलावृते वर्षे श्वेतो राजा महाबलः । स महीं सकलां जिग्ये सप्तद्वीपां सपत्तनाम् ॥ १०५
ब्रह्मपुत्रो वसिष्ठश्च आसीत्तस्य पुरोहितः । स कदाचिन्नृपः पृथ्वीं जित्वा परमधार्मिकः ॥ १०६
पुरोहितमुवाचेदं वसिष्ठं जपतां वरम् ॥ १०७

श्वेत उवाच—

भगवन्नश्वमेधानां सहस्रं कर्तुमुत्सहे । सुवर्णरूप्यरत्नानां दानं कर्तुं द्विजातिषु ॥ १०८
पृथिव्यामन्नदानं तु दातुं नेच्छामि वै गुरो । न तेन किंचिदत्तेन दानेनेहास्ति मे प्रभो ॥ १०९

पुलस्त्य उवाच—

न किंचिदस्तीति ज्ञात्वा दत्तं नान्नं तदा किल । रत्नवस्त्रमलंकारं ग्रामांश्च नगराणि च ॥ ११०
दत्तवान्ब्राह्मणेभ्योऽसौ श्वेतो राजा महायशाः । नान्नं जलं वा दत्तं स्यात्तेन राज्ञा कदाचन ॥
ततोऽश्वमेधैर्बहुभिर्यज्वाऽसौ नृपसत्तम । स्वर्गं गतः पुण्यजितं तपस्तप्त्वाऽर्बुदत्रयम् ॥ ११२
ब्राह्मीं सलोकतां प्राप्तः सर्वालंकारभूषितः । नृत्यन्त्यप्सरसस्तत्र गायन्ति सिद्धयोषितः ॥ ११३
तुम्बरुर्नारदस्तत्र द्वावप्यनुगतौ सदा । अगायेतां महाप्राज्ञौ मुनयश्च यमान्विताः ॥ ११४
वेदोक्तमन्त्रैः स्तुवन्ति स्मानेकक्रतुयाजिनम् । एवं विभवयुक्तस्य तस्य राज्ञो महात्मनः ॥ ११५
क्षुधया पीडितो देहस्तृषया च विशेषतः । स तया पीड्यमानस्तु तृट्क्षुधा राजसत्तम ॥ ११६

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + इदमर्धं झ. पुस्तकस्थम् ।

१ क. ख. ग. घ. ङ. च. ज. मूर्ध्नि । २ क. ख. ग. घ. ङ. च. ज. ससौभाग्या भ° । ३ झ. °हेनाऽऽराधये° । ४ झ. °वर्णाङ्गाश्च । ५ झ. °नाद्धनमि° । ६ क. ख. ग. घ. ङ. च. ज. °त्तस्मिन्मुनि° । ७ क. ख. ङ. च. °वान्यज्ञं क्षु° । घ. ज. °वान्यज्ञे क्षु° । ८ ग. घ. ज. जगतां । ञ. जयतां । ९ ग. घ. ज. °रो । नान्येन । १० क. च. °न दत्ते ह्यत्र द्विजे प्र° । ११ झ. पुण्यां ।

मुनीनप्सरसो भोगांस्त्यक्त्वा च ऋक्षपर्वतम् । यत्राऽऽत्ममूर्तिस्तत्रागात्पुरा भग्ना महावने॥ ११७
तत्रास्थीनि स्वयं गृह्य लिहन्नास्ते स पार्थिवः । पुनर्विमानमारुह्य ययौ नाकं नराधिपः ॥ ११८
अथ कालेन महता स राजा संशितव्रतः । स्वान्यस्थीनि लिहन्दृष्टो वसिष्ठेन पुरोधसा ॥ ११९
उक्तः श्वेतः किं राजेन्द्र स्वास्थिभक्षो नराधिप । एवमुक्तस्तदा राजा वसिष्ठेन महर्षिणा॥ १२०
उवाच वचनं चेदं श्वेतो राजा ततो मुनिम् । भगवंस्तृट्क्षुधार्तोऽहमन्नदानं पुरा मया ॥ १२१
न दत्तं मुनिशार्दूल तेन मां क्षुत्प्रबाधते । एवमुक्तस्ततो राज्ञा वसिष्ठो मुनिपुंगवः ॥ १२२
उवाच तं नृपं भूयो वाक्यमेतन्महामुनिः । किं ते करोमि राजेन्द्र क्षुधितस्य विशेषतः ॥ १२३
वस्तु कस्यापि किंचिद्धि नादत्तमुपतिष्ठति । रत्नहेमप्रदानेन भोगवाञ्जायते नरः ॥ १२४
अन्नदानप्रदानेन सर्वकामैः प्रतर्पितः । तन्न दत्तं त्वया राजन्स्तोकं मत्वा नराधिप ॥ १२५

श्वेत उवाच—

अदत्तस्य च संभूतिर्यथा भवति मे गुरो । वसिष्ठ त्वत्प्रसादेन तन्ममाऽऽचक्ष्व पृच्छतः ॥ १२६

वसिष्ठ उवाच—

अस्त्येकं कारणं येन जायते नात्र संशयः । तच्छृणुष्व नरव्याघ्र कथ्यमानं मयाऽनघ ॥ १२७
आसीद्राजा पुराकल्पे विनीताश्वेति कीर्तितः । स चाश्वमेधमारेभे यष्टुं क्रतुवरं नृप ॥ १२८
यजनान्ते द्विजातिभ्यो दत्तं गोश्वादि याचितम् । नान्नं तेन क्वचिद्दत्तं स्वल्पं मत्वा यथा त्वया
ततः कालेन महता मृतोऽसौ जाह्नवीतटे । मायापुर्यां विनीताश्वः सार्वभौमो नृपोऽभवत्॥ १३०
स्वर्गं च गतवान्सोऽपि यथा राजन्भवान्प्रभो । असावपि क्षुधाविष्ट एवमेवाऽऽगतोऽभवत् १३१
मर्त्यलोके नदीतीरे गङ्गायां नीलपर्वते । विमानेनार्कवर्णेन भास्वता देववन्नृप ॥ १३२
ददर्श च स्वकं देहं तथा स्वं च पुरोहितम् । होतारं ब्राह्मणं नाम यजन्तं जाह्नवीतटे ॥ १३३
तं दृष्ट्वाऽसावपि पुनः पर्यपृच्छद्द्विजोत्तमम्+ । क्षुधापत्कारणं राजन्स होता तमुवाच ह ॥ १३४
तिलधेनुं च भगवन्घृतधेनुं च सत्तम । जलधेनुं पुनस्तद्वद्रसधेनुं च पार्थिव ॥ १३५
देहि शीघ्रं येन भवांस्तृट्क्षुधावर्जितो दिवि । रमस्व यावदादित्यस्तपते दिवि चन्द्रमाः ॥ १३६
एवमुक्तस्ततो राजा तं पुनः पृष्टवानिदम् । विधानं तिलधेनोस्तु तच्छृणुष्व नराधिप ॥ १३७
षोडशाढकमयी धेनुश्चतुर्भिर्वत्सको भवेत् । इक्षुदण्डमयाः पादा दन्ताः पुष्पमयाः शुभाः ॥ १३८
नासा गन्धमयी तस्या जिह्वा गुडमयी तथा । [*पुच्छे स्रक्कल्पनीया स्याद्घण्टाभरणभूषिता १३९
ईदृशीं कल्पयित्वा तु स्वर्णशृङ्गीं तु कल्पयेत् । रौप्यखुरां कांस्यदोहां पूर्वधेनुं विधानतः ॥ १४०
कृत्वा तां ब्राह्मणायाऽऽशु दापयेन्मन्त्रतो नृप ] । स्थितां कृष्णाजिने धेनुं वासोभिराद्वृतां शुभाम्
सूत्रेण सूत्रितां कृत्वा पञ्चरत्नसमन्विताम् । सर्वौषधिसमायुक्तां मन्त्रपूतां तु दापयेत् ॥ १४२
अन्नं मे जायतां सद्यः पानं सर्वरसास्तथा । कामान्संपादयास्माकं तिलधेनो द्विजेऽर्पिता ॥ १४३

---

+ एतदग्रे झ. पुस्तके "क्षुधा मां बाधते देव कारणं नैव वेद्म्यहम्" इत्यर्धमाधिकम् । * धनुश्चिह्नान्तर्गतः पाठो ग. घ. ज पुस्तकस्थः ।

---

१ क. ख. ङ. च. °म् ? प्राप्तो मृतस्य यत्राङ्गं पुरा दग्धं महात्मनः । त° । ग. घ. ज. °म् । प्राप्तो मृतस्य यत्राङ्गं पुरा दग्धो महामुनिः । त° । २ क. ख. ग. घ. ङ. च. ज. प्रदीपितः । ३ झ. गोश्वं द्विपो धनम् । ४ ग. °टे । महापुण्यो विनीताश्वः सा° । घ ज. °टे । महापुर्यां विनीताश्वः सा° । झ. °टे । स धैर्येण विनीतात्मा सा° । ५ झ. °नुं च धेनुं च रस° । ञ. °नुं धेनुशतं रस° । ६ ञ. °ढकधेनुर्या चतु° ।

गृह्णामि देवि त्वां भक्त्या कुटुम्बार्थे विशेषतः । भरस्व कामैर्मां सर्वैस्तिलधेनो नमोऽस्तु ते १४४
एवंविधानतो दत्ता तिलधेनुर्नृपोत्तम । सर्वकामसमावाप्तिं कुरुते नात्र संशयः ॥ १४५
जलधेनुस्तथैवेह कुम्भैरेव प्रकल्पिता । दत्ता तु विधिना कामान्सद्यः सर्वान्प्रयच्छति ॥ १४६
धेनुशतं तथा दत्तं पूर्णिमानियमेन हि । सावित्री इव वै स्वर्गे सर्वकामप्रदा(दं) भवेत् ॥ १४७
घृतधेनुस्तथा दत्ता विधानेन विचक्षणैः । सर्वकामसमावाप्तिं कुरुते कीर्तिदा भवेत् ॥ १४८
रसधेनुस्तथा दत्ता कार्तिके मासि पार्थिव । सर्वान्कामान्प्रयच्छेच्च नित्यं सा गतिदा भवेत् १४९
एवं ते सर्वमाख्यातं समासाद्बहुविस्तरम् । अपारं फलमुद्दिष्टं ब्रह्मणा सर्वकर्तृ(कारि)णा ॥१५०
तृष्णा यदि बुभुक्षा त्वां पीडयेद्राजसत्तम । तेदानं कार्तिके देयं सर्वं तेऽद्य नराधिप ॥ १५१
ब्रह्माण्डं सर्वसंपन्नं सैर्वरत्नौषधीयुतम् । देवदानवयक्षैश्च युक्तमेतत्सदा विभो ॥ १५२
एतद्धेममयं कृत्वा सर्वबीजैंसमन्वितम् । सरत्नं सर्वगन्धाढ्यं कार्तिके द्वादशीदिने ॥ १५३
अथवा पञ्चदश्यां तु कार्तिकस्यैव नान्यतः । पुरोहिताय गुरवे दापयेद्भक्तिमान्नरः ॥ १५४
ब्रह्माण्डोदरवर्तीनि यानि भूतानि पार्थिव । तानि दत्तानि वै तेन समासात्कथितं तव ॥ १५५
यो यज्ञैर्यजते राजन्समाप्तवरदक्षिणैः । सैकदेशं यजेत्तस्य ब्रह्माण्डस्य विशेषतः ॥ १५६
यः पुनः सकलं चेदं ब्रह्माण्डं ददते नरः । तेन जैप्तं हुतं दत्तं पठितं कीर्तितं भवेत् ॥ १५७

राजोवाच—

विधिं ब्रह्माण्डदानस्य कृत्वा यन्मोक्षभाग्भवेत् । कालं देशं विप्र तीर्थं सर्वमाचक्ष्व मेऽनघ १५८
कृतेन येन सर्वस्य फलभागी भवाम्यहम् । उत्थितस्यास्य भावस्य मोक्षः स्यादचिराच्च मे १५९

वसिष्ठ उवाच—

एवं पृष्टस्ततो राजन्पुरोधास्तस्य वै द्विजः । ब्रह्माण्डं कारयामास सौवर्णं सर्वधातुभिः ॥ १६०
युतं निष्कसहस्रेण पद्मं तत्र प्रकल्पयेत् । तत्र ब्रह्मा तस्य मध्ये पद्मरागैरलंकृतः ॥ १६१
सावित्र्या चैव गायत्र्या ऋषिभिर्मुनिभिः सह । नारदाद्याः सुताः सर्व इन्द्राद्याश्च दिवौकसः ॥
सौवर्णविग्रहाः सर्वे ब्रह्मणस्तु पुरःसराः । वराहरूपी भगवाँल्लक्ष्म्या सह सनातनः ॥ १६३
नीलं मरकतं चैव भूषणं तस्य कारयेत् । गोमेदैस्तस्य वै शोभां कारयेत्तस्य बुद्धिमान् ॥ १६४
मौक्तिकैश्चापि सोमस्य शोभां वज्रैर्दिवाकरे । ग्रहाणां चैव सर्वेषां सुवर्णानि च दापयेत् ॥ १६५
स्वर्णात्सप्तगुणं रौप्यं रौप्यात्ताम्रं तथाविधम् । सप्तगुणं च तत्कार्यं कांस्यं सप्तगुणं तथा ॥ १६६
कांस्यात्सप्तगुणं कार्यं त्रपु चैव नराधिप । त्रपुसप्तगुणं सीसं सीसाल्लोहं च कारयेत् ॥ १६७
सप्त द्वीपाः समुद्राश्च सप्त वै कुलपर्वताः । अनया संख्यया कार्या निपुणैः शिल्पिभिस्ततः १६८
पादपानि च भूतानि राजतानि च कारयेत् । [*आरण्यानि च सत्त्वानि सौवर्णानि च कारयेत्]॥
वृक्षान्वनस्पतीन्गुल्मतृणपर्णानि वीरुधः । सर्वं प्रकल्प्य विधिवत्तीर्थे देयं विचक्षणैः ॥ १७०
कुरुक्षेत्रे गयायां च प्रयागेऽमरकण्टके । द्वारवत्यां प्रभासे च गङ्गाद्वारे च पुष्करे ॥ १७१
तीर्थेष्वेतेषु वै देयं ग्रहणे शशिसूर्ययोः । दिनच्छिद्रेषु सर्वेषु अयने दक्षिणोत्तरे ॥ १७२

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ झ. °धेनुं तथैवेह कुम्भधेनुं प्रकल्पयेत् । द° । २ क. ख. ङ. ज. तदानीं कार्तिके चैनं पूर्वं देहि न° । घ. ज. तदानीं कार्तिके चैनं पर्वतेत्यन° । ३ क. ख. ग. घ. ङ. च. ज. भूतरत्नौषधीयुतम् । ४ ग. घ. °जरसान्वि° । ५ क. ख. ग. घ. ङ. च. ज. इष्टं । ६ क. ग. ङ. च. ज. °म । कुत्सितं° । घ. °म । कुत्थितं° । ७ झ. °ङ स सौवर्णस्य धा° । ८ झ. कृतं ।

व्यतीपाते बहुगुणं विषुवे च विशेषतः । दातव्यं चैव राजेन्द्र विचारं नैव कारयेत् ॥ १७३
बालाग्निहोत्रिणं विप्रं सुतरूपगुणान्वितम् । सपत्नीकं च संपूज्य भूषयित्वा च भूषणैः ॥ १७४
पुरोहितं मुख्यतमं कृत्वाऽन्ये च तथा द्विजाः । चतुर्विंशगुणोपेताः सपत्नीका निमन्त्रिताः॥१७५
अङ्गुलीयानि च तथा कर्णवेष्टांश्च दापयेत् । एवंविधांस्तु तान्पूज्य तेषामग्रे स्वयं स्थितः ॥ १७६
अष्टाङ्गप्रणिपातेन प्रणम्य च पुनः पुनः । पुरोहिताय पुरतः कृत्वा वै करसंपुटम् ॥ १७७
यूयं वै ब्राह्मणाः प्रीता मैत्रत्वेनानुगृह्णत । सौमुख्येन द्विजश्रेष्ठा भूयान्पूततरस्त्वहम् ॥ १७८
भवतां प्रीतियोगेन स्वयं प्रीणे पितामहम् । ब्रह्माण्डेन तु दत्तेन तोषयिष्ये जनार्दनम् ॥ १७९
पिनाकपाणिर्भगवाञ्शक्रश्च त्रिदशेश्वरः । एतौ वै तोषमायातामनुध्यानाद्विजोत्तमाः ॥ १८०
एवं स्तुत्वा ततो राजा ब्राह्मणान्वेदपारगान् । ब्रह्माण्डं तु गुरोः प्रादात्सविधानं पुनः क्षणात्॥
सर्वकामैस्ततस्तृप्तो ययौ स्वर्गं नराधिपः । तेनापि गुरुणा तच्च विभक्तं ब्राह्मणैः सह ॥ १८२
दत्तं तैरपि चान्येषु ब्रह्माण्डं च नराधिप । ब्रह्माण्डभूमिदानं च ग्राह्यं नैकेन तद्भवेत् ॥ १८३
गृह्णन्दोषमवाप्नोति ब्रह्महत्यां न संशयः । सर्वेषां चैव प्रत्यक्षं दातव्यं परिकीर्तयन् ॥ १८४
दीयमानं च पश्यन्ति तेऽपि पूज्या भवन्ति हि । दर्शनादेव ते मुक्ता भवन्त्येव न संशयः॥१८५
भीमद्वादशी या प्रोक्ता स्वर्णं तोयं मृगाजिनम् । एतानि गत्वा पश्यन्तु दृष्टैरेतैः क्रियाफलम् ॥
अयत्नादेव लभ्येत कर्तुश्चैव सलोकता । सदा गावः प्रणम्याश्च मन्त्रेणानेन पार्थिव ॥ १८७
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥
मन्त्रस्य चास्य स्मरणाद्गोदानफलमाप्नुयात् । तस्मात्त्वमपि राजेन्द्र पुष्करे तीर्थ उत्तमे ॥ १८९
कार्तिक्यां तु विशेषेण दानात्फलमवाप्स्यसि । यत्किंचित्कुरुते पापं योषिद्वा पुरुषोऽपि वा१९०
पुष्करे स्नानमात्रेण तदशेषं प्रणश्यति । पृथिव्यां यानि तीर्थानि आसमुद्रात्तु भारत ॥
पुष्करे तानि यास्यन्ति कार्तिक्यां तु विशेषतः ॥ १९१

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे ब्रह्माण्डदानं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६०३५

---

अथ द्वात्रिंशोऽध्यायः ।

---

भीष्म उवाच—

उक्तं भगवता सर्वं पुराणाश्रयसंयुतम् । तथा श्वेतेन ब्रह्माण्डं गुरवे प्रतिपादितम् ॥ १
श्रुत्वैतत्कौतुकं जातं यथा तेनास्थिलेहनम् । कृतं क्षुधापनोदार्थमन्नदानाद्विना द्विज ॥ २
तदहं श्रोतुमिच्छामि पृथिव्यां ये च पार्थिवाः । अन्नदानाद्दिवं प्राप्ताः क्रतवश्चान्नमूलकाः ॥ ३
कथं तस्य मतिर्नष्टा श्वेतस्य च महात्मनः । न दत्तं तेनान्नदानमृषिभिर्वा न दर्शितम् ॥ ४
अहो माहात्म्यमन्नस्य इह दत्तस्य यत्फलम् । परत्र भुज्यते पुंभिः स्वर्गश्चाक्षयतां व्रजेत् ॥ ५
अन्नदानं परं विप्राः कीर्तयन्ति सदोद्यताः । अन्नदानात्सुरेन्द्रेण त्रैलोक्यमिह भुज्यते ॥ ६

---

१ ख. ङ. विष्कम्भे । २ क. ख. ग. घ. ङ. ज. °त् । शालाग्निहोत्रिणं कृत्वा सुरूपं च गु° । ३ क. ख. ग. घ. ङ. च. ज. पूता । ४ क. ख. ग. घ. ङ. च. ज. स्वर्णलाभो मृ° । ५ क. ख. ग. ङ. च. ज. कृत्वा । ६ क. ख. ग. घ. ङ. च. ज. °ण गोदानफलमाप्स्य° ।

शतक्रतुरिति प्रोक्तः सर्वैरेव द्विजोत्तमैः । तेनावस्थां तादृशीं तु प्राप्तवांस्त्रिदशेश्वरः ॥ ७
दानादेव गतः स्वर्गं त्वत्तः सर्वं श्रुतं मया । अपरं चेतिहासं मे निवृत्तं यदि कर्हिचित् ॥
भूयोऽपि श्रोतुमिच्छामि तन्मे वद महामुने ॥ ८

पुलस्त्य उवाच—

एतदाख्यानकं पूर्वमगस्त्येन महर्षिणा । रामाय कथितं राजंस्तत्ते वक्ष्यामि सांप्रतम् ॥ ९

भीष्म उवाच—

कस्मिन्वंशे समुत्पन्नो राजाऽसौ नृपसत्तमः । यस्यागस्त्येन गदितश्चेतिहासः पुरातनः ॥ १०

पुलस्त्य उवाच—

रघुवंशे समुत्पन्नो रामो नाम महाबलः । देवकार्यं कृतं तेन लङ्कायां रावणो हतः ॥ ११
पृथिवीराज्यसंस्थस्य ऋषयोऽभ्यागता गृहे । प्राप्तास्ते तु महात्मानो राघवस्य निवेशनम् ॥ १२
प्रतीहारस्ततस्तूर्णमगस्त्यवचनाद्द्रुतम् । आवेदयामास राममृषीन्प्राप्तांस्त्वरान्वितान् ॥
दृष्ट्वा रामं द्वारपालः पूर्णचन्द्रमिवोदितम् ॥ १३

द्वारपाल उवाच—

कौसल्यामातर्भद्रं ते सुप्रभाताऽद्य शर्वरी[3] । द्रष्टुमभ्युदयं तेऽद्य संप्राप्तो रघुनन्दन ॥ १४
अगस्त्य ऋषिभिः सार्धं द्वारि तिष्ठति ते नृप ॥ १५

पुलस्त्य उवाच—

श्रुत्वा प्राप्तान्मुनीन्रामस्तान्भास्करसमद्युतीन् । प्राह वाक्यं तदा द्वास्थं प्रावेशय त्वरान्वितः १६
किमर्थं तु त्वया द्वारे निरुद्धा मुनिसत्तमाः । रामवाक्यान्मुनींस्तांस्तु प्रावेशयद्यथासुखम् ॥ १७
दृष्ट्वा च तान्मुनीन्प्राप्तान्प्रत्युत्थाय कृताञ्जलिः । रामोऽभिवाद्य प्रणत आसनेषु न्यवेशयत् ॥ १८
ते तु काञ्चनचित्रेषु स्वास्तीर्णेषु सुखेषु च । कुशोत्तरेषु चाऽऽसीना आसेनष्वृषिसत्तमाः ॥ १९
पाद्यमाचमनीयं च दत्त्वा चार्घ्यं पुरोहितः । रामेण कुशलं पृष्टा ऋषयः सर्व एव ते ॥ २०
[*महर्षयो वेदविद इदं वचनमब्रुवन् ॥ २१

ऋषय ऊचुः—

कुशलं ते महाबाहो सर्वत्र रघुनन्दन । त्वां तु दिष्ट्या कुशलिनं पश्यामो हतशात्रवम् ॥ २२
हृता कुलान्तपापेन रावणेन दुरात्मना । पत्नी ते रघुशार्दूल तस्या एवौजसा मृतः ॥ २३
असहायेन चैकेन त्वया राम रणे हतः । यादृशं ते कृतं कर्म तस्य कर्ता न विद्यते ] ॥ २४
इह संभाषितुं प्राप्ता दृष्ट्वा पूताश्च सांप्रतम् । दर्शनात्तव राजेन्द्र सर्वे जातास्तपस्विनः ॥ २५
रावणस्य वधाच्छत्रोः कृतमश्रुप्रमार्जनम् । दत्ता चेयं त्वया वीर सर्वस्याभयदक्षिणा ॥ २६
दिष्ट्या वर्धसि काकुत्स्थ जयेनामितविक्रम । दृष्टः संभाषितश्चासि यास्यामश्चाऽऽश्रमान्स्वकान् ॥
अरण्ये ते प्रविष्टस्य मया चेन्द्रशरासनम् । अर्पितं चाक्षयौ तूणौ कवचं च परंतप ॥
भूयोऽप्यागमनं कार्यमाश्रमे मे रघूद्वह ॥ २८

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ङ. च. ज. °वस्थानं सदृशं प्राप्तवान्नृपसत्तमः । दा° । २ क. ख. ग. घ. ङ. च. महामते । ३ क. ख. ग. घ. ङ. च. ज. °री । अलम° । ४ क. ख. ङ. च. ज. °सीनाः समन्तान्मुनिपुंगवाः । ५ क. ख. ग. घ. ङ. च. ज. दत्त्वा पुण्यामिमां वीर जगत्यभयदक्षिणाम् । दि° ।

पुलस्त्य उवाच—

एवमुक्त्वा तु ते सर्वे मुनयोऽन्तर्हितास्तदा । गतेषु मुनिमुख्येषु रामो धर्मभृतां वरः ॥ २
चिन्तयामास तत्कार्यं किं तु मे मुनिना स्तुतम् । भूयोऽप्यागमनं कार्यमाश्रमे रघुनन्दन ॥ ३
अवश्यमेव गन्तव्यं मयाऽगस्त्यस्य संनिधौ । श्रोतव्यं देवगुह्यं तु कार्यमन्यच्च यद्वदेत् ॥ ३
एवं चिन्तयतस्तस्य रामस्यामिततेजसः । करिष्ये नियमं धर्मं धर्मो हि परमा गतिः ॥ ३
स तु वर्षसहस्राणि दश राज्यमकारयत् । ददतो जुह्वतश्चैव जग्मुस्तान्येकवर्षवत् ॥ ३
प्रजाः पालयतस्तस्य राघवस्य महात्मनः । एकस्मिन्नेव दिवसे वृद्धो जानपदो द्विजः ॥ ३४
मृतं पुत्रमुपादाय राजद्वारमुपागतः । उवाच विविधा वाचः स्नेहाक्षरसमन्विताः ॥ ३५

ब्राह्मण उवाच—

दुष्कृतं किं तु मे पुत्र पूर्वदेहान्तरे कृतम् । त्वामेकपुत्रं यदहं पश्यामि निधनं गतम् ॥ ३६
अप्राप्तयौवनं बालं पञ्चवर्षं गतायुषम् । अकाले कालमापन्नं दुःखाय मम पुत्रक ॥ ३७
अकृत्वा पितृकार्याणि गतो वैवस्वतक्षयम् । रामस्य दुष्कृतं व्यक्तं येन ते मृत्युरागतः ॥ ३८
बालवध्या ब्रह्मवध्या स्त्रीवध्या चैव राघव* । प्रवेक्ष्यति न संदेहः सभार्ये तु मृते मयि ॥ ३९

पुलस्त्य उवाच—

शुश्राव राघवः सर्वं दुःखशोकसमन्वितम् । निवार्य तं द्विजं रामो वसिष्ठं वाक्यमब्रवीत् ॥ ४०

श्रीराम उवाच—

किं मयाऽद्य च कर्तव्यं कार्यमेवंविधे स्थिते । किं प्राणान्वा जुहोम्यग्नौ पर्वताद्वा पते महीम् ॥
कथं शुद्धिमहं यामि श्रुत्वा ब्राह्मणभाषितम् ॥ ४१

पुलस्त्य उवाच—

वसिष्ठस्याग्रतः स्थित्वा राज्ञो दीनस्य नारदः । प्रत्युवाच[३] मुनिर्वाक्यमृषीणां संनिधौ तदा॥४२

नारद उवाच—

शृणु राम यथाऽकालं प्राप्तं वै कालसंक्षयम् । पुरा कृतयुगे राम सर्वतो ब्राह्मणोत्तरम् ॥ ४३
अब्राह्मणो न वै कश्चित्तपस्वी चैव राघव। अमृत्यवस्तदा सर्वे जायन्ते चिरजीविनः ॥ ४४
त्रेतायुगे पुनः प्राप्ते ब्रह्मक्षत्रमनुत्तमम् । अधर्मो द्वापरे तेषां वैश्याञ्शूद्रांस्तथाऽविशत् ॥ ४५
एवं निरन्तरं जुष्टमुद्भूतमनृतं पुनः । अधर्मस्य त्रयः पादा एको धर्मस्य चाऽऽगतः ॥ ४६
ततः सर्वे भृशं त्रस्ता वर्णा ब्राह्मणपूर्वकाः । भूयः पादस्त्वधर्मस्य द्वितीयः समपद्यत(?) ॥ ४७
[+तस्मिन्द्वापरसंज्ञे तु वर्तमाने युगक्षये । अधर्मश्चानृतं चैव ववृधाते नरर्षभ] ॥ ४८
तस्मिन्द्वापरसंज्ञे तु तपो वैश्यं समाविशत् । युगत्रयस्य वैधर्म्यं धर्मस्य प्रतितिष्ठति ॥ ४९
न शूद्रो लभते कर्तुं तप उग्रं नरर्षभ । भविता शूद्रयोन्यां तु तपश्चर्या कलौ युगे ॥ ५०
स ते विषयपर्यन्ते राजन्नुग्रतरं तपः । शूद्रस्तपति दुर्बुद्धिस्तेन बालवधः कृतः ॥ ५१
यो ह्यधर्ममकार्यं वा विषये पार्थिवस्य हि । कुरुते राजशार्दूल पुरे वा दुर्मतिर्नरः ॥ ५२

* इत उत्तरं क. ख. ग. ङ. च. ज. पुस्तकेषु "त्वामेकं पुत्र यदहं न पश्यामि पुनर्मृतम्" इत्यर्धमधिकम् ।
\+ धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

१ अ. श्रुतम् । २ झ. °त्वा पुत्रका° । ३ क. ख. ग. घ. ङ. च. ज. °च शुभं वाक्य° । ४ झ. °धर्ममपरे ते° ।

क्षेप्तं स नरकं याति यावदाभूतसंप्लवम्। चतुर्थं तस्य पापस्य भागमश्नाति पार्थिवः॥ ५३
स त्वं पुरुषशार्दूल गच्छस्व विषयं स्वकम्। दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर॥ ५४
एवं ते धर्मवृद्धिश्च बलायुर्वर्धनं तथा। भविष्यति नरश्रेष्ठ बालस्यास्य च जीवनम्॥ ५५

पुलस्त्य उवाच—

[*नारदेनैव मुक्ते तु साश्चर्यो रघुनन्दनः]। प्रहर्षमतुलं लेभे लक्ष्मणं चेदमब्रवीत्॥ ५६

श्रीराम उवाच—

गच्छ सौम्य द्विजश्रेष्ठं समाश्वासय लक्ष्मण। बालस्य च शरीरं त्वं तैलद्रोण्यां निधापय॥ ५७
गन्धैश्च परमोदारैस्तैलैश्च सुसुगन्धिभिः। यथा न शीर्यते बालस्तथा सौम्य विधीयताम्॥ ५८
यथा शरीरं गुप्तं स्याद्बालस्याक्लिष्टकर्मणः। विपत्तिः परिभेदो वा न भवेत्तत्तथा कुरु॥ ५९

पुलस्त्य उवाच—

तथा संदिश्य सौमित्रिं लक्ष्मणं शुभलक्षणम्। मनसा पुष्पकं दध्यौ त्वमागच्छेर्महायशः॥ ६०
इङ्गितं तत्तु विज्ञाय कामगं हेमभूषितम्। आजगाम मुहूर्तेन समीपं राघवस्य तु॥ ६१
सोऽब्रवीत्प्राञ्जलिर्वाक्यमयमस्मि नराधिप। वशे तव महाबाहो किंकरः समुपस्थितः॥ ६२
भाषितं सुचिरं श्रुत्वा पुष्पकस्य नराधिपः। अभिवाद्य महर्षिं तं विमानं सोऽध्यरोहत॥ ६३
धनुर्गृहीत्वा तूणौ च खड्गं चापि महाप्रभम्। निक्षिप्य नगरे वीरौ सौमित्रिभरतावुभौ॥ ६४
ययौ प्रतीचीं त्वरितो विचिन्वन्सुसमाहितः। उत्तरामगमच्चापि दिशं हिमवदाश्रिताम्॥ ६५
पूर्वामपि दिशं गत्वा अथापश्यन्नराधिप। सर्वाञ्शुद्धसमाचारानादर्शमिव निर्मलान्॥ ६६
ततो दिशं समाक्रामद्दक्षिणां रघुनन्दनः। शैलस्य दक्षिणे पार्श्वे ददर्श सुमहत्सरः॥ ६७
तस्मिन्सरसि तप्यन्तं तापसं सुमहत्तपः। ददर्श राघवो भीमं लम्बमानमधोमुखम्॥ ६८
तमुपागम्य काकुत्स्थस्तप्यमानं तु तापसम्। उवाच राघवो वाक्यं धन्यस्त्वममरप्रभ॥ ६९
कस्यां योनौ तपोवृद्धिर्वर्तते दृढनिश्चय। अहं दाशरथी रामः पृच्छामि त्वां कुतूहलात्॥ ७०
कोऽर्थो व्यवसितस्तुभ्यं स्वर्गलोकपरिग्रहे। किमर्थं तप्यसे वा त्वं श्रोतुमिच्छामि तापस॥ ७१
ब्राह्मणो वाऽसि भद्रं ते क्षत्रियो वाऽथ दुर्जयः। वैश्यस्तृतीयवर्णो वा शूद्रो वा सत्यमुच्यताम्॥
तपः सत्यात्मकं नित्यं स्वर्गलोकपरिग्रहे। सात्त्विकं राजसं चैव तच्च शक्त्यात्मकं तपः॥ ७३
जगदुपकारहेतोः सृष्टं चैव विरिञ्चिना। रौद्रं क्षत्रियतेजस्तु तत्तु राजसमुच्यते॥ ७४
परस्योत्सादनार्थाय तच्चाऽऽसुरमुदाहृतम्। अङ्गानि निहृनुते यो वा असृग्दिग्धानि भागशः ७५
यश्चाग्निं साधयेद्वाऽपि सिद्धिं वा मृत्युमेव वा। आसुरो ह्येष ते भावो न च मे त्वं द्विजो मतः॥
सत्यं ते वदतः सिद्धिरनृते नास्ति जीवितम्। तस्य तद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मणः॥
अवाक्शिरास्तथाभूतो वाक्यमेतदुवाच ह॥ ७७

शूद्रतापस उवाच—

स्वागतं ते नृपश्रेष्ठ चिराद्दृष्टोऽसि राघव। पुत्रभूतोऽस्मि ते चाहं पितृभूतोऽसि मेऽनघ॥ ७८

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. ज. पुस्तकस्थः।

---

१ झ. °ति स च राजा न संशयः। च°। २ क. ख. ग. घ. ङ. च. ज. °स्याक्लिष्ट°। ३ क. ख. ङ. च. ज. अग्रे ग. घ. रणे। ४ क. ख. घ. ङ. च. ज. °मत्पश्चाद्दिशां। ५ क. ख. ग. घ. ङ. च. ज. उत्तरे। ६ क. ख. ग. घ. ङ. च. ज. °कमपि ग्रहे। ७ अ. °तेजोर्थं त°। ८ झ. °त्वं नाधर्मतः।

अथवा नैतदेवं हि सर्वेषां नृपतिः पिता । स त्वमर्चार्होऽसि राजन्वयं ते विषये तपः ॥ ७९
चरामस्तत्र भागोऽस्ति पूर्वं सृष्टः स्वयंभुवा । न धन्याः स्म वयं राम धन्यस्त्वमसि पार्थिव ८०
यस्य ते विषये ह्येवं सिद्धिमिच्छन्ति तापसाः । तपसा त्वं मदीयेन सिद्धिमाप्नुहि राघव ॥ ८१
यदेतद्भवता प्रोक्तं योनौ कस्यां तु ते तपः । शूद्रयोन्यां प्रसूतोऽहं तप उग्रं समास्थितः ॥ ८२
देव त्वां प्रार्थये राम स्वशरीरेण राघव । न मिथ्याऽहं वदे भूप देवलोकचिकीर्षया ॥
शूद्रं मां विद्धि काकुत्स्थ शंबूकं नाम नामतः ॥ ८३

पुलस्त्य उवाच—

भाषतस्तस्य काकुत्स्थः खड्गं च रुचिरप्रभम् । निष्कृष्य कोशाद्विमलं शिरश्चिच्छेद राघवः ८४
तस्मिञ्शूद्रे हते देवाः सेन्द्राश्चाग्निपुरोगमाः । साधु साध्विति काकुत्स्थं प्रशशंसुर्मुहुर्मुहुः ॥ ८५
पुष्पवृष्टिश्च महती दिव्यानां सुसुगन्धिनी । आकाशाद्वायुमुक्तानां राघवं सर्वतोऽकिरत् ॥
सुप्रीताश्चाब्रुवन्देवा रामं वाक्यविदां वरम् ॥ ८६

देवा ऊचुः—

सुरकार्यमिदं सौम्य कृतं ते रघुनन्दन । गृहाण च वरं राम यदीच्छसि महाव्रत ॥ ८७

पुलस्त्य उवाच—

उवाच प्राञ्जलिर्वाक्यं सहस्राक्षं पुरंदरम् ॥ ८८

श्रीराम उवाच—

यदि देवाः प्रसन्ना मे वरार्हो यदि वाऽप्यहम् । कर्मणा मे यदि प्रीता द्विजपुत्रः स जीवतु॥८९
वरमेतद्धि भवतां काङ्क्षितं परमं हि मे । ममापराधाद्बालोऽसौ ब्राह्मणस्यैकपुत्रकः ॥ ९०
अप्राप्तकालः कालेन नीतो वैवस्वतक्षयम् । स संजीवतु भद्रं वो नानृती स्यामहं सुराः ॥ ९१
द्विजस्य संश्रुतो ह्यर्थो जीवयिष्यामि ते सुतम् । मदीयेनाऽऽयुषा बालं पादेनार्धेन वा सुराः ९२
जीवेदयं वरो मह्यं वरकोऽभ्यधिको वरः ॥ ९३

पुलस्त्य उवाच—

राघवस्य वचः श्रुत्वा सर्वे ते विबुधोत्तमाः । प्रत्यूचुस्ते महात्मानं प्रीताः प्रीतिसमन्विताः ॥९४

देवा ऊचुः—

निवृत्तो भव काकुत्स्थ ब्राह्मणस्यैकपुत्रकः । जीवितं प्राप्तवान्भूयः समेतश्चाऽऽप्तबन्धुभिः ॥ ९५
यस्मिन्मुहूर्ते काकुत्स्थ शूद्रोऽयं विनिपातितः । तस्मिन्मुहूर्ते काकुत्स्थ स बालो जीवनं गतः ९६
[*स्वस्ति प्राप्नुहि भद्रं ते साधयामः परंतप । अगस्त्यस्याऽऽश्रमपदे द्रष्टारः स्म महामुनिम् ९७

पुलस्त्य उवाच—

स तथेति प्रतिज्ञाय देवानां रघुनन्दनः] । आरुरोह विमानं तं पुष्पकं हेममूषितम् ॥ ९८

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे शूद्रवधो नाम द्वात्रिंशोऽध्यायः ॥३२॥

आदितः श्लोकानां समष्ट्यङ्काः—२६१३३

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. ज. सुव्रत । २ क. ख. घ. ङ. च. ज. यमिच्छ° ।

अथ त्रयस्त्रिंशोऽध्यायः ।

---

पुलस्त्य उवाच—

ततो देवाः प्रयातास्ते विमानैर्बहुभिस्तदा । रामोऽप्यनुजगाऽऽशु कुम्भयोनेस्तपोवनम्[1] ॥ १
[*अहं भगवता तेन भूयोऽप्यागमनं कृथाः[3] । एवमुक्तो यदा मां स सभां द्रष्टुं समागतः ॥ २
तदहं देवतादेशात्स्वकार्यार्थे महामुनिम् । पश्यामि तं मुनिं गत्वा देवदानवपूजितम् ॥ ३
उपदेशं तु मे तुष्टः स्वयं दास्यति सत्तमः । दुःखी येन पुनर्मर्त्ये न भवामि कदाचन ॥ ४
पिता दशरथो मह्यं कौसल्या जननी तथा । सूर्यवंशसमुत्पन्नस्तथाऽप्येवं सुदुःखितः ॥ ५
राज्यकाले वने वासो भार्यया चानुजेन च । हरणं चापि भार्याया रावणेन कृतं मम ॥ ६
असहायेन तु मया तीर्त्वा सागरमुत्तमम् । रुद्ध्वा तु तां पुरीं सर्वां कृत्वा तस्य कुलक्षयम् ॥ ७
दृष्ट्वा सीतां मया त्यक्तां तत्राऽऽगत्य सुरास्तथा । शुद्धां तां मां तथोचुस्ते यथा सीता मया गृहम्
आनीता वै प्रीतिमता लोकवाक्याद्विसर्जिता । वने वसति सा देवी पुरे चाहं वसामि वै ॥ ९
जातोऽहमुत्तमे वंशे उत्तमोऽहं धनुष्मताम्[5] । स हि संदुःखमापन्नो[6] यस्यान्तो नैव विद्यते ॥ १०
वज्रसारस्य सारेण धात्राऽहं निर्मितो ध्रुवम् । इदानीं ब्राह्मणादेशाद्भ्रममाणो धरातले ॥ ११
तपःस्थितस्तु[7] शूद्रो वै मया पापो निपातितः । देववाक्याच्च मे भूयः प्राणो मे हृदि संस्थितः ॥ १२
पश्यामि तं[8] मुनिं वन्द्यं जगतोऽस्य हिते स्थितम् । दृष्टेन मे यथा[9] दुःखं नाशमेष्यति सत्वरम् ॥ १३
उदयेन सहस्रांशोर्हिमं यद्वद्विलीयते । तद्वन्मे दुःखसंघातः सर्वथा नाशमेष्यति ॥ १४
दृष्ट्वा च देवान्संप्राप्तानगस्त्यो[10] भगवानृषिः । अर्घमादाय सुप्रीतान्सर्वांस्तान्[11] अभ्यपूजयत् ॥ १५
तेऽपि गृह्य ततः पूजां संभाष्य च महामुनिम् । जग्मुस्ते त्रिदशा हृष्टा[12] नाकपृष्ठं सहानुगाः ॥ १६
गतेषु तेषु काकुत्स्थः पुष्पकादवरुह्य च । अभिवादयितुं प्राप्तः सोऽगस्त्यमृषिसत्तमम् ॥ १७

श्रीराम उवाच—

सुतो दशरथस्याहं भवन्तमभिवादितुम् । आगतो वै मुनिश्रेष्ठ सौम्येनेक्षस्व चक्षुषा ॥
निर्धूतपापस्त्वां दृष्ट्वा भवामीह न संशयः ॥ १८

पुलस्त्य उवाच—

एतावदुक्त्वा स मुनिमभिवाद्य पुनः पुनः । कुशलं[13] शिष्यवर्गस्य मृगाणां[14] च वनस्य च ॥ १९
भगवन्दर्शनाकाङ्क्षी हत्वा शूद्रमिहाऽऽगतः ॥ २०

अगस्त्य उवाच—

स्वागतं ते रघुश्रेष्ठ[15] जगद्वन्द्य सनातन । दर्शनात्तव काकुत्स्थ पूतोऽहं मुनिभिः सह ॥ २१
त्वत्कृते राजशार्दूल गृहाणार्घं महाद्युते । स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि शत्रुहन् ॥ २२

---

१ झ. °योनिं तपोनिधिम् । २ क. ख. ङ. ज. उक्तं । ३ क. ख. ङ. च. °थाः । पूर्वमेव सभायां च सभां । ४ क. ख. ङ. च. ज. °शात्तत्कार्यार्थे म° । ५ क. ख. ग. घ. ङ. च. ज. °म् । उत्तमं दुः° । ६ क. ख. ङ. च. °न्नो हृदयं नैव भिद्यते । ७ क. ख. ग. घ. ङ. च. ज. उपस्थितस्तु । ८ क. ख. ग. घ. ङ. च. ज. रतम् । ९ क. ख. ग. घ. ङ. च. ज. तथा । १० क. ख. ग. घ. ङ. च. ज. °संप्राप्तिः स° । ११ क. ख. ग. घ. ङ. च. ज. सुप्रीतः सर्वा° । १२ क. ख. घ. ङ. च. ज. °स्तेन तदा हृ° । १३ क. ख. ङ. च. ज. °लं भृत्यव° । १४ क. ख. ग. घ. ङ. च. ज. °णां तनयस्य । १५ क. ख. ङ. च. ज. °ते रघुशा° ।



पुण्यामिमां वीर जगत्यभयदक्षिणाम् । द

त्वं हि नित्यं बहुमतो गुणैर्बहुभिरुत्तमैः । [1]अतस्त्वं पूजनीयश्च मम नित्यं हृदि स्थितः ॥ २३
सुरा हि कथयन्ति त्वां शूद्रघातिनमागतम् । ब्राह्मणस्य च धर्मेण त्वया वै जीवितः सुतः ॥२४
उष्यतां चेह भगवन्सकाशे मम राघव । [*प्रभाते पुष्पकेनासि गन्ताऽयोध्यां महामते ॥ २५
इदं चाऽऽभरणं सौम्य सुकृतं विश्वकर्मणा । दिव्यं दिव्येन वपुषा दीप्यमानं स्वतेजसा ॥ २६
प्रतिगृह्णीष्व राजेन्द्र मत्प्रियं कुरु राघव] । लब्धस्य हि पुनर्दाने सुमहत्फलमुच्यते ॥ २७
त्वं हि शक्तः परित्रातुं सेन्द्रानपि सुरोत्तमान् । तस्मात्प्रदास्ये विधिवत्प्रतीच्छस्व नरर्षभ ॥२८

पुलस्त्य उवाच—

अथोवाच महाबाहुरिक्ष्वाकूणां महारथः । कृताञ्जलिर्मुनिश्रेष्ठं †स्वं च धर्ममनुस्मरन् ॥ २९

श्रीराम उवाच—

प्रतिग्रहो वै भगवंस्तव ब्रह्मन्विगर्हितः । क्षत्रियेण कथं विप्र प्रतिग्राह्यं विजानता ॥ ३०
ब्राह्मणेन यथा दत्तं तन्मे त्वं वक्तुमर्हसि । न गृही पुत्रवानस्मि समर्थोऽस्मि महामुने ॥ ३१
आपदा न च कष्टं मे कथं गृह्णे प्रतिग्रहम् । भार्या मे सुचिरं नष्टा न चान्या मम विद्यते ॥ ३२
केवलं दोषभागी च भवामीह न संशयः । कष्टां चैव दशां प्राप्य क्षत्रियोऽपि प्रतिग्रहम् ॥ ३३
कुर्वन्न दोषमाप्नोति मनुरेवात्र कारणम् । वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतः ॥ ३४
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् । नाहं [2]ग्रहीष्ये ब्रह्मर्षे त्वया दत्तं प्रतिग्रहम् ॥
न च मे भवता कोपः कार्यो वै सुरपूजित ॥ ३५

अगस्त्य उवाच—

न च प्रतिग्रहे दोषो गृह्यते पार्थिवैर्नृप । भवान्वै तारणे शक्तस्त्रैलोक्यस्यापि राघव ॥ ३६
तारय ब्राह्मणं राम विशेषेण तपस्विनम् । तस्मात्प्रदास्ये विधिवत्प्रतीच्छस्व नराधिप ॥ ३७

राम उवाच—

क्षत्रियेण कथं विप्र प्रतिग्राह्यं विजानता । ब्राह्मणेन यथा दत्तं तन्मे त्वं वक्तुमर्हसि ॥ ३८

अगस्त्य उवाच—

आसन्कृतयुगे राम ब्रह्मभूते पुरातने । अपार्थिवाः प्रजाः सर्वाः *पुराणं तु शतक्रतुम्(तोः) ३९
ताः प्रजा देवदेवेशं राजार्थं समुपागमन् । सुराणां स्थीयते राजा देवदेवः शतक्रतुः ॥ ४०
श्रेयसेऽस्मासु लोकेश पार्थिवं कुरु सांप्रतम् । यस्मिन्पूजां प्रयुञ्जानाः पुरुषा भुञ्जते महीम् ॥४१
ततो ब्रह्मा सुरश्रेष्ठो लोकपालान्सवासवान् । समाहूयाब्रवीत्सर्वांस्तेजोभागोऽत्र युज्यताम्॥ ४२
ततो ददुर्लोकपालाश्चतुर्भागं स्वतेजसाम् । अक्षयश्च ततो ब्रह्मा यतो जातोऽक्षयो नृपः ॥ ४३
तं ब्रह्मा लोकपालानामंशं पुंसामयोजयत् । ततो नृपस्तदा तासां प्रजानां क्षेमपण्डितः ॥ ४४
तत्रैन्द्रेण तु भागेन सर्वानाज्ञापयन्नृप । वारुणेन च भागेन सर्वान्पुष्णाति देहिनः ॥ ४५
कौबेरेण तथांऽशेन अर्थं ददाति याचते । यस्तु याम्यो नृपे भागस्तेन शास्ति च वै प्रजाः ॥४६
तत्रैवैन्द्रेण भागेन नरेन्द्रोऽसि रघूत्तम । प्रतिगृह्णीष्वाऽऽभरणं तारणार्थं मम प्रभो ॥ ४७

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । † सर्वधर्ममिति क्वचित्पाठः । * पुरा याता इति क्वचित्पाठः ।

---

१ क. ख. घ. घ. ङ. च. ज. अतिथिः पूजनीयो वै मं । २ क. "म राघवसत्तम । ३ क. ख. ङ. च. ज. प्रतीच्छे । ग. घ. प्रतीक्ष्ये । ४ ग. भजस्व । ५ ग. श्रेष्ठमस्मा" ।

पुलस्त्य उवाच—

ततो रामः प्रजग्राह मुनिहस्तान्महात्मनः । दिव्यमाभरणं चित्रं प्रदीप्तमिव भास्करम् ॥ ४८
प्रतिगृह्य ततोऽगस्त्याद्राघवः परवीरहा । निरीक्ष्य सुचिरं कालं विचार्य च पुनः पुनः ॥ ४९
मौक्तिकानि विचित्राणि धात्रीफलसमानि च । जाम्बूनदनिबद्धानि वज्रविद्रुमनीलकैः ॥ ५०
पद्मरागैः सगोमेदैर्वैडूर्यपुष्परागकैः । सुनिबद्धं सुविभक्तं सुकृतं विश्वकर्मणा ॥ ५१
दृष्ट्वा प्रीतिसमायुक्तो भूयश्चेदं व्यचिन्तयत् । नेदृशानि च रत्नानि मया दृष्टानि कानिचित् ॥ ५२
उपशोभानिबद्धानि पृथ्वीमूल्यसमानि च । विभीषणस्य लङ्कायां न दृष्टानि मया पुरा ॥ ५३
इति संचिन्त्य मनसा राघवस्तमृषिं ततः । आगमं तस्य दिव्यस्य प्रष्टुं समुपचक्रमे ॥ ५४

श्रीराम उवाच—

अत्यद्भुतमिदं ब्रह्मन्नप्राप्यं च महीक्षिताम् । कथं भगवता प्राप्तं कुतो वा केन निर्मितम् ॥ ५५
कुतूहलकृताच्चैव पृच्छामि त्वां महामुने । करतले स्थितं रत्नं करमध्ये प्रकाशते ॥ ५६
अधमं तद्विजानीयात्सर्वशास्त्रेषु गर्हितम् । दिशः प्रकाशते यत्तन्मध्यमं मुनिसत्तम ॥ ५७
ऊर्ध्वगं यच्च विशिखमुत्तमं तदुदाहृतम् । एतान्युत्तमजातीनि ऋषिभिः कथितानि च ॥ ५८
आश्चर्याणां बहूनां च दिव्यानां भगवान्निधिः । एवं वदति काकुत्स्थे मुनिर्वाक्यमथाब्रवीत् ॥ ५९

अगस्त्य उवाच—

शृणु राम यथा वृत्तं पुरा त्रेतायुगेऽभवत् । द्वापरे समनुप्राप्ते वने यद्दृष्टवानहम् ॥ ६०
आश्चर्यं सुमहाबाहो निबोध रघुनन्दन । पुरा त्रेतायुगे ह्यासीदरण्यं बहुविस्तरम् ॥ ६१
समन्ताद्योजनशतं मृगपक्षिविवर्जितम् । तस्मिन्निष्पुरुषेऽरण्ये कुर्वाणस्तप उत्तमम् ॥ ६२
अहमाक्रमितुं सौम्य तदरण्यमुपागतः । तस्यारण्यस्य रूपं तु निर्देष्टुं वाऽस्ति कः प्रभुः ॥ ६३
फलमूलैस्तथा शाकैर्बहुरूपैश्च काननैः । तस्यारण्यस्य मध्ये तु सरो योजनमायतम् ॥ ६४
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् । तत्राऽऽश्चर्यं मया दृष्टं निःसत्त्वं चेह उत्तमम् ॥ ६५
सरस्यभ्यचरन्नेको बहुपक्षिगणावृतम् । समीपे तस्य सरसो ददर्शाहं महाश्रमम् ॥ ६६
पुराणं पुण्यमत्यर्थं तपस्विजनवर्जितम् । तत्राहमवसं रात्रिं नैदाघीं पुरुषर्षभ ॥ ६७
प्रभाते पुनरुत्थाय सरस्तदुपचक्रमे । अथापश्यं बृहच्छावं सुपुष्टमजरं क्वचित् ॥ ६८
तिष्ठन्तं परया लक्ष्म्या सरसो नातिदूरतः । तदर्थं चिन्तयानोऽहं मुहूर्तमिव राघव ॥ ६९
[*तिष्ठतस्तु शरीरस्य किमिदं त्विति चिन्तयन् । अशरण्ये वने तस्मिन्निदमेकं महत्सरः] ॥ ७०
अस्य तीरे गतः प्राणी कोऽप्येष पुरुषर्षभ । मुनिर्वा पार्थिवो वाऽपि क्व मुनिः पार्थिवोऽपि वा ॥
अथवा पार्थिवस्यापि वने वै संभवः कुतः । अतीतेऽहनि रात्रौ वा प्रातर्वा म्रियते यदि ॥ ७२
[+पदं दृष्टं न चान्यस्य मयाऽत्र भ्रमता वने । क्व एष कथं वै मृत्युः कथं प्राप्तो महावनम् ] ७३

* एतच्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

१ ग. घ. ज. आचार्याणां । २ ग. घ. ज. °वान्नृषिः । ए° । ३ झ. °गे महत् । ४ क. ख. ग. घ. ङ. च. ज. °ग-व्याघ्रवि° । ५ ग. घ. ज. °मृ । कुरङ्गैश्च शुभे रम्ये कु° । ६ क. ग. घ. च. ज. मध्ये तु पङ्क्यो°। ख. ङ. मध्यं तु पञ्चयो°। ७ क. ख. ङ. च. ज. °ष्टं पुरः परमशोभितम् । ८ क. ङ. च. °मृ । विसारिकच्छपाकीर्णं बकपङ्क्तिगणैर्युतम् । ख. ग. घ. ज. °मृ । हंसकारण्डवाकीर्णं बकपङ्क्तिगणैर्युतम् । ९ क. ख. ग. घ. ङ. च. ज. °रसस्तपस्तप्तुं गतः पुरा । देशं पुण्यमुपेत्यैव सर्व-हिंसाविवर्जितम् । १० क. ख. घ. ङ. च. ज. [illegible]

अवश्यं तु मया ज्ञेयः[1] सर्वस्यास्य विनिश्चयः । यावदेवं स्थितश्चाहं चिन्तयानो रघूत्तम ॥ ७४
अथापश्यं मुहूर्तात्तु दिव्यमद्भुतदर्शनम् । विमानं परमोदारं हंसयुक्तं मनोजवम् ॥ ७५
तत्रोपरि सहस्रं तु विमानेऽप्सरसां नृप । गन्धर्वाणां तु तत्संस्थं रमयन्ति वरं नरम् ॥ ७६
गायन्ति दिव्यगेयानि वादयन्ति तथाऽपरे । अथापश्यं नरं तस्माद्विमानादवरुह्य तु ॥ ७७
स्वमांसं भक्षमाणं तं स्नात्वा रघुकुलोद्वह । *ततो भुक्त्वा यथाकामं स मांसं बहुपीवरम् ॥ ७८
अवतीर्य सरः शीघ्रं दृष्ट्वाऽऽरोहद्दिवं पुनः । तमहं देवसंकाशमारोहन्तं श्रियाऽन्वितम् ॥ ७९
भो भोः स्वर्गिन्महाभाग पृच्छामि त्वां कथं त्विदम् । जुगुप्सितं तवाऽऽहारं गतिश्चेयं तवोत्तमा [illegible]
यदि गुह्यं न चैतत्ते कथयास्मद्विधे भवान् । कामतः श्रोतुमिच्छामि किमेतत्परमं वचः ॥ ८१
को भवान्देवसंकाश आहारस्तु विगर्हितः । त्वयाँ तु भुज्यते सौम्य किमर्थं क्व च वर्तसे ॥ ८२
कश्चायमीश्वरो भावो शावत्वेन विनिर्मितः । आहारं च कथं निन्द्यं श्रोतुमिच्छामि तत्त्वतः ८३
श्रुत्वा तु भाषितं वाक्यं मनोरमं शुभाक्षरम् । प्राञ्जलिः प्रत्युवाचेदं स स्वर्गी रघुनन्दन ॥ ८४

श्वेत उवाच—

शृणु मेऽद्य यथा वृत्तं ममेदं सुखदुःखजम् । धर्मो हि दुरतिक्रम्यः शृणु यत्पृच्छसे द्विज ॥ ८५
पुरा वैदर्भको राजा पिता मे हि महायशाः । वसुदेव इति ख्यातस्त्रिषु लोकेषु धार्मिकः ॥ ८६
तस्य पुत्रद्वयं ब्रह्मन्द्वाभ्यां स्त्रीभ्यामजायत । अहं श्वेत इति ख्यातो यवीयान्सुरथोऽभवत् ॥ ८७
पितर्युपरते तस्मिन्पौरा मामभ्यषेचयन् । तत्राहं कारयत्राज्यं धर्मेण सुसमाहितः ॥ ८८
एवं वर्षसहस्राणि बहूनि समुपाव्रजन् । राज्यं कारयते मह्यं प्रजाश्च परिपालयन् ॥ ८९
सोऽहं निमित्ते[11] कस्मिंश्चिद्वैराग्येण द्विजोत्तम । मरणं हृदये कृत्वा तपोवनमुपागमम् ॥ ९०
सोऽहं वनमिदं प्राप्य[12] भृशं पक्षिविवर्जितम् । प्रविष्टस्तप आस्थातुमस्यैव सरसोऽन्तिके ॥ ९१
राज्येऽभिषिच्य सुरथं विहरन्तं महारथम् । इदं सरः समाश्रित्य तपस्तप्तं सुदारुणम् ॥ ९२
सोऽहं[13] वर्षसहस्राणि[14] ह्यशीतिस्तप्तवान्वने[15] । शुभं तु भुवनं प्राप्तो ब्रह्मलोकमनुत्तमम् ॥ ९३
स्वर्गस्थस्य च मे ब्रह्मन्क्षुत्पिपासे द्विजोत्तम । अबाधेतां भृशं चाहमभवं [illegible]र्यतेन्द्रियः ॥ ९४
ततस्त्रिभुवनश्रेष्ठमवोचं वै पितामहम् । भगवन्स्वर्गलोकोऽयं क्षुत्पिपा[illegible]विवर्जितः ॥ ९५
कस्येयं कर्मणः प्राप्तिः क्षुत्पिपासे यतो हि मे । आहारः [illegible] मे देव ब्रूहि त्वं श्रीपितामह ९६
ततः पितामहः प्राह चिरं ध्यात्वा [illegible] । [illegible]च तदा[16] वाक्यं नास्ति भोज्यं स्वदेहजम् ९७
ऋते [illegible] स्वानि च [illegible] तानि भक्षय नित्यशः । स्वशरीरं हि ते पुष्टं कुर्वता तप उत्तमम् ॥ ९८
नादत्तं जायते तात किंचिदत्र महीतले । अपि चेद्भिक्षमाणाय भिक्षाऽपि प्राणिने पुरा ॥ ९९

* इदमर्धं झ. पुस्तकस्थम् ।

१ क. ख. ग. घ. ङ. च. ज. ज्ञेया सरसोऽस्य विनिष्क्रिया । या° । २ क. ख. ग. घ. ङ. च. ज. पुरस्तत्र । ३ ख. घ. ङ. तु । श्वमां° । ४ घ. ज. °रः स्वर्गाद्दृष्ट्वा चाहं दिवं पुरः । त° । ५ क. ख. ग. घ. ङ. च. ज. °काशं श्रिया परमया युत° । ६ क. ख. ग. घ. ङ. च. ज. °वान्वद संदेहमाहा° । ७ क. ख. ग. घ. ङ. च. ज. °या न भुज्यते सौम्यं क्व वासः क्व । ८ क. ख. ङ. च. ज. °तं तत्र मम राम सतां वर । प्रा° । ९ क. ख. ग. घ. ङ. च. ज. कामो । १० क. ख. ग. घ. ङ. च. ज. वासुदेव । ११ क. ख. घ. ङ. च. ज. °दं रम्यं भृ° । ग. °दं रम्यं मृगप° । १२ क. ख. घ. ङ. च. ज. °थं भ्रातरं तं नराधिपम् । १३ क. ख. ग. घ. ङ. च. ज. दश । १४ क. ग. घ. ङ. च. ज. °णि तपस्तप्त्वा [illegible] १५ क. ख. ग. घ. ङ. च. ज. °ने । स्वभर्तृभवनं । १६ क. ख. ग. घ. [illegible] °ल्यामध्य राज्यम° ।

न हि दत्ता गृहे भ्रान्त्या मोहादतिथये तदा । तेन स्वर्गगतस्यापि क्षुत्पिपासे तवाधुना ॥ १००
त्वं सुपुष्टमाहारैः स्वशरीरमनुत्तमम् । भक्षयस्व च राजेन्द्र सा ते तृप्तिर्भविष्यति ॥ १०१
एवमुक्तस्ततो देवं ब्रह्माणमहमुक्तवान् । भक्षिते च स्वके देहे पुनरन्यन्न मे विभो ॥ १०२
क्षुधानिर्धा(वा)रणं देव देहस्यास्य [१]विलोकने । दद(देहि) मे चाक्षयं देव तृप्तिर्मे जायते यथा ॥
ततोऽब्रवीत्पुनर्ब्रह्मा देहस्ते त्वक्षयः कृतः । भक्षयित्वाऽमृतरसं या ते तृप्तिर्भविष्यति ॥ १०४
दिने दिने तु वै[२] श्लाघ्या तव श्वेत भविष्यति । यावद्वर्षशतं पूर्णं स्वमांसं खादतो नृप ॥ १०५
यदा[३] त्वगस्त्यस्ते श्वेत काननं सुमहत्तरम् । आगमिष्यति दुर्धर्षं तदा कृच्छ्राद्विमोक्ष्यसे ॥ १०६
स हि तारयितुं शक्तः सेन्द्रानपि सुरासुरान् । आहारं कुत्सितं चेदं राजर्षे किं पुनस्तव १०७
सुरकार्यं महत्तेन पुष्करस्थमहात्मना । उदधिं निर्जलं कृत्वा दानवाश्च विनाशिताः ॥ १०८
विन्ध्यश्चाऽऽदित्यविद्वेषी वर्धमानो निवारितः । [४]नममाना मही चैषा गुरुत्वेनावलम्बिता १०९
दक्षिणा दिग्दिवं याता त्रैलोक्यं विषमं स्थितम् । मया गत्वा सुरैः सार्धं प्रेषितो दक्षिणां दिशम्
समां कुरु महाभाग गुरुत्वे च जगत्समम् । एवं च तेन मुनिना स्थित्वा सर्वा धरा समा १११
कृता राजेन्द्र मुनिना एवमद्यापि दृश्यते । सोऽहं भगवतः श्रुत्वा देवदेवस्य भाषितम् ॥ ११२
भुञ्जे बीभत्समाहारं स्वशरीरमनुत्तमम् । पूर्णं वर्षशतं चाद्य भोजनं कुत्सितं च मे ॥ ११३
क्षयं नाभ्येति त[५]द्विप्र तृप्तिश्चापि ममोत्तमा । तं मुनिं कृच्छ्रसंतप्तश्चिन्तयानो दिवानिशम् ॥ ११४
कदा वै दर्शनं मह्यं स मुनिर्दास्यते वने । एवं मे चिन्तयानस्य गतं वर्षश[६]तं त्विह ॥ ११५
सोऽगस्त्यो हि गतिर्ब्रह्मन्मुनिर्मे भविता ध्रुवम् । न गतिर्भविता मह्यं(मे वै) कुम्भयोनिमृते द्विजम्
श्रुत्वेत्थं भाषितं राम दृष्ट्वाऽऽहारं च कुत्सितम् । [*कृपया परया युक्त[७]स्तं परं स्वर्गवासिनम् ॥
करोम्येनं सुधाभक्तं नाशयामि च कुत्सितम् ] । भूयोऽप्यूचे नृपं वाक्यमगस्त्यः किं करिष्यति
अहमेतत्कुत्सितं ते नाशयामि महामते । ईप्सितं प्रार्थयस्वास्मान्मनःप्रीतिकरं परम् ॥ ११९
स स्वर्गी [८]मां तदा प्राह कथं ब्रह्मवचोऽन्यथा । कर्तुं मुने मया शक्यं न चान्यस्तारयिष्यति ॥
ऋते वै कुम्भयोनिं[९] तं मैत्रावरुणसंभवम् । आपृष्टोऽसि मया ब्रह्मन्गमिष्ये तु पितामहम् ॥ १२१
एवं ब्रुवाणं तं श्वेतमुक्तवानहमस्मि तम् । आगतस्तव भाग्येनं तारयिष्ये न संशयः ॥ १२२
ततः स्वर्गी तु मां ज्ञात्वा दण्डवत्पतितोऽग्रतः । तमुत्थाप्य तदा रामाब्रवं किं ते करोम्यहम् १२३

राजोवाच—

आहारात्कुत्सिताद्ब्रह्मंस्तारयस्वाद्य दुष्कृतात् । येन लोकोऽक्षयः स्वर्गो भविता त्वत्कृतान्मुने ॥
ततः प्रतिग्रहो दत्तो जगद्वन्द्य नमोऽस्तु ते । भवान्मामनुगृह्णातु प्रतीच्छतु प्रतिग्रहम् ॥ १२५
इदमाभरणं सौम्य तारणार्थं द्विजोत्तम । ब्रह्मर्षे प्रतिगृह्णीष्व प्रसादं कर्तुमर्हसि ॥ १२६
इह गावः सुवर्णं च धनं वस्त्रमनुत्तमम् । भक्ष्यं भोज्यं च विप्रर्षे ददाम्याभरणं तव ॥ १२७
सर्वान्कामान्प्रयच्छामि सर्वान्भोगांश्च ते द्विज । तारणे तु भवान्मह्यं प्रसादं कर्तुमर्हसि ॥ १२८

* धनुश्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. झ. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. ज. विनोदने । २ ज. वै स्नात्वा सा ते श्वे° । ३ क. ख. ग. घ. ङ. च. ज. °दाऽऽगच्छति चागस्त्यः श्वेतारण्यं महातपाः । भगवानतिदुर्दर्शस्तदा । ४ क. झ. ग. ङ. च. ज. लम्बमाना । ५ ख. घ. ङ. ज. सुभृशं । ६ क. ख. ग. घ. ङ. च. ज. °शतद्वयम् । सो° । ७ क. ख. घ. ङ. च. °स्तं नृपं स्वर्गगामिन° । ८ झ. °योऽपि [illegible]। ९ [illegible] °स्तारयिष्यति । १० क. ख. घ. ङ. च. ज. °न दृष्टोऽहं नात्र सं° ।

तस्याहं स्वर्गिणो वाक्यं श्रुत्वा दुःखसमन्वितम् । तारणाय मतिं कृत्वा न लोभाद्रघुनन्दन १२९
गृहीते भूषणे राम मम हस्तस्थिते तदा । +मानुषः पौर्विको देहस्तदाऽभूत्तस्य भूपते ॥ १३०
प्रनष्टेन शरीरेण राजर्षिः परया मुदा । मयोक्तोऽसौ विमानेन जगाम त्रिदिवं पुनः ॥ १३१
तेन मे शक्रतुल्येन दत्तमाभरणं शुभम् । तस्मिन्निमित्ते काकुत्स्थ दत्तमद्भुतकर्मणा ॥
श्वेतो वैदर्भको राजा तदाऽभूद्धतकल्मषः ॥ १३२

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे रामागस्त्यसंवादो नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६२६६

---

अथ चतुस्त्रिंशोऽध्यायः ।

---

पुलस्त्य उवाच—

तदद्भुततमं वाक्यं श्रुत्वाऽगस्त्यस्य राघवः । गौरवाद्विस्मयाच्चापि भूयः प्रेष्टुं प्रचक्रमे ॥ १

श्रीराम उवाच—

भगवंस्तद्वनं घोरं यत्रासौ दैत्तवांस्तव । श्वेतो वैदर्भको राजा तदद्भुतमभूत्कथम् ॥ २
विषमं तद्वनं राजा शून्यं मृगविवर्जितम् । प्रविष्टस्तप आस्थातुं कथं वद महामुने ॥ ३
समन्ताद्योजनशतं निर्मनुष्यमभूत्कथम् । भवान्कथं प्रविष्टोऽसौ येन कार्येण तद्वद ॥ ४

अगस्त्य उवाच—

पुरा कृतयुगे राजन्मनुर्दण्डधरः प्रभुः । तस्य पुत्रोऽथ नाम्नाऽऽसीदिक्ष्वाकू रुचिरद्युतिः ॥ ५
तं पुत्रं पूर्वजं राज्ये निक्षिप्य भुवि संमतम् । पृथिव्यां राजवंशानां भव राजेत्युवाच ह ॥ ६
तथेति च प्रतिज्ञातं पितुः पुत्रेण राघव । ततः परमसंहृष्टः पुनस्तं प्रत्यभाषत ॥ ७

मनुरुवाच—

प्रीतोऽस्मि परमोदारकर्मणा ते न संशयः । दण्डेन च प्रजा रक्ष न च दण्डमकारणम् ॥ ८
अपराधिषु यो दण्डः पात्यते मानवैरिह । स दण्डो विधिवन्मुक्तः स्वर्गं नयति पार्थिवम् ॥ ९
तस्माद्दण्डे महाबाहो यत्नवान्भव पुत्रक । धर्मस्ते परमो लोके कृत एवं भविष्यति ॥ १०

अगस्त्य उवाच—

इति तं बहु संदिश्य मनुः पुत्रं समाधिना । जगाम त्रिदिवं हृष्टो ब्रह्मलोकमनुत्तमम् ॥ ११
जनयिष्ये कथं पुत्रानिति चिन्तापरोऽभवत् । कर्मभिर्बहुरूपैस्तु तैस्तैर्मनुसुतो भवत्(म्) ॥ १२
तोषयामास पुत्रेण स तु देवसुतोपमः । सर्वेषाँमुत्तमस्तेषां कनीयान्रघुनन्दन ॥ १३
शूरश्च कृतविद्यश्च गुरुश्च जनपूजया । नाम तस्य च दण्डेति पिता चक्रे तु बुद्धिमान् ॥ १४
भविष्यदण्डपतनं शरीरे तस्य वीक्ष्य च । संपश्यमानस्तं दोषं घोरं पुत्रस्य राघवं ॥ १५

---

+ इदमर्धं क्वचिन्नास्ति ।

१ घ. ज. श्रुतो । २ क. ख. ग. घ. ङ. च. ज. श्रोतुं । ३ क. ख. ग. ङ. च. ज. तप्तवांस्तपः । ४ क. ग. घ. च. ज. °क्ष्वाकुरमितद्यु° । ५ ग. घ. ज. °मो देवक° । ६ ख. ग. च. ज. °धिरत्युग्रः स्व° । ७ क. ख. ग. घ. ङ. च. ज. °षामवरस्ते° । ८ क. ख. ग. घ. ङ. च. ज. °श्च शुश्रूषुर्जन° । ९ क. ख. ङ. च. °क्रे सुबु° । ग. घ. ज. °क्रेऽतिबु° । १० क. °व । स विन्ध्यनीलमध्ये च राज्यम° । ख. ग. घ. ङ. च. ज. °व । स विन्ध्यनीलयोर्मध्ये राज्यम° ।

विन्ध्यस्य शृङ्गयोर्मध्ये पुरमस्य ददौ प्रभुः । स दण्डस्तत्र राजाऽभूद्रम्ये पर्वतमूर्धनि ॥ १६
पुरं चाप्रतिमं तेन निवेशाय तथा कृतम् । नाम तस्य पुरस्यार्थं मधुमत्त इ(मि)ति स्वयम् ॥ १७
तथा देशेन संपन्नः शूरो वासमथाकरोत् । एवं स राजा तद्राज्यं चकार सपुरोहितः ॥ १८
प्रहृष्टमनुजाकीर्णं देवराजो यथा दिवि । ततः स दण्डः काकुत्स्थ वहुवर्षगणायुतम् ॥ १९
अकारयत धर्मात्मा राज्यं निहतकण्टकम् । अथ काले तु कस्मिंश्चिद्राजा भार्गवमाश्रमम् ॥ २०
रमणीयमुपाक्रामच्चैत्रमासे मनोरमे । तत्र भार्गवकन्यां तु रूपेणाप्रतिमां भुवि ॥ २१
विचरन्तीं वनोद्देशे दण्डोऽपश्यदनुत्तमाम् । उत्तुङ्गपीवरीं श्यामां चन्द्रविम्वसमाननाम् ॥ २२
सुनासां चारुसर्वाङ्गीं पीनोन्नतपयोधराम् । मध्ये क्षामां च विस्तीर्णां दृष्ट्वा या कुरुते मुदम् ॥ २३
एकवस्त्रां वने चैकां प्रथमे यौवने स्थिताम् । स तां दृष्ट्वा त्वधर्मेण अनङ्गशरपीडितः ॥
अभिगम्यै स वै राजा कन्यां वचनमव्रवीत् ॥ २४

दण्ड उवाच—

कुतस्त्वमसि सुश्रोणि कस्य चासि सुशोभने । पीडितोऽहमनङ्गेन पृच्छामि त्वां सुशोभने ॥ २५
मम त्वया हृतं चित्तं दर्शनादेव सुन्दरि । इदं वयस्ते प्रथितं मुनीनां चित्तहारकम् ॥ २६
यद्यहं न लभे भोक्तुं मृतं मामवधारय । त्वयाँ(दा)यत्ता मम प्राणा मां जीवय सुलोचने ॥
दासोऽस्मि ते वरारोहे भक्तं मां भज सुन्दरि ॥ २७

अगस्त्य उवाच—

तस्यैवं तु ब्रुवाणस्य मदोन्मत्तस्य कामिनः । भार्गवी प्रत्युवाचेदं वचः सविनयं नृपम् ॥ २८

अरजोवाच—

मां भार्गवसुतां विद्धि शुक्रस्यांक्लिष्टकर्मणः । अरजां नाम राजेन्द्र ज्येष्ठामाश्रमवासिनः ॥ २९
शुक्रः पिता मे राजेन्द्र त्वं च शिष्यो महात्मनः । धर्मतो भगिनी तेऽहं भवामि नृपसत्तम ॥ ३०
एवंविधं हि मां वक्तुं न त्वमर्हसि पार्थिव । अन्येभ्योऽपि सुदुष्टेभ्यो रक्ष्याऽहं च सदा त्वया ॥
क्रोधनो मे पिता रौद्रो भस्मत्वं त्वां समानयेत् । अथवा राजधर्मो वा संबन्धं कुरुषे वलात् ३२
पितरं मे याचयस्व धर्मदृष्टेन कर्मणा । वरयस्व नृपश्रेष्ठ पितरं मे महाद्युतिम् ॥ ३३
अन्यथा विपुलं दुःखं भवेद्धोराभिसंज्ञितम् । क्रुद्धो हि मे पिता सर्वं त्रैलोक्यमपि निर्दहेत् ॥ ३४

अगस्त्य उवाच—

ततस्तु तं महाघोरं श्रुत्वा दण्डः सुदारुणम् । प्रत्युवाच मदोन्मत्तः शिरसाऽभिनतः पुनः ॥ ३५

दण्ड उवाच—

प्रसादं कुरु सुश्रोणि कामोन्मत्तस्य भामिनि । त्वया रुद्धा मम प्राणा विशीर्यन्ते शुभानने ॥ ३६
त्वां प्राप्य वा वधो मेऽस्तु वधाद्वाऽपि महत्तरम् । भक्तं भजस्व मां भीरु भक्तोऽहं त्वयि सुन्दरि

अगस्त्य उवाच—

एवमुक्त्वा तु तां कन्यां वलात्संगृह्य वाहुना । अतीते वाक्पथे तेन विवस्त्रा सा तथा कृता ३८

---

१ क. ख. ग. घ. ङ. च. ज. °थ संप्रमत्त इति । २ झ. इव । ३ ख. ङ. सतां दृष्ट्वा तु ध° । ग. घ. सतां तु दृष्ट्वा ध° । ४ क. ख ग. घ. ङ. च. ज. °म्य सुविश्रान्तां क° । ५ ख. ग. ङ. च. °दं ते वदनं रम्यं मु° । ६ क. ख. ग. घ. ङ. च. ज. °या दत्ता । ७ घ. सुदुःखेभ्यो । ८ क. ख. ग. घ. ङ. च. ज °बन्धो विहितो व° । ९ ख. ग. घ. ङ. च. ज. तदा शुभं म° । १० क. ख. ग. घ. ङ. च. ज. कामिनि । ११ क. ख. ग. घ. ङ. च. ज. °प्य वैरं मे वाऽस्तु । १२ ज. वधो वाऽपि महत्तरः । भ° । १३ क. ख. ङ. च. अन्येन राज्ञा हस्तेन । ग. घ. ज. अतीत्य राज्ञा चैकेन ।

दृढमङ्गे समाश्लिष्टा मुखं चैव मुखे कृतम् । विस्फुरन्तीं यथाकामं मैथुनायोपचक्रमे ॥ ३९
तमनर्थं महाघोरं दण्डः कृत्वा सुदारुणम् । नगरं स्वं जगामाऽऽशु मधुमत्तमनुत्तमम् ॥ ४०
भार्गवी रुदती दीना आश्रमस्याविदूरतः । प्रत्येयाय समुद्विग्ना पितरं देवसंमितम् ॥ ४१
स मुहूर्तादुपस्पृश्य देवर्षिरमितप्रभः । स्वमाश्रमं शिष्यवृतः क्षुधार्तः सन्न्यवर्तत ॥ ४२
सोऽपश्यदरजां दीनां रजसा समभिप्लुताम् । अपश्यद्घनसंयुक्तां ज्योत्स्नामिव च रञ्जिताम् ४३
तस्य रोषः समभवत्क्षुधार्तस्य महात्मनः । निर्दहन्निव लोकांस्त्रीन्स्वशिष्यान्समुवाच ह ॥ ४४

भार्गव उवाच—

पश्यध्वं विपरीतस्य दण्डस्यादीर्घदर्शिनः । विपत्तिं घोरसंकाशां दीप्तामग्निशिखामिवै ॥ ४५
क्षयं त्वधर्मतः प्राप्तः सानुगस्तु न संशयः । यस्तु दीप्तहुताशस्य अर्चिः संस्पृष्टवानिह ॥ ४६
यस्मात्सं कृतवान्पापमीदृशं घोरसंमितम् । तस्मात्प्राप्स्यति दुर्मेधाः पांशुवर्षमनुत्तमम् ॥ ४७
कुराजा देशसंयुक्तः सभृत्यबलवाहनः । पापकर्मसमाचारो वधं प्राप्स्यति दुर्मतिः ॥ ४८
समन्ताद्योजनशते विषये चास्य दुर्मतेः । वर्षते(र्षेद्वै) पांसुवर्षेण महता पाकशासनः ॥ ४९
सर्वसत्त्वानि यानीह जङ्गमस्थावराणि च । सर्वेषां पांसुवर्षेण क्षयः क्षिप्रं भविष्यति ॥ ५०
दण्डस्य विषयो यावत्तावदुपवनाश्रमम् । पांसुवर्षमिवाकस्मात्सप्तरात्रं भविष्यति ॥ ५१

अगस्त्य उवाच—

इत्युक्त्वा क्रोधसंतप्तस्तमाश्रमनिवासिनम् । जनो जनपदस्यान्ते नीयतामित्युवाच ह ॥ ५२
उक्तमात्रे उशनसा आश्रमावसथो जनः । क्षिप्रं तु विषयात्तस्मात्स्थानं चक्रे स बाह्यतः ॥
स तथोक्त्वा मुनिजनमरजामिदमब्रवीत् ॥ ५३

भार्गव उवाच—

आश्रमे त्वं सुदुर्मेधे वस चेह समाहिता । [*इदं योजनपर्यन्तं सरः सुरुचिरप्रभम् ॥ ५४
अरजे विरजा भूत्वा कालमत्र समाः शतम्] ॥ ५५

अगस्त्य उवाच —

श्रुत्वा नियोगं तस्यर्षेररजा भार्गवी तदा । तथेति पितरं प्राह भार्गवं भृशदुःखिता ॥ ५६
इत्युक्त्वा भार्गवो वासं तस्मादन्यमुपाक्रमत् । सप्ताहे भस्मसाद्भूतं यथोक्तं ब्रह्मवादिना ॥ ५७
तस्य दण्डस्य विषयो विन्ध्यशैलस्य सानुषु । शप्तो ह्युशनसा राम तस्मिन्वैधार्मिके कृते ॥ ५८
ततःप्रभृति काकुत्स्थ दण्डकारण्यमुच्यते । एतत्ते सर्वमाख्यातं यन्मां पृच्छसि राघव ॥ ५९
संध्यामुपासितुं राम समयो ह्यतिवर्तते । एते महर्षयो राम पूर्णकुम्भाः समन्ततः ॥ ६०
कृतोदका नरव्याघ्र पूजयन्ति दिवाकरम् । सर्वैर्ऋषिभिरभ्यस्तैः स्तोत्रैर्ब्रह्मादिभिः कृतैः ॥
रविरस्तं गतो राम गत्वोदकमुपस्पृश ॥ ६१

पुलस्त्य उवाच—

+ऋषेर्वचनमादाय रामः संध्यामुपासितुम् । उपचक्राम तत्पुण्यं स सरो रघुनन्दनः ॥ ६२

---

*एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।+एतच्चिह्नान्तर्गतः पाठः क.ख. ग.घ. ङ.च.ज.पुस्तकस्थः।

---

१ क. ख. ङ. च. मदोन्मत्त इव द्विपः । भा° । ग. घ. ज. मधुमत्त इवोत्तमम् । २ झ. °दग्धुमिव । ३ क. ख घ. ङ. च. ज. °व । यन्नासं दुर्मतिः प्रा° । ग. °व । परस्वं दुर्मतिः प्रा° । ४ घ. धक्ष्यते । ५ ञ. तदाऽभूद्वर्षणे कृते । ६ झ. कृतोल्मुका ।

अथ तस्मिन्वनोद्देशे रम्ये पादपशोभिते । नदी[1]तीरे गिरिवरे कोकिलाशतमण्डिते ॥ ६३
नानापक्षिरवोद्याने नानामृगसमाकुले । सिंहव्याघ्रसमाकीर्णे नानाद्विजसमावृते ॥ ६४
गृध्रोलूकौ प्रवसितौ बहून्वर्षगणानपि । अथोलूकस्य भवनं गृध्रः पापविनिश्चयः ॥ ६५
ममेदमिति कृत्वाऽसौ कलहं तेन चाकरोत् । राजा सर्वस्य लोकस्य रामो राजीवलोचनः ॥ ६६
तं प्रपद्यावहे शीघ्रं कस्यैतद्भवनं भवेत् । गृध्रोलूकौ प्रपद्येतां जातकोपावमर्षणौ ॥ ६७
रामं प्रपद्य तौ शीघ्रं कलिव्याकुलचेतसौ । तौ परस्परविद्वेषौ स्पृशतश्चरणौ तदा ॥
अथ दृष्ट्वा नरेन्द्रं तं गृध्रो वचनमब्रवीत् ॥ ६८

गृध्र उवाच—

सुराणामसुराणां च त्वं प्रधानो मतो मम । बृहस्पतेश्च शुक्राच्च त्वं विशिष्टो महाद्युते ॥ ६९
परावरज्ञो भूतानां मर्त्ये चेन्द्र इवापरः । दुर्निरीक्ष्यो यथा सूर्यो हिमवानिव गौरवे ॥ ७०
सागरश्चासि गाम्भीर्ये लोकपालोपमो युधि । क्षान्त्यां धरण्या तुल्योऽसि शीघ्रत्वे ह्यनिलोपमः ॥
गुरुस्त्वं सर्वसंपन्नो विष्णुरूपोऽसि राघव । अमर्षी दुर्जयो जेता सर्वास्त्रविधिपारगः ॥ ७२
शृणु त्वं मम देवेश विज्ञाप्यं नरपुंगव । मयाऽऽलयं पूर्वकृतं बाहुवीर्येण वै प्रभो ॥ ७३
उलूको हरते राजंस्त्वत्समीपे विशेषतः । ईदृशोऽयं दुराचारस्त्वदाज्ञालोपको नृप ॥
प्राणान्तिकेन दण्डेन एनं शासितुमर्हसि ॥ ७४

पुलस्त्य उवाच—

एवमुक्ते तु गृध्रेण उलूको वाक्यमब्रवीत् ॥ ७५

उलूक उवाच—

शृणु देव मम ज्ञाप्यमेकचित्तो नराधिप । सोमाच्छतक्रतोः सूर्याद्धनदाच्च यमात्तथा ॥ ७६
जायते वै नृपो राम किंचिद्भवति मानुषः । त्वं तु सर्वमयो देव नारायण इवापरः ॥ ७७
प्रोच्यते सौम्यता राजन्सम्यक्काले विचारिते । सम्यक्करसि मनुष्ये तेन सोमोपमो भवान् ॥ ७८
दोषे दण्डः प्रजानाथ दाने पापभयापहः । दाताऽपहर्ता गोप्ता च तेनेन्द्र इव नो भवान् ॥ ७९
अधृष्यः सर्वयोधेषु तेजसा चानलो भवान् । [*अभीक्ष्णं तपसे पापांस्तेन त्वं राम भास्करः ८०
साक्षाद्वित्तेशतुल्योऽसि अथवा धनदाधिकः । चित्तायत्ता तु पत्नी श्रीर्नित्यं ते राजसत्तम ॥ ८१
धनदस्य तु क्रोषेण धनदस्तेन वै भवान् ] । समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥ ८२
शत्रौ मित्रे +च ते दृष्टिः समन्ताद्याति राघव । धर्मेण शासनं नित्यं व्यवहारविधिक्रमात् ॥ ८३
यस्य रुष्यसि वै राम मृत्युस्तस्याभिधीयते । गीयसे तेन वै राजन्यम इत्यभिविश्रुतः ॥ ८४
यश्चैष मानुषो भावो भवतो नृपसत्तम । आनृशंस्यपरो राजा सर्वेषु कृपयाऽन्वितः ॥ ८५
दुर्बलस्य त्वनाथस्य राजा भवति वै बलम् । अचक्षुषो भवेच्चक्षुरगतौ च गतिर्भवेत् ॥ ८६
अस्माकमपि नाथस्त्वं श्रूयतां मम धार्मिक । भवता तन्न मन्तव्यं यथैते किल पक्षिणः ॥ ८७
योऽस्मन्नाथः स पक्षीन्द्रो भवतैव विनिर्मितः । अस्वाम्यं देव नास्माकं संनिधौ भवतः प्रभो ८८

---

*एतच्चिह्नान्तर्गतः पाठः ख. ग. घ. ङ. ज. पुस्तकस्थः । + 'समा' इति क्वचित्पुस्तके ।

---

१ क. ख. ग. घ. ङ. च. ज. °दीपुण्ये गि° । २ क. ख. ङ. च. शक्र । ३ ञ. °ज्ञालङ्घको । ४ ख. ङ. °म्यग्रक्षसि पापेभ्यस्तमोघ्नो हि यतो भ° । ग घ. ज. °म्यग्रक्षसि चाऽऽदित्यस्तमोघ्नो हि यतो भ° । ५ क. च. °जानां त्वं यतः पा° । ६ क. ख. ग. घ. ङ. च. ज. °र्वभूतेषु । ७ ग. °म । सर्वार्थपूरकस्त्वं च ध° । ८ क. ख. ग. घ. ङ. च. ज. °रमतौ च मति° ।

भवतैव कृतः पूर्वं भूतग्रामश्चतुर्विधः । ममाऽऽलयं प्रविष्टस्तु गृध्रो मां बाधते नृप ॥
त्वं हि देवमनुष्येषु शास्ता वै नरपुंगवः ॥ ८९

पुलस्त्य उवाच—

एतच्छ्रुत्वा तु वै रामः सचिवानाह्वयत्स्वयम् । विष्टिर्जयन्तो विजयः [1]सिद्धार्थो राष्ट्रवर्धनः ॥ ९०
अशोको धर्मपालश्च सुमन्तुश्च महाबलः । एते रामस्य सचिवा राज्ञो दशरथस्य च ॥ ९१
नीतियुक्ता महात्मानः सर्वशास्त्रविशारदाः । [3]शान्ताश्च कुलीनाश्च नये मन्त्रे च कोविदाः ॥ ९२
तानाहूय स धर्मात्मा पुष्पकादवरुह्य च । गृध्रोलूकौ विवदन्तौ पृच्छेति स्म रघूत्तमः ॥ ९३

श्रीराम उवाच—

कति वर्षाणि ते गृध्र तवेदं निलयं कृतम् । एतन्मे कारणं ब्रूहि यदि जानासि तत्त्वतः ॥
एतच्छ्रुत्वा तु वै गृध्रो बभाषे राघवं स्थितम् ॥ ९४

गृध्र उवाच—

इयं वसुमती राम मनुष्यैरूर्ध्वबाहुभिः । उत्थितैरावृता सर्वा तदा प्रभृति मे गृहम् ॥
उलूकस्त्वब्रवीद्रामं पादपैरुपशोभिता । यदैव पृथिवी राजंस्तदा प्रभृति मे गृहम् ॥ ९५

पुलस्त्य उवाच—

एतच्छ्रुत्वा तु रामो वै सभासद उवाच ह ॥ ९६

श्रीराम उवाच—

न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् ॥
नासौ हि धर्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनोपपन्नम् ॥ ९७

ये तु सभ्याः सभां गत्वा तूष्णीं ध्यायन्त आसते । यथाप्राप्तं न ब्रुवते सर्वे तेऽनृतवादिनः ९८
जानन्नविब्रुवन्पृष्टः कामात्क्रोधात्तथा भयात् । सहस्रा वारुणान्पाशानात्मनि प्रतिमुञ्चति ॥ ९९
तेषां संवत्सरे पूर्णे पाश एकः प्रमुच्यते । तस्मात्सत्यं तु वक्तव्यं जानता सत्यमञ्जसा ॥ १००
एतच्छ्रुत्वा तु सचिवा राममेवाब्रुवंस्तदा । उलूकः शोभते राजन्नतु गृध्रो महामते ॥ १०१
त्वं प्रमाणं महाराज राजा हि परमा गतिः । राजमूलाः प्रजाः सर्वा राजा धर्मः सनातनः १०२
शास्ता राजा नृणां येषां न ते गच्छन्ति दुर्गतिम् । वैवस्वतेन मुक्ताश्च भवन्ति पुरुषोत्तमाः १०३
सचिवानां वचः श्रुत्वा रामो वचनमब्रवीत् । श्रूयतामभिधास्यामि पुराणं यदुदाहृतम् ॥ १०४
द्यौः सचन्द्रार्कनक्षत्रा सपर्वतमही द्रुमाः । सलिलार्णवसंमग्नं त्रैलोक्यं सचराचरम् ॥ १०५
एकमेव तदा ह्यासीत्सर्वमेकमिवाम्बरम् । पुनर्भूः सह लक्ष्म्या च विष्णोर्जठरमाविशत् ॥ १०६
[*तानि गृह्य महातेजाः प्रविश्य सलिलार्णवे । सुप्त्वा वारिकृतात्मा च बहुवर्षशतानि च १०७
विष्णौ सुप्ते ततो ब्रह्मा विवेश जठरं ततः । बहुस्रोतं च तं ज्ञात्वा महायोगी समाविशत्] १०८
नाभ्यां विष्णोः समुत्पन्नं पद्मं हेमविभूषितम् । स तु निर्गम्य वै ब्रह्मा योगी भूत्वा महाप्रभुः ॥

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. ज. शुद्धार्थो । २ क. घ. च. ज. सिद्धार्थो । ३ क. ख. ङ. च. ज. सामन्ताश्च । घ. समन्त्राश्च । ४ झ. °च्छत्यमरसत्त° । ५ क. ख. ग. घ. ङ. च. ज. कौतुकं । ६ क. ख. ग. घ. ङ. च. ज. °ष्यैर्बहुबा° । ७ क. ख. ङ. च. ज. उच्छ्रितै रचिता । ग. घ. उच्छ्रितैरर्चिता । ८ झ. ञ. °स्ति सत्यं न तद्यत्फलमभ्युपैति । ये । ९ क. ख. ग. घ. ङ. च. ज. सहस्रं । झ. सहस्रं वारुणाः पाशाः प्रतिमुञ्चन्ति तं नृप । ते° ।

सिसृक्षुः पृथिवीं वायुं पर्वतांश्च महीरुहान् । तदन्तरा प्रजाः सर्वा मनुष्यांश्च सरीसृपान् ॥ ११०
जरायुजाण्डजान्सर्वान्ससर्ज स महातपाः । तस्य गात्रसमुत्पन्नः कैटभो मधुना सह ॥ १११
दानवौ तौ महावीरौ घोरौ लब्धवरौ तदा । दृष्ट्वा प्रजापतिं तत्र क्रोधाविष्टौ बभूवतुः ॥ ११२
वेगेन महता भोक्तुं स्वयंभुवमधावताम् । दृष्ट्वा सत्त्वानि सर्वाणि निःसरन्ति पृथक्पृथक् ॥ ११३
[*ब्रह्मणा योद्धुकामौ तौ विष्णुना तु तदा हतौ] । [+ब्रह्मणा संस्तुतो विष्णुर्हत्वा तौ मधुकैटभौ
पृथिवीं वर्धयामास स्थित्यर्थं मेदसा तयोः ] । मेदोगन्धा तु धरणी मेदिनीत्यभिधीयते ॥ ११५
तस्मान्न गृध्रस्य गृहमुलूकस्य तदाऽभवत् । तस्माद्गृध्रस्त्ववसत्यो वै पापकर्मा परालयम् ॥ ११६
स्त्वीयं करोति पापात्मा दण्डनीयो न संशयः । अथाशरीरिणी वाणी अन्तरिक्षात्प्रभाषते ११७
मा वधी राम गृध्रं त्वं पूर्वं दग्धं तपोबलात् । काले गौतमदग्धोऽयं प्रजानाथो जनेश्वर ॥ ११८
ब्रह्मदत्तस्तु नामैष शूरः सत्यव्रतः शुचिः । गृहमागत्य विप्रोऽस्य भोजनं प्रत्ययाचत ॥ ११९
साग्रं वर्षशतं चैष भुक्तवानृषिसत्तमः । ब्रह्मदत्तस्तु वै तस्य [*पाद्यमर्घ्यं स्वयं ततः ॥ १२०
आत्मनैवाकरोत्तस्य भोजनार्थं महाद्युते । समाविश्य गृहं तस्य ] आहारे तु महात्मनः ॥ १२१
पूर्ण(पीनं) पयोधरं नारी(र्या) हस्तेनाथ परामृशत् । अथ क्रुद्धेन मुनिना शापो दत्तोऽस्य दारुणः
गृध्रत्वं गच्छ वै राजन्नसौ शप्तो ह्यथाब्रवीत् । [+कृपां कुरु महाभाग कदोद्धारो भविष्यति १२३
दयालुस्तद्वचः श्रुत्वा पुनराह नराधिपम् ] । उत्पत्स्यते रघुकुले रामो नाम महायशाः ॥ १२४
इक्ष्वाकूणां महाभागो रामो राजीवलोचनः । तेन दृष्टोऽपशापस्त्वं भविता नरपुंगव ॥ १२५
दृष्टो रामेण तच्छ्रुत्वा नरेन्द्रः पृथिवीपतिः । गृध्रत्वं त्यज्य तच्छीघ्रं गन्धमाल्यानुलेपनः ॥ १२६
पुरुषो दिव्यरूपोऽसौ बभाषे तं नराधिपम् । साधु राघव धर्मज्ञ त्वत्प्रसादादहं विभो ॥ १२७
विमुक्तो नरकाद्घोरादपापस्तु त्वया कृतः । विसृज्य च तथा गृध्रं नररूपी महीपतिः ॥ १२८
उलूकं प्राह धर्मज्ञं स्वगृहं विश कौशिक । अहं संध्यामुपासित्वा गमिष्ये यत्र वै मुनिः ॥ १२९
अथोदकमुपस्पृश्य संध्यां कृत्वा तु पश्चिमाम् । आश्रमं प्राविशद्रामः कुम्भयोनेर्महात्मनः ॥ १३०
तस्यागस्त्यो बहुगुणं फलमूलं च सादरम् । रसवन्ति च शाकानि भोजनार्थमुपाहरत् ॥ १३१
स भुक्तवान्नरव्याघ्रस्तदन्नममृतोपमम् । प्रीतश्च परितुष्टश्च तां रात्रिं समुपाविशत् ॥ १३२
प्रभाते कल्पमुत्थाय कृत्वाऽऽह्निकमरिंदमः । ऋषिं समभिचक्राम गमनाय रघूत्तमः ॥ १३३
अभिवाद्याब्रवीद्रामो महर्षिं कुम्भसंभवम् । आपृच्छे च स मां ब्रह्मन्ननुज्ञातुं त्वमर्हसि ॥ १३४
धन्योऽस्म्यनुगृहीतोऽस्मि दर्शनेन महामुने । द्रष्टुं चैवाऽऽगमिष्यामि पावनार्थमिहाऽऽत्मनः १३५
एवं ब्रुवति काकुत्स्थे वाक्यमद्भुतदर्शनम् । उवाच परमप्रीतो राघवं स तपोधनः ॥ १३६
अत्यद्भुतमिदं वाक्यं तव राम शुभाक्षरम् । पावनं सर्वभूतानां त्वयोक्तं रघुनन्दन ॥ १३७
मुहूर्तमपि राम त्वां मैत्रेणेक्षन्ति ये नराः । पाविताः सर्वभूतेषु कथ्यन्ते त्रिदिवौकसः ॥ १३८

* एतच्चिह्नान्तर्गतः पाठो ग. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख ङ. च. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. ज. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. च. °ध्रस्तु वध्यो वै । २ झ. अङ्गी । ग. घ. ज. पीडां । ३ क. ख. ङ. च. °त्मा दुर्विनीतो महानसौ । अ° । ४ झ. भोजनार्थे । ५ झ. °श्वरः । ब्र° । ६ ञ. विप्रर्षेर्भोज° । ७ क. प्रत्यभाषत । ८ झ. °र्णं पयोददद्राजा ह° । ९ झ. विसर्जितं मया गार्ध्र्यं न° । १० ञ. विशां पतिः । ११ क. ख. ग. घ. ङ. च. ज. °तो वाघनेत्रस्तपो° । १२ क. ग. घ. च. ज. °र्वसूक्तैस्ते क° ।

मध्रशं । ६ क. ...

ये च त्वां घोरचक्षुर्भिरीक्षन्ते प्राणिनो भुवि । ते हता ब्रह्मदण्डेन सद्यो नरकगामिनः ॥ १३९
ईदृशस्त्वं रघुश्रेष्ठ पावनं सर्वदेहिनाम् । कथयन्तश्च लोकास्त्वां सिद्धिमेष्यन्ति राघव ॥ १४०
गच्छ त्वमिममव्यग्रः पन्थानमकुतोभयः । प्रशाधि राज्यं धर्मेण गतिर्हि जगतो भवान् ॥ १४१
एवमुक्तस्तु नृपतिः प्राञ्जलिः(लिं) प्रस्तुतो(तं)नृप । अभिवादयितुं चक्रे सोऽगस्त्यमृषिसत्तमम् ॥
अभिवाद्य मुनिश्रेष्ठांस्तांश्च सर्वांस्तपोधनान् । अध्यारोहत्तदाऽव्यग्रो पुष्पकं हेमभूषितम् ॥ १४३
तं प्रयान्तं मुनिगणा आशीर्वादैः समन्ततः । अपूजयन्महेन्द्राभं सहस्राक्षमिवामराः ॥ १४४
ततोऽर्धदिवसे प्राप्ते रामः सर्वार्थकोविदः । अयोध्यां प्राप्य काकुत्स्थैः सप्तकक्षमवातरत् ॥ १४५
ततो विसृज्य रुचिरं पुष्पकं कामवाहिनम् । कक्षान्तराद्विनिर्गम्य द्वास्थान्राजाऽब्रवीदिदम् ॥ १४६
लक्ष्मणं भरतं चैव गच्छध्वं लघुविक्रमाः । ममाऽऽगमनमाख्यातुं समानयत मा चिरम् ॥ १४७
श्रुत्वा तु भाषितं द्वास्था रामस्याक्लिष्टकर्मणः । गत्वा कुमारावाहूय राघवाय न्यवेदयन् ॥ १४८
द्वास्थैः कुमारावानीतौ राघवस्य निदेशतः । दृष्ट्वा तु राघवः प्रीतः प्रियौ भरतलक्ष्मणौ ॥ १४९
पर्यष्वजत रामस्तौ वाक्यं चेदमुवाच ह । कृतं मया यथा तथ्यं द्विजकार्यमनुत्तमम् ॥ १५०
धर्महेतुमतो भूयः कर्तुमिच्छामि राघवौ । भवद्भ्यामात्मभूताभ्यां राजसूयं क्रतूत्तमम् ॥ १५१
सहितो यष्टुमिच्छामि तत्र धर्मश्च शाश्वतः । पुष्करस्थेन चैवात्र ब्रह्मणा लोककारिणा ॥ १५२
शतानि त्रीणि यज्ञानामिष्ट्वा(?) षष्ट्यधिकानि च । [*इष्ट्वा हि राजसूयेन सोमो धर्मेण धर्मवित् ॥
प्राप्तः सर्वेषु लोकेषु कीर्तिस्थानमनुत्तमम् । ] इष्ट्वा तु राजसूयेन मित्रः शत्रुनिवर्हणः ॥ १५४
मुहूर्तेन सुशुद्धेन वरुणत्वमुपागतः । तस्माद्भवन्तौ संचिन्त्य कार्येऽस्मिन्वदतं हितम् ॥ १५५

भरत उवाच—

त्वं धर्मः परमः साधो त्वयि सर्वा वसुंधरा । प्रतिष्ठिता महाबाहो यशश्चामितविक्रम ॥ १५६
महीपालाश्च सर्वे त्वां प्रजापतिमिवामराः । निरीक्षन्ते महात्मानो लोकनाथ तथा वयम् ॥ १५७
प्रजाश्च पितृवद्राजन्पश्यन्ति त्वां महामते । पृथिव्यां गतिभूतोऽसि प्राणिनामिह राघव ॥ १५८
एवंविधानां यज्ञानामाहर्तासि परंतप । पृथिव्यां सर्वभूतानां विनाशो दृश्यते यतः ॥ १५९
श्रूयते राजशार्दूल सोमस्य मनुजेश्वर । ज्योतिषां सुमहद्युद्धं सङ्ग्रामे तारकामये ॥ १६०
तारा बृहस्पतेर्भार्या हृता सोमेन कामतः । तत्र युद्धं महद्वृत्तं देवदानवनाशनम् ॥ १६१
वरुणस्य क्रतौ घोरे सङ्ग्रामे मत्स्यकच्छपाः । निवृत्ते राजशार्दूल सर्वे क्षीणा जलेचराः ॥ १६२
हरिश्चन्द्रस्य यज्ञान्ते राजसूयस्य राघव । आडीवकं महद्युद्धं सर्वलोकविनाशनम् ॥ १६३
पृथिव्यां यानि सत्त्वानि तिर्यग्योनिगतान्यपि । दिव्यानां पार्थिवानां च राजसूये ध्रुवं क्षयः ॥
स त्वं पुरुषशार्दूल बुद्ध्या संचिन्त्य पार्थिव । प्राणिनां चिन्तय शुभं पूर्वं(र्वे) धर्मं समाचर ॥ १६५

श्रीराम उवाच—

प्रीतोऽस्मि तव धर्मज्ञ वाक्येनानेन शत्रुहन् । निवर्तिता राजसूयान्मतिर्मे धर्मवत्सल ॥ १६६

---

*एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ अ. मुनिना । २ अ. °ञ्जलिप्रग्रहो नृ° । ३ झ. नृपः । ४ ख. ग. घ. ङ. ज. °स्थः पद्भ्यां क° । ५ क. ख. ग. घ. ङ. च. ज. °न वै पूर्वे व° । ६ क. ख. ग. घ. ङ. च. ज. सुप्रीतेन । ७ क. ख. ङ. च. श्रुतः ।

पूर्तं धर्मं करिष्यामि कान्यकुब्जे च वामनम् । प्रतिष्ठास्याम्यहं वीर सा मे ख्यातिर्दिवं गता ।।
भविष्यति न संदेहो गङ्गा इव भगीरथात् ।। १६७

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे यज्ञनिवारणो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६४३३

---

अथ पञ्चत्रिंशोऽध्यायः ।

---

भीष्म उवाच—

कथं रामेण ब्रह्मर्षे कान्यकुब्जे तु वामनः । स्थापितः क्व च लब्धोऽसौ विस्तरान्मम कीर्तय ।।१
हृद्या च मधुरा चैषा पावनी रामकीर्तने । कीर्तिता भगवन्मह्यं हृदि कर्णसुखावहा ।। २
अनुरागेण तं लोकाः स्नेहात्पश्यन्ति राघवम् । धर्मज्ञश्च कृतज्ञश्च बुद्ध्या च परिनिष्ठितः ।। ३
प्रशास्ते पृथिवीं सर्वां धर्मेण सुसमाहितः । तस्मिन्प्रशासति महीं सर्वे च सफला द्रुमाः ।। ४
रसवन्तः प्रभूताश्च वासांसि विविधानि च । अकृष्टपच्या पृथिवी निःसपत्ना महात्मनः ।। ५
देवकार्यकृते येन रावणो लोककण्टकः । सपुत्रामात्यसहितो लीलयैव निपातितः ।। ६
तस्य बुद्धिः समुत्पन्ना पूर्णे(र्ते) धर्मे द्विजोत्तम । तस्याहं चरितं सर्वं श्रोतुमिच्छामि वै मुने ।। ७

पुलस्त्य उवाच—

कस्यचित्त्वथ कालस्य रामो धर्मपथे स्थितः । यच्चकार महाराज शृणुष्वैकमना इह ।। ८
सस्मार राघवेन्द्रस्तु कथं राज्यं विभीषणः । लङ्कायां संस्थितो राजा कथं कुर्वीत राक्षसः ।। ९
गीर्वाणेषु प्रातिकूल्यं विनाशस्येति लक्षणम् । मया तस्य तु तद्दत्तं राज्यं चन्द्रार्ककालिकम् ।।१०
तस्याविनाशेन कीर्तिः स्थिरा मे शाश्वती भवेत् । रावणेन तपस्तप्तं विनाशायाऽऽत्मनस्त्विह ११
विध्वस्तः सर्वपापिष्ठो देवकार्ये मयाऽधुना । तदिदानीं मयाऽन्वेष्यः स्वयं गत्वा विभीषणः ।।१२
संदेष्टव्यं हितं तस्य येन तिष्ठेत शाश्वतम् । एवं चिन्तयतस्तस्य रामस्यामिततेजसः ।। १३
आजगामाथ भरतो रामं दृष्ट्वाऽब्रवीदिदम् । किं त्वं चिन्तयसे देव न रहस्यं वदस्व मे ।। १४
देवकार्येऽथ पारक्ये स्वकीये वा नरोत्तम । एवं ब्रुवन्तं भरतं ध्यायमानमवस्थितम् ।। १५
अब्रवीद्राघवो वाक्यं रहस्यं न तु मे तव । भवान्बहिश्चरः प्राणो लक्ष्मणश्च महायशाः ।। १६
भवद्भ्यां रहितं नास्ति मम सत्त्वं विधारय । एषा मे महती चिन्ता कथं देवैर्विभीषणः ।। १७
वर्तते यद्धितार्थं वै दशग्रीवो निपातितः । गमिष्ये तदहं वत्स यत्रासौ च विभीषणः ।। १८
लङ्कां दृष्ट्वा पुरीं तां तु कार्यमुक्त्वा तु राक्षसम् । आलोक्य सर्वां वसुधां सुग्रीवं चैव वानरम् १९
महाराजं च शत्रुघ्नं भ्रातृपुत्रांश्च सर्वशः । एवं वदति काकुत्स्थे भरतः प्राञ्जलिः स्थितः ।। २०
उवाच राघवं वाक्यं गमिष्ये भवता सह ।[*एवं कुरु महाबाहो सौमित्रिं चाऽऽह वै पुरे ।। २१

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ ग. भगीरथम् । २ क. ख. ग घ. ङ. च. ज. विप्रर्षे । ३ क. ख. ग. ङ. च. ज. कथा । ४ क. ख. ग. घ. ङ. च. ज. सर्वकामफला । ५ ग. °पुत्रौ भ्रातॄस° । ६ क. ग. घ. च. ज. महाबाहो । ७ क. ख. ग. ङ. च. ज. राक्षसेन्द्रं तु क° । ८ ग घ. तिष्ठेच्च योगवित् । ए° । ९ क. ख ग. घ. ङ. च. ज. °ष्ट्वा प्रपीडितम् । १० क. ख. ग. घ. ङ. च. ज. धरायां । ११ झ. विदितं । १२ क. ख. ग. घ. ङ. च. ज. लङ्कां । १३ क. ख. ग. घ. ङ. च. ज. तं च । १४ क. ख. ग. घ. ङ. च. ज. कामम्° ।

रक्षा कार्या त्वया वीर यावदागमनं हि नौ] । एवं लक्ष्मणमादिश्य ध्यात्वा वै पुष्पकं नृप॥२२
आरुरोह स वै यानं कौशल्यानन्दवर्धनः । पुष्पकं च ततः प्राप्तं गान्धारविषयो यतः ॥ २३
भरतस्य सुतौ दृष्ट्वा राजनीतिं निरीक्ष्य च । पूर्वां दिशं ततो गत्वा लक्ष्मणस्य सुतौ यतः ॥२४
पुरेषु तेषु षड्रात्रमुषित्वा रघुनन्दनौ । गतौ तेन विमानेन दक्षिणामभितो दिशम् ॥ २५
गङ्गायमुनसंभेदं प्रयागमृषिसेवितम् । अभिवाद्य भरद्वाजमत्रेराश्रममभ्यगात् ॥
संभाष्य च मुनिं तं तु जनस्थानमुपागतः ॥ २६

श्रीराम उवाच—

अत्र पूर्वं हृता सीता रावणेन दुरात्मना । हत्वा जटायुषं गृध्रं योऽसौ पितृसखा हि नौ ॥ २७
अत्रास्माकं महद्युद्धं कवन्धेन कुबुद्धिना । हतेन तेन दग्धेन सीतार्थे रावणालये(?) ॥ २८
ऋष्यमूके गिरिवरे सुग्रीवो नाम वानरः । स ते करिष्यते सख्यं पम्पायां व्रज सानुजः ॥ २९
पम्पासरः समासाद्य शबरीं तत्र तापसीम् । संभाष्य दुःखितो वीर निराशो जीविते स्थितः ३०
इयं सा नलिनी वीर यस्यां वै लक्ष्मणोऽवदत् । मा कृथाः पुरुषव्याघ्र शोकं शत्रुविनाशन॥३१
आज्ञाकारिणि भृत्ये च मयि प्राप्स्यसि मैथिलीम् । अत्र मे वार्षिका मासा गता वर्षशतोपमाः ॥
अत्रैव निहतो वाली सुग्रीवार्थे परंतप । एषा सा दृश्यते वीर किष्किन्धा वालिपालिता ॥ ३३
यस्यां वसति धर्मात्मा सुग्रीवो वानरेश्वरः । वानरैः सहितो वीर यावदास्ते सभां गतः ॥ ३४
तावत्तत्राऽऽगतौ वीरौ [*पुर्यां भरतराघवौ । दृष्ट्वा तौ भ्रातरौ प्राप्तौ प्रणिपत्याब्रवीदिदम् ३५
क्व युवां प्रस्थितौ वीरौ] कार्यं किं तु करिष्यतः । विनिवेश्याऽऽसने तौ च अर्घं दत्त्वाऽऽत्मना सह
एवं सभास्थिते तत्र धर्मिष्ठे रघुनन्दने । अङ्गदोऽथ हनूमांश्च नलो नीलश्च पाटलः ॥ ३७
गवो गवाक्षो गवयः पनसश्च महायशाः । मन्त्री पुरोधा तु(स्तु) यो वै देवज्ञश्च दधीमुखः ॥ ३८
वीरः शतवली मैन्दो द्विविदो गन्धमादनः । वीरवाहुः सुवाहुश्च वीरसेनो विनायकः ॥ ३९
सूर्याभः कुमुदश्चैव सुषेणो हरियूथपः । ऋषभो विनतश्चैव गवाक्षो भीमविक्रमः ॥ ४०
ऋक्षराजश्च धूम्रश्च सहसैन्या उपागताः । अन्तःपुराणि सर्वाणि रुमा तारा तथैव च ॥ ४१
अवरोधोऽङ्गदस्यापि तथान्याः परिचारिकाः । प्रहर्षमतुलं प्राप्य साधु साध्विति चाब्रुवन् ॥४२
वानराश्च महात्मानः सुग्रीवसहितास्तदा । वानर्यश्च महाभागास्ताराद्यास्तत्र राघवम् ॥ ४३
अभिप्रेक्ष्य साश्रुकण्ठाः प्रणिपत्येदमब्रुवन् । क्व सा देवी त्वया देव या विनिर्जित्य रावणम् ४४
शुद्धिं कृत्वा हि ते वह्नौ पितुरग्रे उमापतेः । त्वया नीता पुरीं राम न तां पश्यामि तेऽग्रतः॥ ४५
न विना त्वं तया देव शोभसे रघुनन्दन । त्वया विनाऽपि सा साध्वी क्व नु तिष्ठति जानकी ४६
अन्यां भार्यां न ते विद्मो भार्याहीनो न शोभसे । क्रौञ्चयोर्मिथुनं यद्वच्चक्रवाकयुगं तथा ॥ ४७
हंसयोर्वाऽपि राजेन्द्र तथा त्वं राम जानकी । पुष्पकस्थस्य ते देव दृष्टा देवी पुरा मया ॥ ४८
गरुडासनसंस्थस्य लक्ष्मीरिव हरेर्यथा । एवं तां ब्रुवतीं तारां साश्रुनेत्रां नराधिप ॥ ४९
निरीक्ष्य सुचिरं तारां(रं) ताराधिपसमाननाम् । [+प्राह प्रवचसां श्रेष्ठो रामो राजीवलोचनः] ५०

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ झ. पुनः । २ झ. °नं कैकेय्यान° । ३ क. ख. ग. घ. ङ. च. ज. जगन्नीतिं । ४ क. ख. ग. घ. ङ. च. ज. मुनींस्तत्र ज° । ५ झ. सीताऽऽस्ते । ६ क. ग. समाग° । ७ क. ख. ग. घ. ङ. च. ज. नीलः । ८ ज. ते ।

मा रुदस्त्वं विशालाक्षि कालो हि दुरतिक्रमः । सर्वं कालकृतं विद्धि जगदेतच्चराचरम् ॥
विसृज्य ताः स्त्रियः सर्वाः सुग्रीवोऽभिमुखस्थितः ॥ ५१

सुग्रीव उवाच—

कार्येण केन भवन्ताविहाऽऽयातौ नरेश्वरौ । तच्चापि ब्रुवातां शीघ्रं कृत्यकालो हि वर्तते ॥ ५२
ब्रुवाणमेवं सुग्रीवं भरतो रामचोदितः । आचचक्षेऽथ गमनं लङ्कायां राघवस्य तु ॥ ५३
[+तौ चाब्रवीच सुग्रीवो भवद्भ्यां सहितः पुरीम् । गमिष्ये रक्षसां देवं द्रष्टुं तत्र विभीषणम् ॥
सुग्रीवेणैवमुक्ते तु गच्छस्वेत्याह राघवः] । सुग्रीवो राघवौ तौ च पुष्पके तु स्थितास्त्रयः ॥ ५४
तावत्प्राप्तं विमानं तु समुद्रस्योत्तरं तटम् । अब्रवीद्भरतं रामो ह्यत्र मे राक्षसेश्वरः ॥ ५५
चतुर्भिः सचिवैः सार्धं जीवितार्थे विभीषणः । प्राप्तस्ततो लक्ष्मणेन लङ्काराज्येऽभिषेचितः॥५६
अत्र चाहं समुद्रस्य परे पारे स्थितस्त्र्यहम् । दर्शनं दास्यते मह्यं[3] ज्ञातिकार्यं करिष्यति ॥ ५७
तावन्न दर्शनं मह्यं दत्तमेतेन शत्रुहन् । तत्र कोपः समुद्भूतश्चतुर्थेऽहनि राघव ॥ ५८
धनुरानम्य वेगेन अस्त्रं दिव्यं करे धृतम् । दृष्ट्वा मां शरणान्वेषी भीतो लक्ष्मणमाश्रितः ॥ ५९
सुग्रीवेणानुनीतोऽस्मि क्षम्यतां राघव त्वया । ततो मया शरः क्षिप्तो मरुदेशे मया कृतः ॥ ६०
उक्तोऽहं सेतुबन्धेन लङ्कां त्वं व्रज राघव । लङ्घयित्वा नरव्याघ्र वारिपूर्णं महोदधिम् ॥ ६१
एष सेतुर्महान्बद्धो[4] समुद्रे वरुणालये । त्रिभिर्दिनैः समाप्तिं वै नीतो वानरसत्तमैः ॥ ६२
चतुर्दश योजनानि प्रथमे दिवसे कृतः । द्वितीयेऽह्नि तु षट्त्रिंशत्तृतीये च शतं तथा ॥ ६३
इयं सा दृश्यते लङ्का स्वर्णप्राकारतोरणा । अवरोधो महांस्तत्र कृतो वानरसत्तमैः ॥ ६४
अत्र युद्धं महद्वृत्तं चैत्रे शुक्लत्रयोदशीम् । अष्टचत्वारिंशद्दिनं यत्रासौ रावणो हतः ॥ ६५
*अत्र प्रहतो नीलेन हतो राक्षसपुंगवः । हनूमता वै धूम्राक्षस्त्वत्रैव विनिपातितः ॥ ६६
महोदरातिकायौ च सुग्रीवेण महात्मना । हतो मया कुम्भकर्णो लक्ष्मणेनेन्द्रजित्तथा ॥ ६७
मया चात्र दशग्रीवो हतो राक्षसपुंगवः । अत्र संभाषितुं प्राप्तो ब्रह्मा लोकपितामहः ॥ ६८
पार्वत्या सहितो देवः शूलपाणिर्वृषध्वजः । इन्द्राद्याः सुरगणाः सर्वे गन्धर्वाश्च सराक्षसाः ॥६९
पिता मेऽत्र समायातो महाराजस्त्रिविष्टपात् । वृतश्चाप्सरसां संघैर्विद्याधरगणैस्तथा ॥ ७०
तेषां समक्षं सर्वेषां जानकीशुद्धिमिच्छताम् । अत्र सीता हव्यवाहं प्रविष्टा शुद्धिमागता ॥ ७१
लङ्काधिपैः सुरैर्दृष्टा गृहीता पितृशासनात् । अथाप्युक्तोऽथ राज्ञाऽहमयोध्यां गच्छ पुत्रक ॥ ७२
न मे स्वर्गो बहुमतस्त्वया हीनस्य राघव । तारितोऽहं त्वया पुत्र प्राप्स्यामीन्द्रसलोकताम् ॥७३
लक्ष्मणं चाब्रवीद्राजा पुण्यं पुत्र त्वयार्जितम् । भ्राता सम्यगनुध्यातो लोकान्प्राप्स्यसि चोत्तमान्
आहूय जानकीं राजा वाक्यं चेदमथाब्रवीत् । न च मन्युस्त्वया कार्यो भर्तारं प्रति सुव्रते ॥७५
ख्यातिर्भविष्यत्येवाग्र्या भर्तुस्ते शुभलोचने । एवं ब्रुवति रामे तु पुष्पके च व्यवस्थिते ॥ ७६
तत्र ये राक्षसवरास्ते गत्वाऽऽशु विभीषणम् । शीघ्रमावेदयामासुर्हृष्टा राक्षसपुंगवे ॥ ७७
प्राप्तो रामः ससुग्रीवो नरश्चान्यस्तथाविधः । विभीषणश्च तच्छ्रुत्वा रामागमनमन्तिके ॥ ७८

+ धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । * इदमर्धं झ. पुस्तकस्थम् ।

१ क. ख. ग घ. ङ. च. ज. चारुदंष्ट्रे । २ घ. विशेषतः । ३ क. ख. ङ. च. °ह्यं ज्ञातं का° । ग. घ. °ह्यं ज्ञात-का° । ४ क. ख. ग. घ. ङ. च. ज. °मैया बद्धो । ५ क. ख. ग. घ. ङ. च. ज. °कृचतुर्दशी° । ६ ग. घ. ज. धूम्राख्यस्त्व° । ७ झ. °वाप्सरर।° । ८ क. ख. ग. घ. ङ च °ग्रीवश्चाराश्चास्य तथाऽवदन् । वि° ।

चारांस्तान्पूजयामास सर्वकामधनागमैः । अलंकृत्य पुरीं तां तु निष्क्रान्तः सचिवैः सह ॥ ७९
दृष्ट्वा रामं विमानस्थं मेराविव दिवाकरम् । अष्टाङ्गप्रणिपातेन नत्वा राघवमब्रवीत् ॥ ८०
अद्य मे सफलं जन्म प्राप्ताः सर्वे मनोरथाः । यद्दृष्टौ देवचरणौ जगद्वन्द्यौ च वन्दितौ ॥ ८१
कृतश्लाघो हि भगवाञ्शक्रादीनां दिवौकसाम् । [*आत्मानमधिकं मन्ये त्रिदशेशात्पुरंदरात् ]॥
+देवस्य दर्शनात्तस्य स्पृहणीयो दिवौकसाम् । अभिवन्द्य स रामं तु आलिङ्ग्य भरतं हरिम् ८३
लङ्कां प्रवेशयामास विशिष्टायां त्रिविष्टपात् । रावणस्य गृहे दीप्ते सर्वरत्नोपशोभिते ॥ ८४
उपविष्टे तु काकुत्स्थे अर्घं दत्त्वा विभीषणः । उवाच प्राञ्जलिर्भूत्वा सुग्रीवं भरतं तथा ॥ ८५
इहाऽऽगतस्य रामस्य यद्दास्ये न तदस्ति मे । इयं च लङ्का रामेण रिपुं त्रैलोक्यकण्टकम् ॥ ८६
हत्वा तं पापकर्माणं दत्ता पूर्वं पुरी मम । इयं पुरी इमे दारा अमी पुत्रास्तथा ह्यहम् ॥ ८७
सर्वमेतन्मया दत्तं प्रतिग्राह्यं नमोऽस्तु ते । प्रकृतयस्ततः सर्वा लङ्कावासीजनस्तथा ॥ ८८
आजग्मू राघवं द्रष्टुं कौतूहलसमन्विताः । उक्तो विभीषणस्तैस्तु रामं दर्शय नः प्रभो ॥ ८९
विभीषणेन कथिता राघवाय महात्मने । तेषामुपायनं सर्वं भरतो रामचोदितः ॥ ९०
जग्राह राक्षसेन्द्राणां धनरत्नौघसंचयान् । एवं तत्र त्र्यहं रामो ह्यवसद्राक्षसालये ॥ ९१
चतुर्थेऽहनि संप्राप्ते रामे चापि सभास्थिते । *कैकेयी पुत्रमाहेदं रामं द्रक्ष्यामि पुत्रक ॥ ९२
वधूभिः सहिता गत्वा त्वं विज्ञापय पुत्रक । दृष्टे तस्मिन्महापुण्यं प्राप्यते मुनिसत्तमैः॥ ९३
विष्णुरेष महाभागश्चतुर्मूर्तिः सनातनः । सीता लक्ष्मीर्महाभागा न बुद्धा साऽग्रजेन ते ॥ ९४
पित्रा ते पूर्वमाख्यातं देवानां संनिधौ गते । कुले रघूणां वै विष्णुः पुत्रो दशरथस्य तु ॥ ९५
भविष्यति विनाशाय दशग्रीवस्य राघवः ॥ ९६

विभीषण उवाच—

एवं कुरुष्व वै मातर्गृह्य शुक्लाम्बरं नवम् । पात्रे च चन्दनं मुख्यं दधिक्षौद्रं सहाक्षतैः ॥ ९७
दूर्वास(भिः)सर्षपैः सार्धं कुरु पुत्रस्य दर्शनम् । सरमामग्रतः कृत्वा याश्चान्या देवकन्यकाः ॥९८
व्रजस्व राघवाभ्याशं तस्मादग्रे व्रजाम्यहम् । एतमुक्त्वा गतो(तं) रक्षो यत्र रामो व्यवस्थितः॥
उत्सार्य च जनान्सर्वान्रामं द्रष्टुं समागतान् । सभां तां विमलां कृत्वा रामं चाभिमुखं स्थितः॥

विभीषण उवाच—

विज्ञाप्यं शृणु मे देव वदतश्च विशां पते । दशग्रीवं कुम्भकर्णं या च मामप्यजीजनत् ॥ १०१
इयं सा देव माता नः पादौ ते द्रष्टुमिच्छति । तस्यास्त्वं तु कृपां कृत्वा दर्शनं दातुमर्हसि॥१०२

श्रीराम उवाच—

अहं तस्याः समीपं तु मातृदर्शनकाङ्क्षया । गमिष्ये राक्षसेन्द्र त्वं शीघ्रं याहि ममाग्रतः ॥ १०३
प्रतिज्ञाय तु तद्वाक्यमुत्तस्थौ तु वरासनात् । मूर्ध्नि चाञ्जलिमाधाय प्रणाममकरोत्प्रभुः ॥ १०४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + इदमर्धं घ. पुस्तकस्थम् । * ब्रह्माण्डपुराणेऽध्यात्मरामायण उत्तरकाण्डे प्रथमसर्गे इयं " कैकसी " इति नाम्ना प्रसिद्धा ।

---

१ क. ख. ङ. च. ज. °त्तं सर्वमक्षय्यमस्तु । २ क. ख. ग. घ. ङ. च. ज. निकषा । ३ क. ख. ग. घ. ङ. च. ज. °नां दिवि संग° । ४ क. ख. ग. घ. ङ. च. ज. रक्षसः । ५ ग. °म्बरत्रयम् । ६ क. ख. घ. ङ. च. ज. पात्रं चन्दनसंयुक्तं द° । ग. पात्रं च जलसंयुक्तं द° । ७ क. ख. ङ. च. ज. °र्वासहार्घं कुरु वै राजपु° । ८ झ. °रु यत्तस्य मङ्गलम् । ९ झ. विजनां । १० ख. ग. घ. ङ. ज. °सेन्द्रेन्द्र शी° ।

अभिवादयेऽहं भवतीं माता भवसि धर्मतः । महता तपसा चापि पुण्येन विविधेन च ॥ १०५
इमौ ते चरणौ [*देवि मानवो यदि पश्यति । पूर्णोऽस्मि तदहं पूतो दृष्ट्वेमौ पुत्रवत्सले ॥ १०६
कौशल्या मे] यथा माता भवती च तथा ह्यसि । कैकेयी चाब्रवीद्रामं चीरं जीव जयस्व च ॥
भर्त्रा मे कथितं वीर विष्णुर्मानुषरूपधृक् । अवतीर्णो रघुकुले हितार्थं च दिवौकसाम् ॥ १०८
दशग्रीवविनाशाय भूतिं दातुं विभीषणे । वालिनो निधनं चैव सेतुबन्धं तु सागरे ॥ १०९
दशरथस्य वै पुत्रः कृत्यं सर्वं करिष्यति । इदानीं त्वं मया ज्ञातः स्मृत्वा तद्भर्तृभाषितम्॥११०
सीता लक्ष्मीर्भवान्विष्णुर्देवा वै वानरास्तथा । गमिष्यामि गृहं पुत्र स्थिरां कीर्तिमवाप्नुहि १११

सरमोवाच—

इहैव वत्सरं पूर्णमशोकवनिकास्थिता । सेविता जानकी देवी सुखं तिष्ठति ते प्रिया ॥ ११२
नित्यं स्मरामि वै पादौ सीतायास्तु परंतप । कदा द्रक्ष्यामि तां देवीं चिन्तयाना त्वहर्निशम् ॥
किमर्थं देवदेवेन नाऽऽनीता जानकी त्विह । एकाकी नैव शोभां त्वं प्राप्नोषि च विना तया ११४
समीपे शोभते सीता त्वं तु तस्याः परंतप । एवं ब्रुवती भरतः काऽप्येषा राघवं वचः ॥ ११५
ब्रूते चेङ्गितविद्रामो भरतं प्राह सत्वरम् । विभीषणस्य भार्या वै सरमा नाम नामतः ॥ ११६
प्रिया सखी महाभागा सीतायाः सुदृढं मता । सर्वं कालकृतं पश्य न जाने किं करिष्यति ११७
गच्छ त्वं सुभगे भर्तुर्गृहं पालय शोभने । मां त्यक्त्वा हि गता देवी भाग्यहीनं निधिर्यथा ११८
तया विरहितः सुभ्रू रतिं विन्दे न कर्हिचित् । शून्या इव दिशः सर्वाः पश्यामीह मतिभ्रमात् ॥
विसृज्य तां तु सरमां सीतायास्तु प्रियां सखीम् । गतायामथ कैकेय्यां रामः प्राह विभीषणम्॥
देवताभ्यः प्रियं कार्यं नापराध्यास्त्वया सुराः । आज्ञया देवराजस्य वर्तितव्यं त्वयाऽनघ १२१
लङ्कायां मानुषो यो हि समागच्छेत्कथं त्विह । राक्षसैर्न च हन्तव्यो प्रष्टव्यः स यथा त्वहम्॥

विभीषण उवाच—

आज्ञया ते नरव्याघ्र करिष्ये सर्वमेव तत् । विभीषणे हि वदति वायू राममुवाच ह ॥ १२३
इहाऽऽस्ते वैष्णवी मूर्तिः पूर्वं बद्धो बलिर्यया । तां नयस्व महाभाग कान्यकुब्जे प्रतिष्ठय॥ १२४
विदित्वा राघवमतं वायुना समुदाहृतम् । विभीषणस्त्वलंकृत्य रत्नैः सर्वैश्च वामनम् ॥ १२५
आनीय चाऽऽर्पयद्रामे वाक्यं चेदमुवाच ह । यदा वै निर्जितः शक्रो मेघनादेन राघव ॥ १२६
तदा वै वामनस्त्वेष आनीतो जयलक्षणम् । नयस्व त्वमिमं देवं देवदेव प्रतिष्ठय ॥ १२७
तथेति राघवः कृत्वा पुष्पकं तु समारुहत् । धनरत्नमसंख्येयं वामनं च सुरोत्तमम् ॥ १२८
गृह्य सुग्रीवभरतावारूढौ पुष्पकं तदा । व्रजन्नेवाम्बरे रामस्तिष्ठेत्याह विभीषणम् ॥ १२९
राघवस्य वचः श्रुत्वा भूयोऽप्याह स राघवम् । करिष्ये सर्वमेतद्धि यदाज्ञप्तं विभो त्वया १३०
सेतुनाऽनेन राजेन्द्र पृथिव्यां सर्वमानवाः । आगम्य प्रतिबाधेयुराज्ञाघातो भवेत्तव ॥ १३१

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. ज. °दनसंयुक्तं मा° । २ क. ख. ङ. च. ज. निकषा । ३ क. ख. ग. घ. ङ. च. ज. सुखी भव । ४ क. ख. ग. घ. ङ. च. ज. पुण्यैः । ५ क. ख. ग. घ. ङ. च. ज. °नं गतिर्य° । ६ क. ख. ग. घ. ङ. च. ज. पुनर्भ्रमन् । ७ क. ख. ग. घ. ङ. च. ज. °तायां निकषायां तु रा° । ८ क. ख. ग. छ. ङ. च. ज. राजराजस्य । ९ क. ख. ग. घ. ङ. च. ज. °व्यो द्रष्टव्योऽसौ य° । १० ग. घ. ज. महाभागां । ११ क. ख. ग. घ. ङ. च. ज. जलजेक्षणः । १२ क. ख. घ. ङ. च. ज. °ढौ वामनादनु । व्र° ।

कोऽत्र मे नियमो देव किंतु कार्यं मया विभो । श्रुत्वैतद्राघवो वाक्यं रक्षसा तेन भाषितम् ॥ १३२
कार्मुकं गृह्य हस्तेन रामः सेतुं द्विधाऽच्छिनत् । त्रिर्विभज्य च वेगेन मध्ये वै दशयोजनम् ॥ १३३
छित्त्वा तु योजनं चैकमेवं खण्डत्रयं कृतम् । वेलावनं समासाद्य रामः पूजामुमापतेः ॥ १३४
कृत्वा रामेश्वरं नाम्ना देवदेवं [1]त्रिलोचनम्[2] । प्रतिषिद्धोऽयं रामेण सागरो नृपनन्दन ॥ १३५
दक्षिणोदधे त्वं चैवं मा गर्ज मा प्रवाहय । एवं च प्रतिषिध्यैनं तं च दैव्यं व्यसर्जयत् ॥
अन्तरिक्षादभूद्वाणी मेघगम्भीरनिस्वना ॥ १३६

रुद्र उवाच—

भो भो राघव भद्रं ते स्थितोऽहमिह सांप्रतम् । यावज्जगदिदं [3]वीर यावदेषा धरा स्थिता ॥ १३७
यावदेव च ते सेतुस्तावत्स्थास्यामि राघव । श्रुत्वैतद्देवदेवस्य गिरंताममृतोपमाम् ॥
उवाच राघवः प्रीतो वाक्यं मतिमतां वरः ॥ १३८

श्रीराम उवाच—

नमस्ते देवदेवेश भक्तानामभयंकर । गौरीकान्त नमस्तुभ्यं दक्षयज्ञविनाशन ॥ १३९
नमः शर्वाय रुद्राय भवाय वरदाय च । पशूनां पतये नित्यमुग्राय च कपर्दिने ॥ १४०
महादेवाय भीमाय त्र्यम्बकाय विशां पते । ईशानाय भगघ्नाय नमोऽस्त्वन्धकघातिने ॥ १४१
नीलग्रीवाय भीमाय वेधसे वेधसा स्तुत । कुमारशत्रुविघ्नाय कुमारजननाय च ॥ १४२
विलोहिताय धूम्राय शिवाय क्रथनाय च । नित्यं नीलशिखण्डाय शूलिने [4]दिव्यशायिने ॥ १४३
[5]उग्राय च त्रिनेत्राय हिरण्यवसुरेतसे । [6]अचिन्त्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च ॥ १४४
अभिगम्याय काम्याय सद्योजाताय वै नमः । वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे ॥ १४५
तप्यमानाय [7]सलिले ब्रह्मण्याय जयाय च । विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते ॥ १४६
नमो नमस्ते दिव्याय प्रपन्नार्तिहराय च । भक्तानुकम्पिने नित्यं विश्वतेजोमनोगते ॥ १४७

पुलस्त्य उवाच—

एवं संस्तूयमानस्तु देवदेवो हरो [8]नृप । उवाच राघवं वाक्यं भक्तिनम्रं पुरः स्थितम् ॥ १४८

रुद्र उवाच—

भो भो राघव भद्रं ते ब्रूहि यत्ते मनोगतम् । यावदेव प्रयच्छामि नास्त्यदेयं मया हि ते ॥ १४९
पुष्कराक्ष महादेव देवदेवः सनातनः । भवान्नारायणो नूनं गूढो मानुषयोनिषु ॥ १५०
अवतीर्णो देवकार्यं कृतं तच्च त्वयाऽनघ । इदानीं व्रज स्वस्थानं कृतकार्यो हि शत्रुहन्[9] ॥ १५१
इह त्वया कृतस्थाने मदीये रघुनन्दन । आगत्य मानवा [10]राम पश्येयुरिह सागरे ॥ १५२
महापातकयुक्ता ये तेषां पापं विनङ्क्ष्यति । ब्रह्मवध्यादिपापानि दुष्टानि यानि कानिचित् ॥ १५३
दर्शनादेव नश्यन्ति नात्र कार्या विचारणा । गच्छ त्वं वामनं स्थाप्य गङ्गातीरे रघूद्वह ॥ १५४

---

१ क. ख. ग. घ. ङ. च. ज. जनार्दनम् । ञ. जनार्दनः । २ क. ख. ग. घ. ङ. च. ज. °म् । अभिषिच्याथ परमं वामनं रघुनन्दनः । दक्षिणमुदधिं चैव आजगामाथ राघवः । अ° । "आजगामाथ राघवः" इत्यत्र क. ख. ङ. च. पुस्तकेषु "निर्जगाम त्वरान्वितः" इति ग. ज. पुस्तकेषु च "आजगाम त्वरान्वितः" इति पठ्यते । ३ क. ख. ग. घ. ङ. च. ज. राम । ४ ख. ङ. च. दैत्यनाशिने । ५ झ. उरगाय त्रि° । ६ ख. ग. घ. ङ. च. ज. अनिन्द्याया° । ७ ख. ङ. च. ज. तप्याय । ग. घ. शान्ताय । ८ ख. ग. घ. ङ. च. ज. हरिम् । ९ क. ख. ङ. च. °न् । त्वया कृतं परं स्थानं मदीयं र° । १० क. ख. ग. घ. ङ. च. ज. राजन्पश्ये° ।

पृथिव्यां बहुशः कृत्वा भागानष्टौ परंतप । श्वेतद्वीपं स्वकं स्थानं व्रज देव नमोऽस्तु ते ॥ १५५
प्रणिपत्य ततो रामः तीर्थं प्राप्तस्तु पुष्करम् । विमानं तु न यात्यूर्ध्वं वेष्टितं तत्तु राघवः ॥ १५६
किमिदं वेष्टितं यानं निरालम्बेऽम्बरे स्थितम् । भवितव्यं कारणेन सुग्रीवैतन्निशामय ॥ १५७
सुग्रीवो रामवचनादवतीर्य धरातलम् । तावत्पश्यति ब्रह्माणं सुरसिद्धसमन्वितम् ॥ १५८
ब्रह्मर्षिपूगसहितं चतुर्वेदसमन्वितम् । दृष्ट्वाऽऽगत्याब्रवीद्रामं सर्वलोकपितामहः ॥ १५९
सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः । तेनैव पुष्पको देवं न लङ्घयति पितामहम् ॥ १६०
अवतीर्य ततो रामः पुष्पकाद्धेमभूषितात् । नत्वा विरिञ्चिनं देवं गायत्र्या सह संस्थितम्॥१६१
अष्टाङ्गप्रणिपातेन पश्चाङ्गालिङ्गितावनिः । तुष्टाव प्रणतो भूत्वा नत्वा देवं विरिञ्चिनम् ॥ १६२

श्रीराम उवाच—

नमामि लोककर्तारं प्रजापतिसुरार्चितम् । देवनाथं लोकनाथं प्रजानाथं जगत्पतिम् ॥ १६३
नमस्ते देवदेवेश सुरासुरनमस्कृत । भूतभव्यभवन्नाथ हर पिङ्गललोचन ॥ १६४
बालस्त्वं वृद्धरूपी च नीलग्रीव महोदर । [*तारणश्चासि देवस्त्वं त्रैलोक्यप्रभुरीश्वरः ॥ १६५
हिरण्यगर्भ पद्मगर्भ वेदगर्भ स्मृतिप्रिय] । [+महासिद्ध महापद्मी महादण्डी च मेखली ॥ १६६
कालश्च कालरूपी च नीलग्रीवो विदां वरैः] । वेदकर्ताऽर्भको नित्यः पशूनां पतिरव्ययः १६७
दर्भपाणिर्हंसकेतुर्भोक्ता गोप्ता हरो हरिः । जटी मुण्डी शिखी दण्डी लगुडी च महायशाः १६८
भूतेश्वरः सुराध्यक्षः सर्वात्मा सर्वभावनः । सर्वगः सर्वहारी च स्रष्टा च गुरुरव्ययः ॥ १६९
कमण्डलुधरो देवः स्रुक्स्रुवादिधरस्तथा । [*हवनीयोऽर्चनीयश्च ओंकारो ज्येष्ठसामगः] ॥ १७०
मृत्युश्चैवामृतश्चैव पारियात्रश्च सुव्रतः । ब्रह्मचारी व्रतधरो गुहावासी सुपङ्कजः ॥ १७१
अमरो दर्शनीयश्च बालसूर्यनिभस्तथा । पद्मवासी च भगवान्सावित्रीपतिरच्युतः ॥ १७२
वरप्रदो दानवानां विष्णोर्लब्धवरस्तथा । कर्मकर्ताऽधर्महर्ता अभयहस्त एव च ॥ १७३
अग्निमुखो ह्यग्निकेतुर्मुनिरूपो दिशां पतिः । उत्सवो वेदस्रष्टाऽसि चतुर्वर्गाधिपस्तथा ॥ १७४
[+दक्षिणे वामतश्चापि पत्नीभ्यामुपसेवितः । भिक्षुश्च भिक्षुरूपी च त्रिजटी[6] जटिलश्च यः १७५
चित्तवृत्तिकरः कामो मधुर्मधुकरस्तथा ।] वानप्रस्थो वनगत आश्रमैः पूजितस्तथा ॥ १७६
जगद्धाता च कर्ता च पुरुषः शाश्वतो ध्रुवः । धर्माध्यक्षो विरूपाक्षो नृवर्त्मा भूतभावनः १७७
त्रिवेदो बहुरूपश्च सूर्यायुतसमप्रभः । मोहको बन्धकश्चैव दानवानां विशेषतः ॥ १७८
देवदेवोऽतिदेवश्च पद्माङ्कितजटस्तथा । हरिच्छ्मश्रुर्धनुर्धारी भीमो धर्मपराक्रमः ॥ १७९
एवं स्तुतस्तु रामेण ब्रह्मा ब्रह्मविदां वरः । उवाच प्रणतं रामं करे गृह्य पितामहः ॥ १८०

ब्रह्मोवाच—

विष्णुस्त्वं मानुषे देहे मया पूर्वं प्रवेशितः । देवानां कार्यकरणे अवतीर्णो महीतले ॥ १८१

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ग. ङ. च. ज. °र्षिसंघस° । २ क. कामश्च कामरू° । ३ ख. ङ. °रः। देवक° । ४ क. ख. ग. घ. ङ. च. °केतुः कर्ता हर्ता ह° । ५ ग. °ण्डी च भस्मी च ल° । ६ क. ख. ङ. च. ज. °टी लब्धनिश्चयः । ७ क. ग. घ. च. ज. त्रिधर्मो । ८ झ. नृवेदो । ९ झ. °भः । बोधको बन्धनश्चै° । १० ञ. °देवश्च पद्माङ्कस्त्रिनेत्रोऽब्जज° ।

कृतं तद्भवता सर्वं देवकार्यं त्वया विभो । इमं तु वामनं स्थाप्य जाह्नव्या दक्षिणे तटे ॥ १८२
अयोध्यां स्वपुरीं गत्वा सुरलोकं व्रजस्व ह । विसृष्टो ब्रह्मणा रामः प्रणिपत्य पितामहम् ॥१८३
आरूढः पुष्पकं यानं प्रायाद्वै मथुरां पुरीम् । सभार्यं पुत्रसहितं शत्रुघ्नं शत्रुकर्षणम् ॥ १८४
तुतोष राघवः श्रीमान्भरतः सहरीश्वरः । शत्रुघ्नो भ्रातरौ प्राप्तौ शक्रोपेन्द्राविवाऽऽगतौ ॥१८५
प्रणिपत्य ततो मूर्ध्ना पञ्चाङ्गालिङ्गितावनिः । उत्थाप्य चाङ्कमारोप्य रामो भ्रातरमञ्जसा ॥१८६
भरतश्च ततः पश्चात्सुग्रीवस्तदनन्तरम् । उपविष्टाय रामाय अर्घ्यमादाय सत्वरः ॥ १८७
राज्यं निवेदयामास अष्टाङ्गं राघवे तदा । प्राप्तं श्रुत्वा ततो रामं सर्वो वै माथुरो जनः ॥ १८८
वर्णा ब्राह्मणभूयिष्ठा द्रष्टुं चैनं समागताः । संभाष्य प्रकृतीः सर्वान्नैगमान्ब्राह्मणैः सह ॥ १८९
दिनानि पञ्च वै राम उष्य गन्तुं मनो दधे । शत्रुघ्नस्तु ततो रामे वाजिनोऽथ गजांस्तथा॥१९०
कृताकृतं च कनकं तत्रोपायनमाहरत् । रामस्त्वाह ततः प्रीतः सर्वमेतन्मया तव ॥ १९१
दत्तं पुत्रौ चाभिषिञ्च राजानौ माथुरे जने। एवमुक्त्वा गतो रामः प्राप्तो(प्ते) मध्यंदिने रवौ१९२
महोदयं समासाद्य गङ्गातीरे स वामनम् । प्रतिष्ठाप्य द्विजानाह भाविनः पार्थिवांस्तथा ॥ १९३
कृतोऽयं धर्मस्य मया सेतुर्भूतिविवर्धनः । प्राप्ते काले पालनीयो न च लोप्यः कथंचन ॥ १९४
प्रसारितकरेणैवं प्रार्थनैषा मया कृता । नृपाः कृते मयाऽर्थित्वे यज्ञः संस्क्रियतामिति ॥ १९५
नित्यं सुनन्दिनी पूजा कार्या सर्वैरतन्द्रितैः । ग्रामान्दत्त्वा धनं तच्च लङ्कायां आहृतं च यत्१९६
प्रेषयित्वा तु किष्किन्धां सुग्रीवं वानरेश्वरम् । अयोध्यामागतो रामः पुष्पकं तमथाब्रवीत् १९७
नाऽऽगन्तव्यं त्वया भूयस्तिष्ठ यत्र धनेश्वरः । कृतकृत्यस्ततो रामः कर्तव्यं नाप्यमन्यत ॥ १९८

पुलस्त्य उवाच—

एवं ते भीष्म रामस्य कथायोगेन पार्थिव । उत्पत्तिर्वामनस्योक्ता किं भूयः श्रोतुमिच्छसि १९९
कथयामि च ते सर्वं यत्र कौतूहलं नृप । सर्वं ते कीर्तयिष्यामि येनार्थी नृपसत्तम ॥ २००

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे वामनप्रतिष्ठावर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६६३३

---

अथ षट्त्रिंशोऽध्यायः ।

---

भीष्म उवाच—

कथितं रामदेवस्य माहात्म्यं विस्तरेण वै । पुनस्तस्यैव माहात्म्यं विष्णोरेव वदस्व मे ॥ १
पद्मरूपमभूदेतत्कथं हेममयं जगत् । कथं च वैष्णवी सृष्टिः पद्ममध्येऽभवत्पुरा ॥ २
कथं पाद्मे महाकल्पेऽभवत्पद्ममयं जगत् । जलार्णवगतस्येह नाभौ जातं जलोद्भवम् ॥ ३
प्रतापं पद्मनाभस्य स्वपतः सागराम्भसि । पुष्करे तु कथं जाता देवा ऋषिगणाः पुरा ॥ ४
एतदाख्याहि निखिलं योगं योगविदां वर । शृण्वतस्तस्य मे कीर्तिं न तृप्तिरुपजायते ॥ ५

१ ग. घ. मिथिलां । २ झ. दृष्ट्वा । ३ ग. घ. मैथिलो । ४ ग. घ. ख. °न्तुं महोदधिम् । श° । झ. °न्तुं महोदयम् । श° । ५ ग. घ. ज. महोदधिं । ६ क. ख. घ. ङ. च. ज. यत्क्षेमं क्रियतामिह । नि° । ग. यत्क्रमं क्रियतामिह । नि° । ७ क. ख. ग. घ. ङ. च. °त्यं दैनंदिनी° । ज. °त्यं वै नन्दिनी पू° । ८ क. ख. घ. ङ. च. ज. मम । ९ क. ख. ग. घ. ङ. च. ज. वामनस्यैव । १० क. ख. ङ. च. ज. °देवं नाभौ येनाभवज्जग° । ग. घ. °देवं कथं तेनाभवज्जग° । ११ क. ख. ग. घ. ङ. च. ज. जलानुगम् । १२ क. ख. ग. घ. ङ. च. ज. प्रभावं ।

[*कियता चैव कालेन शोभते पुरुषोत्तमः । कियन्तं वै स्वपिति च कति कालस्य संभवाः] ६
कियता वाऽथ कालेन उत्तिष्ठति महायशाः । कथं चोत्थाय भगवान्सृजते निखिलं जगत् ॥ ७
के प्रजापतयस्तावदासन्पूर्वे महामुने । कथं निर्मितवां[1]श्चैव चित्रं लोकं सनातनम् ॥ ८
कथमेकार्णवे शून्ये नष्टे स्थावरजङ्गमे[2] । नष्टदेवासुरनरे प्रनष्टोरगराक्षसे ॥ ९
नष्टानलानिले लोके नष्टधर्मे महीतले । केवले गह्वरीभूते महाभूतविपर्यये ॥ १०
विभुर्भूतपतिः साक्षान्महातेजा[3] मखाकृतिः । सु[4]प्तः सुरवरश्रेष्ठो विधिमास्थाय योगवित् ॥ ११
शृण्वतः परया भक्त्या ब्रह्मन्नेतदशेषतः । वक्तुमर्हसि ध[5]र्मिष्ठ यशो नारायणात्मकम्[6] ॥
श्रद्धिनश्चोपविष्टस्य भगवन्वक्तुमर्हसि ॥ १२

पुलस्त्य उवाच—

नारायणस्य यशसः श्रवणे या तव स्पृहा । सद्वंशान्वयभूतस्य न्याय्यं कुरुकुलोद्वह ॥ १३
शृणुष्वाऽऽदिपुराणेषु देवेभ्यश्च यथाश्रुति । ब्राह्मणानां च वदतां श्रुत्वा चैतन्महात्मनाम् ॥ १४
यथा च तपसा दृष्ट्वा बृहस्पतिसमद्युतिः । पराशरसुतः श्रीमान्गुरुर्द्वैपायनोऽब्रवीत् ॥ १५
तत्तेऽहं कथयिष्यामि यथामति यथाश्रुतम् । यद्विज्ञातं मया सम्यगृषिम[7]न्त्रेण सत्तम ॥ १६
कः समुत्सहते ज्ञातुं परं नारायणात्मकम् । विश्वं पिता यं ब्रह्माऽपि न वेदयति तत्त्वतः ॥ १७
तत्कर्म विश्वदेवानां तद्रहस्यं महर्षिणाम् । [†तदिज्यं सर्वयज्ञानां तत्तत्त्वं सर्वदर्शिनाम् ॥ १८
तदध्यात्ममध्यात्मविदां नरकं च विकर्मिणाम् । अधिदैवं च तद्दैवमधिदैवतसंज्ञितम् ॥ १९
अधिभूतं च तद्रूपं परं च परमर्षिणाम्] । स यज्ञो वेदनिर्दिष्टस्तत्तपः कवयो विदुः ॥ २०
यः कर्ता कारको बु[8]द्धिर्मनः क्षेत्रज्ञ एव च । [+प्रणवः पुरुषः शास्ता एकश्चेति विभाव्यते २१
प्राणः पञ्चविधश्चैव ध्रुवमक्षरमेव च] । कालः पाकश्च यज्ञश्च द्र[9]ष्टा चाधीत एव च ॥ २२
उच्यते विविधैर्भावैः स एवायं तु तत्परम् । स एव भगवान्सर्वं करोति न करोति च ॥ २३
सोऽस्मान्कारयते स[10]र्वानन्येऽपि व्याकुलीकृताः । य[11]जामहे तमेवाऽऽद्यं[12] तमेवेच्छामि निर्वृतः ॥
यो वक्ता यच्च वक्तव्यं यश्चायं तद्ब्रवीमि ते । श्रूयते यच्च वै श्राव्यं यच्चान्यत्परिजल्पितम् ॥ २५
या कथा याश्च श्रुतयो यो धर्मो धर्मतत्परः । विश्वं विश्वपतिर्यश्च स तु नारायणः स्मृतः ॥ २६
यत्सत्यं यदनृतमाद्यमध्यभूतं यच्चान्त्यं निरवधिकं च यद्भविष्यम् ।
यत्किंचिच्चरमचरं यदस्ति वाऽन्यत्तत्सर्वं पुरुषवरः प्रधानभूतः ॥ २७
चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् । तस्य तावच्छती संध्या द्विगुणा कुरुनन्दन ॥ २८
यत्र धर्मश्चतुष्पादस्त्वधर्मः पादविग्रहः । स्वधर्मनिरताः शान्ता जायन्ते यत्र मानवाः ॥ २९
विप्राः स्थिता धर्मपरा राजवृत्ते स्थिता नृपाः । कृष्यामभिरता वैश्याः शूद्राः शुश्रूषवस्तथा ॥ ३०

---

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः । † धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. ज. °वांस्तत्र चि° । २ ख. ङ. च. °मे । भूगोलके प्रदग्धे तु प्र° । ग. घ. °मे । कथमेकार्णवे दग्धे प्र° । ३ क. ख. ग. घ. ङ. च. ज. महाद्युतिः । ४ ग. घ. आस्ते । ५ क. ख. ग. घ. ङ. च. ज. धर्मज्ञ । ६ क. ख. ग. ङ. च. ज. °म् । सुखिनः सूप° । ७ क. ख. ग. घ. ङ. च. ज. °मार्गेण । ८ क. ख. ङ. च. ज. बुद्धिर्यतः । ग. घ. वृद्धिर्यतः । ९ क. ख. घ. ङ. च. ज. यष्टा । १० ग. घ. ज. सर्वान्साम्येन च कृतिः कृता । य° । ११ घ. ज. यतामहे । १२ क. ख. ङ. च. °द्यं स एवोत्थाननिर्वृतः । घ. ज. °द्यं तमेवोत्थाननिर्वृतः ।

तदा सत्यं च शौचं च धर्मश्चैव विवर्धते । सद्भिराचरितं कर्म क्रियते कार्यते च यत् ॥ ३१
एतत्कृतयुगे वृत्तं सर्वेषामेव पार्थिव । प्राणिनां धर्मशीलानां नराणां नीचजन्मनाम् ॥ ३२
त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते । तस्य तावच्छती संध्या द्विगुणा परिकीर्तिता ॥ ३३
द्वाभ्यामधर्मः पादाभ्यां त्रिभिर्धर्मो व्यवस्थितः । यत्र सत्यं च शौचं च क्रियाधर्मो विधीयते ३४
त्रेतायां विकृतिं यान्ति वर्णा लोभेन संयुताः । चातुर्वर्ण्यस्य वै(वि)कृत्या यान्ति दौर्बल्यमाश्रमाः
एषा त्रेतायुगगतिर्विचित्रा देवनिर्मिता । द्वापरं द्विसहस्रं तु वर्षाणां कुरुनन्दन ॥ ३६
तस्य तावच्छती संध्या द्विगुणं युगमुच्यते । तत्राप्यतीवार्थपराः प्राणिनो रजसा हताः ॥ ३७
शठा नैष्कृतिकाः क्षुद्रा जायन्ते कुरुनन्दन । द्वाभ्यां धर्मः स्थितः पद्भ्यामधर्मस्त्रिभिरुत्थितः ॥
विपर्ययशतैर्धर्मः क्षयमेति कलौ युगे । *ब्रह्मण्यभावो व्ययते तथाऽऽस्तिक्ये विवर्जिते ॥ ३९
व्रतोपवासास्त्यज्यन्ते कलौ वै युगपर्यये । तदा वर्षसहस्रं तु वर्षाणां द्वे शते तथा ॥ ४०
संध्यया सह संख्यातं क्रूरं कलियुगं तथा । यत्राधर्मश्चतुष्पादः स्याद्धर्मः पादविग्रहः ॥ ४१
कामिनस्तामसाः क्षुद्रा जायन्ते यत्र मानवाः । नैवात्र साधकः कश्चिन्न साधुर्न च सत्यवाक् ४२
नास्तिका ब्राह्मणाभक्ता जायन्ते तत्र मानवाः । अहंकारगृहीताश्च प्रक्षीणस्नेहबन्धनाः ॥ ४३
विप्राः शूद्रसमाचाराः सन्ति सर्वे कलौ युगे । आश्रमाणां विपर्यासः कलौ संप्रतिवर्तते ॥ ४४
वर्णानां चैव संदेहो युगान्ते कुरुनन्दन । एषा द्वादशसाहस्री युगाख्या पूर्वनिर्मिता ॥ ४५
एवं सहस्रपर्यन्तं तदहो ब्राह्ममुच्यते । ततोऽहनि गते तस्मिन्सर्वेषामेव जीविनाम् ॥ ४६
शरीरनिर्वृतिं दृष्ट्वा कालः संहारबुद्धिमान् । देवतानां च सर्वेषां ब्राह्मणानां महीपते ॥ ४७
दैत्यानां दानवानां च यक्षराक्षसपक्षिणाम् । गन्धर्वाणामप्सरसां भुजंगानां च पार्थिव ॥ ४८
पर्वतानां नदीनां च पशूनां चैव सत्तम । तिर्यग्योनिगतानां च सत्त्वानां कृमि(मी)णां तथा ४९
महाभूतपतिः पञ्च भूत्वा भूतानि भूतकृत् । जगत्संहरणार्थाय कुरुते वैशसं महत् ॥ ५०
भूत्वा सूर्यश्चक्षुषी चाऽऽददानो भूत्वा वायुः प्राणिनां प्राणजातम् ।
भूत्वा वह्निर्निर्दहन्सर्वलोकान्भूत्वा मेघो भूय एवाभ्यवर्षत् ॥ ५१
भूत्वा नारायणो योगी सर्वमूर्तिर्विभावसुः । गभस्तिभिः प्रदीप्ताभिः(प्तैश्च) संशोषयति सागरान् ॥
ततः पीत्वाऽर्णवान्सर्वान्नदीः कूपांस्तु सर्वशः । पर्वतानां च सलिलं सर्वमादाय रश्मिभिः ॥ ५३
पीत्वा सहस्रभिश्चैव (?) मही दृष्ट्वा रसातले । रसातलात्समादाय पिबते रसमुत्तमम् ॥ ५४
मूत्रशुक्रे त्व(त)दन्यच्च यदस्ति प्राणिषु ध्रुवम् । तत्सर्वमरविन्दाक्ष आदत्ते पुरुषोत्तमः ॥ ५५
वायुश्च बलवान्भूत्वा विधुन्वानोऽखिलं जगत् । प्राणापानसमानाद्यवायु(यू)न्क्रमते हरिः ॥ ५६
ततो देवगणानां च सर्वेषां चैव देहिनाम् । पञ्चेन्द्रियगुणाः सर्वे भूतान्येव च यानि च ॥ ५७

एत-

* इदमर्धं झ. पुस्तकस्थम् ।

१ क. ख. ग. घ. ङ. च. ज. सत्त्वं । २ क. ख. ग. घ. ङ. च. ज. °रितो धर्मो येन लोकः प्रवर्धते । ए° । ३ ख. ङ. नित्यं । ग. घ. च. ज. सत्यं । ४ क. ख. ग. घ. च. ज. °मेसंज्ञानां । ५ क. ख. ग. ङ. च. ज. सत्त्वं । ६ ग. च. ज. श्वेतेन । ७ क. ग. च. ज. वैकृत्यं क्षान्तिदौर्बल्यमेव च । ए° । ८ क. ख. ङ. च. °णां तु चतुःशतम् । त° । ९ घ. राजसुत्तमाः । १० झ. द्वापरे । ११ ग. घ. ज. वावशायिकः । १२ क. ख. ग. घ. ङ. च. ज. बन्धूनां । १३ ख. ग. घ. ङ. ज. °जालम् । १४ क. ख. ग. घ. ङ. च. ज. °य उग्रोऽभ्य° । १५ क. ख. ग. घ. ङ. च. ज. योगावित् । १६ ग. घ. ज. °भिः । भूत्वा सहस्रुतिश्चै° । १७ क. ख. ग. घ. ङ. च. ज. [illegible]

घ्रेयं घ्राणं शरीरं च पृथिवीसंश्रिता गुणाः । जिह्वा रसश्च स्नेहश्च संश्रिताः सलिले गुणाः ॥ ५८
रूपं चक्षुर्विकारश्च नेत्रं ज्योतिःश्रिता गुणाः । स्पर्शः प्राणश्च चेष्टा च पवनं संश्रिता गुणाः ॥५९
शब्दश्रोत्रे च श्रवणं गगनं संश्रिता गुणाः । लोकयात्रा भगवता मुहूर्तेन विनाशिता ॥ ६०
मनो बुद्धिश्च चित्तं च क्षेत्रज्ञश्चेति संश्रिताः[3] । परेण परमेष्ठी च हृषीकेशमुपाश्रितः[4] ॥ ६१
ततो भगवतस्तस्य रश्मिभिः परिवारिताः । वायुना*ऽऽक्रम्यमाणाश्च[5] द्रुमशाखामुपाश्रिताः ॥६२
तेषां संहरणोद्भूतः पावकः शतधा ज्वलन् । अदहन्निखिलं विश्वं वृत्तः संवर्तकोऽनलः ॥ ६३
सपर्वतद्रुमान्गुल्माल्लँतावल्लीस्तृणानि च । विमानानि च दिव्यानि पुराणि विविधानि च ॥ ६४
यानि चाऽऽश्रयणीयानि तानि सर्वाणि सोऽदहत् । भस्मी कृत्वा ततः सर्वाल्लोकाल्लोकगुरोर्गुरुः[6]
स भूतिं धारयामास युगान्ते लोकसंभवाम् । सहस्रदृष्टिः[8] शतधा भूत्वा कृष्णो महाघनः ॥ ६६
दिव्यतोयेन हविषा तर्पयामास मेदिनीम् । ततः क्षीरनिकाशेन स्वादुना परमाम्भसा ॥ ६७
शिशिरेण च पुण्येन मही निर्वाणमागमत् । तेन तोयेन संछन्ना पयःसाधर्म्यतो धरा ॥ ६८
एकार्णवजलीभूता सर्वसत्त्वविवर्जिता । महासत्त्वान्यपि विभुं प्रविष्टान्यमितौजसम् ॥ ६९
नष्टार्कपवनाकाशे सूक्ष्मे जगति संवृते । संशोषमात्मना कृत्वा समुद्राणां च देहिनः ॥ ७०
दग्ध्वा संकोच्य च तथा स्वपित्येकः सनातनः । पौराणं रूपमास्थाय स्वपित्यमितविक्रमः ॥७१
एकार्णवजलव्यापी योगी योगमुपासते[10] । अनेकानि सहस्राणि[11] युगान्येकार्णवाम्भसि ॥ ७२
न चैव कश्चिदव्यक्तं व्यक्तो वेदितुमर्हति । कश्चैष पुरुषो नाम किं योगः कश्च योगवान् ॥ ७३
असौ कियन्तं कालं च एकार्णवविधिं विभुः । करिष्यतीति भगवानिति कश्चिन्न बुध्यते ॥ ७४
न[12] द्रष्टुं नैवमभितो नैव पार्श्वे न चाग्रतः[13] । तस्य न ज्ञायते कश्चि(किंचि)त्तमृते देवसत्तमम् ॥७५

नभः क्षितिं पवनमपः प्रकाशं प्रजापतीन्भुवनवरं सुरेश्वरम् ।
पितामहं श्रुतिनिलयं मुनिः प्रशाम्य भूयः शयनमरोचयत्प्रभुः ॥ ७६

एवमेकार्णवीभूते शेते लोके महाद्युतिः । प्रच्छाद्य सलिलेनोर्वी हंसो नारायणायते ॥ ७७
महतो रजसो मध्ये महार्णवसमस्य वै । विरजस्को[14] महाबाहुरक्षयं ब्रह्म यद्विदुः ॥ ७८
आत्मरूप[15]प्रकाशेन तमसा संवृतः प्रभुः । मनः सात्त्विकमाधाय यत्र तत्सत्त्वमाहितम्[16] ॥ ७९
यथातथ्यं परं ज्ञानं भूतये ब्रह्मणो मतम् । रहस्या[17]रण्यतो दृष्टं यथोपनिषदं[19] स्मृतम् ॥ ८०
पुरुषो यज्ञ इत्येव यत्परं परिकीर्तितम् । यच्चान्यत्पुरुषाख्यं स्यात्स एव पुरुषोत्तमः ॥ ८१
ये च यज्ञकरा विप्रा य ऋत्विज इति स्मृताः । अस्मादेव पुरा भूतो(ता) यज्ञेभ्यः श्रूयते तथा ॥
ब्राह्मणं प्रथमं वक्त्रादुद्गातारं च सामगम् । होतारं च तथाऽध्वर्युं बाहुभ्यामसृजत्प्रभुः ॥ ८३

* क्वचित्पुस्तके, भ्राम्यमाणा इति पाठः ।

१ झ. सर्वेषां । २ झ. संस्मृताः । ३ झ. °ताः । तं वरेण्यं परमेष्ठिं हृ° । ४ झ. °श्रिताः । त° । ५ क. ख. ग. घ. ङ. च. ज. °श्च भूमिशा° । ६ क. ख. ग. घ. ङ. च. ज. °कक्करो गुरुः । ७ झ. °रुः । स्वभूर्निर्वापयामास युगान्तेन च कर्मणा । स° । ८ क. ख ङ. च. °स्रवृष्टिः । ९ क. ख. संपृक्ता । १० ञ. °पासितः । अ° । ११ झ. °णि शतान्ये° । १२ क. ख. ग. घ. ङ. च. ज. न द्रष्टा नैव माता च नै° । १३ क. ख. ङ. च. °तः । कश्च विज्ञायते कश्च दृश्यते देवसत्तमः । म° । ग. °तः । कश्चिद्विज्ञायते कश्चिद्दते वै दे° । घ. ज. °तः । कश्च विज्ञायते कश्चिद्दते वै दे° । १४ क. ख. ङ. च. वारिजाक्षो । ग. घ. ज. विरजाक्षो । १५ क. ख. ग. घ. ङ. च. ज. °पस्वरूपेण त° । १६ झ. °मासते । य° । १७ क. ख. [illegible] । १९ ञ. °षदां स्मृ° ।

ब्रह्माणं ब्राह्मणाच्छंसिप्रस्तोतारौ च सर्वशः । मेढ्राच्च मैत्रावरुणं प्रतिष्ठातारमेव च ॥ ८४
उदरात्प्रतिहर्तारं पोतारं चैव पार्थिव । पाणिभ्यामथवाऽऽग्नीध्रमुन्नेतारं च याजुषम् ॥ ८५
अच्छावाकमथोरुभ्यां सुब्रह्मण्यं च जानुषु । एवमेवं स भगवान्षोडशैताञ्जगत्पतिः ॥ ८६
स्वयंभूः सर्वयज्ञानामृत्विजोऽसृजदुत्तमान् । तदा स वै वेदमयः पुरुषो यज्ञसंज्ञितः ॥ ८७
वेदाश्चैतेऽभयाः सर्वे सहाङ्गोपनिषत्क्रियाः । स्वपित्येकार्णवे चैव यदाश्चर्यमभूत्पुरा ॥ ८८
श्रूयतां तत्तथा विप्रो मार्कण्डेयः कुतूहलात् । गीर्णो भगवतस्तस्य कुक्षावासीन्महामुनिः ॥ ८९
बहुवर्षसहस्रायुस्तस्यैव वरतेजसा । अटंस्तीर्थप्रसङ्गेन पृथिवीतीर्थगोचरम् ॥ ९०
आश्रमाणि च पुण्यानि देवतायतनानि च । देशान्राष्ट्राणि चित्राणि पुराणि विविधानि च ९१
जपहोमपरः शान्तस्तपोरतिमयः स्मृतः । मार्कण्डेयस्ततस्तस्य शनैर्वक्त्राद्विनिःसृतः ॥ ९२
निष्क्रामन्तं स चाऽऽत्मानं जानीते देवमायया । निष्क्रम्य तस्य वदनादेकार्णवमथो जगत् ९३
सर्वतस्तमसा छन्नं मार्कण्डेयोऽन्ववैक्षत । तस्योत्पन्नं भयं तीव्रं व्यत्ययं चाऽऽत्मजीवितम् ॥ ९४
देवदर्शनसंहृष्टो विस्मयं परमं गतः । सोऽचिन्तयत मध्यस्थो मार्कण्डेयोऽथ शङ्कितः ॥ ९५
किं नु स्याच्चित्तसंमोहः किं नु स्वप्नोऽनुभूयते । व्यक्तमन्यतरो भाव एतयोर्भविता मम ॥ ९६
न हि स्वप्नो ह्ययं सत्ययुक्तं यत्सत्यमर्हति । नष्टचन्द्रार्कपवनो नष्टपर्वतभूतलः ॥ ९७
कतमः स्यादयं लोक इति चिन्तामवस्थितः । ददर्श चापि पुरुषं स्वपन्तं पर्वतोपमम् ॥ ९८
सलिलेऽर्धमथोन्मग्नं जीमूतमिव सागरे । तपन्तमिव तेजोभिर्गोमुक्तमिव भास्करम् ॥ ९९
गाम्भीर्यात्सागरमिव भासहस्रामिवौजसा । देवं चन्द्रमिवाऽऽयान्तं को भवानिति विस्मयात् १००
तथैव च मुनिः कुक्षिं पुनरेव प्रवेशितः । स प्रविष्टः पुनः कुक्षिं मार्कण्डेयः सविस्मयम् ॥ १०१
तथैव च पुनर्भूयो विजानन्स्वप्नदर्शनम् । स तथैव यथा पूर्वं पृथिवीमटते वनम् ॥ १०२
पुण्यतीर्थजलोपेतां विविधान्याश्रमाणि च । क्रतुभिर्यजमानांश्च समाप्तैवरदक्षिणैः ॥ १०३
अपश्यद्देवकुक्षिस्थान्यज्ञस्थाञ्शतशो द्विजान् । सद्वृत्तमास्थिताः सर्वे वर्णा ब्राह्मणपूर्वकाः॥ १०४
चत्वारश्चाऽऽश्रमाः सम्यग्यथोद्दिष्टाः पुरा मम । एवं वर्षशतं साग्रं मार्कण्डेयेन धीमता ॥ १०५
चरता पृथिवीं सर्वां तत्कुक्षौ हि समीक्ष्यते । ततः कदाचिदथ वै पुनर्वक्त्राद्विनिःसृतः ॥ १०६
सुप्तं न्यग्रोधशाखायां बालमेकं निरैक्षत । तथैवैकार्णवजले नीहारेण वृतान्तरे ॥ १०७
अव्यक्तक्रीडने लोके सर्वभूतविवर्जिते । स मुनिर्विस्मयाविष्टः कौतूहलसमन्वितः ॥ १०८
बालमादित्यसंकाशं न शक्नोत्यभिवीक्षितुम् । सोऽप्यचिन्तयदेकान्ते स्थित्वा सलिलसंनिधौ ॥
पूर्वदृष्टमिदं मेने शङ्कितो देवमायया । अगाधे सलिले मग्नो मार्कण्डेयः सविस्मयः ॥ ११०
पूर्ववृत्तमथो द्रष्टुमत्रजत्रस्तलोचनः । स तस्मै भगवानाह स्वागतं बाल योगवान् ॥ १११
बभाषे मेघतुल्येन स्वरेण पुरुषोत्तमः । मार्कण्डेय न भेतव्यमागच्छस्व ममान्तिकम्+ ॥ ११२

---

+ एतदग्रे झ. पुस्तके 'मार्कण्डेयस्तु तं प्राह बालस्त्वं श्रमपीडितः" इत्यर्धमाधिकम् ।

---

१ झ. °शः । तौ मित्रावरुणौ नेष्टा प्रतिप्रस्तार° । २ क. ख. ङ. च. सामगम् । ३ झ. °तिः । प्रवर्त्य सर्वयज्ञानामृत्विजां श्रियमुत्तमाम् । त° । ४ क. च. तथा चैष महायोगी पु° । ख. ग. घ. च. ज. तदा चैष महायोगी पु° । ५ झ. °वै सामाङ्गो° । ६ ग. घ. °भिरामु° । ७ क. ख. ग. घ. ङ. च. ज. °सगुरुद° । ८ क. ख. ग. घ. ङ. च. ज. पुनः कुक्षेर्विनिःसृ° । ९ क. ख. ग. घ. ङ. च. ज. °सोते ।

मार्कण्डेय उवाच—

को नाम्ना कीर्तयति मां कुर्वन्परिभवं मम । दिव्यं वर्षसहस्राख्यं वर्षाणां चैवमेव यः ॥ ११३
न क्षेप च सदाचारो देवेष्वपि ममोचितः । मां ब्रह्माऽपि हि सस्नेहो दीर्घायुरिति भाषते ११४
कस्तपो घोरमासाद्य ममाद्य त्यक्तजीवितः । मार्कण्डेयेति मामुक्त्वा मृत्युमीक्षितुमर्हति* ॥११५
एवमाभाषितः क्रोधान्मार्कण्डेयो महामुनिः । तदैनं भगवान्भूयो बभाषे मधुसूदनः ॥ ११६

भगवानुवाच—

अहं ते जनको वत्स हृषीकेशः पितामहः । आयुष्प्रदाता पौराणः किं मां त्वं नोपसर्पसि॥११७
मां पुत्रकामः प्रथमं +पिता तेऽङ्गिरसो मुनिः । पूर्वमाराधयामास तपस्तीव्रं समाश्रितः ॥ ११८
स तप्त्वा घोरतपसा प्राप्तणोत्त्वां सुतेजसम् । उक्तवांस्तमहं सत्यं महर्षिममितौजसम् ॥ ११९
कः समुत्सहते चान्यो यो न भूतात्मकात्मकः । दृष्ट्वा चैकार्णवगतं क्रीडन्तं योगवर्त्मना॥१२०
ततः प्रहृष्टहृदयो विस्मयोत्फुल्ललोचनः । मूर्ध्नि बद्धाञ्जलिपुटो मार्कण्डेयो महातपाः ॥ १२१
नामगोत्रेण तत्प्रोक्तो दीर्घायुर्लोकपूजितः । तस्मै भगवते भक्त्या नमस्कारान्प्रकुर्वत(?) ॥ १२२

मार्कण्डेय उवाच—

इच्छामि तत्त्वतो ज्ञातुमिमां मायां तवानघ । यदेकार्णवमध्यस्थः शेषे त्वं बालरूपवान् ॥ १२३
किंसंज्ञश्चैव भगवँल्लोके विज्ञायसे प्रभो । तर्कये त्वां महात्मानं कोऽन्योऽवस्थातुमर्हति ॥ १२४

श्रीभगवानुवाच—

अहं नारायणो ब्रह्मन्सर्वभूतविनाशनः । अहं सहस्रशीर्षो यः पादसाहस्रसंज्ञितः ॥ १२५
आदित्यवर्णः पुरुषो मुखे ब्रह्ममयो ह्यहम् । अहमग्निर्हव्यवाहः सप्तसप्तिभिरन्वितः ॥ १२६
अहमिन्द्रपदे शक्र ऋतूनां परिवत्सरः । अहं योगिषु सांख्याख्यो युगान्तश्चान्त एव च ॥ १२७
अहं सर्वाणि सत्त्वानि दैवतान्यखिलानि च । उरगाणामहं शेषस्तार्क्ष्योऽहं सर्वपक्षिणाम्॥१२८
कृतान्तः सर्वभूतानां विज्ञेयः कालसंज्ञितः । अहं धर्मस्तपश्चाहं सर्वाश्रमनिवासिनाम् ॥ १२९
अहं दयापरो धर्मः क्षीरोदोऽहं महार्णवः । यत्तत्सत्यं च परममहमेकः प्रजापतिः ॥ १३०
अहं सांख्यमहं योगम(स्त्व)हं तत्परमं पदम् । अहमिज्या क्रिया चाहमहं विप्राधिपः स्मृतः १३१
अहं ज्योतिरहं वायुरहं भूमिरहं नभः । अहमापः समुद्रश्च नक्षत्राणि दिशो दश ॥ १३२
अहं वर्षमहं सोमः पर्जन्योऽहमहं हविः । क्षीरोदसागरे चाहं समुद्रे वडवामुखे ॥ १३३
वह्निः संवर्तको भूत्वा पिबंस्तोयमहं रविः । अहं पुराणं परमं तथैवाहं परायणम् ॥ १३४
भविष्ये चापि सर्वत्र भविष्यत्सर्वसंभवः । यत्किंचित्पश्यसे विप्र यच्छृणोषि च किंचन ॥१३५
यच्चानुभवसे लोके तत्सर्वं मामनुस्मर । विश्वं सृष्टं मया पूर्वं सृजे चाद्यापि पश्य माम् ॥ १३६
युगे युगे च रक्षामि मार्कण्डेयाखिलं जगत् । तदेतदखिलं सर्वं मार्कण्डेयावधारय ॥ १३७
शुश्रूषुरपि धर्मेषु कुक्षौ चर सुखं मम । मम ब्रह्मा शरीरस्थो देवाश्च ऋषिभिः सह ॥ १३८

---

* एतदग्रे क्वचित्पुस्तके "पूर्वापरं न पश्यामि तपस्तीव्रं समास्थितः । मार्कण्डेयेति च पुनर्बभाषे मधुसूदनः" इति श्लोकोऽधिकः । + पिता ते तु भृगुर्मुनिरिति क्वचित्पाठः ।

---

१ क. ख. ग. घ. ङ. च. ज. °ता गुरुः । आ° । २ ञ. °तः । तं दृष्ट्वा घोरतपसं त्रिदशोत्तमते° । ३ क. ख. ग. घ. ङ. च. ज. °गान्तावर्तं ए° । ४ ख. ङ. °हं यज्ञस्त° । ५ झ. °हं हयशिरो दिव्यं क्षी° । ६ क. ख. ग. घ. ङ. च. विद्याधिपः । ७ ग. घ. ज. [illegible] । ८ [illegible] °वाऽस्मत्तो [illegible] ।

ंव्यक्तमव्यक्तयोगं मामवगच्छासुरद्विषम् । अहमेकाक्षरो मन्त्रस्त्र्यक्षरश्च पितामहः ॥ १३९
परस्त्रिवर्गादोंकारः परमात्मा प्रदर्शनः । एवमादि पुराणोऽसौ वदन्नेव महामतिः ॥ १४०
वक्त्रमाहृतवानाशु मार्कण्डेयं महामुनिम् । ततो भगवतः कुक्षिं प्रविष्टो मुनिसत्तमः ॥ १४१
*नेनासंमुखमेकान्ते शुश्रूषुं हंसमव्ययम् ॥ १४२

यदक्षयं विविधमुपाश्रितं तनुं महार्णवे व्यपगतचन्द्रभास्करे ।
शनैश्चरन्प्रभुरथ हंससंज्ञितः सृजञ्जगद्विहरति कालपर्यये ॥ १४३

अथ एवं शुचिर्भूत्वा चरयामास वै तपः । छादयित्वाऽऽत्मनो देहं पयसाऽम्बुजसंभवः ॥ १४४
ततो महात्मा विमलो मतिं लोकविसर्जने । उत्पत्तिं चैव भूतानां विश्वो विश्वमचिन्तयत् ॥ १४५
तस्य चिन्तयमानस्य नियते संस्थितेऽर्णवे । निराकाशे तोयमये सूक्ष्मे जगति गह्वरे ॥ १४६
ईशः संक्षोभयामास अर्णवं सलिलं गतः । तथाऽन्तरादपां सूक्ष्ममथ च्छिद्रमभूत्पुरा ॥ १४७
शब्दं प्रति ततो भूतो मारुतश्छिद्रसंभवः । स सप्तार्णवमाक्षोभ्य व्यवर्धत समीरणः ॥ १४८
नभस्वता बलवता वेगाद्विक्षोभितोऽर्णवः । तस्यार्णवस्य क्षुब्धस्य तस्मिन्नम्भसि क्षुभ्यति ॥ १४९
कृष्णवर्त्मा समभवत्प्रभुर्वैश्वानरो महान् । ततः संशोषयामास पावकः सलिलं बहु ॥ १५०
ह्रियमाणमिव च्छिद्रमभवद्विस्तृतं नभः । आत्मतेजोद्भवाः पुण्या आपोऽमृतरसोपमाः ॥ १५१
आकाशं छिद्रसंभूतं वायुराकाशसंभवः । आभ्यां संघर्षसंभूतं पावकं चास्य संभवम् ॥ १५२
दृष्ट्वा पितामहो देवो महाभूतविनाशनः । दृष्ट्वा भूतानि भगवाँल्लोकसृष्ट्यर्थमुत्तमम् ॥ १५३
ब्रह्मणो जन्म स हितं बहुरूपो ह्यचिन्तयत् । [*ततो युगानां संख्याते सहस्रयुगपर्यये ॥ १५४
यत्पृथिव्यां द्विजेन्द्राणां तपसा भावितात्मनाम् । बहुजन्मविशुद्धात्मा +ब्रह्मणो हरिरुच्यते १५५
ज्ञानं दृष्ट्वा तु विश्वात्मा योगिनां याति योग्यताम् । तं योगवन्तं विज्ञाय संपूर्णैश्वर्यमुत्तमम् १५६
पदे ब्रह्मणि विश्वस्य नियोजयति योगवित्] । ततस्तस्मिन्महातोये महेशो हरिरच्युतः ॥ १५७
जलक्रीडां च विधिवत्स चक्रे सर्वलोककृत् । पद्मं नाभ्युद्भवं चैकं समुत्पादितवांस्तथा ॥
बहुवर्णं विराजत्तद्भास्कराभं हिरण्मयम् ॥ १५८

हुताशनज्वलितशिखोज्ज्वलप्रभं समुत्थितं शरदमलार्कतेजसम् (?) ।
विराजते कमलमुदारवर्चसं(?) महात्मनस्तनुरुहचारुशैवलम् ॥ १५९

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पद्मप्रादुर्भावो नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६७९२

---

* इदमर्धं झ. पुस्तकस्थमसंगतम् । + क्वचित्पुस्तके, अम्भः समेष्यतीति पाठः । * धनुश्चिह्नान्तर्गतः पाठोऽसंगतः । + ब्राह्मण इति क्वचित्पाठः ।

---

१ झ. °न्त्र अक्ष° । २ ग. घ. ज. °हं तपसा क्रमसं° । झ. °हं तपसा कुशसं° । ३ ञ. °त्माऽतिबलो मर्त्यलो° । झ. °त्माऽतिबालो म° । ४ क. ख. घ. ङ. च. ज. महतां । ५ क. ख. ङ. च. संक्षये । ६ क. ख. ङ. च. °तः । अथ तेनोर्मिणा सू° । घ. ज. °तः । अथ भूतादिकान्सूक्ष्म° । ७ क. ज. ञ. स लब्ध्वाऽन्तरसंक्षोभं व्य° । ८ क. ख. ग. घ. ङ. च. ज. °हु । समस्तजलधिच्छि° । ९ क. ख. घ. ङ. च. °द्विसृतं । ग. °द्विस्तृतं । १० क. ख. ङ. च. °विभाक्तः । ११ ञ. °त् । चतुर्युगाणां संख्यातं सहस्रं युग° । १२ झ. °नं प्रष्टुं तु विश्वार्थे योगिनो यान्ति मोक्षताम् । १३ झ. भगवन्तं । १४ झ. विश्वेशं । १५ ग. घ. ज. °स्तदा । ब° । १६ ग. घ. ज. °था । सहसा बभूव विरजं भास्क° ।

अथ सप्तत्रिंशोऽध्यायः ।

पुलस्त्य उवाच—

अथ योगवतां श्रेष्ठमसृजद्भूरिवर्चसम् । स्रष्टारं सर्वलोकानां ब्रह्माणं सर्वतोमुखम् ॥ १

तस्मिन्हिरण्मये पद्मे बहुयोजनविस्तृते । सर्वतेजोगुणमये पार्थिवैर्लक्षणैर्वृते ॥ २

तच्च पद्मं पुराणज्ञा[1] पृथिवीरूपमुत्तमम् । नारायणसमुद्भूतं प्रवदन्ति महर्षयः ॥ ३

या पद्मसारता देव[2] पृथिवी परिचक्षते । ये पद्मसारगुरवस्तान्दिव्यान्पर्वतान्विदुः[3] ॥ ४

हिमवन्तं च मेरुं च नीलं निषधमेव च । कैलासं शृङ्गवन्तं च तथाऽद्रिं गन्धमादनम् ॥ ५

पुण्यं त्रिशिखरं चैव कान्तं मन्दरमेव च । उदरं[4] पिञ्जरं चैव विन्ध्यमस्तं च पर्वतम् ॥ ६

एते देवगणानां च सिद्धानां च महात्मनाम् । आश्रयाः[5] पुण्यशीलानां सर्वकामफलप्रदाः ॥ ७

एतेषामन्तरे देशो जम्बुद्वीप इति स्मृतः । जम्बुद्वीपस्य संस्थानं यज्ञिया यत्र वै क्रियाः ॥ ८

तेभ्यो यद्द्रवते तोयं दिव्यामृतरसोपमम् । दिव्यतीर्थशतायामाः[6] सरस्यः सरितः स्मृताः ॥ ९

यान्येतानीह पद्मस्य केशराणि समन्ततः । असंख्येयाः पृथिव्यां ते विविधाश्चैव पर्वताः ॥ १०

यानि पद्मस्य पर्णानि भूरि पूर्वाणि पार्थिव । ते दुर्गमाः शैलचिता म्लेच्छदेशाः प्रकीर्तिताः ॥ ११

यान्यधोभागपर्णानि ते निवासास्तु भागशः । दैत्यानामसुराणां च पन्नगानां च पार्थिव ॥ १२

तेषां मध्येऽन्तरं[8] यत्तु तत्रासह्येति संज्ञितम् । महापातककर्माणो मज्जन्ते यत्र मानवाः ॥ १३

*पद्मस्य चान्तरे पद्म एकार्णवगता मही । प्रोक्तास्ते दिक्षु संघाताश्चत्वारः सलिलाकराः ॥ १४

एवं नारायणस्यार्थे मही पुष्करसंभवा । प्रादुर्भावोऽप्ययं तस्मान्नाम्ना पुष्करसंज्ञितः ॥ १५

एतस्मात्कारणाद्यज्ञे पुराणैः परमर्षिभिः । यज्ञियैर्वेददृष्टान्तैर्यज्ञेषु विचितिः कृता ॥ १६

एवं भगवता तेन विज्ञेयाऽथ[9] धरा चिता । पर्वतानां नदीनां[10] च रचना चैव निर्मिता ॥ १७

विश्वस्य यश्चाप्रतिमप्रभावः प्रभाकराभो वरुणामितद्युतिः ।
शनैः स्वयंभूर्व्यसृजन्महात्मा जगन्मयः पद्मनिधिं महार्णवे ॥ १८

विप्रस्तमसि संभूतो मधुर्नाम महासुरः[11] । तथा रजसि संभूतो ह्यसुरो नाम कैटभः ॥ १९

तौ रजस्तमसोद्भूतौ संभूतौ तामसौ गुणैः । एकार्णवं जगत्सर्वं क्षोभयेतां[12] महाबलौ ॥ २०

दिव्यरक्ताम्बरधरौ श्वेतदीप्त्युग्रदंष्ट्रिणौ । किरीटमुकुटोदग्रौ केयूरवलयोज्ज्वलौ ॥ २१

महाविवृत्तताम्राक्षौ पीनोरस्कौ महाभुजौ । महागिरेः संहननौ जङ्गमाविव पर्वतौ ॥ २२

नवमेघप्रतीकाशावादित्यप्रतिमाननौ । विद्युदाभौ[13] गदोग्राभ्यां कराभ्यामरिकर्षिणौ ॥ २३

पादसंचारविन्यासैः प्रक्षिपन्ताविवार्णवम्[15] । कम्पयन्तौ हरिवरं शयानं मधुसूदनम् ॥ २४

तौ तत्र विचरन्तौ तु पुष्करे विश्वतोमुखौ । योगिनां श्रेष्ठमत्यन्तं दीप्तं ददृशतुस्तदा ॥ २५

* इदमर्धं झ. पुस्तकस्थम् ।

१ क. ख. ग. घ. ङ. च. ज. पुराभूतं । २ क. ख. ङ. च. झ. ञ. देवीं । ३ ग. घ. °तानिह । हिं° । ४ ञ. उदारं । ५ झ. आश्रमाः । ६ क. ख. ङ. च. °शतधराः स° । ७ क. ख. ग. घ. ङ. च. ज. सर्वतः । ८ झ. तेषामधोऽर्णवं तच्च तद्रसेत्यभिसंज्ञितः । म° । ९ क. ख. ङ. च. विश्वं व्याप्य ध° । १० क. ख. ङ. च. ह्रदानां । ११ क. ख. घ. ङ. च. ज. च °रः । तेनैव च सहोद्भूतो । १२ ग. घ. ज. लक्षयेतां । १३ क. ख. ङ. च. विपुलाभोगकेयूरकराभ्यामतिभीषणौ । १४ ग. °म् । वटपङ्क्तौ ह° । १५ क. ख. च. °रिमिव श° ।

नारायणं समाज्ञातं सृजन्तमखिलाः प्रजाः । दैवतानि च विश्वानि मानसांश्च शुभानृषीन् ॥ २६
ततस्तावूचतुस्तत्र ब्रह्माणमसुरोत्तमौ । दृष्टौ युयुत्सासंक्रुद्धौ रोषव्याकुलितेक्षणौ ॥ २७
कस्त्वं पुरुषमध्यस्थः सितोष्णीषश्चतुर्भुजः । आवामगणयन्मोहादास्से त्वं विगतस्पृहः ॥ २८
एह्यागच्छाऽऽवयोर्युद्धं देहि त्वं कमलोद्भव । आवाभ्यां परमेशाभ्यामशक्तः स्थातुमर्णवे ॥ २९
तत्र कश्च भवेत्तुभ्यं येन चात्र नियोजितः । कः स्रष्टा कश्च ते गोप्ता केन नाम्नाऽभिधीयते ॥ ३०

ब्रह्मोवाच—

एक इत्युच्यते लोके[3] रविस्त्वन्यः सहस्रभुक् । यत्तत्संयोगवन्तं च कर्मनाम्नाऽवगच्छते ॥ ३१

मधुकैटभावूचतुः—

नाऽऽवयोः परमं लोके किंचिदस्ति महामुने । आवाभ्यां छादितं विश्वं तमसा रजसा च वै ३२
रजस्तमोमयावावामृषीणामविलम्बितौ । छाद्यमानौ धर्मशीलौ दुस्तरौ सर्वदेहिनाम् ॥ ३३
आवाभ्यां मुह्यते लोको दुष्कराभ्यां युगे युगे । आवामर्थश्च कामश्च यज्ञः सर्वपरिग्रहः ॥ ३४
सुखं यत्र मुदा युक्तं यत्र श्रीः कीर्तिरेव च । येषां यत्काङ्क्षितं किंचित्तत्तदावां विचिन्तय ॥ ३५

ब्रह्मोवाच—

आवाभ्यां संहृतौ दृष्ट्वा युवां पूर्वं मया जितौ । तं समाधाय गुणवत्सत्त्वे चास्मि समाश्रितः ३६
यः परो योगमतीनां योऽक्षरः सत्त्वमेव च । रजसस्तमसश्चैव यः स्रष्टा विश्वसंभवः ॥ ३७
ततो भूतानि जायन्ते सात्त्विकानीतराणि च । स एव हि युवां नाशं वासुदेवः करिष्यति ॥ ३८
स्वयमेव ततः श्रीमान्बहुयोजनविस्तृतौ । बाहू नारायणो ब्रह्मा कृतवानात्ममायया ॥ ३९
कृष्यमाणौ ततस्तस्य बाहुना बाहुशालिनौ । चेरतुस्तौ विगलितौ शकुनाविव धीवरौ ॥ ४०
ततस्तावूचतुर्गत्वा ततो देवं सनातनम् । पद्मनाभं हृषीकेशं प्रणिपत्य नतावुभौ ॥ ४१
जानीवस्त्वां विश्वयोनिं त्वामेकं पुरुषोत्तमम् । त्वन्मायाजातिहेतुत्वमिमौ तौ बुद्धिकारणे ॥ ४२
[+आवयोर्दर्शनं सत्यं यतस्त्वां विस्मयान्वितम् । ततस्त्वमभितो देव त्वया हितमरिंदम] ॥ ४३
अमोघदर्शनं सिद्धं यस्त्वां विद्वश्च शाश्वताम् । [*ततस्त्वामभितो देवाः काङ्क्षन्ति प्रसमीक्षितुम्]
तमिच्छावो वरं देव त्वया हितमरिंदम । अमोघदर्शनोऽसि त्वं नमस्ते समितिंजय ॥ ४५

श्रीभगवानुवाच—

किमर्थं तदनुब्रूतं वरं ह्यसुरसत्तमौ[11] । गतायुष्कौ युवां भूयोऽप्यहो जीवितुमिच्छथः ॥ ४६

मधुकैटभावूचतुः[12]—

यस्मिन्न कश्चिन्मृतवान्वासं तस्मिन्वरं प्रभो । इच्छावः पुत्रतां चैव भवतः सुमहातपः ॥ ४७

---

+ धनुश्चिह्नान्तर्गतः पाठः घ. ज. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ क. ख. ङ. च. दृष्टौ युं । ग. घ. ज. दृष्टौ पद्मे सुसं । २ क. ख. ङ. च. पुष्करम । ३ क. ख. ङ. च. ज. °के विष्णुश्चानन्तशक्तिधृक् । घ. °के विष्णुश्चानन्यशक्तिधृक् । ग. °के विश्वात्माऽनन्यशक्तिधृक् । ४ क. ख. ग. घ. ङ च. ज. युज्यते । ५ क. ख. घ. ङ. च. ज. °षां हि यच्च किंचिच्च तत्तदा । ६ क. ख. ङ. च. पूर्वमुपार्जितौ । ७ क. ख. ङ. च. °गयुक्तानां योऽक्षरः । ग. घ. ज. °गयुक्तानां पौष्करः । ८ ग. घ. ज. °मानहं योजनाविस्तृतः । व्यक्तिर्नो° । ९ क. ख. ङ. च. देव काङ्क्षावः प्र° । १० घ. च. °र्शनं सिद्धं न° । ग. °र्शनं शुद्धं न° । ११ क. ख. ङ. च. °मौ । बद्ध्वा मुक्तौ पुनर्भूयोऽ° । ग. घ. ज. °मौ । दत्तो मोक्षः पुनर्भूयोऽ° । १२ घ. ज. °तुः—कस्मिंस्तु कस्य चिद्वृत्तं वासे त° ।

श्रीभगवानुवाच—

बाढमेतद्युवां तस्माद्भविष्यौ कलिसंभवे । भविष्येतां न संदेहः सत्यमेतद्ब्रवीमि वाम् ॥ ४८

वरं प्रदायाथ महासुराभ्यां सनातनो विश्ववरः सुरोत्तमः ।
रजस्तमस्कौ च तदाऽञ्जनोपमौ ममन्थ तावूरुतलेऽमरप्रभुः ॥ ४९

हत्वा तौ तस्मिंस्तुमुले युद्धे ब्रह्मविदां वरः । ऊर्ध्वबाहुर्महातेजास्तपो घोरं समाश्रितः ॥ ५०

प्रज्वलन्निव तेजोभिर्भास्वानिव तमोनुदः । बभाषे सत्यधर्मात्मा सहस्रांशुरिवांशुभिः ॥ ५१

अथान्यद्रूपमास्थाय शंभुर्नारायणोऽव्ययः । आजगाम महातेजा योगाचार्यो महायशाः ॥ ५२

सांख्याचार्यश्च मतिमान्कपिलो ब्रह्मणो वरः । उभावपि महात्मानौ पूर्वतः क्षत्रतत्परौ ॥ ५३

तौ विप्रावूचतुस्तत्र ब्रह्माणममितौजसम् । परावरविशेषज्ञौ पूजितौ च महर्षिभिः ॥ ५४

ब्रह्मा च दृढपादश्च विशालौ जगदास्थितौ । ग्रामणीः सर्वभूतानां ब्रह्मा त्रैलोक्यपूजितः ॥ ५५

तयोस्तद्वचनं श्रुत्वा विमोहागतयोः पुरा । त्रीनिमान्कृतवाँल्लोकान्यथेयं ब्रह्मणः श्रुतिः ॥ ५६

पुत्रं स्वसंभवं चैकं समुत्पादितवानृषिः । तस्याग्रे चाग्रतस्तस्य ब्रह्मा मानसमव्ययम् ॥ ५७

सोत्पन्नमात्रो ब्रह्माणमुक्तवान्मानसः सुतः । किं कुर्मो वद साहाय्यं ब्रवीतु भगवानिति ॥ ५८

ब्रह्मोवाच—

य एष कपिलो ब्रह्मा नारायणपरस्तथा । वदते भावतस्तस्य तत्कुरुष्व महाद्युते ॥ ५९

ब्राह्मणश्च तदर्थं तु तदा भूयः समुत्थितः । शुश्रूषुरस्मि युवयोः किं करोमि कृताञ्जलिः ॥ ६०

भगवानुवाच—

यत्सत्यमक्षरं ब्रह्म ह्यष्टादशविधं तु तत् । यत्सत्यममृतं तत्तु परं पदमनुस्मर ॥ ६१

एतद्वचो निशम्यैव ययौ च दिशमुत्तराम् । गत्वा तत्र च ब्रह्मत्वमगमज्ज्ञानचक्षुषा ॥ ६२

ततो ब्रह्मा भुवर्नाम द्वितीयमसृजत्प्रभुः । संकल्पयित्वा मनसा तमेव च महामनाः ॥ ६३

ततः सोऽप्यब्रवीद्वाक्यं किं करोमि पितामह । पितामहसमाज्ञातो ब्रह्माणं समुपस्थितः ॥ ६४

ब्राह्मणस्यामृतरसोऽनुभूतो भवतो गतिः । प्राप्तः स परमं स्थानं संयोगः पार्श्वतो गतः ॥ ६५

तस्मिन्नपि गते पुत्रे तृतीयमसृजत्प्रभुः । मोक्षप्रवृत्तिकुशलं भर्भुवं नामतो विभुम् ॥ ६६

सोऽपि तं धर्ममासाद्य तयोरेवागमद्गतिम् । एवं पुत्रास्त्रयोऽप्येते भक्ताः शंभोर्महात्मनः ॥ ६७

तान्गृहीत्वा सुतांस्तस्य प्रययौ स्वार्जितां गतिम् । नारायणश्च भगवान्कपिलश्च यतीश्वरः ॥ ६८

यं कालं तौ गतौ ब्रह्मन्ब्रह्मा तं कालमेव ह । तपो घोरतमं भूयः संश्रितः परमं पदम् ॥ ६९

न रेमे स ततो ब्रह्मा प्रभुरेकस्तपश्चरन् । शरीरार्धात्ततो भार्यामुत्पादयति वा शुभाम् ॥ ७०

आत्मनः सदृशान्पुत्रानसृजद्वै पितामहः । विश्वे प्रजानां पतयो योगिनो लोकविश्रुताः ॥ ७१

विश्वेशं प्रथमं तावद्देहात्तापसमात्मनः । सर्वत्र सहितं पुण्यं नाम्ना धर्मं स सृष्टवान् ॥ ७२

---

१ ग. घ. ज. नवार्जुनोपमो । २ झ. °मौ संमर्थ तावम्बुतले स वै प्र° । ३ क. ख. ङ. च. पूजितौ क्षेत्रत° । ४ ग. घ. °मोहं ग° । झ. °मोह्याहतयोः परम् । त्री° । ५ क. ब्राह्मणानामसंभवः । ६ ख. ग. ङ. च. ज. ब्रह्मणश्च । ७ ग. तदा भूयो द्वितीयश्च समुत्थितः । ८ ग. घ. ज. ब्रह्मन् । ९ क. ख. ङ. च. ज. महामुनिम् । ञ. महामुनिः । १० झ. °तः । ब्रह्मणः सृजतः सोऽथ कुतश्च भ° । ११ घ. °सो भूतश्च भ° । १२ क. ख. ङ. च. °वतां गतः । प्रा° । १३ घ. स योगः प्रार्थितो । १४ क. ख. ङ च. °म् । गोपतित्वं समास्थाय त° । १५ क. ख. ङ. च. °ययावूर्जं° । १६ क. ख. ग. घ. ङ. च. ज. न चशक्त-स्ततो । १७ क. ख. ङ. च. °यो येभ्यो लोका विनिःसृताः । १८ क. ख. ङ. च. °वन्महात्मा तपसाऽऽत्मजम् । स° । १९ ग. घ. ज. पुत्रं ।

दक्षं मरीचिमत्रिं च पुलस्त्यं पुलहं क्रतुम् । वसिष्ठं गौतमं चैव भृगुमङ्गिरसं मुनिम् ॥ ७३
अथैव कृतकृत्येन ज्ञेयास्ते तु महर्षयः । त्रयोदशगुणारम्भा ये वंशास्तु महर्षिणाम् ॥ ७४
अदितिर्दितिर्दनुः काला अनायुः सिंहिका मुनी । प्राची क्रोधाऽथ परमा विनता कद्रुरेव च ॥
दक्षस्यापत्यमेतद्वै कन्या द्वादश पार्थिव । नक्षत्राणि च चन्द्रस्य सप्तविंशतिपूजिताः(?) ॥ ७६
मरीचेः कश्यपः पुत्रस्तपसा निर्मितः किल । तस्मै कन्याद्वादशकं दक्षस्ताश्चान्वमन्यत ॥ ७७
नक्षत्राणि च सोमाय तथा वै दत्तवानृषिः । रोहिण्यादीनि सर्वाणि पुण्यानि कुरुनन्दन ॥ ७८
*तथैव दश धर्माय दत्ताश्चापि मनोरमाः । लक्ष्मीः सरस्वती संध्या विशेषा च मता शुभा ॥
देवी सरस्वती चैव ब्रह्मणा निर्मिता पुरा । एताः पञ्च वरिष्ठा वै सुरश्रेष्ठाश्च पार्थिव ॥ ८०
दत्ता धर्माय भद्रं ते ब्रह्मणा दृष्टकर्मणा । या रूपार्धवती पत्नी ब्रह्मणः कामरूपिणी ॥ ८१
सुरभिः सहसा भूत्वा ब्रह्माणं समुपस्थिता । ततस्तामगमद्ब्रह्मा मैथुनं लोकपूजितः ॥ ८२
लोकसर्जनहेतुज्ञो गवामर्थाय सत्तमः । जज्ञे चैकादश सुतान्विपुलान्धर्मसंज्ञितान् ॥ ८३
रक्तसंध्याभ्रसंकाशांस्तदहस्तिग्मतेजसः । ते रुदन्तो द्रवन्तश्च गर्भवन्तः पितामहात् ॥ ८४
रोदनाद्द्रवणाच्चैव रुद्राश्च इति ते स्मृताः । निर्ऋतिश्चैव संघश्च तृतीयश्चाप्ययोनिजः ॥ ८५
मृगव्याधः कपर्दी च महाविश्वेश्वरश्च यः । अहिर्बुध्न्यश्च भगवान्कपाली चैव पिङ्गलः ॥ ८६
सेनानीश्च महातेजा रुद्रा एकादश स्मृताः । तस्यामेवं सुरभ्यां च गावो यज्ञे(ज्ञाः) सुराश्च वै ॥
आकृष्टाश्च तथा माषाः सुकृष्टाश्च सुपुष्कराः । अजश्चैव तु हंसश्च तथैवासूत सत्तमः ॥ ८८
ओषध्यः प्रवरा याश्च सुरभ्यश्च समुत्थिताः । धर्मं लक्ष्मीं तथा सोमं संध्यां संध्या व्यजायत ॥
भवं च प्रभवं चैव कृशाश्वं सुवहं तथा । अरुणं वरुणं चैव विश्वामित्रचलध्रुवौ ॥ ९०
हविष्मन्तं तनूजं च विधानाभिमतावपि । वत्सरं चैव भूतिं च सर्वासुरनिषूदनम् ॥ ९१
सुपर्वाणं बृहत्कान्तं महालोकनमस्कृतम् । वासवानुगता देवी जनयामास वै सुरान् ॥ ९२
धरं वै प्रथमं देवं द्वितीयं क्रतुमव्ययम् । विश्वावसुं तृतीयं च चतुर्थं सोममीश्वरम् ॥ ९३
ततो नृरूपमायं च यमस्तस्मादनन्तरम् । सप्तमश्च तथा वायुरष्टमं निर्ऋतिं वसुम् ॥ ९४
धर्मस्यापत्यमेतद्वै सुरभ्यां तदजायत । विश्वेदेवाश्च विश्वायां धर्मजाता इति स्मृताः ॥ ९५
दक्षश्चैव महाबाहुः पुष्करश्च नरेश्वरः । चाक्षुषश्च मनुश्चात्र तथा तत्र महोरगाः ॥ ९६
विश्वानुगवसुर्बालो निष्कलश्च महायशाः । रुरुदश्चातिसत्यौजा भास्करः परमद्युतिः ॥ ९७
विश्वान्देवान्देवमाता विश्वेषां +जनयत्सुतान् । मरुत्वती मरुत्वतो देवान्जनयत्सुतान् ॥ ९८

---

* इदमर्धं ग. पुस्तकस्थम् । + अडभाव आर्षः ।

---

१ क. च. ज. खसा । ख. झ. ङ. स्वसा । ग. श्वसा । २ क. ख ङ. च. प्राधा क्रोधा च सरमा । ग. घ. प्राधा धाऽथ परमा । ३ क. ख. ङ. च. °तिमूर्जितम् । म° । ४ क. ख. घ. ङ. च. च. विश्वेशा च महायशाः । दे° । ५ ङ. गर्ववन्तः । ६ झ. °षाः सिकताप्रसयोक्ष च । अ° । ७ क. ख. घ. ङ. च. ज. सुरसान्ताः । ८ क. ङ. च. धर्माल्लक्ष्मीस्तथा कामं साध्यान्साध्या । ज. धर्माल्लक्ष्मीस्तथा कामं । ९ ग. घ. ज. °था । गरुडं चैव विनता वि° । १० घ. ज. भूमिं । ११ क. ख. ङ. च. °न्तं साध्यालो° । ग. °न्तं मध्यलो° । घ. ज. °न्तं मेध्यालो° । १२ ग. ज. वलं । १३ क. ख. ग. ङ. च. ज. °यं ध्रुवम° । १४ क. ख. घ. ङ. च. ज. °मायां च सम° । १५ क. ख. ङ. च. °रस्तन एव च । चा° । ग. घ. ज. °रश्चल एव च । चा° । १६ क. च. °षश्च ततः प्रोचुस्तथा भद्रमहोरगौ । वि° । ग. घ. ज. °षश्चात्र च तथा तत्र जाता म° । १७ ग. °श्चात्मकवसुर्बालो निकुम्भश्च । घ. ज. °श्चान्तकवसुर्बालो निकुम्भश्च । १८ क. ग. घ. च. ज. °तिसिद्धौजा ।

अग्निश्चक्षुरिति ज्योतिः सावित्री मित्र एव च । अमरं शरवृष्टिं च सुवर्षं च महाभुजम् ॥ ९९
विराजं चैव राजं च विश्वायुं सुमतिं तथा । अश्वगन्धं चित्ररश्मिं तथा च निषधं नृपम् ॥१००
भूय एवं चाऽऽत्मविधिं चारित्रं पादमात्रगम् । बृहन्तं वै बृहद्रूपं तथा विष्णुसनाभिगम् ॥१०१
मरुत्वती प्रजा जज्ञ एतं वै मरुतां गणम् । अदितिः कश्यपाज्जज्ञ आदित्यान्द्वादशैव हि ॥१०२
इन्द्रो विष्णुर्भगस्त्वष्टा वरुणोंऽशोऽर्यमा रविः । पूषा मित्रश्च वरदो धाता पर्जन्य एव च ॥१०३
इत्येते द्वादशाऽऽदित्या वरिष्ठास्त्रिदिवौकसाम् । आदित्यस्य सरस्वत्यां जज्ञाते द्वौ सुतौ वरौ ॥
तपःश्रेष्ठौ गुणश्रेष्ठौ त्रिदिवस्यापि संमतौ । दनुस्तु दानवाञ्जज्ञे दितिर्दैत्यानजीजनत् ॥ १०५
काला तु कालकेयांस्तु असुरान्राक्षसांस्तथा । अनायुषायास्तनयो मयो नाम महाबलः ॥ १०६
सिंहिका ग्रहमाता वै गन्धर्वजननी शुनी । प्राची त्वप्सरसां माता पुण्यानां भारतेऽभवत् ॥१०७
क्रोधायाः सर्वभूतानि पिशाचायाश्च पार्थिव । जज्ञे यक्षगणांश्चैव राक्षसांश्च विशां पते ॥ १०८
चतुष्पादानि सत्त्वानि एता गाश्चैव सौरभीः । सुपर्णं पक्षिणश्चैव मायां विष्णुर्हरिः प्रभुः ॥
कथितस्तेऽनुपूर्वेण संस्तुतश्च महर्षिभिः ॥ १०९

यश्चेदमग्र्यं शृणुयात्पुराणं सदा नरः पर्वसु चेत्पठेत ।
अवाप्य लोकं स इह वीतरागः परत्र च स्वर्गफलानि भुङ्क्ते ॥ ११०

चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् । प्रसादयति यः कृष्णं तस्य कृष्णः प्रसीदति ॥१११
राज्यं च लभते राजा अधनश्चोत्तमं धनम् । क्षीणायुर्लभते चाऽऽयुः पुत्रकामः सुतांस्तथा ११२
यज्ञान्वेदांस्तथा कामांस्तपांसि विविधानि च । यद्यत्कामयते किंचित्तत्तल्लोकेश्वराद्भवेत् ॥ ११३
सर्वं विहाय य इमं पठेत्पौष्करकं हरेः । प्रादुर्भावं नरश्रेष्ठ न तस्य ह्यशुभं भवेत् ॥ ११४
एष पौष्करको नाम प्रादुर्भावो महात्मनः । कीर्तितस्ते महाराज व्यासश्रुतिनिदर्शनात् ॥ ११५
विष्णुत्वं शृणु मे विष्णोर्हरित्वं च कृते युगे । वैकुण्ठत्वं च देवेषु कृष्णत्वं मानुषेषु च ॥ ११६
ईश्वरस्य हि तस्यैषा कर्मणां गहना गतिः । सांप्रतं भूतभव्यं च शृणु राजन्यथातथम् ॥ ११७
अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान्प्रभुः । नारायणो ह्यनन्तात्मा प्रभवोऽव्यय एव च ११८
एष नारायणो भूत्वा हरिरासीत्सनातनः । ब्रह्मा कामश्च धर्मश्च वायुश्चैव बृहस्पतिः ॥ ११९
अदितेरपि पुत्रत्वमेत्य यादवनन्दनः । एष विष्णुरिति ख्यात इन्द्रस्यावरजः प्रभुः ॥ १२०
प्रसादनं तस्य विभोरदित्याः पुत्रकारणम् । वधार्थं सुरशत्रूणां दैत्यदानवरक्षसाम् ॥ १२१
प्रधानात्मा पुरा ह्येष ब्रह्माणमसृजत्प्रभुः । ससर्जाथ सुरान्कल्पे ब्रह्मा चैव प्रजापतीन् ॥ १२२
असृजन्मानवांस्तत्र ब्रह्मवंशाननुत्तमान् । तेभ्योऽभवन्महात्मभ्यः परं ब्रह्म सनातनम् ॥ १२३
एतदाश्चर्यभूतस्य विष्णोः कर्मानुकीर्तनम् । कीर्तनीयस्य लोकेषु कीर्त्यमानं विबोध मे ॥ १२४
वृत्ते वृत्रवधे भीष्म वर्तमाने कृते युगे । आसीत्त्रैलोक्यविख्यातः सङ्ग्रामस्तारकामयः ॥ १२५

---

१ क. ख. ग. घ. ङ. च. ज. सुकर्षं च महत्तरम् । २ ग. घ. ज. °श्ववन्धं । ३ क. ख. ङ. च. जज्ञे ज्येष्ठान्तं म° । ४ घ. ज. त्रिवर्गरया° । ५ क. ख. ङ. च. अनायुषायास्तनया व्याधयश्च म° । ग. घ. ज. अलम्बुषायास्तनयो मित्रो ना° । ६ क. ख. ग. घ. ङ. च. ज. मुनिः । ७ क. ख. ग. ङ. च. ज. प्राधा । ८ क. ख. घ. ङ. च. ज. °तेतराः । क्रो° । ९ क. ख. च. °भीः । पुराणपुरुषश्चैव मया वि° । ग. घ. ज. °भीः । पर्वतं पक्षिणं चैव । १० झ. त्रिश्वत्वं । ११ ग. घ. ज. शुभे । १२ ग. घ. ज. सहजा । १३ झ. °तिः । संप्रख्यातां च धर्म्यां च । १४ क. हरिः साक्षात्स° । १५ ग. घ. ज. °ह्मा वायुश्च सोमश्च धर्मः शुक्रो बृ° । १६ क. ख. ङ. च. °ग्मानवांस्त° ।

यत्र ते दानवा घोराः सर्वे सङ्ग्रामदुर्जयाः । घ्नन्ति [1]देवगणान्सर्वान्सयक्षोरगराक्षसान् ॥ १२६
ते वध्यमाना विमुखाः [2]क्षीणप्रहरणा रणे । त्रातारं मनसा जग्मुर्देवं नारायणं [3]परम् ॥ १२७
एतस्मिन्नन्तरे [4]मेघा [5]निर्वाणाङ्गारवर्चसः । सार्कचन्द्रग्रहगणं छादयन्तो नभस्तलम् ॥ १२८
चण्डविद्युद्गणोपेता घोरनिर्ह्रादकारिणः । अन्योन्यवेगाभिहताः प्रववुः सप्त मारुताः ॥ १२९
[6]दीप्ततोयाः सनिर्घातैः सह वज्रानलानि[7]लैः । रवैः सुघोरैरुत्पातैर्दह्यमानमिवाम्बरम् ॥ १३०
पेतुरुल्कासहस्राणि निपेतुः खचराण्यपि । [8]न्युब्जानि च विमानानि प्रपतन्त्युत्पतन्ति च ॥ १३१
[9]तपोयोगविपर्यासे लोकानां यद्भयं भवेत् । अरूपवन्ति रूपाणि तस्मिन्नुत्पातलक्षणे ॥ १३२
[10]तस्मात्प्रभञ्जनात्सर्वं न प्राज्ञायत किंचन । तिमिरौघपरिक्षिप्ता न रेजुश्च दिशो दश ॥ १३३
[11]विवेश रूपिणी काली कालमेघावगुण्ठिता । द्यौर्न भात्यभिभूतार्का घोरेण तमसाऽऽवृता ॥ १३४
तां घनौघां सतिमिरां दोर्भ्यामाक्षिप्य स प्रभुः । वपुः स्वं दर्शयामास दिव्यं कृष्णवपुर्हरिः ॥ १३५
बलाहकाञ्जननिभं बलाहकतनूरुहम् । तेजसा [12]वपुषा चैव कृष्णं कृष्णमिवाचलम् ॥ १३६
दीप्तपीताम्बरं चैव तप्तकाञ्चनभूषणम् । धूमान्धकारवपुषं युगान्ताग्निमिवोत्थितम् ॥ १३७
वृत्तद्विगुणपीनांसं किरीटच्छन्नमूर्धजम् । बभौ चामीकरप्रख्यैरायुधैरुपशोभितैः ॥ १३८
चन्द्रार्ककिरणोद्योतं गिरिकूटमिवोच्छ्रितम् । नन्दकानन्दितकरं कौस्तुभोद्भासितोरसम् ॥ १३९
शक्तिचित्र[13]हलोदग्रं शङ्खचक्रगदाधरम् । विष्णुशैलं [14]क्षमामूलं [15]श्रीवृक्षं शार्ङ्गशृङ्गिणम् ॥ १४०
हर्यश्वरथसंयुक्तं सुपर्णध्वजसंयुतम् । चन्द्रार्कचक्ररचितं उदाराक्षवृतान्तरम् ॥ १४१
अनन्तरश्मिसंयुक्ते दुर्दर्शे मे[16]रुभूधरे । तारका[17]वद्धकुसुमं ग्रहनक्षत्रबन्धुरम् ॥ १४२
भयेष्वभयदं व्योम्नि देवदैत्यापराजितम् । त्रिदशोदारफलदं स्वर्गस्त्रीचारुवल्लभम् ॥ १४३
सर्वलोक[18]मनोतीतं सर्वसत्त्वमनोहरम् । [19]नानाविमानविटपं तोयदौघसमप्रभम् ॥ १४४
[20]विमाहंकारमानाढ्यं महाभूतप्ररोहणम् । विशेषपत्रैर्निचितं ग्रहनक्षत्रपुष्पितम् ॥ १४५
दैत्यलोकम[21]हांस्कन्धं मर्त्यलोकप्रकाशितम् । सागराकारनिर्ह्रादं रसातलतलाश्र[22]यम् ॥ १४६
नागेन्द्रपाशैर्विततं पक्षिजन्तुनिषेवितम् । शील[23]ार्थवहगन्धाढ्यं सर्वलोकम[24]हाह्रदम् ॥ १४७
अव्यक्तानन्तसलिलं व्यक्ताहंकारफेनिलम् । महाभूतकरौघौघं ग्रहनक्षत्रबुद्बुदम् ॥ १४८
विमानवाहनैर्व्याप्तं तोयदाडम्बराकुलम् । जन्तुमत्स्यगणाकीर्णं शैलशङ्खकुलैर्युतम् ॥ १४९
त्रैगुण्यविषयावर्तं सर्वलोकतिमिङ्गिलम् । वीरवृक्षलतागुल्मं भुजगोत्सृष्टशैवलम् ॥ १५०
द्वादशार्कमहाद्वीपं रुद्रैकादशपत्तनम् । वस्वष्टपर्वतोपेतं त्रैलोक्याम्भोमहोदधिम् ॥ १५१
संध्यासंध्योर्मिसलिलमापूर्णानि[25]लैसेवितम् । दैत्ययक्षगणग्राहं रक्षोगणझषाकुलम् ॥ १५२

---

१ क. ख. ग. घ. ङ. च. ज. देवासुरान्स° । २ क. ख. ग. घ. ङ. च ज. छिन्नप्रहरणा । ३ क. ख. ग. घ ङ. च. ज. प्रभुम् । ४ झ. देवा । ५ घ. ज. °प्ततेजाशनि° । ६ झ. °तोयाशनिव्रातावज्रवेगानिलानलैः । ७ ग. घ. ज °लैः । बलैः सुघोरैः सुप्रोतैश्छादयन्त इवा° । झ. °लैः । रूपैः सुघोरमुत्पा° । ८ क. ख. ङ. च. दैवानि । ग. युग्मानि । ९ क. ख. ग. घ. ङ. च. ज. चतुर्युगान्तसमये । १० क. ख. ग. घ. ङ. च. ज. °स्माद्दुष्प्रथितं सर्वं । ११ झ. °वेकरू° । १२ झ. यशसा । १३ क. ख. ग. घ. ङ. च. ज. °त्रफलोदर्क श° । १४ ग. घ. ज. क्षमाशीलं । १५ क. ख. ङ. च. °लं श्रीवत्स-शार्ङ्गपाणिनम् । ज. °लं श्रीवत्सशा° । झ. °लं सुवृ° । १६ क. ख. ङ. च. °रुकूवरम् । ता° । १७ क. ख. ङ. च. °द्धसुभगं प्र° । १८ क. ख. ग. घ. ङ. च. ज. °मनःकान्तं स° । १९ क. ख. ङ. च. ज. मायाविशालविटपं । २० क. ख. ङ. च. विद्याहं° । २१ ग. घ. ज. °हास्कुब्धं म° । २२ क. ग. ख. ङ. च. °म् । मृगे° । २३ क. ख. ङ. °लानाशार्यग° । २४ क. ख. ग. घ. ङ. च. ज. °हाद्रुमम् । २५ क. ख. घ. ङ. च. ज. °लशोभित° ।

[1]पितामहमहावीर्यं दिव्यस्त्रीरत्नभूषितम् । श्रीकीर्तिकान्तिलक्ष्मीभिर्नदीभिरुपशोभितम्[2] ॥ १५३
[3]कालयोगमहापर्वप्रलयोत्पातवेगिनम् । तं संयोगसमाधारं नारायणमहार्णवम् ॥ १५४
[4]देवातिदेवं वरदं भक्तानां भक्तवत्सलम् । अनुग्रहकरं देवं प्रशान्तिकरणं शिवम् ॥ १५५
[5]हर्यश्वरथसंयुक्ते सुवर्णध्वजशोभिते । ददृशुस्ते स्थितं देवं दिव्यलोकमये रथे ॥ १५६
[6]ते कृताञ्जलयः सर्वे देवाः शक्रपुरोगमाः । जयशब्दं पुरस्कृत्य शरण्यं शरणं गताः ॥ १५७
[7]स तेषां तां गिरं श्रुत्वा विष्णुर्दैवतदैवतम् । मनश्चक्रे विनाशाय दानवानां महामृधे ॥ १५८
[8]आकाशे तु स्थितो देव उत्तमं वपुरास्थितः । उवाच देवाञ्शक्रादीन्सप्रतिज्ञमिदं वचः ॥ १५९

श्रीविष्णुरुवाच—

[9]शान्तिं व्रजत भद्रं वो मा भैष्ट मरुतां गणाः । जिता मे दानवाः सर्वे त्रैलोक्यं परिगृह्यताम् १६०

पुलस्त्य उवाच—

ते तस्य सत्यसंधस्य विष्णोर्वाक्येन तोषिताः । देवाः प्रीतिं परां जग्मुः प्राश्यामृतमिवोत्तमम् ॥
*ततस्तमश्च संहृत्य विनेशुश्च बलाहकाः । प्रववुश्च शिवा वाताः प्रसन्नाश्च दिशो दश ॥ १६२
शुद्धप्रायाणि ज्योतींषि सोमं चक्रुः प्रदक्षिणम् । न विग्रहं ग्रहाश्चक्रुः प्रसन्नाश्चापि सिन्धवः १६३
विरजाश्चाभवन्मार्गा लोकाः स्वर्गादयस्त्रयः । †यथार्थमा(मू)हुः सरितो न चुक्षुभे तथाऽर्णवः ॥
आसञ्शुभानीन्द्रियाणि नराणामन्तरात्मसु । महर्षयो वीतशोका वेदानुच्चैरध्यैयत ॥ १६५
यज्ञेषु च हविष्पाकं शिवमाप ह पावकः । प्रवृत्तधर्मसंवृत्ता लोका मुदितमानसाः ॥ १६६
विष्णोः कृतप्रतिज्ञस्य श्रुत्वाऽरिनिधने गिरम् । ततो भयं त्रिष्णुमुखाच्छ्रुत्वा दैतेयदानवाः १६७
उद्योगं विपुलं चक्रुर्युद्धाय विजयाय च । मयस्तु काञ्चनमयं नृदण्डाजरमक्षयम् ॥ १६८
चतुश्चक्रं सुविपुलं विकल्पितमहाध्वजम् । किङ्किणीजालनिर्घोषं द्वीपिचर्मपरिष्कृतम् ॥ १६९
रुचिरं रश्मिजालैश्च[10] नानारत्नैश्च शोभितम् । ईहामृगगणाकीर्णं[11] पक्षिसंघविराजितम् ॥ १७०
दिव्यास्त्र[12]हन्तृखचरं पयोधरविनादितम् । स्वच्छं चाथ परोदारमुपस्थाय रथोत्तमम् ॥ १७१
गदापरिघसंपूर्णं मूर्तिमन्तमिवानलम् । हेमकेयूर[13]वलयं चन्द्रमण्डलकूबरम् ॥ १७२
सपताकं ध्वजोपेतमादित्यस्येव मण्डलम् । गजेन्द्राभोगवपुषं क्वचित्केशरवर्चसम् ॥ १७३
युक्तमृक्षसहस्रेण सुधाराम्बुदनादितम् । *दीप्तमाकाशकं दिव्यं रथं पररथारुजम् ॥ १७४
अध्यतिष्ठद्रणाकाङ्क्षी मेरुं दीप्त इवांशुमान् । तारस्तु क्रोधविस्तारो यानं सर्वहरं रथम् ॥ १७५
[14]शैलाकाराभिसंकाशं नीलाञ्जनचयोपमम् । काललोष्टं च रत्नानां[15] सहेमाबद्धकूबरम् ॥ १७६
तिमिराङ्गारकिरणं गर्जन्तमिव तोयदम् । लोहजालेन महता शत[16]संख्येन दंशितम् ॥ १७७
आयसैः परिघैः पूर्णं क्षेपणीयैश्च मुद्गरैः । प्रासैः पाशैश्च विततैरसंयुक्तैश्च कण्टकैः ॥ १७८

* इदमर्धं झ. पुस्तकस्थम् । † इदमर्धं झ. पुस्तकस्थम् । * इदमर्धं झ. पुस्तकस्थम् ।

१ क. ख. ङ. च. ज. °त्नसंकुलम् । २ क. ख. ङ. च. ज. °भिश्च समाकुलम् । ३ क. ख. ङ. च. °प्रलयो° । ४ क. ख. ग. च. °गमहापारं ना° । च. °गसमाधानं ना° । ५ क. ख. ङ. च. ज. °युक्त उक्तशोभाससन्विते । ६ घ. ज. °दारम्भोऽभिधीयते । य° । ७ क. ख. ङ. च. सत्यप्रतिज्ञस्य । ८ झ. °ष्णुमयं श्रुत्वा । ९ क. ख. घ. ङ. च. ज. °यं त्रिनल्वान्तरमव्यय° । १० क. ख. ग. घ. ङ. च. ज. हेमजालैश्च । ११ क. ख. घ. ङ. च. ज. °र्णं यक्षसं° । १२ क. च. °स्त्रशस्त्ररुचिरं । १३ क. ख. घ. ङ. च. ज. °मकेयूर° । १४ क. ख. घ. ङ. च. ज. शैलकूबरसं° । १५ क. ख. ग. घ. ङ. च. ज. °नां लोहमा° । १६ क. ख. ङ. च. सगवाक्षेण ।

शोभनं त्रासनीयैश्च तोमरैश्च परश्वधैः । उद्यतां द्विषतां हेतोर्द्वितीयमिव मन्दरम् ॥ १७९
युक्तं खरसहस्रेण सोऽध्यारोहद्रथोत्तमम् । विरोचनस्तु संक्रुद्धो गदापाणिरवस्थितः ॥ १८०
प्रमुखे तस्य सैन्यस्य दीप्तशृङ्ग इवाचलः । युक्तं हयसहस्रेण हयग्रीवस्तु दानवः ॥ १८१
[*व्यूहितं दानवं(व) व्यूहं परिचक्राम वीर्यवान् । विप्रचित्तिसुतः श्वेतः श्वेतकुण्डलभूषणः ] ॥
स्यन्दनं वाहयामास परानीकस्य मर्दनः । व्यायतं किष्कुसाहस्रं धनुर्विस्फारयन्महान् ॥ १८३
वराहः प्रमुखे तस्थौ सप्ररोह इवाचलः । खरस्तु विक्षरन्दर्पान्नेत्राभ्यां क्रोधजं जलम् ॥ १८४
स्फुरद्दन्तौष्ठनयनः सङ्ग्रामं सोऽभ्यकाङ्क्षत । त्वष्टा त्वष्टादशहयं यानमास्थाय दानवैः ॥ १८५
श्वेतमेघप्रतीकाशो युद्धायाभिमुखः स्थितः । अरिष्टो बलिपुत्रश्च वरिष्ठोऽद्रिशिलायुधः ॥ १८६
युद्धायाभिमुखस्तस्थौ धराधरविकम्पनः । किशोरस्त्वतिसंहर्षात्किशोर इव चोदितः ॥ १८७
अभवद्दैत्यमध्ये स ग्रहमध्ये यथा रविः । लम्बस्तु लम्बमेघाभः प्रलम्बाम्बरभूषणः ॥ १८८
दैत्यव्यूहगतो भाति सनीहार इवांशुमान् । वसुंधराभस्तदनु दशनौष्ठेक्षणायुधः ॥ १८९
हसंस्तिष्ठति दैत्यानां प्रमुखे स महाग्रहः । अन्ये हयगतास्तत्र गजस्कन्धगताः परे ॥ १९०
सिंहव्याघ्रगताश्चान्ये वराहर्क्षेषु चापरे । केचित्खरोष्ट्रयातारः केचित्पयोदवाहनाः ॥ १९१
पत्तयस्त्वपरे दैत्या भीषणा विकृताननाः । एकपादा द्विपादाश्च ननृतुर्युद्धकाङ्क्षिणः ॥ १९२
आस्फोटयन्तो बहवः क्ष्वेडन्तश्च तथाऽपरे । दृप्तशार्दूलनिर्घोषा नेदुर्दानवपुंगवाः ॥ १९३
ते गदापरिघैरुग्रैः शिलामुसलपाणयः । बाहुभिः परिघाकारैस्तर्जयन्ति स्म देवताः ॥ १९४
पाशैः प्रासैश्च खड्गैश्च तोमराङ्कुशपट्टिशैः । चिक्रीडुस्ते शतघ्नीभिः शतधारैश्च मुद्गरैः ॥ १९५
खड्गैः शूलैश्च शैलैश्च परिघैश्चोत्तमायुधैः । युक्तं बलाहकगणैः सर्वतः संवृतं नभः ॥ १९६
एवं तद्दानवं सैन्यं सर्वसत्त्वमदोत्कटम् । देवताभिमुखं तस्थौ मेघानीकमिवोद्यतम् ॥ १९७

तद्‌द्भुतं दैत्यसहस्रगाढं वाय्वग्निशैलाम्बुदतोयकल्पम् ।
बलं रणौघाय समभ्युदीर्णं युयुत्सयोन्मत्तमिवावभासे ॥ १९८

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे दैत्यसैन्यवर्णनं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६९९०

---

अथाष्टात्रिंशोऽध्यायः ।

---

पुलस्त्य उवाच—

श्रुतस्ते दैत्यसैन्यस्य विस्तरः कुरुनन्दन । सुराणामपि सैन्यस्य विस्तरं वैष्णवं शृणु ॥ १
आदित्या वसवो रुद्रा अश्विनौ च महाबलौ । सबलाः सानुगाश्चैव संनह्यन्त यथाक्रमम् ॥ २
पुरुहूतश्च पुरतो लोकपालः सहस्रदृक् । ग्रामणीः सर्वदेवानामारुरोह द्विपं परम् ॥ ३

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः ।

---

१ झ. °क्तं रथस° । २ ग. घ. ज. °स्तु वीक्ष्य संक्रोधान्ने° । ३ ख. ग. घ. ङ. च. ज. °वः । दिव्यव्यूहप्र° । ४ क. ख. घ. ङ. च. ज. °ष्ठो दुर्धरायु° । ५ ग. घ. °विः । रथस्तु नवमे° । ६ क. ख. ङ. च. °स्तु नवमे° । ७ ग. घ. °नूः । युगंधराख्यस्तदनु द° । झ. °नू । स्वर्भानुरथ योऽयोधि दश° । ८ ग. घ. ज. °पादार्धपा° । ञ. °पादास्त्वपा° । ९ ञ. स्वनन्तश्च । १० क. ख. ग. घ. ङ. च. ज. °मुद्गरपा° । ११ क. ख. ङ. च. °मू । रेजे च तद्दैत्य° । १२ क. ख. ङ. च. °लं बलौघाकुलम° ।

सैन्ये चास्य रथः पार्श्वे पक्षिप्रवरकेतनः । सुचारुचक्रचरणो हैमवस्त्रपरिष्कृतः ॥ ४
देवगन्धर्वयक्षाद्यैरनुयातः सहस्रशः । दीप्तिमद्भिश्च स्वर्गस्थैर्ब्रह्मर्षिभिरभिष्टुतः ॥ ५
वज्रविस्फारितोद्धूतैर्विद्युदिन्द्रायुधप्रभैः । युक्तं वलाहकगणैः पर्वतैरिव कामगैः ॥ ६
यमारूढः स भगवान्पर्येति सकलं जगत् । हविर्दानेषु गायन्ति विप्रा मखमुखे स्थिताः ॥ ७
स्वर्गसङ्ग्रामयातेषु देवतूर्यनिनादिषु । सदा यमुपनृत्यन्ति शतशो ह्यप्सरोगणाः ॥ ८
केतुना गजराजेन राजमानो यथा रविः । युक्तो हयसहस्रेण मनोमारुतरंहसा ॥ ९
यः स्यन्दनवरो भाति गुप्तो मातलिना तदा । कृत्स्नः परिवृतो मेरुर्भास्करस्येव तेजसा ॥ १०
यमस्तु दण्डमुद्यम्य कालयुक्तं च मुद्गरम् । तस्थौ सुरगणानीके दैत्यान्नादेन भीषयन् ॥ ११
चतुर्भिः सागरैर्युक्तो लेलिहानैश्च पन्नगैः । शङ्खमुक्ताङ्गदधरो बिभ्रत्तोयमयं वपुः ॥ १२
कालपाशान्समाविध्य हयैः शशिकरोपमैः । वाय्वीरितजलाकारैः कुर्वँल्लीलाः सहस्रशः ॥ १३
पाण्डुरोद्धूतवसनः प्रवालरुचिराङ्गदः । मणिश्यामोत्तमवपुर्हारभारार्पितोदरः ॥ १४
वरुणः पाशधृङ्मध्ये देवानीकस्य संस्थितः । युद्धवेलामभिलषन्भिन्नवेल इवार्णवः ॥ १५
यक्षराक्षससैन्येन गुह्यकानां गणैरपि । युक्तश्च शङ्खपद्माभ्यां निधीनामधिपः प्रभुः ॥ १६
राजराजेश्वरः श्रीमान्गदापाणिरदृश्यत । विमानयोधी धनदो विमाने पुष्पके स्थितः ॥ १७
स राजराजः शुशुभे युद्धार्थं नरवाहनः । *ईक्षमाणः स्वसङ्ग्रामं साक्षादिव शिवः स्वयम् ॥ १८
पूर्वपक्षे सहस्राक्षः पितृराजस्तु दक्षिणे । वरुणः पश्चिमे पक्ष उत्तरे नरवाहनः ॥ १९
चतुर्षु युक्ताश्चत्वारो लोकपाला महाबलाः । स्वासु दिक्षु च रक्षन्तस्तस्य देवबलस्य ते ॥ २०
सूर्यः सप्ताश्वयुक्तेन रथेनानिलगामिना । श्रिया जाज्वल्यमानेन दीप्यमानैश्च रश्मिभिः ॥ २१
उदयास्तमने चक्रे मेरुपर्यन्तगामिना । त्रिदिवद्वारचक्रेण तपसा लोकमव्ययम् ॥ २२
सहस्ररश्मियुक्तेन भ्राजमानेन तेजसा । चचार मध्ये देवानां द्वादशात्मा दिनेश्वरः ॥ २३
सोमः श्वेतहयो भाति स्यन्दने शीतरश्मिवान् । हिमतोयसवर्णाभिर्भाभिराह्लादयञ्जगत् ॥ २४
तमृक्षयोगानुगतं शिशिरांशुं द्विजेश्वरम् । शशच्छायाङ्किततनुं नैशस्य तमसः क्षयम् ॥ २५
ज्योतिषामीश्वरं व्योम्नि रसानां प्रभुमव्ययम् । औषधीनां पवित्राणां निधानममृतस्य च ॥ २६
जगतः प्रथमं भागं सौम्यं सत्त्वमयं रसम् । ददृशुर्दानवाः सोमं हिमप्रहरणं स्थितम् ॥ २७
यः प्राणः सर्वभूतानां पञ्चधा भिद्यते नृषु । सप्तस्कन्धगतो लोकं त्रिदिवं च चचार यः ॥ २८
यमाहुरग्निकर्तारं सर्वप्रभवमीश्वरम् । सप्तस्वरगता यस्य योनिर्गीर्भिरुदीर्यते ॥ २९

---

* इदमर्धं झ. पुस्तकस्थम् ।

---

१ ग. घ. ज सर्वोपस्करसंयुक्तं सर्वप्रवरसंयुतम् । सु° । २ क. ख. घ. ङ. च. ज. °मच्छत्रप° । ग. °मक्षेत्रप° । ३ घ. ज. °विर्धानमुखं याति वि° । झ. °विर्धाने° । ४ क. ख. ङ. च. °पु । सेन्द्रं समु° । ग. घ. ज. °पु । सेन्द्रा यमु° । ५ ग. घ. ज. °ण युतो मा° । ६ क. ख. ग. घ. ङ. च. ज. °सा । सम्यग्रथत्र° । ७ ञ. युक्तो । ८ झ. सदा । ९ ग. घ. ज. °रफेनार्पि° । १० घ. °तः । शुद्धवे° । ११ ग. घ. °वः । पुष्कराक्षः स्वसै° । १२ घ. ज. प्रधानो । १३ क. ख. ङ. च. चरन्तश्च तस्य । १४ झ. सहयातेन । १५ ग. घ. ज. °ने श्वेतर° । १६ क. ख. ग. घ ङ. च. ज. °यप्रपूर्णा° । १७ ग. घ. ज. °राच्छाद° । १८ क. ख. ग. घ. ङ. च. ज. परमं । १९ क. ख. ग. घ. ङ. च. ज. सर्वमयं । २० क. ख. ङ. च. लोकांस्त्रीन्दधार चकार च । य° । ग. घ. ज. लोकांस्त्रीनिदं वा चकार यः । २१ क. ख. ङ. च. °ते । यं वदन्त्यचलं भू° । ग. घ. ज. °ते । पवित्रमुत्त° ।

यं वदन्त्युत्तमं भूतं[1] यं वदन्त्यशरीरिणम् । यमाहुराकाशगमं शीघ्रगं शब्दयोनिजम् ॥ ३०
स[2] वायुः सर्वभूतायुरुद्धतः स्वेन तेजसा । ववौ[3] प्रव्यथयन्दैत्यान्प्रतिलोमगतो[4] हि सः ॥ ३१
मरुता[5] देवगन्धर्वविद्याधरगणैः सह । [6]चिक्रीडू रश्मिभिः शुभ्रैर्निर्मुक्तैरिव पन्नगैः ॥ ३२
सृजन्तः सर्पपतयस्तीव्रं रोषमयं विषम्[7] । शरभूता विलग्नाश्च चेरुर्व्यात्ताननना दिवि ॥ ३३
पर्वताश्च शिलाशृङ्गैः शतशाखैश्च पादपैः । उपतस्थुः सुरगणाः प्रहर्तुं दानवे बले ॥ ३४
यः स देवो हृषीकेशः पद्मनाभस्त्रिविक्रमः । युगान्ते कृष्णवर्त्मा यो विश्वस्य जगतः प्रभुः ॥ ३५
[+सर्वयोनिः स मधुहा हव्यभुक्क्रतुसंस्थितः । भूम्यापोव्योमभूतात्मा श्यामः शान्तिकरोऽरिहा]
*सोमार्काग्निमयं चक्रमुद्यम्योत्तमतेजसम् । अविघ्नर्मसुरादीनां[8] वधं चक्रे गदाधरः ॥ ३७
सव्येनाऽऽलम्ब्य महतीं सर्वासुरविनाशिनीम् । करेण कालीं वपुषा शत्रुकालप्रदां गदाम्[9] ॥ ३८
शेषैर्भुजैः प्रदीप्तांशुभुजगारिध्वजः प्रभुः[10] । दधाराऽऽयुधजालानि[11][12] शार्ङ्गादीनि महाबलैः[13] ॥ ३९
स कश्यपस्याऽऽत्मभवं द्विजं भुजगभोजनम् । *पवनाधिकसंयातं गगनं क्षोभितं खगम् ॥ ४०
भुजगेन्द्रेण वदने निविष्टेन विराजितम् । अमृतारम्भसंयुक्तं मन्दराद्रिमिवोच्छ्रितम् ॥ ४१
देवासुरविमर्देषु बहुशो दृष्टविक्रमम् । महेन्द्रेणामृतस्यार्थे वज्रेण कृतलक्षणम् ॥ ४२
विचित्रपत्रवसनं धातुमन्तमिवाचलम् । स्फीतक्रोडावलम्बेन शीतांशुसमतेजसा ॥ ४३
भोगिभोगावसक्तेन मणिरत्नेन भास्वता । पक्षाभ्यां चारुपत्राभ्यामावृत्य दिवि लीलया ॥ ४४
युगान्ते सेन्द्रचापाभ्यां तोयदाभ्यामिवाम्बरम् । नीललोहितपीताभिः[14] पताकाभिरलंकृतम् ॥ ४५
+केतुवंशपरिच्छिन्नं महाकायनिकेतनम् । अरुणावरजं श्रीमानारुह्य समरे विभुः ॥ ४६
सुवर्णवर्णवपुषा(षं) सुपर्णं खेचरोत्तमम् । [15]पर्वतानद्धनिर्घोषं संप्रदीप्तहुताशनम् ॥ ४७
विष्णोर्जिष्णोः सहिष्णोश्च भ्राजिष्णोस्तेजसाऽऽवृतम् । बलं बलवदुद्रिक्तं युद्धाय समवर्तत ॥ ४८
तमन्वयुर्देवगणा मुनयश्च समाहिताः । गीर्भिः परममन्त्राभिस्तुष्टुवुस्ते गदाधरम् ॥ ४९
*तद्वैश्रवणसंश्लिष्टं वैवस्वतपुरःसरम् । वारिराजपरिक्षिप्तं देवराजविराजितम् ॥ ५०
स्वस्त्यस्तु देवेभ्य इति बृहस्पतिरभाषत । स्वस्त्यस्तु दैत्येभ्य इति उशना वाक्यमाददे ॥ ५१
ताभ्यां बलाभ्यां संजज्ञे तुमुलो विग्रहस्तदा[16] । सुराणामसुराणां च परस्परजयैषिणाम् ॥ ५२
दानवा दैवतैः सार्धं नानाप्रहरणोद्यताः । समीयुर्युध्यमाना वै पर्वता इव पर्वतैः ॥ ५३
तत्सुरासुरसंयुक्तं युद्धमत्यद्भुतं बभौ । धर्माधर्मसमायुक्तं दर्पेण विनयेन च ॥ ५४
ततो हयैः[17] प्रजवितैर्वारणैश्च प्रचोदितैः । उत्पतद्भिश्च गगनं सासिहस्तैः समन्ततः ॥ ५५
क्षिप्यमाणैश्च मुशलैः संपतद्भिश्च सायकैः । चापैर्विस्फार्यमाणैश्च पात्यमानैः सुदारुणैः ॥ ५६

---

+ धनुचिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । * इदमर्धं झ. पुस्तकस्थम् । * इदमर्धं झ. पुस्तकस्थम् । + इदमर्धं झ. पुस्तकस्थम् । * अयं श्लोकः क्वचिन्नास्ति ।

---

१ घ. ज. °तं प्रवदन्ति श° । ग. °तं प्रवदन्ति शरीरिणः । य° । २ ग. घ. ज. स हंसः सर्वभूतानां प्रज्वलन्स्वेन । ३ घ. ज. वपुरव्यथयन्देवान्प्र° । ४ क. ख. ग. घ. ङ. च. ज. °लोमं सतोयदः । म° । ५ ञ. मारुतो । ६ ञ. चिक्रीड । ७ क. ख. ग. घ. ङ. च. ज. °म् । सर्पभू° । ८ क. ख. ङ. च. °प्रमरादीनां चक्रे चक्रग° । ९ क. ख. घ. ङ. च. ज. °रः । दर्पेणाऽऽलभ्य महतीं सर्वायुधवि° । १० क. ख. च. °म् । प्रासैर्भुजैः प्रदीप्ताभिर्भु° । ङ. °म् । प्रासैर्भुजैः प्रदीप्ताभिर्भु° । ११ घ. ज. °राम्बुधिजा° । १२ क. ख. ङ. च. °जालानि । १३ ञ. °लः । शक्रस्य पश्यतोऽभ्राभं द्वि° । १४ ग. घ. ज. °तपत्राभिः । १५ क. ख. ङ. च. पवनाविद्धनिस्त्रिंशं सं° । १६ क. ख. ग. घ. ङ. च. ज. °स्तथा । सु° । १७ झ. रथैः ।

तद्युद्धमभवद्घोरं देवदानवसंकुलम् । जगतस्त्रासजननं युगसंवर्तकोपमम् ॥ ५७

स्वहस्तयु(मु)क्तैः परिघैर्मुद्गरैश्चैव पर्वतैः । दानवाः समरे जघ्नुर्देवानिन्द्रपुरोगमान् ॥ ५८

ते वध्यमाना बलिभिर्दानवैर्जितकाशिभिः । विषण्णवदना देवा जग्मुरार्ति परां मृधे ॥ ५९

ते चास्त्रशूलमथिताः परिघैर्भिन्नमस्तकाः । भिन्नोरस्का दितिसुतैः सस्रू रक्तं रणे बहु ॥ ६०

सूदिताः शरजालैश्च निर्यत्नाः समरे कृताः । प्रविष्टा दानवीं मायां न शेकुस्ते विचेष्टितुम् ॥ ६१

उत्तम्भितमिवाऽऽभाति निष्प्राणसदृशाकृति । [*बलं सुराणामसुरैर्निष्प्रयत्नायुधं कृतम्] ॥ ६२

दैत्यचापच्युतान्घोरांश्छित्त्वा वज्रेण ताञ्शरान् । शक्रो दैत्यबलं घोरं विवेश बहुलोचनः ॥ ६३

स दैत्यप्रमुखान्सर्वान्हत्वा दैत्यबलं महत् । तामसेनास्त्रजालेन तमोभूतमथाकरोत् ॥ ६४

तेऽन्योन्यं नाव+बुध्यन्ते देवानां वाहनानि च । घोरेण तमसाऽऽविष्टाः पुरुहूतस्य तेजसा ॥ ६५

मायापाशैर्विमुक्तास्तु यत्नवन्तः सुरोत्तमाः । वद्ध्वाऽथ दैत्यसैन्यानि तमोभूतान्यपातयन् ॥ ६६

अपध्वस्ता विसंज्ञाश्च तमसा नीलवर्चसः । पेतुस्ते दानवगणाश्छिन्नपक्षा इवाद्रयः ॥ ६७

तत्राभिभूतदैत्येन्द्रमन्धकार इवार्णवम्(?) । दानवं देहसदनं तमोभूतमिवाभवत् ॥ ६८

तदाऽसृजन्महामायां मयस्तां तामसीं दहन् । युगान्तोद्वेगजननीं सृष्टामौर्वेण वह्निना ॥ ६९

सा ददाह च तां शाक्रीं मायां मयविकल्पिता । दैत्याश्चाऽऽदित्यवपुषः सर्वे उत्तस्थुराहवे ॥ ७०

मायामौर्वीं समासाद्य दह्यमाना दिवौकसः । भेजिरे चन्द्रविषयं शीतांशुसलिलं ह्रदम् ॥ ७१

ते दह्यमाना और्वेण वह्निना नष्टचेतसः । जग्मुस्ते वज्रिणं देवाः संत्रस्ताः शरणैषिणः ॥ ७२

संतप्ते मायया सैन्ये हन्यमाने च दानवैः । चोदितो देवराजेन वरुणो वाक्यमब्रवीत् ॥ ७३

वरुण उवाच—

पुरा ब्रह्मर्षिजः शक्र तपस्तेपे सुदारुणम् । उर्वः स पूर्वं तेजस्वी सदृशो ब्रह्मणा गुणैः ॥ ७४

तं तपन्तमिवाऽऽदित्यं तपसा जगदव्ययम् । उपतस्थुर्मुनिगणा दिव्या देवर्षिभिः सह ॥ ७५

हिरण्यकशिपुश्चैव दानवो दानवेश्वरः । ऋषिं विज्ञापयामास पुरा परमतेजसम् ॥ ७६

ऊचुर्ब्रह्मर्षयस्तत्र वचनं ब्रह्मसंमितम् । ऋषिवंशेषु भगवंश्छिन्नमूलमिदं कुलम् ॥ ७७

एकस्त्वमनपत्यश्च गोत्रायान्यो न विद्यते । कौमारं व्रतमास्थाय क्लेशमेवानुवर्तसे ॥ ७८

बहूनि विप्र गोत्राणि मुनीनां भावितात्मनाम् । एकदेहानि तिष्ठन्ति विविक्तानि विना प्रजाः ॥

एवंभूतेषु सर्वेषु पुत्रैर्मे नास्ति कारणम् । भवांस्तु तापसश्रेष्ठः प्रजापतिसमद्युतिः ॥ ८०

तत्प्रवर्तस्व वंशाय वर्धयाऽऽत्मानमात्मना । समाधत्स्वोर्जितं तेजो द्वितीयां कुरु वै तनुम् ॥ ८१

वरुण उवाच—

एवमुक्तः स मुनिभिर्मुनिर्मर्मसु ताडितः । जगर्हे तानृषिगणान्वचनं चेदमब्रवीत् ॥ ८२

उर्व उवाच—

यथाऽयं विहितो धर्मो मुनीनां शाश्वतः पुरा । आर्षं हि केवलं कर्म वन्यमूलफलाशिनः ॥ ८

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + अडभाव आर्षः ।

---

१ ग. ततः । २ क. ख. ग. घ. ङ. च. ज. स्यन्दिताः । ३ क. ख. ग. घ. ङ. च. ज. °यंत्नाश्च शरैः कृ° । ४ ग. घ. ज. °त् । नागशैलास्त्र° । ५ ञ. °न्त दैत्यानां वदना° । ६ क. ग. घ. च. ज. °माः । शिरांसि दैत्यसंघानां त° । ७ झ. देवस° । ८ क. ख. ग. घ. ङ. च. ज. °न्तोद्द्योतज° । ९ क. ख. घ. ङ. च. ज. धर्मसंहितम् । ग. धर्मसंज्ञितम् । १० ग. घ. ज. °षिपूर्वं च भ° । ११ क. ख. ङ. च. °वं तु च्छिन्नभूतेषु पु° । घ. ज. °वंभूतेन भूतेषु पु° ।

ब्रह्मयोनौ प्रसूतस्य ब्राह्मणस्याऽऽत्मवर्तिनः । ब्रह्मचर्यं सुचरितं ब्रह्मणाऽपि सुरालये ॥ ८४
जनानां वृत्तयस्तिस्रो ये गृहाश्रमवासिनः । अस्माकं च वने वृत्तिः वनाश्रमनिवासिनाम् ॥ ८५
अम्बुभक्षा वायुभक्षा दन्तोलूखलिनस्तथा । अश्मकुट्टादयो यत्र पञ्च पञ्चतपाश्च ये ॥ ८६
एते तपसि तिष्ठन्ते व्रतैरपि सुदुष्करैः । ब्रह्मचर्यं पुरस्कृत्य प्रार्थयन्ति परां गतिम् ॥ ८७
ब्रह्मचर्याद्ब्राह्मणस्य ब्राह्मणत्वं विधीयते । एवमाहुः परे लोके ब्रह्मचर्यविदो जनाः ॥ ८८
ब्रह्मचर्ये स्थितो धर्मो ब्रह्मचर्ये स्थितं मनः । ये स्थिता ब्रह्मचर्ये तु ब्राह्मणा दिवि ते स्थिताः
नास्ति योगं विना सिद्धिर्नास्ति सिद्धिं विना यशः । नास्ति लोके यशोमूलं ब्रह्मचर्यात्परं तपः
यो निगृह्येन्द्रियग्रामं भूतग्रामं च पञ्चकम् । ब्रह्मचर्यं समाधत्ते किमतः परमं तपः ॥ ९१
अयोगे केशधरणमसंकल्पे व्रतक्रिया । अब्रह्मचर्ये चर्या च त्रयं स्याद्दम्भसंज्ञितम् ॥ ९२
क्व दाराः क्व च संयोगः क्व च भावविपर्ययः । नन्वियं ब्रह्मणा सृष्टा मनसा मानवी प्रजा ॥ ९३
यद्यस्ति तपसो वीर्यं युष्माकं विजितात्मनाम् । सृजध्वं मानसान्पुत्रान्प्राजापत्येन कर्मणा ॥ ९४
मनसा निर्मिता योनिराधानं स्यात्तपस्विभिः । नो दारयोगो बीजं च व्रतमुक्तं तपस्विनाम् ॥ ९५
यदिदं लुप्तधर्मार्थं युष्माभिरिह निर्भयैः । व्याहृतं सद्भिरत्यर्थमसद्भिरिव संमतम् ॥ ९६
वपुर्दीप्तान्तरात्मानमेष कृत्वा मनोमयम् । दारयोगं विना स्रक्ष्ये पुत्रमात्मतनूरुहम् ॥
एवमात्मानमात्मा मे द्वितीयं जनयिष्यति । ९७

वरुण उवाच—

प्राजापत्येन विधिना दिधक्षन्तमिव प्रजाः । उर्वस्तु तपसाऽऽविष्टो निवेश्योरुं हुताशने ॥ ९८
ममन्थैकेन दर्भेण पुत्रस्य प्रसवारणिम् । तस्योरुं सहसा भित्त्वा ज्वालामाली ह्यनिन्धनः ॥ ९९
जगतो दहनाकाङ्क्षी पुत्रोऽग्निः समपद्यत । उर्वस्योरुं विनिर्भिद्य और्वो नामान्तकोऽनलः १००
दिधक्षुरिव लोकांस्त्रीञ्जज्ञे परमकोपनः । उत्पन्नमात्रः प्रोवाच पितरं दीनया गिरा ॥ १०१
क्षुधा मे वर्तते तात जगद्भक्षे दिशस्व माम् । त्रिदिवारोहिभिर्ज्वालैर्जृम्भमाणो दिशो दश ॥ १०२
निर्दहन्सर्वभूतानि ववृधे सोऽन्तकोपमः । एतस्मिन्नन्तरे ब्रह्मा मुनिमुर्वं समागतः ॥ १०३
उवाच वार्यतां पुत्रो जगतस्त्वं दयां कुरु । अस्यापत्यस्य ते विप्र करिष्ये स्थानमुत्तमम् ॥
तथ्यमेतद्वचः पुत्र शृणु त्वं वदतां वर ॥ १०४

उर्व उवाच—

धन्योऽस्म्यनुगृहीतोऽस्मि यन्मे त्वं भगवाञ्शिशोः । मतिमेतां ददासीह परमानुग्रहाय वै ॥ १०५
प्रभातकाले संप्राप्ते काङ्क्षितव्ये समागमे । भगवंस्तर्पितः पुत्रः कैर्हव्यैः प्राप्स्यते सुखम् ॥ १०६
कुत्र चास्य निवासः स्याद्भोजनं तु किमात्मकम् । विदधासीह भगवन्वीर्यतुल्यं महौजसः १०७

ब्रह्मोवाच—

वडवामुखे च वसतिः समुद्रे वै भविष्यति । मम योनिर्जलं विप्र तच्चामेयं व्रजत्वयम् ॥ १०८
तत्रायमास्ते नियतं पिबन्वारिमयं हविः । तद्वारि तव पुत्रस्य विसृष्टं निलयं च तत् ॥ १०९
ततो युगान्ते भूतानामेष चाहं च पुत्रक । सहितौ विचरिष्यावो निष्पुराणकराविह ॥ ११०

---

१ क. ख. ङ. च. ब्रह्मणमपि चालयेत् । ज॰ । २ क. ख. घ ङ. च. ञ. स्थितं धैर्यं व्र॰ । ३ क ख. घ. च. ज. तपः । ४ झ. दासः । ५ ञ. ॰धातव्या तप॰ । ६ क. ख. ग. घ. ङ. च. ज. बाध्यते । ७ ञ. ॰द्भक्ष्ये त्यजस्व । ८ क. ख. ग. घ. ङ. च. ज. ॰व्ये साह्यमु॰ । ९ क. ख. ङ. च. ॰रि निस्तरं पुत्र विसृजाम्यालयं च तम् । ततो ।

एषोऽग्निरन्तकाले तु सलिलाशी मया कृतः । दहनः सर्वभूतानां सदेवासुररक्षसाम् ॥ १११
एवमस्त्विति तं सोऽग्निः संवृतज्वालमण्डितः । प्रविवेशार्णवमुखं नत्वोर्वं पितरं प्रभुम् ॥ ११२
प्रतियातस्ततो ब्रह्मा ते च सर्वे महर्षयः । और्वस्याग्नेः प्रभावज्ञाः स्वां स्वां गतिमवाश्रिताः ११३
हिरण्यकशिपुर्दृष्ट्वा तदा तन्महदद्भुतम् । उर्वं प्रणतसर्वाङ्गो वाक्यमेतदुवाच ह ॥ ११४

हिरण्यकशिपुरुवाच—

भगवन्नद्भुतमिदं संवृत्तं लोकसाक्षिकम् । तपसा ते मुनिश्रेष्ठ परितुष्टः पितामहः ॥ ११५
अहं तु तव पुत्रस्य तव चैव महाव्रत । भृत्य इत्यवगन्तव्यः श्लाघ्यस्त्वमिह कर्मणा ॥ ११६
तन्मां पश्य समापन्नं तवैवाऽऽराधनं प्रति । यदि सीदेन्मुनिश्रेष्ठ तस्यैव स्यात्पराजयः ॥ ११७

उर्व उवाच—

धन्योऽस्म्यनुगृहीतोऽस्मि यस्य तेऽहं गुरुर्मतः । नास्ति ते तपसाऽनेन भयं चैवेह सुव्रत ॥ ११८
तामिव मायां गृह्णीष्व मम पुत्रेण निर्मिताम् । निरिन्धनामग्निमयीं दुःस्पर्शां पावकैरपि ॥ ११९
एषा ते स्वस्य वंशस्य वशगाऽरिविनिग्रहात् । रक्षिष्यत्यात्मपक्षं च विपक्षं च प्रधक्ष्यति ॥१२०

वरुण उवाच—

एषा दुर्विषहा माया देवैरपि दुरासदा । और्वेण निर्मिता पूर्वं पावकेनोर्वसूनुना ॥ १२१
तस्मिंस्तु व्यथिते दैत्ये निवार्यैषा न संशयः । शापो ह्यस्याः पुरा दत्तः सृष्टा येनैव तेजसा ॥
यद्येषा प्रतिहन्तव्या कर्तव्यो भगवान्सुखी । दीयतां मे सखा शक्र तोययोनिर्निशाकरः ॥ १२३
तेनाहं सह संगम्य यादोभिश्च समावृतः । मायामेतां हनिष्यामि त्वत्प्रसादान्न संशयः ॥ १२४

पुलस्त्य उवाच—

एवमस्त्विति संहृष्टः शक्रस्त्रिदशवर्धनः । संदिदेशाग्रतः सोमं युद्धाय शिशिरायुधम् ॥ १२५

इन्द्र उवाच—

गच्छ सोम साहाय्यं त्वं कुरु पाशधरस्य वै । असुराणां विनाशाय विजयार्थं दिवौकसाम् १२६
त्वं मत्तः प्रतिवीर्यश्च ज्योतिषामपि चेश्वरः । धर्माय सर्वलोकस्य रसानामधिदेवता ॥ १२७
+त्वया समो न लोकस्य विद्यते शिशिरायुधः । क्षयवृद्धी तवाव्यक्ते सागरस्येव चाम्बरे ॥१२८
परिवर्त्य अहोरात्रस्त्कालं जगति मोहयेः । लोकच्छायामयं लक्ष्म तवाङ्कः शशविभ्रमः ॥ १२९
न विदुः सोम देवा*पि ये च नक्षत्रयोनयः । त्वमादित्य(त्यो) यथापूर्वं ज्योतिषोपरिसंस्थितः ॥
तमः प्रोत्सार्य सहसा भासयस्यखिलं जगत् । शीतभानुर्हिमतनुर्ज्योतिषामधिपः शशी ॥ १३१
अपि तत्कालयोगात्मा इज्यो यज्ञरसोऽव्ययः । ओषधीशः क्रियायोनिरापो ज्योतिः सुमूर्तिमान्
शीतांशुरमृताधारश्चपलः श्वेतवाहनः । त्वं कान्तिः कान्तिवपुषां त्वं सोमः सोमपायिनाम् १३३
सौम्यस्त्वं सर्वभूतानां तिमिरघ्नस्त्वमृक्षराट् । तद्गच्छ त्वं महासेन वरुणेन वरूथिना ॥
शमयस्वाऽऽसुरीं मायां दहमानां सुसंयुगे ॥ १३४

---

+ इदमर्धं झ. पुस्तकस्थम् । * संधिरार्षः ।

---

१ क. ख. ङ. च. °धने रतम् । य° । ग. घ. ज. °धने मतम् । य° । २ ञ. तथैव । ३ ञ. °ग्रहे । र° । ४ झ. व्युषिते । ५ क. ख. ङ. ञ. निर्वार्यैषा । ६ क. ख. ङ. च. °रः । त्वन्मयाः सर्वलोकेषु रसा वेदविदो विदुः । त्व° । ७ क. ख. ग. घ. ङ. च. ज. °गरे चैव । ८ क. ख. ङ. च. °विग्रहः । न । ९ क. ख. ङ. च. °निरपां योनिरनुष्णगुः । शी° । १० झ. °यां यया दह्याम सं° ।

सोम उवाच—

यन्मां वदसि युद्धार्थे देवराज वरप्रद । एष वर्षामि शिशिरं दैत्यमायावकर्षणम् ॥ १३५
एतान्मे शीतनिर्दिग्धान्पश्यस्व हिमवेष्टितान् । विमायान्विमदांश्चैव दैत्यसंघान्महाहवे ॥ १३६
तथा हिमकरोत्सृष्टाः समाया हिमवृष्टयः । वेष्टयन्ति च तान्घोरान्दैत्यान्मेघगणा इव ॥ १३७
तौ पाशशीतांशुधरौ वरुणेन्दू महाबलौ । जघ्नतुर्हिमपातैश्च पाशपातैश्च दानवान् ॥ १३८
द्वावम्बुनाथौ समरे तौ पाशहिमयोधिनौ । मृधे चेरतुरम्भोभिः क्षुब्धाविव महार्णवौ ॥ १३९
ताभ्यामाप्लावितं सर्वं तद्दानवबलं महत् । जगत्संवर्तकाम्भोदैः प्राप्तैरिव संवृतम् ॥ १४०
तावुद्यताम्बुनाथौ तु शशाङ्कवरुणावुभौ । शमयामासतुस्तां तु मायां दैत्येन्द्रनिर्मिताम् ॥ १४१
शीतांशुजालनिर्दग्धाः पाशैस्[3]स्पन्दिता रणे । न शेकुश्चलितुं दैत्या विशिरस्का इवाद्रयः ॥ १४२
शीतांशुना हतास्ते तु दैत्याः सर्वे हिमार्दिताः । हिमप्लावितसर्वाङ्गा निरूष्माण इवाग्नयः ॥ १४३
तेषां तु दिवि दैत्यानां विपतन्ति प्रभाणि वै[6] । खगमानि विमानानि निपतन्त्युत्पतन्ति च १४४
तान्पाशहस्तव्यथितांश्छादितांञ्शीतरश्मिना । मयो ददर्श मायावी दानवान्दिवि दानवः १४५
स शैलजालविततां खड्गपट्टिशहासिनीम् । पादपोत्कटकूटाग्रां कन्दराकीर्णकाननाम् ॥ १४६
सिंहव्याघ्रगणाकीर्णां नदद्भिर्देवयूथपैः । ईहामृगगणाकीर्णां पवनाघूर्णितद्रुमाम् ॥ १४७
निर्मितां स्वेन पुत्रेण कूजन्तीं दिवि कामगाम् । प्रथितां पार्वतीं मायां ससृजे स समन्ततः १४८
साऽसिसंवर्तोपलगणैः संपतद्भिश्च पादपैः । निर्जघ्ने देवसंघांस्तान्दानवानभ्यजीवयत् ॥ १४९
नैशाकरी वारुणी च माया साऽन्तर्दधे ततः । [*अश्मभिश्चापसंघातैः किरन्देवगणान्रणे(?) ॥
साश्मयन्त्रायुधघनद्रुमपर्वतसंकटा] । अभवद्घोरसंचारा पृथिवी पर्वतैरिव ॥ १५१
अश्मप्रहरणेनापि न शिलाभिर्वशीकृतः । न च रुद्धो द्रुमगणैर्देवोऽदृश्यत कश्चन ॥ १५२
तदपध्वस्तधानुष्कं भग्नप्रहरणाविलम् । निष्प्रयत्नं सुरानीकं वर्जयित्वा गदाधरम् ॥ १५३
स हि युद्धगतः श्रीमानीशो न स्म व्यकम्पत । सहिष्णुत्वाज्जगत्स्वामी न चुक्रोध गदाधरः १५४
कालज्ञः कालमेघाभः समीक्षन्कालमाहवे[13] । देवासुरविमर्दं तु द्रष्टुकामस्तदा हरिः ॥ १५५
ततो भगवताऽऽदिष्टौ रणे पावकमारुतौ । चोदितौ विष्णुवाक्येन तौ मायां विचकर्षतुः ॥ १५६
ताभ्यामुद्भ्रान्तवेगाभ्यां प्रवृद्धाभ्यां महाहवे । दग्धा सा पार्वती माया भस्मभूता ननाश ह १५७
सोऽनलोऽनिलसंयुक्तः सोऽनिलश्चानलाकुलः । दैत्यसेनां ददहतुर्युगान्तेष्विव मूर्छितौ ॥ १५८
वायुः प्रधावितस्तत्र पश्चादग्निश्च मारुतात् । चेरतुर्दानवानीके क्रीडन्तावनलानिलौ ॥ १५९
भस्मावयवभूतेषु प्रपतत्सूत्पतत्सु च । दानवानां विमानेषु निपतत्सु समन्ततः ॥ १६०
वीतस्कन्धापविद्धेषु कृतकर्मणि पावके । मायावधे प्रवृत्ते तु स्तूयमाने गदाधरे ॥ १६१
निष्प्रयत्नेषु दैत्येषु त्रैलोक्ये मुक्तबन्धने । संप्रहृष्टेषु देवेषु साधु साध्विति जल्पिषु ॥ १६२

* अयं श्लोको झ. पुस्तकस्थः ।

१ क. ख. ङ. च. सपाशा । ग. घ. ज. समाना । २ क. ख. ङ. च. तान्दैत्यान्वायुर्मेघगणानिव । ३ क. ख. ग. घ. ङ. च. ज. °शैश्च स्प° । ४ क. ख. ग. घ. ङ. च. ज. निपातिताः । ५ क. ख. ग. घ. ङ. च. ज. °वाहयः । ६ क. ख. ङ. च. वै । विमानानि विचित्राणि नि° । ७ ग. घ. ज. °ङ्गसंचाररराविणीम् । ८ क. ख. ग. घ. ङ. च. ज. °कूटस्थां क° । ९ क. ख. ङ. च. °द्भिर्दिवि धूथशः । ई° । १० झ. °र्णो पार्वतीं घू° । ग. घ. ज. °र्णां वायसापूर्णि° । ११ झ. वर्धनीं । १२ ख. ख ग. घ. ङ. च. ज. °सिशब्दैः शिलावर्षैः सं° । १३ ग. घ. ज. °वे । तेषां तु सर्वकालेन महतां भगवान्हरिः । १४ क. ख. ङ. च. ज °के तत्कालावनिलानलौ । ग. घ. °के तत्क्रान्तावनिलानलौ ।

जये दशशताक्षस्य दैत्यानां च पराजये । दिक्षु सर्वासु शुद्धासु प्रवृत्ते धर्मविस्तरे ॥ १६३
[*अपावृते चन्द्रपथि स्वस्थानस्थे दिवाकरे] । प्रवृत्तिस्थेषु लोकेषु त्रिषु चारित्रबन्धुषु ॥ १६४
अभिन्नबन्धने मृत्यौ हूयमाने हुताशने । यज्ञशोभिषु देवेषु स्वर्गार्थं दर्शयत्सु च ॥ १६५
लोकपालेषु सर्वेषु दिक्षु संपातवर्तिषु । भावे तपसि सिद्धानामभावे पापकर्मणाम् ॥ १६६
देवपक्षे प्रमुदिते दैत्यपक्षे विषीदति । त्रिपादविग्रहे धर्मे अधर्मे पादविग्रहे ॥ १६७
अपावृते महाद्वारे वर्तमाने महोत्सवे । लोकप्रवृत्तधर्मेषु स्वधर्मेष्वाश्रमेषु च ॥ १६८
प्रजारक्षणयुक्तेषु भ्राजमानेषु राजसु । प्रशान्तसर्वलोकेषु शान्ते तमसि दानवे ॥ १६९
अग्निमारुतयोस्तस्मिन्वृत्ते सङ्ग्रामकर्मणि । तन्मया विमला लोकास्ताभ्यां जयधृतक्रियाः॥ १७०
पूर्वं दैत्यभयं श्रुत्वा मारुताग्निकृतं महत् । कालनेमिरिति ख्यातो दानवः प्रत्यदृश्यत ॥ १७१
भास्कराकारमुकुटः सिञ्जिताभरणाङ्गदः । मन्दराद्रिप्रतीकाशो महारजतसंवृतः ॥ १७२
शतप्रहरणोदग्रः शतबाहुः शताननः । शतशीर्षः स्थितः श्रीमाञ्शतशृङ्ग इवाचलः ॥ १७३
कक्षे महति संवृद्धो निदाघ इव पावकः । धूम्रकेशो हरिच्छ्मश्रुः संदष्टौष्ठपुटाननः ॥ १७४
त्रैलोक्यान्तरविस्तारं धारयन्विपुलं वपुः । बाहुभिस्तुलयन्व्योम क्षिपन्पद्भ्यां महीधरान् ॥ १७५
ईरयन्मुखनिश्वासैर्वृष्टिमतो बलाहकान् । तिर्यगायतरक्ताक्षं मन्दरोदग्रवर्चसम् ॥ १७६
दिधक्षन्तमिवाऽऽयान्तं सर्वान्देवगणान्मृधे । तर्जयन्तं सुरगणांश्छादयन्तं दिशो दश ॥ १७७
संवर्तकाले तृषितं दृष्टं मृत्युमिवोत्थितम् । सुतलेनोच्छ्रयवता विपुलाङ्गुलिपर्वणा ॥ १७८
लम्बाभरणपूर्णेन किंचिच्चलितकर्मणा । उच्छ्रितेनाग्रहस्तेन दक्षिणेन वपुष्मता ॥ १७९
ब्रुवन्तमुत्तिष्ठतेति दानवान्निहतान्सुरैः । तं कालनेमिं समरे द्विषतां कालने(ना)मिनम् ॥ १८०
[+वीक्षन्ति स्म सुराः सर्वे भयविह्वललोचनाः । तं वीक्षन्ति स्म भूतानि त्रसन्तं कालनेमिनम् ]
त्रिविक्रमं विक्रमन्तं नारायणमिवामरम् । सोऽभ्युच्छ्रयं पुनः प्राप्तो मारुतापूरिताम्बरः ॥ १८२
प्राक्रामदसुरो योद्धुं त्रासयन्सर्वदेवताः । समेयिवान्सुरेन्द्रेण परिव्यक्तक्रमे रणे ॥ १८३
कालनेमिर्बभौ दैत्यः सविष्णुरिव मन्दरः । अथ विव्यथिरे देवाः सर्वे शक्रपुरोगमाः ॥ १८४
कालनेमिनमायान्तं दृष्ट्वा कालमिवापरम् । दानवानां प्रियं प्रेप्सुः कालनेमिर्महासुरः ॥ १८५
व्यवर्धत महातेजास्तपान्ते जलदो यथा । तं त्रैलोक्यान्तरगतं दृष्ट्वा ते दानवेश्वराः ॥ १८६
उत्तस्थुस्ते परिश्रान्ताः पीत्वाऽमृतमनुत्तमम् । ते वीतभयसंत्रस्ता मयतारपुरोगमाः ॥ १८७
तारकामयसङ्ग्रामे सततं जितकाशिनः । रेजुरायोधनगता दानवा युद्धकाङ्क्षिणः ॥ १८८
मन्त्रमभ्यसतां तेषां व्यूहं च परिधावताम् । प्रेक्षतां चाभवत्प्रीतिर्दानवं कालनेमिनम् ॥ १८९
ये तु तत्र मयस्याऽऽसंन्भव्या युद्धपुरःसराः । ते तु सर्वे भयं मुक्त्वा हृष्टा योद्धुमुपागताः १९०

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख ग. ङ. च. ज. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. ज. °षु भूतेषु नृषु चारित्रवत्सु च । अ° । २ झ. अभिबन्धनमृत्यौ हि हू° । ३ क. ख. ङ. च स्वर्मार्गं । ४ क. ख. ग. घ. ग. च. ज. °ने च सत्पथे । लो° । ५ झ. °णि । उत्सवे विमले लोके ताभ्यां । ६ क. ख. ग. घ ङ. च. °यकृत° । झ. °यधृतक्रिये । पू° । ७ क. ख. ग. घ. ङ. च. ज. °च्छ्मश्रुर्दन्तुरो विकटा° । ८ क. ख. घ. ङ. च. ज. °ताघूर्णिता° । ९ ग. घ. ज. °द्धुं भ्रामय° । १० क. ख. ग. घ. ङ. च. ज. °रिष्वक्तो भ्रमगणे । ११ क. ख. ग. घ. ङ. च ज. °वानानु पिप्रीयुः का° । १२ क. ख. ग. घ. ङ. च. ज. °सन्मुख्या यु° ।

मयस्तारो वराहश्च हयग्रीवश्च वीर्यवान् । विप्रचित्तिसुतः श्वेतः खरलम्बावुभावपि ॥ १९१
अरिष्टो बलिपुत्रश्च किशोराख्यस्तथैव च । स्वर्भानुश्चामरप्रख्यो वक्रयोद्धा महासुरः ॥ १९२
एतेऽस्त्रवेदिनः सर्वे सर्वे तपसि सुस्थिराः । दानवाः कृतिनो जग्मुः कालनेमिं समुद्धतम् १९३
ते गदाभिः सुगुर्वीभिश्चक्रैरथ परश्वधैः । कालकल्पैश्च मुशलैः क्षेपणीयैश्च मुद्गरैः ॥ १९४
अश्मभिश्चाद्रिसदृशैस्तथा शैलैश्च दारुणैः । पट्टिशैर्भिन्दिपालैश्च परिघैश्चोत्तमायसैः ॥ १९५
घातनीभिश्च गुर्वीभिर्गदाभिश्च तथैव च । युगैर्यन्त्रैश्च निर्मुक्तैर्मार्गणैरुग्रताडितैः ॥ १९६
दोर्भिश्चाऽऽयतमानाभिः प्रासैः पाशैः समुत्थितैः । भुजङ्गवक्त्रैर्लेलिहानैर्विसर्पद्भिश्च सायकैः १९७
वज्रैः प्रहरणीयैश्च दीप्यमानैश्च तोमरैः । विकोशैरतितीक्ष्णैश्च शूलैश्च शितनिर्मलैः ॥ १९८
दैत्यैः संदीप्यमानैश्च प्रगृहीतशरासनैः । ततः पुरस्कृत्य तदा कालनेमिनमाहवे ॥ १९९
सा दीप्तशस्त्रप्रवरा दैत्यानां रुरुचे चमूः । द्यौर्निमीलितसर्वाङ्गा निदाघे वाम्बुदागमे ॥ २००
देवतानामपि चमूर्मुमुदे शक्रपालिता । उपेता शशिशक्राभ्यां ताराभ्यां सूर्यचन्द्रयोः ॥ २०१
वायुवेगवती सौम्या तारागणपताकिनी । तोयदाविद्धवसना ग्रहनक्षत्रहासिनी ॥ २०२
यमेन्द्रवरुणैर्गुप्ता धनदेन च धीमता । सा प्रदीप्ताग्निवदना नारायणपरायणा ॥ २०३
सा समुद्रौघसदृशी दिव्या देवमहाचमूः । रराजास्त्रवती भीमा यक्षगन्धर्वशालिनी ॥ २०४
तयोश्चम्वोस्तदानीं तु बभूव स समागमः । द्यावापृथिव्योश्च यथा योगः स्याद्युगपर्यये ॥ २०५
तद्युद्धमभवद्धोरं देवदानवसंकुलम् । क्षमापराक्रमपरं सदर्पं विनयस्य च ॥ २०६
निश्चक्रमुर्बलाभ्यां तु भीमाभ्यां तु सुरासुराः । पूर्वापराभ्यां संरब्धाः सागराभ्यामिवाम्बुदाः ॥
ताभ्यां बलाभ्यां संहृष्टाश्चेरुस्ते देवदानवाः । वनाभ्यां पार्वतीयाभ्यां पुष्पिताभ्यां यथा नगाः
समाजघ्नुस्ततो भेरीः शङ्खान्दध्मुस्त्वनेकशः । सर्वां भुवं च खं चैव दिशश्च समपूरयन् ॥ २०९
ज्याघाततलनिर्घोषो धनुषां कूजितानि च । दुन्दुभीनां च निनदो दैत्यमन्तर्दधुः स्वनम् ॥ २१०
तेऽन्योन्यमभिसंपेतुस्तर्जयन्तः परस्परम् । बभञ्जुर्बाहुभिर्बाहुं द्वंद्वमन्ये युयुत्सवः ॥ २११
देवानामशनि(नी)र्घोरान्परिघांश्चोत्तमायुधाः । निस्त्रिंशान्ससृजुः संख्ये गदा गुर्वीश्च दानवाः ॥
गदानिपातैर्भग्नाङ्गा बाणैश्च शकलीकृताः । परिपेतुर्भृशं केचित्पुनः केचित्तु जघ्निरे ॥ २१३
ततो रथैः सतुरगैर्विमानैश्च गजादिभिः । समीयुस्तेऽपि संरब्धा रोषादन्योन्यमाहवे ॥ २१४
संवर्तमानाः समरे संदष्टौष्ठपुटाननाः । रथा रथैर्निरुध्यन्ते पदाताश्च पदातिभिः ॥ २१५
एषां रथानां तुमुलः स शब्दः शब्दवाहिनाम् । नभो नभस्वान्हि यथा नभस्ये जलदस्वनैः(?)॥
बभञ्जिरे रथान्केचित्केचित्संमृदिना रथैः । संबाधमन्ये संप्राप्य न शेकुश्चलितुं रथाः ॥ २१७
अन्योन्यमन्ये समरे दोर्भ्यामुत्क्षिप्य दंशिताः । संह्लादमानाः सबला जघ्नुस्तत्रासिचर्मिणः २१८

---

१ क. च. °शोराष्टस्त° । ख. ग. ज. °शारोष्टस्त° । ग घ. °शोरोष्ट्रस्त° । २ क. च. चक्रयोद्धा । ३ क. ख. ङ. च. °श्चास्त्रस° । ४ क. ख. घ. ङ. च. ज. °शैर्गण्डशै° । ५ क. ख. ङ. च. °र्वीभिः शतघ्नीभिस्तथै° । ६ क. ख. ग. च. °मुंक्तैर्लाङ्गलैरु° । ७ क. ख. ग. च. ज. °भिः पाशैश्च परिघार्दितैः । ग. घ. °भिः पाशैश्च परिमूर्छितैः । ८ झ. °लैः । देवैः संदीप्तमनसैः प्र° । ९ ख. ग. च. °वाङ्गी वनाली वा° । ग. घ. °वाङ्गी प्रनाली वा° । ज. °वाङ्गी घनाली वा° । १० क. च. °पेतां शशिकृष्णाभ्यां । ग. घ. ज. °पेतशस्त्रैर्हृष्टाभ्यां तोयदा सू° । झ. °पेतवस्त्रैः कृष्णाभ्यां ते यमासू° । ११ क. ख. ग. च. °दाविद्ध° । ग. घ. ज. °दाविद्धरस° । १२ क. ख. ग. च. °प्ताग्निपवना । ग. °प्ता सुवद° । १३ झ. °क्षनक्षत्रशा° । १४ ग. घ. ज. वृक्षाभ्यां । १५ क. ख. घ. च. ज. °शः । ब्रह्माण्डं च भुवं चै° । १६ क. च. °थैर्नियुध्य° । ग. घ. °थैर्वबध्य° । ज. °थैर्विविध्य° ।

अस्त्रैरन्ये विनिर्भिन्ना रक्तं वेमुर्हता युधि । क्षरज्जलानां सदृशा जलदानां समागमे ॥ २१९
तदस्त्रशस्त्रमथितं क्षिप्ताक्षिप्तगदाविलम् । देवदानवसंघुष्टं संकुलं युद्धमाबभौ[1] ॥ २२०
तदा नवमहामेघं देवायुधविराजितम् । अन्योन्यबाणवर्षेण युद्धदुर्दिनमावभौ ॥ २२१
एतस्मिन्नन्तरे क्रुद्धः कालनेमिः स दानवः । व्यवर्धत समुद्रौघैः पूर्यमाण इवाम्बुदः ॥ २२२
तस्य विद्युद्धनापीडाः प्रदीप्ताशनिवर्षिणः । गात्रैर्नागगिरिप्रख्यैर्विनिपेतुर्वलाहकाः ॥ २२३
क्रोधान्निश्वसतस्तस्य भ्रूभेदस्वेदवर्षिणः । साग्निस्फुलिङ्गाः पृतना मुखान्निष्पेतुरर्चिषः ॥ २२४
तिर्यगूर्ध्वं च गगने ववृधुस्तस्य बाहवः । पर्वतादिव निष्क्रान्ताः पञ्चास्या इव पन्नगाः ॥ २२५
सोऽस्त्रजालैर्बहुविधैर्धनुर्भिः परिघैरिव । दिव्यमाकाशमावव्रे पर्वतैरुच्छ्रितैरिव ॥ २२६
सोऽनिलोद्धूतवसनस्तस्थौ सङ्ग्रामलालसः । संध्यातपग्रस्तशिलः साक्षान्मेरुरिवाचलः ॥ २२७
उरुवेगप्रमथितैः शृङ्गशैलाग्रपादपैः । अपातयद्देवगणान्वज्रेणेव महागिरीन् ॥ २२८
बहुदिव्यास्त्रनिर्स्त्रिंशैश्छिन्नभिन्नशिरोरुहाः । न शेकुश्चलितुं देवाः कालनेमिहता युधि ॥ २२९
मुष्टिभिर्निहताः केचित्केचिच्च द्विदलीकृताः । यक्षगन्धर्वपतगैः स्पन्दिताः शरबन्धनैः ॥ २३०
तेन वित्रासिता देवाः समरे कालनेमिना । न शेकुर्यत्नवन्तोऽपि यत्नं कर्तुं विचेतसः ॥ २३१
तेन शक्रः सहस्राक्षः स्पन्दितः शरबन्धनैः । निष्प्रयत्नः कृतः संख्ये चलितुं न शशाक ह ॥ २३२
निर्जलाम्भोदसदृशो जलार्णवसमप्रभः । निर्व्यापारः कृतस्तेन [6]विपाशो वरुणो मृधे ॥ २३३
रणे वैश्रवणस्तेन परिघैः कालनेमिना । विलपल्लोकपालेशस्त्याजितो धनदक्रियाम् ॥ २३४
यमः सर्वहरस्तेन मृत्युप्रहरणो रणे । याम्यामवस्थां संत्यज्य भीतः स्वां दिशमाविशत् ॥ २३५
स लोकपालानुत्सार्य हृत्वा तेषां च कर्म तत् । दिक्षु सर्वासु देहं स्वं चतुर्धा विदधे तदा ॥ २३६
स नक्षत्रपथं गत्वा दिव्यं स्वर्भानुदर्शितम् । जहार लक्ष्मीं सोमस्य तच्चास्य विषयं महत् ॥ २३७
चालयामास दीप्तांशुं धर्मद्वारा स भास्करम् । शासनं चास्य विषयं जहार दिनकर्म च ॥ २३८
सोऽग्निं देवमुखं जित्वा चकाराऽऽत्मसुखाश्रयम् । वायुं च तरसा जित्वा चकाराऽऽत्मवशानुगम्
समुद्रान्तः समानीय सर्वाश्च सरितो बलात् । चकाराभिमुखं वीर्याद्देहभूताश्च सिन्धवः ॥ २४०
अपः स्ववशगाः कृत्वा दिविजाताश्च भूमिजाः । छादयामास जगतीं सुगुप्तां धरणीधरैः ॥ २४१
स स्वयंभूरिवाऽऽभाति महाभूतपतिर्महान् । सर्वलोकमयो दैत्यः सर्वलोकभयावहः ॥ २४२
स लोकपालैकवपुश्चन्द्रसूर्यग्रहात्मवान् । पावकानिलसंजातो रराज युधि दानवः ॥ २४३
पारमेष्ठ्ये स्थितः स्थाने लोकानां प्रभवोपमे । तं तुष्टुवुर्दैत्यगणा देवा इव पितामहम् ॥ २४४
पञ्च तं नाभ्यवर्तन्त विपरीतेन कर्मणा । वेदो धर्मः क्षमा सत्यं श्रीश्च नारायणाश्रया ॥ २४५
स तेषामनुपस्थानात्सक्रोधो दानवेश्वरः । वैष्णवं पदमन्विच्छन्स गतो देवमन्यतः ॥ २४६
स ददर्श सुपर्णस्थं शङ्खचक्रगदाधरम् । दानवानां विनाशाय [13]धारयन्तं गदां शुभाम् ॥ २४७
सजलाम्भोदसदृशं विद्युत्सदृश[14]वर्चसम् । आरूढं [15]स्वर्णपत्राढ्यं शिखिनं काश्यपं खगम् ॥ २४८

---

१ ख. ग. घ. ङ. ज. °भौ । ते दानवा महामेघा देवायुधविराजिताः । अ° । २ क. ख. ग. च. ज. °द्युल्लतापी° । ३ क. ख. ग. च. °लिङ्गा अतता मु° । घ. ज. °लिङ्गाः प्रतता मु° । ४ क. ख. ग. ङ. च. ज. °न् । वाहुभिश्च सनि° । ५ क ख. ङ. च. पेतुः । ६ ग. घ. ज. निराशो । ७ क. ख. ङ. च. परीतः कालरूपिणा । वि° । ग. घ. परिघः कालरूपिणा । वि° । ८ ख. घ. ङ. च. ज. कृत्वा । ९ क. ख. घ. ङ. च. ज. °पदं ग° । १० झ. °राऽऽत्ममुखे वी° । ११ ग. घ. ज. स्वगुप्तां । १२ क. ख. ग. ङ. च. ज. °वता यतः । १३ क. ख. ग. घ. ङ. च. ज. भ्रामयन्तं । १४ ख. घ. ङ. च. ज. °शवासस° । १५ च स्वर्णपत्राख्यं । ज. स्वर्णपत्रस्थं ।

दृष्ट्वा दैत्यविनाशाय देवं स्वस्थमिव स्थितम् । दानवो विष्णुमक्षोभ्यं बभाषे क्षुब्धमानसः २४९

कालनेमिरुवाच—

अयं स रिपुरस्माकं पूर्वेषां प्राणनाशनः । अर्णवावासिनोश्चैव मधोर्वै कैटभस्य च ॥ २५०
अयं सविग्रहोऽस्माकमन्यायः किल कथ्यते । येन नः संयुगेष्वत्र दानवा बहवो हताः ॥ २५१
अयं स निर्घृणो लोके स्त्रीबालनिरपत्रपः । येन दानवनारीणां सीमन्तोद्धरणं कृतम् ॥ २५२
अयं स विष्णुर्देवानां वैकुण्ठश्च दिवौकसाम् । अनन्तो भोगिनां मध्ये स्वयंभूश्च स्वयंभुवः २५३
अयं स नाथो देवानामस्माभिर्विप्रकृष्यते । अस्य क्रोधं समासाद्य हिरण्यकशिपुर्हतः ॥ २५४
अस्य च्छायामुपाश्रित्य देवा मखमुखे स्थिताः । आज्यं महर्षिभिर्दत्तमश्नुवन्ति त्रिधा हुतम् २५५
अयं स निधने हेतुः सर्वेषाममरद्विषाम् । यस्यै चक्रे प्रविष्टानि कुलान्यस्माकमाहवे ॥ २५६
अयं स किल युद्धेषु सुरार्थे त्यक्तजीवितः । मत्पितुस्तेजसा तुल्यं चक्रं क्षिपति शत्रुषु ॥ २५७
अयं स कालो दैत्यानां कालभूते मयि स्थिते । अतिक्रान्तस्य कालस्य फलं प्राप्स्यति केशवः ॥
दिष्ट्येदानीं समक्षं मे विष्णुरेष समागतः । अद्य मद्बाणनिष्पिष्टो मय्येव प्रणमिष्यति ॥ २५९
यास्याम्यपचितिं दिष्ट्या पूर्वेषामद्य संयुगे । इमं नारायणं हत्वा दानवानां भयावहम् ॥ २६०
क्षिप्रमेव हनिष्यामि रणे नारायणानुगान् । जात्यन्तरगतोऽप्येष बाधते दानवान्मृधे ॥ २६१
एषोऽनन्तः पुरा भूत्वा पद्मनाभ इति श्रुतः । जघानैकार्णवे घोरे तावुभौ मधुकैटभौ ॥ २६२
द्विधाभूतं वपुः कृत्वा सिंहस्यार्धं नरस्य च । पितरं मे जघानैको हिरण्यकशिपुं पुरा ॥ २६३
यं सुतं गर्भमाधत्त अदितिर्देवतारणिः । त्रीँल्लोकानाजहारैकः क्रममाणस्त्रिभिः क्रमैः ॥ २६४
भूयस्त्विदानीं संप्राप्ते सङ्ग्रामे तारकामये । मया सह समागम्य स देवो विनशिष्यति ॥ २६५

पुलस्त्य उवाच—

एवमुक्त्वा बहुविधं क्षिप्रं नारायणं रणे । वाग्भिरप्रतिरूपाभिर्युद्धमेवाभ्यरोचयत् ॥ २६६
क्षिप्यमाणोऽसुरेन्द्रेण न चुकोप गदाधरः । क्षमाबलेन महता सस्मितं चेदमब्रवीत् ॥ २६७

नारायण उवाच—

अन्यद्दर्पबलं दैत्य स्थिरमक्रोधजं बलम् । हतस्त्वं दर्पजैर्दोषैर्हित्वा यो भाषसे क्षमाम् ॥ २६८
अधर्मस्त्वं मम मतो धिगेतत्तव वाग्बलम् । के तत्र पुरुषाः सन्ति यत्र गर्हन्ति योषितः ॥ २६९
अहं त्वां दैत्य पश्यामि पूर्वेषां मार्गगामिनम् । प्रजापतिकृतं सेतुं त्यक्त्वा कः स्वस्तिमान्भवेत् ॥
अद्य त्वां नाशयिष्यामि देवव्यापारघातकम् । स्वेषु स्वेषु च स्थानेषु स्थापयिष्यामि देवताः २७१

पुलस्त्य उवाच—

एवं ब्रुवति वाक्ये(क्यं) तु मृधे श्रीवत्सधारिणि । जहास दानवः क्रोधाद्धस्तांश्चक्रे च सायुधान्
स बाहुशतमुद्यम्य सर्वान्रथगणान्रणे । क्रोधाद्द्विगुणरक्ताक्षो विष्णोर्वक्षस्यताडयत् ॥ २७३
दानवाश्चापि समरे मयतारपुरोगमाः । उद्यतायुधनिस्त्रिंशा विष्णुमभ्यद्रवन्रणे ॥ २७४
स ताड्यमानोऽतिबलैर्दैत्यैः सर्वायुधोद्यतैः । न चचाल ततो युद्धे कम्प्यमान इवाचलः ॥ २७५

---

१ क. ग. घ. च. ज. सर्वेषां । २ झ °मसाम्यः कि° । ३ झ. °गिनामप्सु स्व° । ४ ज. °स्य वक्त्रप्र° । ५ क. ख. ङ. च. °तः । स विभुस्तेजसा युक्तं च° । ६ ख. ग. घ. ङ. ज. °प्स्यसि केशव । दि° । ७ क. ख. ग. घ. ङ. च. ज. °तः । निष्पिष्टो बाहुना संख्ये म° । ८ क. ख. ङ. च. °णे सुरगणानहम् । जा° । ९ झ. °तत्तु बलाबल° । १० क. ख. ङ. च. गर्जन्ति । ११ ग. घ. भित्त्वा ।

संयुक्तश्च सुपर्णेन कालनेमिर्महासुरः । सर्वप्राणेन महतीं गदामुद्यम्य बाहुभिः ॥ २७६
घोरां ज्वलन्तीं मुमुचे संरब्धो गरुडोपरि । कर्मणा तेन दैत्यस्य विष्णुर्विस्मयमागमत् ॥ २७७
यदा तेन सुपर्णस्य पातिता मूर्ध्नि सा गदा । सुपर्णं व्यथितं दृष्ट्वा क्षतं च वपुरात्मनः ॥ २७८
क्रोधसंरक्तनयनो वैकुण्ठश्चक्रमाददे । व्यवर्धत च वेगेन सुपर्णेन समं विभुः ॥ २७९
भुजाश्चास्य व्यवर्धन्त व्याप्तवन्तो दिशो दश । विदिशश्चैव खं चापि गां चैव प्रत्यपूरयन् ॥ २८०
ववृधे स पुनर्लोकान्क्रान्तुकाम इवौजसा । जयशब्दे सुरेन्द्राणां वर्धमाने नभस्तले ॥ २८१
ऋषयः सहगन्धर्वास्तुष्टुवुर्मधुसूदनम् । स द्यां किरीटेन लिखञ्शिरसा भासुरेण च ॥ २८२
पद्भ्यामाक्रम्य वसुधां दिशः प्रच्छाद्य बाहुभिः । स सूर्यकरतुल्याभं सहस्रारमरिक्षयम् ॥ २८३
दीप्ताग्निसदृशं घोरं दर्शनेन सुदर्शनम् । सुवर्णरेणुपर्यन्तं वज्रन्यासभयावहम् ॥ २८४
मेदोस्थिमज्जारुधिरैः सिक्तं दानवसंभवैः । अद्वितीयप्रहरणं क्षुरपर्यन्तमण्डलम् ॥ २८५
स्रग्दाममालानिचितं कामगं कामरूपि च । स्वयं स्वयंभुवा सृष्टं भयदं सर्वविद्विषाम् ॥ २८६
महर्षिरोषैराविष्टं नित्यमाहवदर्पितम् । क्षेपणाद्यस्य मुह्यन्ति लोकाः सस्थाणुजङ्गमाः ॥ २८७
क्रव्यादानि च भूतानि तृप्तिं यान्ति महामृधे । तदप्रतिमकर्माणं (?) समानं सूर्यवर्चसा ॥ २८८
चक्रमुद्यम्य समरे कोपदीप्तो गदाधरः । स नष्टदानवतेजाः समरे स्वेन तेजसा ॥ २८९
चिच्छेद बाहूंश्चक्रेण समरे कालनेमिनः । तच्च[1] वक्त्रशतं घोरं साग्निचूर्णाट्टहासि वै ॥ २९०
तस्य दैत्यस्य चक्रेण प्रममाथ बलाद्धरिः । स च्छिन्नबाहुर्विशिरा न प्राकम्पत दानवः ॥ २९१
कबन्धावस्थितः संख्ये विशाख इव पादपः । [4]तं दैतेयमहापक्षं वायोः कृत्वा समं जवम् २९२
उरसा ताडयामास गरुडः कालनेमिनम् । स तस्य देहो विमुखो विबाहुः खात्परिभ्रमन् ॥ २९३
[*निपपात दिवं त्यक्त्वा क्षोभयन्धरणीतलम्] । तस्मिन्निपतिते दैत्ये देवाः सर्षिगणास्तथा २९४
साधु साध्विति वैकुण्ठं समेताः प्रत्यपूजयन् । अपरे ये तु दैत्या वै युद्धे दृष्टपराक्रमाः ॥ २९५
ते सर्वे बाहुभिर्व्याप्ता न शेकुश्चलितुं रणे । कांश्चित्केशेषु जग्राह कांश्चित्कण्ठेष्वपीडयत् ॥ २९६
चकर्त कस्यचिद्वक्त्रं मध्येऽगृह्णादथापरम् । ते गदाचक्रनिर्दग्धा गतसत्त्वा गतासवः ॥ २९७
गगनाद्भ्रष्टसर्वाङ्गा निपेतुर्धरणीतले । तेषु सर्वेषु दैत्येषु हतेषु पुरुषोत्तमः ॥ २९८
शक्रप्रियं ततः कृत्वा कृतकर्मा गदाधरः । तस्मिन्विमर्दे संवृत्ते सङ्ग्रामे तारकामये ॥ २९९
तं च देशं जगामाऽऽशु ब्रह्मा लोकपितामहः । सर्वैर्ब्रह्मर्षिभिः सार्धं गन्धर्वाप्सरसां गणैः ॥
देवदेवं हरिं देवः पूजयन्वाक्यमब्रवीत् । ३००

ब्रह्मोवाच—

कृतं देव महत्कर्म सुराणां शल्यमुद्धृतम् । निधनेन च दैत्यानां वयं च परितोषिताः ॥ ३०१
योऽयं त्वया हतो विष्णो कालनेमिर्महासुरः । त्वामेतस्य ऋते ह्यस्मिञ्शास्ता कश्चिन्न विद्यते ॥
एष देवान्परिभवँल्लोकांश्च सचराचरान् । ऋषीणां कदनं कृत्वा मामपि प्रतिगर्जति ॥ ३०३
तदनेन त्वदीयेन परितुष्टाः स्म कर्मणा । यदयं कालकल्पस्ते कालनेमिर्निपातितः ॥ ३०४
तदागच्छस्व भद्रं ते गच्छामि दिवमुत्तमाम् । ब्रह्मर्षयस्त्वां तत्रस्थाः प्रतीक्षन्ते सदो गताः ३०५

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. पुस्तकस्थः ।

१ अ. °क्त्रनाभं भ° । २ ग. °लावितत° । घ. °लाधितत° । ३ झ. तत्सपलश° । ४ क. ख. ङ. च. ज. तं वितत्य महापक्षौ वा° ।

कं चाहं तव दास्यामि वरं वरभृतां वर । स्वस्थानस्थेषु देवेषु तेषां च वरदो भवान् ॥ ३०६
निर्यातमेतत्त्रैलोक्यं स्थितं निहतकण्टकम् । अस्मिन्नेव मृधे विष्णो शक्राय सुमहात्मने ॥ ३०७

पुलस्त्य उवाच—

एवमुक्तो भगवता ब्रह्मणा हरिरव्ययः । देवाञ्शक्रमुखान्सर्वानुवाच शुभया गिरा ॥ ३०८

विष्णुरुवाच—

श्रूयतां त्रिदशाः सर्वे यावन्तोऽत्र समागताः । श्रवणावहितैः स्तो(श्रो)त्रैः पुरस्कृत्य पुरंदरम् ॥
अस्माभिः समरे सर्वे कालनेमिमुखा हताः । दानवा विक्रमोपेताः शक्रादपि महत्तराः ॥ ३१०
अस्मिन्महति सङ्ग्रामे द्वावेव तु विनिःसृतौ । विरोचनस्तु दैतेयः स्वर्भानुश्च महाबलः ॥ ३११
स्वां दिशं भजतां शक्रो दिशं वरुण एव च । याम्यां यमः पालयतामुत्तरां च धनाधिपः ३१२
ऋक्षैः सह सदा योगं गच्छतां चन्द्रमास्तथा । अयमृतुमुखं सूर्यो भजतामयनैः सह ॥ ३१३
आज्यभागाः प्रवर्तन्तां सदस्यैरभिपूजिताः । हूयन्तामग्नयो विप्रैर्वेददृष्टेन कर्मणा ॥ ३१४
देवाश्च क्रतुहोमेन स्वाध्यायेन महर्षयः । श्राद्धेन पितरश्चैव तुष्टिं यान्तु यथासुखम् ॥ ३१५
वायुश्चरतु मार्गस्थस्त्रिधा दीप्यतु पावकः । त्रयो वर्णाश्च लोकांस्त्रींस्तर्पयन्त्वात्मजैर्गुणैः ॥ ३१६
क्रतवः संप्रवर्तन्तां दीक्षणीयैर्द्विजातिभिः । दक्षिणाश्चोपपद्यन्तां याज्ञिकैश्च पृथक्पृथक् ॥ ३१७
गां च सूर्यो रसान्सोमो वायुः प्राणांश्च प्राणिषु । तर्पयन्तः प्रवर्तन्तामेतैः(ते) सौम्यैः स्वकर्मभिः॥
यथावदनुपूर्वेण महेन्द्रमलयोद्भवाः । त्रैलोक्यमातरः सर्वाः समुद्रं यान्तु सिन्धवः ॥ ३१९
दैत्येभ्यस्त्यज्यतां भीश्च शान्तिं व्रजत देवताः । स्वस्ति वोऽस्तु गमिष्यामि ब्रह्मलोकं सनातनम्
स्वगृहे स्वर्गलोके वा सङ्ग्रामे वा विशेषतः । विश्वस्तैर्वा न गन्तव्या नित्यं क्षुद्रा हि दानवाः ३२१
छिद्रेषु प्रहरन्त्येते न तेषां संस्थितिर्ध्रुवा । सौम्यानां निजभावानां भवतामार्जवं मनः ॥ ३२२

पुलस्त्य उवाच—

एवमुक्त्वा सुरगणान्विष्णुः सत्यपराक्रमः । जगाम ब्रह्मणा सार्धं ब्रह्मलोकं महायशाः ॥ ३२३
देवानां महतीं प्रीतिमुत्पाद्य भगवान्प्रभुः । एतदाश्चर्यमभवत्सङ्ग्रामे तारकामये ॥
दानवानां च विष्णोश्च यन्मां त्वं परिपृच्छसि ॥ ३२४

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पद्मप्रादुर्भावो नामाष्टात्रिंशोऽध्यायः ॥ ३८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२७३१५

---

अथैकोनचत्वारिंशोऽध्यायः ।

---

भीष्म उवाच—

श्रुतः पद्मोद्भवो ब्रह्मन्विस्तरेण त्वयेरितः । समासाद्भवमाहात्म्यमुत्पत्तिं च गुहस्य च ॥ १
श्रोतुमिच्छामि ते ब्रह्मन्यथा भूतः कृतं च यत् । तारकश्च कथं भूतो दानवो बलवत्तरः ॥ २
कार्तिकेयेन स ब्रह्मन्कथं ध्वस्तो महासुरः । कथं रुद्रेण मुनयः प्रेषिता मन्दरं गिरिम् ॥ ३
कथं लब्धा उमा तत्र रुद्रेण परमेष्ठिना । एतदाख्याहि मे सर्वं यथाभूतं महामुने ॥ ४

---

१ झ. नियमेनैत॰ । २ क. ख. ङ. च. ॰ताः । सुपर्णसहितैस्तत्र पु॰ । ३ झ. सदा नरैर॰ । ४ घ. ॰हेन्द्राद्याः सुखोपमैः । त्रै॰ । झ. ॰हेन्द्राद्याः सुखोद्भ॰ । ५ क. ख. घ. ङ. च. ज. मन्दिरं गिरेः । क॰ ।

 

पुलस्त्य उवाच—

कश्यपेन पुरा प्रोक्ता दितिर्दैत्यारणिः शुभा । वज्रसारमयैश्चाङ्गैः पुत्रो देवि भविष्यति ॥ ५

वज्राङ्गो नाम पुत्रस्तु भविता धर्मवत्सलः । सा च लब्धवरा देवी सुषुवे वज्रदुश्छिदम् ॥ ६

स जातमात्र एवाभूत्सर्वशास्त्रार्थपारगः । उवाच मातरं भक्त्या मातः किं करवाण्यहम् ॥ ७

तस्योवाच ततो हृष्टा दितिर्दैत्याधिपस्य तु । बहवो मे हताः पुत्राः सहस्राक्षेण पुत्रक ॥ ८

तेषामपचितिं कर्तुं गच्छ शक्रवधाय तु । बाढमित्येव तां चोक्त्वा जगाम त्रिदिवं बली ॥ ९

बद्ध्वा ततः सहस्राक्षं पाशेनामोघवर्चसा । मातुरन्तिकमागच्छद्व्याधैः क्षुद्रमृगं यथा ॥ १०

एतस्मिन्नन्तरे ब्रह्मा कश्यपश्च महातपाः । आगतो तत्र यत्राऽऽस्तां मातापुत्रावभीतकौ ॥ ११

दृष्ट्वा तु तावुवाचेदं ब्रह्मा कश्यप एव च । मुञ्चैनं पुत्र देवेन्द्रं किमनेन प्रयोजनम् ॥ १२

अवमानो वधः प्रोक्तः पुत्र संभावितस्य तु । अस्मद्वाक्येन यो मुक्तस्त्वद्धस्तान्मृत एव सः ॥ १३

परस्य गौरवान्मुक्तः शत्रुणा शत्रुराहवे । स जीवन्नेव हि मृतो दिवसे दिवसे पुनः ॥ १४

एतच्छ्रुत्वा तु वज्राङ्गः प्रणतो वाक्यमब्रवीत् । न मे कृत्यं मनागस्ति मातुराज्ञा कृता हि मे १५

त्वं सुरासुरनाथो वै मान्यश्च प्रपितामहः । करिष्ये त्वद्वचो देव एष मुक्तः शतक्रतुः ॥ १६

तपसे मे रतिर्देव निर्विघ्नं तच्च मे भवेत् । त्वत्प्रसादेन भगवन्नित्युक्त्वा विरराम ह ॥

तस्मिंस्तूष्णीं स्थिते दैत्ये प्रोवाचेदं पितामहः ॥ १७

ब्रह्मोवाच—

तपस्त्वं कुरु माऽऽपन्नः सोऽस्मच्छासनसंस्थितः । अनया चित्तशुद्ध्या हि पर्याप्तं जन्मनः फलम्

इत्युक्त्वा पद्मजः कन्यां ससर्जाऽऽयतलोचनाम् । तामस्मै प्रददौ देवः पत्न्यर्थं पद्मसंभवः ॥ १९

वराङ्गीति च नामास्याः कृत्वा यातः पितामहः । वज्राङ्गोऽपि तया सार्धं जगाम तपसे वनम् ॥

ऊर्ध्वबाहुः स दैत्येन्द्रोऽचरद्वर्षसहस्रकम् । कालं कमलपत्राक्षः शुद्धबुद्धिर्महातपाः ॥ २१

तावच्चाधोमुखः कालं तावत्पञ्चाग्निमध्यगः । निराहारो घोरतपास्तपोराशिरजायत ॥ २२

ततः सोऽन्तर्जले चक्रे वासं वर्षसहस्रकम् । जलान्तरं प्रविष्टस्य तस्य पत्नी महाव्रता ॥ २३

तस्यैव तीरे सरसः स्थिताऽसौ मौनमाश्रिता । निराहारं तपो घोरं प्रविवेश महाद्युतिः ॥ २४

तस्यां तपसि वर्तन्त्यामिन्द्रश्चक्रे विभीषिकाम् । गत्वा तु मर्कटाकारस्तदाश्रमपदं महत् ॥ २५

बृषीं चकर्ष बलवान्गन्धाद्यर्चाकरण्डकम् । ततस्तु सिंहरूपेण भीषयामास भामिनीम् ॥ २६

ततो भुजंगरूपेणाप्यदशच्चरणद्वये । तपोबलवशात्सा तु न वध्यत्वं जगाम ह ॥ २७

विभीषाभिरनेकाभिः क्लेशयन्पाकशासनः । विरराम यदा नैव वज्राङ्गमहिषी तदा ॥ २८

शैलस्य दुष्टतां मत्वा शापं दातुं समुद्यता । तां शापाभिमुखीं दृष्ट्वा शैलः पुरुषविग्रहः ॥

उवाच तां वरारोहां वराङ्गीं भीतलोचनः ॥ २९

शैल उवाच—

नाहं महाव्रते दुष्टः सेव्योऽहं सर्वदेहिनाम् । विप्रियं ते करोत्येष रुषितः पाकशासनः ॥ ३०

एतस्मिन्नन्तरे जातः कालो वर्षसहस्रकः । तस्मिञ्ज्ञात्वा तु भगवान्काले कमलसंभवः ॥

तुष्टः प्रोवाच वज्राङ्गं तदाऽऽगत्य जलाशयम् ॥ ३१

१ ग. घ. ज. पत्नी । २ ग. घ. ज. °धः क्रुद्धो मृ° । ३ ग. घ. ज. °तज्ज्ञात्वा । ४ ग. घ. ज. °स्त्वं क्रूरमा° । ५ ग. संप्राप्तं । ६ ग. घ. ज. °पाः । तपसाऽधोमुखः कालेऽभवत्प° । ७ घ. ज. °काभिश्चकर्ष पाक° ।

ब्रह्मोवाच—

ददामि सर्वकामं त उत्तिष्ठ दितिनन्दन । एवमुक्तस्तदाख्याय स दैत्येन्द्रस्तपोनिधिः ॥
उवाच प्राञ्जलिर्वाक्यं सर्वलोकपितामहम् ॥ ३२

वज्राङ्ग उवाच—

आसुरो माऽस्तु मे भावः सन्तु लोका ममाक्षयाः । तपस्यभिरतिर्मेऽस्तु शरीरस्यास्य वर्तिनः[1] ३३
एवमस्त्विवति तं देवो जगाम स्वकमालयम् । वज्राङ्गोऽपि समाप्ते तु तपसि स्थिरसंयमः ॥ ३४
आगन्तुमिच्छन्स्वां भार्यां न ददर्शाऽऽश्रमे स्वके । क्षुधाऽऽविष्टः स शैलस्य गहनं प्रविवेश ह ॥
आदातुं फलमूलानि स च तस्मिन्व्यलोकयत् । रुदतीं स्वां प्रियां दीनां तरुप्रच्छादिताननाम् ॥
तां विलोक्य ततो दैत्यः प्रोवाच परिसान्त्वयन् ॥ ३६

वज्राङ्ग उवाच—

केन तेऽपकृतं भद्रे यमलोकं यियासुना । कं वा कामं प्रयच्छामि शीघ्रं प्रब्रूहि भामिनि ॥ ३७

वराङ्ग्युवाच[2]—

त्रासिताऽस्म्यपविद्धाऽस्मि ताडिता पीडिताऽस्मि च । रौद्रेण देवराजेन नष्टनाथेव भूरिशः ॥ ३८
दुःखस्यान्तमपश्यन्ती प्राणांस्त्यक्तुं व्यवस्थिता । पुत्रं मे तारकं देहि तस्माद्दुःखमहार्णवात् ॥ ३९
एवमुक्तस्तु दैत्येन्द्रः कोपव्याकुललोचनः । शक्तोऽपि देवराजस्य प्रतिकर्तुं महासुरः ॥ ४०
तप एव पुनः कर्तुं व्यवस्यत महाबलः । ज्ञात्वा तस्य तु संकल्पं ब्रह्मा क्रूरतरं पुनः ॥
आजगाम त्वरायुक्तो यत्रासौ दितिनन्दनः ॥ ४१

ब्रह्मोवाच—

किमर्थं पुत्र भूयस्त्वं कर्तुं नियमुद्यतः । तदहं ते पुनर्दद्मि काङ्क्षितं पुत्रमोजसा ॥ ४२

वज्राङ्ग उवाच—

उत्थितेन मया दृष्टा समाधानात्त्वदाज्ञया । त्रासितेन्द्रेण[3] मामाह सा वराङ्गी सुतार्थिनी ॥
पुत्रं मे तारकं देहि तुष्टोऽसि त्वं पितामह ॥ ४३

ब्रह्मोवाच—

अलं ते तपसा वीर मा क्लेशे दुस्तरे विश । पुत्रस्तु तारको नाम भविष्यति महाबलः ॥ ४४
देवसीमन्तिनीनां तु धम्मिल्लकविमोचकः । इत्युक्तो दैत्यनाथस्तु प्रणम्य प्रपितामहम् ॥ ४५
गत्वा तां नन्दयामास महिषीं कर्षितान्तराम् । तौ दंपती कृतार्थौ तु जग्मतुः स्वाश्रमं तदा ४६
आहितं तु तदा गर्भं वराङ्गी वरवर्णिनी । पूर्णं वर्षसहस्रं तु दधारोदर एव हि ॥ ४७
ततो वर्षसहस्रान्ते वराङ्गी सा त्वसूयत । जायमाने तु दैत्ये तु तस्मिँल्लोकभयंकरे ॥ ४८
चचाल सर्वा पृथिवी प्रोद्धूताश्च महार्णवाः । चेलुर्धराधराश्चापि ववुर्वाताश्च भीषणाः ॥ ४९
जेपुर्जप्यं मुनिवरा नेदुर्व्यालमृगा अपि । जहौ कान्तिश्चन्द्रसूर्यौ नीहारैश्चार्दयन्दिशः ॥ ५०
जाते महासुरे तस्मिन्सर्वे चापि महासुराः । आजग्मुर्हर्षितास्तत्र तथा चासुरयोषितः ॥ ५१
जगुर्हर्षसमाविष्टा ननृतुश्चाप्सरोगणाः । ततो महोत्सवे[4] जाते दानवानां महाद्युते ॥ ५२
विषण्णमनसो देवाः सहेन्द्रा अभवंस्तदा । वराङ्गी तु सुतं दृष्ट्वा[5] हर्षेण पूरिता तदा ॥ ५३

---

१ ञ. वर्तनम् । २ ग. घ. ज. °च—कामिताऽ° । ३ ग. घ. ज. त्रासिता । ४ घ. °यतमु° । ५ ग. घ. ज. °ङ्गी त्वसुरान्दृष्ट्वा ।

बहु मेने च दैत्येन्द्रो विजातं तं तदा तु सा । जातमात्रस्तु दैत्येन्द्रस्तारकश्चोग्रविक्रमः ॥ ५४
अभिषिक्तोऽसुरैर्मुख्यैः कुजम्भमहिषादिभिः । सर्वासुरमहाराज्ये पृथिवीतुलनक्षमैः ॥ ५५
स तु प्राप्तमहाराज्यस्तारको नृपसत्तम । उवाच दानवश्रेष्ठो युक्तियुक्तमिदं वचः ॥ ५६

तारक उवाच—

शृणुध्वमसुराः सर्वे वाक्यं मम महाबलाः । वंशक्षयकरा देवाः सर्वेषामेव दानवाः ॥ ५७
अस्माकं जातिधर्मेण विरूढं वैरमक्षयम् । वयं तपश्चरिष्यामः सुराणां निग्रहाय तु ॥ ५८
स्वबाहुबलमाश्रित्य सर्व एव न संशयः ॥ ५९

पुलस्त्य उवाच—

तच्छ्रुत्वा संमतं कृत्वा पारियात्रं ययौ गिरिम् । निराहारः पञ्चतपाः पत्रभुग्वारिभोजनः ॥ ६०
शतं शतं समानां तु तपांस्येतान्यथाकरोत् । एवं तु कर्शिते देहे तपोराशित्वमागते ॥ ६१
ब्रह्माऽऽगत्याऽऽह दैत्येन्द्रं वरं वरय सुव्रत । स वव्रे सर्वभूतेभ्यो न मे मृत्युर्भवेदिति ॥ ६२
तमुवाच ततो ब्रह्मा देहिनां मरणं ध्रुवम् । यतस्ततोऽपि वरय मृत्युं यस्मान्न शङ्कसे ॥ ६३
ततः संचिन्त्य दैत्येन्द्रः शिशोर्वै सप्तवासरात् । वव्रे महासुरो मृत्युं मोहितो ह्यवलेपतः ॥ ६४
जगामोमित्युदाहृत्य ब्रह्मा दैत्यो निजं गृहम् । अथाऽऽह मन्त्रिणस्तूर्णं बलं मे संप्रयुज्यताम् ॥ ६५
यदि वो मत्प्रियं कार्यं निग्राह्याः सुरसत्तमाः । निगृहीतेषु मे प्रीतिर्जायते चातुलाऽसुराः ॥ ६६
तारकस्य वचः श्रुत्वा ग्रसनो नाम दानवः । सेनानीर्दैत्यराजस्य सज्जं चक्रे बलं च तत् ॥ ६७
आहत्य भेरीं गम्भीरां दैत्यानाहूय सत्वरः । दशकोटीश्वरा दैत्या दैत्यानां चण्डविक्रमाः ॥ ६८
तेषामग्रेसरो जम्भः कुजम्भोऽनन्तरोऽसुरः । महिषः कुञ्जरो मेघः कालनेमिर्निमिस्तथा ॥ ६९
मन्थनो जम्भकः शुम्भो दैत्येन्द्रा दश नायकाः । अन्ये च शतशस्तत्र पृथिवीतुलनक्षमाः ॥ ७०
गरुडानां सहस्रेण चक्राष्टकविभूषितः । सकूवरपरीवारश्चतुर्योजनविस्तृतः ॥ ७१
स्यन्दनस्तारकस्याऽऽसीद्व्याघ्रसिंहखरार्वभिः । युक्ता रथास्तु ग्रसनजम्भकौजम्भकुम्भिनाम् ७२
मेघस्य द्वीपिभिर्युक्तः कूष्माण्डैः कालनेमिनः । पर्वताभश्चतुर्दंष्ट्रो निमेश्चैव महागजः ॥ ७३
शतहस्ततुरंगस्थो मन्थनो नाम दैत्यराट् । जम्भकस्तूष्ट्रमारूढो गिरीन्द्राभं महाबलः ॥ ७४
शुम्भो मेषं समारूढोऽन्येऽप्येवं चित्रवाहनाः । प्रचण्डाश्चित्रवर्माणः कुण्डलोष्णीषभूषिताः ॥ ७५
तद्बलं दैत्यसिंहस्य भीमरूपं व्यजायत । प्रमत्तमत्तमातङ्गतुरङ्गरथसंकुलम् ॥ ७६
प्रतस्थेऽमरयुद्धाय बहुपत्तिपताकिकम् । एतस्मिन्नन्तरे वायुर्देवदूतोऽसुरालये ॥ ७७
दृष्ट्वा तु दानवबलं जगामेन्द्रस्य शंसितुम् । स गत्वा तु सभां दिव्यां महेन्द्रस्य महात्मनः ॥ ७८
शशंस मध्ये देवानामिदं कार्यमुपस्थितम् । तच्छ्रुत्वा देवराजस्तु निमीलितविलोचनः ॥ ७९
बृहस्पतिमुवाचेदं वाक्यं काले महाभुजः ॥ ८०

इन्द्र उवाच—

संप्राप्नोति विमर्दोऽयं देवानां दानवैः सह । कार्यं किमत्र तद्ब्रूहि नीत्युपायोपबृंहितम् ॥ ८१
एतच्छ्रुत्वा तु वचनं महेन्द्रस्य गिरां पतिः । इत्युवाच महाभागो बृहस्पतिरुदारधीः ॥ ८२

---

१ ग. घ. ज. 'मुख्यैर्गजाश्वम' । २ झ. 'क्षमे । स । ३ ग. घ. तत्र घटिष्या' । ज. तत्र चरिष्या' । ४ ग. घ. ज. ग्रहणो । ५ ख. ङ. मेषः ।

बृहस्पतिरुवाच[1]—

सामपूर्वा श्रुता नीतिश्चतुरङ्गा पताकिनी । जिगीषतां सुरश्रेष्ठ स्थितिरेषा सनातनी ॥ ८३

साम भेदस्तथा दानं दण्डश्चाङ्गचतुष्टयम् । न सान्त्वगोचरे लुब्धा न भेद्यास्त्वेकधर्मिणः ॥ ८४

न दानमत्र संसिद्ध्यै प्रसह्यैवापहारिणाम् । एकोऽभ्युपायो दण्डोऽत्र भवतां यदि रोचते ॥ ८५

एवमुक्तः सहस्राक्ष एवमेतदुवाच ह । कर्तव्यतां च संचिन्त्य प्रोवाचामरसंसदि ॥ ८६

इन्द्र उवाच—

अवधानेन मे वाचं शृणुध्वं नाकवासिनः । भवन्तो यज्ञभोक्तारो दिव्यात्मानो हि सान्वयाः ॥ ८७

स्वे महिम्नि स्थिता नित्यं जगतः पालने रताः । क्रियतां समरोद्योगः सैन्यं संयोज्यतां मम ॥ ८८

आह्रियन्तां च शस्त्राणि पूज्यन्तां शस्त्रदेवताः । वाहनानि विमानानि योजयध्वं ममेश्वराः ॥ ८९

यमं सेनापतिं कृत्वा शीघ्रमेव दिवौकसः ॥ ९०

पुलस्त्य उवाच—

इत्युक्ताः समनह्यन्त देवानां ये प्रधानतः । वाजिनामयुतेनाऽऽजौ हेमघण्टापरिष्कृतम् ॥ ९१

नानाश्चर्यगुणोपेतं संप्राप्तं देवदानवैः । रथं मातलिना युक्तं देवराजस्य दुर्जयम् ॥ ९२

यमो महिषमास्थाय सेनाग्रे समवर्तत । चण्डकिंकरवृन्देन सर्वतः परिवारितः ॥ ९३

कल्पकालोद्गतज्वालापूरिताम्बरगोचरः । हुताशनस्त्वजारूढः शक्तिहस्तो व्यवस्थितः ॥ ९४

पवनोऽङ्कुशहस्तश्च विस्तारितमहाजवः । भुजगेन्द्रे[2]समारूढो जलेशो भगवान्स्वयम् ॥ ९५

नरयुक्ते रथे देवो राक्षसेशो [3]वियच्चरः । तीक्ष्ण[4]वाहुयुतो भीमः समरे समवस्थितः ॥ ९६

महासिंहरथे देवो धनाध्यक्षो गदायुधः । चन्द्रादित्यावश्विनौ च[5] चतुरङ्गबलान्विताः ॥ ९७

सेनां[6] सा देवराजस्य दुर्जया भुवनत्रये । कोटयं[7]स्तास्त्रयस्त्रिंशद्देव देवनिकायिनाम् ॥ ९८

हिमाचलाभे सितचारुचामरे सुवर्णपद्मामलसुन्दरस्रजि ।
कृताभिरामोज्ज्वलकुङ्कुमाङ्कुरे कपोलली[8]लालिकदम्बसंकुले ॥ ९९

स्थितस्तदैरावणनाककुञ्जरे महाबलश्चित्रविभूषणाम्बरः ।
विशालवज्रांशु[9]वितानभूषितः प्रकीर्णकेयूरभुजङ्गमण्डलः ॥ १००

सहस्रदृग्वन्दितपादपल्लवस्त्रिविष्टपेऽशोभत पाकशास[10]नः ।
तुरङ्गमातङ्ग[11]कुलौघसंकुला सितातपत्रध्वजशालिनी च ॥ १०१

बभूव सा दुर्जयपत्तिसंततिर्विभाति नानायुधयोधदुस्तरा ॥ १०२

ततोऽश्विनौ च मरुतः ससाध्याः सपुरंदराः । यक्षराक्षसगन्धर्वा दिव्यनानास्त्रपाणयः ॥ १०३

जघ्नुर्दै[12]त्येश्वरं सर्वे संभूय तु महाबलाः । न चास्त्राण्यस्य सज्जन्ते गात्रे वज्राचलोपमे ॥ १०४

अथो रथादवप्लुत्य तारको दानवाधिपः । जघान कोटिशो देवान्करपार्ष्णिभिरेव च ॥ १०५

जेशेषाणि सैन्यानि देवानां विप्रदुद्रुवुः । दिशो भीतानि संत्यज्य रणोपकरणानि च ॥

दृष्ट्वा[13] तान्विद्रुतान्देवांस्तारको वाक्यमब्रवीत् ॥ १०६

---

१ ग. घ. ज. °च—या मे पूर्वं श्रु° । २ ग. घ. ज. °न्द्ररथारू° । ३ ग. घ. ज. विमत्सरः । ४ ग. घ. ज. °क्ष्णवेगयु° । ५ ग. घ. ज. च रसातलमधिष्ठितौ । से° । ६ झ. °नान्यो दे° । ७ ग. घ. ज. °टयोऽष्टादश त्रिंश° । ८ क. ख. ङ. च. °ला किल देवसंकुले । ग. घ. ज. °लाविनिमुक्तचालके । स्थि° । ९ ग. घ. ज. °ञ्जाङ्गविमान° । १० ग. घ. ज. °नः । भुजङ्ग° । ११ ग. °ङ्गकुलाकुलाकु° । घ. °ङ्गबलौघ° । १२ ग. घ. ज. जग्मुर्दै° । १३ ग. °ष्ट्वा तांश्चासुरो देवां° । घ. °ष्ट्वा तांस्तु पुरो देवां° ।

तारक उवाच—

मा वधीर्भोः सुरान्दैत्या वज्राङ्गाय च मन्दिरे। आनीय दृश्य(दर्श्य)तां शीघ्रं बद्धान्पश्यति(तु) वै सुरान्

पुलस्त्य उवाच—

लोकपालांस्ततो दैत्यो बद्ध्वा चेन्द्रमुखान्रणे। सकेशवान्दृढैः पाशैः पशुपालः पशूनिव ॥ १०८

स भूयो रथमास्थाय जगाम स्वकमालयम्। सिद्धगन्धर्वसंघुष्टं विपुलाचलमस्तकम् ॥ १०९

स्तूयमानो दितिसुतैरप्सरोभिः सुसेवितः ॥ ११०

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे सुरतारकसङ्ग्रामे तारकजयो नामैकोनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२७४२५

---

अथ चत्वारिंशोऽध्यायः।

---

पुलस्त्य उवाच—

प्रादुरासीत्प्रतीहारः शुभ्रचीनांशुकाम्बरः। स जानुभ्यां महीं गत्वा पिहितास्यश्च पाणिना ॥ १

उवाचानाविलं वाक्यमल्पाक्षरपरिष्कृतम्। दैत्येन्द्रमर्कवृन्दाभं बिभ्रतं भास्वरं वपुः ॥ २

प्रतीहार उवाच—

कालनेमिः सुरान्बद्ध्वा प्रादाय द्वारि तिष्ठति। स विज्ञापयति स्थेयं क्व वन्दिनि(कैभिः सह)मया प्रभो

पुलस्त्य उवाच—

तन्निशम्याब्रवीद्दैत्यः प्रतीहारस्य भाषितम् ॥ ४

दैत्येन्द्र उवाच—

यथेष्टं स्थीयतामेभिर्गृहं मे भुवनत्रयम्। केवलं वासवं त्वेकं मुण्डयित्वा विमुच्यताम् ॥ ५

सितवस्त्रपरिच्छन्नं शुनः पादेन चिह्नितम्। कृत्वाऽङ्कं खरपादेन ग्रीवायां क्षिप्यतां बहिः ॥ ६

पुलस्त्य उवाच—

एवं कृते ततो देवा दूयमानेन चेतसा। जग्मुर्जगद्गुरुं द्रष्टुं शरणं कमलोद्भवम् ॥ ७

विनिर्विण्णास्तमासाद्य शिरोभिर्धरणीं गताः। तुष्टुवुः सुष्टुवर्णाढ्यैर्वचोभिः कमलासनम् ॥ ८

देवा ऊचुः—

नम ओंकाराङ्कुरादिप्रसूत्यै विश्वस्थानानन्तभेदस्य पूर्वम्।
संभूतस्यानन्तरं सत्त्वमूले संहारेच्छोस्ते नमः सत्त्वमूर्ते ॥ ९

व्यक्तीनां त्वामादिभूतं महिम्ना चास्मादस्मानभिधानाद्विचिन्त्य।
द्यावापृथ्व्योरूर्ध्वलोकांस्तथाऽधश्चाण्डादस्मात्त्वं विभागं चकार(?) ॥ १०

व्यक्तं चैतद्यज्जरायुस्तवाभूदेवं विश्वस्त्वत्प्रणीतोऽवकाशः।
व्यक्तं देवा जज्ञिरे यस्य देहादेहस्यान्तश्चारिणो देहभाजः ॥ ११

द्यौस्ते मूर्धा लोचने चन्द्रसूर्यौ व्यालाः केशाः श्रोत्ररन्ध्रे दिशस्ते।
गात्रं यज्ञः सिन्धवः संधयो वै पादौ भूमिस्तूदरं ते समुद्राः ॥ १२

---

१ ग. °न्द्रकर्मदान्तानां विशतां भासुरं। घ. °न्द्रकर्मवृत्तानां विशन्तं चासुरं। ज. °न्द्रकर्मवृत्तानां विक्रान्तं भासुर। २ ग. घ. °मू। वृतं चाप्सरवृन्दे° [illegible] °त्रवक्त्रे दि°।

मायाकारः कारणं त्वं प्रसिद्धो वेदैः शान्तो ज्योतिरर्कस्त्वमुक्तः ।
वेदार्थेन त्वां विद्दण्वन्ति बुद्ध्या हृत्पद्मान्तःसंनिविष्टं पुराणम् ॥ १३
त्वां चाऽऽत्मानं लब्धयोगा गृणन्ति सांख्यैर्यास्ताः सप्त सूक्ष्माः प्रणीताः ।
तासां हेतुर्याऽष्टमी चापि गीता तास्वन्तःस्थो जीवभूतस्त्वमेव ॥ १४
दृष्ट्वा मूर्ति स्थूलसूक्ष्मां चकार ये वै भावाः कारणे केचिदुक्ताः ।
संभूतास्ते त्वत्त एवाऽऽदिसर्गे भूयस्तास्त्वां(स्ते वै) वासनान्तेऽभ्युपेयाः ॥ १७
त्वत्सङ्केतस्त्वन्तरा यो निगूढः कालोऽमेयो ध्वस्तसंख्याविकल्पः ।
भावाभावव्यक्तिसंहारहेतुः सोऽनन्तस्त्वं तस्य कर्ता निदानम् ॥ १६
स्थूलः सर्वानर्थभूतस्ततोऽन्यः सोऽर्थः सूक्ष्मो यो हि तेभ्योऽपि गीतः ।
स्थूला भावाश्चाऽऽन्वतार(तो य)श्च तेषां तेभ्यः स्थूलस्त्वं पुराणे प्रणीतः ॥ १७
भूतं भूतं भूतिमद्भूतभावं भावे भावे भावितं त्वं युनक्षि ।
युक्तं युक्तं व्यक्तिभावान्निरस्य स्थाने स्थाने व्यक्तिवृत्तिं करोषि ॥
इत्थं देवो भक्तिभाजां शरण्यस्त्राता गोप्ता भावितोऽनन्तमूर्तिः ॥ १८

पुलस्त्य उवाच—

विरेमुरमराः स्तुत्वा ब्रह्माणमिति कारणम् । तस्थुर्मनोभिरिष्टार्थसंप्राप्तिप्रार्थनास्ततः ॥ १९
एवं स्तुतो विरिञ्चिस्तु प्रसादं परमं गतः । अमरान्वरदोऽप्याह वामहस्तेन निर्दिशन् ॥ २०

ब्रह्मोवाच—

नारीवाभर्तृकाऽकस्माद्ध्वस्तसंत्यक्तभूषणा । न राजसे यथा(कुतः) शक्र म्लानवक्त्रसरोरुहा॥२१
हुताशन वियुक्तोऽपि धूमेन न विराजसे । तृणौघेन प्रतिच्छन्नो दग्धदावश्चिरोषितः ॥ २२
यमाऽऽमयशरीरेण क्लिष्टो नाद्य विराजसे । दण्डेनाऽऽलम्बनेनैव क्लिष्टो येन पदे पदे ॥ २३
रजनीचरनाथ त्वं किं भीत इव भाषसे । राक्षसेन्द्र कृतादाने(?) त्वमरातिक्षतो यथा ॥ २४
तनुस्ते वरुणोच्छुष्का परीतस्येव वह्निना । विमुक्तरुधिरं[2] चाथ पदं त्वं प्रविलोकय ॥ २५
वायो भवान्विचेतस्कः खड्गाग्रैरिव निष्कृतः । किं त्वं[3] नतोऽसि धनद संत्यज्यैव कुबेरताम् २६
रुद्रास्त्रिशूलिनः सन्तोऽवदध्वं बहुशूरताम् । भवतां केन चाऽऽक्षिप्ता तीव्रता नस्तदुच्यताम्॥२७
आकिंचित्करतां याता हृता केन विभासता । वरनीलोत्पलाभेन चक्रेण मधुसूदन ॥ २८
किं च स्यात्सूदरालीनभुवन प्रविलोकन । कायेऽस्मिन्निरपेक्षेण भवता विश्वतोमुख ॥ २९

पुलस्त्य उवाच—

एवमुक्ताः सुरास्तेन ब्रह्मणा ब्रह्मवर्तिना । वाचां प्रधानभूतत्वात्ते मारुतमचोदयन् ॥ ३०
अथ विष्णुमुखैर्देवैः पवनः प्रतिचोदितः । प्राह देवं चतुर्वक्त्रं भवान्वेत्ति चराचरम् ॥ ३१

वायुरुवाच—

पुरुहूतमुखाः सबलानिमिषा विजिताः प्रसभं किल दैत्यशतैः ।
क्रतवो विहिता भवता स्थितये जगतां च महाद्भुतचित्रगुणाः ॥ ३२

---

१ ग. घ. ज. सूर्याः । २ झ. °रं पाद्यं प° । ३ घ. ज. त्वं बिभेषि ध° । ४ घ. किं चास्याप्सूद° । ५ घ. °त्यसुतैः । ६ घ. ज. °त्रगणाः ।

अपि यज्ञकृतः श्रुतकामफला विहिता ऋषयस्तत एव पुरः ।
अपि नाकमभूत्किल यज्ञभुजां भवतो विनियोगवशात्सततम् ॥ ३३
अपहृत्य विमानगणं स कृतो दनुजेन महाकरभूमिसमः ।
कृतवानसि सर्वगुणातिशयं यमशेषमहीधरराजतयां ॥ ३४
मखभूषितमंशुमतामवधिं सुरधामगिरिं गगनेऽपि सदा ।
अधिवासविहारविधावुचितो दनुजेन परिष्कृतशृङ्गतटः ॥ ३५
प्रविलम्बितरत्नगुहानिवहो बहुदैत्यसमाश्रयतां गमितः ।
असुरस्य च तस्य भयेन गतं सविषादशरीरनिमित्ततया ॥ ३६
उपयोग्य(गि)तयाऽधिकृतं सुचिरं विमलद्युतिपूरितदिग्वदनम् ।
भवतैव विनिर्मितमादियुगे सुरहेतिसमूहवरं कुलिशम् ॥
दितिजस्य शरीरमवाप्य गतं शतधा न विभेद भवान्यदिदम् ॥ ३७
बाणैश्च युधि विद्धाङ्गा द्वारि द्वास्थैर्निदर्शिताः । लब्धप्रवेशाः कृच्छ्रेण वयं तस्यामरद्विषः ॥ ३८
सभायाममरा देव प्रकृष्योपनिवेशिताः । वेत्रहस्तैरजल्पन्तस्तथोपहसिताः परैः ॥ ३९
महार्थाः सिद्धसर्वार्था भवन्तः स्वल्पभाषिणः । शास्त्रयुक्तमथ ब्रूत माऽमरा बहुभाषिणः ॥ ४०
सभेयं दैत्यसिंहस्य न शक्रस्य विशृङ्खला । वदद्भिरिति दैत्यस्य प्रेष्यैर्विहसिता बहु ॥ ४१
ऋतवो मूर्तिमन्तश्च उपासते अहर्निशम् । कृतापराधं सत्रासं न त्यजन्ति कथंचन ॥ ४२
तन्त्रीलयनयोपेतं सिद्धगन्धर्वकिंनरैः । सुरागमुपधाविष्टं गीयते तस्य वेश्मसु ॥ ४३
कृताकृतोपकरणैर्मित्रादिगुरुलाघवः । शरणागतसंत्यागी त्यक्तसत्यप्रतिश्रयः ॥ ४४
इति निःशेषमथवा निःशेषं केन शक्यते । तस्याविनयमाख्यातुं स्रष्टा तत्र परायणम् ॥ ४५

पुलस्त्य उवाच—

इत्युक्त्वा व्यरमद्वायुः शनैर्देवविचेष्टितम् । सुरानुवाच भगवांस्ततः स्मितमुखाम्बुजः ॥ ४६

ब्रह्मोवाच—

अवध्यस्तारको दैत्यः सर्वैरपि सुरासुरैः । यस्य वध्यः स नाद्यापि जातस्त्रिभुवने पुमान् ॥ ४७
मया स वरदानेन च्छन्दयित्वा निवारितः । तपसः सांप्रतं राजा त्रैलोक्यदहनात्मकः ॥ ४८
स तु वव्रे वधं दैत्यः शिशुतः सप्तवासरात् । स तु सप्तदिनो बालः शंकराद्यो भविष्यति ॥ ४९
तारकस्य निहन्ता स भास्कराभो भविष्यति । सांप्रतं चाप्यपत्नीकः शंकरो भगवान्प्रभुः ॥ ५०
हिमाचलस्य दुहिता या च देवी भविष्यति । तस्याः सकाशाद्यः सूनुररण्याः पावको यथा ॥ ५१
जनयिष्यति तं प्राप्य तारको न भविष्यति । मयाऽभ्युपायः कथितो यथैव हि भविष्यति ॥ ५२
शेषं चाप्यस्य विभवं विभजध्वमनन्तरम् । स्तोककालं प्रतीक्षध्वं निर्विशङ्केन चेतसा ॥ ५३

पुलस्त्य उवाच—

इत्युक्तास्त्रिदशास्तेन साक्षात्कमलयोनिना । जग्मुस्ते प्रणिपत्येशं यथायोगं दिवौकसः ॥ ५४

---

१ ग. घ. ज. °या । नख° । २ ग. °सुरेन्द्रसुत° । ३ झ. °पभोग्य° । ४ झ. ञ. °द्दा मतिभेदमिवाल्पविदः । बा° । ५ ग. वसन्त्यस्या° । ६ ग. प्रविष्टैर्ह्युपवे° । ७ ग. परम् । घ. ज. परे । ८ ग. घ. ज. °र्वार्थाः पुरस्तेऽन्योन्यभा° । ९ घ. °त्राधिगु° । १० ग. °तं सोऽप्य° । ११ ग. घ. ज. °कालेन ते सन्तो नि° । १२ ग. ज. °पत्याऽऽसन्यथा° । घ. °पत्याऽऽहुर्यथा° ।

ततो यातेषु देवेषु ब्रह्मा लोकपितामहः । निशां सस्मार भगवांस्तां देवीं पूर्वसंभवाम् ॥ ५५
ततो भगवती रात्रिरुपतस्थे पितामहम् । तां विविक्ते समालोक्य ब्रह्मोवाच विभावरीम् ॥ ५६

ब्रह्मोवाच—

विभावरि महत्कार्यं देवानां समुपस्थितम् । तत्कर्तव्यं त्वया देवि शृणु कार्यस्य निश्चयम् ॥५७
तारको नाम दैत्येन्द्रः सुरकेतुरनिर्जितः । तस्याभावाय भगवाञ्जनयिष्यति चेश्वरः ॥ ५८
सुतं स भविता तस्य तारकस्यान्तकः किल । शंकरस्याभवत्पत्नी सती दक्षसुता तु या ॥ ५९
सा पितुः कुपिता देवी कस्मिंश्चित्कारणान्तरे । भवित्री हिमशैलस्य दुहिता लोकभाविनी ॥ ६०
विरहेण हरस्तस्या मत्वा शून्यं जगत्त्रयम् । स तस्य हिमशैलस्य कन्दरे सिद्धसेविते ॥ ६१
प्रतीक्षमाणस्तज्जन्म कंचित्कालं निवत्स्यति । तयोः सुतप्ततपसोर्भविता यो महान्सुतः ॥ ६२
भविष्यति स दैत्यस्य तारकस्य विनाशिता । जातमात्रा च सा देवी स्वल्पसंज्ञेव भामिनी॥६३
विरहोत्कण्ठिता गाढं हरसंगमलालसा । तयोः सुतप्ततपसोः संयोगः स्याच्छुभावहः ॥ ६४
ततस्ताभ्यां तु जनितः स्वल्पो वाक्कलहो भवेत् । ततस्तु संशयो भूयस्तारकस्य च दृश्यते ॥६५
तयोः संयुक्तयोस्तस्मात्सुरतासक्तिकारणे । विघ्नं त्वया विधातव्यं यथा ताभ्यां तथा शृणु ६६
गर्भस्थमेव तन्मातुः स्वेन रूपेण संज्ञया । ततो विहस्य शर्वस्तां विषण्णो नर्मपूर्वकम् ॥ ६७
भर्त्सयिष्यति तां देवीं ततः सा कुपिता सती । प्रयास्यति तपश्चर्तुं ततः सा तपसा युता ॥ ६८
जनयिष्यति तं शर्वादमितद्युतिमण्डलम् । स भविष्यति हन्ताऽसौ सुरारीणामसंशयम् ॥ ६९
त्वयाऽपि दानवा देवि हन्तव्या लोकदुर्जयाः । यावत्सुरेश्वरीदेहसंक्रान्तगुणसंचया ॥ ७०
तत्संगमेन तावत्त्वं दैत्यान्हन्तुं न शक्यसे । एवं कृते तपस्तप्त्वा त्वया सर्वं करिष्यति ॥ ७१
समाप्तनियमा देवी यदा चोमा भविष्यति । तदा स्वमेव सा रूपं शैलजा प्रतिपत्स्यते ॥ ७२
तदा त्वयाऽपि सहिता भवानी सा भविष्यति । रूपांशेन तु संयुक्ता उमायास्त्वं भविष्यसि ॥
एकाऽनंशेति लोकस्त्वां वरदे पूजयिष्यति । भेदैर्बहुविधाकारैः सर्वगां कामसाधिनीम् ॥ ७४
ओंकारवक्त्रा गायत्री त्वमिति ब्रह्मवादिभिः । आक्रान्तैरूर्जिताकारा राजभिश्च महाभुजैः॥७५
त्वं भूरिति विशां माता शूद्रैः शैवेति पूजिता । क्षान्तिर्मुनीनामक्षोभ्या दया नियमिनामपि॥७६
त्वं महोपायसंदेहा नीतिर्नयविसर्पिणाम् । परिचितिस्त्वमर्थानां त्वमीहा प्राणिहृच्छया ॥ ७७
त्वं मुक्तिः सर्वभूतानां त्वं गतिः सर्वदेहिनाम् । रतिस्त्वं रक्तचित्तानां प्रीतिस्त्वं हृदि देहिनाम्
त्वं कीर्तिः सत्यभूतानां त्वं शान्तिर्दुष्टकर्मणाम् ।त्वं भ्रान्तिः सर्वभूतानां त्वं गतिः क्रतुयाजिनाम्

---

१ ग. घ. ज. स्वार्थस्य । २ ग. घ. ज. °तुर्विनिर्मितः । ३ ग. घ. ज. शुभा । ४ ग. घ. ज. सा च त्वत्कथिता । ५ घ. ज. °म् । तपस्यति स शै° । ६ ग. ज. °ल्पसर्गेऽपि भा° । घ. °ल्पस्वर्गेऽपि भा° । ७ ग. घ. °भानने । त° । ८ घ. °स्य भविष्यति । त° । ९ ग. घ. ज. वञ्चयन् । १० ग. घ. ज. तयोर्विवाहः सर्वेषां विषण्णानामपूर्वकम् । तत्त्रयि° । ११ ग. घ. ज. °या पीडा तदा देवि कर्तव्या लोकदुर्जया । या° । १२ ग. घ. ज. तदा तप्त्वा तपो माता विभूषया । स° । १३ ग. घ. ज. °प्तविषया दे° । १४ घ. °ते । न तु तत्रापि सहजाऽसौ कन्यासु भ° । १५ ग. घ. ज. °ति । देवैर्ब° । १६ ग. घ. ज. °तिर्नियमिनामसि । प° । १७ ग. घ. ज. °स्त्वनाथानां । १८ घ. मतिः । १९ ग. घ. ज. °स्त्वं कीर्तिदर्शिना° । २० ग. घ. ज. कृतभूषाणां । २१ ग. घ. ज. रात्रिः । २२ ग. घ. ज. क्रमयाजिनाम् ।

जलधीनां महावेला त्वं च लीला विलासिनाम्। संभूतिस्त्वं पदार्थानां स्थितिस्त्वं लोकपालिनाम्
त्वं कालरात्रिर्निःशेषभुवनावलिवासिनी। प्रियकण्ठग्रहानन्ददायिनी त्वं विभावरी ॥ ८१
इत्यनेकविधैर्देवी रूपैर्लोके त्वमर्चिता। ये त्वां स्तोष्यन्ति वरदे पूजयिष्यन्ति चापि ये ॥ ८२
ते सर्वकामानाप्स्यन्ति नियता नात्र संशयः। इत्युक्ता तु निशा देवी तथेत्युक्ता कृताञ्जलिः ८३
जगाम त्वरिता तूर्णं गृहं हिमगिरेर्महत्। तत्राऽऽसीनां महाहर्म्ये रत्नभित्तिसमाश्रयाम् ॥ ८४
ददर्श मेनामापाण्डुच्छविवक्त्रसरोरुहाम्। किंचित्क्षामां मुखोदग्रस्तनभारावनामिताम् ॥ ८५
महौषधिगणाबद्धमन्त्रराजनिषेविताम्। उद्वहत्कनकोन्नद्धजीवरक्षां मनोरमाम् ॥ ८६
मणिदीपगणज्योतिर्महालोकप्रकाशिते। प्रकीर्णबहुसिद्धार्थमनोज्ञपरिचारके ॥ ८७
शुद्धचीनांशुकच्छत्रभूशय्यास्तरणोज्ज्वले। धूपामोदमनोरम्ये सज्जसर्वोपयोगिके ॥ ८८
ततः क्रमेण दिवसे गते दूरं विभावरी। विजृम्भितैसुखोदर्के ततो मेनां महागृहे ॥ ८९
प्रसुप्तप्रायपुरुषे निद्राभूतोपचारके। स्फुटालोके शशभृति भ्रान्तरात्रिविहंगमे ॥ ९०
रजनीचरसंचारभूतैरावृतचत्वरे। गाढकण्ठग्रहालग्ने शुभगोष्ठजने ततः ॥ ९१
किंचिदाकुलतां प्राप्ते मेनानेत्राम्बुजद्वये। आविवेश मुखे रात्रिः सुखमद्भुतसंगमा ॥ ९२
उन्मादाय जगन्मातुः क्रमेण जठरान्तरे। आविवेशातुलं जन्म मन्यमानाँ क(त)दा तु वै ॥ ९३
अरञ्जयद्गृहं देव्या गुहारण्ये विभावरी। ततो जगत्यनिर्वाणहेतुर्हिमगिरिप्रिया ॥ ९४
ब्राह्मे मुहूर्ते सुभगे प्रासूयत गुहारणिम्। तस्यां तु जायमानायां जन्तवः स्थाणुजङ्गमाः ॥ ९५
अभवन्सुखिनः सर्वे सर्वलोकनिवासिनः। नारकाणामपि तदा सुखं स्वर्गसमं महत् ॥ ९६
अभवत्क्रूरसत्त्वानां चेतः शान्तं च देहिनाम्। ज्योतिषामपि तेजस्तु सुतरां चाभवत्तदा ॥ ९७
वनाश्रिताश्चौषधयः स्वादूनि च फलानि च। गन्धवन्ति च माल्यानि विमलं च नभोऽभवत् ॥
मारुतश्च सुखस्पर्शो दिशश्च सुमनोहराः। ऋतुभूतफलायोगपरिपाकगुणोज्ज्वला ॥ ९९
अभवत्पृथिवी देवी शालिमालाकुलाऽपि च। तपांसि दीर्घचीर्णानि मुनीनां भावितात्मनाम् ॥
तस्मिन्गतानि साफल्यं काले निर्मलचेतसाम्। विस्मृतानि च शास्त्राणि प्रादुर्भावं प्रपेदिरे १०१
प्रभावस्तीर्थमुख्यानां तदा पुण्यतमस्त्वभूत्। अन्तरिक्षेऽमराश्चाऽऽसन्विमानेषु सहस्रशः ॥ १०२
समहेन्द्रहरिब्रह्मवायुवह्निपुरोगमाः। पुष्पवृष्टिं प्रमुमुचुस्तस्मिंस्तुहिनभूधरे ॥ १०३
जगुर्गन्धर्वमुख्याश्च ननृतुश्चाप्सरोगणाः। मेरुप्रभृतयश्चापि मूर्तिमन्तो महाचलाः ॥ १०४
तस्मिन्महोत्सवे प्राप्ते दिव्याः प्रसृतपाणयः। सागराः सरितश्चैव समाजग्मुश्च सर्वशः ॥ १०५
हिमशैलोऽभवल्लोके तदा सर्वैश्चराचरैः। संसेव्यश्चाधिगम्यश्च साश्रयश्चाचलोत्तमः ॥ १०६
अनुभूतोत्सवा देवा जग्मुः स्वानालयांस्तदा। देवनागेन्द्रगन्धर्वशैललीलावतीगणैः ॥ १०७
हिमशैलसुता देवी त्वहंपूर्विकया ततः। क्रमेण बुद्धिमानीता लक्ष्मीश्चानलसैर्बुधैः ॥ १०८
क्रमेण रूपसौभाग्यप्रबोधैर्भुवनत्रये। संपूर्णलक्षणा जाता हिमालयसुता तथा ॥ १०९
एतस्मिन्नन्तरे शक्रो नारदं देवसंमतम्। देवर्षिमथ सस्मार कार्यसाधनतत्परः ॥ ११०

---

१ ग. घ. ज. °तिस्त्वत्प्रपन्नानां। झ. °तिस्त्वं प्रदानानां। २ ग. घ. ज. मेनां पाण्डुं तु फुल्लव°। ३ ग. घ. ज. °वचक्रां म°। ४ ग. घ. ज. °तमुखों°। ५ ग. घ. ज. °म्रे सुभगे पूज°। ६ ग. घ. ज. जन्मदायं। ७ ग. घ. ज. °ना क्षमातुरैः। अ°। ८ ग. °दा। प्रभूतौषधयः सर्वे स्वा°। घ. ज. °दा। प्रसूताश्चौषधयः सर्वे स्वा°। ९ झ. भूतिमन्तो। १० ग. घ. ज. °प्ररोधैः°। ११ ग. °ये। गीतवाद्यैस्तथा नृत्यैर्हिमशैलसुता स्तुता। ए°। १२ ग. घ ज. °नमस्वरः।

स तु शक्रस्य विज्ञाय काङ्क्षितं भगवांस्तदा । आजगाम मुदा युक्तो महेन्द्रस्य निवेशनम् ॥ १११
तं तु दृष्ट्वा सहस्राक्षः समुत्थाय महासनात् । यथार्हेण तु पाद्येन पूजयामास वासवः ॥ ११२
शक्रप्रणिहितां पूजां प्रतिगृह्य यथाविधि । नारदः कुशलं देवमपृच्छत्पाकशासनम् ॥
पृष्टे च कुशले शक्रः प्रोवाच वचनं प्रभुः ॥ ११३

इन्द्र उवाच—

कुशलस्याङ्कुरस्तावत्संवृत्तो भुवनत्रये । तत्फलोद्भवसंपत्तौ त्वं मया विदितो मुने ॥ ११४
वेत्स्येव तत्समस्तं त्वं तथाऽपि परिचोदितः । निर्वृतिं परमां याति निवेद्यार्थं सुहृज्जने ॥ ११५
तद्यथा शैलजा देवी योगं यायात्पिनाकिना । शीघ्रं तथोद्यमः सर्वैरस्मत्पक्षैर्विधीयताम् ॥ ११६

पुलस्त्य उवाच—

अवगम्यार्थमखिलं तंत आमन्त्र्य नारदः । शीघ्रं जगाम भगवान्हिमशैलनिकेतनम् ॥ ११७
तत्र द्वारे स विप्रेन्द्रश्चित्रवेत्रलताकुले । वन्दितो हिमशैलेन निर्गतेन पुरा मुनिः ॥ ११८
स ह प्रविश्य भवनं भुवो भूषणतां गतम् । निवेदिते स्वयं हैमे हिमशैलेन विस्तृते ॥ ११९
महासने मुनिवरो निषसादातुलद्युतिः । यथार्हमर्घ्यं पाद्यं च शैलस्तस्मै न्यवेदयत् ॥ १२०
मुनिः स प्रतिजग्राह तमर्घ्यं विधिवत्तदा । गृहीतं तु मुनिश्रेष्ठमपृच्छच्छ्लक्ष्णया गिरा ॥ १२१
कुशलं तपसः शैलः शनैः फुल्लाननाम्बुजः । मुनिरप्यद्रिराजानमपृच्छत्कुशलं तदा ॥ १२२

नारद उवाच—

अहो धर्मोचितैस्यास्य संनिवेशो महागिरेः । पृथुत्वं मनसा तुल्यं कंदराणां तवानघ ॥ १२३
गुरुत्वं ते गुणौघानां स्थावरादतिरिच्यते । प्रसन्नता च तोयस्य मुनिभ्यश्चाधिका तव ॥ १२४
न लक्षयामः शैलेन्द्र कुत्राविनयता स्थिता । नानातपोभिर्मुनिभिर्ज्वलनार्कसमप्रभैः ॥ १२५
पावनैः पावितो नित्यं त्वं कंदरसमाश्रयैः । अवमत्य विमानानि स्वर्गवासविरागिणः ॥ १२६
पितुर्गृहमि(ह इ)वाऽऽसन्त देवगन्धर्वकिंनराः । अहो धन्योऽसि शैलेन्द्र यस्य ते कंदरं हरः ॥
अध्यास्ते लोकनाथो हि शमध्यानपरायणः ॥ १२७

पुलस्त्य उवाच—

इत्युक्तवति देवर्षौ नारदे सादरं गिरा । हिमशैलस्य महिषी मेना मुनिदिदृक्षया ॥ १२८
अनुयाता दुहित्रा तु स्वल्पालिपरिचारिका । लज्जाप्रणयनम्राङ्गी प्रविवेश निकेतनम् ॥ १२९
यत्र स्थितो मुनिवरः शैलेन सहितो वशी । तं दृष्ट्वा तेजसो राशिं मुनिं शैलप्रिया तदा ॥ १३०
ववन्दे गूढवदना पाणिपद्मकृताञ्जलिः । तां विलोक्य महाभागां देवर्षिरमितद्युतिः ॥ १३१
आशीर्भिरमृतोद्गाररूपाभिस्तां व्यवर्धयत् । ततो विस्मितचित्ता तु हिमवद्गिरिपुत्रिका ॥ १३२
उदैक्षन्नारदं देवी मुनिमद्भुतरूपिणम् । एहि वत्सेति साऽप्युक्ता ऋषिणा स्निग्धया गिरा ॥ १३३
कण्ठे गृहीत्वा पितरमङ्के सा तु समाविशत् । उवाच माता तां देवीमभिवन्दय पुत्रिके ॥ १३४
भगवन्तं तपोधन्यं पतिं प्राप्स्यसि संमतम् । इत्युक्त्वा तु ततो मात्रा वस्त्रेण पिहितानना ॥ १३५
किंचित्कम्पितमूर्धा तु वाक्यं नोवाच किंचन । ततः पुनरुवाचेदं वाक्यं माता सुतां तदा ॥ १३६
वत्से वन्दय देवर्षिं ततो दास्यामि ते शुभम् । रत्नक्रीडनकं रम्यं स्थापितं यच्चिरं मया ॥ १३७

---

१ ग. घ. ज. तद्द्वारैः सशैलेन्द्रैश्चित्रधातुसमाकुलैः । व° । २ झ. °तस्वस्य । ञ. °तस्थस्य । ३ ग. घ. ज. °स्य मनसश्चा° । ४ ग. घ. ज. °नावचोभि° । ५ ख. घ. ङ. ततो ध° । ६ ग. घ. ज. दास्यति ।

१३८

इत्युक्त्वा तु ततो वेगादुद्धृत्य चरणौ तदा । ववन्दे मूर्ध्नि संधाय करपङ्कजकुड्मलम् ॥ १३८

कृते तु वन्दने तस्या माता सखिमुखेन तु । चोदयामास शनकैस्तस्याः सौभाग्यदर्शिताम् १३९

शरीरलक्षणानां च परिज्ञानाय कौतुकात् । स्त्रीस्वभावात्स्वदुहितुश्चिन्तां हृदि समुद्वहन् ॥ १४०

ज्ञात्वा तदिङ्गितं शैलो महिष्या हृदयेन तु । अनुदीर्णाकृतिर्मेने रम्यमेतदुपस्थितम् ॥ १४१

चोदितः शैलमहिषीसख्या मुनिवरस्ततः । स्मिताननो महाभागो वाक्यं प्रोवाच नारदः ॥ १४२

नारद उवाच—

न जातोऽस्याः पतिर्भद्रे लक्षणैश्च विवर्जितः । उत्तानहस्ता सततं चरणैर्व्यभिचारिभिः ॥ १४३

सुच्छायाऽस्या भविष्येयं किमन्यद्बहु भाष्यते ॥ १४४

पुलस्त्य उवाच—

श्रुत्वैतत्संभ्रमाविष्टो ध्वस्तधैर्यो हिमाचलः । नारदं प्रत्युवाचाथ साश्रुकण्ठो महागिरिः ॥ १४५

हिमवानुवाच—

संसारस्यातिदोषस्य दुर्विज्ञेया गतिर्यतः । सृष्ट्या चावश्यभाविन्या केनाप्यतिशयात्मना ॥१४६

कर्त्रा प्रणीता मर्यादा स्थिता संसारिणामियम् । यो जायते हि यद्बीजाज्जने(नि)तुः सोऽर्थसाधकः

जने(नि)ता अपि जौतस्य न कश्चिदिति च स्फुटम् । स्वकर्मणैव जायन्ते विविधा भूतजातयः ॥

अण्डजो ह्यण्डजाज्जातः पुनर्जायेत मानवः । मानुषोऽपि सरीसृप्यां मानुषत्वेन जायते ॥ १४९

तत्रापि जातौ श्रेष्ठायां धर्मस्योत्कर्षणेन तु । अपुत्रजन्मनः शेषाः प्राणिनः समवस्थिताः ॥१५०

मनुजास्तत्र सुतैस्तरां नयेनं सह धर्मिणः । क्रमेण(ऽऽश्रमसंप्राप्तिर्ब्रह्मचारिव्रतादनु ॥ १५१

तस्य कर्तुर्नियोगेन संसारो येन वर्धितः । संसारस्य हि नोत्पत्तिः सर्वे स्युर्यदि निर्स्पृहाः १५२

कर्त्रा तु शास्त्रेषु सदा सुतलाभः प्रशंसितः । प्राणिनां मोहनार्थाय नरकत्राणकारणात् ॥ १५३

स्त्रिया विरहिता सृष्टिर्जन्तूनां नोपपद्यते । स्त्रीजातिस्तु प्रकृत्यैव कृपणा दैन्यभागिनी ॥ १५४

शास्त्रालोचनसामर्थ्याद्दूषितं तासु कर्तृणा । तस्यां चोपरि साऽवज्ञा भवेदिति च वेधसा ॥१५५

शास्त्रेषूक्तमसंदिग्धं बहुद्वारं महाफलम् । दशपुत्रसमा कन्या यां स्याच्छीलवती शुभा ॥ १५६

वाक्यमेतत्फलभ्रष्टं पुंसां ग्लानिकरं परम् । कन्या हि कृपणा शोच्या पितुर्दुःखविवर्धिनी ॥१५७

याऽपि स्यात्पूर्णसर्वार्था पतिपुत्रसमन्विता । किं पुनर्दुर्भगा हीना पतिपुत्रधनादिभिः ॥ १५८

त्वं चोक्तवान्सुताया मे शरीरे दोषसंग्रहम् । अहो मुह्यामि शुष्यामि *ग्लामि सीदामि नारद ॥

अयुक्तमपि वक्तव्यमप्राप्यमपि सांप्रतम् । अनुग्रहाय मे छिन्धि दुःखं कन्याश्रयं मुने ॥ १६०

परिच्छिन्नेऽप्यसंदिग्धे मनः परिभवाश्रयात् । तृष्णा मुष्णाति निष्णातं फललोभाश्रयात्पुनः ॥

स्त्रीणां हि परमं जन्म कुलानामुभयात्मनाम् । इहामुत्र सुखायोक्तं सत्पतिप्राप्तिसंज्ञितम् ॥ १६२

दुर्लभत्वात्पतिः स्त्रीणां विगुणोऽपि पतिः किल । न प्राप्यते विना पुण्यैः पतिर्नार्या कदाचन ॥

यतो निःसाधनो धर्मः परिणामोत्थिता रतिः । धनं जीवितपर्यन्तं पतौ ना(तिर्ना)र्याः प्रतिष्ठितम्

* आर्षः शब्लुक् ।

१ ग. °श्चिह्नं दर्शयितुं तदा । ज्ञा° । २ घ. ज. °दीर्णो हृदि मुने । ३ ज. जातश्च । ४ झ. °तरा न° । ५ ग. घ. °न गृहधर्मिणाम् । क्र° । ज. °न सहधर्मिणाम् । क्र° । ६ ग. घ. ज. °णाऽऽक्रम° । ७ क. निग्रहात् । ८ झ. °स्यां नोप° । ९ झ. °रिभाव° । १० झ. ज. याऽपि स्याच्छीलवर्जिता । वा° । ११ ग. घ. ज. °निप्रकोपनम् । १२ घ. ज. ततो । १३ ग. घ. ज. ततो ।

निर्धनो दुर्मुखो मूर्खः सर्वलक्षणवर्जितः । दैवतं परमं नार्याः पतिरुक्तः सदैव हि ॥ १६५
त्वया देवर्षिणा प्रोक्तं न जातोऽस्याः पतिः किल । एतद्दौर्भाग्यमतुलमसंख्यं च दुरुद्वहम् ॥ १६६
चराचरे भूतसर्गे चिन्ता सा व्यापिनी मुने । स न जात इति श्रुत्वा ममेदं व्याकुलं मनः ॥ १६७
मनुष्यदेवजातीनां शुभाशुभनिवेदकम् । लक्षणं हस्तपादाभ्यां लक्षणं विहितं किल ॥ १६८
सेयमुत्तानहस्तेति त्वयोक्ता मुनिपुंगव । उत्तानहस्तता प्रोक्ता याचतामेव नित्यता(का) ॥ १६९
शुभोदयानां धन्यानां न कदाचित्प्रयच्छताम् । सुच्छायया ऽस्याश्चरणौ त्वयोक्तौ व्यभिचारिणौ
तत्रापि श्रेयसी ह्याशा मुने न प्रतिभाति नः । शरीरावेक्षणाच्चान्ये पृथक्फलनिवेदिनः ॥ १७१

पुलस्त्य उवाच—

इत्युक्त्वा विरते शैले महादुःखविचारिणि । स्मितपूर्वमुवाचेदं नारदो देवपूजितः ॥ १७२

नारद उवाच—

हर्षस्थाने च महति त्वया दुःखं निरुच्यते । अपरिच्छिन्नवाक्यार्थे मोहं यासि महागिरे ॥ १७३
इमां शृणु गिरं मत्तो रहस्यपरिनिष्ठिताम् । समाहितो महाशैल मयोक्तस्य विचारिणीम् ॥ १७४
न जातोऽस्याः पतिर्देव्या यन्मयोक्तं हिमाचल । स न जातो महादेवो भूतभव्यभवोद्भवः १७५
शरण्यः शाश्वतः शास्ता शंकरः परमेश्वरः । ब्रह्मविष्ण्विन्द्रमुनयो गर्भजन्मजरार्दिताः ॥ १७६
तस्य ते परमेशस्य सर्वे क्रीडनका गिरे । ब्रह्माण्डतस्तदिच्छातः संभूतो भुवनप्रभुः ॥ १७७
विष्णुर्युगे युगे जातो नानाजातिर्महातनुः । मन्यसे मायया जातं विष्णुं चापि युगे युगे ॥ १७८
आत्मनो न विनाशोऽस्ति स्थावरान्तेऽपि भूधर । संसारे जायमानस्य म्रियतो वाऽपि देहिनः ॥
नश्यते देह एवात्र नाऽऽत्मनो नाश उच्यते । ब्रह्मादिस्थावरान्तोऽयं संसारो यः प्रकीर्तितः ॥
स जन्ममृत्युदुःखार्तो ह्यनिशं परिवर्तते । महादेवोऽचलः स्थाणुर्न जातोऽजनकोऽजरः ॥ १८१
भविष्यति पतिः सोऽस्या जगन्नाथो निरामयः । यदुक्तं च मया देवी लक्षणैर्वर्जिता तव ॥ १८२
शृणु तस्यापि वाक्यस्य सम्यक्त्वेन विचारणाम् । लक्षणं दैवको ह्यङ्कः शरीरावयवाश्रयः १८३
स चाऽऽयुर्धनसौभाग्यपरिणामप्रकाशकः । अनन्तस्याप्रमेयस्य सौ(सु) भगत्वस्य भूधर ॥ १८४
नैवाङ्को लक्षणाकारः शरीरे संविधीयते । अतोऽस्या लक्षणं गात्रे शैल नास्ति महामते १८५
यच्चाहमुक्तवानस्या उत्तानकरता सदा । उत्तानो वरदः पाणिरेष देव्याः सदैव तु ॥ १८६
सुरासुरमुनिव्रातवरदात्री भविष्यति । यच्च प्रोक्तं मया पादौ स्वच्छायौ व्यभिचारिणौ ॥ १८७
मत्तः शृणु त्वमस्यापि व्याख्योक्तिं शैलसत्तम । चरणौ पद्मसंकाशौ स्वच्छावस्या नखोज्ज्वलौ
सुरासुराणां नमतां किरीटमणिकान्तिभिः । विचित्रवर्णैः पश्यद्भिः स्वां छायां प्रतिबिम्बितैः ॥
एषा भार्या जगद्भर्तुर्वृषाङ्कस्य महीधर । जननी सर्वलोकस्य संभूता भूतभाविनी ॥ १९०
सेयं पावनायैव त्वत्क्षेत्रे पावनद्युतिः । तद्यथा शीघ्रमेवैषा योगं यायात्पिनाकिनः ॥ १९१
क्रियां विधेयं विधिवत्त्वया शैलेन्द्रसत्तम । अस्त्यत्र हि महत्कार्यं देवानां हिमभूधर ॥ १९२

पुलस्त्य उवाच—

एवं श्रुत्वा तु शैलेन्द्रो नारदात्सर्वमेव हि । स्वमात्मानं पुनर्जातं मेने मेनापतिस्तदा ॥ १९३

१ ग. घ. ज. °तिरेव स° । २ ग. घ. ज. °तमार्गे । ३ ग. घ. ज. °खान्तो ह्य° । ४ ग. घ. ज. °तिः सौम्य ज° । ५ ग. °णौ । तस्याः श्रृणु मयाऽत्रापि वाण्योक्तिं । घ. ज. °णौ । तस्याः शृणु मयाऽत्रापि वाचोक्तिं । ६ ग. घ. ज. °वर्णैर्हो- स्यद्भिः । ७ ग. घ. च. °ति विस्मितैः ।

उवाच चापि संहृष्टो नारदं तु हिमाचलः । दुस्तरान्नरकाद्घोरादुद्धृतोऽस्मि त्वया विभो ॥ १९४
पातालादहमुद्धृत्य सप्तलोकाधिपः कृतः । हिमाचलोऽस्मि विख्यातस्त्वया मुनिवराधुना॥ १९५
हिमाचलाच्छतगुणां प्रापितोऽस्मि समुन्नतिम् । आनन्ददिवसाहारि हृदयं मे महामुने ॥ १९६
नाध्यवंस्यति कृत्यानां विभागप्रविचारणाम् । भवद्विधानां नियतममोघं दर्शनं मुने ॥ १९७
भवद्भिरेव हि प्रोक्तं निवा(रा)सायाऽऽत्मरूपिणाम् । मुनीनां देवतानां च स्वयं कृत्वा तु कल्मषम्
तथाऽपि वस्तुन्येकस्मिन्नाज्ञा मे संप्रदीयताम् । इत्युक्तवति शैलेन्द्रे स तदा हर्षनिर्भरः ॥ १९९
उवाच नारदो वाक्यं कृतं सर्वमिति प्रभो । सुरकार्ये स एवार्थस्त्वयापि सुमहत्तरः ॥ २००
इत्युक्त्वा नारदः शीघ्रं जगाम त्रिदिवं ततः । स गत्वा देवभवनं महेन्द्रं संददर्श ह ॥ २०१
ततोऽनुरूपे स मुनिरुपविष्टो महासने । पृष्टः शक्रेण प्रोवाच हिमजासंश्रयां कथाम् ॥ २०२

नारद उवाच[२]—

यन्मह्यमुक्तं कर्तव्यं तन्मया कृतमेव हि । किं तु पञ्चशरस्येषुगोचरं[३] समुपस्थितम् ॥ २०३
इत्युक्तो देवराजस्तु मुनिना कार्यदर्शिना । चूताङ्कुरास्त्रं सस्मार भगवान्पाकशासनः ॥ २०४
स स्मृतस्तु तदा क्षिप्रं सहस्राक्षेण धीमता । उपतस्थे रतियुतः सविलासो झषध्वजः ॥
प्रादुर्भूतं च तं दृष्ट्वा शक्रः प्रोवाच मन्मथम् ॥ २०५

शक्र उवाच—

उपदेशेन बहुना किं त्वां प्रति रतिप्रिय । मनोभवोऽसि तेन त्वं वेत्सि भूतमनोगतम् ॥ २०६
तद्यथाऽनुक्रमेण त्वं कुरु नाकसदां प्रियम् । शंकरं योजय क्षिप्रं गिरिपुत्र्या मनोभव ॥ २०७
संयुक्तो मधुनाऽनेन गच्छ रत्या सहायवान् । इत्युक्तो मदनस्तेन शक्रेण स्वार्थसिद्धये ॥
प्रोवाच पञ्चबाणोऽथ वाक्यं भीतः शतक्रतुम् ॥ २०८

काम उवाच—

अनया देव सामग्र्या मुनिदानवभीमया । दुःसाध्यः शंकरो देवः किं न वेत्सि जगत्प्रभो २०९
तस्य देवस्य वेत्सि त्वं कारणं पदमव्ययम् । प्रायः प्रसादे कोपेऽपि सर्वं हि महतां महत् २१०
सर्वोपभोगसारं हि सौन्दर्यं स्वर्गसंभवम् । विशेषं काङ्क्षतां(मा) शक्र सामान्यं[४]द्धंशितं फलात् ॥
श्रुत्वैतद्वचनं शक्रस्तमुवाचामरैर्युतः ॥ २११

शक्र उवाच—

वयं प्रमाणं ते तत्र रतिकान्त न संशयः । संदंशेन विना शक्तिरयस्कारस्य नेष्यते ॥ २१२
कस्यचिच्च क्वचिद्दृष्टं सामर्थ्यं न तु सर्वतः । इत्युक्तः प्रययौ कामः सखायं मधुमाश्रितः ॥ २१३
रतियुक्तो जगामाऽऽशु प्रस्थं तुहिनभूभृतः । स तु प्राप्याकरोच्चिन्तां कार्यस्योपायपूर्विकाम् २१४
महात्मानो हि निष्कम्पा[५] मनस्तेषां सुदुर्जयम् । तदादावेव संक्षोभ्य नित्यं तस्य जयो भवेत् ॥
संसिद्धिः प्रायशश्चैव पूर्वं संशोध्य मानसम् । कथमेवंविधैर्भावैर्द्वे(र्दो)षानुगमनं विना ॥ २१६
[६]क्रोधक्रूरतरासङ्गाद्भीषणेर्ष्यामहासखी । चापल्यान्मूर्ध्नि विध्वस्तधैर्याधारमहाबला ॥ २१७
तामस्य विनियोक्ष्यामि मनसो विकृतिं पुरः । पिधाय धैर्यद्वाराणि संतोषमपकृष्य च ॥ २१८

---

१ ग. घ. ज. °वत्स्यति हृयानां विभागप्रविधारिणा° । २ ग. घ. ज. °च—समं भूय तु कर्तव्यं यन्म° । ३ ग. घ. ज. °चरो हिमवान्स्थितः । इ° । ४ ग. ज. °न्यादमलं फ° । ५ ग. घ. ज. °नो त्रिनिष्कम्प्या मं° । ६ ज. क्रोधः क्रू° ।

अवगन्तुं हि मां तत्र न कश्चिदिह पण्डितः । विकल्पमात्रसंस्थाने विरूपाक्षं मनोभवः ॥ २१९
प्रविश्याथ क्रियारम्भी गम्भीरावर्तदुस्तरः । भविष्यामि हरस्याहं तपस्थस्य स्थिरात्मनः २२०
इन्द्रियग्राममावृत्य रम्यसाधनसंविधिः । चिन्तयित्वेति मदनो भूतभर्तुस्तदाश्रमम् ॥ २२१
जगाम जगतीसारं सरलद्रुमवेदिकम् । शान्तसत्त्वसमाकीर्णमचलं प्राणिसंकुलम् ॥ २२२
नानापुष्पलताजालं सानुसंस्थगणेश्वरम् । निर्व्यग्रवृषभाघुष्टं नीलशाद्वलसानुकम् ॥ २२३
तत्रापश्यत्त्रिनेत्रस्य रम्यं कंचिद्द्वितीयकम् । वीरकं वीरलोकेशमीशानसदृशद्युतिम् ॥ २२४
पक्वकुङ्कुमकिञ्जल्कपुञ्जपिङ्गजटासटम् । वेत्रपाणिं तमव्यग्रमुग्रताभद्रभूषणम् ॥ २२५
ततो निमीलितोन्निद्रपद्मपत्रान्तलोचनम् । प्रेक्षमाणमृजुस्थानं नासावंशाग्रगोचरम् ॥ २२६
अतीवरम्यसिंहेन्द्रचर्मलम्बोत्तरीयकम् । श्रवणाहिफणोन्मुक्तनिःश्वासानलपिङ्गलम् ॥ २२७
प्रेङ्खत्कपोलपर्यन्तचुम्बिलम्बिजटाचयम् । कृतवासुकिपर्यन्तनाभिमूलनिवेशितम् ॥ २२८
ब्रह्माञ्जलिस्थिरा(रं)साग्रनिबद्धोरगभूषणम् । ददर्श शंकरं कामः क्रमप्राप्तान्तिकः शनैः ॥२२९
ततो भ्रमरहुंकारमालम्ब्य द्रुमसानुकम् । प्रविष्टः कर्णरन्ध्रेण भवस्य मदनो मनः ॥ २३०
शंकरस्तमथाऽऽकर्ण्य मधुरं मदनाश्रयम् । सस्मार दक्षदुहितां दयितां रन्तुमानसः ॥ २३१
ततः सा तस्य शनकैस्तिरोधायातिनिर्मला(म्) । समाधिभावना(नां) तस्थौ लक्ष्यप्रत्यक्षरूपिणी
ततस्तन्मयतां यातः प्रत्यूहपिहिताशयः । विवेश विबुधाधीशो विकृतिं मदनात्मिकाम् ॥ २३३
ईषत्क्रोधसमाविष्टो धैर्यमालम्ब्य धूर्जटिः । निरस्य मदनं स्थित्वा योगमायासमावृतः ॥ २३४
स तया माययाऽऽविष्टो जज्वाल मदनस्ततः । इच्छाशरीरो दुर्ज्ञेयो दोषावासो महाशयः २३५
हृदयान्निर्गतः सोऽथ वासनाव्यसनात्मकः । बहिःस्थलं समासाद्य उपतस्थे झषध्वजः ॥ २३६
अनुयातो हि साह्वेन(?) मित्रेण मधुना सह । सहकारतरोर्दृष्ट्वा मन्दमारुतनिर्धुतम् ॥ २३७
स्तवकं मदनो रम्यं हरवक्षसि सत्वरम् । मुमोच मोहनं नाम मार्गणं मकरध्वजः ॥ २३८
स तस्य हृदये शुद्धे नामशाली महाशरः । पपात परुषः प्रांशुः पुष्पबाणो विमोहनः ॥ २३९
ततः करणसंदोहे विद्धे तु हृदये भवः । बभूव भूतपोऽकम्पोऽधैर्योऽपि मदनोन्मुखः ॥ २४०
ततः प्रभुत्वाद्भावानामावेशं स्वमपश्यत । वाक्यं बहु बभाषेऽथ प्रत्यूहप्रसवात्मकम् ॥ २४१
ततः कोपानलोद्भूतघोरहुंकारभीषणे । बभूव वदने नेत्रं तृतीयमनलाकुलम् ॥ २४२
रुद्रस्य रौद्रवपुषो जगत्संहारभैरवम् । तदन्तिकस्थे मदने व्यस्फारयत धूर्जटिः ॥ २४३
तन्नेत्रविस्फुलिङ्गेन क्रोशतां नाकवासिनाम् । गमितो भस्मतां तूर्णं कंदर्पः कामदर्पकः ॥ २४४
स तु तं भस्मसात्कृत्वा हरनेत्रोद्भवोऽनलः । व्यजृम्भत जगद्दग्धुं ज्ञात्वा हुंकारघस्मरम् ॥२४५
ततो भवो जगद्धेतोर्व्यभजज्जातवेदसम् । सहकारे मधौ चन्द्रे सुमनःस्वपरेष्वपि ॥ २४६
भृङ्गेषु कोकिलास्ये च विभागेन स्मरानलम् । स बाह्याभ्यन्तरे विद्धो हरोऽथ स्मरमार्गणैः २४७
भागेष्वेतेषु संविष्टं वीक्षतीव हुताशनम् । विभक्तं लोकसंक्षोभकरं दुर्वारजृम्भितम् ॥ २४८

---

१ ग. घ. ज. °गन्तुमिमं त° । २ ग घ. ज °नं नासावंशाग्रलोचनम् । प्रविवेश स सिंहेन्द्रचर्मलम्बोदरीयकम् । रहस्यामिव तस्याहं रहस्यस्य स्थि° । ३ ग. घ. ज. °त्य यस्य साधनसंवृतः । चि° । ४ ग. घ. ज. °चित्तृती° । ५ ग. घ. ज. °म्बितं सज° । ६ घ. °प्रपीनोन्नतविभू° । ज. °प्रपीनोन्नतपयोधरम् । ७ ग. घ. ज. °लम्ब्याऽऽश्रममात्रक° । ८ ग. घ. ज. °यितारक्तमा° । ९ झ. °तः शिवस्य । १० ग. घ. ज. °न्निर्दयः सो° । ११ ग. घ. °संदेहे । १२ ग. घ. ज. °खः । उत्पयत्कातुरो नाम आयासः स्वयमुच्यते । वा° । १३ घ. ज. °मपराकु° । १४ घ. °णैः । रागे° ।

तत्प्राप्तिस्नेहसंपूर्णकामेन हृदये किल । ज्वलन्नहर्निशं भीमो दुःखस्य वशगोऽभवत् ॥ २४९
विलोक्य हरहुंकारज्वालाभस्मीकृतं स्मरम् । विललाप रतिः क्रूरं बन्धुना मधुना सह ॥ २५०
ततो विलप्य बहुशो मधुना परिसान्त्विता । जगाम शरणं देवमिन्दुमौलिं त्रिलोचनम् ॥ २५१
भृङ्गानुयातां संगृह्य पुष्पितां सहकारजाम् । लतां पत्रद्रुमाच्छन्नां जातां परभृतां सखीम् ॥ २५२
निबध्य तु जटाजूटं कुटिलैरलकै रतिः । उद्धृत्य(द्धूल्य) गात्रं शुभ्रेण हृद्येन स्मरभस्मना ॥ २५३
जानुभ्यामवनीं गत्वा प्रोवाचेन्दुविभूषणम् ॥ २५४

रतिरुवाच—

नमः शिवायास्तु मनोमयाय जगन्मयायाद्भुतवर्त्मने नमः ।
नमः शिवायास्तु सुरार्चिताय तुभ्यं सदा भक्तकृपापराय ॥ २५५
नमो भवायास्तु भवोद्भवाय नमोऽस्तु ते ध्वस्तमनोभवाय ।
नमोऽस्तु मायागहनाश्रयाय नमो निसर्गामलभूषिताय ॥ २५६
नमोऽस्त्वमेयाय गुणायनाय नमोऽस्तु सिद्धाय पुरातनाय ।
नमः शरण्याय नमो गुणाय नमोऽस्तु ते भीमगणानुगाय ॥ २५७
नमोऽस्तु नानाभुवनर्द्धिकर्त्रे नमोऽस्तु भक्ताभिमतप्रदाय ।
नमोऽथ कर्मप्रसवे नमः सदा अनन्तरूपाय सदैव तुभ्यम् ॥ २५८
असह्यकोपाय सुदेव तुभ्यं शशाङ्कचिह्नाय नमोऽस्तु तुभ्यम् ।
असीमलीलापरमस्तुताय वृषेन्द्रयानाय पुरान्तकाय ॥ २५९
नमः प्रसिद्धाय महौषधाय नमोऽस्तु नानाविधरूपकाय ।
नमोऽस्तु कालाय नमः कलाय नमोऽस्तु ते कालकलातिगाय ॥ २६०
चराचराचारविचार्यवर्यमाचार्यमुत्प्रेक्षितभूतसर्गम् ।
त्वामिन्दुमौलिं शरणं प्रपन्ना प्रियाप्तयेऽहं सहसा महेशम् ॥ २६१
प्रयच्छ मे कामयशःसमृद्धिं पतिं विना तं भगवन्न जीवे ।
प्रियः प्रियायाः पुरुषेश नित्यस्ततोऽपरः को भुवनेष्विहास्ति ॥ २६२
प्रभुः प्रभावी प्रभवः प्रियाणां प्रवीणपर्यायपरापरं तपः ।
त्वमेव नाथो भुवनस्य गोप्ता दयालुरुन्मीलितभक्तभीतिः ॥ २६३

पुलस्त्य उवाच—

इत्थं स्तुतः शंकर इन्दुमौलिर्वृषाकपिर्मन्मथकान्तया तु ।
तुतोष दोषाकरखण्डधारी उवाच चैनां मधुरं निरीक्ष्य ॥ २६४

श्रीशंकर उवाच—

भविष्यति च कामोऽयं काले कान्तेऽचिरादथ । अनङ्ग इति लोकेषु स विख्यातिं गमिष्यति ॥

पुलस्त्य उवाच—

इत्युक्ता शिरसाऽऽवन्द्य गिरीशं कामवल्लभा । जगामोपवनं चान्यद्रतिस्तुहिनपर्वते ॥ ६६

---

१ ग. भक्तिप्रियाप° । घ. ज. भक्तिक्रियाप° । २ घ. °स्तु ते कामकलातिगाय । ३ ग. घ. ज. °य सर्वार्यार्थिमहार्द्धिकाय । ४ ग. घ. °वनायिक° । ५ ख. ग. ङ. सदैव । ६ ग. ज. °य नमो भवाय । घ. °य मनोभवाय । ७ घ. ज. °वर्यं समस्तमुग्धेक्षितभूतसङ्गम् । ८ ग. घ. ज. प्रियं विना तं पु° ।

रुरोद चापि बहुशो दीना रम्ये स्थले स्थले । मरणव्यवसायाऽपि निवृत्ता च शिवाज्ञया २६७
अथ नारदवाक्येन चोदितो हिमभूधरः । कृताभरणसंस्कारां कृतकौतुकमङ्गलाम् ॥ २६८
स्वर्गपुष्पकृतापीडां शुभ्रचीनांशुकाम्बराम् । सखीभ्यां संयुतां शैलो गृहीत्वा स्वसुतां ततः २६९
जगाम सुभगे योगे तदा संपूर्णमानसः । स काननान्युपाक्रम्य वनान्युपवनानि च ॥ २७०
ददर्श रुदतीं नारीमप्रतर्क्यां महौजसम् । न रूपेणेदृशी लोके रम्येषु वनसानुषु ॥ २७१
कौतुकेन परामृष्टस्तां दृष्ट्वा रुदतीं गिरिः । उपसृप्य ततस्तस्या निकटं सोऽप्यपृच्छत ॥ २७२

हिमवानुवाच—

काऽसि कस्यासि कल्याणि किमर्थं चापि रोदिषि । नैतदल्पमहं मन्ये कारणं लोकसुन्दरि २७३
सा तस्य वचनं श्रुत्वा उवाच मधुना सह । रुदती शोकवचनं श्वसती दैन्यवर्धनम् ॥ २७४

रतिरुवाच—

कामस्य दयितां भार्यां रतिं मां विद्धि सुव्रत । गिरावस्मिंश्च भगवान्गिरीशस्तपसि स्थितः २७५
तेन प्रत्यूहरुष्टेन क्रोधाद्विस्फार्य लोचनम् । विमुच्याग्निशिखाज्वालां कामो भस्मावशेषितः २७६
अहं तु शरणं याता तं देवं भयविह्वला । स्तुतवत्यथ संतुष्टस्ततो मां गिरिशोऽब्रवीत् ॥ २७७
तुष्टोऽहं कामदयिते कामोत्पत्तिर्भविष्यति । त्वत्स्तुतिं चाप्यधीयानो नरो भक्त्या मदाश्रयः २७८
लप्स्यते काङ्क्षितं कामं निवर्त मरणादपि । प्रतीक्षन्ती च तद्वाक्यमाशावेशवशादहम् ॥ २७९
शरीरं परिरक्षिष्ये किंचित्कालं महाद्युते । इत्युक्तस्तु तया रत्या शैलः संभ्रमभीषणः ॥ २८०
पाणावादाय दुहितां गन्तुमैच्छत्स्वकं पुरम् । भाविनोऽवश्यभावित्वाद्भवित्री भूतभाविनी ॥
लज्जमाना सखिमुखैरुवाच पितरं गिरिम् ॥ २८१

शैलपुत्र्युवाच—

दुर्भगेण शरीरेण किं ममानेन कारणम् । कथं च तादृशं प्राप्तं(सः) सुखं वा मे पतिर्भवेत् ॥ २८२
तपोभिः प्राप्यतेऽभीष्टं नासाध्यं तु तपस्यतः । दुर्भगत्वं वृथा लोको वहते सति साधने ॥ २८३
तपसि भ्रष्टसंदेहा ततः स्वार्थजिगीषया । एवं तपः करिष्येऽहं गच्छेत्युक्तवतीं सुताम् ॥
उवाच वाचा शैलेन्द्रो गद्गदस्वरवर्णया ॥ २८४

हिमवानुवाच—

उ मेति चपला पुत्रि न क्षमं तावकं वपुः । सोढुं क्लेशानुरूपस्य तपसः सौम्यदर्शने ॥ २८५
भविष्यन्ति च कार्याणि पदार्थानि(नां) सदैव तु । भाविनोऽर्था भवन्त्येवं बहवोऽनिच्छतोऽपि ह
तस्मान्न तपसा तेऽस्ति बाले किंचित्प्रयोजनम् । भवनं चैव गच्छामि चिन्तयिष्यामि तत्र वै ॥
इत्युक्ता तु यदा नैव गृहमन्वेति शैलजा । ततोऽद्रिश्चिन्तयाऽऽविष्टः स्वसुतां प्रशशंस च ॥ २८८
ततोऽन्तरिक्षे दिव्या च वागभूद्भुवनत्रये । उ मेति चपला पुत्रि त्वयोक्ता तनया यतः ॥ २८९
उमेति नाम तेनास्या भुवनेषु भविष्यति । सिद्धिर्मूर्तिमती त्वेषा साधयिष्यति चिन्तितम् ॥ २९०
इति श्रुत्वा तु वचनं स तदाऽऽकाशमण्डले । अनुज्ञाय स तां शैलो जगामाऽऽशु स्वमन्दिरम् ॥

---

१ ग. घ. ज. °न्यदर्शने । २ ग. घ. कामोऽयं ते भवि° । ३ ग. घ. °रिष्यामि यदहं प्राप्यं दुर्लभात् । भविष्यामि न संदेहो नियमैः शोषये तनुम् । इत्युक्तः शैलराजस्तु दुहितृस्नेहविक्लवः । उ° । ४ ग. घ. ज. च परा पु° । ५ झ. °व दृष्टेनान्विच्छ° । ६ ग. च परा । घ. परमा ।

पुलस्त्य उवाच—

शैलजाऽपि ययौ शैलमगम्यमपि दैवतैः । सखीभ्यामनुयाता तु नियता नगराजजा ॥ २९२

शृङ्गं हिमवतः पुण्यं नानाधातुविभूषितम् । दिव्यपुष्पलताकीर्णं भ्रमरोद्घुष्टपादपम् ॥ २९३

दिव्यप्रस्रवणोपेतं मनोरथशतोज्ज्वलम् । नानापक्षिसमायुक्तं चक्रवाकोपशोभितम् ॥ २९४

जलजस्थलजैः पुण्यैः प्रफुल्लैरुपशोभितम् । चित्रकंदरसंगुप्तं दिव्यगेहसमन्वितम् ॥ २९५

नानाविहंगसंघुष्टं कल्पपादपसंकटम् । तत्रापश्यन्महाशाखं शाखिनं हरितच्छदम् ॥ २९६

सर्वर्तुकुसुमोपेतं चक्रवाकोपशोभितम् । नानापुष्पशताकीर्णं नानाविधफलान्वितम् ॥ २९७

त्यक्तं सूर्यस्य रुचिभिर्भिन्नसंहतपल्लवम् । तत्राम्बराणि संत्यज्य भूषणानि च शैलजा ॥ २९८

संवीता वल्कलैर्दिव्यैर्दर्भनिर्मितमेखला । त्रिः स्नाता पाटलाहारा बभूव शरदां शतम् ॥ २९९

शतमेकेन पर्णेनावर्तयत हिमात्मजा । निराहारा शतं साऽभूत्समानां तपसो निधिः ॥ ३००

तत उद्वेजिताः सर्वे प्राणिनस्तपसोऽग्निना । ततः सस्मार भगवान्मुनीन्सप्त शतक्रतुः ॥ ३०१

ते समागम्य मुदिताः सर्वे समुदितास्तथा । पूजितास्ते महेन्द्रेण पप्रच्छुस्तं प्रयोजनम् ॥ ३०२

ऋषय ऊचुः—

किमर्थं हि सुरश्रेष्ठ संस्मृतास्तु वयं त्वया ॥ ३०३

पुलस्त्य उवाच—

शक्रः प्रोवाच शृण्वन्तु भगवन्तः प्रयोजनम् । हिमाचले तपो घोरं तप्यते भूधरात्मजा ॥ ३०४

तस्या(द)भिमतयोगेन भवन्तः कर्तुमर्हथ । तपःसमापनं देव्या जगदर्थे त्वरान्विताः ॥ ३०५

पुलस्त्य उवाच—

तथेत्युक्त्वा तु तं शैलं सिद्धसंघातसेवितम् । ऊचुरागम्य मुनयस्तामथो मधुराक्षरम् ॥ ३०६

ऋषय ऊचुः—

पुत्रि कस्ते व्यवसितः कामः कमललोचने ॥ ३०७

पुलस्त्य उवाच—

तानुवाच ततो देवी सादरं गौरवान्मुनीन् ॥ ३०८

देव्युवाच—

तपस्यन्तो महाभागाः प्रोह्य(ज्झय) मौनं भवादृशाम् । वन्दनाय नियुक्ता धीर्याचयत्यविकल्पिता ॥

सुप्रसन्नमुखा यूयं गृहीत्वाऽऽसनमादितः । उपविष्टाः श्रमं मुक्त्वा ततः पृच्छथ मामनु ॥ ३१०

पुलस्त्य उवाच—

इत्युक्तास्ते ततश्चक्रुस्तत्राऽऽसनपरिग्रहम् । सा च तान्विधिवत्पूर्वं पूजयित्वा विधानतः ॥ ३११

उवाचाऽऽदित्यसंकाशान्मुनीन्सप्त ऋषीञ्शनैः । त्यक्त्वा व्रतात्मकं मौनं नत्वा च विधिवन्मुनीन्

भगवन्तोऽपि मौनान्ते तस्याः सप्तर्षयोऽप्यथ । गौरवाधारतां प्राप्तां प्रपच्छुस्तां पुनस्तथा ॥ ३१३

साऽपि गौरवगर्भेण मनसा चारुहासिनी । मुनीन्सर्वानथाऽऽलोक्य प्रोवाचापोह्य वाग्यमम् ३१४

---

१ ग. घ. ज. शुद्धं । २ ग. घ. ज. °ष्पफलाकी° । ३ ख. °म् । दिव्यकं° । ४ घ. ज. °म्। विहंगसंघसंघुष्टं । ५ क. ख. घ. ङ. च. ज. °न जीर्णेन पर्णेनावर्तयत्तदा । नि° । ६ क. °स्तदा । पू° । ग. घ. °स्ततः । पू° । ७ ग. घ. ज. प्रोच्यमाना भवादृशाः । व° । ८ ग. घ. ज. °क्ताज्ञी याचे° । ९ ग. घ. ज. °नं जग्राह वि° । १० ग. विविधान्मु° । ११ घ. °वाच हितवाङ्मयम् ।

देव्युवाच—

भगवन्तो विजानीथ प्राणिनां मनसेप्सितम् । शरीरादिभिरत्यथ कदथन्त इह दहिनः ॥ ३१५
केचित्तु निपुणास्तत्र घटन्ते विविधोद्यमैः । उपायैर्दुर्लभान्भावान्प्राप्नुवन्ति ह्यतन्द्रिताः ॥ ३१६
अपरे तु परिच्छिद्य नानाकारानुपक्रमान् । देहान्तरार्थमारम्भमाश्रयन्ति हि तद्व्रतम् ॥ ३१७
मम त्वाकाशसंभूतकुसुमस्रग्विभूषितम् । विन्ध्यशृङ्गं स्प्रष्टुकामो हस्तः प्रसरते मुहुः ॥ ३१८
अहं किल भवं देवं पतिं प्राप्तुं समुद्यता । प्रकृत्यैव दुराराध्यं तपस्यन्तं च संप्रति ॥ ३१९
सुरासुरैरनिर्णीतं परमार्थक्रियाश्रयम् । सांप्रतं चापि निर्दग्धो मदनो वीतरागिणा ॥
कथमाराधयेदीशं मादृशी तादृशं शिवम् ॥ ३२०

पुलस्त्य उवाच—

इत्युक्ता मुनयस्ते तु स्थिरतां मनसः स्थिताः । ज्ञातुमस्या वचः प्रोचुः प्रक्रमात्प्रकृतार्थकम् ३२१

मुनय ऊचुः—

द्विविधं तु सुखं तावत्पुत्रि लोके विभाव्यते । शरीरस्यास्य संयोगश्चेतसश्चापि निर्वृतिः ॥ ३२२
प्रकृत्या तु स दिग्वासा भीमो भस्मास्थिभूषणः । कपाली भिक्षुको नग्नो विरूपाक्षोऽस्थिरक्रियः
प्रमत्तोन्मत्तकाकारो बीभत्सकृतसंग्रहः । पतिना तेन नास्त्यर्थो मूर्तानर्थेन काङ्क्षितः ॥ ३२४
यदि स्वस्य शरीरस्य सुखमिच्छसि शाश्वतम् । तत्कथं ते महादेवाद्भूतभाजो जुगुप्सितात् ३२५
स्रवन्नरवसात्सास्थिकपालकृतभूषणात् । श्वसदुग्रभुजंगेन्द्रकृतभूषणभूषणात् ॥ ३२६
श्मशानवासिनो रौद्रप्रमथानुगतादपि । सुरेन्द्रमुकुटव्रातनिघृष्टचरणोऽरिहा ॥ ३२७
हरिरस्ति जगद्धाता श्रीकान्तोऽनन्तमूर्तिमान् । नाथो यज्ञभुजामस्ति तथेन्द्रः पाकशासनः ३२८
देवतानां निधिश्चास्ति ज्वलनः सर्वकामधुक् । वायुरस्ति जगद्धाता यः प्राणः सर्वदेहिनाम् ३२९
तथा वैश्रवणो राजा सर्वार्थमहिमा प्रभुः । एभ्य एकतमं कस्मात्त्वं न संप्राप्तुमिच्छसि ॥ ३३०
उतान्यादि(न्यदे)हसंप्राप्त्या सुखं ते मनसेहितम् । एवमेतत्तथा पुत्रि प्रभावो लोकसंपदाम् ३३१
अस्मिन्देहे परे वाऽपि कल्याणप्राप्तये तव । पितुरेवास्ति ते सर्वं सुरेभ्यो यन्निवेदितम् ॥ ३३२
वरस्तु प्राप्तये क्लेशः स चाप्यत्राफलस्तरुः । प्रायेण प्रार्थितो ह्यर्थः समर्थो ह्यतिदुर्लभः ॥
स्वस्थानविनियोगित्वात्पुत्रि तत्रापि लभ्यते ॥ ३३३

पुलस्त्य उवाच—

इत्युक्तवत्सु कुपिता मुनिवर्येषु शैलजा । उवाच क्रोधरक्ताक्षी स्फुरद्भिर्दशनच्छदैः ॥ ३३४

देव्युवाच—

असद्ग्रहस्य का नीतिर्व्यसनस्य क्व यन्त्रणा । विपरीतार्थबोद्धारः सत्पथे केन योजिताः ॥ ३३५
एवं मां[1] वित्थ दुष्प्रज्ञामस्थानेऽसद्ग्रहप्रियाम्[2] । न मां प्रति विचारोऽस्ति यदहंकारमानिनी[3] ३३६
प्रजापतिसमाः सर्वे भवन्तः सर्वदर्शिनः । न नूनं वित्थ तं देवं शाश्वतं जगतः प्रभुम् ॥ ३३७
अजमीशानमव्यक्तममेयमहिमोदयम् । आस्तां तत्कर्मसद्भावं(वः) संबोधं ता(धस्ता)वदावृतम्(तः)
विदुस्तं न हरिब्रह्ममुखा अपि सुरेश्वराः । यत्तस्य वि(वै)भवं[4] स्वोत्थं भुवनेषु विजृम्भितम् ३३९
प्रकटं सर्वभूतानां तदप्यथ न वित्थ किम् । कस्यैतद्गगनं मूर्तिः कस्याग्निः कस्य मारुतः ॥ ३४०
कस्य भूः कस्य वरुणः कश्चन्द्रार्कविलोचनः । कस्यार्चयन्ति लोकेषु लिङ्गं भक्त्या सुरासुराः ॥

१ झ. °वं मामात्थ । २ ग. घ. ज. °नासंग्रहं° । ३ ग. घ. ज. °निनः । प्रं° । ४ ग. घ. भुवनं ।

यच्च ब्रह्मेश्वरा देवाः विष्णिवन्द्राद्या महर्षयः । प्रभावं प्रभवं चापि तेषामपि न वित्थ किम् ॥
अदितेः कश्यपाज्जाता देवा नारायणादयः । मरीचेः कश्यपः पुत्रो ह्यदितिर्दक्षपुत्रिका ॥ ३४३
मरीचिश्चापि दक्षश्च पुत्रौ तौ ब्रह्मणः किल । ब्रह्मा हिरण्मयं त्वण्डं दिव्यसिद्धिविभूतिकम् ३४४
कस्य प्रादुरभूद्ध्यानात्प्राकृतः प्रकृतांशकः । प्रकृतौ च तृतीयायामबुद्धिजननी क्रिया ॥ ३४५
जातः ससर्ज *यन्मार्गान्बुद्धिपूर्वान्स्वकर्मजान् । अजातः कोऽभवद्देवो ब्रह्मणोऽव्यक्तजन्मनः ॥
यः स्वयोगेन संक्षोभ्य प्रकृतिं कृतवानिदम् । सिद्धगन्धर्वमैश्वर्यं सर्वं तल्लोककर्तृ(कारि)णः ३४७
केन विष्ण्वादयः सृष्टाः स्वमहिम्ना सदैव हि[1] । कृत्वाऽन्यं देहमन्याद्दक्तं तं कृत्वा पुनर्हरिः ॥
कुरुते जगतः कृत्यमुत्तमाधममध्यमम् । एवमेव हि संसारो जन्मादिमरणान्तकः[3] ॥ ३४९
स्वकर्मणः फलं ह्येतत्स्वतनोरनुरूपतः । अथ +नारायणेनैव स्वकीयेच्छासमाश्रयात् ॥ ३५०
तत्प्रेरितः प्रयात्येष जन्म नारायणात्मकम् । सोऽपि कर्मण एवोक्ता प्रेरणा विवशात्मनाम् ३५१
यथोन्मादादिदुष्टस्य मतिरेव हि सा भवेत् । इष्टानेव पदार्थान्वै विपरीतान्हि मन्यते ॥ ३५२
लोकस्य व्यवहारेषु[4] दृष्टेषु हसते सदा । धर्माधर्मफलप्राप्तौ विष्णुमेव निबोधत ॥ ३५३
तथाऽनादित्वमस्यास्ति सामान्यं तु तदात्मनाम् । त(क)स्य वा जीवितं दीर्घं दृष्टं देहे तु कुत्रचित्
भवद्भिर्यस्य नो दृष्टं भावमन्तमथापि वा । देहिनामेक एवैष [*क्वचिज्जायेन्म्रियेत्क्वचित् ॥३५५
क्वचिद्गर्भगतो न स्यात्क्वचिज्जीवो नरामराः । क्वचित्समाः शतं जीवेत्क्वचिद्वाक्ये विपर्ययः॥३५६
शतायुः पुरुषो यस्तु] सोऽनन्तः स्वल्पजीवितः । जीवितो यो म्रियत्यग्रे तस्मात्सोऽमर(?) उच्यते
अदृष्टजन्मनिधनेष्वेवं विष्ण्वादयो गताः । एतच्छ्रेष्ठतमैश्वर्यः संसारे को भवेदिह ॥ ३५८
तत्क्षयायोदितो योगो दा[5]नान्याश्चर्यरूपिणः । तस्मादनीश्वरान्स(त्स)र्वानन्यत्क(न्यः क)श्चिद्भ-
विष्यति ॥ ३५९

मुनय ऊचुः—

भवत्प्रसादामलवारिसेविताफलेन(?) कश्चित्तु धनाद्विमुह्यते ।
जगत्यसौ धन्यतमो हिमाचलस्त+(स्त्व)दाश्रयं यस्य सुता तपस्यति ॥ ३६०
स दैत्यराजोऽपि महाफलोदयो विमूलिताशेषसुरोऽपि सत्वरः ।
त्वदीयमंशं प्रविलोक्य कल्मषात्स्वकं शरीरं परिमोक्ष्यते हि सः ॥ ३६१
स धन्यधीर्लोकपिता चतुर्मुखो हरिश्च यः संभ्रमवह्निदीपितः ।
त्वदङ्घ्रियुग्मं हृदये न विभ्रत्प्रयाति पापं प्रशमैकहेतुकम् ॥ ३६२
त्वमेव एको विविधाकृत(ति)क्रियः किलेति वाचा विबुधैर्विभूष्यसे ।
अथान्य एकस्त्वमनाद्यमन्यथा जगत्तथा निर्वृतिकं च न स्पृशेत्(?) ॥ ३६३
न वेत्सि वा दुःखमिदं प्रजात्मकं निहन्यते तत्खलुसर्वतः क्रियाः ।
उपेक्षसे चेज्जगतामुपद्रवं दयासमत्वं तव केन दृश्यते ॥ ३६४

पुलस्त्य उवाच—

[*इत्युक्त्वा मुनयस्तस्मादाजग्मुर्यत्र वै शिवः । नमस्कृत्य च ते भक्त्या भगवन्तं समूचिरे ३६५

* षण्मार्गानिति क्वचित्पाठः । + नारायणं चित्त इति पाठः क्वचित् । * धनुश्चिह्नान्तर्गतः पाठो ग. पुस्तकस्थः ।
+ तदाशयमिति क्वचित्पाठः । * धनुश्चिह्नान्तर्गतः पाठो ज. पुस्तकस्थः ।

१ ग. °भूषितम् । २ ज. हि । यदाज्ञया देहमन्यं तं तं । ३ ग. °णात्मकः । ४ ग. °षु दुष्टेषु सहते । ५ ग. दारैराश्च° ।

ऋषय ऊचुः—

नाकनाथ दयादेव तपस्यन्ति तु वां(ति सुता)गिरेः।सत्त्वात्तदीप्सितं ज्ञात्वा त्वत्सकाशमिहाऽऽगताः]

सयोगमायामहिमागुणाश्रयं न विद्यते निर्मलभूतिगौरवम् ।
वयं च धर्म्याः सुतरां शरीरिणां यदीदृशं त्वां प्रविलोकयामहे ॥ ३६७
त्वद्दर्शनाच्चैव मनोरथो यथा प्रयाति साफल्यतया मनोऽनघम् ।
जगद्विधानैकविधौततन्मुखे करिष्यसे केवलसत्वरा वयम् (?) ॥ ३६८

पुलस्त्य उवाच—

विधेयुरित्थं मुनयोऽसकृच्च तां गिरां गिरीशश्रुतिभूतिसंनिधौ ।
उत्सृष्टकेदार इवावनीतले[1] सुवीजमुष्टिं सुफलाय कर्षकाः ॥ ३६९

तेषां[2] श्रुत्वा[3] हितां रम्यां प्रक्रमात्प्रक्रमक्रियाम् । वाचं वाचां पतिप्रख्यः प्रोवाच स्मितसुन्दरः ॥

शर्व उवाच—

जाने लोकविधाने तु सत्यं तत्कार्यमुत्तमम् । प्रायः[4] प्रालेयशैलस्य शङ्के तत्कालरूपिणः ॥ ३७१
सत्यमुत्कण्ठिताः सर्वे ये ये कार्यार्थमुद्यताः । तेषां त्वरन्ति चेतांसि किं नु नाम महात्मनाम् ॥
लोकयात्राऽनुगन्तव्या विशेषेण विवक्षितैः । यतस्तद्धर्ममेधन्ते तत्प्रामाण्यं परे धृताः ॥ ३७३

पुलस्त्य उवाच—

इत्युक्ता मुनयो जग्मुस्त्वरितास्तुहिनाचलम् । तत्र ते पूजितास्तेन हिमशैलेन सादरम् ॥
ऊचुर्मुनिवराः प्रीताः स्वल्पकं तु त्वरान्विताः ॥ ३७४

मुनय ऊचुः—

देवो दुहितरं साक्षात्पिनाकी तव मार्गते । तच्छीघ्रं पावयाऽऽत्मानमाहुतिं[5] चानलेऽर्पिताम्(र्पय)
कार्यं हि तच्च देवानां सुचिरं परिवर्तते । जगदुद्धारणायैष विधातव्यः समुद्यमः ॥ ३७६

पुलस्त्य उवाच—

इत्युक्तस्तु तदा शैलो हर्षावेशवशान्मुनीन्[6] । असमर्थोऽभवद्वक्तुमुत्तरं प्रार्थयन्निव ॥ ३७७
ततो मेना मुनीन्वन्द्य प्रोवाच स्नेहविक्लवा । दुहितुस्तान्मुनींश्चैव वचनं स्वयमर्थवत् ॥ ३७८

मेनोवाच—

यदर्थं दुहितुर्जन्म चेच्छन्त्यपि महाफलम् । तदेवोपस्थितं सर्वं प्रक्रमेणैव सांप्रतम् ॥ ३७९
कुलजन्मवयोरूपविभुत्वैरयु(त्वैः सहि)तोऽपि यः । वरस्तस्यापि नाऽऽहूय सुता देया ह्ययाचतः
दिग्वासा जटिलः शूली दग्धकामोऽपि कामदः । स तु मत्सुतया घोरः कथं नाम उपास्यते ॥

मुनय ऊचुः—

ऐश्वर्यमवगच्छस्व शंकरस्य सुरासुराः । आराध्यमानपादाब्जयुगलाश्च सुनिर्वृताः ॥ ३८२
यस्योपयोगि[7] यद्रूपं तेन तत्प्रार्थ्यते चिरम् । घोरं तपस्यते बाला तेन रूपेण निर्वृतिः॥ ३८३
यत्सा व्रतानि दिव्यानि नयिष्यति समापनम् । तदत्रावहिता तावदस्मास्वेव भविष्यति ॥ ३८४

पुलस्त्य उवाच—

इत्युक्त्वा गिरिणा सार्धं ययुर्यत्रास्ति शैलजा । जितार्कज्वलनज्वाला तपस्तेजोमयी शुभा ॥

---

१ झ. °ले सवी° । २ झ. ते तां श्रु° । ३ घ. °त्वाऽर्थितां । ४ ग. प्रालेयशैलस्य सङ्केतं युगुतं गच्छत सत्तमाः । स° । ५ झ. °हुत्येवानले हुतम् । ६ ग. हर्षविस्फारितान्मु° । ७ ग. घ. ज. °गि तद्रूपं सैव यत्प्रा° ।

प्रोक्ता सा मुनिभिः स्निग्धं मानिन्याह वचोऽर्थवत् ॥ ३८५

उमोवाच—

नाहं क्षुद्रात्किलेच्छामि ऋते शर्वात्पिनाकिनः । स्थितं च तारतम्येन प्राणिनां परमार्द्धिदम्[1] ३८६

धीरतैश्वर्यकार्याणि प्रमाणमतुलं महत् । यस्मान्न किंचिदपरं यच्च यस्मात्प्रवर्तते ॥ ३८७

तस्यैश्वर्यमनाद्यन्तं तमहं शरणं गता । समः सव्यवसायश्च दीर्घेण विपरीतकः(?) ॥ ३८८

पुलस्त्य उवाच—

एवं निशम्य ते वाचं देव्या मुनिवरास्तदा । आनन्दाश्रुपरीताक्षाः शशंसुस्तां तपस्विनीम् ॥

ऊचुश्च परमप्रीताः शैलजां मधुरं वचः ॥ ३८९

ऋषय ऊचुः—

अत्यद्भुतमहो पुत्रि ज्ञानमूर्तिरिवामला । प्रसादयसि नो भावं भवभावप्रतिश्रयात् ॥ ३९०

ननु विद्मो वयं तस्य देवस्यैश्वर्यमद्भुतम् । त्वन्निश्चयस्य दृढतां वेत्तुं वयमिहाऽऽगताः ॥ ३९१

अचिरादेव तन्वङ्गि कामस्त्वेष भविष्यति । आदित्यस्य प्रभा याति रत्नेभ्यः का द्युतिः पृथक्

कोऽर्थो वर्णान्स्वकांस्त्यक्त्वा[2] तथा त्वं गिरिशं विना । यामोऽनेकाभ्युपायेन तमभ्यर्थयितुं[3] वयम्

अस्माकमपि चैषोऽर्थः सुतरां हृदि वर्तते । अतस्त्वमेव सा बुद्धिर्यतो नीतिस्त्वमेव हि ॥

अतो निःसंशयं कार्यं शंकरोऽपि विधास्यति ॥ ३९४

पुलस्त्य उवाच—

इत्युक्त्वा पूजिताः सर्वे मुनयो गिरिकन्यया । प्रययुर्गिरिशं द्रष्टुं प्रस्थं हिमवतो महत् ॥ ३९५

गङ्गाम्भःप्लावितात्मानः पिङ्गा बद्धजटासटाः । भृङ्गानुयातपाणिस्थमन्दारकुसुमस्रजः ॥ ३९६

संप्राप्य तु गिरेः प्रस्थं ददृशुः शंकराश्रमम् । प्रशान्ताशेषसत्त्वौघं पर्यस्तमितकाननम् ॥ ३९७

निःशब्दक्षोभसलिलप्रयातं सर्वतोदिशम् । तत्रापश्यंस्ततो द्वारि वीरकं वेत्रपाणिनम् ॥ ३९८

तमेते मुनयः पूज्या विनीताः कार्यगौरवात् । ऊचुर्मधुरभाषाभिस्ते वाचं वाग्मिनां वराः ॥ ३९९

मुनय ऊचुः—

द्रष्टुं वरमिहाऽऽयाताः शंकरं गणनायकम् । त्रिलोचनं विजानीहि[4] सुरकार्यप्रचोदिताः ॥ ४००

त्वमेव नो गतिस्तत्र यथा कालानतिक्रमः । स्यात्प्रार्थनैषा प्रायेण प्रतीहारमयी प्रभो ॥ ४०१

पुलस्त्य उवाच—

इत्युक्तो मुनिभिः सोऽथ गौरवात्तानुवाच ह ॥ ४०२

प्रतीहार उवाच—

सवनस्यापरां संध्यां स्नातुं मन्दाकिनीजले । क्षणेन भाविता विप्रास्तत्र द्रक्ष्यथ शूलिनम् ॥ ४०३

पुलस्त्य उवाच—

इत्युक्ता मुनयस्तस्थुर्यत्नात्कार्यविचक्षणाः । गम्भीराम्बुधरप्रावृट्तृषिताश्चातका यथा ॥ ४०४

तथा क्षणेन निष्पन्नः समाचारक्रियाविधिः । वीरासनकृतोद्देशं मृगचर्मनियामितम् ॥ ४०५

ततो विनीतो जानुभ्यामवलम्ब्य महीं मुदा । उवाच वीरको देवं प्रणयैकसमाश्रयम् ॥ ४०६

वीरक उवाच—

संप्राप्ता मुनयः सप्त द्रष्टुं त्वां दीप्ततेजसम् । विभो समादिश द्रष्टुं ततो ध्यानमिहार्हसि ॥ ४०७

---

१ घ. परमात्विषम् । २ घ. ज. 'क्त्वा कथं वाणी रसाद्विना । ३ घ. ज. 'भ्यर्चयि' । ४ ख. ङ. 'हि सर्वका' ।

पुलस्त्य उवाच—

इत्युक्तो धूर्जटिस्तेन वीरकेण महात्मना । भ्रूभङ्गसंज्ञया तेषां प्रवेशाज्ञां ददौ तदा ॥ ४०८

मूर्ध्नः कम्पेन तान्सप्त वीरकोऽपि महामुनीन् । आजुहाव विदूरस्थान्दर्शनाय पिनाकिनः ॥४०९

त्वराबद्धजटास्ते च लम्बैकृष्णाजिनाम्बराः । विविशुर्वेदिकां दिव्यां गिरीशस्य विभूतिभिः ॥

बद्धपाणिपुटाक्षिप्तनार्कपुष्पोत्करास्ततः । पिनाकिपादयुगुलं वन्द्य नाकनिवासिनः ॥ ४११

ततः स्निग्धेक्षिताः सन्तो मुनयः शूलपाणिना । गिरीशं तु ततो दृष्ट्वा ते समं तुष्टुवुर्मुदा ॥ ४१२

मुनय ऊचुः—

अहो कृतार्था वयमेव सांप्रतं सुरेश्वरैर्वन्दितपादपल्लवम् ।

विलोकयामो गुणगौरवर्द्धिभिः समादिशत्कार्यमशेषरक्षणम् ॥ ४१३

पुलस्त्य उवाच—

ततः प्रहस्य सर्वज्ञ उवाच मुनिसत्तमान् ॥ ४१४

शंकर उवाच—

भवतां यद्धृदि गतं कार्यं तत्कुरुताधुना ॥ ४१५

पुलस्त्य उवाच—

इत्युक्ता मुनयस्तूर्णं ययुर्यत्र च शैलजा । बभाषिरे विभागज्ञा गिरिजां गिरिगह्वरे ॥ ४१६

मुनय ऊचुः—

रम्यं प्रियं मनोहारि मा रूपं तपसा दह । प्रातस्ते शंकरः पाणिमेष प्रतिग्रहीष्यति ॥ ४१७

वयमर्थितवन्तस्ते पितरं पूर्वमागताः । पित्रा सह गृहं गच्छ [+वयं यामः स्वमन्दिरम् ॥ ४१८

पुलस्त्य उवाच—

इत्युक्ता तपसः सत्यं फलमस्तीति चिन्त्य सा । त्वरमाणा ययौ वेश्म] पितुर्दिव्यं सुशोभितम्॥

सा तत्र रजनीं मेने वर्षायुतसमां सती । हरदर्शनसंजातसमुत्कण्ठा हिमाद्रिजा ॥ ४२०

ततो मुहूर्ते ब्राह्मे तु तस्याश्चक्रुः सुहृत्क्रियाम् । नानामङ्गलसंदोहान्यथावत्क्रमपूर्वकम् ॥ ४२१

दिव्यमङ्गलसंयोगान्मन्दिरे बहुमङ्गले । उपासत गिरिं मूर्ता ऋतवः सर्वकामिकाः ॥ ४२२

वायवः सुखदाश्चाऽऽसन्संमार्जनविधौ गिरेः । हर्म्येषु श्रीः स्वयं देवी कृतनानाप्रसाधना ॥४२३

कान्तिः सर्वेषु भावेषु ऋद्धिश्च भरणाकुला । चिन्तामणिप्रभृतयो रत्नाः(?) शैलं समन्ततः ४२४

उपतस्थुर्लताश्चापि कल्पकामा महाद्रुमाः । ओषध्यो मूर्तिमत्यश्च दिव्यौषधिसमन्विताः ॥ ४२५

रसाश्च धातवश्चैव सर्वेशस्य च किंकराः । किंकरास्तस्य शैलस्य व्यग्राश्चाऽऽश्रमवर्तिनः ॥४२६

नद्यः समुद्रा निखिलाः स्थावरं जङ्गमं च यत् । ते सर्वे हिमशैलस्य महिमानमवर्धयन् ॥ ४२७

अभवन्मुनयो नागा यक्षा गन्धर्वकिंनराः । शंकरस्यापि विबुधा गन्धमादनपर्वते ॥ ४२८

सज्जमण्डनसंभारास्तस्थुर्निर्मलमूर्तयः । शर्वस्याथ जटाजूटे चन्द्रखण्डं पितामहः ॥ ४२९

---

+ धनुश्चिह्नान्तर्गतः पाठो ग. घ. ज. पुस्तकस्थः ।

---

१ ग. °नः । दूरा°। घ. ज. °नः । दुरा° । २ ग. घ. ज. °स्तेन ल° । ३ ग. °म्बविज्वालिताम्ब° । ४ ग. ज. °कप्रस्फोटकास्त° । ५ ग. °वतामीहितं । ६ ग. घ. ज. °मार्चित° । ७ ग. घ. ज °वद्धेम°। ८ ख. ङ. कीर्तिः । ९ ग. घ. °वें शैलस्य किं° । १० ग. घ. °वंस्य विकटे कूटे । ज. °वंस्याविकटे कूटे ।

ववन्ध प्रणयोदारविस्फारितविलोचनः । कपालमालां विपुलां चामुण्डा मूर्ध्नि बध्नती ॥ ४३०
उवाच गिरिशं काली पुत्रं जनय शंकर । यो दैत्येन्द्रकुलं हत्वा मां रक्तैस्तर्पयिष्यति ॥ ४३१
शौरिर्वितंसिकारत्नं कण्ठाभरणमुज्ज्वलम् । भुजगाभरणं गृह्य सज्जं शंभोः पुरोऽभवत् ॥ ४३२
शक्रो गजाजिनं तस्य वसाभ्यक्ताग्रपल्लवम् । दधे सरभसं स्विद्यद्विस्तीर्णमुखपङ्कजम् ॥ ४३३
वायवश्च ववुस्तीक्ष्णास्तीक्ष्णं हिमगिरिप्रभम् । वृषं विभूषयामासुर्हरयानं मनोजवम् ॥ ४३४
विरेजुर्नयनान्तस्थाः शंभोः सूर्यानलेन्दवः । स्वां द्युतिं लोकनाथस्य जगतः कर्मसाक्षिणः ॥ ४३५
चिताभस्म समाधत्त कपाले रजतप्रभम् । मनुजास्थिमयीं मालां निववन्ध च पाणिना ॥ ४३६
प्रेताधिपः पुरो दूरे सभयः समवर्तत । नानाकारमहारत्नभूषणं धनदाहृतम् ॥ ४३७
विहायोदीप्तसर्पेन्द्रकटकेन स्वपाणिना । कर्णोत्तंसं चकारेशस्त्वमलं तक्षकं स्वयम् ॥ ४३८
निष्पन्नाभरणं चैव प्रसाध्येशं प्रसाधनैः । तत्राप्येषां नियमतो ह्यभवन्व्यग्रमूर्तयः ॥ ४३९
मुमोचाभिनवान्सर्वरस्यशालिरसौषधीन् । व्यग्रा तु पृथिवी देवी सर्वभावान्मनोरमा ॥ ४४०
गृहीत्वा वरुणः साक्षाद्रत्नान्याभरणानि च । पुष्पाणि च विचित्राणि नानारत्नमयानि तु ४४१
तस्थौ साभरणो देवः सर्वज्ञः सर्वदेहिनाम् । ज्वलनश्चापि दिव्यानि हैमान्याभरणानि च ४४२
जातरूपपवित्राणि प्रयतः समुपस्थितः । वायुर्ववौ सुरभिभिः सुखसंस्पर्शनो विभुम् ॥ ४४३
छत्रं चन्द्रकरोद्दामं हासितं(?) च शतक्रतुः । जग्राह मुदितः श्रीमान्बाहुभिर्वज्रभूषणः ॥ ४४४
जगुर्गन्धर्वमुख्याश्च ननृतुश्चाप्सरोगणाः । वादयन्तोऽतिमधुरं जगुर्गन्धर्वकिंनराः ॥ ४४५
मुहूर्ता ऋतवस्तत्र जगुश्च ननृतुश्च वै । चपलाश्च गणास्तस्थुर्लोडयन्तो हिमाचलम् ॥ ४४६
उपविष्टः क्रमाद्धाता विश्वकृद्भगनेत्रहा । चकारौद्वाहिकं कृत्यं पत्न्या सह यथोदितम् ॥ ४४७
दत्ताघ्यो गिरिराजेन सुरच्छन्दैर्विनोदितः । अवसत्तां क्षपां तत्र पत्न्या सह पुरान्तकः ॥ ४४८
ततो गन्धर्वगीतेन नृत्येनाप्सरसामपि । स्तुतिभिर्देवदैत्यानां विबुद्धो विबुधाधिपः ॥ ४४९
आमन्त्र्य हिमशैलेन्द्रं प्रभाते जायया सह । जगाम मन्दरगिरिं वायुवेगेन शृङ्गिणा ॥ ४५०

ततो गते भगवति नीललोहिते सहोमया रतिमनु(न्व)भूत भूधरः ।
सबान्धको(वो) भवति हि कस्य नो मनो विशृङ्खलं जगति हि कन्यकापितुः ॥ ४५१

पुरोद्यानेषु रम्येषु विविक्तेषु वनेषु च । सुरक्तहृदयो देव्या विजहार भगाक्षिहा ॥ ४५२
ततो बहुतिथे काले पुत्रनाम्ना गिरेः सुता । सखीभिः सहिता क्रीडां चक्रे कृत्रिमपुत्रकैः ४५३
कदाचिद्गन्धतैलेन गात्रमभ्यज्य शैलजा । चूर्णैरुद्वर्तयामास मलेनाऽऽपूरितां तनुम् ॥ ४५४
तदुद्वर्तनकं गृह्य नरं चक्रे गजाननम् । पुरुषं क्रीडती देवी तं साऽक्षेपयदम्भसि ॥ ४५५
जाह्नव्याः शिवया सख्या ततः सोऽभूद्बृहत्तनुः । कायेनातिविशालेन जगदापूरयत्तदा ॥ ४५६
पुत्रेत्युवाच तं देवी पुत्रेत्यूचे च जाह्नवी । गाङ्गेय इति देवैस्तु पूजितोऽभूद्गजाननः ॥ ४५७
विनायकाधिपत्यं च ददावस्य पितामहः । पुनः सा क्रीडती चक्रे तरुं च वरवर्णिनी ॥ ४५८
मनोज्ञमङ्कुरं रूढमशोकस्य शुभानना । वर्धयामास तं चापि कृतसंस्कारमङ्गलम् ॥ ४५९

---

१ ग. घ. सद्यः । २ ग घ. ज. विनेतुर्नयनान्तस्थाः सूर्याश्चैवाग्ननेन्द° । ३ ग. घ. ज. समादाय । ४ ग. घ. ज. देवं । ५ ग. घ. ज. °त्नाद्याभ° । ६ ग. सर्वदः । ७ ग. उपतस्थे । घ. ज. उपातिष्ठत्क्रमा° । ८ ग. घ. °भात उमया । ९ ग. घ. ज. ससाधको । १० ग. घ. ज. विसंष्ठुलो । ११ ग. घ. ज. °र पुरःसरः । त° । १२ झ. तं चाप्यक्षिपद° । १३ ग. घ. ज. सेव्ये । १४ ज. °रं काष्ठमासेव्यं च शु° ।

बृहस्पतिमुखैर्विप्रैर्दिवस्पतिपुरोहितैः । ततो देवैः समुनिभिः प्रोक्ता देवी त्विदं वचः ॥ ४६०

मुनिदेवा ऊचुः—

अधुना दर्शिते मार्गे मर्यादां कर्तुमर्हसि । फलं किं भविता देवि कल्पितैस्तरुपुत्रकैः ॥ ४६१

पुलस्त्य उवाच—

इत्युक्ता हर्षपूर्णाङ्गी प्रोवाचातिशुभां गिरम् ॥ ४६२

पार्वत्युवाच—

एकं निरुदके ग्रामे यः कूपं कारयेद्बुधः । बिन्दौ बिन्दौ च तोयस्य स वसेद्वत्सरं दिवि ॥ ४६३

दशकूपसमा वापी दशवापीसमो ह्रदः । दशह्रदसमा कन्या दशकन्यासमो द्रुमः ॥

एषा वै शुभमर्यादा[1] नियता लोकभाविनी ॥ ४६४

पुलस्त्य उवाच—

इत्युक्तास्तु ततो विप्रा बृहस्पतिपुरोगमाः । जग्मुः स्वमन्दिराण्येव भवानीं वन्द्य मातरम् ॥ ४६५

गतेषु तेषु देवोऽपि शंकरः पर्वतात्मजाम् । पाणिनाऽऽलम्ब्य पादेन स्वमावासमगच्छत ॥ ४६६

चित्तप्रसादजननप्रासादाट्टालगोपुरम् । लम्बमौक्तिकदामानं[2] मालिकाकुलवेदिकम् ॥ ४६७

सुनद्धकलधौतं[3] च क्रीडागृहमनोगतम् । प्रकीर्णकुसुमामोदमत्तालिकुलकूजितम् ॥ ४६८

किंनरोद्गीतसंगीतगृहान्तरितभित्तिकम् । सुगन्धिधूपसंघातं मनःप्राप्यमलक्षितम् ॥ ४६९

क्रीडामयूरनारीभी[4] रतितो रभसार्पितम् । हंससंघातसंदिष्टस्फटिकस्तम्भैतोरणम्[5] ॥ ४७०

अनाविलमसंभ्रान्त्या[6] (?) बहुशः किंनराकुलम् । शुकैर्यत्राभि[7]दृश्यन्ते पद्मरागविनिर्मिताः[8] ॥ ४७१

भित्तयो जातिसंभ्रान्त्या प्रतिबिम्बितमौक्तिकाः । तत्राक्षैः प्रियया देवो विहर्तुमुपचक्रमे ॥ ४७२

स्वच्छेन्द्रनीलभूभागे क्रीडन्तौ यत्र संस्थितौ । वपुःसहायतां प्राप्तौ विनोदरसनिर्वृतौ ॥ ४७३

एवं प्रक्रीडतोस्तत्र देवीशंकरयोस्तदा । प्रादुर्भूतो महाशब्दः पतितोऽम्बरगोचरः ॥ ४७४

तच्छ्रुत्वा कौतुकाद्देवी किमेतदिति शंकरम् । पर्यपृच्छत्सुरवरं[9] हरं विस्मितपूर्वकम् ॥ ४७५

उवाच देवो नैतत्ते दृष्टपूर्वं शुचिस्मिते । एते गणेशाः क्रीडन्ति शैलेऽस्मिन्मत्प्रियाः सदा ॥ ४७६

तपसा ब्रह्मचर्येण नामभिः क्षेत्रसेवनैः । यैरहं तोषितः पूर्वं त एते मनुजोत्तमाः ॥ ४७७

मत्समीपमनुप्राप्ता मम हृद्याः शुभानने । कामरूपा महोत्साहा महारूपगुणान्विताः[10] ॥ ४७८

कर्मभिर्विस्मयं त्वेषां प्रयामि बलशालिनाम् । सामरस्यास्य जगतः सृष्टिसंहरणक्षमाः ॥ ४७९

ब्रह्म[11]चन्द्रेन्द्रगन्धर्वैः सकिंनरमहोरगैः । विवर्जितोऽप्यहं नित्यं नैभिर्विरहितो रमे ॥ ४८०

हृद्या मे चारुसर्वाङ्गि त एते क्रीडन्ते गिरौ । इत्युक्ता तु तदा देवी त्यक्त्वा तं विस्मयाकुला ॥

गवाक्षान्तरमासाद्य प्रेक्षते चकितानना[12] । यावन्तस्ते कृशा दीर्घा ह्रस्वाः स्थूला महोदराः ॥ ४८२

व्याघ्रे[13]भवदनाः केचित्केचिन्मेषाजरूपिणः । अनेक[14]प्राणिरूपाश्च ज्वालास्याः कृष्णपिङ्गलाः ४८३

सौम्या भीमाः स्मितमुखाः कृष्णपिङ्गजटासटाः । नानाविहंगवदना नानाविधसुराननाः ॥ ४८४

---

१ ग. घ. ज. मनुमर्यादा । २ ग. °मानं नकुलाकु° । घ. ज. °मानमाकुलाकु° । ३ ग. घ. ज. सुनिर्धौतैकधौतं । ४ झ. °नारीभिरभितो । ५ ग. घ. ज. °म्भकेतनम् । ६ ग. घ. ज. °नावलम्ब्य सं° । ७ ग. घ. ज. °कैर्युताभि° । ८ ग. घ. ञ. मयूराङ्गविनिर्मिताः । ९ ग. घ. ज. °च्छत्पुरहरं । १० झ. महारूपगणान्विताः । ११ क. ख. घ. ङ. च. ज. ब्रह्मविष्णिन्द्र° । ग. ब्रह्मादिचन्द्र° । १२ ग. °ना । प्रायो मुक्ताः कृ° । घ. ज. °ना । पापमुक्ताः कृ° । १३ ग. ज. व्याघ्रास्यव° । घ. व्याघ्रस्य·व° । १४ ग. ज. °कुरूपा नीरूपा बिडालास्याः सुपिं° ।

कौशेयचर्मवसना नग्नाश्चान्ये विरूपिणः । गोकर्णा गजकर्णाश्च बहुवक्त्रेक्षणोदराः ॥ ४८५

बहुपादा बहुभुजा दिव्यनानास्त्रपाणयः । अनेककुसुमापीडा नानाव्यालविभूषणाः ॥ ४८६

कृतनानायुधधरा नानाकवचभूषणाः । विचित्रवाहनारूढा दिव्यरूपा वियच्चराः ॥ ४८७

वीणावाद्यरवोद्घुष्टा नानास्थानकनर्तकाः । गणेशांस्तांस्तथा दृष्ट्वा देवी प्रोवाच शंकरम् ॥ ४८८

देव्युवाच—

गणेशाः कति संख्याताः किंनामानः किमात्मकाः । एकैकशो मम ब्रूह्यधिष्ठिता ये पृथक्पृथक् ॥

शंकर उवाच—

कोटिकोटिश्च संख्याता नानाविख्यातपौरुषाः । जगदापूरितं सर्वमेभिर्भीमैर्महाबलैः ॥ ४९०

सिद्धक्षेत्रेषु रथ्यासु जीर्णोद्यानेषु वेश्मसु । दानवानां शरीरेषु बालेषून्मत्तकेषु च ॥ ४९१

एते चैवं समुदिता नानाहारविहारिणः । ऊष्मपाः फेनपाश्चैव धूमपा मधुपायिनः ॥ ४९२

मेदोहारा रुधिरपाः सर्वभक्षा ह्यभोजनाः । देवादास्तापसाहारा नानावाद्यरतिप्रियाः ॥

न ह्येषां वै अनन्तत्वाद्गुणान्वक्तुं हि शक्यते ॥ ४९३

देव्युवाच—

नागत्वगुत्तरासङ्गः शुद्धाङ्गो मुञ्जमेखली । मानःशिलेन कल्केन चपलो रञ्जिताननः ॥ ४९४

भृङ्गदंष्ट्रो(दष्टो)त्पलानां च स्रग्दामा मधुराकृतिः । पाषाणशकलोत्तानकांस्यतालप्रवर्तकः ॥ ४९५

असौ गणेश्वरो देव किंनामा किंनरानुगः । य एष गणगीतेषु दत्तकर्णो मुहुर्मुहुः ॥ ४९६

शर्व उवाच—

स एष वीरको देवि सदा मे हृदयप्रियः । नानाश्चर्यगुणाधारो गणेश्वरगणार्चितः ॥ ४९७

देव्युवाच—

ईदृशस्य सुतस्यास्ति ममोत्कण्ठा पुरान्तक । कदाऽहमीदृशं पुत्रं द्रक्ष्याम्यानन्ददायकम् ॥ ४९८

शर्व उवाच—

एष एव सुतस्तेऽस्तु नयनानन्दकारकः । त्वया मात्रा कृतार्थो हि वीरकोऽपि सुमध्यमे ॥४९९

पुलस्त्य उवाच—

इत्युक्ता प्रेषयामास विजयां हर्षणोत्सुकाम् । वीरकानयनायाऽऽशु दुहिता भूभृतः सखीम् ॥

साऽवरुह्य त्वरायुक्ता प्रासादादम्बरस्पृशः ॥ ५००

विजयोवाच—

गणपं गणमध्यस्थं गणकोटिप्रवर्तिनम् । एहि वीरक चापल्यात्त्वया देवी प्रतोषिता ॥ ५०१

त्वामाह्वयति चेत्युक्तस्त्यक्त्वा पाषाणखण्डकम् । देव्याः समीपमागच्छद्विजयानुगतः शनैः ५०२

प्रासादशिखरोत्फुल्लरक्ताम्बुजनिभद्युतिः । तं दृष्ट्वा प्रस्थिताऽनल्पस्वादुक्षीरपयोधरा ॥ ५०३

गिरिजोवाच—

पिब क्षीरमिदं वत्स स्तुतं पिब यथेच्छकम् ॥ ५०४

पुलस्त्य उवाच—

उवाच देवी सस्नेहं गिरा मधुरवर्णया ॥ ५०५

---

१ ग. घ. ज. °नासिपा° । २ ग. घ. ज. °नावपुर्धारा । ३ ग. घ. ज. °षु तीर्थेषु सुतीर्णोद्यानवे° । ४ झ. °ते विंशतिमु° । ५ ग. घ. ज. धूमास्यम° । ६ ग. घ. °नाः । वेदकृतापहाराश्च ना° । ज. °नाः । वेदत्सत्तापहाराश्च ना° । ७ ग. घ. ज. देवः प्रकोपितः । त्वा° ।

उमोवाच—

*एहि सद्यो हि जातोऽसि मे पुत्रको देवदेवेन दत्तोऽधुना वीरक ।
उक्तवत्यङ्कमाधाय पर्यष्वजत्तं कपोले चुचुम्बागराण्नन्दिनी ॥ ५०६
मूर्ध्न्युपाघ्राय संमार्ज्य गात्राणि संभूषयामास दिव्यैः स्वयं भूषणैः ।
किङ्किणीमेखलानूपुरैः सन्मणिक्याढ्यकेयूरहारैरमूल्यैर्गुणैः ॥ ५०७
कोमलैः पल्लवैश्चित्रितैश्चारुभिर्मङ्गलैः कङ्कणैर्दिव्यमन्त्रोद्भवैः ।
तस्य शुद्धैस्ततो भूरिभिश्चाकरोन्मिश्रसिद्धार्थकैरङ्गरक्षाविधिम् ॥ ५०८
एवमादाय चोवाच कृत्वा स्रजं मूर्ध्नि गोरोचनापत्रभङ्गोज्ज्वलैः ।
वत्स वत्साधुना क्रीड सार्धं गणैरप्रमत्तो व्रज श्वभ्रवर्जं शनैः ॥ ५०९
व्यालमालाकुलाः शैलसानुद्रुमा दन्तिभिर्भग्नसाराः परे भङ्गिनः ।
जाह्नवीमण्डलं क्षुब्धतोयाकुलं मा विशेथा बहुव्याघ्रजुष्टे वने ॥ ५१०
वत्स संख्येषु दुर्गेषु यद्वीरक पुत्र भावायतां स्वस्थचित्तो जनः ।
प्रार्थितं भव्यमायाति भाविन्यसौ भाव्यतां सोऽपि निर्वर्त्य सर्वैर्गुणैः ॥ ५११

पुलस्त्य उवाच—

एवमुक्तोऽम्बया वीरको मातरं स स्मयन्नाह लीलारसाविष्टधीः ॥
एष मात्रा स्वयं मे कृतः कङ्कणः पत्रकश्चित्रितः पाटलैर्बिन्दुभिः ॥ ५१२
चारुपुष्पैरियं मालतीभिः कृता मालिका मे शिरस्याहिता कोमला ।
तोषयामीश्वरीमित्ययं सत्वरं चिन्तयित्वाऽव्रजद्धाह्यतः क्रीडनम् ॥ ५१३
स्वैर्गणैः संयुतो वीरको हर्षितो दक्षिणात्पश्चिमं पश्चिमादुत्तरम् ।
उत्तरात्पूर्वमभ्येत्य सख्या युता प्रेक्षती तं गवाक्षान्तराद्वीरकम् ॥ ५१४
शैलपुत्री बहिः क्रीडतां यज्जगत्स्नेहजः पुत्र लब्धो यतस्त(जा लब्धे पुत्रो ह्यतो ना)त्र कः ।
मोहमायाति यः स्वल्पचेता जडो मांसविण्मूत्रसंघातदेहोद्वहः ॥ ५१५
द्रष्टुमभ्यन्तरं नाकवासेश्वरेष्विन्दुमौलिं प्रविष्टेषु कक्षान्तरम् ।
वाहनान्यध्यरोहद्गणेशैर्युतो लोकपालास्त्रपूगं मुहूर्तादयम् ॥ ५१६
खड्ग एषोऽविषद्रा(तिसद्रा)करो निर्मलः कुन्तकः कस्य केनाऽऽहृतो ब्रूत नः ।
नो भवेद्योऽस्ति दण्डेन किं दुःसहो भीमर्मूर्त्यङ्गणे नास्ति कृत्यं गिरौ ॥ ५१७
पाश एषोऽस्ति तेनात्र को बध्यते मा वृथा लोकपालानुगा विद्रुतः(म्) ।
एवमेवैतदित्यब्रुवंस्ते तदा वीक्ष्य देवानुगं वीरकं रक्षण(क)म् ॥ ५१८

---

* स्रग्विणीवृत्तम् ।

---

१ ज. भूतिभि° । २ ज. °त्तो नगश्च° । ३ ज. °य तुष्टाऽकरोत्तिष्ठ स्वस्थचित्तो जनः । ४ ग. घ. कृतो भूषणो दत्त एष प्रदः पा° । ज. कृतो भूषणे प° । ५ ग. घ. °भिः । सिन्दुवारस्य पुष्पैरियं मालती विस्तृता मल्लिका । ज. °भिः । सिन्दुवारस्य पुष्पैरियं मालतीभिश्चिता । ६ घ. °मत्यन्त° । ७ क. च. °विषह्वाकरो नि° । ख. ङ. °विषद्राकरो नि° । ग. °विरङ्गावतिको नि° । घ. °विवखड्गावतिको नि° । ज. °विषाङ्कवन्तिको नि° । ८ ग. घ. ज. °मूर्त्यानले ना° । ९ ग. घ. ज. बध्यते ।

प्राह देवी वने पर्वते निर्जराध्यग्निशालामुखे भूतले भूतपाः ।
निर्जराम्भोनिपातेषु नो मज्जतात्पुष्पजालावनद्धेषु धामस्वपि ॥ ५१९
प्रोच्चनानाद्रिकुञ्जावगाहेष्वथो मारुतास्फोटसंरक्षणे कामतः ।
काञ्चनोत्तुङ्गशृङ्गावरोहक्षितौ हैमरेणूत्करासङ्गपिङ्गद्युतिः ॥ ५२०
खेचराणां वने चापि रम्ये च भूरूपसंपत्प्रकारो गणो वासितुम्(गच्छतात्) ।
मन्दरे कंदरे चारुवापीतटे कुन्दमन्दारपुष्पप्रवालाम्बुजे ॥ ५२१
सिद्धनारीभिरापीतरूपामृतं विस्तृतैर्नेत्रपात्रैरनुन्मेषिभिः ।
वीरकं शैलपुत्री निमेषान्तरादस्मरत्पुत्रगृद्ध्यविनोदार्थिनी ॥ ५२२
सोऽपि तावत्क्षणावाद्य(त्याप)पुण्योदयो यो हि जन्मान्तरस्याऽऽत्मजत्वं ततः ।
क्रीडतस्तस्य तृप्तिः कथं जायते योऽपि भावाज्जगद्वेधसा तेजसा ॥ ५२३
कल्पितः प्रेक्षणं दिव्यगीतक्षणं नृत्यलोलैर्गणेशैः प्र(र)नृत्यक्ष(त्क्ष)णम् ।
सिंहनादाकुले गण्डशैले ज्वलद्द्रुमजाले बृहत्सालतालेक्षणे ॥ ५२४
फुल्लनानातमालालिकालेक्षणं वृक्षमूले विलोलो मरालेक्षणम् ।
स्वल्पपङ्के जले पङ्कजाङ्केक्षणं(णो) मातुरङ्के शुभे निष्कलङ्केक्षणम् ॥ ५२५
परिक्रीडते बाललीलाविहारी गणेशाधिपो देवतानन्दकारी ।
निकुञ्जेषु विद्याधरोद्गीतशीलः पिनाकीव लीलाविलासैः सलीलः ॥ ५२६

प्रकाश्य भुवनं गोभिस्ततो दिनकरे गते । देशान्तरं तदा पश्चाद्दूरस्थो धरणीधरः ॥ ५२७
मित्रत्वमस्य सुदृढं हृदये द्योतयन्निव । नित्यमाराधितो विप्रैः श्रीमान्विखनसः* सुतः ॥ ५२८
नाकरोत्सवितुर्मेरुरुपकारं पतिष्यतः । जनेष्वेषा व्यवस्थेति श्रूयते स्खलतो ह्यधः ॥ ५२९
दिनेनानुगतो भानुः स्वजनं परिपूरयन् । संध्यावद्धाञ्जलिपुटा मुनयोऽभिमुखा रविम् ॥ ५३०
यावदध्यासते शीघ्रं निवार्योष्णाभिभाविताम् । व्यजृम्भताथ लोकेऽस्मिन्क्रमाद्वैभावरं तमः॥ ५३१
कुटिलस्येव हृदये कालुष्यं दूषयन्मनः । ज्वलत्फणिफणारत्नदीपोद्योतितभित्तिके ॥ ५३२
शयने[1] शशिसंघातरत्नवस्त्रोत्तरच्छदे । नानारत्नद्युतिलसच्छक्रचापविडम्बके ॥ ५३३
रत्नैः किङ्किणिजालेन लसन्मुक्ताकलापके । कमनीयचलल्लीलवितानाच्छादिताम्बरे ॥ ५३४
मन्दिरे मन्दसंचारं गते गिरिसुतायुतः । तस्थौ गिरिसुताबाहुलतामिलितकंधरः ॥ ५३५
शशिमौलिः सितज्योत्स्नास्फारपूरितगोचरः । गिरिजाऽप्यसितापाङ्गी नीलोत्पलदलच्छविः ॥
विभावर्या च संपृक्ता बभूवातीव गोमयी । तामुवाच ततो देवः क्रीडाकेलिकलायुताम् ॥ ५३७

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे गौरीविवाहवर्णनं नाम चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥

आदितः श्लोकानां समष्ट्यङ्काः—२७९६२

---

अथैकचत्वारिंशत्तमोऽध्यायः ।

---

शर्व उवाच—

शरीरे मम तन्वङ्गि सिते भास्यसितद्युतिः । भुजंगीवासिता शुभ्रे संश्लिष्टा चन्दने तरौ ॥ १

* पृथुनस इति पाठः ।

[1] घ. ज. 'ने शालसं' ।

चन्द्रातपेन संपृक्ता रुधिराम्बरजा तथा(संवृता) । रजनीवासिते पक्षे दृष्टिदोषं ददासि मे ॥ २

पुलस्त्य उवाच—

इत्युक्ता गिरिजा तेन मुक्तकण्ठा पिनाकिनम् । उवाच कोपरक्ताक्षी भ्रुकुटीविकृतानना ॥ ३

देव्युवाच—

स्वकृतेन जनः सर्वो जाड्येन परिभूयते । अवश्यमर्थी प्राप्नोति खण्डनं[2] शशिमण्डन ॥ ४

तपोभिर्दीर्घचरितैर्यच्चां प्रार्थितवत्यहम् । तस्या मे नियतस्त्वेषो अवमानः पदे पदे ॥ ५

नैवास्मि कुटिला[3] शर्व विषमा न च धूर्जटे । सविषस्त्वं जगत्ख्यातो व्यक्तदोषाकराश्रयः ॥ ६

त्वं हि मुष्णासि दशनान्नेत्रहन्ता भगस्य च । आदित्यस्त्वां विजानाति भगवान्द्वादशात्मकः ॥ ७

मूर्ध्नि शूलं जनयसि स्वैर्दोषैर्मामधिक्षिपन् । यस्त्वं मामाह कृष्णेति महाकालोऽसि विश्रुतः ॥ ८

यास्याम्यहं परित्यक्तुमात्मानं तपसा गिरिम् । जीवन्त्या नास्ति मे कृत्यं धूर्तेन परिभूतया ॥ ९

कापालिकेन क्षुद्रेण श्मशाने नित्यवासिना । भूत्या विलिप्तस्वाङ्गेन मातृमध्यस्थचारिणा ॥ १०

पुलस्त्य उवाच—

निशम्य तस्या वचनं कोपतीक्ष्णाक्षरं हरः । उवाचाविष्टसंभ्रान्तप्रणयेनेन्दुमौलिना ॥ ११

शर्व उवाच—

[4]अगात्मजाऽसि गिरिजे नाहं निन्दापरस्तव । चाटूक्तिबुद्ध्या त्वनया मत्वा ह्योन्मत्तसंश्रयम् ॥ १२

विकल्पः(ल्पं) स्वस्थचित्ते तु गिरिजैष(जे त्वं) मम क्रमात् । यद्येवं कुपिता भीरु तत्तवाहं न वै पुनः

नर्मवादी भविष्यामि जहि कोपं शुचिस्मिते । शिरसा प्रणतेनैष रचितस्ते मयाऽञ्जलिः ॥ १४

हीनो ह्यप्यपमानेन निन्दितेनैति विक्रियाम् । असतां तु सतां न स्यान्मर्मस्पृष्टो नरः किल ॥ १५

पुलस्त्य उवाच—

अनेकैश्चाटुभिर्देवी देवेन प्रतिबोधिता । कोपं तीव्रं न तत्याज सती मर्मणि घट्टिता ॥ १६

अवष्टब्धमथाऽऽच्छिद्य वासः शंकरपाणिना । विपर्यस्तालका वेगाद्गन्तुमैच्छच्च शैलजा ॥

तस्या व्रजन्त्याः कोपेन पुनराह पुरान्तकः ॥ १७

शर्व उवाच—

सत्यं सर्वैरवयवैस्तनोषि सदृशं पितुः । हिमाचलस्य शृङ्गैस्तु मेघजालाकुलं म(लैर्म)नः ॥ १८

तथा दुरवगाह्येभ्यो गहनो हि तवाऽऽशयः । काठिन्यमश्मसारेभ्यो वनेभ्यो बहुधा गताः(धाऽऽगतम्)

कुटिलत्वं निम्नगाभ्यो दुःसेव्यत्वं हिमादपि । संक्रान्तं सर्वमेवैतत्तन्वङ्गि हिमभूधरात् ॥ २०

पुलस्त्य उवाच—

इत्युक्ता सा पुनः प्राह गिरीशं शैलजा(पर्वता)त्मजा । कोपकम्पितमूर्धा ना(वै) प्रस्फुरद्दशनच्छदा

उमोवाच—

[5]स्यात्सर्वं दोषं[6]दानेन निन्दायां गुणिनो जनात् । तवापि दुष्टसंपर्कात्संक्रान्तं सर्वमेव हि ॥ २२

व्यालेभ्योऽनेकजिह्वत्वं भस्मनाऽस्नेहवृत्तिका । हृत्कालुष्यं शशाङ्कोत्थं दुर्बोधत्वं विषादपि ॥ २३

किंचात्र बहुनोक्तेन अलं वाचां श्रमेण ते । श्मशानवा[7]सान्निर्भीस्त्वं नग्नत्वात्तव न त्रपा ॥

निर्घृणत्वं कपालित्वाद्दया ते विगता चिरम् ॥ २४

१ झ. °रावर° । २ ग. घ. ज. °नं शिखिम° । ३ ग. घ. ज. °ला गर्वावि° । ४ ग. घ. ज. अनात्म° । ५ ञ. °रसर्वे-दोपमाने° । ६ झ. °षमाते° । ७ ग. घ. °वासिनीभिस्त्वं नग्नश्च विचरिष्यसि । नि° ।

पुलस्त्य उवाच—

इत्युक्त्वा मन्दिरात्तस्मान्निर्जगाम हिमाद्रिजा । तस्यां व्रजन्त्यां देवेश्यां गणैः किलकिला कृता
क्व मातर्गच्छसीत्युक्त्वा रुदद्भिर्धावितं पुनः । विष्टभ्य चरणौ देव्या वीरको वाक्यगद्गदः ॥२६
प्रोवाच मातः किं त्वेतत्क्व यासि कुपिताऽऽतुरा । अहं त्वामनुयास्यामि व्रजन्तीं स्नेहवर्जिताम्॥
नो चेत्पतिष्ये शिखराद्गिरेरस्य त्वयोज्झितः । उन्नाम्य वदनं देवी दक्षिणेन तु पाणिना ॥ २८
उवाच वीरकं माता त्वं शोकं पुत्र मा कृथाः । शैलाग्रात्पतितुं नैव न च गन्तुं मया सह ॥ २९
युक्तं ते पुत्र वक्ष्यामि येन कार्येण तच्छृणु। कृष्णेत्युक्ता हरेणाहं स्तम्भिताऽप्यवनामि(मानि) ता
साऽहं तपः करिष्यामि येन गौरीत्वमाप्नुयाम् । एष स्त्रीलम्पटो देवो यातायां मय्यनन्तरम् ॥ ३१
द्वाररक्षा त्वया कार्या नित्यं रन्ध्रान्ववेक्षणम् । यथा न काचित्प्रविशेद्योषित्तत्र हरान्तिकम्॥३२
दृष्ट्वा परस्त्रियं चापि वदेथा मम पुत्रक । शीघ्रमेव करिष्यामि यथायुक्तमनन्तरम् ॥ ३३

पुलस्त्य उवाच—

एवमस्त्विवति देवेशीं वीरकोवाच[+] सांप्रतम् । मातुराज्ञामृताहारप्लाविताङ्गो गतज्वरः ॥ ३४
जगाम रक्षां स द्रष्टुं प्रणिपत्य तु मातरम् । देवी चापश्यदायान्तीं सखीं मातुर्विभूषिताम् ॥ ३५
कुसुमामोदिनीं नाम तस्य शैलस्य देवताम् । साऽपि दृष्ट्वा गिरिसुतां स्नेहविक्लवमानसा ॥ ३६
क्व पुत्रि गच्छसीत्युच्चैरालिङ्ग्योवाच देवता । सा तस्याः सर्वमाचख्यौ शंकरात्कोपकारणम् ३७
पुनश्चोवाच गिरिजा देवतां मातृसंमिताम् ॥ ३८

उमोवाच—

नित्यं शैलाधिराजस्य देवता त्वमनिन्दिते । सर्वतः संनिधानं ते मनसाऽतीव वत्सला ॥ ३९
अतस्तु ते प्रवक्ष्यामि यद्विधेयं त्वयाऽम्बिके । अन्यस्त्रीसंप्रवेशस्तु त्वया रक्ष्यः प्रयत्नतः ॥ ४०
स रहस्ये प्रयत्नेन निषेव्यः सततं गिरौ । पिनाकिनः प्रविष्टायां वक्तव्यं मे त्वयाऽनघे ॥
ततोऽहं संविधास्यामि यत्क्षमं तदनन्तरम् । ४१

पुलस्त्य उवाच—

इत्युक्ता तां तथेत्युक्त्वा जगाम सा गिरिं शुभा । उमाऽपि पितुरुद्यानं जगामाद्रिसुता द्रुतम्४२
अन्तरिक्षं समाविश्य मेघमालाविलप्रभम् । भूषणानि ततो न्यस्य वृक्षवल्कलधारिणी ॥ ४३
ग्रीष्मे पञ्चाग्निसंतप्ता वर्षासु च जलोषिता । वन्याहारनिराहारा शुष्कस्थण्डिलशायिनी ॥ ४४
एवं साधयती तत्र तपसा संव्यवस्थिता । ज्ञात्वा गतां गिरिसुतां दैत्यस्तत्रान्तरे बली ॥ ४५
अन्धकस्य सुतो हृष्टः पितुर्वधमनुस्मरन् । देवान्सर्वान्विजित्याऽऽजौ बकीभ्राता रणोत्कटः॥४६
आडिर्नामान्तरप्रेक्षी सततं चन्द्रमौलिनः । आजगामामररिपुः पुरं त्रिपुरघातिनः ॥ ४७
स तत्राऽऽगत्य ददृशे वीरकं द्वार्यवस्थितम् । *विचिन्त्य सोऽपि च वरं दत्तं कमलयोनिना॥४८
हते किलान्धके दैत्ये गिरिशेनासुरद्विषा । आडिश्चकार विपुलं तपः परमदारुणम् ॥ ४९
तमागत्याब्रवीद्ब्रह्मा तपसा परितोषितः । किमाडे दानवश्रेष्ठ तपसा प्राप्तुमिच्छसि ॥ ५०
ब्रह्माणमाह दैत्यस्तु निर्मृत्युत्वमहं वृणे ॥ ५१

---

+ संधिरार्षः । * इदमर्धमसंगतम् ।

---

१ ञ. °को बाष्पग° । २ ग. घ. वलभ्रा° । ३ ग. °तः । किं फलं दा° । घ. ज. °तः । किं मत्तो दा° ।

ब्रह्मोवाच—

जातानामिह संहारे विना मृत्युं न युज्यते । यतस्ततोऽपि दैत्येन्द्र मृत्युः प्राप्यः शरीरिभिः ॥ ५१

पुलस्त्य उवाच—

इत्युक्तो दैत्यसिंहस्तु प्रोवाचाम्बुजसंभवम् ॥ ५२

आडिरुवाच—

रूपस्य परिवर्तो मे यदा स्यात्पद्मसंभव । तदा मृत्युर्मम भवेदन्यथा त्वमरो ह्यहम् ॥ ५३

पुलस्त्य उवाच—

इत्युक्तस्तु तथोवाच तुष्टः कमलसंभवः । यदा द्वितीयो रूपस्य विवर्तस्ते भविष्यति ॥ ५४
तदा ते भविता मृत्युरन्यथा न भविष्यति । इत्युक्तोऽमरतां मेने दैत्यसूनुर्महाबलः ॥ ५५
तस्मिन्काले त्वसंस्मृत्य तद्वधोपायमात्मनः । प्रतीहर्तुर्दृष्टिपथं वीरकस्याभवत्तदा ॥ ५६
भुजंगरूपी रन्ध्रेण प्रविवेश दृशः पथम् । परिहृत्य गणेशस्य दानवो रौद्रदुर्जयः ॥ ५७
अलक्षितो गणेशेन प्रविश्याथ परां तनुम् । भुजंगरूपं संत्यज्य जग्राहाथ महासुरः ॥ ५८
उमारूपी रमयितुं गिरीशं मूढचेतनः । कृत्वा मायामयं रूपमप्रतर्क्यं मनोहरम् ॥ ५९
सर्वैरवयवैः पूर्णं सर्वाभिज्ञानबृंहितम् । कृत्वा भगान्तरे[1] दन्तं दैत्यो वज्रमयं दृढम् ॥ ६०
तीक्ष्णाग्रं बुद्धिमोहेन गिरीशं हन्तुमुद्यतः । कृत्वोमारूपसंस्थानं गतो दैत्यो हरान्तिकम् ॥ ६१
पापो रम्याकृतिश्चित्रभूषणाम्बरसंयुतः । तं दृष्ट्वा गिरिशस्तुष्टस्तमालिङ्ग्य महासुरम् ॥ ६२
मन्यमानो गिरिसुतां सर्वैरवयवान्तरैः । अपृच्छँत्साधुभावं ते गिरिपुत्रि न कृत्रिमम् ॥ ६३
यो[2] त्वं मदाशयं ज्ञात्वा प्राप्तेह वरवर्णिनी । त्वया विरहितं शून्यं मम स्थानं जगत्त्रयम् ॥ ६४
प्राप्ता प्रसन्नवदने युक्तमेवंविधं त्वयि । इत्युक्तो दानवेन्द्रस्तु तमभाषै[3]त्स्थितं शनैः ॥ ६५
स चाबुध्यदभिज्ञानैः प्राह त्रिपुरघातिनम् ॥ ६६

दैत्य उवाच—

याताऽस्मि तपसे बाला वरं लब्धुं तवातुलम् । रतिश्च तत्र मे नाभूत्ततः प्राप्ता त्वदन्तिकम् ॥ ६७

पुलस्त्य उवाच—

इत्युक्तः शंकरः शङ्कां कांचित्प्राप्तो विचारयन् । हृदयेन समाधाय देवः प्रहसिताननः ॥ ६८
कुपिता कुपितं बुद्ध्वा प्रकृत्या च दृढव्रता । अप्राप्तकामा संप्राप्ता किमेतत्संविजानती ॥ ६९
इति चिन्त्य हरस्तस्या अभिज्ञानं विचारयन् । नापश्यद्वामपार्श्वे तु तदङ्कं पद्मलक्षणम् ॥ ७०
लोम्नामावर्तरचितं ततो देवः पिनाकधृक् । बुद्ध्वा तां दानवीं मायामाकारं गूहयंस्ततः ॥ ७१
मेढ्रे[4] दंष्ट्रास्त्रमादाय[5] दानवं तमसादयत् । न चाबुध्यत तद्वृत्तं वीरको द्वाररक्षकः ॥ ७२
कुसुमामोदिनीदिष्टवायुना प्रतिबोधिता । दूतेन मारुतेनाऽऽशुगामिना हिमशैलजा ॥ ७३
श्रुत्वा वायुमुखाद्देवी क्रोधरक्ताविलेक्षणा । अपश्यद्वीरकं पुत्रं हृदयेनैव दूयता ॥ ७४

देव्युवाच—

---

* क्वचित्पुस्तके, साधुभावेन गिरिपुत्रि न मे कृतमिति पाठः ।

---

१ झ. भागान्तरे । २ झ. सा । ३ ञ. °षत्स्मितं । ४ झ. मेढ्रं दृष्ट्वाऽस्त्र° । ५ घ. °नी दृष्ट्वा स्त्रीरूपं दानवेश्वरम् । अपरिच्छिन्नतत्त्वार्थं शैलपुत्रीं न्यवेदयत् । दू° ।

मातरं मां परित्यज्य यस्मात्त्वं स्नेहविक्लवाम् । विहितावसरः स्त्रीणां शंकरस्य रहोविधौ ॥ ७५
तस्मात्ते मानुपे रूक्षा जडा हृदयवर्जिता । गणेशाकारसदृशा शिला माता भविष्यति ॥ ७६
निमित्त एष विख्यातो वीरकस्य सुतादरात् । संभवे[1] प्रक्रमे चैव विचित्राख्या न संशयः(?)७७

पुलस्त्य उवाच—

एवमुत्सृष्टशापाया गिरिपुत्र्यास्त्वनन्तरम् । निर्जगाम मुखात्क्रोधः सिंहरूपी महाबलः ॥ ७८
स तु सिंहः करालास्यः सटाजटिलकंधरः । ऊर्ध्वप्रोद्भूतलाङ्गूलो दंष्ट्रोत्कटमुखावटः ॥ ७९
व्यादितास्यो लम्बजिह्वः क्षामः कुक्षिगलादिषु । अस्याऽऽस्ये वर्तितुं देवी व्यवस्य(सि)तवती तदा
ज्ञात्वा मनोगतं तस्या भगवांश्चतुराननः । आजगामाऽऽश्रमपदं संपदामाश्रयं यतः ॥
आगम्योवाच देवेशो गिरिजां स्पष्टया गिरा ॥ ८१

ब्रह्मोवाच—

किं पुनः प्राप्तुकामाऽसि किमलभ्यं ददामि ते । विरम्यतामतिक्लेशात्तपसोऽस्मान्मदाज्ञया ॥ ८२

पुलस्त्य उवाच

तच्छ्रुत्वोवाच गिरिजा गुरोर्गौरवयन्त्रितम् । वाक्यं वाचा हरोद्गीर्णवर्णनिर्गमवाञ्छितम् ॥ ८३

देव्युवाच—

तपसा दुष्करेणाऽऽप्तः पतिर्वै शंकरो मया । स मां श्यामलवर्णेति बहुशः प्रोक्तवान्रहः ॥ ८४
तस्मादहं काञ्चनाभवर्णा तन्नामसंयुता । भर्तुर्भूतपतेरङ्गमेकतो निर्विघ्नं भवेत् ॥

पुलस्त्य उवाच—

तस्यास्तद्भाषितं श्रुत्वा प्रोवाच जगदीश्वरः ॥ ८५

ब्रह्मोवाच—

एवं भव त्वं भूयश्च भर्तुर्देहार्धचारिणी ॥ ८६

पुलस्त्य उवाच—

ततस्तत्याज तां कृष्णां फुल्लनीलोत्पलत्वचम् । त्वक्च साऽप्यभवद्भीमा घण्टाहस्ता त्रिलोचना
नानाभरणसंपूर्णा पीतकौशेयधारिणी । तामब्रवीत्ततो ब्रह्मा देवीं नीलाम्बुजत्विषम् ॥ ८८

ब्रह्मोवाच—

निशे भूधरजादेहसंपर्कात्त्वं मदाज्ञया । संप्राप्ता कृतकृत्यत्वमेकाऽ+[2]नंशा पुरो ह्यसि ॥ ८९
य एष सिंहः प्रोद्भूतो देव्याः क्रोधाद्वरानने । स तेऽस्तु वाहनं देवि केतौ चास्तु महाबलः॥९०
गच्छ विन्ध्याचलं तत्र सुरकार्यं करिष्यसि । पञ्चालो नाम यक्षोऽयं लक्षयक्षपदानुगः ॥
दत्तस्ते किंकरो देवि मया मायाशतैर्युतः । ९१

पुलस्त्य उवाच—

इत्युक्ता कौशिकी देवी विन्ध्यशैलं जगाम ह । उमाऽपि प्राप्तसंकल्पा जगाम गिरिशान्तिकम् ९२
प्रविशन्तीं तु तां द्वारादपहृत्य समाहितः । रुरोध वीरको देवीं हेमवेत्रलताधरः ॥ ९३
तामुवाच च कोपेन रूपत्वव्यभिचारिणीम् ॥ ९४

---

+एकान्तांशेति क्वचित्पाठः ।

---

१ ग. घ. ज. संभ्रमे । २ झ. °मेका निशा पु° ।

वीरक उवाच—

प्रयोजनं न तेऽत्रास्ति तनुं यावन्न त्यक्ष्यसि । देव्या रूपधरो दैत्यो देवं वञ्चितुमागतः ॥ ९५

प्रविष्टो न च दृष्टोऽसौ स च देवेन घातितः । घातिते चाहमाज्ञप्तो नीलकण्ठेन कोपिना ॥ ९६

द्वारे त्वनवधानं ते यस्मात्पश्यामि वै ततः । भविष्यसि न मे द्वास्थो वर्षपूगाननेकशः ॥ ९७

अतस्ते नात्र दास्यामि प्रवेशं गम्यतां द्रुतम् । एकां मुक्त्वा गिरिसुतां मातरं स्नेहवत्सलाम् ॥
प्रवेशं लभते नान्या नारी कमललोचने ॥ ९८

पुलस्त्य उवाच—

इत्युक्ता तु तदा देवी चिन्तयामास चेतसा । नारी नैव स दैतेयो वायुर्मे यामभाषत ॥ ९९

वृथैव वीरकः शप्तो मया क्रोधपरीतया । अकार्यं क्रियते मूढैः प्रायः क्रोधसमन्वितैः ॥ १००

क्रोधेन नश्यते कीर्तिः क्रोधो हन्ति स्थिरां श्रियम् । अपरिच्छिन्नतत्त्वार्था पुत्रं शापितवत्यहम् ॥

विपरीतार्थबुद्धीनां सुलभो विपदोदयः । संचिन्त्यैवमुवाचेदं वीरकं प्रति शैलजा ॥ १०२

सज्जलज्जाविकारेण वदनेनाम्बुजत्विषा ॥ १०३

देव्युवाच—

अहं वीरक ते माता न तेऽस्तु मनसो भ्रमः । शंकरस्यास्मि दयिता सुता तुहिनभूभृतः ॥ १०४

मम गात्रच्छविभ्रान्त्या मा शङ्कां पुत्र धारय । तुष्टेन गौरता दत्ता ममेयं पद्मजन्मना ॥ १०५

मया शप्तोऽस्यविदिते वृत्तान्ते दैत्यनिर्मिते । ज्ञात्वा नारीप्रवेशं तु शंकरे रहसि स्थिते ॥ १०६

न निवर्तयितुं शक्यः शापः किंतु ब्रवीमि ते । शीघ्रमेष्यसि मानुष्यात्सर्वकामसमन्वितः ॥ १०७

पुलस्त्य उवाच—

शिरसा तु ततो वन्द्य मातरं पूर्णमानसः । उवाच साध्वीं पूर्णेन्दुद्युतिं तु हिमशैलजाम् ॥ १०८

वीरक उवाच—

नतसुरासुरमौलिलसन्मणिप्रचयकान्तिकरालिनखाङ्घ्रिके ॥
नगसुते शरणागतवत्सले तव नमोऽवनतार्तिविनाशिनि ॥ १०९

तपनमण्डलमण्डितकंधरे पृथुसुवर्णनगद्युतिहारिके ।
विषमभङ्गविषंगमभीषितो गिरिसुते भवतीमहमाश्रये ॥ ११०

जगति का प्रणताभिमतां ददौ झटिति सिद्धिमृते भवतीं यथा ।
जगति कां प्रणमेच्छशिशेखरो भुवनभृन्मुनयो भवतीं यथा ॥ १११

विमलयोगविनिर्मितदुर्जयस्वतनुतुल्यमहेश्वरमण्डली ।
विदलितान्धकबान्धवसंहतिः सुरवरैः प्रथमं त्वमभिष्टुता ॥ ११२

सितसटापटलोद्धतकंधरा भवमहामृगराजरथास्थिता ॥
विमलशक्तिमुखानलपिङ्गलाऽऽयतभुजौघविपिष्टमहासुरा ॥ ११३

निगदिता भुवनैरतिचण्डिका जननि शुम्भनिशुम्भनिषूदनी ।
प्रणतचिन्तितदा भवदानवप्रशमनैकरतिस्तरसा भुवि ॥ ११४

वियति वायुपथे ज्वलनाकुलेऽवनितले तव देवि च यद्वपुः ।
तदजितेऽप्रतिमे प्रणमाम्यहं भुवनभाविनि ते भववल्लभे ॥ ११५

---

१ अ. 'त्स त्वं का' ।

१०९०

जलधयो ललितोद्धतवीचयो हुतवहद्युतिदग्धचराचरम् ।
फणसहस्रभृतश्च भुजंगमास्त्वमभिधास्यति मामभयंकरा ॥ ११६
भगवति स्थिरभक्तजनाश्रये प्रतिगतो भवतीचरणाश्रयम् ।
करणजातमिहास्तु ममाद्य वै तव विलाससुखानुभवास्पदम् ॥ ११७

पुलस्त्य उवाच—

सुप्रसन्ना ततो देवी वीरकस्येति संस्तुता । प्रविवेश शुभं भर्तुर्भवनं भूधरात्मजा ॥ ११८
द्वाःस्थोऽपि वीरको देवान्हरदर्शनकाङ्क्षिणः । व्यसर्जयत्स्वकानेव गृहानादरपूर्वकम् ॥ ११९
नास्त्यत्रावसरो देवा देव्या सह वृषाकपिः । *निभृतः क्रीडतीत्युक्ता ययुस्ते च यथागतम् १२०
गते वर्षसहस्रे तु देवास्त्वरितमानसाः । ज्वलनं चोदयामासुर्ज्ञातुं शंकरचेष्टितम् ॥ १२१
प्रविश्य पक्षिरन्ध्रेण शुकरूपी हुताशनः । ददर्श शयने शर्वं रतौ गिरिजया सह ॥ १२२
ददृशे तं च देवेशो हुताशं शुकरूपिणम् । तमुवाच महादेवः किंचित्कोपसमन्वितः ॥ १२३

शर्व उवाच—

निपिक्तमर्धं देव्यां मे वीर्यं च शुकविग्रह । लज्जया विरतिश्चास्य त्वमर्धं पिब पावक ॥ १२४
यस्मात्तु त्वत्कृते विघ्नं तस्मात्वय्युपपद्यते ॥ १२५

पुलस्त्य उवाच—

इत्युक्तः प्राञ्जलिर्वह्निरपिबद्वीर्यमाहितम् । तेनाऽऽप्लुतास्ततो देवास्तन्मुखा ऋभवो यतः ॥ १२६
विपाट्य जठरं तेषां वीर्यं माहेश्वरं ततः । निष्क्रान्तं तप्तहेमाभं वितते शंकराश्रमे ॥ १२७
तस्मिन्सरो महज्जातं विमलं बहुयोजनम् । प्रोत्फुल्लहेमकमलं नानाविहगनादितम् ॥ १२८
तच्छ्रुत्वा तु सरो देवी जातं हेममहाम्बुजम् । जगाम कौतुकाविष्टा तत्सरः कनकाम्बुजम् ॥ १२९
तत्र कृत्वा जलक्रीडां तदब्जकृतशेखरा । उपविष्टा ततस्तस्य तीरे देवी सखीवृता ॥ १३०
पातुकामा च तत्तोयं स्वादुनिर्मलपङ्कजम् । अपश्यत्कृत्तिकास्ताः सा षडर्कद्युतिसंनिभाः ॥ १३१
पद्मपत्रे तु तद्वारि गृहीत्वा प्रस्थिता गृहम् । हर्षात्सोवाच पश्यामि पद्मपत्रे स्थितं पयः ॥ १३२
ततस्ता ऊचुरखिलाः कृत्तिका हिमशैलजाम् ॥ १३३

कृत्तिका ऊचुः—

दास्यामो दयिते गर्भे संभूतो यो भविष्यति । सोऽस्माकमपि पुत्रः स्यादस्मन्नाता च वृत्तिमान्
त्रिषु लोकेषु विख्यातः सर्वेष्वपि शुभानने ॥ १३४

पुलस्त्य उवाच—

इत्युक्तोवाच गिरिजा कथं मद्गात्रसंभवैः । सर्वैरवयवैर्युक्तो भवतीभ्यः सुतो भवेत् ॥ १३५
ततस्तां कृत्तिका ऊचुर्विधास्यामोऽस्य वै वयम् । उत्तमान्युत्तमाङ्गानि यद्येवं तु भविष्यति १३[illegible]
उक्ता वै शैलजा प्राह भवत्वेवमनिन्दिताः । ततस्ता हर्षसंपूर्णाः पद्मपत्रस्थितं पयः ॥ १[illegible]
तस्यै ददुस्तया चापि तत्पीतं क्रमशो जलम् । पीते तु सलिले चैव तस्मिन्नेव क्षणे वरः ॥ १३८
विपाट्य देव्याश्च ततो दक्षिणं कुक्षिमुद्गतः । निश्चक्रामाद्भुतो बालो रोगशोकविनाशनः ॥ १३९

* निभृतमिति क्वचित्पाठः ।

१ झ. ञ. °पच्यते । २ ग. घ. ज. °वी द्रुतं हेममहाजलम् ।

प्रभाकरकरव्रातप्रकारप्रकरप्रभुः । गृहीतनिर्मलोदग्रशक्तिशूलाङ्कुशोऽनलः ॥ १४०
दीप्तो मारयितुं दैत्यानुत्थितः कनकच्छविः । एतस्मात्कारणादेव कुमारश्चापि सोऽभवत् ॥ १४१
वामं विदार्य निष्क्रान्तस्ततो देव्याः शुभः शिशुः । *स्कन्दोऽथ वदनाद्वह्नेः शुभ्रात्षड्वदनोऽरिहा
कृत्तिकासलिलादेव शाखाभिः स विशेषतः । शाखाः शिवाः समाख्याताः षड्वक्त्रेषु च विस्तृताः
यतस्ततो विशाखोऽसौ ख्यातो लोकेषु षण्मुखः । स्कन्दो विशाखः षड्वक्त्रः कार्तिकेयश्च विश्रुतः
पक्षे चैत्रस्य बहुले पञ्चदश्यां महाबलौ । संभूतावर्कसदृशौ विशाले शरकानने ॥ १४५
सिते पक्षे तु पञ्चम्यां तथैतौ पावकाननः । बालकाभ्यां चकारैकं सन्ध्यायामेव भूतये ॥ १४६
तस्यामेव ततः षष्ठ्यामभिषिक्तो गुहः प्रभुः । सर्वैरमरसंघातैर्ब्रह्मोपेन्द्रेन्द्रभास्करैः ॥ १४७
गन्धमाल्यैः शुभैर्धूपैस्तथा क्रीडनकैरपि । छत्रैश्चामरजालैश्च भूषणैश्च विलेपनैः ॥ १४८
अभिषिक्तोऽवधानेन यथावत्षण्मुखः प्रभुः । सुतामस्मै ददौ शक्रो देवसेनेति विश्रुताम् ॥ १४९
पत्न्यर्थं देवदेवस्य ददौ विष्णुरथाऽऽयुधम् । यक्षाणां दशलक्षाणि ददावस्य धनाधिपः ॥ १५०
ददौ हुताशनस्तेजो ददौ वायुश्च वाहनम् । ददौ क्रीडनकं त्वष्टा कुक्कुटं कामरूपिणम् ॥ १५१
एवं सुरास्तु ते सर्वे परिवारमनन्तकम् । ददुर्मुदितचेतस्काः स्कन्दायाऽऽदित्यवर्चसे ॥ १५२
जानुभ्यामवनौ स्थित्वा सुरसंघास्तमस्तुवन् । स्तोत्रेणानेन वरदं षण्मुखं मुख्यशः सुराः १५३

देवा ऊचुः—

नमः कुमाराय महाप्रभाय स्कन्दाय चाऽऽस्कन्दितदानवाय ॥
नवार्कबिम्बप्रतिमप्रभाय नमोऽस्तु ते षण्मुख कामरूप ॥ १५४
पिनद्धनानाभरणाय तुभ्यं नमो रणोदारमुदारसाय(?) ।
नमोऽस्तु तेऽर्कप्रतिमप्रभाय नमोऽस्तु गुह्याय गुहाय तुभ्यम् ॥ १५५
नमोऽस्तु ते लोकभयापहाय नमोऽस्तु ते लोककृपापराय ।
नमो विशालामललोचनाय नमो विशाखाय महाव्रताय ॥ १५६
नमो नमस्तेऽस्तु रणोत्कटाय नमो मयूरोज्ज्वलवाहनाय ।
नमोऽस्तु केयूरधराय तुभ्यं नमो धृतोदग्रपताकिने ते ॥
नमः प्रभावप्रणताय तेऽस्तु नमोऽस्तु घण्टाधर धैर्यशालिने ॥ १५७

कुमार उवाच—

कं वः कामं प्रयच्छामि भवतां ब्रूत निर्वृताः । यद्यप्यसाध्यं कृत्यं वो हृदये चिन्तितं चिरम् ॥

पुलस्त्य उवाच—

इत्युक्तास्तु सुरास्तेन प्रोचुः प्रणतमौलयः । सर्व एव महात्मानं गुहं मुदितमानसाः ॥ १५९

देवा ऊचुः—

दैत्येन्द्रस्तारको नाम सर्वामरकुलान्तकृत् । बलवान्दुर्जयस्तीक्ष्णो दुराचारोऽतिकोपनः ॥ १६०
तमेव जहि दुर्धर्ष दैत्यं सर्वविनाशनम् । उपस्थितः कृत्यशेषो अस्माकं च भयावहः ॥ १६१

---

* सुह्मावेति क्वचित्पाठः ।

---

१ ग. घ. °रप्रभाकारप्र° । २ ग. घ. ज. पावकानलौ । ३ ग. घ. म. °कं मद्भचोऽमरम्° । ४ ग. घ. भूपते । म. भूतले । ५ झ. °ण्टादर ।

हिरण्यकशिपुश्चोग्रो अवध्यो देवतागणैः । यज्ञघ्नः पापकर्मा वै येन ब्रह्माऽपि तापितः ॥
एतौ हरस्व भद्रं ते तावकं च महाबलम् ॥ १६२

पुलस्त्य उवाच—

एवमुक्तस्तथेत्युक्त्वा सर्वामरपदानुगः । जगाम जगतां नाथः स्तूयमानोऽमरेश्वरैः ॥ १६३
तारकस्य वधार्थाय जगतां कण्टकस्य च । ततश्च प्रेषयामास शक्रो लब्धसमाश्रयः ॥ १६४
दूतं दानवसिंहस्य परुषाक्षरवादिनम् । स तु गत्वाऽब्रवीद्दैत्यमभयो भीमदर्शनम् ॥ १६५

दूत उवाच—

शक्रस्त्वामाह देवेशो दैत्यकेतुं दिवस्पतिः । तारकासुर तच्छक्त्या घटयस्व यथेच्छया ॥ १६६
यज्जगज्ज्वलनोद्दीप्तं किल्बिषं च त्वया कृतम् । तस्याहं सादकस्तेऽद्य राजाऽस्मि भुवनत्रये ॥

पुलस्त्य उवाच—

श्रुत्वैतदद्भुतं वाक्यं कोपसंरक्तलोचनः । उवाच दूतं दुष्टात्मा नष्टप्रायविभूतिकः ॥ १६८

तारक उवाच—

दृष्टं ते पौरुषं शक्र शतशोऽथ महारणे । निस्त्रपत्वान्न ते शान्तिर्विद्यते शक्र दुर्मते ॥ १६९

पुलस्त्य उवाच—

एवमुक्ते गते दूते चिन्तयामास दानवः । नालब्धसंश्रयः शक्रो वक्तुमेवमिहार्हति ॥ १७०
जातः स्कन्दोऽधुना शक्राज्ज्ञायते समुपाश्रयात् । निमित्तानि च दुष्टानि +सोऽपश्यन्नाशवेदिनः
पांशुवर्षमसृक्पातं गगनादवनीतले । वामनेत्रप्रकम्पं च वक्त्रशोषं मनोभयम् ॥ १७२
स्वकानां वक्त्रपद्मानां म्लानतां चावलोकयत् । दुष्टांश्च प्राणिनो रौद्रान्सोऽपश्यद्दुष्टवादिनः १७३
तदचिन्त्यैव दितिजो न्यस्तचित्तोऽभवत्क्षणात् । यावद्गजघटाघण्टाझणत्काररवोत्कटाम् ॥ १७४
तद्वत्तुरंगसंघातहेषोत्साहविभूषिताम् । सैन्यैः सेनाबलोदग्रध्वजराजिविराजिताम् ॥ १७५
विमानैश्चाद्भुताकारैश्चलितामलचामरैः । विभूषणविनद्धां च किंनरोद्गीतनादिताम् ॥ १७६
नानानाकतरूत्फुल्लकुसुमापीडधारिणीम् । विशोकास्त्रपरिस्फारचर्मनिर्मलदर्शिनीम् ॥ १७७
विद्युत्घुष्टद्युतिधरां नानावाद्यविनादिताम् । सेनां नाकसदां दैत्यः प्रासादस्थो व्यलोकयत् १७८
संचिन्तयामास तदा किंचिद्विभ्रान्तमानसः । अपूर्वः को भवेद्योद्धा यो मया न विनिर्जितः ॥
ततश्चिन्ताकुलो दैत्यः शुश्राव कटुकाक्षरम् । सिद्धवन्दिभिरुद्घुष्टमिदं हृदयदारुणम् ॥ १८०

वन्दिन ऊचुः—

जयातुलशक्तिदीधितिपञ्जरभुजदण्डप्रचण्डतररभस सुरवदनकुमुदविकाशन विलासनेत्र कुमारवर ॥ १८१

जय दितिजकुलमहोदधिवडवानल मधुररव मधुरमयूररथ सुरमुकुटकोटिकुञ्चितचरणनखाङ्कुर महासेन ॥ १८२

जय चलितललितचूडाकलाप नवविमलकमलदलकान्त दैत्येशवंशदुःसहदानवानल १८३

---

+ सोऽपश्यन्नाशवेदित इति क्वचित्पाठः ।

---

१ ग. घ. 'विशुद्धां ।

जय विशाख विभो जय बाल सप्तवासर भुवनावलिशोकशमन जय सकललोक दितिसुतधुरंधरनाशक स्कन्द ॥ १८४

पुलस्त्य उवाच—

श्रुत्वैतत्तारकः सर्वमुद्घुष्टं देववन्दिभिः । सस्मार ब्रह्मणो वाक्यं वधं बालादुपस्थितम् ॥ १८५

स्मृत्वा धर्मौघविध्वंसी पदा वीरपदानुगः । मन्दिराभिर्जगामाऽऽशु शोकग्रस्तेन चेतसा ॥ १८६

कालनेमिमुखा दैत्याः संत्रस्ता भ्रान्तचेतसः । स्वेष्वनीकेषु च तदा त्वराविस्मितचेतसः ॥

हिरण्यकशिपुं प्राह दानवानां धुरंधरः । १८७

तारक उवाच—

त्रपाकरं भवेन्मह्यं बालस्यास्य पलायनम् । यद्यहं हन्तवे(न्तुमा)यामि सोऽपि वै कमलाश्रितः ॥

हत्वाऽहं बालकं चैनं दुःस्पर्शः स्यामकारणम् । यात धावत गृह्णीत योजयध्वं वरूथिनीम् १८९

पुलस्त्य उवाच—

कुमारं तारको दृष्ट्वा बभाषे भीषणाकृतिः ॥ १९०

तारक उवाच—

किं बाल योद्धुकामोऽसि क्रीड कन्दुकलीलया । येनाऽऽतपो निसृष्टस्ते सत्संगरविभाषक ॥

बालत्वादथ ते बुद्धिरेवं स्वल्पार्थदर्शिनी । १९१

पुलस्त्य उवाच—

कुमारोऽपि तमग्रस्थं बभाषे हर्षवत्तरम् ॥ १९२

कुमार उवाच—

शृणु तारक शास्त्रार्थमि(इ)ह वै न निरूप्यते । शस्त्रैरर्था नु दृश्यन्ते समरे निर्भरं भये ॥ १९३

शिशुत्वं माऽवमंस्था मे शिशुः कष्टो भुजंगमः । दुष्प्रेक्ष्यो भास्करो बालस्तथाऽहं दुर्जयः शिशुः

अल्पाक्षरो न मन्त्रः किं सस्फुरो दैत्य दृश्यते । १९४

पुलस्त्य उवाच—

कुमारे प्रोक्तवत्येवं दैत्यश्चिक्षेप मुद्गरम् । कुमारस्तं निरासोग्रं चक्रेणामोघवर्चसा ॥ १९५

ततश्चिक्षेप दैत्येन्द्रो भिन्दिपालमयोमयम् । करेण तं च जग्राह कार्तिकेयोऽमरारिहा ॥ १९६

गदां मुमोच दैत्याय समुत्थाय खरस्वनीम् । तया हतस्ततो दैत्यश्चकम्पेऽचलराडिव ॥ १९७

मेने च दुर्जयं दैत्यस्तदा बालं सुदुःसहम् । चिन्तयामास बुद्ध्या वै प्राप्तः कालो न संशयः १९८

कम्पितं च समालोक्य कालनेमिपुरोगमाः । सर्वे दैत्येश्वरा जघ्नुः कुमारं रणदारुणम् ॥ १९९

स तैः प्रहारैरस्पृष्टस्तथा क्लेशैर्महाद्युतिः । स बालो बलिभिर्वेगैरयुध्यद्दानवान्रणे ॥ २००

रणशौण्डाश्च दैत्येन्द्राः पुनर्जघ्नुः शिलीमुखैः । कुमारं समरे दैत्या बलिनो देवकण्टकाः ॥ २०१

कुमारस्य व्यथा मा भूद्दैत्यास्त्रनिहतस्य तु । प्राणान्तकरणं जातं देवानां दानवाहवम् ॥ २०२

देवान्निपीडितान्दृष्ट्वा कुमारः(रं) कोपमा(आ)विशत् । ततोऽस्त्रैर्दारयामास दानवानामनीकिनीम्

तैरस्त्रैर्निष्प्रतीकारैस्ताडिताः सुरकण्टकाः । कालनेमिमुखाः सर्वे रणे ह्यासन्पराङ्मुखाः ॥ २०४

---

१ घ. ज. °त्वाऽधर्मौघध्वस्ताङ्गः प° । २ ग. येन तन्वोर्निसृष्टस्ते सत्संगरविभीषकाः । बा° । घ. येनानयो निसृष्टस्ते सत्संगरविभीषकाः । बा° । झ. येनाऽऽतपो निसृष्टस्ते सत्संगरविभीषक । बा° ।

विद्रुतेषु च दैत्येषु प्रहतेषु समन्ततः। किंनरोद्गारगीतैश्च हास्यसंन्यस्तचेतनः ॥ २०५
जघ्ने कुमारं गदया निष्टप्तकनकत्विषा। शरैर्मयूरं चित्रैश्च चकार विमुखं रणे ॥ २०६
दृष्ट्वा पराङ्मुखं देवो मुक्तरक्तं स्ववाहनम्। जग्राह शक्तिं विमलां रणे कनकभूषणाम् ॥ २०७
बाहुना हेमकेयूररुचिरेण षडाननः। ततोऽब्रवीन्महासेनस्तारकं दानवाधिपम् ॥ २०८

महासेन उवाच—

तिष्ठ तिष्ठ सुदुर्बुद्धे जीवँल्लोकं विलोकय। हतो ह्यसि मया शक्त्या स्मर त्वं दैत्य चेष्टितम् २०९

पुलस्त्य उवाच—

इत्युक्त्वा तु ततः शक्तिं मुमोच दितिजं प्रति। सा कुमारभुजोत्सृष्टा तत्केयूररवानुगा ॥ २१०
बिभेद दैत्यहृदयं वज्रशैलेन्द्रकर्कशम्। गतासुः स पपातोर्व्यां प्रलये भूधरो यथा ॥ २११
विकीर्णमुकुटोष्णीषो विस्रस्ताखिलभूषणः। तस्मिन्विनिहते दैत्ये दानवानां धुरंधरे ॥ २१२
नाभूत्कश्चित्तदा दुःखी नरकेष्वपि पापकृत्। स्तुवन्तः षण्मुखं देवाः प्राक्रीडन्नागतस्मृताः ॥ २१३
जग्मुः स्वानेव भुवनान्निरस्याऽऽसं(र्धीं)स्तथोत्सुकाः। ददुश्चापि वरं सर्वे देवाश्च षण्मुखं प्रति ॥
तुष्टाः संप्राप्तसर्वार्थाः सह सिद्धैस्तपोधनैः ॥ २१४

देवा ऊचुः—

यः पठेत्स्कन्दसंबन्धां कथामेतां महामतिः। शृणुयाच्छ्रावयेद्वाऽपि स भवेत्कीर्तिमान्नरः ॥ २१५
बह्वायुः सुभगः श्रीमान्कान्तिमाञ्शुभदर्शनः। भूतेभ्यो निर्भयश्चापि सर्वदुःखविवर्जितः ॥ २१६
संध्यामुपास्य यः पूर्वां स्कन्दस्य चरितं पठेत्। स युक्तः किंनरैः सर्वैर्महाधनपतिर्भवेत् ॥ २१७

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे तारकवधनिरूपणं नामैकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२८१७९

---

अथ द्विचत्वारिंशत्तमोऽध्यायः।

---

भीष्म उवाच—

इदानीं श्रोतुमिच्छामि हिरण्यकशिपोर्वधम्। नरसिंहस्य माहात्म्यं तथा पापविनाशनम् ॥ १

पुलस्त्य उवाच—

पुरा कृतयुगे राजन्हिरण्यकशिपुः प्रभुः। दैत्यानामादिपुरुषश्चकार सुमहत्तपः ॥ २
दश वर्षसहस्राणि दश वर्षशतानि च। जलवासी समभवत्स्नानमौनधृतव्रतः ॥ ३
ततः शमदमाभ्यां च ब्रह्मचर्येण चैव हि। ब्रह्मा प्रीतोऽभवत्तस्य तपसा नियमेन च ॥ ४
ततः स्वयंभूर्भगवान्स्वयमागत्य तत्र हि। विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥ ५
आदित्यैर्वसुभिः साध्यैर्मरुद्भिर्दैवतैः सह। रुद्रैर्विश्वसहायैश्च यक्षराक्षसपन्नगैः ॥ ६
दिग्भिश्चैव विदिग्भिश्च नदीभिः सागरैस्तथा। नक्षत्रैश्च मुहूर्तैश्च खचरैश्च महाग्रहैः ॥ ७
देवैर्ब्रह्मर्षिभिः सार्धं सिद्धैः सप्तर्षिभिस्तथा। राजर्षिभिः पुण्यकृद्भिर्गन्धर्वाप्सरसां गणैः ॥ ८
चराचरगुरुः श्रीमान्वृतः सर्वैर्दिवौकसैः। ब्रह्मा ब्रह्मविदां श्रेष्ठो दैत्यं वचनमब्रवीत् ॥ ९

---

१ ग. ज. जीवलोकं। २ ग. घ. 'वत्स्थान'।

ब्रह्मोवाच—

प्रीतोऽस्मि तव भक्तस्य तपसाऽनेन सुव्रत । वरं वरय भद्रं ते यथेष्टं काममाप्नुहि ॥ १०

हिरण्यकशिपुरुवाच—

न देवासुरगन्धर्वा न यक्षोरगराक्षसाः । न मानुषाः पिशाचाश्च हन्युर्मां देवसत्तम ॥ ११
ऋषयो मानवाः शापैर्न शपेयुः पितामह । यदि मे भगवान्प्रीतो वर एष वृतो मया ॥ १२
न शस्त्रेण न चास्त्रेण गिरिणा पादपेन वा । न शुष्केण न चाऽऽर्द्रेण न स्याच्चान्येन मे वधः १३
भवेयमहमेवार्कः सोमो वायुर्हुताशनः । सलिलं चान्तरिक्षं च नक्षत्राणि दिशो दश ॥ १४
अहं क्रोधश्च कामश्च वरुणो वासवो यमः । धनदश्च धनाध्यक्षो यक्षः किंपुरुषाधिपः ॥ १५

ब्रह्मोवाच—

एष दिव्यो वरस्तात मया दत्तस्तवाद्भुतः । सर्वकामप्रदो वत्स प्राप्स्यसि त्वं न संशयः ॥ १६

पुलस्त्य उवाच—

एवमुक्त्वा स भगवाञ्जगामाऽऽकाशमेव हि । वैराजं ब्रह्मसदनं ब्रह्मर्षिगणसेवितम् ॥ १७
ततो देवाश्च गन्धर्वा ऋषिभिः सह चारणाः । वरप्रदानं श्रुत्वैवं पितामहमुपस्थिताः ॥ १८

देवा ऊचुः—

वरप्रदानाद्भगवन्वधिष्यति स नोऽसुरः । तत्प्रसादश्च भगवन्वधोऽप्यस्य विचिन्त्यताम् ॥ १९

पुलस्त्य उवाच—

भगवान्सर्वभूतानामादिकर्ता स्वयं प्रभुः । स्रष्टा च हव्यकव्यानामव्यक्तः प्रकृतिः(तेः) परः २०
सर्वलोकहितं वाक्यं श्रुत्वा देवः प्रजापतिः । आश्वासयामास तदा सुशीतैर्वचनाम्बुभिः ॥ २१

ब्रह्मोवाच—

अवश्यं त्रिदशानेन प्राप्तव्यं तपसः फलम् । तपसोऽन्तेऽस्य भगवान्स्वयं विष्णुः *करिष्यति ॥

पुलस्त्य उवाच—

तच्छ्रुत्वा विबुधा वाक्यं सर्वे पङ्कजजाननात् । स्वानि स्थानानि दिव्यानि विप्रजग्मुर्मुदाऽन्विताः
लब्धमात्रे वरे सोऽथ सर्वा अबाधत प्रजाः । हिरण्यकशिपुर्दैत्यो वरदानेन गर्वितः ॥ २४
आश्रमेषु महाभागान्मुनीन्वै संशितव्रतान् । सत्यधर्मपरान्दान्तान्धर्षयामास दानवः ॥ २५
देवांस्त्रिभुवनस्थांश्च पराजित्य महासुरः । त्रैलोक्यं वशमानीय स्वर्गे वसति दानवः ॥ २६
तदा वरमदोत्सिक्तश्चोदितः +कालधर्मिणा(?) । यज्ञियानकरोद्दैत्यानयज्ञीयांश्च दैवतान् ॥ २७
यथाऽऽ(दाऽऽ)दित्याश्च साध्याश्च विश्वे च वसवस्तथा । रुद्रा देवगणा यक्षा देवद्विजमहर्षयः २८
शरण्यं शरणं विष्णुमुपतस्थुर्महाबलम् । देवदेवं यज्ञमयं वासुदेवं सनातनम् ॥ २९

देवा ऊचुः—

नारायण महाभाग देवास्त्वां शरणं गताः । त्रायस्व जहि दैत्येन्द्रं हिरण्यकशिपुं प्रभो ॥ ३०
त्वं हि नः परमो धाता त्वं हि नः परमो गुरुः । त्वं हि नः परमो देवो ब्रह्मादीनां सुरोत्तमः ॥

विष्णुरुवाच—

भयं त्यजध्वममरा अभयं वो ददाम्यहम् । तथैव त्रिदिवं देवाः प्रतिपद्यत मा चिरम् ॥ ३२

---

* कृञ्हिंसायामिति क्र्यादे रूपमिदम् । + कालधर्मणेति पाठः ।

---

१ ग. घ. कालब्ध । २ घ. पङ्कजजन्मनः ।

एनं हि सगणं दैत्यं वरदानेन गर्वितम् । अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहम् ॥ ३३

पुलस्त्य उवाच—

एवमुक्त्वा तु भगवान्विश्वपो विष्णुरव्ययः । हिरण्यकशिपुस्थानं जगाम हरिरीश्वरः ॥ ३४
तेजसा भास्कराकारः शशी कान्त्येव चापरः । नरस्य कृत्वाऽर्धततुं सिंहस्यार्धततुं तथा ॥ ३५
नारसिंहेन वपुषा पाणी संगृह्य पाणिना । ततोऽपश्यत विस्तीर्णां दिव्यां रम्यां मनोरमाम् ॥ ३६
सर्वकामयुतां शुभ्रां हिरण्यकशिपोः सभाम् । विस्तीर्णां योजनशतं शतमध्यर्धमायताम् ॥ ३७
वैहायसीं कामगमां पञ्चयोजनमुच्छ्रिताम् । जराशोकक्षमापेतां निष्प्रकम्पां शिवां सुखाम् ॥ ३८
वेश्मासनवतीं रम्यां ज्वलन्तीमिव तेजसा । अन्तःसलिलसंयुक्तां विहितां विश्वकर्मणा ॥ ३९
दिव्यवर्णमयैर्वृक्षैः फलपुष्पप्रदैर्युताम् । नीलपीतासितश्यामैः श्वेतैर्लोहितकैरपि ॥ ४०
अवंदातैस्तथा गुल्मै रक्तमञ्जरिधारिभिः । सिताभ्रघनसंकाशां प्लवन्ती चाभ्यदृश्यत ॥ ४१
रश्मिमती स्वभावेन दिव्यगन्धमनोरमा । न सुखा न च दुःखा सा न शीता न च घर्मदा ॥ ४२
न क्षुत्पिपासे ग्लानिं वा प्राप्य तां प्राप्नुवन्ति ते । नानारूपैरुपकृतां सुचित्रैश्च शुभ(सुभा)स्वरैः
अति चन्द्रं च सूर्यं च शिखिनं च स्वयंप्रभा । दीप्यते नाकपृष्ठस्था भासयन्ती च भासुरा ॥ ४४
सर्वे चकासिरे तस्यां मुदिताश्चैव मानुषाः । रसवन्तः प्रभूताश्च भक्ष्यभोज्यान्नमुत्तमम् ॥ ४५
पुण्यगन्धाः स्रजश्चापि नित्यकालफलद्रुमाः । उष्णे शीतानि तोयानि शीते चोष्णानि सन्ति वै ॥
पुष्पिताग्रान्महाशाखान्प्रवालाङ्कुरधारिणः । लतावितानसंछन्नान्कल्पयामास स प्रभुः ॥ ४७
गन्धवन्ति च पुष्पाणि रसवन्ति फलानि च । तानि शीतानि चोष्णानि तत्र तत्र सरांसि च ४८
अपश्यंद्भूप तीर्थानि सभायां तस्य स प्रभुः । नलिनैः पुण्डरीकैश्च शतपत्रैः सुगन्धिभिः ॥ ४९
रक्तैः कुवलयैश्चैव कह्लारैरुत्पलैस्तथा । नानाश्चर्यसमोपेतैः पुष्पैरन्यैश्च सुप्रियैः ॥ ५०
कारण्डवैश्चक्रवाकैः सारसैः कुररैरपि । विमलस्फटिकाभानि पाण्डुरच्छदनैर्द्विजैः ॥ ५१
बहुहंसोपगीतानि सारसानां रुतानि च । गन्धवत्यो लतास्तत्र पुष्पमञ्जरिधारिणीः ॥ ५२
दृष्टवान्भगवान्हृष्टः खदिरान्वेतसार्जुनान् । चूता निम्बा नागवृक्षाः कदम्बा बकुला धवाः ॥ ५३
प्रियंगवः पाटलाख्याः शाल्मल्यः सहरिद्रवाः । शालास्तालास्तमालाश्च चम्पकाश्च मनोरमाः ॥
तथैवान्ये व्यराजन्त सभायां पुष्पिता द्रुमाः । एलाककुभकङ्कोललवलीबीजपूरकाः ॥ ५५
मधुकाः कोविदाराश्च बहुतालसमुच्छ्रयाः । अञ्जनाशोकपर्णासा बहवश्चित्रका द्रुमाः ॥ ५६
वरुणाश्च पलाशाश्च पनसाः सह चन्दनैः । नीलाः सुमनसश्चैव नीपाश्चाश्वत्थतिन्दुकाः ॥ ५७
पारिजाताश्च तरवो मल्लिका भद्रदारवः । अटरूषाः पीलुकाश्च तथा वै चैलवालुकाः ॥ ५८
मन्दारकाः कुरबकाः पतङ्गाः कुटजास्तथा । रक्ताः कुरबकाश्चैव नीलाश्चागुरुभिः सह ॥ ५९
किंशुकाश्चैव भव्याश्च दाडिमा बीजपूरकाः । कालीयका दुकूलाश्च हिङ्गवस्तैलवर्तिकाः ॥ ६०
खर्जूरा नालिकेराश्च हरीतकमधूककाः । सप्तपर्णाश्च बिल्वाश्च सयावाश्च शरावताः ॥ ६१
असनाश्च तमालाश्च नानागुल्मसमावृताः । लताश्च विविधाकाराः पुष्पपत्रफलोपगाः ॥ ६२
एते चान्ये च बहवस्तत्र काननजा द्रुमाः । नानापुष्पफलोपेता व्यराजन्त समन्ततः ॥ ६३
चकोराः शतपत्राश्च मत्तकोकिलसारिकाः । पुष्पितान्पुष्पिताग्रांश्च संपतन्ति महाद्रुमान् ॥ ६४
रक्तपीतारुणास्तत्र पादपाग्रगताः खगाः । परस्परमवैक्षन्त प्रहृष्टा जीवजीवकाः ॥ ६५

१ ग. घ. ज. °वतानैस्त° । २ ग. °श्यद्भूप° ।

तस्यां सभायां दैत्येन्द्रो हिरण्यकशिपुस्तदा । आसीन आसने चित्रे दशनल्वप्रमाणतः ॥ ६६
दिवाकरनिभे दिव्ये दिव्यास्तरणसंस्तृते । हिरण्यकशिपुर्दैत्य आस्ते ज्वलितकुण्डलः ॥ ६७
उपाचेरुर्महादैत्या हिरण्यकशिपुं तदा । दिव्यतालानि गीतानि जगुर्गन्धर्वसत्तमाः ॥ ६८
विश्वाची सहजन्या च प्रम्लोचेति च विश्रुताः । दिव्याऽथ सौरभेयी च समीची पुञ्जिकस्थला[1];
मिश्रकेशी च रम्भा च चित्रभा श्रुतिविभ्रमा । चारुनेत्रा[2] घृताची च मेनका चोर्वशी तथा ॥ ७०
एताः सहस्रशश्चान्या नृत्यगीतविशारदाः । उपातिष्ठन्त राजानं हिरण्यकशिपुं प्रभुम् ॥ ७१
उपासते दितेः पुत्राः सर्वे लब्धवरास्तथा । बलिर्वैरोचनिस्तत्र नरकः पृथिवीसुतः ॥ ७२
प्रह्लादो विप्रचित्तिश्च गविष्ठश्च महासुरः । सुरहन्ता दुःखकर्ता सुमनाः सुमतिस्तथा ॥ ७३
घटोदरो महापार्श्वः क्रथनः पिठरस्तथा । विश्वरूपः सुरूपश्च विश्वकायो महाबलः ॥ ७४
दशग्रीवश्च वाली च मेघवासा महासुरः । घैटाभो[3] विटरूपश्चै[4] ज्वलनश्चेन्द्रतापनः ॥ ७५
दैत्यदानवसंघास्ते सर्वे ज्वलितकुण्डलाः । स्रग्विणो वाँग्मिणः[5] सर्वे सर्वे चँ[6] चरितव्रताः ॥ ७६
सर्वे लब्धवराः शूराः सर्वे विहितमृत्यवः । एते चान्ये च बहवो हिरण्यकशिपुं प्रभुम् ॥ ७७
उपासते महात्मानं सर्वे दिव्यपरिच्छदाः । विमानैर्विविधाकारैर्भ्राजमानैरिवाग्निभिः ॥ ७८
महेन्द्रवपुषः सर्वे विचित्राङ्गदबाहवः । भूषिताङ्गा दितेः पुत्रास्तमुपासत सर्वतः ॥ ७९
[*तस्यां सभायां दिव्यायामसुराः सर्वतोत्तमाः । हिरण्यकशिपोः सर्वे दिवाकरसमप्रभाः ।
न श्रुतं नैव नो दृष्टं हिरण्यकशिपोर्यथा ] । ऐश्वर्यं दैत्यसिंहस्य यथा तस्य महात्मनः ॥
न श्रुतं नैव दृष्टं च कस्यापि भुवनत्रये ॥ ८१

रजतकनकचित्रवेदिकायां परिकृतरत्नविचित्रवीथिकायाम् ।
स ददर्श मृगाधिपः सभायां सुरुचिरजालगवाक्षशोभितायाम् ॥ ८२
कनकवलयहारभूषिताङ्गं दितितनयं स मृगाधिपो ददर्श ।
दिवसकरकरप्रभं ज्वलन्तं दितिजसहस्रशतैर्निषेव्यमाणम् ॥ ८३

ततो दृष्ट्वा महाभागं कालचक्रमिवाऽऽगतम् । नारसिंहवपुश्छन्नं भस्मच्छन्नमिवानलम् ॥ ८४
हिरण्यकशिपोः पुत्रः प्रह्लादो नाम वीर्यवान् । दिव्येन वपुषा सिंहमपश्यद्देवमागतम् ॥ ८५
तं दृष्ट्वा रुक्मशैलाभमपूर्वां तनुमाश्रितम् । विस्मिता दानवाः सर्वे हिरण्यकशिपुश्च सः ॥ ८६

प्रह्लाद उवाच—

महाराज महाबाहो दैत्यानामादिसंभव । न श्रुतं नैव मे दृष्टं नारसिंहमिदं वपुः ॥ ८७
अँव्यक्तं[7] परमं दिव्यं किमिदंरूपमागतम् । दैत्यान्तकरणं घोरं शंसतीव मनो मम ॥ ८८
अस्य देवाः शरीरस्थाः सागराः सरितस्तथा । हिमवान्पारियात्रश्च ये चान्ये कुलपर्वताः ॥ ८९
चन्द्रमाश्च सनक्षत्रैरा(त्र आ)दित्या रश्मिभिः सह । धनदो वरुणश्चैव यमः शक्रः शचीपतिः ९०
मरुतो देवगन्धर्वा ऋषयश्च तपोधनाः । नागा यक्षाः पिशाचाश्च राक्षसा भीमविक्रमाः ॥ ९१
ब्रह्मा[8] देवाः[9] पशुपतिर्ललाटस्था भ्रमन्ति हि । स्थावराणि च सर्वाणि जङ्गमानि तथैव च ॥९२

---

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

---

१ झ. ॅज्ञिकीस्थ । २ ग. घ. ज. चारुमन्द्रा । ३ ग. घ. ज. घण्टाभो । ४ ग. घ. ज. ॅश्च प्रयातश्चे । ५ ग. घ. ज. वाग्मिनः । ६ झ. ञ. च त्वरि । ७ ग. घ. ज. अव्यक्तप्रभवं दि । ८ ग. ॅमाः । वीरो देवः प । ९ घ. देवः ।

 

र्वांश्च सहितोऽस्माभिः सर्वैर्दैत्यगणैर्वृतः । विमानशतसंकीर्णा सर्वा या भवतः सभा ॥ ९३
र्वं त्रिभुवनं राजल्लोकधर्मश्च शाश्वतः । दृश्यते नरसिंहेऽस्मिंस्तथेदं निखिलं जगत् ॥ ९४

प्रजापतिश्चात्र मनुर्महात्मा ग्रहाश्च योगाश्च मही नभश्च ।
उत्पातकालश्च धृतिर्मतिश्च रतिश्च सत्यं च तपो दमश्च ॥ ९५
सनत्कुमारश्च महानुभावो विश्वे च देवा ऋषयश्च सर्वे ।
क्रोधश्च कामश्च तथैव हर्षो दर्पश्च मोहः पितरश्च सर्वे ॥ ९६

पुलस्त्य उवाच—

प्रह्लादस्य वचः श्रुत्वा हिरण्यकशिपुः प्रभुः । उवाच दानवान्सर्वान्गणांश्च सगणाधिपः ॥ ९७

हिरण्यकशिपुरुवाच—

मृगेन्द्रो गृह्यतामेष अपूर्वां तनुमास्थितः । यदि वा संशयः कश्चिद्वध्यतां वनगोचरः ॥ ९८

पुलस्त्य उवाच—

ते दानवगणाः सर्वे मृगेन्द्रं भीमविक्रमम् । परिक्षिपन्तो मुदितास्त्रासयामासुरोजसा ॥ ९९
सिंहनादं विमुच्याथ नरसिंहो महाबलः । बभञ्ज तां सभां सर्वां व्यादितास्य इवान्तकः॥ १००
सभायां भज्यमानायां हिरण्यकशिपुः स्वयम् । चिक्षेपास्त्राणि सिंहस्य रोषव्याकुललोचनः १०१
सर्वास्त्राणामथ श्रेष्ठं दण्डमस्त्रं सुदारुणम् । कालचक्रं तथा घोरं विष्णुचक्रं तथाऽपरम् ॥ १०२
पैतामहं तथाऽत्युग्रं त्रैलोक्यनिर्मितं महत् । विचित्रामशनिं चैव शुष्कार्द्रे चाशनिद्वयम् ॥ १०३
रौद्रं तथोग्रशूलं च हुंकारं मुशलं तथा । अस्त्रं ब्रह्मशिरश्चैव ब्राह्ममस्त्रं तथैव च ॥ १०४
नारायणास्त्रमैन्द्रं च आग्नेयं शैशिरं तथा । वायव्यं मन्थनं चैव कपालमथ किंकरम् ॥ १०५
तथाऽप्रतिहतां शक्तिं क्रौञ्चमस्त्रं तथैव च । [*अस्त्रं ब्रह्मशिरश्चैव सोमास्त्रं शैशिरं तथा] ॥ १०६
मोहनं शोषणं चैव संतापनविलापनम् । कम्पनं शातनं चैव महास्त्रं चैव रोधनम् ॥ १०७
कालमुद्गरमक्षोभ्यं तापनं च महाबलम् । संवर्तनं मोहनं च तथा मायाधरं वरम् ॥ १०८
गान्धर्वमस्त्रं दयितमसिरत्नं च नन्दकम् । प्रस्वापनं प्रमथनं वारुणं चास्त्रमुत्तमम् ॥ १०९
अस्त्रं पाशुपतं चैव यस्याप्रतिहता गतिः । एतान्यस्त्राणि दिव्यानि हिरण्यकशिपुस्तदा ॥ ११०
असृजन्नरसिंहस्य दीप्तस्याग्नेरिवाऽऽहुतिम् । अस्त्रैः प्रज्वलितैः सिंहमावृणोदसुरोत्तमः ॥ १११
विवस्वान्घर्मसमये हिमवन्तमिवांशुभिः । स ह्यमर्षानिलोद्धूतो दैत्यानां सैन्यसागरः ॥ ११२
क्षणेनाऽऽप्लावयत्सर्वं मैनाकमिव सागरः । प्रासैः पाशैश्च खड्गैश्च गदाभिर्मुसलैस्तथा ॥ ११३
वज्रैरशनिभिश्चैव बहुशाखैर्महाद्रुमैः । मुद्गरैः कूटपाशैश्च शिलोलूखलपर्वतैः ॥
शतघ्नीभिश्च दीप्ताभिर्दण्डैरपि सुदारुणैः । ११४

ते दानवाः पाशगृहीतहस्ता महेन्द्रतुल्याशनितुल्यवेगाः ।
समन्ततोऽभ्युद्यतबाहुकायाः स्थिताः सशीर्षा इव नागपोताः ॥ ११५
सुवर्णमालाकुलभूषिताङ्गाः सुतीक्ष्णदंष्ट्राकुलवक्त्रगर्ताः ।
स्फुरत्प्रभास्ते च सम्भ्रङ्गदेहाश्चीनांशुका(?) भान्ति यथैव हंसाः ॥ ११६

सोऽसृजद्दानवो मायामग्निं वायुसमीरितम् । तमिन्द्रस्तोयदैः सार्धं सहस्राक्षो महाद्युतिः ॥ ११७

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

१ घ. ज. अपूर्वं सत्त्वमागतम् । य° । २ घ. ज. °त्वाग्नु° । ३ घ. ज. भावनं ।

महता तोयवर्षेण शमयामास पावकम् । तस्यां प्रतिहतायां तु मायायां युधि दानवः ॥ ११८
असृजद्घोरसंकाशं तमस्तीव्रं समन्ततः । तमसा संवृते लोके दैत्येष्वात्तायुधेषु च ॥ ११९
स्वतेजसा परिवृतो दिवाकर इवोद्गतः । त्रिशिखां भृकुटीं चास्य ददृशुर्दानवा रणे ॥ १२०
ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव । ततः सर्वासु मायासु हतासु दितिनन्दनाः ॥ १२१
हिरण्यकशिपुं दैत्या विषण्णाः शरणं ययुः । ततः प्रज्वलितः क्रोधात्प्रदहन्निव तेजसा ॥ १२२
तस्मिन्क्रुद्धे तु दैत्येन्द्रे तमोभूतमभूज्जगत् । आवहः प्रवहश्चैव विवहोऽथ समीरणः ॥ १२३
परावहः संवहश्च उद्वहश्च महाबलः । तथा परिवहः श्रीमानुत्पातभयशंसिनः ॥ १२४
इत्येवं क्षुभिताः सप्त मरुतो गगनेचराः । ये ग्रहाः सर्वलोकस्य क्षये प्रादुर्भवन्ति हि ॥ १२५
ते सर्वे गगने हृष्टा व्यचरंश्च यथासुखम् । अयोगतश्चाप्यचरद्योगं निशि निशाचरः ॥ १२६
सग्रहः सह नक्षत्रैस्तारापतिररिंदम । विवर्णतां च भगवान्गतो दिवि दिवाकरः ॥ १२७
कृष्णः कवन्धश्च तदा लक्ष्यते सुमहान्दिवि । असृजच्चासितां सूर्यो धूमवर्तिं विभावसुः ॥ १२८
गगनस्थश्च भगवानभीक्ष्णं परिविष्यते । सप्त धूमनिभा घोराः सूर्या दिवि समुत्थिताः ॥ १२९
सोमस्य गगनस्थस्य ग्रहास्तिष्ठन्ति शृङ्गगाः । वामे च दक्षिणे चैव स्थितौ शुक्रबृहस्पती ॥ १३०
शनैश्चरो लोहिताङ्गो लोहिताङ्गसमद्युतिः । समं समधिरोहन्त सर्वे वै गगनेचराः ॥ १३१
शृङ्गाणि शनकै[1]र्घोरा युगान्तावर्तनग्रहाः । चन्द्रमाश्च सनक्षत्रो ग्रहैः सह तमोनुदः ॥ १३२
चराचरविनाशाय रोहिणीं नाभ्यनन्दत । गृहीतो राहुणा चन्द्र उल्काभिरभिहन्यते ॥ १३३
उल्काः प्रज्वलिताश्चन्द्रे व्यचरन्त यथासुखम् । देवानामधिपो देवः सोऽप्यवर्षत शोणितम् १३४
अपतद्गगनादुल्का विद्युद्रूपा महास्वना । अकाले च द्रुमाः सर्वे पुष्प्यन्ति च फलन्ति च॥ १३५
लताश्च सफलाः सर्वा या आहुर्दैत्यनाशिकाः । फले फलान्यजायन्त पुष्पे पुष्पं तथैव च १३६
उन्मीलन्ति निमीलन्ति हसन्ति प्ररुदन्ति च । विक्रोशन्ति च गम्भीरं धूमायन्ते ज्वलन्ति च ॥
प्रतिमाः सर्वदेवानां कथयन्त्यो महद्भयम् । आरण्यैः सह संसृष्टा ग्राम्याश्च मृगपक्षिणः ॥ १३८
चुक्रुशुर्भैरवं तत्र मृगयुद्ध उपस्थिते । नद्यश्च प्रतिकूलानि वहन्ति कलुषोदकाः ॥ १३९
न प्रकाशन्ति च दिशो रक्तरेणुसमाकुलाः । वानस्पत्या न पूज्यन्ते पूजनार्हाः कथंचन ॥ १४०
वायुवेगेन हन्यन्ते भज्यन्ते प्रणमन्ति च । तथा च सर्वभूतानां छाया न परिवर्तते ॥ १४१
अपरेण गते सूर्ये सलोकानां युगक्षये । तदा हिरण्यकशिपोर्दैत्यस्योपरिवेश्मनः ॥ १४२
भाण्डागारे युधागारे निविष्टमभवन्मधु । असुराणां विनाशाय सुराणां विजयाय च ॥ १४३
दृश्यन्ते विविधोत्पाता घोरा घोरनिदर्शनाः । एते चान्ये च बहवो घोररूपाः समुत्थिताः १४४
दैत्येन्द्रस्य विनाशाय दृश्यन्ते रणशंसिनः । मेदिन्यां कम्पमानायां दैत्येन्द्रेण महात्मना ॥ १४५
महीधरा नागगणा निपेतुरमितौजसः । विषज्वालाकुलैर्वक्त्रैर्विमुञ्चन्तो हुताशनम् ॥ १४६
चतुःशीर्षाः पञ्चशीर्षाः सप्तशीर्षाश्च पन्नगाः । वासुकिस्तक्षकश्चैव कर्कोटकधनंजयौ ॥ १४७
एलामुखः कालियश्च महापद्मश्च वीर्यवान् । सहस्रशीर्षः शुद्धाङ्गो हेमतालध्व[2]जः प्रभुः ॥ १४८
शेषोऽनन्तो महानागो ह्यप्रकम्पश्च कम्पितः । दीप्यन्तेऽन्तर्जलस्थानि पृथिवीविवराणि वै[3]॥ १४९
सप्त दैत्येन्द्रकोपेन कम्पितानि समन्ततः । नाना[4]तेजोधराश्चापि पातालतलचारिणः ॥ १५०

---

१ ग. घ ज. 'र्घोरैर्युगान्ता गगने प्र' । २ ग. घ. ज. नैव । ३ ग. घ. ज. 'वीधारणानि वै । ४ ग. घ. ज. नागते' ।

ताले सहसा क्षुब्धे दुष्प्रकम्प्याः प्रकम्पिताः । हिरण्यकशिपुर्दैत्यस्तदा संस्पृष्टवान्महीम् ॥ १५१
दंष्ट्रौष्ठपुटः क्रुद्धो वराह इव पूर्वजः । गङ्गा भागीरथी चैव कौशिकी शरयूरपि ॥ १५२
यमुना चाथ कावेरी कृष्णा वेणा च निम्नगा । तुङ्गभद्रा महावेगा नदी गोदावरी तथा ॥ १५३
चर्मण्वती च सिन्धुश्च तथा नदनदीपतिः । मेलकप्रभवश्चैव शोणो मणिनिभोदकः ॥ १५४
नर्मदा च शुभस्रोता तथा वेत्रवती नदी । गोमती गोकुलाकीर्णा तथा पूर्वा सरस्वती ॥ १५५
महाकालमहीं चैव तमसा पुष्पवाहिनी । जम्बुद्वीपं रत्नवन्तं(च) सर्वरत्नोपशोभितम् ॥ १५६
सुवर्णपुटकं चैव सुवर्णाकरमण्डितम् । महानदश्च लौहित्यः शैलः काञ्चनशोभितः ॥ १५७
पत्तनं कोषकाराणां कुशिं च रजताकरम्(?) । मगधाश्च महाग्रामाः पुण्ड्रा उग्रास्तथैव तु ॥ १५८
सुह्मा मल्ला विदेहाश्च मालवाः काशिकोशलाः । भवनं वैनतेयस्य दैत्येन्द्रेणापि कम्पितम् १५९
कैलासशिखराकारं यत्कृतं विश्वकर्मणा । रत्नतोयो महाभीमो लौहित्यो नाम सागरः ॥ १६०
उदयश्च महाशैल उच्छ्रितः शतयोजनः । सुवर्णवेदिकः श्रीमान्मेघपङ्क्तिनिषेवितः ॥ १६१
भ्राजमानोऽर्कसदृशैर्जातरूपमयैर्द्रुमैः । शालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ॥ १६२
अयोमुखश्च विख्यातः सर्वतो धातुमण्डितः । तमालवनगन्धश्च पर्वतो मलयः शुभः ॥ १६३
सुराष्ट्राश्च सबाह्लीकाः शूद्राभीरास्तथैव च । भोजाः पाण्ड्याश्च वङ्गाश्च कलिङ्गास्ताम्रलिप्तकाः ॥
तथैव पौण्ड्राः +शुभ्राश्च वामचूडाः सकेरलाः । क्षोभितास्तेन दैत्येन देवाश्चाप्सरसां गणाः १६५
अगस्त्यभवनं चैव यदगस्त्यकृतं पुरा । सिद्धचारणसंघैश्च विप्रकीर्णं मनोहरम् ॥ १६६
विचित्रनानाविहगं सपुष्पितमहाद्रुमम् । जातरूपमयैः शृङ्गैरप्सरोगणसेवितम् ॥ १६७
गिरिः पुष्पितकश्चैव लक्ष्मीवान्प्रियदर्शनः । उत्थितः सागरं भित्त्वा विश्रामश्चन्द्रसूर्ययोः ॥ १६८
रराज स महाशृङ्गैर्गगनं विलिखन्निव । चन्द्रसूर्यांशुसंकाशैः सागराम्बुसमावृतैः ॥ १६९
विद्युद्वासो यतः श्रीमानायतः शतयोजनः । विद्युतां यत्र संपाता निपात्यन्ते नगोत्तमे ॥ १७०
ऋषभः पर्वतश्चैव श्रीमानृषभसंस्थितः । कुंजरः पर्वतः श्रीमानगस्त्यस्य गृहं शुभम् ॥ १७१
विमलाख्या च दुर्धर्षा सर्पाणां मालती पुरी । तथा भोगवती चापि दैत्येन्द्रेणाभिकम्पिता १७२
महासेनगिरिश्चैव पारियात्रश्च पर्वतः । चक्रवांश्च गिरिश्रेष्ठो वाराहश्चैव पर्वतः ॥ १७३
प्राग्ज्योतिषपुरं चापि जातरूपमयं शुभम् । यस्मिन्नुवास दुष्टात्मा नरको नाम दानवः ॥ १७४
मेघश्च पर्वतश्रेष्ठो मेघगम्भीरनिस्वनः । षष्टिस्तत्र सहस्राणि पर्वतानां विशां पते ॥ १७५
तरुणादित्यसंकाशो मेरुश्चैव महागिरिः । यक्षराक्षसगन्धर्वैर्नित्यं सेवितकंदरः ॥ १७६
हेमगर्भो महासेनस्तथा मेघसखो गिरिः । कैलासश्चैव शैलेन्द्रो दानवेन्द्रेण कम्पितः ॥ १७७
हेमपुष्करसच्छन्नं तेन वैखानसं सरः । कम्पितं मानसं चैव हंसकारण्डवाकुलम् ॥ १७८
त्रिशृङ्गः पर्वतश्रेष्ठः कुमारी च सरिद्वरा । तुषारचयसंछन्नो मन्दरश्चापि पर्वतः ॥ १७९
उशीरबीजश्च गिरिर्भद्रप्रस्थस्तथाऽद्रिराट् । प्रजापतिगिरिश्चैव तथा पुष्करपर्वतः ॥ १८०
देवाभः पर्वतश्चैव तथा वै वालुकागिरिः । क्रौञ्चः सप्तर्षिशैलश्च धूम्रवर्णश्च पर्वतः ॥ १८१
एते चान्ये च गिरयो देशा जनपदास्तथा । नद्यः ससागराः सर्वाः सोऽकम्पयत दानवः १८२

+ शूराश्चेति क्वचित्पाठः ।

१ ग. घ. ज. गदी खड्गी रथी चैकः कौशिकी शरयूथिका । य° । २ क. च. °राणां काशिं च रजतारकम् । म° । ग. °राणामृषीणां रञ्जनाकरम् । म° । घ. °राणामृषिभीव्रजनाकरम् । म° । ३ ग. घ. ज. सुह्ममाला वि° ।

कपिलश्च महीपुत्रो व्याघ्रवांश्च प्रकम्पितः । खेचराश्च निशापुत्राः पातालतलवासिनः ॥ १८३
गणस्तथा परो रौद्रो मेघनामाऽङ्कुशायुधः । ऊर्ध्वगो भीमवेगश्च सर्वे एतेऽभिकम्पिताः ॥ १८४
गदी शूली करालश्च हिरण्यकशिपुस्तथा । जीमूतघननिर्घोषो जीमूत इव वेगवान् ॥ १८५
देवारिर्दितिजो दृप्तो नृसिंहं समुपाद्रवत् । स तु तेन ततस्तीक्ष्णैर्मृगेन्द्रेण महानखैः ॥
तदोंकारसहायेन विदार्य निहतो युधि ॥ १८६

महीच कालश्च शशी नभश्च ग्रहाःससूर्याश्च दिशश्च सर्वाः ।
नद्यश्च शैलाश्च महार्णवाश्च गताः प्रसादं दितिपुत्रनाशात् ॥ १८७

ततः प्रमुदिता देवा ऋषयश्च तपोधनाः । तुष्टुवुर्नामभिर्दिव्यैरादिदेवं सनातनम् ॥ १८८

देवा ऊचुः—

यत्त्वया विधृतं देव नारसिंहमिदं वपुः । एतदेवार्चयिष्यन्ति परापरविदो जनाः ॥ १८९

ब्रह्मोवाच—

भवान्ब्रह्मा च रुद्रश्च महेन्द्रो देवसत्तम । भवान्कर्ता विकर्ता च लोकानां प्रभवोऽव्ययः ॥ १९०

परां च सिद्धिं च परं च सत्त्वं परं रहस्यं परमं हविश्च ।
परं च धर्मं परमं यशश्च त्वामाहुरग्र्यं परमं पुराणम् ॥ १९१
परं च सत्यं परमं तपश्च परं पवित्रं परमं च मार्गम् ।
परं च यज्ञं परमं च होत्रं त्वामाहुरग्र्यं परमं पुराणम् ॥ १९२
परं शरीरं परमं च ब्रह्म परं च योगं परमां च वाणीम् ।
परं रहस्यं परमां गतिं च त्वामाहुरग्र्यं परमं पुराणम् ॥ १९३

पुलस्त्य उवाच—

एवमुक्त्वा तु भगवान्सर्वलोकपितामहः । स्तुत्वा नारायणं देवं ब्रह्मलोकं गतः प्रभुः ॥ १९४
ततो नदत्सु तूर्येषु नृत्यन्तीष्वप्सरःसु च । क्षीरोदस्योत्तरं कूलं जगाम हरिरीश्वरः ॥ १९५
नारसिंहवपुर्देवः स्थापयित्वा सुदीप्तिमान् । पौराणं रूपमास्थाय प्रययौ गरुडध्वजः ॥ १९६
अष्टचक्रेण यानेन भूतियुक्तेन भास्वता । अव्यक्तप्रकृतिर्देवः स्वस्थानं गतवान्प्रभुः ॥ १९७

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे नरसिंहप्रादुर्भावो नाम द्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२८३७६

---

अथ त्रिचत्वारिंशत्तमोऽध्यायः ।

---

भीष्म उवाच—

[*अतीवाद्भुतमेतद्धि नारसिंह[स्व]रूपिणः । माहात्म्यं त्वन्मुखाद्ब्रह्मञ्श्रुतं परममद्भुतम् ॥ १
यथा हिरण्यकशिपुं जघान प्रभुरीश्वरः । यद्भयाद्दिवि देवानां हृदयानि विकम्पन्ते ॥ २
यद्भयाद्वाति वातोऽपि मन्दं मन्दरयो रविः । नातिप्रतापं कुरुते प्रजासंयमनो यमः ॥ ३
यत्प्रजाभ्यो बिभ्यतीव तथेन्द्रो वरुणोऽपि च । तदाज्ञायां स्थितौ [सेन्]द्रदेवाश्चात्यन्तपीडिताः
भवन्ति लोकत्रितयं यद्वशे निखिलं स्थितम् । एवंविधोऽपि यो दैत्यो हिरण्यकशिपुर्महान् ॥ ५

---

* धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

विदारितो नखाग्रैश्च नारसिंहेन विष्णुना । ] नरसिंहस्य माहात्म्यं विस्तरेण त्वयेरितम् ॥
समासाद्भवमाहात्म्यं भैरवस्याभिधीयताम् ॥ ६

पुलस्त्य उवाच—

तस्यापि देवदेवस्य शृणु त्वं कर्म चोत्तमम् । आसीद्दैत्योऽन्धको नाम भिन्नाञ्जनचयोपमः ॥ ७
तपसा महता युक्तो अवध्यस्त्रिदिवौकसाम् । स कदाचिन्महादेवं पार्वत्या सहितं विभुम् ॥ ८
क्रीडमानं तदा दृष्ट्वा हर्तुं देवीं प्रचक्रमे । एतां देवीं हराम्यद्य वियोगे मृत्युमेष्यति ॥ ९
ततः स्थिरा भवित्री मे भार्यैषा लोकसुन्दरी । बिम्बोष्ठं चारुवदनं चारुकान्ततरं मुखम् ॥ १०
यद्येषा न भवेद्भार्या जीविते किं प्रयोजनम् । एतां मतिमथाऽऽस्थाय मन्त्रिभिः सह मन्त्र्य च ॥
चक्रे योगं स सैन्यस्य सेनापतिमभाषत ॥ ११

अन्धकासुर उवाच—

आनयस्व रथं मह्यं जैत्रं देवनिपातिनम् । जयिष्ये त्रिदशान्सर्वान्विष्णुरुद्रपुरोगमान् ॥ १२
हरिष्ये पर्वतसुतां तया मेऽपहृतं मनः ॥ १३

पुलस्त्य उवाच—

मन्त्रिणा तस्य चाऽऽख्यातः कनकस्य वधः सुरैः । परभार्यानुरक्तस्य कृतो देवैः सवासवैः॥ १४
ततः कोपपरीतात्मा हन्मि देवान्सशंकरान् । तं हत्वा दानवं शक्रो भयादन्धासुरस्य च ॥ १५
जगाम शरणान्वेषी कैलासं शंकरालयम् । दृष्ट्वा प्रणम्य देवेशं चन्द्रार्धकृतशेखरम् ॥
भीतो विज्ञापयामास सहस्रधृतलोचनः ॥ १६

इन्द्र उवाच—

अभयं देहि मे देव दानवादन्धकादहम् । बिभेमि तस्य पुत्रोऽद्य मया युधि निपातितः ॥ १७
तद्यावन्न स जानाति हतं पुत्रं महासुरः । तावत्तत्रस्थ एवाऽऽशु हन्यतां मद्भयावहः ॥ १८
स्त्रीलौल्याद्दानवः क्रूरः परभार्यापहारकः । सर्वथा घातनीयस्ते भवता सुरसत्तम ॥ १९

पुलस्त्य उवाच—

शक्रस्यैवं वचः श्रुत्वा शरण्यः शंकरस्तदा । ददावभयमेवासौ मा भैरिति शतक्रतो ॥ २०
दत्ताभयोऽथ कैलासादाजगाम कुशस्थलीम् । वृतो भूतगणैरीशो वधार्थमन्धकस्य तु ॥ २१
कृत्वा रूपं महाकायं विश्वरूपं सभैरवम् । सर्पैर्ज्वलद्भिर्धावद्भिर्भीमं भीमभुजंगवत् ॥ २२
जटासटाभिराकाशं फणिरत्नशिखार्चिषा । ज्वलन्नतीव तेजोभिः कालाग्निरिव संक्षये ॥ २३
मुखैर्दंष्ट्राकरालैश्च द्वितीयेन्दुकलोज्ज्वलैः । पातालोदररूपाभिर्भैरवारावनादिभिः ॥ २४
भुजैरनेकसाहस्रैर्बहुशस्त्रकृतग्रहः । बद्धाभरणभूपाढ्यै रणद्घोरनिनादिभिः ॥ २५
सिंहचर्मपरीधानं व्याघ्रत्वगुत्तरीयकम् । गजाजिनकृताटोपं पतद्भृङ्गरवाकुलम् ॥ २६
ईदृग्रूपं विधायेशो दनुदैत्यभयावहम् । अवातरन्महीं भीमो दनूनां क्षयकारकः ॥ २७
अन्धासुरोऽपि दनुजः पुत्रं श्रुत्वा हतं युधि । क्रोधेन तमसाऽऽविष्टो रणतूर्याण्यचोदयत् ॥ २८
संहत्यावहितः प्राप्तो यत्र ते त्रिदशाः स्थिताः । महत्या सेनया सार्धं रथवारणयुक्तया ॥ २९

---

१ ग. °स्त्यं हरस्याप्यभि° । घ. ज. °स्त्यं हरेरस्या° । २ ग. °भिर्दि युगक्ष° । घ. ज. °भिर्वा युगक्ष° ।

ते देवा दानवान्वीक्ष्य महाहवकृतादरान् । व्यपयातततनुत्राणाः शंभुं शरणमन्वयुः ॥ ३०
मां भैरिति च तान्देवो देवानुक्त्वा त्रिलोचनः । गृहीत्वा शूलमातिष्ठद्दंष्ट्रारवधरो रुषा ॥ ३१
अन्धकेनाथ रुष्टेन शतकोटिशरैर्गणाः । निहताश्चोपदेवानां बहूनामेकताकृतीः ॥ ३२
सस्फुलिङ्गार्चिषो वह्नेर्मुञ्चमानः पिनाकधृक् । शरैः समावृतं चक्रे अन्धकं रथगं ततः ॥ ३३
दनुनाथो रथस्थोऽथ शिथिलः शिथिलायुधः । निमन्त्र्य दानवान्सर्वान्स योद्धुमुपचक्रमे ॥ ३४
बहुधा तद्बलं भग्नं विबुधायुधयोधिभिः । युधि वीरैर्हतं देवैः स्थाणुना सख्यमाश्रितैः ॥ ३५
दानवश्चान्धकः सैन्यं भिन्नं दृष्ट्वा कृतं सुरैः । आत्मानं च महेशेन निरुद्धं बाणकोटिभिः ॥ ३६
विह्वलीभूतदेहोऽसौ धैर्यमालम्ब्य [१]केवलम् । पिनाकं चैव रुद्रस्य गृह्य रुद्रमताडयत् ॥ ३७
पिनाकस्याभिघातेन रुद्रो भूमिमथागमत् । भूमौ निपातिते देवे चलितं भुवनत्रयम् ॥ ३८
तत्यजुः सागरा वेलां पर्वताः शिखराणि च । नक्षत्राणि वियोगीनि जग्मुर्मुक्तान्यनेकशः ॥ ३९
पतिते भुवि देवेशे अन्धको गदया पुनः । जघान रुषितो नागं हत्वा तं *पातयद्भुवि ॥ ४०
शिवं त्यक्त्वा नागराजः प्रपलाय्यान्यतो गतः । मुहूर्ताच्चेतनां लब्ध्वा उत्थितः परमेश्वरः ॥ ४१
गृहीत्वा परशुं दिव्यं दानवं नैव पश्यति । कृत्वा तु तामसीं मायां मायाशतविशारदः ॥ ४२
तया तु रहिते देवे क्व नु वै दानवो गतः । शंभोर्भयमथो प्राप्य किंनु पापः करिष्यति ॥ ४३
तमसा छादिता यावद्देवा व्याकुलतां गताः । संभ्रान्तमानसानीकास्तदोचुः कार्यगौरवात् ॥ ४४
एतस्मिन्नन्तरे सूर्यस्तेजोरूपो व्यवस्थितः । उत्तस्थौ नररूपेण कुर्वन्वितिमिरा दिशः ॥ ४५
नष्टे तमसि हृष्टाङ्गे खद्योते प्रकटे स्थिते । देवा मुदमवापुस्ते स्पष्टानवविलोचनाः ॥ ४६
उद्दीप्तास्तु सुराः सर्वे गणाः स्कन्दपुरोगमाः । स्तुवन्ति विविधैः स्तोत्रैर्नररूपं दिवाकरम् ॥ ४७
अनौपम्यं जगद्व्यापि ब्रह्मविष्णुशिवात्परम् । स्निग्धविद्रुमसच्छायं सिन्दूरारुणसप्रभम् ॥ ४८
प्रभासन्तं तदा दृष्ट्वा पश्चाङ्गालिङ्गितावनिः । पुनः प्रणामप्रवणं प्रणिधानपुरःसरम् ॥ ४९
आलोक्य स्निग्धया दृष्ट्या देवदेवं [२]त्रिलोचनः । उवाच स्निग्धगम्भीरवाचा देवं शनैर्हरः ॥ ५०

हर उवाच—

पूरयन्निव तेजोभिर्भगवान्भुवनत्रयम् । दैत्यमायाभिपन्नानां दर्शनाकुलचेतसाम् ॥ ५१
प्राणिनामिदमेवैकमविसंवादि दैवतम् । अयमेव च संसारसागरात्सकलादपि ॥ ५२
सत्त्वानुत्तारयन्देवः कर्णधारायते प्रभुः । यजन्तो जन्तवो भक्त्या यं देवं विविधाः सदा ॥
निःश्रेयसाय कल्पन्ते तं नतो भास्करं विभुम् ॥ ५३

यस्तूदयाद्रिशिखरे मुकुटायमानलीलागभस्तिभिरलं कुसुमप्रकाशैः ।
व्याप्य स्वदीधितिगणैः प्रदिशो दिशश्च देदीप्यते स सविता विभवाय लोके ५४
ब्रह्मेन्द्ररुद्रमरुदच्युतवह्निपाथोनाथप्रयोगनिपुणैश्च ऋषीन्द्रसंघैः ।
श्रेयोर्थिभिः प्रतिदिनं दिवसाङ्गरागैर्दिव्याङ्गरागपरिलिप्तसमस्तदेहैः ॥ ५५
पूज्यं वपुस्तव सदा प्रलये हि वेदैर्गीर्भिर्विचित्रपदमण्डलमण्डिताभिः ।
ये त्वां (न)स्तुवन्ति परसद्मनि सद्महीना नित्यं प्रसारितकरा भुवि ते भवन्ति ॥
ये दुष्टकुष्ठपिटिकादिभिरर्दिताङ्गाः [३]शीर्णत्वचः कुनखिनश्च्युतकेशनासाः ।

* अडभाव आर्षः ।

१ ङ. दैत्यराट् । २ ग. घ. ज. 'देवैकलोचनम् । ङ' । ३ घ ज. शीर्णायुषः ।

देवेश तेऽपि तव पादनता भवन्ति सद्योद्गिरष्टशरदाकृतयो मनुष्याः ॥ ५७
सामेति सामगगणा हि मखार्थकं त्वामध्वर्यवः ऋगिति बह्वृचमुख्यपूगाः ।
त्वामेवमार्यमि(म)तिकार्यविदोऽधिगन्तुं नागाश्च वेति(?) पितरोऽप्यथ सर्वगन्धम्॥
मायेति चोपनिषदर्के षडेव देवा मर्त्यास्तथा वयमिवेह उपासतेऽमी ।
गन्धर्वकिंनरगणाः सह चारणैस्तु रूपं तथा च भगवन्प्रतिपद्यसे त्वम् ॥ ५९
ये नार्चयन्ति सततं भवतोऽर्च्यमर्चिस्तेऽर्चिष्प्रतापितदिगम्बरवित्तहीनाः ।
क्षुत्क्षामकण्ठजठरा घटखर्परेण भिक्षामटन्ति परवेश्मसु तेऽर्थहीनाः ॥ ६०
उत्फुल्लकोकनदकोषविशालनेत्रमीषद्विलासललितालकपोलतारम् ।
कामं प्रशस्ततरसुन्दरहाररम्यमुत्तुङ्गपीवरपयोधरभारखिन्नम् ॥ ६१
रम्भोपमोरुपृथुपीननितम्बविम्वानद्धक्वणन्मणिरणद्रसनाकलापम् ।
वृन्दं ललाटतटकोटिपटान्तलम्बिहेमाश्चलाश्चितमुखं कुलपालिकानाम् ॥ ६२
कान्तं गृहेषु कलगद्गदभाषितानां झंकारनूपुररवेण विराजितानाम् ।
तेषां कृशानुकरमिन्दुसमानकान्तं यैरर्चितोऽसि भगवन्भवमोचनस्त्वम् ॥ ६३
ब्रह्मा त्वमेव हरिरस्यनिलोऽनलोऽसि रुद्रोऽन्तकोऽसि वरुणोऽस्यमराधिपोऽसि ।
सोमोऽसि वायुरसि भूरसि चेश्वरोऽसि यज्ञोऽसि वित्तपतिरस्यपराजितोऽसि ६४
ये सप्तसप्तिसुरवाहरणेन मुक्ता भूमावथेति तरसोरुतरं तरीताः ।
व्योमैतदन्तरहितं परितो हि गत्वा गच्छन्ति न श्रमपदं हि मनागपीमे ॥ ६५
ध्यानैकयोगनिरताश्च समाधिभावाद्ध्यात्वा पदं तव तुरीयमनन्तमूर्ते ।
मुक्तामयास्तनुभृतो न भियाऽभियुक्तास्तद्ब्रह्म शाश्वतमचिन्त्यमनाद्यनन्तम् ॥ ६६
जन्माधिरोगरहितं परमं पुराणमीशं जरामरणशोकभयातिरिक्तम् ।
स्थूलानुभावनगणागणितं विशुद्धं वेदान्तवादिभिरलं परिपठ्यते यत् ॥ ६७
त्वामग्निपुञ्जवपुषं तपसां निवासं याता दिवं सुचिरकालमुपास्य भक्ताः ।
भानो सुरासुरसमूहशिरोनिघृष्टपादारविन्दयुगुलामलचारुमूर्ते ॥ ६८
भूतेश भूतवरदासकृदव्ययात्मन्व्योमाट्टहाससवितर्भुवनैकदीप ।
ऋक्साममन्त्रयजुषामधिवास नामसृष्टिस्थितिप्रलयकारण लोकपाल ॥ ६९
दीनस्य देव कृपणस्य भवे भवेह मग्नस्य चारुदविचारमनोरथानि(नीः)(?) ।
शश्वद्यतीश्वर शशी(ससी)करकङ्कघोरोत्पातो ज(तैर्ज)रामरणशोकरुगा(ग)न्तरस्य॥
यः प्रातः सायमिदं मध्याह्ने वा पठेच्च दीप्तांशोः ।
सालोक्यं याति रवेः प्राप्नोति धर्मार्थकामांश्च ॥ ७१
नित्यं तस्माच्च सूर्याच्च मनसोऽभिहितं च यत् । नमस्ते देवदेवेश भक्तानामभयंकर ॥ ७२
सुब्रह्मण्य नमस्तेऽस्तु सर्वदेवनमस्कृत । तिग्मांशो वै नमस्तुभ्यं जगतश्चक्षुषे नमः ॥ ७३
प्रभाकर नमस्तेऽस्तु भानो जय जगत्पते । अनेन दनुमुख्येन पीडितोऽहं जगत्पते ॥
किं करोमि कथं चैनं घातयामि दिवाकर ॥ ७४

सूर्य उवाच—

जहि शूलेन पापिष्ठं मायाशतविशारदम् । जयं प्राप्नुहि देवेश हत्वा शूलेन चान्धकम् ॥ ७५

पुलस्त्य उवाच—

रुद्रः शूलं ततो दूरमाक्षिप्य हरतेजसा(पत्तेजसा हरः)। ततोऽन्धकस्त्रिशूलेन पापिष्ठः पापकर्मकृत् ७६
तस्मिन्युद्धे तदा रुद्रो अन्धकेनाभिपीडितः। मुमोच बाणमत्युग्रं नाम्ना पाशुपतं हि यत् ॥ ७७
पिनाकमानम्य दोर्भ्यां पिनाकी शंकरः स्वयम्। रुद्रबाणविनिर्भेदाद्रुधिरादन्धकस्य तु ॥ ७८
अन्धकाश्च समुत्पन्नाः शतशोऽथ सहस्रशः। तेषां विदार्यमाणानां रुधिरादपरे पुनः ॥ ७९
बभूवुरन्धका घोरा यैर्व्याप्तमखिलं जगत्। तं तु मायाविनं दृष्ट्वा देवदेवस्तदाऽन्धकम् ॥ ८०
पानार्थमन्धकस्यास्य ससृजे मातर(तृका)स्तदा। माहेश्वरीं तथा ब्राह्मीं शौरीं वा वाडवीं तथा
सौपर्णीमथ वायव्यां शङ्किनीं तैत्तिरीं तथा। सौरीं सौम्यां शिवदूतीं चामुण्डामथ वारुणीम् ८२
वाराहीं नारसिंहीं च वैष्णवीं च विभावरीम्। शतानन्दां भगानन्दां पिच्छिलां भगमालिनीम्
बलामतिबलां रक्तां सुरभीं मुखमण्डिताम्[1]। मातृनन्दां सुनन्दां च विडालीं शकुनीं तथा ॥८४
रेवतीं च महापुण्यां तथैव शिखिपट्टिकाम्[2]। [+शूलेन च ततो दैत्यं बिभेद त्रिपुरान्तकः ॥ ८५
निर्गतं रुधिरं तस्मात्पपुस्ता मातरस्तदा। नीरक्तो हि तदा दैत्यः शुष्कतां प्राप भूपते ॥ ८६
शूले प्रोतस्तदा दैत्यो दिव्यं वर्षसहस्रकम्। महाबलेन रुद्रेण विधृतोऽपि मृतो नहि ॥ ८७
स्तुतस्तेन तदा शंभुर्भक्त्या दैत्येन सुव्रत ॥ ८८

अन्धक उवाच—

नमोऽस्तु शंभो भवनाशहेतो नमोऽस्तु ते देववर प्रसीद।
त्वं भूजलाग्नीरनभोर्कसोमयज्वाष्टमूर्तिर्भवभावनोऽलम् ॥ ८९
त्वां वै बाणो बाहुवाद्येन तोष्य प्राप्तश्चैश्यं स्वे पुरे त्वत्सुरक्ष्यम्।
रक्षोधीशो बाहुभिस्तोल्य शैलं युष्मत्क्रान्तक्लिष्टरूपो ह्यनौषीत् ॥ ९०
प्राप्तोऽप्यैश्यं सर्वरक्षोगणानां पुत्रं चापि प्रोर्जितं शक्रबन्धम् ॥ ९१
भवभयहर हर परम उदार मम सुखकरण निखिलसुरसार।
जितमरुदभिमतवितरणपार तव पदकमलमिहारणमार ॥ ९२
तवेश पादपङ्कजं करोति यो नरो हृदि
सदेश तस्य वाञ्छितं ददासि भक्तिभावितः ॥
मुनीश्वराः पुरा हरं भवन्तमेव मादरा-
त्प्रपूज्य लिङ्गरूपिणं समापिता मनोरथान् ॥ ९३
भवोद्भवैकरूपिणं प्रपञ्चपञ्चकाकृतिं
विचिन्त्य वृक्षकोटरस्थ एष जीवजीवनम्।
भवेद्भवाङ्घ्रिचिन्तनाप्तसर्वकाम ईश्वर
त्वदीयकिंकरान्विते(तः) पदे पदे शमागतः ॥ ९४
मूढोऽहं नाभिजानामि त्वां स्तोतुं भक्तवत्सल। सदीश्वरेण मनसाऽप्यनुकम्प्यो रणं गतः ॥९५

+ धनुश्चिह्नान्तर्गतः पाठः क्वचित्पुस्तके नास्ति। किंतु, एतत्स्थाने 'निपीतरुधिराशेषः क्षयं यातस्तु दानवः। देवा मुदं समायाता दानवे विनिपातिते' इति श्लोको वर्तते।

[1] झ. अ. °ण्डिकाम्। [2] ग. घ. ज. शिखिप°।

पुलस्त्य उवाच—

इति स्तुतो महेशस्तु भक्त्या दैत्येन सादरम् । गणेशतां ददौ तस्मै नाम भृङ्गिरिटीति च ॥ ९६
एष ते महिमा भूप हरस्य भवहारिणः । कथितो विघ्नविघ्नाख्यस्तत्पराणां सुखावहः ] ॥ ९७

भीष्म उवाच—

मनुष्यस्यापि देवत्वं सुखं राज्यं धनं यशः । जयं(यो) भोग्यं तथाऽऽरोग्यमायुर्विद्यां श्रियं सुतम् (द्या च श्रीसुतौ) । बन्धुवर्गशिवं सर्वं ब्रूहि मे विप्रसत्तम ॥ ९९

पुलस्त्य उवाच—

एभिर्गुणैर्युतः श्रीमान्सदैव ब्राह्मणो भुवि । त्रैलोक्ये तु सदा मेध्यो विप्रदेवो युगे युगे ॥ १००
पूजयित्वा द्विजान्देवाः स्वर्गं भुञ्जन्ति चाक्षयम् । धरामवन्ति राजानो लोका वित्तं सुखं शिवम्
लोके विप्रसमो नास्ति देवानामपि दैवतम् । स च धर्ममयः साक्षाद्भुवि मुक्तिप्रदो भृशम् ॥ १०२
लोकानां स गुरुः पूज्यस्तीर्थभूतोऽनघो जनः । सर्वदेवालयः सत्त्वो निर्मितो ब्रह्मणा पुरा १०३
इममर्थं पुरा पृष्टो नारदेन पितामहः । कस्मिंस्तु पूजिते ब्रह्मन्प्रसन्नो माधवो भवेत् ॥ १०४

ब्रह्मोवाच—

यस्य विप्राः प्रसीदन्ति तस्य विष्णुः प्रसीदति । तस्माद्ब्राह्मणशुश्रूषुः परं ब्रह्माधिगच्छति १०५
विष्णुर्ब्राह्मणदेहेषु सदा वसति नान्यथा । तस्माद्ब्राह्मणपूजायां विष्णुस्तुष्यति तत्क्षणात् ॥ १०६
विप्रान्यः पूजये[+न्नित्यं दानमानार्चनादिभिः । कृतं क्रतुशतं तेन विध्युक्तं प्रियदक्षिणम् १०७
ब्राह्मणस्य मुखं क्षेत्रमनूषरमकण्टकम् । वापयेत्सर्वबीजानि सा कृषिः] सार्वकालिकी ॥ १०८
अभिगम्य तु यद्दानं यच्च दानं मनोरमम्[१] । विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते ॥ १०९
मनसाऽपि न हिंसन्ति भूदेवमाततायिनम् । मनोनुकूलतां यान्ति देवैरपि च दुर्लभाम् ॥ ११०
गृहे यस्याऽऽगतो विद्वान्नैराश्यं नोपगच्छति । सर्वपापक्षयस्तस्य चाक्षयं स्वर्गमश्नुते ॥ १११
काले देशे च पात्रे च विप्रे यच्चार्पयेद्वसु । तद्धनं चाक्षयं विद्धि जन्मजन्मसु तिष्ठति ॥ ११२
न च दारिद्र्यतामेति नाऽऽतुरो न च कातरः । मनोनुकूलां प्रमदामर्चयित्वा द्विजाल्लँभेत् ॥ ११३
कृत्वा साहसकर्माणि दद्याद्विप्राय पर्वसु । शोधनैकगुणं प्रोक्तमभयं[२] लाभ एव च ॥ ११४
विप्रपादतलोद्धृष्टिक्षती भवति यः करः । स करः श्रीकरो नाम अन्यः कर्मकरः करः ॥ ११५
विप्रपादरजःपूतास्तथैव जलबिन्दुभिः । विपद्भिश्च सदा पापैर्मुक्ता यान्ति त्रिविष्टपम् ॥ ११६
विप्रपादरजःपूताः शुचयो गृहचत्वराः । पुण्यक्षेत्रसमास्ते स्युः प्रशस्ता यज्ञकर्मसु ॥ ११७
आदौ ब्रह्ममुखाद्विप्रः समुद्भूतः पुराऽनघ[३] । वेदास्तत्रैव संजाताः सृष्टिसंस्थितिहेतवः ॥ ११८
तस्माद्विप्रमुखे वेदाश्चार्पिताः पुरुषेण हि । पूजार्थं सर्वलोकानां सर्वयज्ञार्थतो ध्रुवम् ॥ ११९
पितृयज्ञे विवाहे च वह्निकार्येषु शान्तिषु । प्रशस्ता ब्राह्मणा नित्यं सर्वस्वस्त्ययनेषु च ॥ १२०
देवा भुञ्जन्ति हव्यानि बलिं प्रेतादयोऽसुराः । पितरो हव्यकव्यानि विप्रस्यैव मुखाद्ध्रुवम् ॥
देवेभ्यश्च पितृभ्यश्च यो दद्याद्यज्ञकर्मसु । दानं होमं बलिं चैव विना विप्रेण निष्फलम् ॥ १२२
भुञ्जन्ति चासुरास्तत्र प्रेता दैत्याश्च राक्षसाः । तस्माद्ब्राह्मणमाहूय तेषु कर्माणि कारयेत् ॥ १२३
काले देशे च पात्रे च लक्षकोटिगुणं भवेत् । श्रद्धया च द्विजं दृष्ट्वा प्रकुर्यादभिवादनम् ॥ १२४

+ धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

१ ख. ङ. °यिनः । म° । २ ग. घ. ज. °मक्षयं । ३ ख. ङ. °नघः । वे° ।

दीर्घायुस्तस्य वाक्येन चिरजीवी भवेन्नरः । अनभिवादनाद्विप्रद्वेषादश्रद्धयाऽपि च ॥ १२५
आयुः क्षीणं भवेत्पुंसां भूतिनाशश्च दुर्गतिः । आयुर्वृद्धिर्यशोवृद्धिर्वृद्धिर्विद्याधनस्य च ॥
पूजयित्वा द्विजाञ्श्रेष्ठो भवेन्नास्त्यत्र संशयः ॥ १२६

न विप्रपादोदककर्दमानि न वेदशास्त्रप्रतिघोषितानि ।
स्वाहास्वधास्वस्तिविवर्जितानि श्मशानतुल्यानि गृहाणि तानि ॥ १२७

नारद उवाच—

कश्च पूज्यतमो विप्रो ह्यपूज्यो वाऽथ को भवेत् । विप्रस्य लक्षणं ब्रूहि याथातथ्यं गुरोरपि १२८

ब्रह्मोवाच—

पूज्यः श्रोत्रियको नित्यं सदाचारसमन्वितः । सद्व्रतः कलुषैर्मुक्तस्तीर्थभूतो जनोऽनघः ॥ १२९

नारद उवाच—

जातः कः श्रोत्रियस्तात सत्कुले वाऽप्यसत्कुले । सदसत्कर्मकर्ता वा कः पूज्यो भुवि वाडवः ॥

ब्रह्मोवाच—

सच्छ्रोत्रियकुले जातो अक्रियो नैव पूजितः । असत्क्षेत्रकुले पूज्यो व्यासवैभाण्डकौ यथा १३१
क्षत्रियाणां कुले जातो विश्वामित्रोऽस्ति मत्समः । वेश्यापुत्रो वसिष्ठश्च अन्ये सिद्धा द्विजातयः
तस्मात्सच्छ्रोत्रियादीनां शृणु पुत्रक लक्षणम् । धरायां तीर्थभूतानां सर्वपापहराय च ॥ १३३
जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रियलक्षणम् ॥
विद्यापूतो मन्त्रपूतो वेदपूतस्तथैव च । तीर्थस्नानादिभिर्मेध्यो विप्रः पूज्यतमः स्मृतः ॥ १३५
नारायणे सदा भक्तः शुद्धान्तःकरणस्तथा । जितेन्द्रियो जितक्रोधः समः सर्वजनेषु च ॥ १३६
गुरुदेवातिथिभक्तः पित्रोः शुश्रूषणे रतः । परदारे मनो यस्य कदाचिन्नैव मोदते ॥ १३७
पुराणकथको नित्यं धर्माख्यानस्य संततिः । अस्यैव दर्शनान्नित्यमश्वमेधादिजं फलम् ॥ १३८
संलापे गतिमे(रे)तस्य भागीरथ्या जलस्य च । व्रतैश्च विविधैः पूतो नित्यस्नानद्विजार्चनैः १३९
मित्रामित्रे दयालुः स्यात्समः सर्वजनेषु च । परस्वं न हरेद्यस्तु तृणमप्यटवीगतम् ॥ १४०
कामक्रोधादिनिर्मुक्त इन्द्रियैरजितः पुमान् । परदारान्न गृह्णाति मनसाऽपि गृहागतान् ॥ १४१
[*गायत्रीं च जपेन्नित्यं त्रिपदां यजुरप्यगाम् (?) । चतुर्वेदमयीं शुद्धां चतुर्विंशतिवर्णकाम् ॥
अस्या भेदं च संज्ञात्वा(य) ब्रह्मणः पदवीं व्रजेत् ॥ ] १४२

नारद उवाच—

गायत्र्या लक्षणं किंवा प्रत्येकाक्षरजं गुणम् । कुक्षिचरणगोत्राणां तस्या ब्रूहि सुनिश्चयम्॥ १४३

ब्रह्मोवाच—

छन्दो गायत्री गायत्र्याः सविता देवता ध्रुवम् । शुक्लवर्णा अग्निमुखा विश्वामित्र ऋषिस्तथा ॥
ब्रह्मणः शिरसा रूढा(रुद्र) शिखा विष्णुहृदि स्थिता।उपनयने नियोगः स्यात्सांख्यायनसगोत्रजा
त्रैलोक्यचरणा ज्ञेया पृथिवीकुक्षिसंस्थिता । चतुर्विंशतिस्थाने च पादादौ मस्तकान्तकम् ॥१४६
चतुर्विंशत्यक्षरं न्यस्य ब्रह्मलोकं स विन्दति । प्रत्यर्णदेवतां ज्ञात्वा विष्णुसायुज्यतां लभेत् १४७

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

१ ग. घ. ज. ज्ञातः । २ घ. °द्धान्यजातयः । ३ घ. °तो देवपू° । ४ ग. °नादेव सर्वतीर्थफलं लभेत् । सं° । घ. °नादेव तीर्थदर्शनजं । ५ झ. °णगात्रा° ।

अपरं च प्रवक्ष्यामि गायत्र्या लक्षणं ध्रुवम् । सप्त पञ्च तथा षट्‌च यजुरष्टादशाक्षरम् ॥ १४८
ज्वलनादि हकारान्तं जले स्थित्वा शतं जपेत् । उपपातककोट्यास्तु तथाऽतिपातकस्य च १४९
ब्रह्महत्यादिभिः पापैर्मुक्ता यान्ति ममाऽऽलयम् । ॐ*अग्नेर्वाक्पुंसि[1] यजुर्वेदेन जुष्टौ[2] सोमं पिब स्वाहा
विष्णुमन्त्रं महामन्त्रं तथा माहेश्वरस्य च । देवीसूर्यगणेशानां तथा क्रतुभुजां सुत ॥ १५१
यस्य(श्च) तस्य कुले जातो गुणवानेव तैर्गुणैः । साक्षाद्ब्रह्ममयो विप्रः पूजनीयः प्रयत्नतः॥१५२
दानं दद्याच्च विधिवत्सदा पर्वणि पर्वणि । अक्षयं लभते दाता जन्मकोटिशतान्प्रति(नि वै)१५३
स्वाध्यायनिरतो विप्रो यः पठेत्पाठयेत्परान् । धर्मं च श्रावयेल्लोके सदाचारं श्रुतिं स्मृतिम्१५४
पुराणसंहितां नूनं तथैव धर्मसंहिताम् । श्रावयित्वा तु लोकेषु श्रावयित्वा द्विजातिषु ॥ १५५
उर्व्यां विष्णुसमः सोऽपि पूजनीयो नरैः सुरैः । यद्बलं[4] चाक्षयं तस्य तीर्थभूतानघस्य च॥१५६
समानमर्चनं कृत्वा नरो यात्यच्युतालयम् । कदाचित्क्रियते पापं विप्रः पापैर्न लिप्यते ॥ १५७
चाण्डालस्य गृहे तिष्ठन्भास्करज्वलनौ यथा । याजनाध्यापनाद्यौनात्तथैवासत्प्रतिग्रहात् ॥ १५८
विप्राणां न भवेद्दोषो ज्वलनार्कसमा द्विजाः । तान्प्रतिग्रहजान्दोषान्प्राणायामव्यवस्थिताः १५९
नाशयन्तीह पापानि वायुर्मेघमिवाम्बरे । गायत्रीं यो जपेन्नित्यं प्राणायामसमन्विताम् ॥ १६०
प्रत्यक्षरामरैर्युक्तां स्वाङ्गे विन्यस्य तामपि । सर्वपापाद्विनिर्मुक्तो जन्मकोटिकृतादपि ॥ १६१
ब्रह्मणः पदवीं प्राप्य स गच्छेत्प्रकृतेः परम्[7] । प्राणायामयुतां तस्माद्गायत्रीं जप नारद ॥ १६२

नारद उवाच—

प्राणायामाः कथं ब्रह्मन्प्रत्येकाक्षरदेवताः । तेषां न्यासं तथाऽङ्गेषु वद तात यथाक्रमम् ॥ १६३

ब्रह्मोवाच—

गुददेशे त्वपानः स्याद्धृदि प्राणोऽस्ति देहिनः । तस्माद्गुदं समाकुञ्च्य प्राणेन सह योजयेत्१६४
पूरकेण तदा पुत्र कृत्वा कुम्भकमुत्तमम् । प्राणायामत्रयं कृत्वा गायत्रीं संजपेद्द्विजः ॥ १६५
अनेनैव जपेद्यस्तु महापातकसंचयः । सकृदुच्चरितेनैव क्षयं यात्यन्यपातकम् ॥ १६६
प्रतिवर्णस्वरं ज्ञात्वा विन्यस्य च कलेवरे । स जनो ब्रह्मतामेति फलं वक्तुं न शक्नुमः ॥ १६७
प्रत्यक्षरस्य यद्दैवं शृणु पुत्र वदाम्यहम् । यज्जप्त्वा च पुनर्मातुः स्तनं न पिबति द्विजः ॥ १६८
आग्नेयं प्रथमं ज्ञेयं वायव्यं तु द्वितीयकम् । तृतीयं सूर्यदैवत्यं चतुर्थं वैयतं[8] तथा ॥ १६९
पञ्चमं यमदैवत्यं वारुणं षष्ठमुच्यते । सप्तमं बार्हस्पत्यं तु पार्जन्यं चाष्टमं विदुः ॥ १७०
ऐन्द्रं च नवमं ज्ञेयं गान्धर्वं दशमं तथा । पौष्णमेकादशं विद्धि मैत्रं द्वादशकं स्मृतम् ॥ १७१
त्वाष्ट्रं त्रयोदशं ज्ञेयं वासवं[9] तु चतुर्दशम् । मारुतं पञ्चदशकं सौम्यं षोडशकं स्मृतम् ॥ १७२
आङ्गिरसं सप्तदशं वैश्वदेवमतः परम् । आश्विनं चैकोनविंशं प्राजापत्यं तु विंशकम् ॥ १७३
सर्वदेवमयं ज्ञेयमेकविंशकमक्षरम् । रौद्रं द्वाविंशकं ज्ञेयं ब्राह्मं ज्ञेयमतः परम् ॥ १७४
वैष्णवं तु चतुर्विंशमेता अक्षरदेवताः । जपकाले तु संचिन्त्य तासु सायुज्यतां व्रजेत् ॥ १७५
ज्ञात्वा तु देवतास्तस्य वाङ्मयं विदितं भवेत् । सर्वपापविनिर्मुक्तो ब्रह्मणः पदवीं व्रजेत् ॥१७६

* अग्निरिति क्वचित्पाठः ।

१ म. °क्षरा । ज्व° । २ झ. ञ. °सि स यं° । ३ झ. ञ. °ष्टात्सोमं । ४ ग. घ. ज. तथा । ५ घ. यद्दत्तं । ६ ग. °टिशता° । ७ ग. °च्छेत्परमं पदम् । ८ झ. °रे । प्रज° । ९ ग. ङ. वैष्णवं । घ. वैजयं । १० ग. शांभवं ।

गायत्रीं विन्यसेत्पूर्वं शरीरे चाऽऽत्मनो बुधः । चतुर्विंशतिस्थानेषु आपादमस्तकेषु च ॥ १७७
तत्कारं विन्यसेद्योगी पादाङ्गुष्ठे विचक्षणः । सकारं गुल्फदेशे तु विकारं जङ्घयोर्न्यसेत् ॥ १७८
तुकारं जानुमध्ये च *वंकारं चारुदेशतः । रेकारं गुह्यदेशे तु ण्यकारं वृषणे न्यसेत् ॥ १७९
मकारं कटिदेशे तु भकारं नाभिमण्डले । गोकारं जठरे न्यस्य देकारं स्तनयोर्न्यसेत् ॥ १८०
वकारं हृदये न्यस्य स्यकारं करदेशतः । धीकारं वदने न्यस्य मकारं तालुके न्यसेत् ॥ १८१
हिकारं नासिकाग्रे च धिकारं चक्षुषोर्न्यसेत् । योकारं तु भ्रुवोर्मध्ये योकारं च ललाटके ॥ १८२
नःकारं तु मुखे पूर्वे प्रकारं दक्षिणामुखे । चोकारं पश्चिमे न्यस्य दकारं चोत्तरे न्यसेत् ॥ १८३
यात्कारं मूर्ध्नि विन्यस्य सर्वव्यापी व्यवस्थितः । एतान्विन्यस्य धर्मात्मा ब्रह्मविष्णुशिवात्मकः
महायोगी महाज्ञानी परं निर्वाणकं व्रजेत् । संध्याकाले पुनर्न्यासं शृणु त्वं तु यथार्थतः ॥
ॐ भूरिति हृदये न्यस्य ॐ भुवः शिरसि न्यसेत् ॥ १८५

ॐ स्वः शिखायै तत्सवितुर्वरेण्यमिति कलेवरे । ॐ भर्गो देवस्य धीमहीति नेत्रयोः । ॐ धियो यो नः प्रचोदयादिति करयोर्न्यसेत् । ॐ आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् । इत्युदकस्पर्शमात्रेण पापात्पूतो व्रजेद्धरिम् ।

ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ॐ ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ।

इति सव्याहृतिसप्रणवद्वादशोंकारां संध्याकाले कुम्भकेन वारत्रयं जप्त्वा सूर्योपस्थाने सावित्रीं चतुर्विंशत्यक्षरां जप्त्वा महाविद्याधिपो भवति । ब्रह्मत्वं लभते ॥

षट्कुक्षिलक्षणां पुत्र गायत्रीं शृणु यत्नतः । यां ज्ञात्वा तु परं ब्रह्मस्थानं गच्छति वै द्विजः १८६

ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥

अथ गायत्रीपञ्चशीर्षलक्षणम् । ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥

सव्याहृतिं तु गायत्रीं पुनर्न्यासं तु कारयेत् । सर्वपापविनिर्मुक्तो विष्णुसायुज्यतां व्रजेत् ॥ १८७

ॐ भूः पादाभ्याम् । ॐ भुवः जानुभ्याम् । ॐ स्वः कट्याम् । ॐ महः नाभौ । ॐ जनः हृदये न्यसेत् । ॐ तपः करयोः । ॐ सत्यं ललाटे । ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयादिति शिखायाम् ॥

एवं विप्रो न जानाति स एव ब्राह्मणाधमः । न तस्य क्षीयते पाप्मा भवेद्भूरिप्रतिग्रहः ॥ १८८
इमां यो वेत्ति गायत्रीं सर्वबीजसमन्विताम् । स वेत्ति चतुरो वेदान्योगज्ञानं जपत्रयम् ॥ १८९
य एनां नैव जानाति स शूद्रात्परतः स्मृतः । तस्यापूतस्य विप्रस्य न देयं पितृपार्वणम् ॥१९०
न स्नानफलदः कश्चित्सर्वं च निष्फलं भवेत् । विद्या वित्तं तथा जन्म द्विजत्वं कारणं यतः ॥
निष्फलं सकलं तस्य मेध्यं पुष्पं यथाऽशुचौ । चतुर्वेदाश्च गायत्री पुरा वै तुलिता मया ॥१९२
चतुर्वेदात्परा गुर्वी गायत्री मोक्षदा स्मृता । दशभिर्जन्मजनि(भिर्जा)तं शतेन च पुरा कृतम् ॥
त्रियुगं तु सहस्रेण गायत्री हन्ति किल्बिषम् । गायत्रीमक्षमालायां सायं प्रातश्च यो जपेत् ॥१९४
चतुर्णामपि वेदानां फलं प्राप्नोत्यसंशयम् । त्रिसंध्यं यो जपेन्नित्यं गायत्रीं हायनं द्विजः ॥१९५

* वकारमिति क्वचित्पाठः ।

१ ग. घ. कण्ठे । २ घ. देवपितृतर्पणं । ३ ग. बलं । ४ निर्मिता । ५ ग. घ. शुभा ।

तस्य पापं क्षयं याति जन्मकोटिसमुद्भवम् । गायत्र्युच्चारमात्रेण पापकूटात्पुनाति च ॥ १९६
स्वर्गापवर्गमाप्नोति जप्त्वा नित्यं द्विजोत्तमः । वासुदेवस्य मन्त्राणि(न्त्रांश्च) जपेद्यस्तु दिने दिने॥
प्रणमेच्च हरेः पादौ स गच्छेदपवर्गिताम् । वासुदेवस्य स्तोत्राणि मुखे चापि कथोत्तमा ॥ १९८
पङ्कस्य लवमात्रं तु तस्य देहे न तिष्ठति । वेदशास्त्रावगाहेन त्रिस्रोतःस्नानजं फलम् ॥ १९९
*धर्मपाठक(क)तां लोके यज्ञकोटिफलं लभेत् । एवं विप्रगुणान्वक्तुं न शक्नोमि द्विजोत्तम २००
विश्वरूपश्च को देही स मूर्तो हरिरेव च । यस्य शापाद्विनाशः स्यादायुर्विद्या यशो धनम् २०१
वरदानात्समायान्ति सर्वाः संपत्तयस्तथा । विष्णुर्ब्रह्मण्यतामेति सदा विप्रप्रसादतः ॥ २०२
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ २०३
मन्त्रेणैवं हरिं यस्तु पूजयेत्सततं नरः । प्रसादी च हरिस्तस्य विष्णुसायुज्यतां व्रजेत् ॥ २०४
य इदं शृणुयात्पुण्यमाख्यानं धर्मविग्रहम् । तस्य पापं क्षयं याति जन्मजन्मकृतं च यत् ॥ २०५
यः पठेत्पाठयेद्वाऽपि ह्युपदेष्टा जनस्य च । न तस्य पुनरावृत्तिः स्वर्गमक्षयमश्नुते ॥ २०६
धनं धान्यं लभेदत्र राज्यभोगानरोगिताम् । सत्सुतं च शुभां कीर्तिं देववद्रमते दिवि ॥[1] २०७

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे ब्राह्मणसंस्कारकथनं नाम त्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२८९९४

---

अथ चतुश्चत्वारिंशोऽध्यायः ।

---

नारद उवाच—

तव प्रसादतो ज्ञातो विप्रः पुण्यतमश्च यः । यथा जानामि देवेश क्रियया ब्राह्मणाधमम् ॥
ब्रूहि शीघ्रं सुरश्रेष्ठ यदि प्रीतिं मयीच्छसि ॥ १

ब्रह्मोवाच—

स्नानैर्दशविधैर्मुक्तस्तथैव तर्पणादिभिः । संध्यासंयमहीनश्च स एव ब्राह्मणाधमः ॥ २
देवपूजाव्रतैर्मुक्तो वेदविद्यादिभिस्तथा । सत्यशौचादिभिश्चैव योगज्ञानाग्नितर्पणैः ॥ ३
पञ्च स्नानानि विप्राणां कीर्तितानि महर्षिभिः । आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ॥ ४
आग्नेयं भस्मना स्नानमद्भिर्वारुणमुच्यते । आपो हिष्ठेति वै ब्राह्मं वायव्यं गोरजः स्मृतम् ॥ ५
अद्भिरातपवर्षाभिर्दिव्यं स्नानमुदाहृतम् । एतैस्तु मन्त्रतः स्नानात्तीर्थानां फलमाप्नुयात् ॥ ६
तुलसीपत्रसंलग्नं शालग्रामशिलाम्बु च । गवां शृङ्गोदकं चैव विप्रपादोदकं च यत् ॥ ७
गुरूणामेव मुख्यानां पूतात्पूतमिति स्मृतिः । त्यागतीर्थादिभिर्यज्ञैर्व्रतहोमादिभिस्तथा ॥ ८
यत्फलं लभते धीरः स्नानैरेतैस्तु तत्फलं । तर्पणैश्च विनिर्मुक्तः पितॄणामेव नित्यशः ॥ ९
पितृहा नरकं याति संध्याहीनस्तु विप्रहा । मन्त्रव्रतविहीनश्च वेदविद्यागुणैरपि ॥ १०
यज्ञदानादिभिर्मुक्तो ब्राह्मणश्चाधमाधमः । यज्ञार्थका देवलका नाक्षत्रा ग्रामयाजकाः ॥ ११
परदाररता नित्यं पञ्चैते ब्राह्मणाधमाः । मन्त्रसंस्कारहीनाश्च शुचिसंयमवर्जिताः ॥ १२
मोघाशिनो दुरात्मानो ब्राह्मणाश्चाधमाधमाः । अपि स्तेयरता मूढाः सर्वधर्मविवर्जिताः ॥ १३

---

* धर्मपाठकतादिति क्वचित्पाठः ।

---

१ ग. घ. 'धागमैर' । २ ग. असत्ये च र°।

उन्मार्गगामिनो नित्यं ब्राह्मणाश्चाधमाधमाः । श्राद्धादिकर्मरहिता गुरुसेवाविवर्जिताः ॥ १४
अमन्त्रा भिन्नमर्यादा एते सर्वेऽधमाधमाः । असंभाष्या इमे दुष्टाः सर्वे निरयगामिनः ॥ १५
अमेध्यास्ते दुराचारा अपूज्याश्च समन्ततः । खड्गोपजीविकाः प्रेष्या गोवाहनरता द्विजाः॥ १६
कारुकरुपजीवाश्च ऋणवार्धुषिकाश्च ये । वालपण्याभिचाराश्च अन्त्यजाश्रयमाश्रिताः ॥ १७
कृतघ्नाश्च गुरुघ्नाश्च एते सर्वाधमाः स्मृताः । ये चैवान्ये हताचाराः पाखण्डा धर्मनिन्दकाः॥ १८
दूषका देवभेदानामेते ब्रह्मद्विषो द्विजाः । तथाऽपि ब्राह्मणश्चैव न हन्तव्यः कदाचन ॥ १९
एनं हत्वा द्विजश्रेष्ठ ब्रह्महा पुरुषो भवेत् । अन्त्यजातिषु म्लेच्छेषु तथा चण्डालजातिषु ॥ २०
पतितो वाऽन्नयोनिभ्यां न हन्तव्यः कथंचन । सर्वजातिस्त्रियं गत्वा सर्वाभक्ष्यस्य भक्षणात् ॥
द्विजत्वं न विनश्येत पुण्याद्विप्रो भवेत्पुनः ॥ २१

नारद उवाच—

ईदृशं दुष्कृतं कृत्वा पश्चात्पुण्यं समाचरेत् । कां गतिं यात्यसौ विप्रः सर्वलोकपितामह ॥ २२

ब्रह्मोवाच—

कृत्वा सर्वाणि पापानि पश्चाद्यस्तु जितेन्द्रियः । मुच्यते सर्वपापेभ्यः पुनर्ब्रह्मत्वमर्हति ॥ २३
शृणु पुत्र कथां रम्यां विचित्रां च पुरातनीम् । कस्यचिद्ब्राह्मणस्यापि यौवनाढ्यः सुतोऽभवत् ॥
ततो यौवनसंपत्तेर्मोहाच्च पूर्वकर्मणः । चाण्डालीमगमत्सद्यस्तस्याः प्रियतरोऽभवत् ॥ २५
तस्यामुत्पादितास्तेन पुत्रा दुहितरस्तथा । स्वकुटुम्बं परित्यज्य गृहे तस्याश्चिरं स्थितः ॥ २६
अन्याभक्ष्यं न चाश्नाति घृणया च सुरां त्यजेत् । तमुवाच सदा सा च भक्षस्वान्यतरां सुराम् ॥
तामुवाच तदाऽशौचं गदितुं नार्हसि प्रिये । उत्कारो जायते तस्याः श्रवणात्सततं मम ॥ २८
एकदा स मृगान्वेषाच्छ्रान्तः सुप्तो गृहे दिवा । गृहीत्वा सा सुरां तस्य हसित्वा च मुखे ददौ॥
ततो विप्रमुखादग्निः प्रजज्वाल समन्ततः । ज्वाला तु सकुटुम्बां तामदहच्च गृहं वसु ॥ ३०
हाहा कृत्वा समुत्थाय विललाप तदा द्विजः । विलापान्ते च जिज्ञासा समारब्धा च तेन हि॥
कुतश्चाग्निः समुद्भूतो गृहे दाहः कथं मम । ततः खे तमुवाचेदं तेजस्ते ब्राह्मणस्य च ॥ ३२
कथिते तद्यथावृत्ते ब्राह्मणो विस्मयं गतः । विमृश्यार्थमुवाचेदमुपदेशहितं वचः ॥ ३३

ब्राह्मण उवाच—

विप्र नष्टं सुतेजस्ते तस्माद्धर्मचरो भव ॥ ३४

ब्रह्मोवाच—

ततो मुनिवरान्गत्वा पप्रच्छाऽऽत्महितं द्विजः । तमूचुर्मुनयः सर्वे दानधर्मं समाचर ॥ ३५

ऋषय ऊचुः—

पूयन्ते सर्वपापेभ्यो ब्राह्मणा नियमैर्व्रतैः । नियमाञ्शास्त्रदृष्टांश्च पूततार्थमुपाचर ॥ ३६
चान्द्रायणांश्च कृच्छ्रांश्च तप्तकृच्छ्रान्पुनः पुनः । प्राजापत्यांश्च दिव्यांश्च दोषशोषाय सत्वरम् ॥
गच्छ तीर्थानि पूतानि गोविन्दाराधनं कुरु । क्षयमेष्यन्ति पापानि नचिरेणाऽऽसमन्ततः ॥ ३८
पुण्यतीर्थप्रभावाच्च गोविन्दस्य प्रभावतः । क्षयमेष्यन्ति पापानि ब्रह्मत्वं प्राप्स्यते भवान् ॥ ३९
शृणु तात यथावृत्तं कथयामः पुरातनम् । आहारार्थी पुरा वत्स गरुडो विनतासुतः ॥ ४०

१ घ. °वेदा° । २ घ. °न सदा° ।

पतङ्गोऽपि बहिः साक्षादण्डान्निःसृत्य शावकः। क्षुधार्थी मातरं प्राह भक्ष्यं मे दीयतामिति ॥
ततः पर्वतसंकाशं गरुडं च महाबलम्। दृष्ट्वा माता महाभागा तनयं हृष्टमानसा ॥ ४२

विनतोवाच—

क्षुधां ते बाधितुं पुत्र न शक्नोमि समन्ततः। तव तातस्तपस्तेपे लौहित्यस्योत्तरे तटे ॥ ४३
कश्यपो नाम धर्मात्मा साक्षाल्लोकपितामहः। तत्र गच्छस्व पितरमूह कामं यथा तव ॥
अस्योपदेशतस्तात क्षुधा ते शममेष्यति ॥ ४४

ऋषय ऊचुः—

ततो मातुर्वचः श्रुत्वा वैनतेयो महाबलः। अगमत्पितुरभ्याशं स मुहूर्तान्मनोजवः ॥ ४५
दृष्ट्वा तातं मुनिश्रेष्ठं ज्वलन्तमिव पावकम्। प्रणम्य शिरसा वाक्यमुवाच पितरं खगः ॥ ४६

वैनतेय उवाच—

क्षुधार्थी समनुप्राप्तः सुतोऽहं ते महात्मनः। क्षुधया पीडितो नाथ भक्ष्यं मे दीयतां प्रभो ॥ ४७

ऋषय ऊचुः—

ततो ध्यानं समालभ्य ज्ञात्वा तं विनतासुतम्। पुत्रस्नेहाद्वचश्चेदं प्रोवाच मुनिसत्तमः ॥ ४८

कश्यप उवाच—

अनेकशतसाहस्रा निषादाः सरितां पतेः। तीरे तिष्ठन्ति पापिष्ठास्तांस्त्वं भक्ष सुखी भव ॥ ४९
तीर्थमुत्सादयन्ति स्म तीर्थकाका दुरासदाः। विना विप्रं निषादेषु वस त्वं ह्यविलक्षितम् ॥ ५०

ऋषय ऊचुः—

इत्युक्तः प्रययौ पक्षी भक्षयामास तांस्ततः। अलक्ष्यभावो विप्रोऽपि गिलितस्तेन पक्षिणा॥ ५१
स तस्य गलके गाढं लालपी(गी)ति द्विजस्तदा। वमितुं गिलितुं चापि न शशाक द्विजोत्तमः ५२
गत्वाऽथ पितरं प्राह किं त्वेतदिति मे पितः। लग्नं मे गलके सत्त्वं प्रतिकर्तुं न शक्नुयाम् ॥ ५३

ऋषय ऊचुः—

तस्य तद्वचनं श्रुत्वा कश्यपस्तमुवाच ह ॥ ५४

कश्यप उवाच—

मयोक्तं ते पुरा वत्स ब्राह्मणोऽयं न बुध्यसे ॥ ५५

ऋषय ऊचुः—

इत्युक्त्वा च मुनिर्धीमान्द्विजं प्राह स धार्मिकः ॥ ५६

कश्यप उवाच—

आगच्छतां ममाऽऽसन्नं हितं ते प्रवदाम्यहम् ॥ ५७

ऋषय ऊचुः—

तमुवाच तदा विप्रः कश्यपं मुनिपुंगवम् ॥ ५८

विप्र उवाच—

ममैते सुहृदो नित्यं सर्वे संबन्धिनः प्रियाः। श्वशुराः श्यालकाश्चाऽऽप्ताः सबालाश्च तथाऽपरे ॥
एतैः सह प्रयास्यामि निरयं वाऽपि वा शिवम् ॥ ५९

ऋषय ऊचुः—

तस्य तद्वचनं श्रुत्वा विस्मितः कश्यपोऽब्रवीत् ॥ ६०

कश्यप उवाच—

द्विजानां च कुले जातश्चाण्डाले पतितो भवान् । पुरुषास्ते प्रतिष्ठन्ति घोरे च निरये ध्रुवम् ६१ ९

चिराय निष्कृतिस्तेषां नैवास्तीति कथंचन । सर्वांश्चैव दुराचारांश्चाण्डालान्पापकारिणः ॥ ६२

दोषांस्त्यक्त्वा नरः पश्चात्सुखी भवति नान्यथा । अज्ञानाद्यदि वा मोहात्कृत्वा पापं सुदारुणम् ०

ततो धर्मं चरेद्यस्तु सोऽपि गच्छेत्परां गतिम् । पापकृन्न चरेद्धर्मं पापे कुर्यान्मतिं पुनः ॥ ६४

शिलानावं यथाऽऽरूढः सागरे संनिमज्जति । कृत्वा सर्वाणि पापानि तथा दुर्गतिसंचयम् ॥ १

उपशान्तो भवेत्पश्चात्तं दोषं शमयिष्यति ॥ ६५

ऋषय ऊचुः—

तमुवाच महाप्राज्ञं द्विजं मुनिवरोत्तमम् ॥ ६६

विप्र उवाच—

यदि मां न जहातीति खगः सर्वान्हि बान्धवान् । [*ततः प्राणं च त्यक्ष्यामि खगे मर्मावघातिनि

नो चेत्त्यजतु मे बन्धून्प्रतिज्ञा मे दृढात्मनः ॥ ६७

ऋषय ऊचुः—

ततस्तार्क्ष्यमुवाचेदं मुनिर्ब्रह्मवधाद्भिया] ॥ ६८

कश्यप उवाच—

उद्वमैतान्सविप्रांश्च म्लेच्छानेतान्समन्ततः ॥ ६९

ऋषय ऊचुः—

वनेषु पर्वतान्तेषु दिक्षु तान्पतगेश्वरः । उद्ववाम ततः शीघ्रं दोषज्ञः पितुराज्ञया ॥ ७०

ततः पूर्वेऽभवन्व्यक्ता अकेशाः श्मश्रुवर्जिताः । यवना भोजनप्रीताः किंचिच्छ्मश्रुयुताश्च ये॥७१

अग्नौ च नग्नकाः पापा दक्षिणस्यामवाचकाः । घोराः प्राणिवधे प्रीता दुरात्मानो गवाशिनः॥७२

नैर्ऋते कुंवदाः पापा गोब्राह्मणवधोद्यताः । खर्पराः पश्चिमे पूर्वे निवसन्ति च दारुणाः ॥ ७३

वायव्यां च तुरुष्काश्च श्मश्रुपूर्णा गवाशिनः । अश्वपृष्ठसमारूढाः प्रयुद्धेष्वनिवर्तिनः ॥ ७४

उत्तरस्यां च गिरयो म्लेच्छाः पर्वतवासिनः । सर्वभक्षा दुराचारा वधबन्धरताः किल ॥ ७५

ऐशान्यां निरयाः सन्ति कर्तॄणां वृक्षवासिनः । एते म्लेच्छा स्थिता दिक्षु घोरास्ते शस्त्रपाणयः

एषां च स्पर्शमात्रेण सचैलो जलमाविशेत् । एतेषां च कलौ शेषेऽप्यकाले धर्मवर्जिते ॥ ७७

संस्पर्शं च प्रकुर्वन्ति वित्तलोभात्समन्ततः । म्लेच्छांस्तान्मोचयित्वा तु क्षुधया परिपीडितः ७८

पुनराह द्विजस्तात क्षुधा मे बाधतेतराम् । अवदद्गरुडं तत्र कश्यपः कृपयाऽद्भुतम् ॥ ७९

कश्यप उवाच—

तिष्ठन्तौ विपुलौ तत्र जिघांसू गजकच्छपौ । अप्रमेयौ महासत्त्वौ सागरस्यैकदेशतः ॥

तावप्सु च द्रुतं वत्स क्षुधां ते वारयिष्यतः ॥ ८०

ऋषय ऊचुः—

स पितुर्वचनं श्रुत्वा तत्र गत्वाऽभिपद्य तौ । नखैर्भित्त्वा कूर्मगजौ महासत्त्वो महाजवः ॥ ८१

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. पुस्तकस्थः ।

---

१ घ. ज. कर्बुदाः ।

खमुत्पपात तौ धृत्वा विद्युद्वेगो महाबलः । आधारतां न गच्छन्ति नगाश्च मन्दरादयः ॥ ८२
ततो योजनलक्षे द्वे गत्वा मारुतरंहसा । महत्यां जम्बुशाखायां निपपात महाबलः ॥ ८३
भग्ना सा सहसा शाखा तां पतन्तीं खगेश्वरः । गोब्राह्मणवधाद्भीतो दधार तरसा बली ॥ ८४
धृत्वा तां सुचिरं वेगाद्भ्रवन्तं खे महाबलम् । गत्वा विष्णुरुवाचेदं नररूपधरो हरिः ॥ ८५

विष्णुरुवाच—

कस्त्वं भ्रमसि चाऽऽकाशे किमर्थं पतगेश्वर । विधृत्य महतीं शाखां महान्तौ गजकच्छपौ ॥८६
तमुवाच द्विजस्तस्मिन्नररूपधरं हरिम् । गरुडोऽहं महाबाहो खगरूपः स्वकर्मणा ॥ ८७
कश्यपस्य मुनेः सूनुर्विनतागर्भसंभवः । पश्यैतौ च महासत्त्वौ भक्षणार्थं मया धृतौ ॥ ८८
न धरा च मयाऽऽधारो न वृक्षा न च पर्वताः । अनेकयोजनान्यूर्ध्वं दृष्ट्वा जम्बूमहीरुहम् ॥ ८९
अपतं तस्य शाखायां सहेमौ भक्षितुं प्रति । भग्ना सा सहसा शाखा तां च धृत्वा भ्रमाम्यहम् ॥
कोटिकोटिसहस्राणां ब्राह्मणानां गवां वधात् । भयं तत्र विषादो मे सहसा प्राविशद्बुध ॥
किं करोमि कथं यामि को मे वेगं सहिष्यति ॥ ९१

ऋषय ऊचुः—

इत्युक्ते पतगश्रेष्ठं प्रोवाचेदं हरिस्तदा ॥ ९२

विष्णुरुवाच—

अस्मद्बाहुं समारुह्य भक्षेमौ गजकच्छपौ ॥ ९३

गरुड उवाच—

ममाऽऽधारं न गच्छन्ति सागराश्च नगोत्तमाः । अथ चैवं महासत्त्वं कथं त्वं धारयिष्यसि ॥९४
ऋते नारायणादन्यः को मां धारयितुं क्षमः । त्रैलोक्ये कः पुमांस्तिष्ठेद्यो वेगं मे सहिष्यति ९५

हरिरुवाच—

स्वकार्यमुद्धरेत्प्राज्ञः स्वकार्यं कुरु सांप्रतम् । कृत्वा कार्यं खगश्रेष्ठ विजानीषे च मां ध्रुवम् ॥९६

ऋषय ऊचुः—

महासत्त्वं च तं दृष्ट्वा विमृश्य मनसा खगः । एवमस्त्विति चोक्त्वा स पपात ह महाभुजे ॥९७
न चचाल भुजस्तस्य संनिपाते खगेश्वरे । तत्र स्थित्वा च तां शाखां मुमोच पर्वतालये ॥ ९८
शाखापतनमात्रेण सचराचरकानना । चचाल वसुधा चैव सागराः प्रचकम्पिरे ॥ ९९
ततश्च खादितौ सत्त्वौ सहसा नागकच्छपौ । तृप्तिं नो प्राप्तवान्सोऽपि क्षुधा तस्य न शाम्यति ॥
एतज्ज्ञात्वा तु गोविन्दस्तमुवाच खगेश्वरम् ॥ १००

विष्णुरुवाच—

भुजस्य मम मांसं तु भक्षयित्वा सुखी भव ॥ १०१

ऋषय ऊचुः—

इत्युक्ते प्रचुरं मांसं भुजस्य तस्य तेन हि । खादितं क्षुधया पुत्र व्रणं तस्य न विद्यते[1] ॥
तमुवाच महाप्राज्ञश्चराचरगुरुं हरिम् ॥ १०२

वैनतेय उवाच—

कस्त्वं किंवा प्रियं तेऽद्य करिष्यामि च सांप्रतम् ॥ १०३

---

१ ग. घ. दृश्यते ।

नारायण उवाच—

विद्धि नारायणं मां हि त्वत्प्रियार्थं समागतम् ॥ १०४

ऋषय ऊचुः—

रूपं स्वं दर्शयामास प्रत्ययार्थं च तस्य वै । पीतवस्त्रं घनश्यामं चतुर्भुजमनोरमम् ॥ १०५

शङ्खचक्रगदापद्मधरं सर्वसुरेश्वरम् । तं च दृष्ट्वा गरुत्मांश्च प्रणम्य शिरसा हरिम् ॥ १०६

वैनतेय उवाच—

प्रियं किं ते करिष्यामि वद नः पुरुषोत्तम ॥ १०७

ऋषय ऊचुः—

तमब्रवीन्महातेजा देवदेवेश्वरो हरिः ॥ १०८

विष्णुरुवाच—

भव मे वाहनं शूर सखे त्वं सार्वकालिकम् ॥ १०९

ऋषय ऊचुः—

तमुवाच खगश्रेष्ठो धन्योऽहं विबुधेश्वर । सफलं जन्म मे नाथ त्वां च दृष्ट्वाऽद्य मे प्रभो ११०

प्रार्थयित्वा च पितरावागमिष्यामि तेऽन्तिकम् । प्रीतो विष्णुरुवाचेदं भव त्वमजरामरः ॥ १११

अवध्यः सर्वभूतेभ्यः कर्म तेजश्च मत्समम् । सर्वत्र ते गतिश्चास्तु निखिलं तु सुखं ध्रुवम् ११२

संमिलतु द्रुतं सर्वं यत्ते मनसि वर्तते । यथेष्टं प्रीतिमाहारमकष्टेन प्रलप्स्यसे ॥ ११३

व्यसनान्मातरं सद्यो मोचयिष्यसि नान्यथा । एवमुक्त्वा हरिः सद्यस्तत्रैवान्तरधीयत ॥ ११४

तार्क्ष्योऽपि पितरं गत्वाऽकथयच्चाखिलं ततः । स तच्छ्रुत्वा महृष्टात्मा तनयं पुनरब्रवीत् ॥ ११५

कश्यप उवाच—

धन्योऽहं च खगश्रेष्ठ धन्या ते जननी शिवा । धन्यं क्षेत्रं कुलं चैव यस्य पुत्रस्त्वमीदृशः ११६

यस्य पुत्रः कुले जातो वैष्णवः पुरुषोत्तमः । कुलकोटिं समुद्धृत्य विष्णुसायुज्यतां व्रजेत् ॥ ११७

विष्णुं यः पूजयेन्नित्यं विष्णुं ध्यायेत गायति । जपेन्मन्त्रं सदा विष्णोः स्तोत्रं तस्य पठिष्यति[1]

प्रसादं च भजेन्नित्यमुपवासं हरेर्दिने । [*क्षयाच्च सर्वपापानां मुच्यते नात्र संशयः ॥ ११९

यस्य तिष्ठति गोविन्दो मानसे च सदैव हि । स एव नरशार्दूलो विष्णुलोके महीयते ॥ १२०

जले विष्णुः स्थितो नित्यं रम्यस्थाने च सत्पथे । गवि विप्रे सदा स्वर्गे ब्रह्मागारे शुचेर्गृहे ॥

एतेषु च जपेद्यस्तु स पुण्यैः पुरुषोत्तमः । जन्मकोटिसहस्रेभ्यः कृत्वाऽसत्कर्मसंचयम् ] ॥ १२२

क्षयाच्च सर्वपापानां विष्णोः किंकरतां व्रजेत् । धन्योऽसौ मानवो लोके विष्णोः सादृश्यतां व्रजेत् ॥

नित्यः सुरवरैः पूज्यो लोकनाथोऽच्युतोऽव्ययः । सुप्रसन्नो भवेद्यस्य स एव पुरुषोत्तमः ॥ १२४

तपोभिर्बहुभिर्धर्मैर्मखैर्नानाविधैरपि । विष्णुर्न लभ्यते देवैस्त्वयाऽसौ विप्रलभ्यते ॥ १२५

सपत्नीव्यसनाद्घोरान्मातरं ते प्रमोचय । ततो यास्यसि देवेशं कृत्वा मातुः प्रतिक्रियाम् ॥ १२६

गृहीत्वा जनकस्याऽऽज्ञां लब्ध्वा विष्णोर्वरं महत् । अम्बापार्श्वं गतो हृष्टस्तां प्रणम्याग्रतः स्थितः

विनतोवाच—

अभवद्भोजनं तेऽद्य पुत्र दृष्टः पिताऽपि च । किमर्थं वा विलम्बस्ते चिन्तया व्यथिता ह्यहम् ॥

---

* धनुश्चिह्नान्तर्गतः पाठो घ. ज. पुस्तकस्थः ।

---

१ ज. °ति । पर्णमम्बु भ° । २ घ. प्रणामं कुरुते नित्य° ।

ऋषय ऊचुः—

स मातुर्वचनं श्रुत्वा गरुडः प्रहसन्निव । कथयामास वृत्तान्तं सा श्रुत्वा विस्मिताऽभवत् ॥१२९

विनतोवाच—

कथं च दुष्करं कर्म शिशुभावात्त्वया कृतम् । धन्याऽहं मे कुलं धन्यं यस्त्वं विष्णुसखोऽभवः ॥

लब्ध्वा वरं महात्मानं दृष्ट्वा मे हृष्यते मनः । पौरुषेण त्वया वत्स उद्धृतं मे कुलद्वयम् ॥ १३१

सुपर्ण उवाच—

मातः किं ते करिष्यामि प्रियमेव तदुच्यताम् । कार्यं कृत्वाऽथ यास्यामि पार्श्वं नारायणस्य च

ऋषय ऊचुः—

एतच्छ्रुत्वा तु सा प्राह गरुडं विनता सती । महद्दुःखं च मे चास्ति कुरु तात प्रतिक्रियाम् १३३

भगिनी मे सपत्नी सा भणिताऽहं तया पुरा । तस्या दास्यमहं प्राप्ता कस्तारयति मामितः १३४

कृष्णं कृत्वा विषैरश्वं तस्याः पुत्रैर्महोरगैः । उषःकालेऽवदत्सा च अश्वोऽयं कृष्णतां व्रजेत् ॥

ततोऽहमवदं तत्र सदाचारमिवाऽऽहिता । मिथ्या ते वचनं मातः प्रतिज्ञेति तदा मया ॥ १३६

यदीमं कृष्णताऽभ्येति हरेरश्वमहं तदा । कृता भवामि ते दासी ह्यहमेतत्तदाऽवदम् ॥ १३७

ततस्तस्मिन्हरेरश्वे कृते कृष्णे च कृत्रिमैः । तस्याः पुत्रैश्च धूर्तैश्च दासीत्वमगमं तदा ॥ १३८

यस्मिन्काले ह्यभीष्टं च तस्या द्रव्यं ददाम्यहम् । तस्मिन्काले ह्यदासीत्वं यास्यामि कुलनन्दन ॥

गरुड उवाच—

पृच्छ शीघ्रं च मातस्त्वां करिष्यामि प्रतिक्रियाम् । भक्षयिष्यामि तान्नागान्प्रतिज्ञा मे यथार्थतः॥

ऋषय ऊचुः—

ततः कद्रूमुवाचेदं विनता दुःखिता सती ॥ १४१

विनतोवाच—

अभीष्टं वद कल्याणि येन मुच्येऽथ कृच्छ्रतः ॥ १४२

ऋषय ऊचुः—

अब्रवीत्सा दुराचारा पीयूषं दीयतामिति । एतच्छ्रुत्वा तु वचनमभवत्सा च निष्प्रभा ॥

ततः शनैरुपागम्य तनयं प्राह दुःखिता ॥ १४३

विनतोवाच—

अमृतं प्रार्थयेत्पापा तात किं वा करिष्यसि ॥ १४४

ऋषय ऊचुः—

श्रुत्वा वाक्यं गरुत्मांश्च रुषा क्रोधसमन्वितः ॥ १४५

गरुड उवाच—

अमृतं चाऽऽनयिष्यामि मातर्मा विमुखी भव ॥ १४६

ऋषय ऊचुः—

एवमुक्त्वा तु तरसा गतोऽसौ पितुरन्तिकम् ॥ १४७

गरुड उवाच—

अमृतं चाऽऽनयिष्यामि मातुरर्थेऽधुनाऽनघ ॥ १४८

ऋषय ऊचुः—

स तस्य वचनं श्रुत्वा मुनिः प्राह खगेश्वरम् ॥ १४९

कश्यप उवाच—

सत्यलोकस्य वै चोर्ध्वं विश्वकर्मविनिर्मिता । पुरी चास्ति सभा रम्या देवानां हितहेतवे ॥१५०

वह्निप्राकारदुर्लभ्या दुर्धर्षा चासुरैः सुरैः । रक्षार्थं निर्मितो देवः सुरैस्तत्र महाबलः ॥

यं यं पश्यति वीरः स स एव भस्मतां व्रजेत् ॥ १५१

सुपर्ण उवाच—

नारायणाद्वरो लब्धो मया च मुनिसत्तम । भयं नास्तीति मे तात सुरासुरगणादपि ॥ १५२

ऋषय ऊचुः—

एवमुक्त्वा गरुत्मान्स उद्धृत्य सागराज्जलम् । जगामाऽऽकाशमाविश्य खगश्चायं मनोजवः १५३

पक्षवातेन तस्यैव रजः समुद्गतं बहु । तस्यान्तिकं न च त्यक्तमगमत्तस्य तच्चयम् ॥ १५४

गत्वा चञ्चुजलेनापि वह्निं +निर्वापयद्बली । रजोभिः परिपूर्णाक्षो न सुरस्तं च पश्यति ॥ १५५

जघान रक्षिवर्गांस्तानमृतं चाऽऽहरद्बली । आनयन्तं च पीयूषं खगं गत्वा शतक्रतुः ॥

ऐरावतं समारूढो वाक्यमेतदुवाच ह ॥ १५६

इन्द्र उवाच—

खगरूपधरः कस्त्वं पीयूषं हरसे बलात् । अप्रियं सर्वदेवानां कृत्वा जीवेरितः कथम् ॥

विशिखैरग्निसंकाशैर्नयामि यममन्दिरम् ॥ १५७

ऋषय ऊचुः—

श्रुत्वा वाक्यं हरेस्तस्य चुकोप च महाबलः ॥ १५८

गरुड उवाच—

नयामि तव पीयूषं दर्शयस्व पराक्रमम् ॥ १५९

ऋषय ऊचुः—

एतच्छ्रुत्वा महाबाहुर्जघान विशिखैः शितैः । यथा मेरुगिरेः शृङ्गं तोयवर्षेण तोयदः ॥ १६०

नखैरशनिसंकाशैर्बिभेद गरुडो गजम् । मातलिं च रथं चक्रं तथा देवान्पुरःसरान् ॥ १६१

व्यथितोऽसौ महाबाहुर्मातलिर्गजपुंगवः । विमुखाः पक्षवातेन सर्वे देवगणास्तथा ॥ १६२

ततस्तु कोपितो जिष्णुर्जघान कुलिशेन तम् । कुलिशस्यावपातेन न च क्षुब्धो महाखगः॥ १६३

स्वं मोघं भिदुरं दृष्ट्वा हरिर्भीतोऽभवत्तदा । संनिवृत्य ततो युद्धात्तत्रैवान्तरधीयत ॥ १६४

सुतरामपि गच्छन्तं वेगाद्भूतलमागतः । अब्रवीत्स सुरश्रेष्ठः सर्वदेवगणाग्रतः ॥ १६५

शक्र उवाच—

यदि दास्यसि पीयूषमिदानीं नागमातरि । भुजंगाश्चामराः सर्वे क्रियन्ते हि ध्रुवं तया ॥ १६६

प्रतिज्ञा ते भवेन्नष्टा न फलं जीवितस्य ते । तस्मादिदं हरिष्यामि संमतेन तवानघ ॥ १६७

गरुत्मानुवाच—

यस्मिन्काले ह्यदासी सा माता मे दुःखिता सती । विदिता सर्वलोकेषु हरेऽमृतं हरिष्यसि ॥

---

+ अडभाव आर्षः ।

ऋषय ऊचुः—

एवमुक्त्वा महावीर्यो गत्वोवाच प्रसूं तदा ॥ १६९

गरुड उवाच—

आनीतममृतं मातस्तस्या एव प्रदीयताम् ॥ १७०

ऋषय ऊचुः—

प्रोत्फुल्लहृदया सा च दृष्ट्वा पुत्रं सहामृतम् । तामाहूयामृतं दत्त्वा ह्यदासीतां गता तदा ॥ १७१
तृणकाष्ठानि भूतानि पशवश्च सरीसृपाः । दृष्ट्वा सविस्मयाः सर्वे देवा महर्षयस्तदा ॥ १७२
मोचयित्वा तु तामम्बां गरुडः सुप्तुतां गतः । एतस्मिन्नन्तरे शक्रो जहार सहसा सुधाम् ॥ १७३
ततश्च गरलं दत्त्वा तया चानुपलक्षितः । प्रहृष्टहृदया कद्रूः पुत्रानाहूय संभ्रमात् ॥ १७४
तेषां मुखे ददौ हृष्टा क्ष्वेडं चामृतलक्षणम् । तानुवाच प्रसूः पुत्रान्युष्माकं च कुले सदा ॥ १७५
मुखे तिष्ठन्त्वमी देवा विन्दवश्चास्य निर्वृताः । महर्षयस्ततो देवाः सिद्धगन्धर्वमानुषाः ॥ १७६
ऊचुः सन्तु कुले मातरस्माकं च प्रसादतः । नागैर्विसर्जिता देवाः ससिद्धा मुनयस्तथा ॥ १७७
जग्मुः स्वमालयं हृष्टा नागाः प्रमुदिताः स्थिताः । एतस्मिन्नन्तरे नागांश्चखाद गरुडो बलात् ॥
दिक्षु पलायिताः शेषाः पर्वतेषु वनेषु च । सागरेषु च पाताले विलेषु तरुकोटरे ॥ १७९
निभृतेषु निकुञ्जेषु स्थिताः सर्पाश्च निर्वृताः । भुजगांश्चैव भक्ष्यांश्च सदैव विधिनिर्मितान् ॥ १८०
स खादयित्वा नागांश्च संभाष्य पितरावथ । विबुधान्पूजयित्वा तु जगाम हरिमव्ययम् ॥ १८१
यः पठेच्छृणुयाद्वाऽपि सुपर्णचरितं शुभम् । सर्वपापविनिर्मुक्तः सुरलोके महीयते ॥ १८२

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे गरुडोत्पत्तिर्नाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२८७७६

---

अथ पञ्चचत्वारिंशत्तमोऽध्यायः ।

---

ब्रह्मोवाच ( ऋषय ऊचुः )—

अतः परं तु विप्रर्षे चाण्डालपतितो द्विजः । प्रलप्य च बहूञ्शोकाञ्जगाम कश्यपं मुनिम् ॥ १
गत्वोवाच मुनिश्रेष्ठं वदास्माकं हितं वचः । यथा पापाद्विमुच्येऽहं मुनिश्रेष्ठ तथा कुरु ॥
तमुवाच महातेजा ईषद्धास्यसमन्वितः ॥ २

कश्यप उवाच—

संदर्शनाच्च म्लेच्छानामुपशान्तोऽसि वै स्वयम् । गायत्र्याश्च जपैर्होमैर्व्रतैश्चान्द्रायणादिभिः ॥ ३
स्मर नित्यं हरेः पादमुपोष(ष्य) हरिवासरम् । अहर्निशं हरेर्ध्यानं प्रणामं कुरु तं प्रभुम् ॥ ४
तीर्थस्नानेन मन्त्रेण पङ्कस्यान्तं गमिष्यसि । ततः पापक्षयादेव ब्राह्मणत्वं च लप्स्यसे ॥
व्रतैर्वर्षादिवं मोक्षं नाशयन्कल्मषं द्विज ॥ ५

ऋषय ऊचुः—

मुनेस्तस्य वचः श्रुत्वा कृतकृत्योऽभवत्तदा । पुण्यं स विविधं कृत्वा पुनर्ब्रह्मत्वमाप्तवान् ॥ ६
ततस्तप्त्वा तपस्तीव्रं स्वर्लोकं चिरमभ्यगात् । सद्वृत्तस्याखिलं पापं क्षयं याति दिने दिने ॥ ७

---

१ ग. घ. °म् । श्वेतं च ग° । २ ग. घ. ज. °ष्ठ मुदाऽ° । ३ ख. ग. घ. ङ. ज. °माप्नुयात् । त° ।

असद्वृत्तस्य पुण्यं हि क्षयं यात्यञ्जनोपमम् । अनाचाराद्धतो विप्रः प्राचारात्सुरतां व्रजेत् ॥ ८
ततः कण्ठगतैः प्राणैराचारं कुरुते द्विजः । कर्मणा मनसाऽङ्गेन सदाचारं सदा कुरु ॥ ९

ब्रह्मोवाच—

कश्यपस्योपदेशेन स विनीतोऽभवद्द्विजः । पुण्यात्पापक्षयं कृत्वा तपस्तप्त्वाऽथ स्वर्गतः ॥ १०
हताचारी हतो विप्रः स्वर्गलोकेषु गर्हितः । आचारं तु पुनः कृत्वा सुरलोके महीयते ॥ ११

नारद उवाच—

प्राप्नुवन्ति गतिं लोकाः पूजयित्वा द्विजोत्तमान् । द्विजानां पीडनं कृत्वा गतिं गच्छन्ति कां प्रभो

ब्रह्मोवाच—

क्षुधा संतप्तदेहानां ब्राह्मणानां महात्मनाम् । नार्चयेच्छक्तितो भक्त्या स याति नरकं नरः १३
परुषेण क्रोशयित्वा क्रोधाद्यस्तु विसर्जयेत् । स याति नरकं घोरं महारौरवकृच्छ्रकम् ॥ १४
संनिवृत्तस्ततः कीटादन्त्यजातिषु जायते । ततो रोगी दरिद्रस्तु क्षुधया परिपीडितः ॥ १५
नावमन्येत्ततो विप्रं क्षुधया गृहमागतम् । न ददामीति यो ब्रूयाद्देवाग्निब्राह्मणेषु च ॥ १६
तिर्यग्योनिशतं गत्वा चाण्डालत्वं स गच्छति । पादमुद्यम्य यो विप्रं हन्ति गां पितरौ गुरुम् १७
रौरवे नियतं वासस्तस्य नास्तीति निष्कृतिः । यदि पुण्याद्भवेज्जन्म स एव पङ्गुतां व्रजेत् ॥१८
अतिदीनो विषादी च दुःखशोकाभिपीडितः । एवं जन्मत्रयं प्राप्य भवेत्तस्यैव निष्कृतिः ॥ १९
मुष्टिचर्पटकीलैश्च हन्याद्विप्रं तु यः पुमान् । तापने रौरवे घोरे कल्पान्तं सोऽपि तिष्ठति ॥ २०
अथ जन्म समासाद्य कुक्कुरः करवण्डकः । अन्त्यचातिषु जातोऽपि दरिद्रः कुक्षिशूलवान् ॥ २१
पादमु(द उ)द्यम्यते वाचा तस्य पादे शिलीपदः । खञ्जो वा मृदुजङ्घो वा खण्डपादो भवेन्नरः
पक्षवातेन चाङ्गानि प्रकम्पन्ते सदैव हि । मातरं पितरं विप्रं स्नातकं च तपस्विनम् ॥ २३
हत्वा गुरुगणं क्रोधात्कुम्भीपाके चिरं वसेत् । उषित्वा चैव जायेत कीटजातिषु तत्परम् ॥ २४
विरुद्धं परुषं वाक्यं यो वदेद्धि द्विजातिषु । अष्टौ कुष्ठाः प्रजायन्ते तस्य देहे दृढं सुत ॥ २५
विचर्चिकाऽथ दद्रुश्च मण्डलाः शुक्तिसिध्मकौ । कालि(लः)कुष्ठस्तथा शुक्लस्तरुणश्चातिदारुणः२६
ततो भिषक्प्रयोगे च पापात्पुण्यं पलायते । अपुण्याज्जलरेखेव तेनैव निधनं व्रजेत् ॥ २७
एषां मध्ये महाकुष्ठास्त्रय एव प्रकीर्तिताः । कालि(लः)कुष्ठस्तथा शुक्लस्तरुणश्चातिदारुणः ॥ २८
महापातकभावानां ज्ञानात्संसर्गतोऽपि वा । अतिपातकिनामेव त्रयो देहे भवन्ति वै ॥ २९
संसर्गात्सह संबन्धाद्रोगः संचरते नृणाम् । दूरात्परित्यजेद्धीरः स्पृष्ट्वा स्नानं समाचरेत् ॥ ३०
पतितं कुष्ठसंयुक्तं चाण्डालं च गवाशिनम् । श्वानं रजस्वलां भिल्लं स्पृष्ट्वा स्नानं समाचरेत् ३१
दुरितस्यानुरूपेण देहे कुष्ठा व्यवस्थिताः । इह लोके परत्रैवाप्यत्र नास्ति तु संशयः ॥ ३२
न्यायेनोपार्जितां वृत्तिं ब्रह्मस्वं हरते तु यः । अक्षयं नरकं प्राप्य पुनर्जन्म न विद्यते ॥ ३३
पिशुनो यस्तु विप्राणां रन्ध्रान्वेषणतत्परः । तं दृष्ट्वाऽप्यथ वा स्पृष्ट्वा सचैलो जलमाविशेत् ॥३४
ब्रह्मस्वं प्रणयाद्भुक्तं(क्त्वा) दहत्यासप्तमं कुलम् । विक्रमेण तु भुञ्जानो दश पूर्वान्दशापरान् ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥ ३६
मोहाच्च मातरं गत्वा ब्राह्मणीं च गुरोः स्त्रियम् । पतित्वा रौरवे घोरे पुनरुत्पत्तिदुर्लभः ॥ ३७

---

१ ख. ङ. फलायते ।

पतन्ति पितरस्तस्य कुम्भीपाकेऽथ तापने । अवीचिकालसूत्रे च महारौरवरौरवे ॥ ३८
कदाचिदपि वा तेषां निष्कृतिर्नावमेनिरे । प्राणं हत्वा द्विजातीनां स्वयं यात्यपुनर्भवम् ॥
पतन्ति पुरुषास्तस्य रौरवे च सहस्रशः ॥ ३९

नारद उवाच—

सर्वेषामेव विप्राणां वधे च पातकं समम् । विषमं वा कुतस्तिष्ठेत्तत्त्वतो वक्तुमर्हसि ॥ ४०

ब्रह्मोवाच—

हत्वा विप्रं ध्रुवं पुत्र पातकं यदुदाहृतम् । लभते ब्रह्महा घोरं वक्तव्यं चापरं शृणु ॥ ४१
लक्षकोटिसहस्राणां ब्राह्मणानां वधो भवेत् । वेदशास्त्रयुतं हत्वा श्रोत्रियं विजितेन्द्रियम् ॥ ४२
शैवं च वैष्णवं हत्वा तस्माद्दशगुणोत्तरम् । स्ववंशान्पातयित्वा तु पुनर्जन्म न विद्यते ॥ ४३
त्रिवेदं स्नातकं हत्वा वधस्यान्तो न विद्यते । श्रोत्रियं च सदाचारं तीर्थमन्त्रप्रपूतकम् ॥ ४४
ईदृशं ब्राह्मणं हत्वा पापस्यान्तो न विद्यते । अपकारं समुद्दिश्य द्विजः प्राणान्परित्यजेत् ॥४५
दृश्यते यत्र चान्यैस्तु ब्रह्महा स भवेन्नरः । वचोभिः परुषैर्वृत्तैः पीडितस्ताडितो द्विजः ॥ ४६
यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातिनम् । ऋषयो मुनयो देवाः सर्वे ब्रह्मविदस्तथा ॥ ४७
देशानां पार्थिवानां च सा च वध्या भवेदिह । अतो ब्रह्मवधं प्राप्य पितृभिः सह पच्यते ॥४८
प्रायोपवेशकं विप्रं बुधः संमानयेद्ध्रुवम् । दोषैश्चापि विनिर्मुक्तमुद्दिश्य प्राणमुत्सृजेत् ॥ ४९
स प्रलिप्तो वधैर्घोरैर्न तु यं परिकीर्तयेत् । आत्मघातं द्रुमारोहं कोटरैरुपजीवनम् ॥ ५०
यः कुर्यादात्मनो घातं स्ववंशे ब्रह्महा भवेत् । भ्रूणं च घातयेद्यस्तु शिशुं वा आतुरं गुरुम् ॥ ५१
ब्रह्महा स्वयमेव स्यान्न तु यं परिकीर्तयेत् । मारयेच्च सगोत्रं यो ब्राह्मणं ब्राह्मणाधमः ॥ ५२
तस्यैव तद्भवेत्पापं न तु यं परिकीर्तयेत् । पीडयित्वा द्विजं शूद्रः स्वकार्यं चापि साधयेत् ॥ ५३
तत्रापापे च शूद्रस्य पातकं नान्यथा भवेत् । तात्कालिकवधं हत्वा हन्तारमाततायिनम् ॥ ५४
न च हन्ता च तत्पापैर्लिप्यते द्विजसत्तम । आततायिनमायान्तमपि चेदान्तिके रणे ॥ ५५
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् । अग्निदो गरदश्चैव धनहारी च सुप्तघः ॥ ५६
क्षेत्रदारापहारी च षडेते ह्याततायिनः । खलु राजवधोद्योगी पितॄणां च वधे रतः ॥ ५७
अनुयायी नृपो राज्ञश्चत्वारश्चाऽऽततायिनः । तत्क्षणान्न मृतं विप्रं पुनर्हन्तुं न युज्यते ॥ ५८
पुनर्हत्वा वधं घोरं ज्ञानात्प्राप्नोति निश्चितम् । लोके विप्रसमो नास्ति पूजनीयो जगद्गुरुः ॥ ५९
हत्वा तं यद्भवेत्पापं तत्परं च न विद्यते । देववत्पूजनीयोऽसौ देवासुरगणैर्नरैः ॥
ब्राह्मणस्य समो नास्ति त्रिषु लोकेषु निश्चितम् ॥ ६०

नारद उवाच—

कां वृत्तिं समुपाश्रित्य जीवितव्यं द्विजेन हि । अपापेन सुरश्रेष्ठ तत्त्वतो वक्तुमर्हसि ॥ ६१

ब्रह्मोवाच—

अयाचिता च या भिक्षा प्रशस्ता सा प्रकीर्तिता । उञ्छवृत्तिस्ततो भद्रा सुभद्रा सर्ववृत्तिषु ॥ ६२
यामाश्रित्य मुनिश्रेष्ठा गच्छन्ति ब्रह्मणः पदम् । दक्षिणा यज्ञशेषाणां ग्राह्या यज्ञगतेन हि ॥ ६३

१ क. ख. ग. घ. ङ. च. ज. °षैर्वृत्तैः । २ क. च. °रैर्नुनयं । ज. °रैर्नतु यं । झ. °रैर्नुनयं । ३ क. ख. ङ. च. ज. स्ववंशं । ग. घ. स्वयं स ब्र° । ४ झ. तत्र पा° । ५ ख. ङ. पयम् ।

पठनं याजनं कृत्वा ग्रहीतव्यं समा(मं) द्विजैः । पाठयित्वा पठित्वा च कृत्वा स्वस्त्ययनं शुभम्
ब्राह्मणानामिदं जीव्यं शिष्टा वृत्तिः प्रतिग्रहः । शास्त्रोपजीविनो धन्या धन्या वृक्षोपजीविनः ॥
धन्या वृक्षलताजीव्या वाटीसस्योपजीविनः । अन्नजन्तुवधे पापं तस्य दोषोपशान्तये ॥ ६६
नव धान्यानि शस्तानि विप्रेभ्यः संप्रदापयेत् । न चेत्प्राणिवधे ह्यत्र क्षीयन्ते चाऽऽयुषो(?) ध्रुवम्
तस्माद्दद्यात्सुबहूनि पितृदेवद्विजातिषु । अभावात्क्षत्रिया वृत्तिर्ब्राह्मणैरुपजीव्यते ॥ ६८
न्याययुद्धेषु योद्धव्यं चरेद्वीरव्रतं शुभम् । स तया च द्विजो वृत्त्या यद्धनं लभते नृपात् ॥ ६९
पितृयज्ञादिदानेषु मेध्यं तद्धनमुच्यते । समभ्यसेद्धनुर्विद्यां वेदयुक्तां सदाऽनघः ॥ ७०
शक्तिकुन्तगदाखड्गपरिघाणां समन्ततः । अश्वारोहं गजारोहमैन्द्रजालममानकम् ॥ ७१
रथभूमिगतं युद्धं युक्तं सर्वत्र कारयेत् । द्विजदेवध्रुवाणां च स्त्रीणां वृत्तं तपस्विनाम् ॥ ७२
साधुसाध्वीगुरूणां च नृपाणां रक्षणाद्ध्रुवम् । यत्पुण्यं लभते शूरः कथं तद्ब्रह्मवादिभिः ॥ ७३
सर्वपापक्षयं कृत्वा अक्षयं स्वर्गमश्नुते । संमुखे न्याययुद्धे च पतन्ति ब्राह्मणा रणे ॥ ७४
ते व्रजन्ति परं स्थानमगम्यं ब्रह्मवादिनाम् । धर्मयुद्धस्य यद्वृत्तं शृणु पुण्यं यथार्थतः ॥ ७५
संमुखेन प्रयुध्यन्ते न च गच्छन्ति कातरम् । न भग्नं पृष्ठतो घ्नन्ति [1]निःशस्त्रं प्रपलायितम् ॥ ७६
अयुध्यमानं भीरुं च पतितं गतकल्मषम् । असच्छूद्रं स्तुतिप्रीतमाहवे शरणागतम् ॥ ७७
हत्वा च नरकं यान्ति दुर्वृत्ता जयकाङ्क्षिणः । एषा च क्षत्रिया वृत्तिः [2]सदाचारैस्तु गीयते ॥ ७८
यामाश्रित्य दिवं यान्ति सर्वक्षत्रियकुञ्जराः । धर्मयुद्धे [3]शुभो मृत्युः संमुखे क्षत्रियस्य च ॥ ७९
अत्र पूतो भवेत्सोऽपि सर्वपापैः प्रमुच्यते । स तिष्ठेत्स्वर्गलोके च प्रासादे रत्नभूषिते ॥ ८०
जाम्बूनदसमस्तम्भे रत्नभूषितभूतले । इष्टद्रव्यैः सुसंपूर्णे दिव्यवस्त्रोपशोभिते ॥ ८१
पुरतः कल्पवृक्षाश्च तिष्ठन्ति सर्वदायिनः । वापीकूपतडागाद्यैरुद्यानैरुपशोभिते ॥ ८२
यौवनाढ्याश्च सेवन्ते तं देवपुरकन्यकाः । तस्याग्रतो मुदा नित्यं नृत्यन्त्यप्सरसां गणाः ॥ ८३
गीतं गायन्ति गन्धर्वा देवाश्च स्तुतिपाठकाः । एवं क्रमेण कल्पान्ते सार्वभौमो भवेन्नृपः ॥ ८४
सर्वभोगैककर्ता च नीरुङ्मन्मथविग्रहः । तस्य पत्न्यः प्ररूपाढ्याः सदैव यौवनान्विताः ॥ ८५
धर्मशीलाः सुताः शुभ्राः समृद्धाः पितृसंमताः । एवं क्रमेण भुञ्जन्ति सप्तजन्मसु क्षत्रियाः ॥ ८६
अन्यायेन तु योद्धारस्तिष्ठन्ति नरके चिरम् । एवं च क्षत्रिया वृत्तिर्ब्राह्मणैरुपजीव्यते ॥ ८७
वैश्यैः शूद्रैस्तथाऽन्यैश्च अन्त्यजैर्म्लेच्छजातिभिः । ये च योधाः प्रयुध्यन्ते न्याययुद्धेन सर्वदा ॥
तेऽपि यान्ति परं स्थानं सर्वे वर्णा द्विजातयः । न शूरो यो द्विजो भीरुरस्त्रशस्त्रविवर्जितः ॥ ८९
विपत्तौ वैश्यवृत्तिं च कारयेद्द्विजसत्तमः । वैश्यवृत्तिं वणिग्भावं कृषिं चैव तथाऽपरैः ॥ ९०
कारयेत्कृषिवाणिज्यं विप्रकर्म न च त्यजेत् । वणिग्भावान्मृषाऽत्युक्तौ दुर्गतिं प्राप्नुयाद्द्विजः ॥ ९१
[4]आर्द्रद्रव्यं परित्यज्य ब्राह्मणो लभते शिवम् । समुत्पाद्य ततो [5]वृत्तिं दद्याद्विप्राय सर्वशः ॥ ९२
पितृयज्ञे तथा चाग्नौ जुहुयाद्विधिवद्द्विजः । तुलेऽसत्यं न कर्तव्यं तुला धर्मप्रतिष्ठिता ॥ ९३
छलभावं तुले कृत्वा नरकं प्रतिपद्यते । अतुलं चापि यद्द्रव्यं तत्र मिथ्या परित्यजेत् ॥ ९४
एवं मिथ्या न कर्तव्या मृषा पापप्रसूतिका । नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ॥ ९५
अतः सर्वेषु कार्येषु सत्यमेव विशिष्यते । अश्वमेधसहस्रं तु सत्यं च तुलया धृतम् ॥ ९६
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते । यो वदेत्सर्वकार्येषु सत्यं मिथ्या परित्यजेत् ॥ ९७

१ घ. निरस्त्रं । २ घ. °दा धीरैः । ग. °दा वीरैः । ३ घ. ज. रणे । ४ घ. माद्यद्रव्यं । ५ घ. वित्तं ।

स निस्तरति दुर्गाणि स्वर्गमक्षयमश्नुते । वाणिज्यं कारयेद्विप्रो मिथ्याऽवश्यं परित्यजेत् ॥ ९८
वृद्धिं च निक्षिपेत्तीर्थे स्वयं शेषं तु भोजयेत् । देहक्लेशात्तत्सहस्रगुणं भवति सर्वदा ॥ ९९
अर्थार्जनविधौ मर्त्या विशन्ति विषमे जले । कान्तारमटवीं चैव श्वापदैः सेवितां तथा ॥ १००
गिरिं गिरिगुहां दुर्गान्म्लेच्छानां शस्त्रपातिनाम् । गृहं प्रतिभयं स्थानं धनलोभात्समन्ततः १०१
सुतदारान्परित्यज्य दूरं गच्छन्ति लोभिनः । स्कन्धे भारं वहन्त्यन्ये तर्यां च केनिपातनैः(कैः)॥
क्षेपणीभिर्महादुःखैः सदा प्राणव्ययेन च । अर्थस्य संचयः पुत्र प्राणात्प्रियतरो महान् ॥ १०३
एभिर्न्यायार्जितं वित्तं वणिग्भावेन यत्नतः । पितृदेवद्विजातिभ्यो दत्तं चाक्षयमश्नुते ॥ १०४
एतौ दोषौ महान्तौ च वाणिज्ये लोभकर्मणि । लोभानामपरित्यागो मृषाग्राह्यश्च विक्रयः १०५
एतौ दोषौ परित्यज्य कुर्यादर्थार्जनं बुधः । अक्षयं लभते दानाद्वणिग्दोषैर्न लिप्यते ॥ १०६
पुण्यकर्मरतो विप्रः कृषिं हि परिकारयेत् । वाहयेद्दिवसस्यार्धे बलीवर्दचतुष्टयम् ॥ १०७
अभावात्रितयं चैव अविश्वासं न कारयेत् । चारयेच्च तृणेऽच्छिन्ने चौरव्याघ्रविवर्जिते ॥ १०८
दद्याद्ग्रसं यथेष्टं च नित्यमातिष्ठयेत्स्वयम् । गोष्ठं च कारयेत्तत्र किंचिद्विघ्नविवर्जितम् ॥ १०९
सदा गोमयमूत्राभ्यां विध्वंसैश्च विवर्जितम् । न मलं निक्षिपेद्गोष्ठे सर्वदेवनिकेतने ॥ ११०
आत्मनः शयनीयस्य सदृशं कारयेद्बुधः । समं निर्वापयेद्यत्नाच्छीतवातरजस्तथा ॥ १११
प्राणस्य सदृशं पश्येद्गां च सामान्यविग्रहम् । अस्य देहे सुखं दुःखं तथा तस्यैव कल्पते ॥ ११२
अनेन विधिना यस्तु कृषिकर्माणि कारयेत् । स च गोवाहनैर्दोषैर्न लिप्येत धनी भवेत् ॥ ११३
दुर्बलं पीडयेद्यस्तु तथैव गदसंयुतम् । अतिबालातिवृद्धं च स गोहत्यां समालभेत् ॥ ११४
विषमं वाहयेद्यस्तु दुर्बलेन बलेन च । स गोहत्यासमं पापं प्राप्नोतीह न संशयः ॥ ११५
यो वाहयेद्विना सस्यं खादन्तं गां निवारयेत् । मोहात्तृणं जलं वाऽपि स गोहत्यां समालभेत् ॥
अमावास्यां च संक्रान्त्यां पौर्णमास्यां तथैव च । हलस्य वाहनात्पापं गवामयुतहत्यया ॥ ११७
अमूषु पूजयेद्यस्तु सितैश्चित्रादिभिर्नरः । कज्जलैः कुसुमैस्तैलैः सोऽक्षयं स्वर्गमश्नुते ॥ ११८
ग्रासमुष्टिं परगवे यो ददाति सदाऽऽह्निकम् । सर्वपापक्षयस्तस्य स्वर्गं चाक्षयमश्नुते ॥ ११९
यथा विप्रस्तथा गौश्च द्वयोः पूजाफलं समम् । विचारे ब्राह्मणो मुख्यो नृणां गावः पशौ तथा

नारद उवाच—

विप्रो ब्रह्ममुखे जातः कथितो मे त्वयाऽनघ । कथं गोभिः समो नाथ विस्मयो मे विधे ध्रुवम्

ब्रह्मोवाच—

शृणु चात्र यथातथ्यं ब्राह्मणानां गवां यथा । एकपिण्ड(ऐकपिण्ड्यं)क्रियैक्यं तु पुरुषैर्निर्मितं पुरा
पुरा ब्रह्ममुखोद्भूतं कूटं तेजोमयं महत् । चतुर्भागप्रजातं तद्वेदाग्निद्विज(जा)गौस्तथा ॥ १२३
प्राक्तेजःसंभवो वेदो वह्निरेव तथैव च । परतो गौस्तथा विप्रो जाताश्चैव पृथक्पृथक् ॥ १२४
तत्र सृष्टा मया चाऽऽदौ वेदाश्चत्वार ऐकशः । स्थित्यर्थं सर्वलोकानां भुवनानां समन्ततः १२५
अग्निर्हव्यानि भुञ्जीत देवहेतोस्तथा द्विजः । आज्यं गोप्रभवं विद्धि तस्मादेते प्रसूतकाः ॥ १२६
न सन्ति यदि लोकेषु चत्वारोऽमी महत्तराः । तदाऽखिलं च भुवनं नष्टं स्थावरजङ्गमम् ॥ १२७
एभिर्धृताः सदा लोकाः प्रतिष्ठन्ति स्वभावतः । स्वभावो ब्रह्मरूपोऽसावेते ब्रह्ममयाः स्मृताः ॥

१ घ. ज. निपातितैः । २ घ. ज. लोभकर्मणि । ३ ज. °व्याधवि° । ४ घ. विदसै° । ञ. विघसै° । ५ ग. घ. एकतः ।

तस्माद्गौः पूजनीयोऽसौ विप्रदेवासुरैरपि । उदारः सर्वकार्येषु जातस्तथ्यो गुणाकरः ॥ १२९
सर्वदेवमयः साक्षात्सर्वसत्त्वानुकम्पकः । अस्य कायं(यो) मया सृष्टं(ष्टो) पुरैव पोषणं प्रति १३०
अत एव मया दत्तं वरं चातिसुशोभनम् । एकजन्मनि ते मोक्षस्तवास्त्विति विनिश्चितम् ॥१३१
अत्रैव ये मृता गावस्ते गच्छन्ति ममाऽऽलयम् । पापस्य कणमात्रं तु तेषां देहे न तिष्ठति॥१३२
देवी गौर्धेनुका देवै(वा)श्चाऽऽदिदेवास्त्रिशक्तिकाः[1] । प्रसादाद्यस्य यज्ञानां प्रभवो हि विनिश्चितम्[2]
गवां सर्वपवित्राणि पुनन्ति सकलं जगत् । मूत्रं गोर्गोमयं क्षीरं दधि सर्पिस्तथैव च ॥ १३४
अमीषां भक्षणे पापं न तिष्ठति कलेवरे । तस्माद्घृतं दधि क्षीरं नित्यं खादन्ति धार्मिकाः ॥१३५
विशिष्टं सर्वद्रव्येषु गव्यमिष्टं परं शुभम् । यस्यास्य भोजनं नास्ति तस्यै[3] मूर्तिस्तु पूतिका ॥१३६
अन्नाद्यं पञ्चरात्रेण सप्तरात्रेण वै पयः । दधि विंशतिरात्रेण घृतं स्यान्मासमेककम्(?) ॥ १३७
अगव्यैर्यश्च भुङ्क्ते वै मासमेकं निरन्तरम् । भोजने तस्य मर्त्यस्य प्रेतोदन्ति(?) तथैव हि ॥ १३८
परमान्नं परं शुद्धं स्विन्नं चाऽऽतपतण्डुलैः । भुक्त्वा तु यत्कृतं पुण्यं कोटिकोटिगुणं भवेत् १३९
अन्यच्चापि च यद्द्रव्यं हविष्यं शास्त्रनिर्मितम् । तद्भुक्त्वा यत्कृतं कर्म सर्वं लक्षगुणं भवेत्॥१४०
निरामिषं च यत्किंचित्तस्माद्यत्फलं लभेत् । तस्माद्गौः सर्वकार्येषु शस्त एको युगे युगे ॥
सर्वदा सर्वकालेषु धर्मकामार्थमोक्षदः ॥ १४१

नारद उवाच—

केषु किं वा (कस्य) प्रयोगेण परं पुण्यं प्रकीर्तितम् । वद तत्सर्वलोकेश यथा जानामि तत्त्वतः॥

ब्रह्मोवाच—

सकृत्प्रदक्षिणं कृत्वा गोधनं चाभिवन्दयेत् । सर्वपापैर्विनिर्मुक्तः स्वर्गं चाक्षयमश्नुते ॥ १४३
सुराचार्यो यथा वन्द्यः पूज्योऽसौ माधवो यथा । सप्तप्रदक्षिणं कृत्वा चैश्वर्यात्पाकशासनः१४४
कल्य उत्थाय गोमध्ये पात्रं गृह्य सहोदकम् । निषिञ्चेद्यो गवां शृङ्गं मस्तकेनैव तज्जलम् ॥१४५
प्रतीक्षेत निराहारस्तस्य पुण्यं निबोधत । श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु नारद ॥ १४६
सिद्धचारणयुक्तानि सेवितानि महर्षिभिः । अभिषेकः समस्तेषां गवां शृङ्गोदकस्य च ॥ १४७
प्रातरुत्थाय यो मर्त्यः स्पृशेद्गां च घृतं मधु । सर्षपांश्च प्रियंगूंश्च कल्मषात्प्रतिमुच्यते ॥ १४८
घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः । घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे ॥ १४९
घृतं मे सर्वगात्रेषु घृतं मे मनसि स्थितम् । गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ॥ १५०
गावश्च सर्वगात्रेषु गवां मध्ये वसाम्यहम् । इत्याचम्य जपेन्मन्त्रं सायं प्रातरिमं शुचिः ॥१५१
सर्वपापक्षयस्तस्य स्वर्लोके पूजितो भवेत् । यथा गौश्च तथा विप्रो यथा विप्रस्तथा हरिः॥१५२
हरिर्यथा तथा गङ्गा एते न ह्यघपाः स्मृताः । गावो बन्धुर्मनुष्याणां मनुष्या बान्धवा गवाम्१५३
गौस्तु यस्मिन्गृहे नास्ति तद्बन्धुरहितं गृहम् । गोमुखे चाऽऽश्रिता वेदाः सषडङ्गपदक्रमाः॥१५४
शृङ्गयोश्च स्थितौ नित्यं सदैव हरकेशवौ । उदरे च स्थितः स्कन्दः शीर्षे ब्रह्मा स्थितः सदा ॥
वृषध्वजो ललाटे च शृङ्गाग्र इन्द्र एव च । कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ ॥ १५६
दन्तेषु गरुडो देवो जिह्वायां च सरस्वती । अपाने सर्वतीर्थानि प्रस्रावे चैव जाह्नवी ॥ १५७
ऋषयो रोमकूपेषु मुखतः पृष्ठतो यमः । धनदो वरुणश्चैव दक्षिणं पार्श्वमाश्रितौ ॥ १५८

---

१ ञ. °देवी त्रिश° । २ ग. ज. °ज्ञानि प्रभवन्ति वि° । ३ झ. °स्य पूर्तिरपूर्तिका । ४ ग. घ. °ता सर्पिः सदैव । ५ झ. ञ. °ङ्गा घृतेन । ६ झ. ञ. सहैव ।

वामपार्श्वे स्थिता यक्षास्तेजस्वन्तो महाबलाः । मुखमध्ये च गन्धर्वा नासाग्रे पन्नगास्तथा ॥१५९
खुराणां पश्चिमे पार्श्वे अप्सराश्च समाश्रिताः । गोमये वसते लक्ष्मीर्गोमूत्रे सर्वमङ्गला ॥ १६०
पादाग्रे खेचरा वेद्या हम्भशब्दे प्रजापतिः । चत्वारः सागराः पूर्णा धेनूनां च पयोधरे ॥ १६१
गां च स्पृशति यो नित्यं स्नातो भवति नित्यशः । अतो मर्त्यः प्रपुष्टैस्तु सर्वपापैः प्रमुच्यते १६२
गवां खुरोद्धतरजः शिरसा यस्तु धारयेत् । स च तीर्थजले स्नातः सर्वपापैः प्रमुच्यते ॥ १६३

नारद उवाच—

गवां च दशवर्णानां कस्य दाने च किं फलम् । ब्रूहि तत्त्वं गुरुश्रेष्ठ परमेष्ठिन्प्रियं यदि ॥ १६४

ब्रह्मोवाच—

श्वेतां गां ब्राह्मणे दत्त्वा मानवश्चेश्वरो भवेत् । प्रासादे वसते नित्यं भोगी च सुखमेधते ॥१६५
धूम्रा तु स्वर्गकान्तारसंसारे पापमोक्षिणी । अक्षयं कपिलादानं कृष्णां दत्त्वा न सीदति ॥१६६
पाण्डुरा दुर्लभा लोके गौरी च कुलनन्दना । रक्ताक्षी रूपकामस्य धनकामस्य नीलिका ॥१६७
एकां च कपिलां दत्त्वा सर्वपापैः प्रमुच्यते । यत्तु बाल्यकृतं पापं यौवने वार्धके कृतम् ॥ १६८
वाचा कृतं कर्मकृतं मनसा यत्प्रचिन्तितम् । अगम्यागमनं चैव मित्रद्रोहे च पातकम् ॥ १६९
मानकूटं तुलाकूटं कन्यानृतं गवानृतम् । सर्वं च नाशयेत्क्षिप्रं कपिलां यः प्रयच्छति ॥ १७०
दशयोजनविस्तीर्णा महापारा महानदी । नाराचजलकान्तारे प्रसृत उदकार्णवे ॥ १७१
यावद्वत्सस्य द्वौ पादौ मुखं यावन्न जायते । तावद्द्यौः पृथिवी देया यावद्गर्भं न मुञ्चति ॥ १७२
सुवर्णशृङ्गीं वस्त्राढ्यां सर्वालंकारभूषिताम् । ताम्रपृष्ठां रौप्यखुरां तथा कांस्योपदोहनाम् ॥१७३
शोभितां गन्धपुष्पैश्च सर्वालंकारभूषिताम् । ईदृशीं कपिलां दद्याद्द्विजातौ वेदपारगे ॥ १७४
सर्वपापक्षयस्तस्य विष्णुलोकेऽच्युतो भवेत् । तस्यां तु दुह्यमानायां भूमौ पतन्ति बिन्दवः ॥१७५
आरामा दिवि जायन्ते बहुपुष्पफलोत्तमाः । यत्र कामफला वृक्षा नद्यः पायसकर्दमाः ॥ १७६
प्रासादाश्चापि सौवर्णास्तत्र गच्छन्ति गोप्रदाः । दशधेनुं च(नूश्च) यो दद्यादेकं चैव धुरंधरम् ॥
समानं तु फलं प्रोक्तं ब्रह्मणा समुदाहृतम् । एकं च दशभिर्दद्यात्सहस्राणि शतं फलम् ॥ १७८
तस्यानुसारतो वेद्यं फलं नारद यत्ततः । पितॄनुद्दिश्य यः पुत्रो वृषं च मोक्षयेद्भुवि ॥ १७९
पितरो विष्णुलोकेषु महीयन्ते यथेप्सया । चतस्रो वत्सतर्यश्च एकस्यैव वृषस्य च(?) ॥ १८०
मोक्ष्यन्ते सर्वतः पुत्र विधिरेष सनातनः । यावन्ति चैव रोमाणि तस्य तासां च सर्वशः ॥१८१
तावद्वर्षसहस्राणि स्वर्गं भुञ्जन्ति मानवाः । लाङ्गूलेन वृषो यच्च जलं चोत्क्षिपति ध्रुवम् ॥१८२
तत्तोयं तु सहस्राब्दं पितॄणाममृतं भवेत् । खुरेण कर्षयेद्भूमिं ततो लोष्टं च कर्दमः ॥ १८३
पितृभ्यश्च स्वधा तत्र लक्षकोटिगुणं(णा) भवेत् । विद्यमाने च जनके यदि माता विनश्यति १८४
चन्दनेनाङ्किता धेनुस्तस्याः स्वर्गाय दीयते । दाता चैव पितॄणां च ऋणं चैव प्रमुञ्चति ॥ १८५
अक्षयं लभते स्वर्गं पूजितो माधवो यथा । सर्वलक्षणसंयुक्ता तरुणा गौः पयस्विनी ॥ १८[६]
समाप्रसूतिका [शुद्धा] सा च गौः पृथिवी स्मृता । तस्या दानेन मन्त्रस्य(वै पुत्र) पृथ्वीदानसमं फलम्
शतक्रतुसमो मर्त्यः कुलमुद्धरते शतम् । गवां च हरणं कृत्वा मृते गोरथ वत्सके ॥ १८८
कृमिपूर्णे सकूपे च तिष्ठेदाभूतसंप्लवम् । गवां चैव वधं कृत्वा पितृभिः सह पच्यते ॥ १८९
रौरवे नरके घोरे तावत्कालं प्रतिक्रिया । गोप्रचारप्रभग्नश्च खण्डवाहनबन्धनः ॥ १९०

---

१ झ. सर्वतो । २ ञ. स्तीर्णे म । ३ ञ. खाणां श ।

अक्षयं नरकं प्रायात्पुनर्जन्मनि जन्मनि । सकृच्च श्रावयेद्यस्तु कथां पुण्यतमामिमाम् ॥ १९१
सर्वपापक्षयस्तस्य देवैश्च सह मोदते । य इदं शृणुयाद्वाऽपि परं पुण्यतमं महत् ॥
सप्तजन्मकृतात्पापान्मुच्यते तत्क्षणेन हि ॥ १९२

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे गोमाहात्म्यं नाम पञ्चचत्वारिंशत्तमोऽध्यायः ॥ ४५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२८९६८

---

अथ षट्चत्वारिंशत्तमोऽध्यायः ।

---

नारद उवाच—

केनाऽऽचारेण विप्रस्य ब्रह्मतेजो विवर्धते । केनाऽऽचारेण तस्यैव ब्राह्मं तेजो विनश्यति ॥ १

ब्रह्मोवाच—

शयनीयात्समुत्थाय रात्र्यंशे द्विजसत्तमः । देवांश्चैव स्मरेन्नित्यं तथा पुण्यवतो ध्रुवम् ॥ २
गोविन्दं माधवं कृष्णं हरिं दामोदरं तथा । नारायणं जगन्नाथं वासुदेवमजं विभुम् ॥ ३
सरस्वतीं महालक्ष्मीं सावित्रीं वेदमातरम् । ब्रह्माणं भास्करं चन्द्रं दिक्पालांश्च ग्रहांस्तथा ॥ ४
शंकरं च शिवं शंभुमीश्वरं च महेश्वरम् । गणेशं च तथा स्कन्दं गौरीं भागीरथीं शिवाम् ॥ ५
पुण्यश्लोको नलो राजा पुण्यश्लोको जनार्दनः । पुण्यश्लोका च वैदेही पुण्यश्लोको युधिष्ठिरः ॥
अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ ७
एतान्यस्तु स्मरेन्नित्यं प्रातरुत्थाय मानवः । ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ॥ ८
सकृदुच्चारिते तात सर्वयज्ञफलं लभेत् । गवां शतसहस्राणां दानस्य फलमश्नुते ॥ ९
ततश्चापि शुचौ देशे मलमूत्रं परित्यजेत् । दक्षिणाभिमुखो रात्रौ दिवा कुर्यादुदङ्मुखः ॥ १०
परतो दन्तकाष्ठं च तृणैरुदुम्बरादिभिः । अतः परं च संध्यायां संयतश्च द्विजो भवेत् ॥ ११
पूर्वाह्णे रक्तवर्णां तु मध्याह्ने शुक्लवर्णिकाम् । सायं सरस्वतीं कृष्णां द्विजो ध्यायेद्यथाविधि ॥ १२
ततः समाचरेत्स्नानं यथाज्ञानेन यत्नतः । अङ्गं *प्रक्षालयित्वा तु मृद्भिः संलेपयेत्ततः ॥ १३
शिरोदेशे ललाटे च नासिकायां हृदि भ्रुवोः । बाह्वोः पार्श्वे तथा नाभौ जान्वोरङ्घ्रिद्वये तथा ॥
एका लिङ्गे गुदे तिस्रस्तथा वामकरे दश । उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥ १५
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे । मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥ १६
अनेनैव तु मन्त्रेण मृत्तिकां यस्तनौ क्षिपेत् । सर्वपापक्षयस्तस्य शुचिर्भवति मानवः ॥ १७
ततस्तु वेदपूर्वेण स्नानं कुर्याद्विचक्षणः । नदे नद्यां तथा कूपे पुष्करिण्यां तडागके ॥ १८
जलराशौ च वप्रे च घटस्नानं तथोत्तरम् । कारयेद्विधिवन्मर्त्यः सर्वपापक्षयाय च ॥ १९
प्रातः स्नानं महापुण्यं सर्वपापप्रणाशनम् । यः कुर्यात्सततं विप्रो विष्णुलोके महीयते ॥ २०
प्रातःसंध्यासमीपे च यावद्दण्डचतुष्टयम् । तावत्पानीयममृतं पितॄणामुपतिष्ठते ॥ २१
परतो घटिकायुग्मं यावद्यामैकमाह्निकम् । मधुतुल्यं जलं तस्मिन्पितॄणां प्रीतिवर्धनम् ॥ २२
ततस्तु सार्धयामैकं जलं क्षीरमयं स्मृतम् । क्षीरमिश्रं जलं तावद्यावद्दण्डचतुष्टयम् ॥ २३

---

* आर्षो यत्वभावः ।

---

१ झ. च रुणै । २ घ. 'पूर्वेन स्ना' । ३ झ. ञ. 'त्तरे । का' ।

अतः परं च पानीयं यावच्च प्रहरत्रयम् । तत्परं लोहितं प्रोक्तं यावदस्तं गतो रविः ॥ २४
चतुर्थप्रहरस्नाने रात्रौ वा तर्पयेत्पितॄन् । तत्तोयं रक्षसामेव ग्रहणेन विनाशितम् ॥ २५
पानीयं सर्वशुद्ध्यर्थं पुरैव निर्मितं मया । रक्षार्थं तस्य तोयस्य यक्षाश्चैव धुरंधराः ॥ २६
न प्राप्नुवन्ति पितरो ये च लोकान्तरं गताः । दुष्प्राप्यं सलिलं [1]तेषामृते स्वान्मर्त्यवासिनः २७
तस्माच्छिष्यैश्च पुत्रैश्च पौत्रदौहित्रकादिभिः । बन्धुवर्गैस्तथा चान्यैस्तर्पणीयं पितृव्रतैः ॥ २८

नारद उवाच—

जलस्य दैवतं ब्रूहि तर्पणस्य विधिं मयि । यथा जानामि देवेश तत्त्वतो वक्तुमर्हसि ॥ २९

ब्रह्मोवाच—

जलस्य देवता विष्णुः सर्वलोकेषु गीयते । जलपूतो भवेद्यस्तु विष्णुस्तच्छंकरो भवेत् ॥ ३०
जलं गण्डूषमात्रं तु पीत्वा पूतो भवेन्नरः । विशेषे कुशसंसर्गात्पीयूषादधिकं जलम् ॥ ३१
सर्वदेवालयो दर्भो मयाऽयं निर्मितः पुरा । कुशमूले भवेद्ब्रह्मा कुशमध्ये तु केशवः ॥ ३२
कुशाग्रे शंकरं विद्धि कुश एतैः प्रतिष्ठितः । कुशहस्तः सदा मेध्यः स्तोत्रं मन्त्रं पठेद्यदि ॥ ३३
सर्वं शतगुणं प्रोक्तं तीर्थे साहस्रमुच्यते । कुशाः काशास्तथा दूर्वा यवपत्राणि व्रीहयः ॥ ३४
[2]बल्वजाः पुण्डरीकाश्च कुशाः सप्त प्रकीर्तिताः । आनुपूर्व्येण मेध्याः स्युः कुशा लोके प्रतिष्ठिताः ३५
[3]विना मन्त्रेण यत्स्नानं सर्वं तन्निष्फलं भवेत् । अमृतात्स्वादुतामेति संस्पर्शाच्च [4]तिलस्य च ॥ ३६
तस्माच्च तर्पयेन्नित्यं पितॄंस्तिलजलैर्बुधः । दशभिश्च तिलैस्तात पितॄणां प्रीतिरुत्तमा ॥ ३७
अग्निस्तम्भभयादेव अनिच्छन्नतिविस्तरम् । स्नात्वा यस्तर्पयेन्नित्यं [4]तिलमिश्रोदकैः पितॄन् ॥ ३८
[*स याति ब्रह्मणः स्थानं समुद्धृत्योभयं कुलम् । विशेषे वा युगाद्यासु +त्वमावास्यां तथैव च
अक्षयं स्वर्गमश्नाति तर्पयित्वा तिलैः पितॄन् ।] नीलखण्डविमोक्षेण त्वमावास्यां तिलोदकैः ॥ ४०
वर्षासु दीपदानेन पितॄणामनृणो भवेत् । वत्सरैकममावास्यां तर्पयेद्यस्तिलैः पितॄन् ॥ ४१
विनायकत्वमाप्नोति सर्वदेवैः प्रपूज्यते । युगाद्यासु च सर्वासु यस्तिलैस्तर्पयेत्पितॄन् ॥ ४२
उक्तं यद्वाऽप्यमावास्यां तस्माच्छतगुणाधिकम् । अयने विषुवे चैव राकामायां तथैव च ॥ ४३
तर्पयित्वा पितृव्यूहं स्वर्गलोके महीयते । तथा मन्वन्तराख्यायामन्यस्यां पुण्यसंस्थितौ ॥ ४४
ग्रहणे चन्द्रसूर्यस्य पुण्यतीर्थे गयादिषु । तर्पयित्वा पितॄन्याति माधवस्य निकेतनम् ॥ ४५
तस्मात्पुण्याहकं प्राप्य तर्पयेत्पितृसंचयम् । तर्पणं देवतानां च पूर्वं कृत्वा समाहितः ॥ ४६
अधिकारी भवेत्पश्चात्पितॄणां तर्पणे बुधः । श्राद्धे भोजनकाले च पाणिनैकेन दापयेत् ॥ ४७
उभाभ्यां तर्पणे दद्याद्विधिरेष सनातनः । दक्षिणाभिमुखो भूत्वा शुचिस्तु तर्पयेत्पितॄन् ॥ ४८
तृप्यतामिति वाक्येन नामगोत्रेण वा पुनः । अकृष्णैर्यस्तिलैर्मोहात्तर्पयेत्पितृसंचयम् ॥ ४९
भूम्यां यद्यापो दीयन्ते दाता चैव जले स्थितः । वृथा तदीयते दानं नोपतिष्ठति कस्यचित् ५०
स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः । नोपतिष्ठेत्पितॄणां तु सलिलं तन्निरर्थकम् ॥ ५१
आर्द्रवासा जले यस्तु कुर्यादुदकतर्पणम् । पितरस्तस्य तृप्यन्ति सह देवैः सदाऽनघ ॥ ५२
रजकैः क्षालितं वस्त्रमशुद्धं कवयो विदुः । हस्तप्रक्षालने चैव पुनर्वस्त्रं च शुध्यति ॥ ५३

* धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः । + अत्रामावासीशब्दः सप्तम्यर्थे वा द्वितीया कल्पनीया । एवमग्रेऽपि ।

१ ग. घ. ज. तेषां सुतानां मर्त्यवासिनाम् । तं । २ घ. बिल्वजाः । ग. बल्लजाः । ३ घ. ज. कुशस्य । ४ घ. ज. तिलैः कुशोदं । ५ ग. घ. ंनः । कायस्थैर्यं ।

शुष्कवासाः शुचौ देशे स्थाने यस्तर्पयेत्पितॄन् । ततो दशगुणेनैव तुष्यन्ति पितरो ध्रुवम् ॥
स्नानं संध्यां च पाषाणे खड्गे वा ताम्रभाजने । तर्पणं कुरुते यस्तु प्रत्येकं च शताधिकम् ।
रौप्याङ्गुलीयं तर्जन्यां धृत्वा यस्तर्पयेत्पितॄन् । सर्वं च शतसाहस्रगुणं भवति नान्यथा ॥
तथैवानामिकायां तु धृत्वा स्वर्णाङ्गुलीं बुधः । तर्पयेत्पितृसंदोहं लक्षकोटिगुणं भवेत् ॥
अङ्गुष्ठदेशिनीमध्ये सव्यहस्तस्य खड्गकम् । धृत्वाऽनामिकया रत्नमञ्जलेरक्षयं फलम् ॥
स्नानार्थमभिगच्छन्तं देवाः पितृगणैः सह । वायुभूताऽनुगच्छन्ति तृषार्ताः सलिलार्थिनः ॥
निराशास्ते निवर्तन्ते वस्त्रनिष्पीडनेन च । तस्मान्न पीडयेद्वस्त्रमकृत्वा पितृतर्पणम् ॥ ६
तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानुषे । स्रवन्ति सर्वतीर्थानि तस्मान्न परिपीडयेत्
देवाः पिबन्ति शिरसः श्मश्रुतः पितरस्तथा । चक्षुषोरपि गन्धर्वा अधस्तः सर्वजन्तवः ॥ ६
देवाः पितृगणाः सर्वे गन्धर्वा जन्तवस्तथा । स्नानमात्रेण तुष्यन्ति स्नानात्पापं न विद्यते ॥ ६
नित्यस्नानं च यः कुर्यात्स नरः पुरुषोत्तमः । सर्वपापैर्विनिर्मुक्तो नाकलोके महीयते ॥ ६४
स्नानं तर्पणपर्यन्तं देवा महर्षयो विदुः । अतः परं च देवानां पूजनं कारयेद्बुधः ॥ ६५
गणेशं पूजयेद्यस्तु विघ्नस्तस्य न जायते । आरोग्यार्थं च सूर्यं च धर्ममोक्षाय माधवम् ॥ ६६
शिवं च कृत्यकामार्थं सर्वकामाय चण्डिकाम् । देवांस्तु पूजयित्वा तु बलिं वैश्वं तथा चरेत् ६७
वह्निकार्यं ततः कृत्वा यज्ञं ब्राह्मणतर्पणम् । देवानां सर्वसत्त्वानां पुनस्त्रिविष्टपं व्रजेत् ॥ ६८
गतागतं स्थिरं कृत्वा कामान्मोक्षं सुखं दिवम् । तस्मात्सर्वप्रयत्नेन नित्यं कर्माणि कारयेत् ॥ ६९

नारद उवाच—

किमर्थं च जलं तात देवाः पितृगणैः सह । न प्राप्नुवन्ति सर्वज्ञ लभन्ते मानवा यथा ॥ ७०

ब्रह्मोवाच—

पुरा सृष्टं मया तोयं सर्वदेवमयामृतम् । तस्यैव रक्षणार्थं चै रक्षोयक्षा धनुर्धराः ॥ ७१
घ्नन्ति ते पितरं देवमस्मद्वाक्यान्न मानुषम् । पशवः पक्षिणः कीटा मर्त्यलोके व्यवस्थिताः ॥ ७२
मर्त्यजाताश्च देवा ये तथैव मानुषा ध्रुवम् । तर्पयित्वा गुरुं नित्यं सुरलोकान्प्रतिष्ठिताः ॥ ७३
अस्नायी च मलं भुङ्क्ते अजपी पूयशोणितम् । अकृत्वा तर्पणं नित्यं पितृहा चोपजायते ॥ ७४
ब्रह्महत्यासमं पापं देवानामप्यपूजने । संध्याकृत्यमकृत्वा च सूर्यं हन्ति च पापकृत् ॥ ७५

नारद उवाच—

ब्राह्मण्यस्य सदाचारं क्रमं ब्रूहि च कर्मणाम् । इतरेषां च वर्णानां प्रवृत्तमखिलं वद ॥ ७६

ब्रह्मोवाच—

आचाराल्लभते चाऽऽयुराचाराल्लभते धनम् । आचारात्स्वर्गमोक्षं च आचारो हन्त्यलक्षणम् ॥ ७७
अनाचारो हि पुरुषो लोके भवति निन्दितः । दुःखभागी च सततं व्याधितोऽल्पायुरेव च ७८
नरके नियतं वासो ह्यनाचारान्नरस्य च । आचाराच्च परं लोकमाचारं शृणु तत्त्वतः ॥ ७९
गोमयेन गृहे नित्यं प्रकुर्यादुपलेपनम् । प्रक्षालयेत्ततः पीठं काष्ठं पात्रं शिलातलम् ॥ ८०
भस्मना कांस्यपात्रं तु ताम्रमम्लेन शुध्यति । शिलापात्रं तु तैलेन फालं गोवालकेन तु ॥ ८१
स्वर्णरौप्यादिपात्रं तु जलमात्रेण शुध्यति । अग्निना लोहपात्रं तु पाकप्रक्षालनेन तु ॥ ८२

---

१ झ. रक्तम° । २ झ. नागलो° । ३ ग. घ. ज. परे । ४ ग. घ. च सृष्टा रक्षा ध° । झ.च यक्षरक्षाध° । ५ ग. घ. ज. °मतुलं । ६ अ. गोपाल°।

नादाहनाच्चैव उपलेपनधावनात् । पर्जन्यवर्षणाच्चैव भूरमेध्या विशुध्यति ॥ ८३
स्फानां मणीनां च सर्वस्याश्ममयस्य च । भस्मभिर्मृत्तिकाभिश्च शुद्धिरुक्ता मया पुरा ॥ ८४
या भार्या शिशुर्वस्त्रमुपवीतं कमण्डलुः । आत्मनः कथिता शुद्धिर्न परेषां कदाचन ॥ ८५
भुञ्जीतैकवस्त्रेण न स्नायादेकवाससा । न धारयेत्परस्यैव स्नानवस्त्रं कदाचन ॥ ८६
स्कारं केशदन्तानां प्रातरेव समाचरेत् । गुरूणां च नमस्कारं नित्यमेव समाचरेत् ॥ ८७
त्पादं मुखं चैव पश्चार्द्रौ भोजयेद्बुधः । पश्चार्द्रकस्तु भुञ्जानः शतवर्षाणि जीवति ॥ ८८
वतानां गुरोराज्ञां स्नातकाचार्ययोरपि । नाऽऽक्रामेत्कामतश्छायां विप्रस्य दीक्षितस्य च ॥ ८९
गणं दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणं प्रकुर्वीत प्रख्यातांश्च वनस्पतीन् ॥ ९०
विप्रावग्निविप्रौ च विप्रौ द्वौ दंपती तथा । तयोर्मध्ये न गच्छेत स्वर्गस्थोऽपि पतेद्ध्रुवम् ॥ ९१
च्छिष्टो न स्पृशेदग्निं ब्राह्मणं दैवतं गुरुम् । स्वशीर्षं पुष्पवृक्षं च यज्ञवृक्षमधान्यकम् ॥ ९२
ीणि तेजांसि नोच्छिष्ट उपरीक्षेत्कदाचन । सूर्याचन्द्रमसावेव नक्षत्राणि च सर्वशः ॥ ९३
क्षेद्विप्रं गुरुं देवं राजानं यतिनां वरम् । योगिनं देवकर्माणं धर्माणां कथकं द्विजम् ॥ ९४
नदीनां च प्रतीरे च पत्युश्च सरितां तथा । यज्ञवृक्षस्य मूले च उद्याने पुष्पवाटिके ॥ ९५
शरीरस्य मलत्यागं न कुर्याज्जीवने तथा । विप्रस्याऽऽयतने गोष्ठे रम्ये राजपथेषु च ॥ ९६
न रूक्षं कारयेद्धीरः कैचाङ्घ्रिं च कराननम् । मलं न धारयेद्दन्ते नखं न वदने क्षिपेत् ॥ ९७
तैलाभ्यङ्गं न कुर्वीत वासरे रविभौमयोः । स्वगात्रासनयोर्वाद्यं गुरोरेकासनादनम् ॥ ९८
न हरेच्छ्रोत्रियस्वं च देवस्यापि गुरोरपि । राज्ञस्तपस्विनां चैव पङ्गोरन्धस्य योषितः ॥ ९९
पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च । रोगिणे भारतप्ताय गुर्विण्यै दुर्बलाय च ॥ १००
विवादं न च कुर्वीत नृपविप्रचिकित्सकैः । ब्राह्मणं गुरुपत्नीं च दूरतः परिवर्जयेत् ॥ १०१
पतितं कुष्ठसंयुक्तं चाण्डालं च गवाशिनम् । निर्धूतं ज्ञानहीनं च दूरतः परिवर्जयेत् ॥ १०२
स्त्रियं दुष्टां च दुर्वृत्तामपवादप्रदायिनीम् । कुकर्मकारिणीं दुष्टां सदैव कलहप्रियाम् ॥ १०३
प्रमत्तामविशङ्कां च निर्लज्जां वाह्यचारिणीम् । व्ययशीलामनाचारां दूरतः परिवर्जयेत् ॥ १०४
मलिनां नाभिवन्देत गुरुपत्नीं कदाचन । न स्पृशेत्तां च मेधावी स्पृष्ट्वा स्नानेन शुध्यति ॥ १०५
स तया सह केलिं च वर्जयेच्च सदैव हि । शृणुयाच्च वचो नूनं न पश्येच्च गुरोः स्त्रियम् ॥ १०६
वधूं पुत्रस्य भ्रातुश्च स्वपुत्रीं युवतीं ध्रुवम् । अन्यां च गुरुपत्नीं च नेक्षेत्स्पर्शं न कारयेत् ॥ १०७
ताभिः सह कथालापं तथा भ्रूभङ्गदर्शनम् । कलहं निस्त्रपां त्राणीं सदैव परिवर्जयेत् ॥ १०८
न दद्याच्च सदा पादं तुषाङ्गारास्थिभस्मसु । कार्पासास्थिषु निर्माल्ये चितिकाष्ठे चितौ गुरौ ॥
शुष्कमीनं न भक्षेत पूतिगन्धिममेध्यकम् । विघसं चान्यदुच्छिष्टं पाकार्थं च परस्य च ॥ ११०
न स्थातव्यं न गन्तव्यं क्षणमप्यसता सह । न तिष्ठेच्च क्षणं धीरो दीपच्छाये कलिद्रुमे ॥ १११
अस्पृश्यैः सह चाऽऽलापं पतितैः कुपितैः सह । न कुर्यात्क्षणमात्रं तु कृत्वा गच्छेच्च रौरवम् ॥ ११२
कनिष्ठं नाभिवन्देत पितृव्यं मातुलं तथा । उत्थाय चाऽऽसनं दद्यात्कृताञ्जल्यग्रतः स्थितः ॥ ११३
तैलाभ्यक्तं तथोच्छिष्टमार्द्रवस्त्रं च रोगिणम् । पारावारगतोद्विग्नं वहन्तं नाभिवादयेत् ॥ ११४
यज्ञस्यान्तर्गतं नष्टं क्रीडन्तं स्त्रीजनैः सह । बालक्रीडागतं चापि पुष्पयुक्तं कुशैर्युतम् ॥ ११५

१ क. ख. ग. घ. ङ. च. ज. °तेद्ध्रुवं । २ ख. घ ङ. कथनं । ३ घ. कचाङ्घ्रि च । ४ ग. घ. स्वगोत्रा° । ५ झ. कुष्टां । ञ. कष्टां । ६ ग. °मत्ताम° । ७ ग. खाद्यचारिणीम् ।

शिरः प्रावृत्य कर्णं वा अप्सु मुक्तशिखोऽपि वा । अकृत्वा पादयोः पूजां नाऽऽचामेद्दक्षिणामुखः ॥
उपवीतविहीनश्च नग्नको मुक्तकच्छकः । एकवस्त्रापिधानश्च आचान्तो नैव शुध्यति ॥ ११७
मध्यमाभिर्मुखं पूर्वं तिसृभिः समुपस्पृशेत् । अङ्गुष्ठदेशिनीभ्यां च नासां च तदनन्तरम् ॥ ११८
अङ्गुष्ठानामिकाभ्यां च चक्षुषी समुपस्पृशेत् । कनिष्ठाङ्गुष्ठयोः (ष्ठाभ्यां) श्रोत्रे नाभिमङ्गुष्ठकेन तु
तलेन हृदयं न्यस्य सर्वाभिः शिरसोपरि । बाहू चाग्रेण संस्पृश्य ततः शुद्धो भवेन्नरः ॥ १२०
अनेनाऽऽचमनं कृत्वा मानवः प्रयतो भवेत् । सर्वपापैर्विनिर्मुक्तः स्वर्गं चाक्षयमश्नुते ॥ १२१
*प्राणस्त्रिपुटशृङ्ग्या च व्यानोऽपानश्च मुद्रया । समानस्तु समस्ताभिरुदानस्तर्जनीं विना १२२
नागः कूर्मश्च कृकरो देवदत्तो धनंजयः । उपप्रीणन्तु ते प्रीता येभ्यो भूमौ प्रदीयते ॥ १२३
शयनं चाऽऽर्द्रपादेन शुष्कपादेन भोजनम् । नान्धकारे च शयनं भोजनं नैव कारयेत् ॥ १२४
पश्चिमे दक्षिणे चैव न कुर्याद्दन्तधावनम् । उत्तरे पश्चिमे चैव न स्वपेद्धि कदाचन ॥ १२५
स्वप्नादायुः क्षयं याति ब्रह्महा पुरुषो भवेत् । न कुर्वीत ततः स्वप्नं शस्तं च पूर्वदक्षिणम् ॥ १२६
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः । श्रियः प्रत्यङ्मुखो भुङ्क्ते यशो भुङ्क्त उदङ्मुखः ॥
प्राच्यां नरो लभेदायुर्याम्यां प्रेतत्वमश्नुते । वारुणे च भवेद्रोगी आयुर्वित्तं तथोत्तरे ॥ १२८
देवान्नमेकभुक्तं तु द्विभुक्तं स्यान्नरस्य च । त्रिभुक्तं प्रेतदैत्यस्य चातुर्थं कोणपस्य तु ॥ १२९
निरामिषं हविर्देवा मत्स्यमांसादि मानुषाः । पूतिपर्युषितं दुष्टमन्ये भुञ्जन्त्यनावृताः ॥ १३०

स्वर्गस्थितानामिह जीवलोके चत्वारि तेषां हृदये वसन्ति ।
दानं प्रशस्तं मधुरा च वाणी देवार्चनं ब्राह्मणतर्पणं च ॥ १३१
कार्पण्यवृत्तिः स्वजनेषु निन्दा कुचैलता नीचजनेषु भक्तिः ।
अतीव रोषः कटुका च वाणी नरस्य चिह्नं नरकागतस्य ॥ १३२

नवनीतोपमा वाणी करुणा कोमलं मनः । धर्मबीजप्रसूतानामेतत्प्रत्यक्षलक्षणम् ॥ १३३
दयादरिद्रहृदयं वचः क्रकचकर्कशम् । पापबीजप्रसूतानामेतत्प्रत्यक्षलक्षणम् ॥ १३४
श्रावयेच्छृणुयाद्वाऽपि सदाचारादिकं नरः । आचारादेः फलं लब्ध्वा पापात्पूतोऽच्युतो दिवि ॥

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे सदाचारो नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९१०३

---

अथ सप्तचत्वारिंशोऽध्यायः ।

---

भीष्म उवाच—
यत्पुण्यमधिकं लोके सर्वदा सर्वसंमतम् । तद्वदस्वेच्छया विप्र यत्कृतं पूर्वपूर्वकैः ॥ १

पुलस्त्य उवाच—
एकदा तु द्विजाः सर्वे व्यासशिष्याः सहादराः । व्यासं प्रणम्य पप्रच्छुर्धर्मं मां च यथा भवान् ॥

द्विजा ऊचुः—
पुण्यात्पुण्यतमं लोके सर्वधर्मेषु चोत्तमम् । किं कृत्वा मानवाः स्वर्गं भजन्ते चाक्षयं पदम् ॥ ३

---

* एतदादिश्लोकद्वयं क्वचित्पुस्तके नास्ति ।

---

१ ञ. °पुरशृ° । २ घ. ज. °न्त्यभीष्टतः । स्व° । ३ क. ख. ग. ङ. च. ज. वद ।

लभ्यं चाकष्टकं शुद्धं वर्णानां मर्त्यवासिनाम् । गुरूणां च लघूनां च साध्यमेव ऋतुं वद ॥ ४
यद्यत्कृत्वा च देवानां पूज्यो नाके भवेन्नरः । तत्तद्वद च नो ब्रह्मन्प्रसादी भव धर्मतः ॥ ५

व्यास उवाच—

पञ्चाख्यानं प्रथिष्यामि शृणुध्वं तत्र पूर्वतः । पञ्चानामेककं कृत्वा विन्द्यान्मोक्षं दिवं यशः ॥ ६
पित्रोरर्चाऽथ पत्युश्च समः(साम्यं) सर्वजनेषु च । मित्राद्रोहो विष्णुभक्तिरेते पञ्च महामखाः ७
प्राक्पित्रोरर्चया विप्रा यद्धर्मं साधयेन्नरः । न तत्क्रतुशतैरेव तीर्थयात्रादिभिर्भुवि ॥ ८
पिता धर्मः पिता स्वर्गः पिता हि परमं तपः । पितरि प्रीतिमापन्ने प्रीयन्ते सर्वदेवताः ॥ ९
पितरो यस्य तृप्यन्ति सेवया च गुणेन च । तस्य भागीरथीस्नानमहन्यहनि वर्तते ॥ १०
सर्वतीर्थमयी माता सर्वदेवमयः पिता । [*मातरं पितरं तस्मात्सर्वयत्नेन पूजयेत् ]॥ ११
मातरं पितरं चैव यस्तु कुर्यात्प्रदक्षिणम् । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा ॥ १२
जानुनी च करौ यस्य पित्रोः प्रणमतः शिरः । निपतन्ति पृथिव्यां च सोऽक्षयं लभते दिवम् ॥
तयोश्चरणयोर्यावद्रजश्चिह्नं तु मस्तके । प्रतीके च विलग्नानि तावत्पूतः सुतस्तयोः ॥ १४
पादारविन्दाच्च जलं यः पित्रोः पिबते सुतः । तस्य पापं क्षयं याति जन्मकोटिशतार्जितम् ॥ १५
धन्योऽसौ मानवो लोके पूतोऽसौ सर्वकल्मषात् । विनायकत्वमाप्नोति जन्मनैकेन मानवः ॥ १६
पितरौ लङ्घयेद्यस्तु वचोभिः पुरुषाधमः । निरये च वसेत्तावद्यावदाभूतसंप्लवम् ॥ १७
पित्रोरनर्चनं कृत्वा भुङ्क्ते यस्तु सुताधमः । कृमिकूपेऽथ नरके कल्पान्तमपि तिष्ठति ॥ १८
रोगिणं चापि वृद्धं च पितरं वृत्तिकर्शितम् । विकलं नेत्रकर्णाभ्यां त्यक्त्वा गच्छेच्च रौरवम्॥१९
अन्त्यजातिषु म्लेच्छेषु चाण्डालेष्वपि जायते । पित्रोरपोषणं कृत्वा सर्वपुण्यक्षयो भवेत् ॥ २०
नाऽऽराध्य पितरौ पुत्रस्तीर्थदेवान्भजन्नपि । तयोर्न फलमाप्नोति कीटवद्भ्रमते महीम् ॥ २१
कथयामि पुरावृत्तं विप्राः शृणुत यत्नतः । यच्छ्रुत्वा न पुनर्मोहं प्रयास्यथ पुनर्भुवि ॥ २२
पुराऽऽसीच्च द्विजः कश्चिन्नरोत्तम इति स्मृतः । स्वपितरावनादृत्य गतोऽसौ तीर्थसेवया ॥ २३
ततः सर्वाणि तीर्थानि गच्छतो ब्राह्मणस्य च । अलं तत्स्नानचेलानि प्रशुष्यन्ति दिने दिने २४
अहंकारोऽविशत्तस्य मानसे ब्राह्मणस्य च । मत्समो नास्ति वै कश्चित्पुण्यकर्मा महायशाः ॥२५
इत्युक्ते चाऽऽनने तस्य अहदच्च वकस्तदा । क्रोधाच्चैवेरितस्तस्य स शशाप द्विजो वकम् ॥ २६
पपात च वकः पृथ्व्यां स भस्मीभूतविग्रहः । भो द्विजेन्द्र महामोहः प्राविशत्त्वन्तकर्मणि ॥ २७
ततः पापाच्च विप्रस्य चेलं खं च न गच्छति । विषादमगमत्सद्यस्ततः खे तमुवाच ह ॥ २८

देववागुवाच—

गच्छ वाडव चाण्डालं मूकं परमधार्मिकम् । तत्र धर्मं च जानीषे क्षेमं ते तद्वचो भवेत् ॥

व्यास उवाच—

खाच्च तद्वचनं श्रुत्वा गतोऽसौ मूकमन्दिरम् । शुश्रूषन्तं च पितरौ सर्वारम्भाद्ददर्श सः ॥ ३
ददतं शीतकाले च सम्यगुष्णं जलं तयोः । तैलतापनताम्बूलं तथा तूलवतीं पटीम् ॥ ३१
नित्याशनं च मिष्टान्नं दुग्धखण्डं तथैव च । दापयन्तं वसन्ते च मधुमालां सुगन्धिकाम् ॥ ३२
अन्यानि यानि भोग्यानि कृत्यानि विविधानि च । उष्णे च वीजयेत्सोऽपि नित्यं च पितरावपि

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. ज. पुस्तकस्थः ।

१ ग. °त्पूतः सुरालये । पा° । घ. °त्पूज्यः सुरालये । पा° ।

ततस्तयोः प्रचर्यां च कृत्वा भुङ्क्तेऽथ सर्वदा । श्रमस्य वारणं कुर्यात्संतापस्य तथैव च ॥ ३४
एभिः पुण्यैः स्थितो विष्णुस्तस्य गेहोदरे चिरम् । अन्तरिक्षे च क्रीडन्तमाधारस्तम्भवर्जिते ॥ ३५
तस्यापि भवने नित्यं स्थितं त्रिभुवनेश्वरम् । विप्ररूपधरं कान्तं नान्यैर्भूतं च सत्परम् ॥ ३६
तेजोमयं महासत्त्वं शोभयन्तं च मन्दिरम् । दृष्ट्वा विस्मयमापन्नो विप्रः प्रोवाच मूककम् ॥ ३७

विप्र उवाच—

आसन्नं च ममाऽऽगच्छ त्वयि पृच्छामि शाश्वतम् । हितं मे सर्वलोकानां तत्त्वतो वक्तुमर्हसि ॥ ३८

मूक उवाच—

पित्रोरर्चां करोम्यद्य कथमायामि तेऽन्तिकम् । अर्चयित्वा तु पितरौ कृत्यं ते करवाणि वै ॥
तिष्ठ मे द्वारदेशे च आतिथ्यं ते करोम्यहम् ॥ ३९

व्यास उवाच—

इत्युक्ते चैव चाण्डाले चुकोप ब्राह्मणस्तदा । ४०

विप्र उवाच—

ब्राह्मणं मां परित्यज्य किं ते कार्याधिकं तदा ॥ ४१

मूक उवाच—

किं कुप्यसि वृथा विप्र न बकोऽहं तवाधुना । कोपः सिध्यति ते[3] तात बके नान्ये कथंचन ॥ ४२
गगने स्नानशाटी ते न शुष्यति न तिष्ठति । वचनं खात्ततः श्रुत्वा मद्गृहं चाऽऽगतो भवान् ॥ ४३
तिष्ठ तिष्ठ वदिष्यामि नो चेद्गच्छ पतिव्रताम् । तां च दृष्ट्वा द्विजश्रेष्ठ दयितं ते फलिष्यति ॥ ४४

व्यास उवाच—

ततस्तस्य गृहाद्विष्णुर्द्विजरूपधरो विभुः । विनिःसृत्य द्विजं प्राह गेहं तस्याः प्रयाम्यहम् ॥ ४५
स विमृश्य द्विजश्रेष्ठस्तेन सार्धं चचाल ह । गच्छन्तं तमुवाचेदं हरिं विप्रोऽतिविस्मितः ॥ ४६

विप्र उवाच—

किमर्थं च त्वया विप्र चाण्डालस्य गृहोदरे । सदा संस्थीयते तात योषाजनवृते मुदा ॥ ४७

हरिरुवाच—

इदानीं मानसं शुद्धं न भूतं भवतो ध्रुवम् । पतिव्रतादिकं दृष्ट्वा पश्चाज्ज्ञास्यसि मां किल ॥ ४८

विप्र उवाच—

पतिव्रता च का तात किं वा तस्माच्छ्रुतं महत् । येनाहं तत्र गच्छामि कारणं वद मे द्विज ॥ ४९

हरिरुवाच—

नदीनां जाह्नवी श्रेष्ठा प्रमदानां पतिव्रता । मनुष्याणां प्रजापालो देवानां च जनार्दनः ॥ ५०
पतिव्रता च या नारी पत्युर्नित्यं हिते रता । कुलद्वयस्य पुरुषानुद्धरेत्सा शतं शतम् ॥ ५१
स्वर्गं भुनक्ति तावच्च यावदाभूतसंप्लवम् । स्वर्गाद्भ्रष्टो भवेद्वाऽस्याः सार्वभौमो नृपः पतिः ॥ ५२
अस्यैव महिषी भूत्वा सुखं विद्यादनन्तरम् । पुनः पुनः स्वर्गराज्यं तस्य तस्या न संशयः ॥
एवं जन्मशतं प्राप्य अन्ते मोक्षो भवेद्ध्रुवम् ॥ ५३

विप्र उवाच—

पतिव्रता भवेत्का वा तस्याः किं वा च लक्षणम् । ब्रूहि मे द्विजशार्दूल यथा जानामि तत्त्वतः ॥

---

१ ग. घ. सुन्दरम् । २ ग. °त्त्वं सामवेदैश्च मध्यमम् । घ. °त्त्वं श्रीमिवादैश्च मध्यमम् । ३ ग. ते नात्र शासकाले क° ।

हरिरुवाच—

पुत्राच्छतगुणं स्नेहाद्राजानं च भयादथ । आराधयेत्पतिं शौरिं या पश्येत्सा पतिव्रता ॥ ५५
कार्ये दासी रतौ वेश्या भोजने जननीसमा । विपत्सु मन्त्रिणी भर्तुः सा च भार्या पतिव्रता ५६
भर्तुराज्ञां न लङ्घयेद्या मनोवाक्कायकर्मभिः । भुङ्क्ते पतौ सदा चात्ति सा च भार्या पतिव्रता ५७
यस्या यस्यास्तु शय्यायां पतिः स्वपिति यत्नतः । तत्र तत्र च सा भर्तुरर्चां करोति नित्यशः॥
नैव मत्सरतां याति न कार्पण्यं न मानिनी । मानेऽमाने समानत्वं या पश्येत्सा पतिव्रता ॥ ५९
सुवेषं या नरं दृष्ट्वा भ्रातरं पितरं सुतम् । मन्यते च परं साध्वी सा च भार्या पतिव्रता ॥ ६०
*तां गच्छ द्विजशार्दूल वद कामं यथा तव । तस्य पत्न्योऽष्ट तिष्ठन्ति तन्मध्ये वरवर्णिनी॥ ६१
रूपयौवनसंपन्ना दयायुक्ता यशस्विनी । शुभा नामेति विख्याता गत्वा तां पृच्छ ते हितम् ६२

व्यास उवाच—

एवमुक्त्वा तु भगवांस्तत्रैवान्तरधीयत । तस्यैवादृश्यतां दृष्ट्वा विस्मितोऽभूद्द्विजस्तदा ॥ ६३
स च साध्वीगृहं गत्वा पप्रच्छाथ पतिव्रताम् । अतिथेर्वचनं श्रुत्वा गृहान्निःसृत्य संभ्रमात्॥ ६४
दृष्ट्वा द्विजं सती तत्र द्वारदेशे स्थिताऽभवत् । तां च दृष्ट्वा द्विजश्रेष्ठ उवाच वचनं मुदा ॥ ६५

विप्र उवाच—

प्रियं मम हितं ब्रूहि यथादृष्टं त्वमेव हि ॥ ६६

पतिव्रतोवाच—

सांप्रतं पत्युरर्चाऽस्ति न चास्माकं स्वतन्त्रता । पश्चात्कार्यं गमिष्यामि आतिथ्यं गृह्ण सांप्रतम् ॥

विप्र उवाच—

मम देहे क्षुधा नास्ति पिपासाऽद्य न च श्रमः । अभीष्टं वद कल्याणि नो चेच्छप्स्यामि त्वामितः

व्यास उवाच—

तमुवाच तदा साऽपि न बकोऽहं द्विजोत्तम । गच्छ धर्मतुलाधारं पृच्छ तं ते हितं द्विज ॥ ६९
इत्युक्त्वा सा महाभागा प्रययौ च गृहोदरम् । तत्रापश्यद्द्विजो विप्रं यथा चाण्डालवेश्मनि॥७०
विमृश्य विस्मयापन्नः सरथं(मीपं) च ययौ द्विजः । तिष्ठन्तं च द्विजं तं च सोऽपश्यद्धृष्टमानसम्
अथोवाच मुदा विप्रं दृष्ट्वा तं तां सतीं च सः ॥ ७१

विप्र उवाच—

देशान्तरे च यद्वृत्तं तया च कथितं किल । कथं जानामि(ति) तद्वृत्तं चाण्डालोऽपि पतिव्रता ॥
अतो मे विस्मयस्तात किमाश्चर्यं परं महत् ॥ ७२

हरिरुवाच—

ज्ञायते कारणं तात सर्वेषां भूतभावनैः । अतिपुण्यात्सदाचाराद्यतस्ते विस्मयो गतः ॥
किमुक्तश्च तया त्वं च वद तत्सांप्रतं मुने ॥

विप्र उवाच—

प्रष्टुं धर्मतुलाधारं सा च मामुपदिश्यति ॥ ७४

---

* अयं श्लोको नातीव संगतः क्वचित्पुस्तके च न दृश्यते ।

---

१ घ. सा च न ।

हरिरुवाच—

आगच्छ मुनिशार्दूल अहं गच्छामि तं प्रति ॥ ७५

व्यास उवाच—

गच्छन्तं च हरिं प्राह तुलाधारः क्व तिष्ठति ॥ ७६

हरिरुवाच—

जनानां निकरे हट्टे बहुद्रव्यसुविक्रये । विक्रीणाति च क्रीणाति तुलाधारस्ततस्ततः ॥ ७७
[+विक्रियां नाकरोत्किंचिन्मनसा कर्मणा गिरा । न मृषा न च दौर्जन्यं सर्वलोकहिते रतः ७८
समः सर्वेषु सत्त्वेषु स(म)लोष्टाश्मकाञ्चनः] । जनो यथात्रसं स्नेहं कूटमनस्य संचयम् ॥ ७९
सर्वं तस्य मुखादेव गृह्णाति च ददात्यपि । सत्यं त्यक्त्वाऽनृतं किंचित्प्राणान्ते समुपस्थिते ॥
नोक्तं नरवरश्रेष्ठ तेन धर्मतुलाधरः ॥ ८०

व्यास उवाच—

इत्युक्ते तु तमद्राक्षीद्विक्रीणन्तं रसान्बहून् । मलपङ्कधरं मर्त्यं दन्तकुड्मलपङ्किलम् ॥ ८१
तत्र वस्तुधनोत्थां च भाषन्तं विविधां गिरम् । वृतं बहुविधैर्मर्त्यैः स्त्रीभिः पुंभिश्च सर्वतः ॥
कथं कथमिति प्राह स तं मधुरया गिरा ॥ ८२

विप्र उवाच—

धर्मस्य मे समुद्देशं वद प्राप्तोऽन्तिकं हि ते ॥ ८३

तुलाधार उवाच—

यावज्जनाः प्रतिष्ठन्ति ममैव संनिधौ द्विज । तावन्मे स्वस्थता नास्ति यावच्च रात्रियामकः ॥८४
तच्चोपदेशमादाय गच्छ धर्माकरं प्रति । बकस्य मरणे दोषं खे च वस्त्रावशोषणम् ॥ ८५
सर्वं तत्र च जानीषे सज्जनाद्रोहकं व्रज । तत्र तस्योपदेशेन तव कामः फलिष्यति ॥ ८६

व्यास उवाच—

इत्युक्त्वा तं तुलाधारः करोति क्रयविक्रयम् ॥ ८७

विप्र उवाच—

तथा तात गमिष्यामि सज्जनाद्रोहकं प्रति । तुलाधारसमुद्देशान्न जानामि तदालयम् ॥ ८८

हरिरुवाच—

एह्यागच्छ गमिष्यामि त्वया सार्धं च तद्गृहम् । अथ वर्त्मनि गच्छन्तमुवाच ब्राह्मणो हरिम् ८९

विप्र उवाच—

तुलाधारस्य न स्नानं न देवपितृतर्पणम् । मलदिग्धं च गात्रं तु सर्वं चैलमलक्षणम् ॥ ९०
कथं जानाति मद्वृत्तं देशान्तरसमुद्भवम् । अतो मे विस्मयस्तात सर्वं त्वं वद कारणम् ॥ ९१

हरिरुवाच—

सत्येन समभावेन जितं तेन जगत्त्रयम् । अतृप्यतां च पितरौ देवा मुनिगणैः सह ॥ ९२
भूतभव्यप्रवृत्तं च तेन जानाति धार्मिकः । नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ॥ ९३
विशेषे समभावस्य पुरुषस्यानघस्य च । अरिमित्रेऽप्युदासीने मनो यस्य समं व्रजेत् ॥ ९४

---

+ धनुश्चिह्नान्तर्गतः पाठो नास्ति क्वचित्पुस्तके ।

सर्वपापक्षयस्तस्य विष्णुसायुज्यतां व्रजेत् । [*समो धर्मः समः स्वर्गः समं हि परमं तपः] ९५
[+यस्यैव मानसे नित्यं समः स पुरुषोत्तमः। विशेषे सर्वलोकेषु स्वयोमे(समो योगि)ष्वलोलुपः]॥९६
एवं यो वर्तते नित्यं कुलकोटिं समुद्धरेत् । सत्यं दमः शमश्चैव धैर्यं स्थैर्यमलोभता ॥ ९७
अनाश्चर्यमनालस्यं तस्मिन्सर्वं प्रतिष्ठितम् । तेन वै देवलोकस्य नरलोकस्य सर्वशः ॥ ९८
वृत्तं जानाति धर्मज्ञस्तस्य देहे स्थितो हरिः । लोके तस्य समो नास्ति समः सत्यार्जवेषु च
स च धर्ममयः साक्षात्तेनैव धारितं जगत् । ९९

द्विज उवाच—

ज्ञातं मे त्वत्प्रसादाच्च तुलाधारस्य कारणम् । अद्रोहकस्य यद्वृत्तं तद्ब्रूहि त्वं यदीच्छसि ॥१००

हरिरुवाच—

पुरैव राजपुत्रस्य कुलस्त्री नवयौवना । रतीव कामदेवस्य शचीव वासवस्य च ॥ १०१
तस्य प्राणसमा भार्या सुन्दरी नाम सुन्दरी । अकस्मात्पार्थिवस्यैव कार्ये गन्तुं समुद्यतः ॥१०२
मनसाऽऽलोचितं तेन प्राणेभ्योऽपि गरीयसीम् । कस्मिन्स्थाने स्थापयामि यतो रक्षा भवेद्ध्रुवम्॥
इत्यालोच्यैव सहसा आगतोऽस्य गृहं प्रति । उक्तं च तादृशं वाक्यं श्रुत्वा स विस्मयं गतः ॥

अद्रोहक उवाच—

न तातस्ते न च भ्राता न चाहं तव बान्धवः । पितृमातृकुलस्यैव तस्या न हि सुहृज्जनः ॥
कथं च मद्गृहे तात स्थित्वा स्वस्थो भविष्यसि । १०५

हरिरुवाच—

एतस्मिन्नन्तरे तेन उक्तं वाक्यं यथोचितम् ॥ १०६

राजपुत्र उवाच—

लोके त्वत्सदृशो नास्ति धर्मज्ञो विजितेन्द्रियः । १०७

हरिरुवाच—

स चाऽऽह तं च सर्वज्ञं वक्तुं नार्हसि दूषणम् । त्रैलोक्यमोहिनीं भार्यां कः पुमान्रक्षितुं क्षमः ॥

राजपुत्र उवाच—

धरण्यां परिविज्ञाय आगतोऽहं तवान्तिकम् । एषा तिष्ठतु तेऽगारे व्रजामि निजमन्दिरम्॥ १०९

हरिरुवाच—

इत्युक्ते स पुनः प्राह नगरेऽस्मिन्प्रशोभने । वहुकामुकसंपूर्णे कथं रक्षा भवेत्स्त्रियाः ॥ ११०
स चोवाच पुनस्त्वं च कुरु रक्षां व्रजाम्यहम् । गृहस्थः संकटादाह धर्मस्य राजपुत्रकम् ॥ १११

अद्रोहक उवाच—

करोम्यनुचितं कार्यं स्वदास्यमुचितं हितम् । सदा वै चेदृशी भार्या स्थातव्या म(तिष्ठतान्म)द्गृहे पितः
अरक्षारक्षणे देव वदाभीष्टं कुरु प्रियम् । मम तल्पे मया सार्धं शयाना भार्यया सह ॥ ११२
मन्यसे दैवतं त्वं तु नो वा तिष्ठतु गच्छतु । ११३

हरिरुवाच—

क्षणं विमृश्य तं प्राह राजपुत्रः पुनस्तदा ॥ ११४

---

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो ग. पुस्तकस्थः ।

---

१ घ. सर्वज्ञो । २ ग. ˚द्रुयुवक˚ । ३ झ. ˚क्षणादेवं व˚ ।

राजपुत्र उवाच—

बाढमेतद्वचस्तात यथाऽभीष्टं तथा कुरु । ११५

हरिरुवाच—

ततो भार्यां जगादाथ अस्य वाक्याच्छिवाशिवम् । कर्तव्यं च न ते दोष आज्ञया मम सुन्दरि ॥
एतदुक्त्वा गतः सोऽपि भूपतेः शासनात्पितुः । अनन्तरं क्षपायां च यदुक्तं च तथा कृतम् ११७
योषितोर्मध्यगः सोऽपि नित्यं स्वपिति धार्मिकः । धर्मान्न लभते सोऽपि स्वभार्यापरभार्ययोः ॥
संस्पर्शाच्च क्रियाश्चास्य कामाभिलषितं मनः । तस्याः संसर्गतश्चैव दुहितैव प्रमन्यते ॥ ११९
स्तनौ तस्यास्य पृष्ठे च लगतस्तु पुनः पुनः । बालकस्य च पुत्रस्य स्तनौ मातुः स मन्यते १२०
तस्याङ्गानि तु चाङ्गेषु लगन्ति च पुनः पुनः । ततो मातुश्च मातुश्च स चामन्यद्दिने दिने ॥ १२१
तस्य योषांसु संसर्गो निवृत्तस्तु भवेदथ । एवं संवत्सरस्यार्धे पतिस्तस्या गतः पुरम् ॥ १२२
अपृच्छत्तं च लोकेषु तस्या वृत्तं यथोदितम् । केचिच्छिद्राणि बोध्यन्ते युवानोऽपि विसिस्मिरे ॥
केचिदाहुस्त्वया दत्ता तया सार्धं स्वपित्यसौ । स्त्रीपुंसोरेकसंसर्गाच्छान्तता तु कथं भवेत् १२४
तस्यां यस्याभिलाषोऽस्ति न पृष्टश्चोच्यते युवा । लोकानां कुश्रुतिर्वार्ता तेन पुण्यबलाच्छुता १२५
जनापवादमोक्षार्थं बुद्धिस्तस्याभवच्छुभा । दारूणि स्वयमाहृत्य जज्वालाग्निमयं महत् ॥ १२६
एतस्मिन्नन्तरे तात राजपुत्रः प्रतापवान् । अगमत्तद्गृहं सद्यः सोऽपश्यत्तं च योषितम् ॥ १२७
प्रोत्फुल्लवदनां नारीं प्रविषादगतं नरम् । अनयोर्मानसं ज्ञात्वा राजपुत्रोऽवदद्वचः ॥ १२८

राजपुत्र उवाच—

किं न संभाषसे मां च मित्रकं चिरमागतम् ॥ १२९

हरिरुवाच—

अब्रवीत्सोऽपि धर्मात्मा राजपुत्रमनष्टधीः ॥ १३०

अद्रोहक उवाच—

यत्कृतं दुष्कृतं कर्म मया त्वद्धितकारणात् । सर्वं व्यर्थमहं मन्ये जनानां च प्रवादतः ॥
अद्य वह्निमहं यास्ये प्रपश्यन्तु नराः सुराः ॥ १३१

हरिरुवाच—

इत्युक्त्वा स महाभागः प्रविवेश हुताशनम् । विशतस्तस्य वह्नौ च कुसुमं चिक्युरालये ॥ १३२
नाङ्गमस्यानलोऽधाक्षीन्न च वस्त्रं न कुन्तलम् । खे च देवा मुदा सर्वे साधु साध्विति चावदन् १३३
अपतन्पुष्पवर्षाणि तस्य मूर्ध्नि समन्ततः । यैर्यैश्च दुःश्रुतं वाक्यं गदितं च तयोः प्रति ॥ १३४
तेषां मुखे प्रजायन्ते कुष्ठानि विविधानि च । तत्राऽऽगत्य च देवाश्च वह्नेराकृष्य तं मुदा ॥ १३५
अपूजयन्स्वपुष्पैश्च मुनयो विस्मयं गताः । सर्वैर्मुनिवरैरेव मनुष्यैर्विविधैस्तदा ॥ १३६
[illegible]र्च्यते तु महातेजाः स च सर्वान्प्रपूजयेत् । सज्जनाद्रोहकं नाम कृतं देवासुरैर्नृभिः ॥ १३७
तस्य पादरजःपूता सस्यपूर्णा धराऽभवत् । सुराश्चाऽऽहुश्च तं तत्र भार्या ते संप्रगृह्यताम् ॥ १३८
एतस्य सदृशो लोके न भूतो न भविष्यति । नास्तीति सांप्रतं पृथ्व्यां कामलोभाजितः पुमान् ॥
देवासुरमनुष्याणां रक्षसां मृगपक्षिणाम् । कीटादीनां च सर्वेषां काम एष सुदुर्जयः ॥ १४०
कामाल्लोभात्तथा क्रोधान्नित्यं सत्त्वेषु जायते । संसारबन्धकः कामो ह्यकामो न क्वचिद्भवेत् १४१

१ ग. तया । २ ख. ङ. कुश्रुतिं ।

अनेनैव जितं सर्वं भुवनानि चतुर्दश । अमुष्य हृदये नित्यं वासुदेवो मुदा स्थितः ॥ १४२
एवं स्पृष्ट्वाऽथ दृष्ट्वा तं मनुष्याः सर्वकल्मषात् । पूयन्ते ह्यनघाश्चैव लभन्ते चाक्षयं दिवम् ॥ १४३
एवमुक्त्वा गता देवा विमानैश्च दिवं मुदा । मनुष्याः प्रययुस्तुष्टा दंपती स्वगृहं तथा ॥ १४४
दिव्यं चक्षुस्तदा तस्य स च देवान्प्रपश्यति । त्रैलोक्यस्यैव वार्ता च जानाति लीलया भृशम् ॥

व्यास उवाच—

ततस्तस्य च वीथ्यां च दृष्टं तेन द्विजेन ह । स पप्रच्छ मुदा तं च धर्मोद्देशं हितं बहु ॥ १४६

सज्जनाद्रोह उवाच—

गच्छ वाडव धर्मज्ञ वैष्णवं पुरुषोत्तमम् । तं च दृष्ट्वा त्वभीष्टं ते सांप्रतं च फलिष्यति ॥ १४७
बकस्य निधनं यद्वा वस्त्रस्याशोषणं तथा । जानीषे चापरं यच्च कामं तेऽस्ति हृदि स्थितम् १४८

व्यास उवाच—

एतच्छ्रुत्वा तु वचनमागतो वैष्णवं प्रति । विष्णुरूपद्विजेनैव सार्धं तेन मुदा ययौ ॥ १४९
अपश्यत्पुरुषं शुद्धं ज्वलन्तं च पुरः स्थितम् । सर्वलक्षणसंपूर्णं दीप्यमानं स्वतेजसा ॥ १५०
अब्रवीत्स च धर्मात्मा ध्यानस्थं च हरेः प्रियम् ॥ १५१

विप्र उवाच—

वद नो यद्यद्वृत्तं वै दूरात्त्वां चाऽऽगतो ह्यहम् ॥ १५२

वैष्णव उवाच—

प्रसन्नस्ते सुरश्रेष्ठो दानवारीश्वरः सदा । दृष्ट्वा त्वां च मनोऽस्माकं हृष्यतीवाधुना द्विज ॥ १५३
कल्याणं चातुलं तेऽद्य फलिष्यति मनोरथः । सुरवर्त्मनि ते नित्यं चैलं शुष्यति नान्यथा ॥
दृष्ट्वा देवं सुरश्रेष्ठं मम गेहे हरिं स्थितम् ॥ १५४

व्यास उवाच—

इत्युक्ते वैष्णवे तत्र स तु तं पुनरब्रवीत् ॥ १५५

विप्र उवाच—

क्वासौ विष्णुः स्थितो नित्यं दर्शयाद्य प्रसादतः ॥ १५६

वैष्णव उवाच—

अस्मिन्देवगृहे रम्ये प्रविश्य परमेश्वरम् । तं दृष्ट्वा किल्बिषाद्घोरान्मुच्यसे जन्मबन्धनात् ॥ १५७

व्यास उवाच—

तस्य तद्वचनं श्रुत्वा प्रविश्य सदनं प्रति । अपश्यत्तं द्विजं विष्णुं तिष्ठन्तं पद्मतल्पके ॥ १५८
शिरसैव प्रवन्द्याथ जग्राह चरणौ मुदा । प्रसादी भव देवेश न ज्ञातस्त्वं पुरा मया ॥ १५९
इहामुत्र च देवेश तवाहं किंकरः प्रभो । अनुग्रहश्च मे दृष्टो भवतो मधुसूदन ॥
रूपं ते द्रष्टुमिच्छामि यदि चास्ति कृपा मम ॥ १६०

विष्णुरुवाच—

अस्ति मे त्वयि भूदेव प्रियत्वं च सदैव हि । स्नेहात्पुण्यवतामेव दर्शनं कारितं मैया ॥ १६१
दर्शनात्स्पर्शनाद्ध्यानात्कीर्तनाद्भाषणात्तथा । सकृत्पुण्यवतामेव स्वर्गं चाक्षयमश्नुते ॥ १६२

---

१ झ. ञ. वद । २ घ. ज. 'त्यं वो गच्छामि प्र' । ३ घ. त्वया ।

नित्यमेव तु संसर्गात्सर्वपापक्षयो भवेत् । भुक्त्वा सुखमनन्तं च मद्देहे प्रविलीयते ॥ १६३
स्नात्वा च पुण्यतीर्थेषु दृष्ट्वा शंभुं च सर्वतः । दृष्ट्वा पुण्यवतां देशान्मम देहे विलीयते ॥ १६४
कथयित्वा कथां पुण्यां लोकानामग्रतः सदा । स चैव नरशार्दूल मद्देहे प्रविलीयते ॥ १६५
उपोष्य वासरेऽस्माकं श्रुत्वा मच्चरितं ध्रुवम् । रात्रौ जागरणं कृत्वा मद्देहे प्रविलीयते ॥ १६६
अत्यन्तघोषणो नित्यं गीतवाद्यादिकानि च(कैरपि) । नाम स्मरन्द्विजश्रेष्ठ मद्देहे प्रविलीयते १६७
[*सदा गुरुजने यस्य मनश्चाद्रोहतां व्रजेत् । तपस्विनि तथा राज्ञि मद्देहे प्रविलीयते ॥ ] १६८
मद्भक्तस्तीर्थभूतश्च त्वमेव बकमारणात् । यच्छापं त(दर्पितस्त)स्य मोक्षाय यत्र स्थित्वा उवाच ह
गच्छ मूकं महात्मानं तीर्थं पुण्यवतां वरम् । मूकस्य दर्शनात्तात सर्वं दृष्टं प्रपूजनम् ॥ १७०
तेषां च दर्शनादेव तथा संभाषणान्मम । मम संपर्कभावाच्च मद्गृहं चाऽऽगतो भवान् ॥ १७१
जन्मकोटिसहस्रेभ्यो यस्य पापक्षयो भवेत् । स मां पश्यति धर्मज्ञो यथा तेन प्रसन्नता ॥ १७२
ममैवानुग्रहाद्वत्स अहं दृष्टस्त्वयाऽनघ । तस्मान्मत्तो वरं गृह्ण यत्ते मनसि वर्तते ॥ १७३

विप्र उवाच—

अस्माकं सर्वथा नाथ मानसं त्वयि तिष्ठतु । त्वदृते सर्वलोकेश कदाचिन्नानुरोचनम् ॥ १७४

माधव उवाच—

यस्मादेतादृशी बुद्धिः स्फुरते ते सदाऽनघ । तस्मान्मत्सदृशान्भोगान्मद्देहे संप्रलप्स्यसे ॥ १७५
किंतु तौ पितरौ पूज्यौ ममास्तीति तवानघ । पूजयित्वा तु पितरौ पश्चाद्यास्यसि मत्तनुम् १७६
तयोर्निःश्वासवातेन मन्युना च भृशं पुनः । तपः क्षरति ते नित्यं तस्मात्पूजय तौ द्विज ॥ १७७
मन्युर्निपतते यस्मिन्पुत्रे पित्रोश्च नित्यशः । तन्निरयं न बाधेऽहं न धाता न च शंकरः ॥ १७८
तस्मात्त्वं पितरौ गच्छ कुरु पूजां प्रयत्नतः । ततस्त्वं हि तयोरेव प्रसादान्मत्पदं व्रज ॥ १७९

व्यास उवाच—

इत्युक्ते तु द्विजश्रेष्ठः पुनराह जगद्गुरुम् ॥ १८०

विप्र उवाच—

प्रसन्नो यदि मे नाथ रूपं स्वं दर्शयाच्युत ॥ १८१

व्यास उवाच—

ततो द्विजप्रणयतः प्रसन्नहृदयो वशी । रूपं स्वं दर्शयामास ब्रह्मण्यः पुण्यकर्मणे ॥ १८२
शङ्खचक्रगदापद्मधारिणं पुरुषोत्तमम् । सर्वलोकैककर्तारं तेजसा पूरितं जगत् ॥ १८३
प्रणम्य दण्डवद्विप्र उवाच पुनरच्युतम् । अद्य मे सफलं जन्म अद्य मे चक्षुषी शिवे ॥ १८४
अद्य मे च करौ श्लाघ्यौ धन्योऽहं जगदीश्वर । अद्य मे पुरुषा यान्ति ब्रह्मलोकं सनातनम् १८५
नन्दन्ति बान्धवा मेऽद्य त्वत्प्रसादाज्जनार्दन । इदानीं च प्रसिद्धा मे सर्वे चैव मनोरथाः १८६
ॐ तु मे विस्मयो नाथ मूकादेर्ज्ञानिनो भृशम् । कथं जानाति मद्वृत्तं देशान्तर उपस्थितम्[+] १८७
तस्य गेहोदराकाशे स्थितो विप्रोऽतिशोभनः । तथा पतिव्रतागेहे तुलाधारशिरोपरि ॥ १८८
तथा मित्राद्रोहकस्य त्वं च वैष्णवमन्दिरे । अनुग्रहं च मे विप्र तत्त्वतो वक्तुमर्हसि ॥ १८९

---

* धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः । + आर्षम् ।

---

१ ग. घ. °णान्नृप । म° । २ ग. घ. °ह्यादेव अ° ।

श्रीभगवानुवाच—

पित्रोर्भक्तः सदा मूकः पतिव्रता शुभा च सा । सत्यवादी तुलाधारः समः सर्वजनेषु च ॥१९०
लोभकामजिदद्रोहो मद्भक्तो वैष्णवः स्मृतः । संप्रीतोऽहं गुणैरेषां तिष्ठाम्यावसथे मुदा ॥
भारतीकमलाभ्यां च सहितो द्विजसत्तम ॥ १९१

विप्र उवाच—

महापातकिसंसर्गान्नराश्चैवातिपातकाः । इति जल्पन्ति धर्मज्ञाः स्मृतिशास्त्रेषु सर्वदा ॥
पुराणागमवेदेषु कथं त्वं तिष्ठसे गृहे ॥ १९२

श्रीभगवानुवाच—

कल्याणानां च सर्वेषां कर्ता मूको जगत्त्रये । [*वृत्तस्थमपि चाण्डालं तं देवा ब्राह्मणं विदुः १९३
मूकस्य सदृशो नास्ति लोकेषु पुण्यकर्मतः । पित्रोर्भक्तिपरो नित्यं जितं तेन जगत्त्रयम् ]॥ १९४
तयोर्भक्त्या त्वहं तुष्टः सर्वदेवगणैः सह । तिष्ठामि द्विजरूपेण तस्य गेहोदरे च खे ॥ १९५
तथा पतिव्रतागेहे तुलाधारस्य मन्दिरे । अद्रोहकस्य भवने वैष्णवस्य च वेश्मनि ॥ १९६
सदा तिष्ठामि धर्मज्ञ मुहूर्तं न त्यजाम्यहम् । ये च पश्यन्ति मां नित्यं न चान्ये पापकृज्जनाः ॥
पुण्यत्वाच्च त्वया दृष्टो ममानुग्रहकारणात् । पित्रोर्भक्तिपरः शुद्धश्चाण्डालो देवतां गतः ॥ १९८
तस्मात्तेन सह प्रीत्या तिष्ठामि तस्य मन्दिरे । पुनः पुनः कथालापं करोमि द्विजनन्दन ॥ १९९
तस्य वै मानसे नित्यं वर्तते भूतभावनः । सोऽपि जानाति त्वद्वृत्तं तथा पतिव्रतादयः ॥ २००
तेषां वृत्तं प्रथिष्यामि शृणु त्वं चानुपूर्वशः । यच्छ्रुत्वा सर्वथा मर्त्यो मुच्यते जन्मबन्धनात् २०१
पितुर्मातुः परं तीर्थं देवदेवेषु नैव हि । पित्रोरर्चा कृता येन स एव पुरुषोत्तमः ॥ २०२
पित्रोराज्ञा च देवस्य गुरोराज्ञा समं फलम् । आराधनाद्दिवो राज्यं बाधया रौरवं व्रजेत् ॥२०३
स चास्माकं हृदिस्थोऽपि तस्याहं हृदये स्थितः । आवयोरन्तरं नास्ति परत्रेह च मत्समः २०४
मदग्रे मत्पुरे रम्ये सर्वैश्च बान्धवैः सह । भजेत्स चाक्षयं भोगमन्ते च लीयते मयि ॥ २०५
अत एव हि मूकोऽसौ वार्तां त्रैलोक्यसंभवाम् । जानाति नरशार्दूल एष ते विस्मयः कुतः २०६

द्विज उवाच—

मोहादज्ञानतो वाऽपि न कृत्वा पितुरर्चनम् । ज्ञात्वा वा किं च कर्तव्यं सदसज्जगदीश्वर ॥२०७

श्रीभगवानुवाच—

दिनैकं मासपक्षं वा पक्षार्धं वाऽथ वत्सरम् । पित्रोर्भक्तिः कृता येन स च गच्छेन्ममाऽऽलयम् ॥
कारयित्वा मनः कृष्णमवश्यं नरकं व्रजेत् । न कृता वा कृता वाऽपि पित्रोरर्चा परं परा ॥
वृषोत्सर्गं नरः कृत्वा पितृभक्तिफलं लभेत् ॥ २०९
अन्नं वस्त्रं तथा गव्यं मधु मांसादि सत्कृतम् । दद्यादकुत्सितं श्राद्धे वृषोत्सर्गफलं भवेत् २१०
[+श्राद्धं दद्याद्द्विजाग्र्याय वेदशास्त्रानुभाविने । शान्ताय वीतरागाय वृषोत्सर्गफलं लभेत्]२१
अन्नं पानं तथा गव्यं सामिषं च निरामिषम् । सर्वं लक्षगुणं प्रोक्तं ज्ञातिभ्यो यत्प्रदीयते २१२
सर्वस्वेन कृतं श्राद्धं येन पुत्रेण धीमता । जातिस्मरत्वमाप्नोति पितृभक्तिफलं लभेत् ॥ २१३

---

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

---

१ ग. घ. ज. °तकसं° । २ झ. °षां वृत्तमेव ज° । ३ ग. घ. तया भक्त्या । ४ घ. °रे सदा । त° । ५ ग. घ. °रं दैवं सुरेषु च न विद्यते । पि° ।

श्राद्धात्परो महायज्ञस्त्रैलोक्ये तु न विद्यते । अत्र यद्दीयते किंचित्सर्वं चाक्षयमश्नुते ॥ २१४
अन्यस्मिंश्चायुतं विद्धि ज्ञातिभ्यो लक्षमुच्यते । पिण्डे कोटिगुणं प्रोक्तं द्विजायानन्तमुच्यते॥२१५
गङ्गाजले गयायां च प्रयागे पुष्करे तथा । वाराणस्यां सिद्धकुण्डे गङ्गासागरसंगमे ॥ २१६
अन्नपिण्डं प्रदद्याद्यस्तस्य मुक्तिर्भवेद्ध्रुवम् । पितरश्चाक्षयं स्वर्गं लभन्ते जन्मनः फलम् ॥ २१७
भागीरथ्यां विशेषेण यस्तु दद्यात्तिलोदकम् । मुक्तिमार्गं स चाऽऽप्नोति पिण्डदाने तु किं पुनः॥
नदीतीरेषु साहस्रं नदेऽप्ययुतमिष्यते । सामान्यफलसंसर्गाच्छ्राद्धं शतगुणं भवेत् ॥ २१९
अमावास्यां युगाद्यायां ग्रहणे चन्द्रसूर्ययोः । पार्वणं कुरुते यस्तु सोऽक्षयं लोकमश्नुते ॥ २२०
पितरस्तस्य तुष्यन्ति सर्वे समायुतं प्रति । आशिषं दयितं दत्त्वा भोग्यं चानन्तमात्मजे ॥ २२१
ततः पर्वणि पुत्रैश्च कर्तव्यं पार्वणं मुदा । पित्रोर्यज्ञमिमं कृत्वा मुच्यते सर्वबन्धनात् ॥ २२२
अहन्यहनि यच्छ्राद्धं नित्यश्राद्धमिति स्मृतम् । श्रद्धया कारयेद्यस्तु सोऽक्षयं लोकमश्नुते॥ २२३
तथैवापरपक्षे च काम्यश्राद्धं विधानतः । कृत्वा कामं स चाऽऽप्नोति यद्वा मनसि वर्तते ॥२२४
आषाढीमवधिं कृत्वा यस्तु पक्षस्तु पञ्चमः । तत्र श्राद्धं प्रकुर्वीत कन्यां गच्छतु वा न वा॥२२५
कन्यागते सवितरि यान्यहानि तु षोडश । क्रतुभिस्तानि तुल्यानि समाप्तवरदक्षिणैः ॥ २२६
काम्यश्राद्धं महापुण्यमिदं तस्याऽऽगतं शिवम् । अभावात्कृष्णपक्षादौ तुलायां कर्तुमर्हति॥ २२७
अमी वृश्चिकमा(आ)याते निराशाः पितरो गताः । पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम्
पितृशापेन पुत्रस्य नष्टं सर्वमिति स्मृतम् । धनं पुत्रं यशः काम्यमभीष्टमायुरेव च ॥ २२९
सर्वाण्येतानि लभ्यन्ते जन्मजन्मसु मानवैः । पितॄणां च वरेणैव तस्मान्नैनं परित्यजेत् ॥ २३०
विवाहव्रतयज्ञादौ कृत्वा नान्दीमुखं द्विजः । अक्षयं लभते पुण्यं गोत्रं तस्य प्रवर्धते ॥ २३१
एतद्विपर्ययो यस्य स याति नरकं नरः । कुलक्षयो भवेत्तस्य स जीवेद्दुःखितो भुवि ॥ २३२
ततस्तु पूजयेदग्रे गणेशं शंभुनन्दनम् । परं षोडशमातॄश्च तत्पश्चात्पितृसंचयम् ॥ २३३
नान्दीमुखेषु सर्वेषु प्रपितामहपूर्वकम् । नान्दीमुखे द्विजान्सर्वान्स्थापयेत्प्राङ्मुखान्सुधीः ॥ २३४
उच्चारयेन्नमोवाक्यं स्वधा चान्यत्र योजयेत् । ग्रहणे चन्द्रसूर्यस्य दत्त्वा पिण्डोदकं नरः ॥ २३५
अक्षयं लभते स्वर्गं पितॄणां पुष्टिवर्धनम् । तत्र स्नानं न कुर्याद्यः शक्त्या पिण्डोदकं नरः॥२३६
न ददाति पितॄणां तु चाण्डालत्वं स गच्छति । सर्वं भूमिसमं दानं सर्वे व्याससमा द्विजाः२३७
सर्वं गङ्गासमं तोयं राहुग्रस्ते निशाकरे । इन्दोर्लक्षगुणं प्रोक्तं दशलक्षं तु भास्करे ॥ २३८
गङ्गातोये तु संप्राप्ते इन्दोः कोटी रवेर्दश । गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ॥ २३९
तत्फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे । चन्द्रसूर्यग्रहे चैव अवगाहति जाह्नवीम् ॥ २४०
स स्नातः सर्वतीर्थेषु किमर्थमटते महीम् । सूर्यग्रहः सूर्यवारे सोमे सोमग्रहस्तथा ॥ २४१
चूडामणिरिति ख्यातस्तत्रानन्तफलं स्मृतम् । समुपोष्य तयोः पूर्वे पुण्यतीर्थे तु यः पुमान्॥
दत्त्वा पिण्डोदकं दानं सत्यलोके प्रतिष्ठितः ॥ २४२

द्विज उवाच—

पितुरेव महायज्ञः श्राद्धं च भवतेरितम् । तातापश्चिमकालादौ किं कर्तव्यं सुतेन हि ॥ २४३
किं कृत्वा च परं श्रेयो जन्मजन्मसु लभ्यते । पुत्रेण धीमता देव यत्नतो वक्तुमर्हसि ॥ २४४

---

१ घ. °स्तु स मोक्षं लभते नरः । त° । २ ग. घ. अतो । ३ घ. मताः । ४ ग. घ. ज. परे । ५ ग. घ. तातप° ।

श्रीभगवानुवाच—

पूर्वे वयसि संप्राप्ते पिता पुत्र इति स्मृतः । उत्तरे च सुतस्तातः पालनान्न तु पूजनात् ॥ २४५
देववत्पूजयेत्तातं स्नेहं कुर्याच्च पुत्रवत् । न लङ्घयेद्वचस्तस्य मनसाऽपि कदाचन ॥ २४६
आतुरस्य पितुः पुत्रो यस्तु कुर्यात्प्रतिक्रियाम् । सोऽक्षयं लभते स्वर्गं सदा देवैः प्रपूज्यते ॥ २४७
मुमूर्षोरपि तातस्य मृत्युलक्षणं पश्यतः । कृत्वा च यजनं पुत्रो देवानां तुल्यतां व्रजेत् ॥ २४८
विधिनाऽनशनेनैव पितुः स्वर्गं ददाति यः । पुत्रस्य तस्य धीरस्य शृणु वक्ष्यामि यद्गुणम् ॥ २४९
अश्वमेधसहस्राणि राजसूयशतानि च । भवेदनशने पुण्यं तीर्थकोटिगुणं तयोः ॥ २५०
भागीरथ्या जले चैव यो मृतः पुरुषोत्तमः । पयोधररसं मातुर्न पिबेन्मोक्षितां व्रजेत् ॥ २५१
वाराणस्यां त्यजेद्यस्तु प्राणांश्चैव यदृच्छया । अभीष्टं च फलं भुक्त्वा मद्देहे प्रविलीयते ॥ २५२
या गतिर्योगयुक्तानां मुनीनामूर्ध्वरेतसाम् । सा गतिस्त्यजतः प्राणान्ब्रह्मपुत्रेषु सप्तसु ॥ २५३
लोहितस्य विशेषेण तीरोत्तरसमाश्रितः । विधिना यस्त्यजेत्प्राणान्स च मत्समतां व्रजेत् ॥ २५४
तस्यैव चोर्वशीकेशे पुण्यतीर्थे द्विजोत्तमैः । मृतोत्पन्नः समाप्नोति सर्वं दोषैर्न लिप्यते ॥ २५५
गृहस्याभ्यन्तरे यस्य प्राणत्यागो भवेद्ध्रुवम् । यावद्ग्रन्थिर्गृहे तिष्ठेत्तावद्बन्धो भवेत्तनौ ॥ २५६
हायने हायने चापि एकैकं परिहीयते । पश्यतां पुत्रबन्धूनां बन्धने नास्ति निष्कृतिः ॥ २५७
पर्वते कानने दुर्गे स्थाने वा जलवर्जिते । मृतो दुर्गतिमाप्नोति कीटादौ जायते पुनः ॥ २५८
संस्कारश्च भवेद्यस्य मृतस्य परवासरे । षष्टिवर्षसहस्राणि कुम्भीपाके प्रतिष्ठति ॥ २५९
अस्पृश्यस्पर्शनादेव उच्छिष्टपतितो मृतः । सुचिरं नरके स्थित्वा म्लेच्छजातिषु जायते ॥ २६०
तथैव बहुकीटेषु [*जायते सत्त्वजातिषु । तस्मान्न चिरकालेषु] जानीयात्पुण्यपातकम् ॥ २६१
पुण्यात्पुण्यप्रयोगैश्च सर्वेषां मर्त्यवासिनाम् । मरणे या मतिः पुंसां गतिर्भवति तादृशी ॥ २६२
पुण्यतीर्थे मृतो यस्तु विष्णोर्नामानि चिन्तयन् । पापात्पूतो व्रजेत्स्वर्गं सर्वदोषैर्न लिप्यते २६३
पितुर्मृतस्य देहं तु वहेद्यस्तु सुतो बली । पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम् ॥ २६४
प्राकुचितौ च पितुर्देहे मुखाग्निं कारयेत्सुतः । विधिना मन्त्रपूतेन पश्चाद्देहं दहेत्पुनः ॥ २६५
लोभमोहसमायुक्तं पापपुण्यसमावृतम् । दहेयं सर्वगात्राणि दिव्याँल्लोकान्स गच्छतु ॥ २६६
दग्ध्वा च लङ्घयेत्पुत्रोऽप्यस्थिसंचयनं प्रति । दशाहे समनुप्राप्ते चाऽऽर्द्रवस्त्रं परित्यजेत् ॥ २६७
छित्त्वा च लौहितं चैलं वह्नौ चाथ जले क्षिपेत् । ततश्चैकादशाहे च श्राद्धं कुर्याद्विचक्षणः ॥ २६८
प्रेतस्य देहपुष्ट्यर्थं ब्राह्मणैकं तु भोजयेत् । दानं दद्याच्च विधिवद्वस्त्रं पीठं च पादुकाम् ॥ २६९
सर्वोपकरणैस्तुल्यं धरादि गजवाजिकम् । कृष्णां गां च प्रदद्यात्तु सर्वपापविमुक्तये ॥ २७०
चतुर्थाहे त्रिपक्षे च षण्मासे चाऽऽब्दिके तथा । द्वादश प्रतिमास्यानि श्राद्धान्येतानि षोडश २७१
यस्यैतानि न सन्तीह यथाशक्त्या च श्रद्धया । पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि २७२
अब्दमम्बुघटं दद्यात्+अन्नं चाऽऽमिषसंयुतम् । नित्यानित्यप्रभावाच्च क्षपन्मासं समापयेत् ॥ २७३
सपिण्डीकरणश्राद्धं गते संवत्सरे बुधः । पार्वणस्य विधानेन कारयेद्द्विजसत्तमः ॥ २७४
पितुरब्दमशौचं स्यान्मातुः षण्मासमेव च । त्रिमासं तु स्त्रियाश्चैव तदर्धं भ्रातृपुत्रयोः ॥ २७५

* धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः । + श्राद्धमेकं दिनद्वये । सपिण्डीकरणादूर्ध्वमिति क्वचित्पाठः ।

१ न. °नाच्च प्रपू° । २ घ. ज. °त्वाऽन्तजलं पु° । ३ झ. °मः । मत्तोत्प° । ४ झ. स च दो° । ५ ग. घ. °जनव° ।
६ घ. धनादि । ७ झ. ञ. क्षमापयेत् ।

सपिण्डानामशौचं स्याद्यावद्देहे स तिष्ठति । पुत्रस्य यन्निषिद्धं तु शृणु तात वदाम्यहम् ॥ २७६
ब्रह्मचारी सदाचारी न गच्छेच्च स्त्रियं क्वचित् । सप्तघव्याः परं चैव नवघव्याश्च पूर्वतः ॥ २७७
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् । श्राद्धे त्रीणि पवित्राणि दौहित्रं कुतपस्तिलाः ॥
त्रीणि चात्र प्रशंसन्ति सत्यमक्रोधमत्वरा । सायंसंध्यां परान्नं च पुनर्भोजनमैथुनम् ॥ २७९
दानं प्रतिग्रहं चैव श्राद्धं कृत्वा विवर्जयेत् । अकर्तव्यशतं कृत्वा श्राद्धं कुर्याद्विचक्षणः ॥ २८०
तच्च कर्तव्यतामेति स्वयमुक्तं विरञ्चिना । शृणु पुत्र पुरावृत्तं बहूनां च वदाम्यहम् ॥ २८१
गुरोर्गोहननं कृत्वा श्राद्धं दद्युर्ययुर्दिवम् । तेषां च कीर्तनादेव श्राद्धं भवति चाक्षयम् ॥ २८२
वसिष्ठस्य मुनेः शिष्या ब्राह्मणाः सप्त सुव्रताः । पितृश्राद्धे समायाते होमधेनुं गुरोः प्रियाम् ॥
प्रार्थयित्वा गृहं नीत्वा सप्तभिर्भ्रातृभिर्मुदा । गव्यार्थं पितृयज्ञे तां धेनुं हत्वा विमृश्य च ॥ २८४
दद्युर्मांसं च विप्रे च शेषं विप्रांस्त्वभोजयन् । समाप्य पितृकर्माणि वत्सं संगृह्य ते द्विजाः २८५
गुरौ समर्पयामासुर्धेनुर्व्याघ्रेण भक्षिता । ततस्तपोबलादेव ज्ञात्वा तेषां च कारणम् ॥ २८६
स शशाप ततः शिष्यांश्चाण्डालाश्च भविष्यथ । वेपमानास्ततो विप्राः कृताञ्जलिपुटाः स्थिताः
धेनोर्मांसं प्रदातारः पितृकृत्ये सदाऽनघ ॥ २८७

शिष्या ऊचुः—

अकर्तव्यसहस्राणि महान्ति पातकानि च । कुर्वन्तः पितृकार्येषु पापात्पूता दिवं गताः ॥ २८८
श्रुतं बहुविधं नाथ मुखात्ते च पुरातनम् । क्षन्तुमर्हसि धर्मज्ञ शापस्यान्तो विधीयताम् ॥ २८९

वसिष्ठ उवाच—

शापो वोऽथ यथापाप्म न तु धर्मविचारणात् । चाण्डालादौ समुत्पन्नाः पुरावृत्तं स्मरिष्यथ ॥
न च वो ज्ञानलोपश्च स्मृतिशास्त्रमनष्टकम् । पापयोनिं समुत्तीर्य पश्चान्मोक्षं गमिष्यथ ॥ २९१
ततः प्राणान्परित्यज्य गुरुशापात्तु ते द्विजाः । जाताश्चाण्डालयोनौ तु सर्वज्ञानसमन्विताः २९२
स्तन्यं तैस्तु न पीतं वै स्मरद्भिः पूर्वजन्म तत् । मृता जाता मृगाः सर्वे चक्रवाकाः पुनर्वने २९३
हंसास्तु मानसे तीर्थे शुक्ला जाताः पुनर्द्विजाः । मुमूर्षवो महाभागा वृत्तान्ते तैरकारणात्(?)२९४
तस्मिन्काले महाराजो धर्मकेतुरिति स्मृतः । ययौ स्नातुं ततस्तीर्थं सदारः सपरिच्छदः ॥ २९५
ततो हंसास्त्रयो मोहाद्राज्यं भोग्यं तु योषितः । भक्ष्याणि चिन्तयन्तश्च लोकान्तरमयुस्तदा २९६
ज्ञात्वा वेदं च वेदाङ्गं मोक्षं यास्यामहे वयम् । चिन्तयन्तो गताः सर्वे ततो लोकान्तरं प्रति २९७
अथ जातास्त्रयो राज्ञश्चत्वारो विप्रसत्तमाः । कुरुक्षेत्रे ततो वेदान्वेदाङ्गानि समन्ततः ॥ २९८
तपोबलाद्विदन्ति स्म वार्तां चामुत्र चेह च । त्रयो राजकुले जाता राजानो मदमोहिताः ॥ २९९
ज्ञानलोपात्परं लोकं न जानन्ति हिताहितम् । ते च विप्राश्च संदेहादाहूय चेटकं स्वकम् ॥ ३००

विप्रा ऊचुः—

[illegible]तो गच्छस्व कार्पण्यं पत्रं देहि च संभ्रमात् । सप्त व्याधा दशार्णेषु मृगाः कालंजरे गिरौ ॥
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे । तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ॥
प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥ ३०२

भगवानुवाच—

गृहीत्वा चेटको लेखं राज्ञस्तु समदर्शयत् । दृष्ट्वा लेखं तु राजानो राज्यं त्यक्त्वा ययुर्द्विजान् ॥

१ घ. 'रोर्गेहे कृ'ग क्' । २ ङ. गयार्थं । ३ ग. घ. ज. 'यं तेभ्योऽत्र' । ४ ग. घ. ज. मण्डलं ।

श्रुत्वा वाक्यं ततस्तेषां गतास्ते च तपोधनाः । अचिरेणैव कालेन मोक्षं याताश्च तैः सह॥ ३०४
य इदं शृणुयाच्छ्राद्धे सप्तव्याधादिकं द्विज । अक्षय्यं चान्नपानं च पितॄणामुपतिष्ठति ॥ ३०५

द्विज उवाच—

वित्तहीनस्य विप्रस्य पितृकार्यं कथं भवेत् । तपस्विनो वनस्थस्य गृहस्थस्य च केशव ॥ ३०६

श्रीभगवानुवाच—

तृणकाष्ठार्जनं कृत्वा प्रार्थयित्वा वराटकम् । करोति पितृकार्याणि ततो लक्षगुणं भवेत् ॥ ३०७
अकर्तव्यशतं कृत्वा पितृश्राद्धं करोति यः । सर्वपापक्षयस्तस्य स्वर्गं याति च मानवः ॥ ३०८
सर्वाभावे पितृतिथौ गोभ्यो घासं ददाति यः । फलं च पिण्डदानस्य संप्राप्नोत्यधिकं नरः ३०९
पुरा वैराटविषये रुरोदातीव दीनकः । पितृतिथौ स्वयं प्राप्ते सर्वाभावाच्च रोदिति ॥
रुदित्वा सुचिरं सोऽपि पप्रच्छ कोविदं द्विजम् ॥ ३१०

दीन उवाच—

ब्रह्मन्पितृतिथावद्य किंस्वित्कृत्वा हितं भवेत् । वराटकश्च मे नास्ति धनं ब्रह्मविदां वर ॥
उपदेशं च मे देहि येन धर्मे स्थितो ह्यहम् ॥ ३११

द्विज उवाच—

गच्छ शीघ्रं वने तात मुहूर्ते कुतपेऽधुना । घासं पितरमुद्दिश्य गवे देहीति सत्वरम् ॥ ३१२

श्रीभगवानुवाच—

ततस्तस्योपदेशेन गृहीत्वा घासपूलकम् । गवे दत्त्वा यथा हृष्टः पुण्यर्थं पितुरेव च ॥ ३१३
एतत्पुण्यप्रसादेन गतोऽसौ सुरमन्दिरम् । सुचिरं च स्वयं भुक्त्वा उत्पन्नो धनिनां कुले॥ ३१४
धनवान्स पुरापुण्यात्पितृयज्ञस्य कारणात् । स ददाति पितुः पिण्डं सर्वस्वेन धनेन च ॥ ३१५
तत्रैकजन्मनोऽभ्यासाद्गतोऽसौ विष्णुमन्दिरम् । भुक्त्वाऽनन्तसुखं तत्र सार्वभौमोऽभवन्नृपः ३१६
पितृयज्ञात्परो यस्माद्धर्मो नास्ति कथंचन । तस्मात्सर्वप्रयत्नेन शक्त्या कुर्यादमत्सरः ॥ ३१७
यः पठेद्धर्मसंतानं जनानामग्रतो नरः । विष्णुपद्या जले स्नानं प्रतिलोकं च लभ्यते ॥ ३१८
जन्मजन्म कृतो येन महापातकसंचयः । स सर्वः प्रलयं याति सकृदुच्चरिते श्रुते ॥ ३१९

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पञ्चाख्याने पितृभक्तिनिरूपणं नाम सप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९४२२

---

अथाष्टाचत्वारिंशत्तमोऽध्यायः ।

---

नरोत्तम उवाच—

त्रिदशानां च देवानामन्येषां जगदीश्वरः । प्रभुः कर्ता च हर्ता च गोप्ता भर्ता पिता प्रसूः ॥ १
अस्माकं वाक्श्रमो विष्णोः कथने नैव युज्यते । किंतु कौतूहलं मेऽस्ति पिपासा वा क्षुधाऽपि वा
कृतं पृच्छति येनैव वक्तव्यं तत्प्रियेण हि । अतीतं चैव जानाति कथं नाथ पतिव्रता ॥
किंवा तस्याः प्रभावं च वक्तुमर्हस्यशेषतः ॥ ३

श्रीभगवानुवाच—

कथितं मे पुरा वत्स पुनः कौतूहलं द्विज । कथयिष्यामि तत्सर्वं यत्ते मनसि वर्तते ॥ ४
पतिव्रता पतिप्राणा सदा पत्युर्हिते रता । देवानामपि साऽऽराध्या मुनीनां ब्रह्मवादिनाम् ॥ ५
धवस्यैकस्य या नारी लोके पूज्यतमा स्मृता । तस्यासंमानने गुर्वी निभृता न भविष्यति ॥ ६
मध्यदेशे पुरा तात नगरी चातिशोभना । तस्यां च ब्रह्मजातीया शैव्यानाम्नी पतिव्रता ॥ ७
धवस्तस्याभवत्कुष्ठी पूर्वकर्मविरोधतः । गलद्व्रणस्य पत्युश्च नित्यं चर्यापरायणा ॥ ८
यद्यन्म (यो यो म)नोरथं त [थस्त]स्य शक्त्या सा कुरुते ध्रुवम् । अर्चयेद्देववन्नित्यं स्नेहं कुर्या-दमत्सरा ॥ ९
कदाचित्पथि गच्छन्तीं वेश्यां परमसुन्दरीम् । दृष्ट्वाऽतीवाभवन्मोहान्मन्मथाविष्टचेतनः ॥ १०
निःश्वस्य सुतरां दीर्घं ततस्तु *विमनाऽभवत् । श्रुत्वा गृहाद्विनिःसृत्य साध्वी पप्रच्छ तं पतिम्

साध्व्युवाच—

उन्मनास्त्वं कथं नाथ निःश्वासस्ते कथं विभो । ब्रूहि मे यच्च कर्तव्यमकर्तव्यं च यत्प्रियम् ॥ १२
दयितं ते करिष्यामि मे त्वमेको गुरुः प्रियः । अभीष्टं वद मे नाथ यथाशक्त्या[क्ति] करोम्यहम्

श्रीभगवानुवाच—

इत्युक्ते तामुवाचेदं वृथा किं भाषसे प्रिये । न शक्ता त्वं न चैवाहं मोघं वक्तुं न युज्यते ॥ १४
प्रष्टुं नाधिकरोषीति यथा दीर्घतरोः फलम् । भूमौ स्थित्वा तु खर्वात्मा समुद्धर्तुं प्रवाञ्छति ॥
य(त)था मे रमणीदोषान्मोहाद्यदभिवाञ्छितम् । दंपत्योरपि दुःसाध्यमपयानं वदाम्यहम् ॥ १६

पतिव्रतोवाच—

ज्ञात्वा तु त्वन्मनोवृत्तं शक्ताऽहं कार्यसाधने । आदेशं कुरु मे नाथ कर्तव्यं येन केनचित् ॥ १७
यदि ते दुर्लभं कार्यं कर्तुं शक्नोमि यत्नतः । तदा मे त्वतिकल्याणं फलिष्यति परे इह ॥ १८

भगवानुवाच—

इत्युक्ते परमप्रीतः स्थितो वचनमब्रवीत् । पापाभ्यासाच्च पाप्मानं प्रेच्छतीति विनिश्चयः ॥ १९

कुष्ठ्युवाच—

पश्यस्मिन्संप्रगच्छन्तीं वेश्यां परमसुन्दरीम् । सर्वतश्चानवद्याङ्गीं दृष्ट्वा मे दह्यते मनः ॥ २०
यदि तां त्वत्प्रसादाच्च प्राप्नोमि नवयौवनाम् । तदा मे सफलं जन्म कुरु साध्वि हितं मम ॥ २१
यदि मां कुष्ठिनं दीनं पूतिगन्धं नवव्रणम् । न गच्छति वरारोहा तदा मे निधनं हितम् ॥ २२

भगवानुवाच—

श्रुत्वा तेनेरितं वाक्यं साध्वी वचनमब्रवीत् ॥ २३

पतिव्रतोवाच—

यथाशक्त्या(क्ति) करिष्यामि स्थिरी भव प्रभोऽधुना ॥ २४

भगवानुवाच—

मनसाऽथ संमालोक्य क्षपान्तेऽप्युषसि द्रुतम् । गोमयं शोधनीसार्धं गृहीत्वा सा ययौ मुदा २५
संप्राप्य गणिकागेहं शोधयित्वा च चत्वरम् । प्रतोलीं वीथिकां चैव गोमयं प्रददौ मुदा ॥ २६
सा तूर्णमागता गेहं जनस्याऽऽलोकने भयात् । एवं क्रमेण सा साध्वी चरन्तीति दिनत्रयम् २७

+ संधिरार्षः । * संधिरार्षः ।

अथ सा वारमुख्या च चेटिकाश्चेटकानपि । अपृच्छत्कस्य कर्माणि शोभनानि च चत्वरे ॥ २८
मया नोक्तेऽप्युषःकाले कस्य मत्प्रियकारणात्। रुच्यकर्मणि(णा) दीप्यन्ते रथ्याचत्वरवीथिकाः
परस्परेण संचिन्त्य वारमुख्यां च तेऽब्रुवन् ॥ २९

चेटका ऊचुः—

अस्माभिर्न कृतं भद्रे कर्म चैतत्प्रमार्जनम् ॥ ३०

भगवानुवाच—

अथ सा(वै) विस्मयं गत्वा संचिन्त्य रजनीक्षये । तया च दृश्यते(ऽवलोकिता) सा च तथैव पुनरागता ॥ ३१
दृष्ट्वा तां महतीं साध्वीं ब्राह्मणीं च पतिव्रताम् । दधार चरणे तस्या हा क्षमस्वेतिभाषिणी ३२

गणिकोवाच—

आयुर्देहं च संपत्तिर्यशोऽथ कीर्तिरेव च । एतासां मे विनाशाय स्फुरसीति पतिव्रते ॥ ३३
यद्यत्प्रार्थयसे साध्वि नित्यं दास्यामि तद्दृढम् । सुवर्णं मणिरत्नं वा चैलं वा यन्मनोरथं(गत)म्

भगवानुवाच—

तामुवाच ततः साध्वी न मे चार्थे प्रयोजनम् । अस्ति कार्यं च ते किंचिद्ददामि कुरुषे यदि ॥
तथा मे हृदि संतोषं[षः] कृतं सर्वं त्वयाऽधुना ॥ ३५

गणिकोवाच—

सत्यं सत्यं करिष्यामि द्रुतं वद पतिव्रते । कुरु मे रक्षणं मातर्द्रुतं कृत्यं च ते वद ॥ ३६

भगवानुवाच—

त्रपया निकृतं वाच्यं तया चोक्तं वरं प्रियम् । क्षणं विमृश्य सा वेश्या कर्तव्यं चार्तिमेव च ॥
कुष्ठिनः पूतिगन्धस्य संपर्के दुःखिता भृशम् ॥ ३७

गणिकोवाच—

दिनैकं च करिष्यामि यद्यागच्छति मद्गृहम् ॥ ३८

पतिव्रतोवाच—

आगमिष्यामि ते गेहमद्य रात्रौ च सुन्दरि । भुक्तभोग्यं पतिं दृष्ट्वा पुनर्नेष्यामि मद्गृहम् ॥ ३९

गणिकोवाच—

गच्छ शीघ्रं महाभागे स्वगृहं च पतिव्रते । पतिस्ते चार्धरात्रौ च आगच्छतु च मद्गृहम् ॥ ४०
बहवो मे प्रियाः सन्ति राजानस्तत्समाश्च ये । एकैको मद्गृहे नित्यं तिष्ठतीति निरन्तरम् ॥ ४१
अद्याहं मे गृहं शून्यं करिष्यामि च त्वद्भयात् । स चाऽऽगच्छतु ते भर्ता स चास्मान्प्राप्य गच्छतु

भगवानुवाच—

एतच्छ्रुत्वा च सा साध्वी गताऽसौ स्वगृहं तदा। पत्यौ निवेदयामास कृत्यं ते फलितं प्रभो
अद्य रात्रौ च तद्गेहं गन्तुं [*ख्यातिं करोति सा । प्रभूताः पतयस्तस्यास्तव कामो न विद्यते]॥

विप्र उवाच—

कथं यास्यामि तद्गेहं मया गन्तुं न शक्यते । एतज्ज्ञात्वा कुतः क्षान्तिः कृतं कार्यं कथं भवेत्४९

---

* क्वचित्पुस्तके धनुश्चिह्नान्तर्गतः पाठो नास्ति किंतु तत्स्थाने तत्र भविष्यतीत्येव पाठः ।

पतिव्रतोवाच—

स्वपृष्ठस्थमहं कृत्वा नेष्यामि तद्गृहं प्रति । सिद्धे ह्यर्थे नयिष्यामि पुनस्तेनैव वर्त्मना ॥ ४६

द्विज उवाच—

कल्याणि त्वत्कृतेनैव सर्वं मे कृत्यमेष्यति । इदानीं यत्कृतं कर्म स्त्रीजनैरपि दुःसहम् ॥ ४७

भगवानुवाच—

तस्मिंश्च नगरे रम्ये नित्यं च धनिनो गृहे । चौरैश्च प्रचुरं वित्तं हृतं राज्ञा श्रुतं तदा ॥ ४८

श्रुत्वा(आह) सर्वान्निशाचारानाहूय नृपती रुषा ॥ ४९

नृपतिरुवाच—

जीवितुं यदि वो वाञ्छा चौरं मामद्य दास्यथ ॥ ५०

भगवानुवाच—

गृहीत्वा तु नृपस्याऽऽज्ञां याता जिघृक्षयाऽऽकुलाः । चारैश्चौरो गृहीतस्तैर्बलाच्चैव नृपाज्ञया ५१

नगरोपान्तदेशे च वृक्षमूले घने वने । समाधिस्थो महातेजा माण्डव्यो मुनिपुंगवः ॥ ५२

व्यातिष्ठद्वह्निसंकाशो योगिनां प्रवरो मुनिः । अन्तर्नाडीगतो वायुः किंचिन्न प्रतिभाति च ॥ ५३

तं ब्रह्मसदृशं तत्र दृष्ट्वा दुष्टा महामुनिम् । चौरोऽयमद्भुताकारो धूर्तस्तिष्ठति कानने ॥ ५४

एवमुक्त्वा तु तं पापा बबन्धुर्मुनिसत्तमम् । नोक्तं च नेक्षितं तेन पुरुषान(न्प्र)ति दारुणान् ॥ ५५

ततो राजा उवाचेदं संप्राप्तस्तस्करो मया । उपान्ते च पथि द्वारे चौरदण्डं कुरुष्व तम् ॥ ५६

माण्डव्यश्च मुनिस्तत्र पथि शूले च कीलके । पायुदेशे च तैर्दत्तः शूलमामस्तकं गतम् ॥ ५७

व्यथां स च न जानाति शूलविद्धतनुर्यमात् । अन्येषां विकृतो दण्डः कृतस्तैस्तु मनोहितः ॥ ५८

एतस्मिन्नन्तरे रात्रावन्धकारे घनोन्नते । पतिव्रतायां गच्छन्त्यां कृत्वा वै पृष्ठतः पतिम् ॥ ५९

माण्डव्यस्य तनौ तत्र कुष्ठिनोऽङ्गं ललाग तत् । भग्नः समाधिस्तस्यैवं कुष्ठिसंसर्गतो ध्रुवम् ॥ ६०

माण्डव्य उवाच—

येन मे चाधुना कृच्छ्रं कारितं गाढवेदनम् । स एव भस्मतां यातु प्रोदिते च विरोचने ॥ ६१

भगवानुवाच—

इत्युक्ते स च माण्डव्ये पपात धरणीतले । ततः पतिव्रता चाऽऽह ब्रध्नो नोदयतु ध्रुवम् ॥ ६२

दिनत्रयं गृहं नीत्वा शापाद्देशमगता ततः । शयनीये स्थितं रम्ये धृत्वाऽतिष्ठत्पतिव्रता ॥ ६३

शप्त्वा तं च मुनिश्रेष्ठो गतो देशमभीष्टकम् । सूर्यो नोदयते लोके यावच्चैव दिनत्रयम् ॥ ६४

निखिलं व्यथितं दृष्ट्वा त्रैलोक्यं सचराचरम् । शतक्रतुं पुरस्कृत्य गता देवाः पितामहम् ॥

वृत्तं न्यवेदयन्सर्वे पद्मयोनौ दिवौकसः ॥ ६५

देवा ऊचुः[1]—

यत्कारणं च न जानीमस्त्वं तु योग्यं विधेहि नः ॥ ६६

ब्रह्मोवाच (भगवानुवाच)—

पतिव्रताया यद्वृत्तं माण्डव्यस्य मुनेश्च यत् । यथा नोदयते ब्रध्नो धाता देवेष्ववेदयत् ॥ ६७

ततो देवा विमानैश्च पुरस्कृत्य प्रजापतिम् । गतास्तस्यान्तिकं विप्र तूर्णं सर्वे च भूतलम् ॥ ६८

---

१ ग. घ. °ता दिक्षु भयाकु° ।

तेषां श्रिया विमानानां मुनीनां किरणैस्तथा । शतसूर्य इवाऽऽभाति नान्यत्र च गृहोदरे ॥ ६९

पतिव्रतोवाच—

हा हताऽस्मि कथं सूरो मद्गृहे समुपस्थितः ॥ ७०

भगवानुवाच—

अदृश्यन्त तया देवा विमानैर्हंससंनिभैः । एतस्मिन्नन्तरे सुप्तां तामु(ब्रह्मो) वाच पतिव्रताम् ७१

ब्रह्मोवाच—

अखिलानां च देवानां द्विजानां च गवादिनाम् । यथैव निधनं तेषां कथं ते परिरोचते ॥

मातः क्रोधं त्यजस्वाद्य सूर्यस्योदयनं प्रति ॥ ७२

पतिव्रतोवाच—

सर्वलोकानतिक्रम्य पतिरेको गुरुर्मम । अस्य मृत्युर्मुनेः शापादुदिते च विरोचने ॥ ७३

तेनैव कारणेनैव मया शप्तो दिवाकरः । न कोपान्न च मोहाच्च लोभात्कामान्न मत्सरात् ॥ ७४

ब्रह्मोवाच—

एकस्य निधनेनैव त्रैलोक्यस्य हितं भवेत् । ततस्ते चाधिकं पुण्यं मातरेवं भविष्यति ॥ ७५

भगवानुवाच—

सा चोवाच विधिं तत्र देवानामग्रतः सती ॥ ७६

पतिव्रतोवाच—

पतिं त्यक्त्वा च मे सत्यं शिवं ते नानुरोचते ॥ ७७

ब्रह्मोवाच—

उदिते च खगे सौम्ये पत्यौ ते भस्मतां गते । स्वस्थे भूते च त्रैलोक्ये करिष्यामि हितं तव ७८

भस्मनः पुरुषो भाव्यः कामदेवसमप्रभः । गुणैः सर्वैर्युतो भर्ता रतिवत्त्वं च सर्वदा ॥ ७९

यथा पूज्यो हरिर्देवैर्यथा लक्ष्मीश्च पूजिता । तथैव दंपती स्वर्गे तस्मान्मद्वचनं कुरु ॥ ८०

पतिव्रतोवाच—

पत्युर्मे निधने ब्रह्मन्विधवा लोकनिन्दिता । कांस्तु लोकान्गमिष्यामि भग्नाचारा मलीमसा ॥ ८१

ब्रह्मोवाच—

अतस्ते नास्ति दोषो वै न मृतस्ते धवोऽधुना । अस्माकं वचनेनैव कुष्ठी मन्मथतां व्रजेत् ॥ ८२

भगवानुवाच—

एवमुक्ते तु विधिना विमृश्य क्षणमेव च । बाढमुक्तवती सा च ततः सूर्योदयोऽभवत् ॥ ८३

अभवद्भस्म एवासौ मुनिशापेन पीडितः । भस्मनो मध्यतो जातो[1] द्विजो मन्मथपीडितः ॥ ८४

दृष्ट्वा विस्मयमापन्नाः सर्वे ते पुरवासिनः । मुदिता देववृन्दाश्च जनः स्वस्थतरोऽभवत् ॥ ८५

विमानेनार्कवर्णेन स्वर्लोकादागतेन च । पतिना सह सा साध्वी सुरैः सार्धं गता दिवम् ॥ ८६

एवं पतिव्रता या च शुभा चैव तु मत्समा । तेन वृत्तं च जानाति भूतं भव्यं प्रवर्तनम् ॥ ८७

य इदं श्रावयेल्लोके पुण्याख्यानमनुत्तमम् । तस्य पापं क्षयं याति जन्मजन्मकृतं च यत् ॥ ८८

अक्षयं लभते स्वर्गं विबुधैः [2]संप्रयुज्यते । ब्राह्मणो लभते वेदं जन्मजन्मसु वाडव ॥ ८९

---

१ ग. घ. जातः । २ ग. संप्रपूज्यते ।

सकृच्छृणोति यः पूतो दुष्कृतौघाद्विमुच्यते । सुरालयमवाप्नोति स्वर्गाद्भ्रष्टो धनी भवेत् ॥ ९०

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पतिव्रतोपाख्यानं नामाष्टाचत्वारिंशत्तमोऽध्यायः ॥ ४८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९९१२

---

अथैकोनपञ्चाशत्तमोऽध्यायः ।

---

द्विज उवाच—

माण्डव्यस्य मुनेर्विष्णो शूलाघातः कथं तनौ । पत्युः पतिव्रतायाश्च कथं कुष्ठं कलेवरे ॥ १

हरिरुवाच—

शिशुभावाच्च माण्डव्यो झिल्लिकायाम(अ)भानतः । वस्तिदेशे तृणं दत्त्वा मोहात्स च मुमोच ताम्

तेनापवाददोषेण धर्मस्याऽऽज्ञातुरेव च । अहोरात्रं व्यथा कृच्छ्रा भुक्ता तेन द्विजन्मना ॥ ३

किंतु समाधिना तेन न ज्ञातं शूलसंभवम् । कृच्छ्रं च मुनिना कृत्स्नं योगाभ्यासाद्भृशादपि ॥ ४

कुष्ठिनो ब्रह्मणो घातादजितेन्द्रियकारणात् । पूतिगन्धं तनौ कुष्ठं संजातं द्विजसत्तम ॥ ५

पुरा विप्राय तेनैव दत्तं गौरीचतुष्टयम् । कन्यकात्रितयं विप्र तेन तस्य पतिव्रता ॥ ६

अस्यास्तु कारणादेव स च मत्समतां व्रजेत् । अत्र ते विस्मयः कुत्र वेद कर्म पुरातनम् ॥ ७

द्विज उवाच—

कृत्या नारी न यस्यैव तस्य स्वर्गो भवेद्ध्रुवम् । यद्येतच्चरितं नाथ सर्वेषां शिवमिष्यते ॥ ८

हरिरुवाच—

सन्ति कृत्याः स्त्रियः काश्चित्पुंसः सर्वस्वदस्य च । तत्राप्यरक्षणीयां च मनसाऽपि न धारयेत् ९

न स्त्रीणामप्रियः कश्चित्प्रियो वाऽपि न विद्यते । गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥ १०

पुमांसं वित्तहीनं च विरूपं गुणवर्जितम् । अकुलीनं च भृत्यं च कामिनी भजते ध्रुवम् ॥ ११

भर्तारं च गुणोपेतं कुलीनं च महाधनम् । सुन्दरं रतिदक्षं च त्यक्त्वा नीचं भजेद्वधूः ॥ १२

उमानारदसंवादमाख्यानं वेद भूसुर । यत्स वेद स्त्रियाश्चेष्टा विद्यते कष्टतो द्विजः ॥ १३

स्वभावान्नारदो विप्र विश्वजिज्ञासको मुनिः । स्वान्ते विमृश्याथ गतः कैलासं गिरिमुत्तमम् १४

+वृषकेतुसदाख्यानं संप्रविष्टे हिमे गिरौ । प्रणिपत्य महात्मा वै पप्रच्छ पार्वतीं मुनिः ॥ १५

नारद उवाच—

देवि सीमन्तिनीनां तु दुश्चेष्टां ज्ञातुमुत्सहे । कौतुकेन त्वयाऽऽश्चर्यं बहूनां संप्रयुज्यते ॥ १६

सर्वासामपि नारीणां स्वान्तं जानासि तत्त्वतः । तन्मे कथय सर्वेषु विनीतमज्ञमेव च ॥ १७

देव्युवाच—

युवतीनां सदा चित्तं पुंसु तिष्ठत्यसंशयम् । अस्मिन्योनौ सुसंयोग्ये संगते वाऽप्यसंगते ॥ १८

सुवेषं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् । योनिः क्लिद्यति नारीणां सत्यं सत्यं हि नारद ॥ १९

स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः । तेन नारद नारीणां सतीत्वमुपजायते ॥ २०

घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान् । तस्माद्घृतं च वह्निं च नैकस्थाने च धारयेत् ॥ २१

---

+ इदमर्धमधिकमसंगतम् ।

---

१ घ. सुरूपं ।

यथैव मत्तमातङ्गं सृणिमुद्गरयोगतः । स्ववशं कुरुते यन्ता तथा स्त्रीणां प्ररक्षकः ॥ २२
पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्राश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ २३
ततः स्वातन्त्र्यभावाच्च स्वेच्छया च वराङ्गना । पुरुषेणार्थिता धीरा प्रेरणादिचरी भवेत् ॥ २४
अरक्षणाद्यथा पाकः श्वकाकवशगो वसेत् । [+तथैव युवती नारी स्वच्छन्दाद्दुष्टतां व्रजेत् ॥ २५
पुनरेव कुलं दुष्टं तस्याः संसर्गतो भवेत्] । परवीजे नरो जातः स च स्याद्वर्णसंकरः ॥ २६
जारजः संकरः पापो नरके नियतं वसेत् । कीटजातौ गता जाताः पुनः सर्वे महीतले ॥ २७
ततो म्लेच्छमुपानीतं कुलं स्याद्द्विजनन्दन । कुलक्षयो भवेद्यस्मात्तस्माद्दुष्टां न धारयेत् ॥ २८
ज्ञात्वैव योषितां दोषं क्षमते यो नराधमः । स तिष्ठेन्निरये घोरे रौरवे पितृभिः सह ॥ २९
काचित्पातयते नारी काचिदुद्धरते कुलम् । तस्मात्सर्वप्रयत्नेन कुलजामुद्वहेद्बुधः ॥ ३०
कुलद्वयं समा नारी समयित्वा तु तिष्ठति । साध्वी तारयते वंशान्दुष्टा पातयते ध्रुवम् ॥ ३१
दारेष्वधीनं स्वर्गं च कुलं पङ्कं यशोऽयशः । पुत्रं दुहितरं मित्रं संसारे[१] कथयन्ति च ॥ ३२
तस्मादेकां द्वितीयां वा वामामुद्वाहयेद्बुधः । संतानार्थानुकामाच्च बहुदोषाश्रिता च सा (?) ३३
रजस्वलां च वनितां नावगच्छति यः पतिः । ब्रह्महा भ्रूणहा सोऽपि दुर्गतिं चाधिगच्छति ३४
यो मोहाद्दुर्भगां कृत्वा साध्वीं त्यजति पापकृत् । तस्या वधेन यत्पापं तद्भुक्त्वा नरकं व्रजेत् ३५
[*परदारान्बलाद्धत्वा धनैर्वा संप्रलोभयेत् । स याति नरकं घोरं प्रेत्येह च कलत्रहा ॥ ३६
कियद्भुक्तं च भोक्तुं च भुञ्जते चाति सांप्रतम् । योषितं विघसं तस्य भुक्त्वा चोच्छिष्टतां व्रजेत्]
वनिताहरणं कृत्वा चाण्डालकुलतां व्रजेत् । तथैव विघसाहारात्पतितो जायते नरः ॥ ३८
रामां विन्यस्य स्कन्धे च चिरं यमपुरे वसेत् । मलमूत्रं शिरोदेशे नित्यं तस्य च संपतेत् ॥ ३९
एवं वर्षसहस्राणि भारं वहति दुर्मतिः । पुनर्यावन्ति लोमानि तावत्स रौरवं व्रजेत् ॥ ४०
पुनः कीटेषु संतीर्णे तदा मानुषतां व्रजेत् । ततश्च कलहं शोकं प्राप्नोति पूर्वकल्मषात् ॥ ४१
एवं जन्मत्रयं प्राप्य मुच्यते पातकान्नरः । तत्कालं नरकं भुक्त्वा सा तु काकी तु वञ्चकी ॥४२
उच्छिष्टं पूतिकं भुक्त्वा मानुषे विधवा भवेत् । यः पुनश्चान्त्यजां गच्छेन्म्लेच्छां वा पुक्कसां नरः
द्वित्रिचतुर्गुणं भुक्त्वा तत्र संचीर्णवञ्चकः । मातरं गुरुभार्यां च ब्राह्मणीं महिषीं तथा ॥ ४४
अन्यां वा प्रभुपत्नीं च गत्वा यात्यपुनर्भवम्[२] । भगिनीं तत्पुत्रभार्यां तथा दुहितरं स्नुषाम् ॥४५
पितृव्यां मातुलानीं तु तथैव च पितृष्वसाम् । मातृष्वस्रादिकामन्यां गत्वा नास्ति च निष्कृतिः
ब्रह्महा स भवेदन्धो वचसा जडतां व्रजेत् । कर्णयोर्बधिरो जातः स्रवते नास्ति निष्कृतिः ॥
उक्त्वा अश्लीलमत्यर्थमखिलं स्त्रीकृतेन हि ॥ ४७

द्विज उवाच—

एतद्दुष्कृतमासाद्य कथं मोक्षो भवेत्पुनः । तत्समाचक्ष्व भगवञ्श्रोतुमिच्छामि तत्त्वतः ॥ ४८

भगवानुवाच—

तासां च गमनं कृत्वा तप्तां लोहस्य पुत्तलीम् । समालिङ्ग्य त्यजेत्प्राणं शुचिर्लोकान्तरं व्रजेत्[३] ॥
यो वै गृहाश्रमं त्यक्त्वा मच्चित्तो जायते नरः । नित्यं स्मरति गोविन्दं सर्वपापक्षयो भवेत् ॥ ५०
ब्रह्महत्यायुतं तेन कृतं गुर्वङ्गनागमः । शतं शतसहस्रं च पैष्टीमद्यस्य भक्षणम् ॥ ५१

+ एतच्चिह्नान्तर्गतं ग. घ. ज. पुस्तकस्थम् । * धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

१ ग. घ. ज. 'रे कारणं यशः । व्र' । २ ञ. यां । ३ ग. घ. ज. 'तु । नो चेद्गृहां' ।

स्वर्णदेहरणं चैव तेषां संसर्गकश्चिरम् । एतान्यन्यानि पापानि महान्ति पातकानि च ॥ ५२
अग्निं प्राप्य यथा तूलं तृणमाशु प्रणश्यति । तस्मान्मन्नामगोविन्दं स्मृत्वा पूतो भवेन्नरः ॥ ५३
यो वा गृहाश्रमे तिष्ठेन्नित्यं गोविन्दघोषणम् । कृत्वा च पूजयित्वा च स पापात्संतरो भवेत् ॥ ५४
भागीरथीतटे रम्ये खगस्य ग्रहणे शिवे । गवां कोटिप्रदानेन यत्फलं लभते नरः ॥ ५५
तत्फलं समवाप्नोति सहस्रं चाधिकं च यत् । गोविन्दकीर्तने तात मत्पुरे चाक्षयं वसेत् ॥ ५६
कामात्स भवने स्थित्वा सार्वभौमो भवेन्नरः । पुराणे मत्कथां श्रुत्वा मत्सादृश्यं लभेन्नरः ॥ ५७
कथयित्वा पुराणं च विष्णुसायुज्यतां व्रजेत् । तस्मान्नित्यं च श्रोतव्यं पुराणं धर्मसंचयम् ॥ ५८
श्रावितव्यं प्रयत्नेन लोके विष्णुतनुं व्रजेत् । अन्यद्वा स्त्रीकृते दोषे यथायोगं भवेद्ध्रुवम् ॥ ५९
निशामय प्रवक्ष्यामि तत्त्वतो द्विजनन्दन । सर्ववीजस्य दानेन साम्बुकुम्भं महाफलम् ॥ ६०
दद्याद्विप्राय पुण्याहे सद्यः पूतो भवेत्क्षणात् । सर्वं धान्यादिकं बीजं काले दद्याद्द्विजातये ॥ ६१
सर्वपापक्षयं कृत्वा अक्षयं स्वर्गमश्नुते । गुणं वक्ष्यामि विप्रर्षे सतीनां यादृशं दृढम् ॥ ६२
शुद्धवंशो भवेत्तस्या नित्यं लक्ष्मीः प्रवर्तते । उभयोर्वंशयोः स्वर्गो भर्तुरात्मन एव च ॥ ६३
पतिव्रतागुणं विप्र विस्मृतं पृच्छतस्तव । पुनर्वक्ष्यामि योषाणां सर्वलोकहितं शुभम् ॥ ६४
उषित्वा पूर्वकालं च पुण्या पुण्येन योषितः । पश्चात्पतिव्रता याश्च ताश्च गच्छन्ति मद्गतिम् ६५
षण्मासं वाऽथ वर्षं वा अधिकं च प्रशस्यते । पतिव्रता भवेद्या च यावत्पूता व्रजेद्दिवम् ॥ ६६
सुरापं विप्रहन्तारं सर्वपापयुतं पतिम् । पङ्कात्पूतं नयेत्स्वर्गं भर्तारं याऽनुगच्छति ॥ ६७
[+पश्चान्मृतं पतिं गच्छेत्तस्याः स्वर्गस्य निश्चयम्(यः) । तिस्रः कोट्योऽर्धकोटी च यावल्लोमानि मानुषे
तावत्कालं वसेत्स्वर्गे भर्तारं याऽनुगच्छति] । कंदर्पसदृशो भर्ता सा रतीव मनोरमा ॥ ६९
जिष्णोरेव चिरं लोके भुङ्क्तेऽनन्तमयं सुखम् । पतिव्रता बलाद्या च विदूरे स्वामिपातने ॥ ७०
चिह्नं लब्ध्वा मृता वह्नौ पापादुद्धरते पतिम् । पतिव्रता च या नारी देशान्तरे मृते पतौ ॥ ७१
सा भर्तुश्चिह्नमादाय वह्नौ सुप्ता दिवं व्रजेत् । या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ॥ ७२
सा स्वर्गमात्मघातेन नाऽऽत्मानं न पतिं नयेत् । न म्रियेत समं भर्त्रा ब्राह्मणी ब्रह्मशासनात् ॥
प्रव्रज्यागतिमाप्नोति मरणादात्मघातिनी ॥ ७३

नरोत्तम उवाच—

सर्वासामपि जातीनां ब्राह्मणः शस्य इष्यते । पुण्यं च द्विजमुख्येन अत्र किंवा विपर्ययः ॥ ७४

भगवानुवाच—

ब्राह्मण्याः साहसं कर्म नैव युक्तं कदाचन । निःशेषेऽस्या वधं कृत्वा स नरो ब्रह्महा भवेत् ॥
तस्माद्ब्राह्मणजातीया विप्र या च व्रतं चरेत् । प्रवक्ष्यामि यथातथ्यं शृणु विप्र यथार्थतः ॥ ७६
आपणान्तरमामिष्यं भक्षयेन्न कदाचन । अश्वमेधसहस्राणां हायने फलमाप्नुयात् ॥ ७७
अर्हणं चेष्टदेवस्य हरेर्व्रतमनुत्तमम् । स्वामिनोऽप्यञ्जलिं पिण्डं संप्रदद्यादमत्सरात् ॥ ७८
युगकोटिसहस्राणि युगकोटिशतानि च । पतिना सह सा साध्वी विष्णुलोके युता भवेत् ॥ ७९
ततो महाव्रतं प्राप्य निरये ब्राह्मणीवधूः । उद्धरेदुभयोर्वंशाञ्शतशोऽथ सहस्रशः ॥ ८०
अतो बन्धुजनैरेव पुत्रैर्भ्रात्रादिभिर्बुधैः । विनियम्य सदा तस्या व्रतलोपं न कारयेत् ॥ ८१

+ धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

१ ग. घ. ज. तृणं शुष्कं प्र° । २ झ. ञ. गत्वा ।

हरेश्च वासरं प्राप्य विधवा न व्रतं चरेत् । पुनर्वैधव्यतामेति जन्मजन्मनि दुर्भगा ॥ ८२
भोजनान्मत्स्यमांसस्य व्रतानां विप्रयोगतः । चिरं निरयमासाद्य शुनी भवति निश्चितम् ॥ ८३
दुष्टा या मैथुनं गच्छेद्विधवा कुलनाशिनी । नरकाननुभूयाथ गृध्रिणी दशजन्मसु ॥ ८४
द्विजन्मफेरवा भूत्वा ततो मानुषतां व्रजेत् । तथैव बालवैधव्याद्दासीत्वमुपगच्छति ॥ ८५

द्विज उवाच—

कन्यादानफलं ब्रूहि वद दास्याः फलं च यत् । विधानं च यथोक्तं च यदि तेऽनुग्रहः प्रभो ८६

श्रीभगवानुवाच—

रूपाढ्ये गुणसंपन्ने कुलीने यौवनान्विते । समृद्धे वित्तसंपूर्णे कन्यादानफलं शृणु ॥ ८७
सर्वाभरणसंयुक्तां कन्यकां यो ददाति च । तेन दत्ता धरा सर्वा सशैलवनकानना ॥ ८८
अर्धाभरणदानेन फलं दातुर्भवेद्ध्रुवम् । अनाभरणकन्यायाः पादैकस्य फलं भवेत् ॥ ८९
यः पुनः शुल्कमश्नाति स याति नरके नरः । विक्रीत्वा चाऽऽत्मजां मूढो नरकान्न निवर्तते ॥
लोभादसदृशे पुंसि कन्यां यस्तु प्रयच्छति । रौरवं नरकं प्राप्य चाण्डालत्वं च गच्छति ॥ ९१
अत एव हि शुल्कं च जामातुर्न कदाचन । गृह्णाति मनसा प्राज्ञो यद्दत्तं तस्य चाक्षयम् ॥ ९२
भूमिं गां च हिरण्यं च धनं वस्त्रं च धान्यकम् । जामातुर्यौतकं दत्त्वा सर्वं भवति चाक्षयम् ॥ ९३
विवाहसमये वत्स सगोत्रपरगोत्रजैः । यौतुकं दीयते किंचित्तत्सर्वमक्षयं भवेत् ॥ ९४
दाता न स्मरते दानं प्रतिग्राही न याचते । उभौ तौ नरकं यातश्छिन्नरज्जुर्घटो यथा ॥ ९५
अवश्यं यौतकं दानं दातव्यं सात्त्विकेन हि । अदत्त्वा नरकं प्राप्य दासीत्वमुपगच्छति ॥ ९६
अत्यशने विदूरस्थे अत्याढ्ये चातिदुर्जने । कुलहीने च मूर्खे च षट्सु कन्या न दीयते ॥ ९७
अतिवृद्धे चातिदीने रोगिणे देशवासिनि । अतिक्रुद्धेऽप्यसंतुष्टे षट्सु कन्या न दीयते ॥ ९८
एतेभ्यः कन्यकां दत्त्वा नरकं चाधिगच्छति । लोभात्संमानलाभाच्च कन्यकापरिवर्तनात् ॥ ९९
मुनीनां प्रेयसीं नारीं युवतीं रूपशालिनीम् । सालंकारां सशय्यां च दत्त्वाऽनन्तफलं लभेत् १००
अनयोश्च फलं तुल्यं युवतीकन्ययोरपि । एका वराय दातव्या अपरा ब्राह्मणाय तु ॥ १०१
क्रीता देवाय दातव्या धीरेणाक्लिष्टकर्मणा । कल्पकालं भवेत्स्वर्गो नृपो वा कौ महाधनी ॥ १०२
जन्मजन्मनि स लभेत्सुपत्नीं वरवर्णिनीम् । य इदं शृणुयान्नित्यं पुण्याख्यानमनुत्तमम् ॥ १०३
सर्वपापक्षयस्तस्य सर्वशास्त्रार्थपारगः । लभते चाक्षयं स्वर्गं नारीणां वल्लभो भवेत् ॥ १०४
क्षत्रियो विजयं प्राप्य लोकनाथो भवेद्ध्रुवम् । श्रुतं हरति पापानि जन्मजन्मकृतानि च ॥
सौभाग्यं लभते लोके तथैव च वराङ्गनाः ॥ १०५

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पञ्चाख्याने स्त्रीणामाख्यानं नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९६१६

---

अथ पञ्चाशत्तमोऽध्यायः ।

---

द्विज उवाच—

तुलाधारस्य चरितं प्रभावमतुलं प्रभो । वक्तुमर्हस्यशेषेण यदि मय्यप्यनुग्रहः ॥ १

---

१ ख. घ. ङ. लभेत् ।

भगवानुवाच—

सत्यभावादलोभाच्च दद्यादेवं (द्यो वै) त्वमत्सरात् । नित्यं यज्ञशतं तस्य सुनिष्पन्नं सुदक्षिणम् ।
सत्येनोदयते सूरो वाति वातस्तथैव च । न लङ्घयेत्समुद्रस्तु कूर्मेण धरणी यथा ॥ ३
सत्येन लोकास्तिष्ठन्ति सर्वे च वसुधाधराः । सत्याद्भ्रष्टोऽथ यः सत्त्वोऽप्यधोवासी भवेद्ध्रुवम् ॥
सत्यवाचि रतो यस्तु सत्यकार्यरतः सदा । स शरीरेण स्वर्लोकमागत्याच्युततां व्रजेत् ॥ ५
सत्येन मुनयः सर्वे मां च गत्वा स्थिराः स्थिताः । सत्याद्युधिष्ठिरो राजा सशरीरो दिवं गतः ।
सर्वं शत्रुगणं जित्वा लोको धर्मेण पालितः । अकरोच्च मखं शुद्धं राजसूयं सुदुर्लभम् ॥ ७
चतुरशीतिसहस्राणि ब्राह्मणानां च नित्यशः । भोजयेद्रुक्मपात्रेषु राजोपकरणेषु च ॥ ८
भोजयित्वोपकरणांस्तेभ्यो दत्त्वा विसर्जयेत् । यदभीष्टं द्विजातीनामतोऽन्यद्दापयेद्धनम् ॥ ९
अदरिद्रं ततो ज्ञात्वा द्विजव्यूहं परित्यजेत् । तथैव स्नातकानां तु सहस्राणि तु षोडश ॥ १०
नित्यं संभोजयेद्राजा सैस्येनैव त्वमत्सरः । अतिष्ठन्त गृहे पूर्वं चिरं तस्य [illegible]षया ॥ ११
जितं तेन जगत्सर्वं प्राणानुग्रहकारणात् । सत्येन चासुरो राजा वलिरिन्द्रो [illegible]विष्यति ॥ १२
पातालस्थस्य तस्यैव भूयस्तिष्ठामि वेश्मनि । निरन्तरं च तिष्ठामि स्वान्ते पुण्यैककर्मणः ॥ १३
यद्वा मया पुरा बद्धो दैत्ययोने[illegible]विमोक्षणात् । तैलं चैवामरत्वं हि शक्रत्वं प्रददाम्यहम् ॥ १४
हरिश्चन्द्रो नृपः सत्यात्सवाहनपरिच्छदः । स शरीरेण शुद्धेन सत्यलोके प्रतिष्ठितः ॥ १५
राजानो बहवश्चान्ये ये च सिद्धा महर्षयः । ज्ञानिनो यैज्ञियाश्चैव सर्वे सत्येऽच्युता *भवन् १६
तस्मात्सत्यरतो लोके संसारोद्धरणक्षमः । तुलाधारो महात्मा वै सत्यवाक्ये प्रतिष्ठितः ॥ १७
लोके तत्सदृशो नास्ति सत्यवाक्यस्य कारणात् । अश्वमेधसहस्रेण सत्येन तुलया धृतम् ॥ १८
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते । सर्वं सत्यं भवेच्छोध्यं सत्यो हि दुरतिक्रमः ॥ १९
सत्यवाक्येन सा धेनुर्बहुला स्वर्गगामिनी । सर्वराष्ट्रं समादाय पुनरावृत्तिदुर्लभा ॥ २०
तथाऽयं सर्वदा साक्षी मृषा नास्ति कदाचन । बह्वर्घे स्वल्पमर्घे च क्रयविक्रयणे सुधीः ॥ २१
सत्यवाक्यं प्रशस्तं च विशेषे साक्षिणो भवेत् । साक्षिणः सत्यमुक्त्वा च अक्षयं स्वर्गमाययुः ॥
वावदूकः सभां प्राप्य सत्यं वदति वाक्पतिः । स याति ब्रह्मणो गेहं यज्ञैरन्यैश्च दुर्लभम् ॥ २३
सभायां यो वदेत्सत्यमश्वमेधफलं लभेत् । लोभाद्द्वेषान्मृषोक्त्वा च रौरवं नरकं व्रजेत् ॥ २४
सर्वसाक्षी तुलाधारो जनानां सूर एव सः । विशेषे लोभसंत्यागान्नाके निर्जरतां व्रजेत् ॥ २५
कश्चिच्छूद्रो महाभागो न लोभे वर्तते क्वचित् । वृत्तिः[10] शाकेन दुःखेन तथा शिलोञ्छया भृशम् ॥
जर्जरं वस्त्रयुग्मं च करौ पात्रे च सर्वदा । सदाऽपि लाभविरहो[11] न परस्वं गृहीतवान् ॥ २७
तस्य जिज्ञासनायेति(नेनाहं) गृहीत्वा वस्त्रयुग्मकम् । अवकोणे नदीतीरे स्थित्वा(तः) संस्थाप्य सादरम् ।
स दृष्ट्वा वस्त्रयुग्मं तन्न लोभे कुरुते मनः । इतरस्य परिज्ञाय तत्क्षान्त्या स्वगृहं ययौ ॥ २९
ततो[12] हि चिन्तयित्वा तु हृदा स्वल्पमिति द्विजः । उदुम्बरं हेमगर्भं मया तत्रैव पातितम् ॥ ३०
कीकटे च नदीतीरे विकोणे जनवर्जिते । तस्य यातस्य देशे तु दृष्टं तेन तदद्भुतम् ॥ ३१

---

* अडभाव आर्षः ।

---

१ ञ. कूर्मो वा धरणीं य° । २ ग. घ. ज. गां । ३ ग. घ. सत्येनै° । ४ ग. दत्तं । ५ ग. घ यतयश्चै° । ६ ख. °वेच्छ्राद्धं स° । च. °वेच्छीघ्रं स° । ७ क. ग. घ. च. शूर । ज. सुर । ८ ज. कटौ गात्रे । ९ घ. तथाऽपि । च. मेधावी । १० ग. घ. °पि लोभ° । ११ झ. ज. °कोटे न° । १२ क. ख. ग. घ. ङ. च. ञ. किङ्करे ।

अलं विधानमेतत्तु कृत्रिमं चोपलक्ष्यते । ग्रहणे वाऽधुना चास्य अलोभं नष्टमेव मे ॥ ३२
अस्यैव रक्षणे कष्टमहंकारपदं त्विदम् । यतो लाभस्ततो लोभो लाभाल्लोभः प्रवर्तते ॥ ३३
लोभग्रस्तस्य पुंसश्च शाश्वतो निरयो भवेत् । यदि नो विगुणं वित्तं यदा वेश्मनि तिष्ठति ॥३४
तदा मे दारपुत्राणामुन्मादो ह्युपपद्यते । उन्मादात्कामसंजातविकारान्मतिविभ्रमः ॥ ३५
भ्रमान्मोहोऽप्यहंकारः क्रोधलोभावतः परम् । एषां प्रचुरभावाच्च तपः क्षयं गमिष्यति ॥ ३६
क्षीणे तपसि वर्तन्ते पङ्काश्चित्तप्रमोहकाः । तैश्च शृङ्खलयोगैश्च बद्धो नैवोद्धतिं व्रजेत् ॥ ३७
एतद्विमृश्य शूद्रोऽसौ परित्यक्त्वा गृहं गतः । स्वस्था देवा मुदा तत्र साधु साध्विति चाब्रुवन् ॥
निर्ग्रन्थिरूपमादाय तस्यान्तिकगृहं तथा । गत्वाऽहं दैवसंवादमवदं भूतवर्तनम् ॥ ३९
ततोऽभ्यासप्रसङ्गाच्च जनानां च परिप्लवात् । तस्य योषा तदाऽऽगत्य पप्रच्छ दैवकारणम् ॥४०
ततोऽहमवदं तस्य यद्वा चेतोगतं द्रुतम् । निभृतोऽथ निनादस्य कारणं कथितं मया ॥ ४१
हृद्गतं पतिना तेऽद्य विधिना दत्तमज्ञवत् । परित्यक्तं महाभागे पुनर्नास्तीति ते वसु ॥ ४२
यावज्जीवति दौर्विध्यं तस्य भोक्ता न संशयः । गच्छ मातर्गृहं तूर्णमलब्धं तत्प्रपृच्छ तम् ॥ ४३
श्रुत्वा तद्वै शिवं सा च वचनं पत्युरन्तिकम् । गत्वा प्रोवाच दुर्वृत्तं तच्छ्रुत्वा विस्मयं गतः ४४
स विचिन्त्य तया सार्धमागतोऽसौ ममान्तिकम् । निभृतं मामुवाचेदं क्षपण त्वं च कीर्तय ॥४५

क्षपणक उवाच—

चाक्षुषं चिरसंशुद्धं हेलया तृणवत्कथम् । त्वया त्यक्तं यतस्तात नास्तिं भोग्यमकण्टकम् ॥ ४६
ऐश्वर्यमतुलं शौर्यं शय(र्शये)ते भावुकं पुनः । स्वबन्धूनां महद्दुःखमाजन्ममरणान्तिकम् ॥ ४७
द्रक्ष्यसे चाऽऽत्मना नित्यं मृतानां या गतिर्ध्रुवम् । तस्मात्तद्गृह्यतां तूर्णं भुङ्क्ष्व भोग्यमकण्टकम् ॥
ऐश्वर्यमतुलं शौर्यं लोकानां विस्मयं परम् ॥ ४९

शूद्र उवाच—

न मे वित्ते स्पृहा चास्ति धनं संसारवागुरा । तद्विधौ पतितो मर्त्यो न पुनर्मोक्षकं व्रजेत् ॥ ५०
शृणु वित्तस्य यो दोष इह लोके परत्र च । भयं चौराच्च ज्ञातिभ्यो राजभ्यस्तस्करादपि ॥५१
सर्वे जिघांसवो मर्त्या पशुमत्स्यविविष्किराः । तथा धनवतां नित्यं कथमर्थाः सुखावहाः ॥ ५२
प्राणस्यान्तकरो ह्यर्थः साधको दुरितस्य च । कालादीनां प्रियं गेहं निदानं दुर्गतेः परम् ॥ ५३

क्षपणक उवाच—

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । कुलं शीलं च पाण्डित्यं रूपं भोग्यं यशः सुखम्
धनेन तु विहीनस्य पुत्रदारोज्झितस्य च । कथं मित्रं कथं धर्मं दीनानां जन्मनः कथम् ॥ ५५
सत्त्वादिक्रतुकार्यं च पुष्करिण्युपकारकम् । दानं लोकस्य सोपानं निःस्वस्य च न सिध्यति ५६
व्रतकार्यस्य रक्षा च धर्मादिश्रवणं भृशम् । पितृयज्ञादि तीर्थं च निर्वित्तस्य न सिध्यति ॥ ५७
तथा रोगप्रतीकारः पथ्यमौषधसंचयम् (यः) । रक्षणं विग्रहस्यैव शत्रूणां विजयो ध्रुवम् ॥ ५८
स्त्रीणां च जन्मना वार्ता वसुयोगेन लभ्यते । भूतभव्यप्रवृत्तानां सुकृतं दुष्कृतं च यत् ॥ ५९
तस्माद्गृह्णु वसु यस्य तस्य भोग्यं यदृच्छया । स्वर्गं वितरणादेव लप्स्यसे ना(न)चिरादितः ॥६०

शूद्र उवाच—

अकामाच्च व्रतं सर्वमक्रोधात्तीर्थसेवनम् । दया जप्यसमा शुद्धं संतोषो धनमेव च ॥ ६१

अहिंसा परमा सिद्धिः शिलोञ्छवृत्तिरुत्तमा । शाकाहारः सुधातुल्य उपवासः परं तपः ॥ ६२
संतोषो मे महाभोग्यं महादानं वराटकम् । मातृवत्परदाराश्च परद्रव्यं च लोष्टवत् ॥ ६३
परदारा भुजंगाभाः सर्वं यज्ञ इदं मम । तस्मादेनं न गृह्णामि सत्यं सत्यं गुणाकर ॥
लग्ने प्रक्षालनात्पङ्के दूरादस्पर्शनं वरम् ॥ ६४

भगवानुवाच—

इत्युक्ते तु नरश्रेष्ठ पुष्पवर्षं पपात ह । मूर्ध्नि देशे तनौ तस्य सर्वदेवेरितं द्विज ॥ ६५
देवदुन्दुभयो नेदुर्नृत्यन्त्यप्सरसां गणाः । जगुर्गन्धर्वपतयो विमानं चापतद्दिवः ॥ ६६
ऊचुर्देवगणास्तत्र विमानमिदमारुह । सत्यलोकं समासाद्य भुङ्क्ष्व भोग्यं महेन्द्रवत् ॥ ६७
संख्या ते नापि वर्तेत भोग्यकालस्य धार्मिक । इत्युक्तेषु च देवेषु शूद्रो वचनमब्रवीत् ॥ ६८

शूद्र उवाच—

कथं निर्ग्रन्थिकस्यास्य ज्ञानं चेष्टाऽस्य भाषणम् । किंवा हरिहरौ ब्रह्मा किंवा शक्रो बृहस्पतिः॥
किं वा मच्छलनादेव साक्षाद्धर्म इहाऽऽगतः ॥ ६९

श्रीभगवानुवाच—

इत्युक्ते क्षपणश्चासौ स्मितो वचनमब्रवीत् ॥ ७०

क्षपणक उवाच—

विज्ञातुं चैव वो धर्ममहं विष्णुरिहाऽऽगतः । विमानेन दिवं गच्छ सकुटुम्बो महामुने ॥ ७१
मत्प्रसादाच्च युष्माकं सदैव नवयौवनम् । भविष्यति महाप्राज्ञ भाग्यानन्त्यं प्रलप्स्यथ ॥ ७२

श्रीभगवानुवाच—

दिव्याभरणसंयुक्ता दिव्यवस्त्रोपशोभिताः । गतास्ते सहसा नाकं सर्वैर्बन्धुजनैर्वृताः ॥ ७३
एवं द्विजवरश्रेष्ठ लोभत्यागाद्ययुर्दिवम् । तुलाधारस्तथा धीमान्सत्यधर्मप्रतिष्ठितः ॥ ७४
तेन जानाति तद्वृत्तं देशान्तरसमुद्भवम् । तुलाधारसमो नास्ति सुरलोके प्रतिष्ठितः ॥ ७५
तस्मात्त्वमपि भूदेव स(श)मं गत्वा दिवं व्रज । य इमं शृणुयान्मर्त्यः सर्वधर्मप्रतिष्ठितः ॥ ७६
जन्मजन्मार्जितं पापं तत्क्षणात्तस्य नश्यति । सकृत्पठनमात्रेण सर्वयज्ञफलं लभेत् ॥
लोकानां पुरतो विप्र देवानामर्च्यतां व्रजेत् ॥ ७७

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पञ्चाख्याने [ क्षपणकसंवादे ] शूद्रस्यालोभाख्यानं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९६९३

---

अथैकपञ्चाशत्तमोऽध्यायः ।

---

श्रीभगवानुवाच—

अद्रोहकस्य चाऽऽख्यातो महिमा लोकदुःसहः । एकतल्पे गतां वामां क्षान्त्वा सर्वजितोऽभवत्॥
ज्ञानिनामपि दुःसाध्यं मुनीनां ब्रह्मवादिनाम् । सुरासुरमनुष्याणां पशूनां पक्षिणां तथा ॥ २
स्वभावाद्विषमं कामं जेतुं कः पुरुषः क्षमः । अद्रोहकमृते विप्र स एव भवजित्पुमान् ॥ ३

---

१ ग. घ. °मान्मर्त्यध° । २ ग. °स्य वेत्तव्यो म° । ३ ङ. ज. कन्यां ।

अहल्याहरणादेव सुरेशस्य भगाङ्कता । पुनर्देव्याः प्रसादाच्च सहस्राक्षेति विश्रुतः ॥
विदितं सर्वलोके च त्रैलोक्ये सचराचरे ॥ ४

द्विज उवाच—

कथं च देवदेवस्य अहल्याहरणं प्रभो । भगाङ्कत्वं च संप्राप्य सहस्राक्षः सुराधिपः ॥ ५
नगाङ्कोऽपि भगाङ्कत्वं संप्राप्य(प्तः) सुरराट् कथम् । दुःश्रुतं सुरवैकल्यं श्रोतुमिच्छामि तत्त्वतः ६

श्रीभगवानुवाच—

पुरा स्वान्तोद्भवां कन्यां लोकेशस्य महात्मनः । गौतमाय ददौ धाता लोकपालाग्रतो मुदा ॥ ७
ततस्तु लोकपालानां मन्मथाविष्टचेतसाम् । शचीपतेस्तु संमोहो हृदि शल्य इव स्थितः ॥ ८
लोकपालानतिक्रम्य सुवेशा वरवर्णिनी । द्विजाय रत्नभूतैषा दत्ता किं वा करोम्यहम् ॥ ९
इति संचिन्त्य तस्यास्तु वर्तमाने च यौवने । पुनश्च मायया दृष्टं रूपं तस्याः सुशोभनम् ॥ १०
पुनः संचिन्त्यमानोऽसौ गौतमाध्याप(स)नं गतः । पाठात्सातत्यगमनाद्यद्वृत्तं तच्छृणुष्व मे ॥ ११
एकदा गौतमः स्नातुं गतोऽसौ पुष्करं प्रति । साध्वी च गृहशौचं च गृहवस्तुनि तत्परा ॥ १२
प्रवृत्ता देववास्तूनां वलिं वैश्वार्थतत्परम् । इन्धनं वह्निकार्यं च नित्यकर्मानुसंचयम्(?) ॥ १३
एतस्मिन्नन्तरे शक्रो मुनेस्तस्य महात्मनः । रूपमास्थाय गात्रेण प्रविवेशोटजं मुदा ॥ १४
पतिव्रता पतिं दृष्ट्वा श्रद्धया परया सती । देवस्थाने च वस्तूनां संचयं कर्तुमुद्यता ॥
ततस्तामब्रवीदार्तो मुनिवेषधरो हरिः ॥ १५

इन्द्र उवाच—

प्रद्युम्नवशगो वामे देहि मे चुम्बनादिकम् ॥ १६

भगवानुवाच—

एतस्मिन्नन्तरे सा च त्रपायुक्ताऽब्रवीद्द्विजम्[3] ॥ १७

अहल्योवाच—

देवकार्यादिकं त्यक्त्वा वक्तुं नार्हसि मे प्रभो । सर्वं जानासि धर्मज्ञ पुण्यानां निश्चयं मुने ॥
अयथार्थो ह वेलायामधुनैव न युज्यते ॥ १८

भगवानुवाच—

ततस्तां चारुसर्वाङ्गीं दृष्ट्वा मन्मथपीडितः । १९

इन्द्र उवाच—

अलं प्रिये न वक्तव्यं हृच्छयो मे प्रजायते । कर्तव्यं चाप्यकर्तव्यं पत्युर्वचनसंमतम् ॥ २०
करोति सततं या च सा च नारी पतिव्रता । लङ्घयेद्या च तस्याऽऽज्ञां सुरते च विशेषतः ॥
पुण्यं तस्या भवेन्नष्टं दुर्गतिं चाधिगच्छति ॥ २१

भगवानुवाच—

साऽब्रवीद्देववस्तूनि सन्ति देवार्थतो मुने । नित्यकर्माणि चान्यानि किं वा तेषु विपर्ययः ॥ २२
स चोवाच सतीं तत्र देह्यालिङ्गादिकं मम । मनसा भयमुत्सृज्य मया दत्तानि तानि च ॥ २३
इत्युक्त्वा तां परिष्वज्य कृतस्तेन मनोरथः । एतस्मिन्नन्तरे विप्र मुनेर्हृद्यं च कल्पितम् ॥ २४

---

१ झ. ञ. °तः । पश्चात्तु तस्य ग° । २ ग. घ. ज. °ववस्तूनि व° । ३ ग. घ. ज. °ब्रवीद्वचः । दे° ।

ततो ध्यानं समारभ्याजानाद्वृत्तं शचीपतेः । तूर्णमेव द्वारदेशे गत्वा च समुपस्थितः ॥ २५
शक्रो मुनिं तु संलक्ष्य चाऽऽखु(चौतु)देहं विवेश ह । गच्छतो वृषदंशस्य पद्धतौ प्रचचाल ह ॥
मुनिस्तत्रावदत्तं वै कस्त्वं मार्जाररूपधृक् । भयात्तस्य मुनेरग्रे शक्रः प्राञ्जलिरास्थितः ॥
मघवन्तं पुरो दृष्ट्वा चुकोप मुनिपुंगवः । २७

मुनिरुवाच—

यस्त्वया चेदृशं कर्म भगत्वाच्छ(गार्थं छ)लसाहसम् । कृतं तस्मात्तवाङ्गं तु सहस्रभगमुत्तमम्॥ २८
भवत्विह तु पापिष्ठ लिङ्गं ते निपतिष्यति । गच्छ मे पुरतो मूढ सुरस्थानं दिवौकसः ॥ २९
पश्यन्ति मुनिशार्दूला नराः सिद्धाः सहोरगाः ॥ ३०

भगवानुवाच—

एवमुक्त्वा मुनिश्रेष्ठो रुदतीं तां पतिव्रताम् । पप्रच्छ किमिदानीं ते कर्म दारुणमागतम् ॥
इत्युक्ते वेपमाना सा भीता पतिमुवाच ह । ३१

अहल्योवाच—

अज्ञानाद्यत्कृतं कर्म[2] क्षन्तुमर्हसि वै प्रभो ॥ ३२

मुनिरुवाच—

परेणाभिगताऽसि त्वममेध्या पापचारिणी । अस्थिचर्मसमाविष्टा निर्मांसा नखवर्जिता ॥
चिरं स्थास्यसि चैकाऽपि त्वां पश्यन्तु जनाः स्त्रियः ॥ ३३

श्रीभगवानुवाच—

दुःखिता तमुवाचेदं शापस्यान्तो विधीयताम् । इत्युक्ते करुणाविष्टो मन्युनाऽक्षिपरिप्लुतः ॥ ३४
जगाद गौतमो वाक्यं रामो दाशरथिर्यदा । वनमभ्यागतो विष्णुः सीतालक्ष्मणसंयुतः ॥ ३५
दृष्ट्वा त्वां दुःखितां शुष्कां निर्देहां पथि संस्थिताम् । गदिष्यति च वै रामो वसिष्ठस्याग्रतो हसन्
किमियं शुष्करूपा च प्रतिमाऽस्थिमया[3] शिवा । न दृष्टं मे पुरा ब्रह्मन्रूपं लोकविपर्ययम् ॥ ३७
ततो रामं महाभागं विष्णुं मानुषविग्रहम् । वसिष्ठः कथयामास(यिष्यति) यद्वृत्तमखिलं च तत् ३८
वसिष्ठवचनं श्रुत्वा पुनराह स धर्मवित् । अस्या दोषो न चैवास्ति दोषोऽयं पाकशासने ॥ ३९
एतदुक्ते तु रामे तु त्यक्त्वा रूपं जुगुप्सितम् । दिव्यं रूपं समास्थाय मद्गृहं चाऽऽगमिष्यसि ४०

भगवानुवाच—

शप्त्वा तु गौतमोऽहल्यां तपस्तप्तुं गतो वनम् । ततोऽत्यन्तं शुष्करूपा तथैव पथि संस्थिता ४१
रामस्य वचनादेव गौतमं पुनरागता । गौतमोऽपि तया सार्धमद्यैव दिवि तिष्ठति ॥ [4] ४२
इन्द्रोऽपि त्रपया युक्तः स्थितश्चान्तर्जलं चिरम् । स्थित्वा चान्तर्जले देवीमस्तौदिन्द्राक्षिसंज्ञिताम्
सुप्रसन्ना ततो देवी स्तोत्रेण परितोषिता । गत्वोवाच ततः सा च वरोऽस्मत्तो विगृह्यताम् ॥
ततो देवीमुवाचेदं शक्रः परपुरंजयः ॥ ४५

शक्र उवाच—

त्वत्प्रसादाच्च मे देवि वैरूप्यं मुनिशापजम् । संत्यज्य देवराज्यं च लब्ध्वाऽहं तु पुरा तथा॥ ४६

भगवानुवाच—

तमुवाच ततो देवी पापं तु मुनिशापजम् । हन्तुं ब्रह्मादयो देवाः शक्ता नाहं सुरेश्वर ॥ ४७

१ घ. °र्णमद्वारदेशेन ग° । २ घ. °मै तस्मात्त्वं क्षन्तुमर्हसि । प° । ३ ग. शुभ । ४ झ. ° क्षिनिर्जितम् । सु° ।

किंतु बुद्धिं सृजाम्यद्य येन लोकैर्न लक्ष्यते । योनिमध्यगतं दृष्टिसहस्रं ते भविष्यति ॥ ४८
सहस्राक्ष इति ख्यातः सुरराज्यं करिष्यसि । मेषाण्डं तव शिश्नं च भविष्यति च मद्वरात् ॥ ४९
इत्युक्त्वा सा जगन्माता तत्रैवान्तरधीयत । शक्रो देववरैः पूज्यो ह्यद्यापि दिवि वर्तते ॥
इन्द्रस्यैतादृशी कामादवस्था द्विजनन्दन ॥ ५०

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डेऽहल्याहरणं नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९७४३

---

अथ द्विपञ्चाशत्तमोऽध्यायः ।

---

श्रीभगवानुवाच—

अतः परं प्रवक्ष्यामि कामेनाधिष्ठितस्य च । पुरा भागीरथीतीरे द्विजः परमहंसकः ॥ १
उपदेष्टा सहस्राणां द्विजानां शान्तिदः परः । एकदण्डधरः साक्षात्कूर्मोऽयं धरणीस्थितः ॥ २
एकाकिनः सततस्तस्य देवागारे विनिष्कृते । पत्युर्गृहात्परं गेहं गन्तुं सायं समुद्यता ॥ ३
अकस्माद्युवती नारी मिलिता रूपशालिनी । दृष्ट्वा तां भगवान्विप्रो मन्मथस्य भयार्दितः ॥ ४
अगारजठरे कृत्वा स चैनां प्राक्षिपत्क्षपाम् । आकुलं तु दृढं कृत्वा देवागारे सुशोभने ॥ ५
कदाचिदपि तं द्वारं सा गन्तुं न ददाति ह । एवंभूतः समाधिस्थः क्षपां स्थित्वा विलप्य सः ॥
चिन्तयंस्तां वरारोहां द्वारि किं वा कृतं मम । एवं संचिन्त्य तामाह द्वारं देहीति नः प्रिये ॥ ७
पत्युश्च वशगं कान्ते दयितं ते भविष्यति । ततस्तं मुण्डितं विप्रं वृद्धं कामप्रलालसम् ॥ ८

नार्युवाच—

अनन्विता गिरस्तात वक्तुं त्वं नार्हसि प्रभो ॥ ९

भगवानुवाच—

अथासौ भगवान्प्राह प्रचुरं चास्ति मे वसु । तव दास्यामि कल्याणि प्रस्फोटय कपाटिकाम् १०
विप्रमाह पुनः सा च त्वं वै मे धर्मतः पिता । मा गच्छ पुत्रिकां मां च परयोषां च धार्मिक ॥
मनसोऽयं समालोच्य सुषिरेण पथा गृहान् । वाहुनोद्धाव्य तेनैव गन्तुं चैव समुद्यतः ॥ १२
गच्छतश्चार्धमरर उत्तमाङ्गं सुकण्टके । प्रविष्टं न पुनश्चैति पञ्चत्वमगमत्तदा ॥ १३
उषःकाले समायाता रक्षिणो ये च किंकराः । अद्भुतं तं शवं दृष्ट्वा तामूचुस्ते च विस्मिताः ॥ १४

रक्षिण ऊचुः—

कथं च निधनं त्वस्य संभूतं ब्रूहि सुन्दरि ॥ १५

भगवानुवाच—

कथयित्वा तु तद्वृत्तमभीष्टं देशमागता । एवं कामस्य महिमा दुर्निवारो जनेषु च ॥ १६
सर्वेषामपि जन्तूनां सुरासुरनृणां भवेत् । दृष्ट्वाऽमोघां वरारोहां सर्वलोकपितामहः ॥ १७

---

१ क. ख ग. घ. ङ. ज. अपरं च प्र° । २ ग. घ. ज. क्षणं । ३ झ. ञ. पतिश्च वशगः कान्ते दयितस्ते भ° । ४ घ. °मू । विनीता त्ववदत्तात वक्तुं त्वं नार्हसे पुनः । अ° । ज. °मू । विना तास्त्वां गिरस्तात वक्तुं त्वं नार्हसे पुनः । °अ° । ५ ग. °सा च स° । च. °साऽथ स° । ६ ग. घ. ज. °र्धकान्तार । ७ क. च. सुसंकटे । ख. ङ. सकण्टके ।

च्युतबीजोऽभवत्तत्र लौहित्यसंभवः स्मृतः । पुनाति सकलाँल्लोकान्सर्वतीर्थमयो हि सः ॥
यमाश्रित्य नरो याति ब्रह्मलोकमनामयम् ॥ १८

द्विज उवाच—

कथं च ब्रह्मणो मोहोऽप्यमोघा का वराङ्गना । उद्भवं तीर्थराजस्य श्रोतुमिच्छामि तत्त्वतः ॥ १९

भगवानुवाच—

मुनिर्देवैः समाराध्यः पद्मयोनिसमप्रभः । शान्तनुश्चेति विख्यातः पत्नी तस्य पतिव्रता ॥ २०
अमोघेति समाख्याता रूपयौवनशालिनी । अस्याश्च पतिमन्वेष्टुं यातो ब्रह्मा च तद्गृहम् ॥ २१
तस्मिन्काले मुनिश्रेष्ठः पुष्पाद्यर्थं वनं गतः । सा तं दृष्ट्वा सुरश्रेष्ठमर्घ्यपाद्यादिकं ददौ ॥ २२
दूरेऽभिवादनं कृत्वा सा गृहं प्रविवेश ह । तां च दृष्ट्वाऽनवद्याङ्गीं धाता कामवशं गतः ॥ २३
स्रष्टाऽऽत्मानं समाधाय चिन्तयंस्तां पुरोगताम् । वीजं पपात खट्वायां ब्रह्मणः परमात्मनः २४
ततो ब्रह्मा गतस्त्रस्तस्त्वरया परिपीडितः[१] । अथाऽऽयातो मुनिर्गेहं शुक्रं पीठे ददर्श ह ॥ २५
तामपृच्छद्वरारोहां कश्चाप्यत्राऽऽगतः पुमान् । तमुवाच ततोऽमोघा ब्रह्मा ह्यत्राऽऽगतः पते ॥२६
त्वामेवान्वेषितुं नाथ मया दत्तोऽत्र पीठकः । शुक्रस्य कारणं चात्र तपसा ज्ञातुमर्हसि ॥
ततो ध्यानात्परिज्ञातं तेनैव च द्विजन्मना ॥ २७

शान्तनुरुवाच—

ब्रह्मरेतः परं साध्वि पालयस्व ममाऽऽज्ञया । उत्पद्यते सुतस्ते तु सर्वलोकैकपावनः ॥
आवयोः सर्वकल्याणं[२] भविष्यति मनोगतम् ॥ २८

भगवानुवाच—

ततः पतिव्रता तस्य आज्ञामागृह्य संभवात् । पपौ रेतो महाभागा ब्रह्मणः परमात्मनः ॥ २९
आवर्त इव संजज्ञे रौद्रगर्भ इति[३] स्फुरन् । प्रसोढुं नैव शक्ता सा शान्तनुं चाब्रवीत्ततः ॥ ३०

अमोघोवाच—

गर्भं धारयितुं नाथ न शक्नोम्यधुना प्रभो । किं करिष्यामि धर्मज्ञ प्राणो मे संचलत्यपि ॥
आज्ञापय महाभाग गर्भं त्यक्ष्यामि यत्र च ॥ ३१

भगवानुवाच—

पत्युराज्ञां समादाय मुक्तो गर्भो युगंधरे । पयस्तेजोमयं शुद्धं सर्वधर्मप्रतिष्ठितम् ॥ ३२
तन्मध्ये पुरुषः शुद्धः किरीटी नीलवाससा । रत्नदाम्ना च विद्धाङ्गो दुष्प्रेक्ष्यो ज्योतिषां गणः
ततो देवगणाः स्वर्गात्पुष्पवर्षमवाकिरन् । प्रसूतः सर्वतीर्थेषु तीर्थराज इति स्मृतः ॥ ३४
ततो राम इति ख्यातः प्रजातोऽहं भृगोः कुले । क्षत्रियान्पितृहन्तॄंस्तु ससैन्यबलवाहनः ॥ ३५
हत्वा युद्धगतान्भीतान्पङ्कैः सर्वैर्युतो ह्यहम् । ब्रह्महत्यासमं घोरं मद्देहे समुपस्थितम् ॥ ३६
पङ्कयुक्तं कुठारं मे क्षालितं नैव शुध्यति । ततः खे चाभवद्वाणी राम मद्वचनं कुरु ॥ ३७

देववागुवाच—

यत्र तीर्थे कुठारं ते निर्मलं च भवेदिति । तत्र ते सर्वपापानां जातानां च क्षयो भवेत् ॥ ३८

---

१ घ. °तः । शान्तनुः स्वगृहं चेत्य प्राहामोघां पतिव्रताम् । किमिदं तेजसः कूटं स्फुरत्येतत्प्रदक्षिणम् । तमुवाच पतिं साध्वी विधिरत्र समागतः । त्वा° । २ क. ख. ङ. च. ज. °णं फलिष्य° । ग. घ. °णं फलिष्यति परत्र च । त° । ३ घ. इव स्मर° । ४ घ. तत्त्वज्ञ ।

जनानां तत्र सर्वेषां हितार्थं तिष्ठ मानद । चपलं गच्छ तीर्थानि सर्वाणि सुमहान्ति च ॥ ३९
तेषां मध्ये महातीर्थे पर्शुशुद्धिर्भवेद्यदि । तच्च जानीहि तीर्थेषु मुक्तिदं परिकीर्तितम् ॥ ४०

भगवानुवाच—

तच्छ्रुत्वा जामदग्न्यस्तु तीर्थानि प्रययौ तदा । गङ्गां सरस्वतीं शुभ्रां कावेरीं सरयूं तथा ॥ ४१
गोदावरीं च यमुनां कद्रूं च बाहुदां तथा । अन्यां च पुण्यदां रम्यां गौरीपूर्वां स्थितां शुभाम्॥
गच्छतस्तस्य धीरस्य सदागतिसमस्य च । क्षालितः सर्वतीर्थेषु न पुनर्निर्मलोऽभवत् ॥ ४३
ततो गिरिगुहां दुर्गां महारण्यं च पर्वतम् । गिरिकूटं च दुर्लभ्यं ययौ तीर्थमसौ हरिः ॥ ४४
न च निर्मलतामेति कुठारस्तस्य तेन च । विषादमगमत्तत्र रामः परपुरंजयः ॥ ४५
हा हेति विविधं कृत्वा चोपविश्य धरातले । प्रचित्तमागमद्वीरस्तमुवाच पुनस्तथा ॥ ४६

देववागुवाच—

पूर्वस्यां दिशि देवेश तीर्थं चास्ति गुहोदरे ॥ ४७

भगवानुवाच—

तच्छ्रुत्वा नरशार्दूलो गत्वा कुण्डं ददर्श सः । प्रदक्षिणं जलावर्तं शुभ्रं पापहरं शुभम् ॥ ४८
तज्जलस्पर्शमात्रेण कुठारः शुद्धतां गतः । ततो रामोऽभिषेकं तु कृतवान्प्रमुदाऽन्वितः ॥ ४९
शुद्धात्मनस्त्वपापस्य बुद्धिर्जाता प्रपाविनी । स रामः सुचिरं स्थित्वा तीर्थराजं प्रसाद्य तम् ५०
स चात्र वाऽचलं प्राप्य पुरं वेगसमन्वितः । ख्यातं कृत्वा ततश्चोर्व्यां गतोऽसौ लवणार्णवम्५१
अयं तीर्थवरः साक्षात्पितामहकृतो भुवि । सुखदः सर्वतः शुद्धो मुक्तिमार्गप्रदः किल ॥ ५२
एवं कामप्रभावं च विद्धि दुर्वारदुःसहम् । कामाज्जातं त्वपं पापं(?) पुण्यं पुण्यप्रयोगतः ॥ ५३
स जातश्चैव लौहित्यो विरिञ्चेश्चैव चौरसः । शान्तनोः क्षेत्रसंजातस्त्वमोघागर्भसंभवः ॥ ५४
विरिञ्चिना जितः कामः शान्तनोरप्यमत्सरात् । तस्याः पतिव्रतात्वाच्च तीर्थात्तीर्थवरो हि सः॥
एवं यस्तु पठेन्नित्यं पुण्याख्यानमिदं शिवम् । शृणुयाद्वा मुदा पृथ्व्यां मुक्तिमार्गं स गच्छति५६

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पञ्चाख्याने लौहित्योत्पत्तिर्नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९७४९

---

अथ त्रिपञ्चाशत्तमोऽध्यायः ।

---

श्रीभगवानुवाच—

पुरा शर्वः स्त्रियो दृष्ट्वा युवती रूपशालिनीः । गन्धर्वकिंनराणां च मनुष्याणां च सर्वतः ॥ १
मन्त्रेण ताः समाकृष्य त्वतिदूरे विहायसि । तपोव्याजपरो देवस्तासु संगतमानसः ॥ २
अतिरम्यां कुटीं कृत्वा ताभिः सह महेश्वरः । क्रीडां चकार सहसा मनोभवपराभवः ॥ ३
एतस्मिन्नन्तरे गौर्याश्चित्तमुद्भ्रान्ततां गतम् । अपश्यद्ध्यानयोगेन क्रीडन्तं जगदीश्वरम् ॥ ४
स्त्रीभिरन्तर्गतं ज्ञात्वा रोषस्य वशगाऽभवत् । ततः क्षेमंकरीरूपा भूत्वा च प्रविवेश सा ॥ ५
व्योमैकान्तेऽतिदूरे च कामदेवसमप्रभम् । वामातिमध्यगं शुभ्रं पुरुषं पुरुषोत्तमम् ॥ ६
स्त्रीभिः सह समालिङ्ग्य प्रक्रीडन्तं मुहुर्मुहुः । चुम्बन्तं निर्भरं देवं हरं रागप्रपीडितम् ॥ ७

---

१ घ. वीरस्य ।

द्रुतं क्षेमंकरी दृष्ट्वा निपपाताग्रतस्तदा । तासां केशेषु चाऽऽकृष्य चकार चरणाहतिम् ॥ ८
त्रपया पीडितः शर्वः पराङ्मुखमवस्थितः । केशेष्वाकृष्य रोषात्ताः पातयामास भूतले ॥ ९
स्त्रियः सर्वा धरां प्राप्य सहसा विकृताननाः । उमाशापप्रदग्धाङ्गा म्लेच्छानां वशमागताः॥ १०
ताश्चाण्डालस्त्रियः ख्याता अधवा धवसंयुताः । अद्याप्युमाकृतं शापं सर्वास्ताश्च समश्नुयुः॥ ११
अथोमा शतधा रूपं कृत्वेशं संगता यदा । एवं प्रभावं जानीहि कामस्य सततं द्विज ॥ १२
ततश्चिरं तया सार्धं गतः कैलासमन्दिरम् । अतः क्षेमंकरीं दृष्ट्वा येऽभिवन्दन्ति मानवाः॥ १३
तेषां वित्तर्द्धिविभवा भवन्तीह परत्र च । कुङ्कुमारक्तसर्वाङ्गि कुन्देन्दुधवलानने ॥ १४
सर्वमङ्गलदे देवि क्षेमंकरि नमोऽस्तु ते । योगिनीसाम्यं तेनैव संमुखा विमुखाऽपि वा ॥ १५
दृष्ट्वा तां नाभिवन्देद्यस्तस्य युद्धे पराजयः । राजगृहेषु विद्यायां नमस्काराज्जयो भवेत् ॥ १६
एवं कामस्य माहात्म्यं भवो मोहवशं गतः । ममैव यादृशो मोहः सर्वलोकैः प्रगीयते ॥ १७
परस्त्रीहरणे दोषान्मम दुर्गतिसंचयम् । यथोद्भूतं प्रवक्ष्यामि जनेषु विदितं द्विज ॥ १८
गोपी पतिहिता काचित्काचिद्बाला तपस्विनी । प्रौढा कात्यायनी वृद्धा काचित्संबन्धिनी वधूः
आसां हरणदोषाच्च यद्वृत्तं तच्छृणुष्व मे । रणे पराजयं दैन्यं शोकं पुत्रविनाशनम् ॥ २०
सारथ्यं स्त्रीजने पापं चण्डालादेव विप्लवम् । शुक्लाङ्गं क्षयवृद्धिं च कल्पे शाश्वतमाप्नुयात्(म्) २१
अयं देवासुराणां च क्षमया प्रभुतां गतः । अस्यैव सदृशो लोके न भूतो न भविष्यति ॥ २२
रामामङ्कस्थितां रम्यां क्षमातल्पगतेन च । त्यक्त्वैव साधिता लोकाः सुरासुरप्रदुर्लभाः ॥ २३
एवं वैष्णवमुख्यश्च सुरासुरगणार्चितः । यो नो ददाति भुक्त्यंशं शेषं च स्वयमश्नुते ॥ २४
एवमभ्यासधैर्येण दीर्घकालं स संगतः । प्राक्संगमात्स भार्यां च दृष्ट्वा मां प्रददौ मुदा ॥ २५
द्वादशाब्दप्रसंकल्पं प्राग्भोग्यं मयि वेशितम् । तेन तस्य गृहे नित्यं तिष्ठामि गृहरक्षणात् ॥ २६
तथा धात्रीफलस्यापि सदा स्वरसमीहते । तस्मादुक्तो मयाऽन्येषां वैष्णवानां च वैष्णवः ॥ २७
पुरा ये विप्र मे भक्त्या सुरा मत्पथगामिनः । तैरेव न कृतं यच्च तदनेन कृतं परम् ॥ २८
तस्माद्वैष्णवसर्वस्वं नाम रम्यं मया कृतम् । अस्य वेश्मनि तिष्ठामि मुहूर्तं न चलाम्यहम् ॥ २९
अतो ये चैव मद्भक्तास्तेष्वहं सुलभो द्विज । अस्माकं पदवीं तेभ्यश्चाद्य दद्मि स्वकारणम् ॥ ३०
आवयोर्विप्र सौजन्यं स्वप्नभोज्यादिकं समम् । सायुज्यं च सखित्वं च पश्य भूदेव नान्तरम् ३१

व्यास उवाच—

ततो मूकादयः सर्वे स्वागता हरिमीश्वरम् । गन्तुकामा दिवं पुण्याः सदाराः सपरिच्छदाः॥३२
ये च तेषां गृहाभ्यासेऽप्यात्मानो गृहगोधिकाः । नानाकीटादयो ये च तेषामनुययुः सुराः ३३

+व्यास उवाच—

एतस्मिन्नन्तरे देवाः सिद्धाश्च परमर्षयः । प्रचक्रुः पुष्पवर्षाणि साधु साध्विति(त्य)नादयन्॥३४
देवदुन्दुभयो नेदुर्विमानेषु वनेषु च । समारुह्य रथं स्वं स्वं हरिवीथीपुरं ययुः ॥ ३५
तदद्भुतं समालोक्य विप्रोऽप्याह जनार्दनम् । उपदेशं च देवेश ब्रूहि मे मधुसूदन ॥ ३६

---

+ इदमधिकम् ।

---

१ घ. ज. नयने । २ क. ग. घ. ज. भुक्त्याऽन्यं । ३ घ. सदीश्वरसमीहसे । त° । ज. सदीश्वर° । ४ क. °से पाप्मानो ।

भगवानुवाच—

गच्छस्व पितरौ तात शोकविक्लवमानसौ । समाराध्य प्रयत्नेन मद्गृहं प्राप्स्यसेऽचिरात् ॥ ३७
मातापितृसमा देवा न तिष्ठन्ति सुरालये । याभ्यां संगर्हितं देहं शिशुत्वे पालितं सदा ॥ ३८
अज्ञानदोषसहितं प्रपुष्टं चापि वर्धितम् । याभ्यां तयोः समं नास्ति त्रैलोक्ये सचराचरे ॥ ३९

व्यास उवाच—

ततो देवगणाः सार्धं पञ्चभिस्तैर्मुदाऽन्विताः । माधवं संस्तुवन्तश्च गतास्ते हरिमन्दिरम् ॥ ४०
खचितां च पुरीं रम्यां विश्वकर्मविनिर्मिताम् । रत्नाढ्यामिष्टसंपूर्णां कल्पवृक्षादिभिर्युताम् ॥ ४१
शातकुम्भमयैर्गेहैः सर्वरत्नैः सुकर्बुराम् । वज्रवैडूर्यसोपानां स्वर्णदीतोयसंयुताम् ॥ ४२
गीतवाद्यादिसंपूर्णां सर्वदुर्गसमाकुलाम् । कोकिलालापबहुलां सिद्धगन्धर्वसेविताम् ॥ ४३
रूपाढ्यैः सुजनैः पूर्णां क्रामन्तीमिव खे पुरीम् । ततः स्थित्वाऽच्युताः सर्वे सर्वलोकाच्युता भृशम्
द्विजोऽपि पितरौ गत्वा समाराध्य प्रयत्नतः । अचिरेणैव कालेन सकुटुम्बो हरिं ययौ ॥ ४५
पञ्चाख्यानमिदं पुण्यं मया ते समुदाहृतम् । यः पठेच्छृणुयाद्वाऽपि तस्य नास्तीति दुर्गतिः ॥४६
ब्रह्महत्यादिभिः पापैर्न लिप्येत कदाचन । गवां कोटिप्रदानेन यत्फलं लभते नरः ॥ ४७
तत्फलं समवाप्नोति पञ्चाख्यानावगाहनात् । स्नानेन पुष्करे नित्यं भागीरथ्यां च सर्वदा ॥४८
यत्फलं समवाप्नोति सकृच्छ्रवणगोचरात् । दुःस्वप्नं नाशयेत्क्षिप्रं तथाऽऽरोग्यं प्रयच्छति ॥
लक्ष्म्यारोग्यकरं चैव तस्माच्छ्रोतव्यमेव हि ॥ ४९

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पञ्चाख्यानं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥५३॥

आदितः श्लोकानां समष्ट्यङ्काः—२९७९८

---

अथ चतुष्पञ्चाशत्तमोऽध्यायः ।

---

द्विजा ऊचुः—

कीर्तिर्धर्मोऽथ लोकेषु सर्वाणि प्रवराणि च । वद नो मुनिशार्दूल यदि नोऽस्ति त्वनुग्रहः ॥ १

व्यास उवाच—

यस्य खातवने गावस्तृप्यन्ति मासमेव च । तावत्सप्तदिनात्पूतः सर्वदेवैः प्रपूजितः ॥ २
पुष्करिण्या विशेषेण पूताया यज्ञकर्मणः । यत्फलं जलदानेन सर्वमन्नस्य तच्छृणु ॥ ३
हायने हायने चैव कल्पं कल्पं विधीयते । दाता स्वर्गमवाप्नोति तोयदः सर्वतो भुवि ॥ ४
मेघो वर्षति खाते च जायन्ते ये तु शीकराः । तावद्वर्षसहस्राणि दिवमश्नाति मानवः ॥ ५
तोयैरन्नादिपाकैश्च प्रसन्नो मानवो भवेत् । प्राणानां च विना तैश्च धारणं नैव जायते ॥ ६
पितॄणां तर्पणं शौचं रूपं वैगन्ध्यनाशनम् । बीजं त्विहार्जितं सर्वं सर्वं तोये प्रतिष्ठितम् ॥ ७
वस्त्रस्य धावनं रुच्यं भाजनानां तथैव च । तेनैव सर्वकार्ये च पानीयं मेध्यमेव च ॥ ८
तस्मात्सर्वप्रयत्नेन वापीकूपतडागकम् । कार्यं चैव बलैः सर्वैस्तथा सर्वधनेन च ॥ ९
ततो विनिर्जले देशे यो ददाति जलाशयम् । वासरे वासरे तस्य कल्पस्वर्गं विनिर्दिशेत् ॥ १०

---

१ ग. घ. स्वाचितां । २ ग. घ. °यैर्देहैः सु° । ३ ग. घ. °र्णा हसन्तीमि° । ४ ग. °दानात्स्वर्गं ।

त्रिविष्टपाच्च्युतो विप्रो वेदशास्त्रार्थपारगः । लोकबन्धुः स धर्मात्मा तपस्तप्त्वा दिवं व्रजेत् ॥ ११
एवं जन्माष्टकं प्राप्य एकस्याक्षयमिष्यते (?) । क्षत्रियाणां कुले जातः सार्वभौमो भवेन्नृपः ॥१२
विश्नोऽक्षयं धनं विद्याँ जन्मजन्मसु यत्प्रियम् । शूद्रादयोऽन्त्यजाश्चान्ये लभन्ते स्वर्गतिं मुहुः १३
चतुर्हस्तप्रमाणं तु कूपं खनति यः पुमान् । परोपकारकं नित्यं कल्पं स्वर्गे तु हायने ॥ १४
द्विगुणे द्विगुणं विद्यौच्छतं चैव चतुर्गुणम् (?) । त्रिंशत्किष्कुप्रमाणां तु दद्यात्पुष्करिणीं तु यः ॥
विष्णोर्धाम लभेत्सोऽपि दिव्यभोगं तथैव च । अनन्तरं नृपो जातो धनी वागीश्वरो भवेत् ॥१६
एवं द्वित्रिचतुर्वाऽपि (?) गुणतो भोग्यमिष्यते । विस्तीर्णे प्रचुरं विद्धि सहस्रेणाच्युतो दिवः १७
सहस्राद्द्विगुणेनैव सुरपूज्यो भवेन्नरः । जन्तवस्तत्र ये सन्ति यावन्तो जीवनं ययुः ॥ १८
तत्संख्याका जनास्तत्र किंकरा यद्विलग्नकाः । भवन्ति सततं गेहे पुरे जनपदेषु च ॥ १९
विहाय पि[*तरं भोग्या] धने क्षीणे यथावनम्(?) । पक्षिणः सूकरश्चैव महिषी करिणी तथा ॥
उपदेष्टा च कर्ता च षडेते स्वर्गगामिनः । दिव्यं च पक्षिणां चैव शतं स्वर्गे विनिर्दिशेत् ॥ २१
क्रोडो वर्षसहस्रं तु महिष्ययुतहायनम् । देवरूपं समावाप्ता करिण्या लक्षमुच्यते ॥ २२
कोट्येकमुपदेष्टुश्च कर्तुरक्षयमेव च । पुरा धनिसुतेनैव कृतः ख्यातो जलाशयः ॥ २३
अयुतधनव्ययेनैव प्राणेनैव बलेन च । सर्वसत्त्वोपकाराय शिवः श्रद्धायुतेन च ॥ २४
कालेन कियता सोऽपि क्षीणवित्तोऽभवत्किल । कश्चिदर्थी धनी तस्या मूल्यदानाय चोद्यतः ॥
विमृश्य धनिना चोक्तं व्याहारं शृणुताधुना । दीनारस्यायुतं वा ते दास्याम्यस्याश्च कारणात् ॥
लब्धं ते पुष्करिण्याश्च पुण्यं ला(लो)भात्प्रमन्यसे । शक्त्या दत्त्वाऽथ मूल्यं च स्वीयां कर्तुं व्यवस्थितः
एवमुक्ते स तं प्राह वासरेऽप्ययुतं पुनः । फलं भवति वै नित्यं पुण्यं पुण्यविदो विदुः ॥ २८
एतस्मिन्निर्जले देशे शिवं खातं कृतं च मे । स्नानपानादिकं कर्म सर्वे कुर्वन्त्यभीप्सितः ॥ २९
तस्मान्मेऽप्ययुतार्थस्य नैत्यिकं फलमिष्यते । ततस्तस्याभवद्धास्यं तथैव च सभासदाम् ॥ ३०
ह्रिया च पीडितः सोऽपि वाक्यमेतदुवाच ह । सत्यमेतद्वचोऽस्माकं परीक्षां कुरु धर्मतः ॥ ३१
मत्सरात्स ततः प्राह शृणु मे वचनं पितः । दीनारायुतमेतत्ते दत्त्वा चाऽऽनीय प्रस्तरम् ॥ ३२
पातयिष्यामि ते खाते यथायोगात्प्रमज्जतु । उन्मज्जति च यत्काले प्रस्तरः संतरत्यपि ॥ ३३
क्षयं यास्यति नो वित्तं नो चेन्मे धर्मतो हि सा । बाढमुक्त्वाऽयुतं तस्य गृहीत्वा स्वगृहं गतः ३४
साक्षिणामग्रतस्तेन प्रस्तरः पातितस्तथा । पुष्करिण्यां महत्यां च दृष्टं नरसुरासुरैः ॥ ३५
ततो धर्मतुलायां तु तुलितं धर्मसाक्षिणाम् । दीनारायुतदानस्य पुष्करिण्या जलस्य तु ॥ ३६
न समं तु दिनैकस्य जल(दान)स्य धर्मतो भृश(तः फल)म् । धनिनो मानसं दुःखं मोघार्थं च परेऽहनि
शिलोच्चयोऽभवत्तीर्णो द्वीपवच्च जलोपरि ॥ ३७
ततः कोलाहलः शब्दो जनानां समुपस्थितः । तच्छ्रुत्वाऽद्भुतवाक्यं च मुदा तौ चाऽऽगतौ ततः
दृष्ट्वा शैलं तथाभूतं कृतं तेनायुतं तथा । ततः खाताधिपेनैव शैलं दूरे निपातितम् ॥ ३९

* धनुश्चिह्नान्तर्गतः पाठो ञ. पुस्तकस्थः ।

१ झ. ञ. °दसारार्थं° । २ झ. °द्याजन्म° । ३ झ. °द्यात्सुतं चै° । ञ. °द्याच्छ्रुते चै° । ४ ख. ङ. °तो मोक्षमि° । ५ ज. °रा निषत्सुते° । घ. °रा निस्वत्सुते° । ६ ग. घ. शुद्धासनेन । ज. शुद्धाशनेन । ७ ग. घ. °स्मात्तेऽप्ययुतं तात दिनै- कफ° । ८ झ. ञ. °कं हसितं यद्यध° । ९ ग. घ. ज. °तः । पर्वतायु° । १० ग. घ. ज. °णा । पुराणायु° । ११ झ. °नैकं तु ज° ।

पुण्यं खातस्य चोत्खाते प्रलुप्तस्य तु तेन हि। सोऽपि नाकं समारुह्य जन्मजन्मसु निर्वृतः ॥ ४०
गोत्रमातृगणानां च नृपाणां सुहृदां तथा। सखीनां चोपकर्तॄणां खातं खात्वाऽक्षयं फलम्॥ ४१
तपस्विनामनाथानां ब्राह्मणानां विशेषतः। खातं तु जनयित्वा तु स्वर्गं चाक्षयमश्नुते ॥ ४२
तस्मात्खातादिकं विप्राः शक्तितो यः करिष्यति। सर्वपापक्षयात्पुण्यं मोक्षं यायान्न संशयः ४३
य इदं श्रावयेल्लोके धर्माख्यानं महोत्कटम्। सर्वखातप्रदानस्य फलमश्नाति धार्मिकः ॥ ४४
ग्रहणे भास्करस्यैव भागीरथ्यां तटे वरे। गवां कोटिप्रदानस्य फलं श्रुत्वा लभेन्नरः ॥ ४५
न च दारिद्र्यतामेति न शोकं व्याधिसंचयम्। असंमानं महद्दुःखमुभयोर्नाधिगच्छति ॥ ४६

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे खातादिकीर्तनं नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९८४४

---

अथ पञ्चपञ्चाशत्तमोऽध्यायः।

---

व्यास उवाच—

शाखिनामेव सर्वेषां फलं वक्ष्यामि यादृशम्। तच्छृणुध्वं महाभागा रोपणे च पृथक्पृथक् ॥ १
यस्तु रोपयते तीरे पुण्यवृक्षान्समन्ततः। तस्य पुण्यफलं जातं कथितुं नैव शक्यते ॥ २
अन्यत्र रोपणं कृत्वा शाखिनां यत्फलं लभेत्। ततो जलसमीपे तु लक्षकोटिगुणं भवेत् ॥ ३
स्वयं पुष्करिणीतीरे त्वनन्तं फलमश्नुते। तस्माच्छतगुणं ब्रूमः शाखिनां पुण्यकारिणाम् ॥ ४
अश्वत्थरोपणं कृत्वा जलाशयसमीपतः। यत्फलं लभते मर्त्यो न तत्क्रतुशतैरपि ॥ ५
पतन्ति यानि पत्राणि जले पर्वणि पर्वणि। तानि पिण्डसमानीह पितॄणामक्षयं ययुः ॥ ६
खादन्ति पतगास्तत्र फलानि कामतो ध्रुवम्। ब्रह्मभक्ष्यसमं तस्य पुण्यं भवति चाक्षयम् ॥ ७
अश्वत्थेनैव वृक्षेण रोपणे(पिते)नैव यत्फलम्। तद्वै क्रतुशतैर्नैवं पुत्रैरेव शतैरपि ॥ ८
उष्णे छायां प्रगृह्णन्ति गावो देवद्विजातयः। कर्तुः पितृगणानां च स्वर्गो भवति चाक्षयः ॥ ९
कर्तुं स्वस्थस्य वै विप्रमक्षयत्वान्न शक्यते। तस्मात्सर्वप्रयत्नेन रोपयेद्वृक्षमाधवम् ॥ १०
एकं वृक्षं समारोप्य नरः स्वर्गान्न हीयते। तस्मादेव महावृक्षं रोपयध्वं द्विजोत्तमाः ॥ ११
जलानां निकटे रम्ये रसानां क्रयविक्रये। मार्गे जलाशये वृक्षान्रोपयेद्यो मदाश्रयः ॥ १२
अश्वत्थादीन्समारोप्य स्वर्गं याति मनोरमम्। अर्चयित्वा तु यत्पुण्यं प्रवक्ष्यामि द्विजातयः १३
स्नात्वाऽश्वत्थं स्पृशेद्यस्तुं पापेभ्यः स प्रमुच्यते। अस्नातो यः स्पृशेन्मर्त्यो लभते स्नानजं फलम्
दृष्ट्वा च नाशयेत्पापं स्पृष्ट्वा लक्ष्मीं प्रपद्यते। प्रदक्षिणे भवेदायुः सदाऽश्वत्थ नमोऽस्तु ते ॥ १५
चलदलाय वृक्षाय सदा विष्णुस्थिताय च। बोधिसत्त्वाय योग्याय सदाऽश्वत्थ नमोऽस्तु ते १६
अश्वत्थाय तु हव्यं तु पयोनैवेद्यमेव च। पुष्पं धूपं दीपकं च दत्त्वा स्वर्गान्न हीयते ॥ १७
सुपुत्रं चाक्षयं विद्धि धनवृद्धियशस्करम्। विजयं मानदं भद्रमश्वत्थस्य प्रपूजनम् ॥ १८
यज्जप्तं च हुतं स्तोत्रं यन्त्रमन्त्रादिकं च यत्। सर्वं कोटिगुणं प्रोक्तं मूले चलदलस्य च ॥ १९
यस्य मूले स्थितो विष्णुर्मध्ये तिष्ठति शंकरः। अग्रभागे स्थितो ब्रह्मा कस्तं जगति नार्चयेत् २०

---

१ ग. घ. ज. °कं धरां सारां जन्मजन्मसु लभ्यते। गो°। २ क. ख. ग. घ. ङ. च. छ. ज. ञ. °फलस्यान्तं क°। ३ घ. °त्। स्त्रीयपु°। ४ झ. ञ. भक्ष्येण। ५ ञ. °व पत्रै°। ६ क. च. ञ. एवं। ७ ग. ज. ञ. °स्तु सर्वपापैः प्र°।

सोमवारे त्वमायां च स्नानं यन्मौनिना कृतम् । दानस्य गोसहस्रस्य फलं चाश्वत्थवन्दने ॥ २१
सप्तमदक्षिणेनैव गवामयुतजं फलम् । प्रचुराल्लक्षकोटिश्च तस्मात्कार्या हि सा सदा ॥ २२
यत्किंचिद्दीयते तत्र फलमूलजलादिकम् । सर्वं तच्चाक्षयं विप्रा जन्मजन्मसु जायते ॥ २३
अहोऽश्वत्थसमो नास्ति वृक्षरूपी हरिर्भुवि । यथा पूज्यो द्विजो लोके यथा गावो यथाऽमराः॥
तथाऽयं वृक्षरूपी च देवः पूज्यतमः स्मृतः । रोपणे रक्षणे स्पर्शे पूजाकर्मणि वै सदा ॥ २५
ददाति वित्तं पुत्रांश्च स्वर्गं मोक्षं पुनः क्रमात् । किंचिच्छेदं तु यः कुर्यादश्वत्थस्य तनौ नरः ॥
कल्पैकं निरयं भुक्त्वा चाण्डालादौ प्रजायते । मूलच्छेदेन तस्यैव स च यात्यपुनर्भवम् ॥ २७
पुरुषास्तस्य तिष्ठन्ति रौरवे घोरदर्शने । अश्वत्थस्यैकवृक्षस्य रोपणे यत्फलं भवेत् ॥ २८
तथैव चम्पकेऽर्के च त्रयाणां रोपणेऽपि च । अष्टौ बिल्वस्य वृक्षाश्च न्यग्रोधाश्चैव सप्त च ॥ २९
निम्बस्य दश वृक्षाश्च फलं चैषां समं भवेत् । एकैकस्य फलं चोक्तं वृक्षाणां रोपणे द्विजाः॥ ३०
एवं बुद्ध्वा तु धर्मात्मा यः कुर्यात्कृत्रिमं वनम् । कल्पकोटिसहस्राणि कल्पकोटिशतानि च ३१
नाकमेति स चूतस्य समारोप्य सहस्रकम् । ततो द्वित्रिगुणेनैव न्यूने वा प्रचुरेऽपि वा ॥ ३२
भुङ्क्ते भुक्त्वा पुनः कुर्यान्नृपो वाऽथ सदीश्वरः। स्वर्गं भोग्यं ततो राज्यं कल्याणं मङ्गलं शुभम् ॥
आरोग्यं शौर्यसंपन्नमारामादेव जायते । फलानि यानि खादन्ति जन्तवोऽथ सहस्रशः ॥ ३४
आश्रिता विहगाः कीटाः पतगाः शलभादयः। छायाश्रिताश्च ये सत्त्वास्तत्संख्याताः पृथग्जनाः
तस्य किंकरतां यान्ति शतशो देवतार्चिताः । ये च वृक्षा महासत्त्वाः सर्वे ते देवरूपिणः ॥ ३६
तदर्चा पितृवत्कार्या शुश्रूषाजलपिण्डकम् । मर्त्यलोके च ते पुत्रास्तस्य जन्मनि जन्मनि ॥ ३७
सुरूपाः सुविनीताश्च सदा पुण्यक्रियान्विताः । एवं गणेशतां यान्ति जन्तवश्च्युतलग्नकाः ॥ ३८
धात्री हरीतकी चान्ये कटुतिक्ताम्लसंभवाः । सर्वे चाऽऽरामतः शुद्धाः फलदाः शिवदाः सदा
प्रासादा यत्र सौवर्णाः सर्वरत्नविभूषिताः । सर्वाभरणसंयुक्ता विमानाश्चानिलोपमाः ॥ ४०
शातकुम्भमया वृक्षाः सदैव सर्वदायिनः । सर्वर्तुसुखदाः सौम्याः कन्यकाप्सरसोपमाः ॥ ४१
गीतनृत्यपरा धीरास्तत्र तिष्ठन्ति वृक्षदाः । पुष्करिण्यो विशेषेण खातान्यन्यानि यानि च ॥४२
सुधोपलान्तरचिता नद्यः पायसकर्दमाः । पुनर्दुग्धसफेनाश्च अन्नादिषड्रसान्विताः ॥ ४३
मर्त्यलोके यथा भोग्यं पुनः स्वर्गे पुनर्भुवि । पुनरेव तदभ्यासात्खातमारामकं पुनः ॥ ४४
यथा पुण्यादिकं कृत्वा स्वर्गमर्त्याधिपः क्रमात् । अशक्तस्तु प्रपां कृत्वा पुष्करिण्याः फलं लभेत्
प्रपाया लक्षणं चात्र सर्वपापहरं परम्। सर्वभोगप्रदं शुद्धं स्वर्गापवर्गदं स्थिरम् ॥ ४६
लक्षणं च प्रवक्ष्यामि प्रपायाः कीर्तिवर्धनम् । निर्जलेऽध्वनि पृक्ते च स्थाने कृत्वा च मण्डपम्॥
बहुपान्थे समायाते ग्रीष्मवर्षाशरत्स्वपि । अगरुकादिसौगन्ध्यं जलं पूगं सचन्द्रकम् ॥ ४८
आसनं चैवं ताम्बूलं दत्त्वा स्वर्गान्न हीयते । एवं वर्षत्रयेणैव पुष्करिण्याः फलं लभेत् ॥ ४९
स्वर्गाच्चैवाच्युतो मर्त्यो देवैरपि प्रपूज्यते । मासमेकं तु यो दद्यात्प्रपां ग्रीष्मेऽथ निर्जले ॥ ५०
कल्पैकं तु वसेत्स्वर्गे स्वर्गाद्भ्रष्टो महीयते । प्रपादास्तत्र तिष्ठन्ति यत्र पुष्करिणीप्रदाः ॥ ५१
नो चेद्धर्मघटो देयः पुण्यः पापक्षयाय च । एष धर्मघटो देयो ब्रह्मविष्णुशिवात्मकः ॥ ५२
तव प्रसादात्सफला मम सन्तु मनोरथाः । स्वर्णं माषचतुर्भागं दक्षिणार्थं घटस्य च ॥ ५३

---

१ ग. घ. ज. मखाः । तं । २ घ. भोग्यं । ३ ग. सर्वे तु सु । ४ घ. दत्त्वा । ५ ग. घ. प्रीतिवर्धनम् । ६ घ. कष्टे । ७ घ. सकर्पूरम् । ८ ग. घ. म. व तैलं च द । ९ ङ. म. ज्ञेयो ।

एवं वर्षत्रयेणैव प्रपादानफलं लभेत् । यः पठेच्छ्रावयेद्वाऽपि पुष्करिण्यादिकं फलम् ॥ ५४
साक्षात्पापाद्भवेन्मुक्तस्तत्प्रसादात्तु सद्गतिः । जनेषु श्रावयेद्यस्तु पुण्याख्यानमिदं शुभम् ॥
कल्पकोटिसहस्राणि सुरलोके स तिष्ठति ॥ ५५

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पुष्करिण्यादिधर्मकीर्तनं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९८९९

---

अथ षट्पञ्चाशत्तमोऽध्यायः ।

---

व्यास उवाच—

अपरं च प्रवक्ष्यामि कीर्तिधर्मपरं शुभम् । सेतुबन्धफलं पुण्यं ब्रह्मणा भाषितं यथा ॥ १
कान्तारे दुस्तरे पङ्के पुरुशङ्कुसमाकुले । आलिं कृत्वा भवेत्पूतो देवत्वं याति मानवः ॥ २
वितस्तौ तु लभेत्स्वर्गं दिव्यं वर्षशतं समम् । एवं संख्याविधानेन नरः स्वर्गान्न हीयते ॥ ३
कदाचित्पङ्कयोगाच्च स्वर्गाद्भुवि विजायते । तदा भट्टारकः श्रीमान्रोगशोकविवर्जितः ॥ ४
पङ्कादौ संक्रमांश्चैव कृत्वा स्वर्गान्न हीयते । सर्वपापं क्षयं तस्य संप्रयाति दिने दिने ॥ ५
तथाऽऽलिसंक्रमाणां च फलं तुल्यं प्रकीर्तितम् । धनप्राणव्ययेनैव धीमता क्रियते सदा ॥ ६
श्रूयतां यत्पुरा वृत्तमाख्यानं वृद्धसंमतम् । कश्चिच्चोरो महाभीष्मः स्तेयकर्मणि चोद्यतः ॥ ७
कान्तारे गोशिरः स्थाप्य क्रान्त्वा स्तेयं गतो ह्यसौ । धनापहरणं कृत्वा गृहस्थस्य च तेन हि ८
गतः स्वमन्दिरं तत्र जना गच्छन्ति वर्त्मनि । सर्वेषामेकपादस्य सुखं भवति निश्चितम् ॥ ९
एकपादे ह्रदे दुर्गे तारकं गोशिरः परम् । चान्द्रायणं च तत्तस्य कान्तारे संस्थितं शिरः ॥
ततश्चौरस्य निधने चित्रगुप्तप्रणीतके ॥ १०

चित्रगुप्त उवाच—

धर्मस्य फलमात्रं तु एतस्य च न विद्यते । न दैवं पैतृकं कार्यं तीर्थस्नानं द्विजार्चनम् ॥ ११
दानं गुरुजने मानः ज्ञानं परहितं शुभम् । मनसा न कृतं तेन क्रियया च कथं पुनः ॥ १२
कृतं साहसिकं स्तेयं परदाराभिमर्शनम् । भूतमिथ्यापवादं च साधुनिन्दापरं तथा ॥
एवं शतसहस्रं तु तथा गोहरणं कृतम् ॥ १३

व्यास उवाच—

तत्राऽऽह धर्मराजस्तु कालानलसमप्रभः ॥ १४

धर्मराज उवाच—

नयतैनं फलं शूरा दुर्गतिं चापुनर्भवाम् ॥ १५

व्यास उवाच—

एतस्मिन्नन्तरेऽवोचच्चित्रगुप्तोऽनुकम्पकः ॥ १६

---

१ घ. ज. °मृ । लक्षा° । ग. °मृ । सर्वपापा° । २ ग. घ. ज. °लोकैः प्रवन्दितः । इ° । ३ ग. घ. ज. °रुसत्कुसुमा° ।
४ ग. घ. शतम् । ५ ग. घ. ज. तथैव । ६ घ. ज. धृतं ।

चित्रगुप्त उवाच—

अस्त्यस्य गोशिरः पुण्यं किंचिन्नाथ क्षमाधुना । अस्य पुनर्भवो नास्ति शर्म चात्र लवं न च ॥
चिन्तयित्वोच्यतां देव तत्पापस्य क्षयाय वै ॥ १७

व्यास उवाच—

ततः संचिन्त्य धर्मात्मा तस्य पुण्यं समाधिना । नृपो द्वादशवार्षिक्यं लभेत्पुण्योदयं क्षितौ १८
तथाऽऽह धर्मराजस्तं गच्छ मर्त्ये दुरात्मक । अकण्टकं च राज्यं च भुङ्क्ष्व द्वादशवत्सरम् ॥१९
यद्धृतं गोशिरो मार्गे मुक्तस्तस्यैव कारणात् । पुनरत्र समागम्य संगन्ता चापुनर्भवम् ॥
ततः कृताञ्जलिर्देवमुवाच दुःखपीडितः ॥ २०

चोर उवाच—

धर्मराजानुकम्पां च मय्येवं पापकारिणि । कुरु नाथ त्वनाथे च जानामि भीतिपूर्वकम् ॥ २१

व्यास उवाच—

धर्मराजस्तु तं चाऽऽह वाढमेवमितो व्रज । स्मरिष्यसि स्ववृत्तान्तं मत्प्रसादात्सुदुःखितः ॥ २२
एतस्मिन्नन्तरे चैव(मुक्तो) यम(स्य) किंकरेण हि । तस्य जन्माभवत्कौ च दुर्विधे चातिवाणिके॥
आजन्म विविधं दुःखं भुक्तं पूर्वविकर्मतः । भुक्तं कष्टं महत्तच्च एकविंशतिहायनम् ॥ २४
तस्मिन्राष्ट्रे मृतो भूपः स्वकर्मपरिपीडितः । एतस्मिन्नन्तरेऽमात्यैः समालोक्य सुमन्त्रिभिः ॥ २५
अनेकपरिमर्शैस्तु[1] पृथिव्यां भ्रमणं कृतम् । तमावृण्वंश्च ते सद्यः सर्वेषां पुरतो दृढम् ॥ २६
ततो राज्याभिषेकश्च कृतस्तैस्तु विमत्सरैः । स च राज्यं च संश्रित्य धर्मराजवरेण च ॥ २७
अकरोदालिकं कर्म शिलाबद्धं च मृन्मयम् । संक्रमं जलदुर्गे च तरणिं च तथा परे ॥ २८
वापीकूपतडागानि प्रपाराममहीरुहम् । कृतवान्विविधं यज्ञं दानपुण्यमतः परम् ॥ २९
स्मरंश्च पूर्वकर्माणि सर्वपापक्षयाय वै । कृतं वहुविधं धर्मं व्रतानि विविधानि च ॥ ३०
सुराणां ब्राह्मणानां च गुरूणां चैव तर्पणात् । पापात्पूतो ययौ गेहं धर्मराजस्य धीमतः ॥ ३१
स यानस्थं ततो दृष्ट्वा क्रोधरक्तेक्षणोऽभवत् । स च तं प्राञ्जलिः प्राह भो धर्म कुरु तारणम् ॥
चित्रगुप्तोऽब्रवीद्वाक्यं धर्मराजसमीपतः ॥ ३२

चित्रगुप्त उवाच—

कर्मणा मनसा पूतो विष्णुलोकं स गच्छतु ॥ ३३

व्यास उवाच—

स तच्छ्रुत्वा पुनश्चाऽऽह तस्य विज्ञाय कारणम् । स्मितः प्रीत्या प्रसन्नात्मा गच्छ गच्छाच्युतालयम्
विमानं सुरलोकाच्च स्वागतं वर्णकर्बुरम् । समारुह्य गतः स्वर्गं पुनरावृत्तिदुर्लभम् ॥ ३५
तस्मात्किष्कुप्रमाणं हि दत्तं येनाऽऽलिकं पुरा । तस्य(स च) राज्यान्वयं स्वर्गं[3] महान्तं चानुगच्छति
तथैव गोप्रचारं तु दत्त्वा स्वर्गान्न हीयते । या गतिर्गोप्रदस्यैव ध्रुवं तस्य भविष्यति ॥ ३७
व्यामैकं गोप्रचारं तु मुक्तं[4] येन सुधीमता । तस्य स्वर्गे भवेदिष्टं किमन्यैः पुरुभाषितैः ॥ ३८
गोप्रचारं यथाशक्ति यो वै त्यजति हेतुना । दिने दिने ब्रह्मभोज्यं पुण्यं तस्य शताधिकम् ॥३९
तस्माद्गवां प्रचारं तु मुक्त्वा[5] स्वर्गान्न हीयते । यश्छिनत्ति द्रुमं पुण्यं गोप्रचारं छिनत्त्यपि ॥ ४०

---

१ ख. ङ. स्वयं च । घ. तारिकं । ज. दारिकं । २ ग. घ. ज. °स्तु भूपमन्वेषणं । ३ क. ख. ग. घ. ङ. च. ज. ञ. °र्गं सदा तं चा° । ४ क. च. युक्तं । ५ क. ख. ग. घ. ङ. च. ज. ञ. युक्त्वा ।

तस्यैकविंशत्पुरुषाः पच्यन्ते रौरवेषु च। गोचारघ्नं ग्रामगोपः शक्तो ज्ञात्वा तु दण्डयेत् ॥ ४१
छेत्तारं[1] धर्मवृक्षाणां विशेषाद्ब्रह्मचारहम् । तस्य दण्डे सुखं तस्य तस्मात्तं दण्डयेत्तु सः ॥ ४२
प्रासादं कुरुते यस्तु विष्णु[2]लिङ्गस्य मानवः । त्रिकाण्डं पञ्चकाण्डं च सुशोभं सुघटान्वितम् ॥४३
इतोऽधिकं तु यो दद्यान्मृन्मयं वा दृषन्मयम् । वसुवृत्तिसु[3]पूर्णं च सुरम्यं दिव्यभूतलम् ॥ ४४
प्रतिष्ठाकर्मसंपन्नं किंकरादिभिरावृतम्[4] । सुलिङ्गमिष्टदेवस्य विष्णोरेव विशेषतः ॥ ४५
कृत्वा च विष्णुसायुज्यं समाप्नोति नरोत्तमः । तथैव प्रतिमां कृत्वा हरेरन्यतरस्य च ॥ ४६
कृत्वा देवकुलं रम्यं यत्फलं लभते नरः । न तन्मखसहस्रैस्तु दानैर्भुवि व्रतादिभिः ॥ ४७
कल्पकोटिसहस्राणि कल्पकोटिशतानि च । प्रासादे रत्नसंयुक्ते संपूर्णे द्रव्यसंकुले ॥ ४८
स वसेत्कामगे याने सर्वलोकमनोहरे । स्वर्गाच्च्युतो भवेद्राजा सार्वभौमो गुणैर्वशी ॥ ४९
शिवलिङ्गे तु प्रासादं कारयित्वा[5] तु शक्तितः । यदुक्तं विष्णुलिङ्गे तु तज्ज्ञेयं शिववेश्मनि ॥ ५०
भुङ्क्ते भोगं महाभागो मनःशर्मकरं परम् । रामाभिरामं संपूर्णं सर्वतः सुखदं दिवि ॥ ५१
उर्व्यामक्षयभोग्यानि नृपो वाऽथ महाधनी । हरस्य प्रतिमां यश्च कुर्यादेव गृहे नरः ॥ ५२
सुलिङ्गां वा सुरूपां वा कल्पकोटि वसेद्दिवि । स्वर्गाद्भ्रष्टो भवेद्राजा धनी पूज्यतमोऽपि वा ॥५३
देवीलिङ्गेषु सर्वेषु कृत्वा देवगृहं नरः । सुरत्वं प्राप्नुयाल्लोके देव्याः सर्वसुखोद्भवे ॥ ५४
भृशमच्युततामेति सुखमेति निरामयम् । रत्नसं[6]मृष्टप्रासादे मणिकर्बुरभूतले ॥ ५५
रामायुतप्रसंभोग्ये देवीसंसृष्टनिर्भये । नृत्यगीतपरे रम्ये सर्वेन्द्रियमनोरमे ॥ ५६
रत्नमर्दलतालाढ्ये सर्वदा स्त्रीजनेरिते । निर्मले सुखदे रम्ये र[7]त्नानां सुशुभे गृहे ॥ ५७
तथैव प्रतिमायाश्च देव्याः प्रासादमुत्तमम् । नियुतं कल्पकोटीनां स्वर्लोकमेति मानवः ॥ ५८
स्वर्गाद्भ्रष्टो भवेद्भूपो देवीभक्तिपरायणः । एवं च जन्मसाहस्रं स्मर एव भवेद्भुवि ॥ ५९
प्रासादं गाणपत्यं च देव्या वा प्रीतिमान्नरः । कृत्वा सुरगणानां च पूजितो दिवि जायते॥६०
तथैव राजतामेति भोगान्देवीपुरे तथा । अविघ्नं सर्वकार्येषु सदैव गणपो यथा ॥ ६१
आज्ञा न स्खलिता तस्य सुरासुरनरेषु च । तथैव सौरप्रासादे फलमेति नरोत्तमः ॥ ६२
अरोगी सुप्रसन्नात्मा कामदेवसमप्रभः । वरटः सर्वलोकेषु यथा ब्रध्नस्तथा हि सः ॥ ६३
सूरस्य प्रतिमायां च गृहं कृत्वा शिलामयम् । कल्पकोटि[8]शतं भुक्त्वा स्वर्गमुर्वीश्वरो भवेत् ॥६४
विष्ण्वादिसर्वदेवानामर्चनं यत्पृथक्पृथक् । प्रत्येकं संप्रवक्ष्यामि नराणां हितहेतवे ॥ ६५
घृतप्रदीपं यो दद्यान्मासमेकमहर्निशम् । दिव्यं वर्षायुतं स्वर्गे पूजितो देवसत्तमैः ॥ ६६
घृतस्नानं तथा लिङ्गे यः कुर्याद्भुवि मानवः । कल्पकोटिसहस्राणि मासैके लभते नरः ॥ ६७
तिलतैलप्रदीपस्य तथाऽन्यस्यार्धकं फलम् । मासैकं जलदानस्य फलेनेश्वरतां व्रजेत् ॥ ६८
धूपदानेन गान्धर्वं चन्दने द्विगुणं भवेत् । मृगमदागरुसत्त्वस्य दाने बहुफलं भवेत् ॥ ६९
मालापुष्पप्रदानेन नरः स्यात्त्रिदशेश्वरः । शीते तूलपटीं दत्त्वा सर्वदुःखात्प्रमुच्यते ॥ ७०
जन्मजन्मसु लभ्येत उष्णे च शीतलां पटीम् । दत्त्वा च नैव सीदेत शक्त्या वस्त्रं ददाति यः ॥
चतुर्हस्तप्रमाणं च वर्ष्मवेष्टं सुशोभनम् । पिधानं चरणानां च दत्त्वा स्वर्गान्न हीयते ॥ ७२

---

१ झ. °रं ब्रह्मवृ° । २ ग. घ. ज. °ष्णुलोकस्य । ३ क. °सुसंपूर्णं सु° । च °सुपुण्यं च° । ञ. °सुवर्णे च । ४ ग. घ. ज. °म् । स लि° । २ क. ग. घ. ज. ञ °त्वा स्वश° । ६ घ ज. °संमृष्ट° । ७ घ. रथानामुत्तमे शुभे । त° । ८ ग. घ. °टिवरं भु° ।

शक्त्या स्वर्णप्रदानेन स्वर्गे पूज्यो भवेन्नरः । दशयोजनविस्तीर्णे मण्डपे रूपभाग्भवेत् ॥ ७३
सुवर्णं रत्नसंयुक्तं दत्त्वा दशगुणं लभेत् । वज्रवैडूर्यगारुत्ममाणिक्यादीननर्घतः ॥ ७४
दत्त्वा लिङ्गे विधानाच्च ब्राह्मणे वा यशस्विनि । शतयोजनविस्तीर्णे मण्डलेऽधिपतिर्भवेत् ॥ ७५
तथैव भुवि जातोऽपि सर्वलोकप्ररञ्जनः । सुरभिद्रव्यदानेन वावदूकश्च सुन्दरः ॥ ७६
रक्तामृतसुकण्ठश्च पूगदानान्नरो भवेत् । वरदासीप्रदानेन नरः कल्पं वसेद्दिवि ॥ ७७
[*वरनारीप्रदानेन उर्व्यां जातो धनेश्वरः । तथैव भृत्यदानेन बहुभृत्यो भवेद्दिवि ॥ ७८
धरायामक्षया ऋद्धि]र्जन्मजन्मसु जायते । सर्वतूर्यप्रदानेन गुणवाँल्लोकसंमतः ॥ ७९
नृत्यगीतादिशास्त्रेण गन्धर्वाणां पतिर्भवेत् । दासीदासयुतः स्वर्गे धनैः स्त्रीभिर्वरैर्वृतः ॥ ८०
तथैव गोप्रदानेन तावत्कालं वसेद्दिवि । लिङ्गे दुग्धप्रदानाच्च नरः कल्पं वसेद्दिवि ॥ ८१
दध्ना स्नानेन द्विगुणं घृतेन तु शताधिकम् । अन्नं षड्रससंयुक्तं दत्त्वा क्षितिपतिर्भवेत् ॥ ८२
तथैव पायसं दत्त्वा मुनीनां प्रवरो भुवि । हविष्यान्नं मुदा दत्त्वा वेदशास्त्रार्थपारगः ॥ ८३
निरामिषप्रदानाच्च ब्रह्मचारी व्रती भवेत् । मधुदानाच्च सौभाग्यं गुडेन लवणेन च ॥ ८४
शर्करादिभिर्लावण्यं सर्वलोकेषु गीयते । देवानां शंभुलिङ्गानामर्चां कृत्वा विधानतः ॥ ८५
अनुक्रमेण स्वर्गादौ लोकानां स पतिर्भवेत् । [+जलपात्रादिदानेन नरः स्वर्गान्न हीयते ॥ ८६
शय्याभोजनदानेन नरः पापात्प्रमुच्यते । तस्मादर्चा प्रकर्तव्या स्वयंभूनां भवार्थिभिः] ॥ ८७
लोकानां च हितार्थाय देवास्तिष्ठन्ति संमुखाः । सकृत्प्रदक्षिणं कृत्वा शंभुलिङ्गेषु पण्डितः ॥ ८८
दिव्यं वर्षशतं पूर्णं स्वर्गमत्ति नरोत्तमः । एवमेव क्रमेणैव नमस्कारैः स्वयंभुवः ॥ ८९
लोकवन्द्यो व्रजेत्स्वर्गं तस्मान्नित्यं समाचरेत् । लिङ्गरूपस्य देवस्य यो धनं हरते नरः ॥ ९०
स च रौरवमासाद्य हरणात्कीटतां व्रजेत् । दातुः पूजां च लिङ्गार्थे हरेश्चाप्याददाति यः ॥ ९१
कुलकोटिसहस्रेण नरकान्न निवर्तते । जलपुष्पादिदीपार्थे वसु चान्यद्गृहीतवान् ॥ ९२
पश्चान्न दीयते लोभादक्षयं नरकं व्रजेत् । दासीं हृत्वा तु लिङ्गस्य नरकान्न निवर्तते ॥ ९३
कामार्तो मातरं गच्छेन्न गच्छेच्छिवचेटिकाम् । शिवदासीं ततो गत्वा शिवस्वहरणे तथा ॥ ९४
भक्षणादन्नपानानां नरो दुर्गतिमाप्नुयात् । अतो देवलविप्रो यो नरकान्न निवर्तते ॥ ९५
देवद्रव्यं सुसंपूज्य लिङ्गार्चनफलं लभेत् । वेश्यायां च नरो गत्वा कीटजातिषु जायते ॥ ९६
तस्माद्वेश्याजनानां च दौष्यमेव हितं भवेत् । अतस्तु गणिकां स्पृष्ट्वा नरः स्नानाद्विशुध्यति ॥ ९७
मलिनां दुर्गतिं याति बहुपूरुषसंश्रयात् । वेश्या तपस्विनी या च देवार्चनरता सदा । ९८
पतिव्रितपरा शुद्धा स्वर्गं चाक्षयमश्नुते । [*गणिकां मातृवद्यस्तु सदाऽऽसन्नां प्रपश्यति ॥ ९९
देववत्सुरलोकेषु निखिलं भोगमश्नुते] । सुरासुरनराणां च वन्दनीयो यथा हरिः ॥ १००
तथाऽयं सर्वलोकेशः सर्वभूतैकपावनः । देवदासः सदा यस्तु देवभृत्येषु लोलुपः ॥ १०१
स च गच्छति लोकेशो देवलोके महीयते । एतेषामेव लिङ्गानां कारयित्वा च मण्डपम् ॥ १०२
शक्त्याऽयं लभते नाकं कालस्य निश्चयं शृणु । हायनैकं तृणेनैवं शरकाण्डेन तच्छतम् ॥ १०३
अयुतं त्वन्यकाष्ठेन लक्षं खादिरदारुणा । कोटिकोटि च पाषाणैः सुदृढैर्यत्नसंयुतैः ॥ १०४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ञ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठो ञ. पुस्तकस्थः ।

---

१ घ. मण्डले । २ ग. घ. ज. 'व करीरेण समायुत' ।

तस्मात्सर्वप्रयत्नेन मण्डपं कारयेद्बुधः । यावत्कालं वसेत्स्वर्गे नरो मण्डपकारकः ॥ १०५
तावत्कालं च हरणे नरो दुर्गतिमाप्नुयात् । जनानां निचये रम्ये वस्तूनां क्रयविक्रये ॥ १०६
आश्रये चाध्वगानां च नदीनदसमागमे । देवानां मण्डपं कृत्वा यत्फलं लभते नरः ॥ १०७
तत्फलं समवाप्नोति द्विगुणं विप्रमन्दिरे । अनाथस्य च दीनस्य श्रोत्रियस्य विशेषतः ॥ १०८
कारयित्वा गृहं रम्यं नरः स्वर्गान्न हीयते । य इदं शृणुयान्नित्यं पुण्याख्यानमनुत्तमम् ॥ १०९
अक्षयं लभते स्वर्गं प्रासादादेः फलं लभेत् । धनिनां चेश्वराणां च तथा पुण्यवतां पुनः ॥ ११०
पाठयित्वा पठित्वा तु नरः स्वर्गान्न हीयते । देवानां दासदासीनां सदा देवालयेषु च ॥ १११
पठेद्यस्तु सदा विप्रो मोक्षमार्गं स गच्छति । नृपाणामीश्वराणां च धनिनां गुणिनां पुरः ॥ ११२
पठित्वा मोक्षमाप्नोति श्रवणात्तत्फलं लभेत् ॥ ११३

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे धर्माख्याने षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३००१४

---

अथ सप्तपञ्चाशत्तमोऽध्यायः ।

---

द्विजा ऊचुः—

पुण्यानां कः परः पुण्यो मर्त्यलोके द्विजोत्तमः । सुलभो मर्त्यपूज्यस्तु मुनीनां च तपस्विनाम् ॥ १
चातुर्वर्ण्याश्रमाणां च पापपुण्यवतां नृणाम् । गुणागुणवतां चैव वर्णावर्णवतां तथा ॥ २

व्यास उवाच—

सर्वेषामेव भूतानां रुद्राक्षेण युतो वरः । दर्शनाद्यस्य लोकानां पापराशिः प्रलीयते ॥ ३
स्पर्शनाद्दिवमश्नाति धारणान्मोक्षतां व्रजेत् । शिरस्युरसि बाहौ च रुद्राक्षं धारयेत्तु यः ॥ ४
स चेशानसमो लोके[2] मखे[3] सर्वत्र गोचरः । यत्र तिष्ठत्यसौ विप्रः स देशः पुण्यवान्भवेत् ॥ ५
तं दृष्ट्वाऽप्यथ वा स्पृष्ट्वा नरः पूयेत कल्मषात् । यज्जप्यं[4] तर्पणं दानं स्नानमर्चा प्रदक्षिणम् ॥ ६
यत्किंचित्कुरुते पुण्यं निखिलं तदनन्तकम् । तीर्थानां च महत्तीर्थं रुद्राक्षस्य फलं द्विजाः ॥ ७
अस्यैव धारणादेहे पापात्पूतोऽपवर्गभाक् । गृहीत्वा चाक्षमालां च ब्रह्मग्रन्थियुतां शिवाम् ॥ ८
यज्जप्तं च कृतं दानं स्तोत्रमन्त्रं सुरार्चनम् । सर्वं चाक्षयतामेति पापं च क्षयतां व्रजेत् ॥ ९
मालाया लक्षणं ब्रूमः श्रूयतां द्विजसत्तमाः । तस्यास्तु लक्षणं ज्ञात्वा मोक्षमार्गं प्रलप्स्यथ ॥ १०
निर्योनि कीटविद्धं च भग्नलिङ्गं यथाक्रमम् । अन्योन्यवीजलग्नं च मालायां परिवर्जयेत् ॥ ११
स्वयं च ग्रथिता या च श्लथाऽन्योन्यप्रसज्जिता । शूद्रादिग्रथिताऽशुद्धा दूरात्तां परिवर्जयेत् ॥ १२
[*सर्पाकारा च नक्षत्रा मेरुणाऽत्यन्तसंयुता । संसता (क्त)ग्रन्थिशुद्धा या प्रशस्ता तां जपेद्बुधः
एभिः शुद्धां च मालां च धृत्वाऽङ्गुष्ठेन कर्षयेत् । ] मध्यमालग्नकं वीजं जप्तव्यं च यथाक्रमम् ॥
हस्तसंभ्रमणेनैव मेर्वामर्शे पुनः पुनः । संख्यातं यज्जपेन्मन्त्रमसंख्यातं च निष्फलम् ॥ १५
सर्वेषामेव देवानां जपेन्मन्त्रं स्वमालया । प्रयतः सकले तीर्थे कोटिकोटिगुणं भवेत् ॥ १६

---

* धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

---

१ ग. घ. ज. °द्राक्षः प्रयतो भुवि । द° । २ ज. °के स खे स° । ३ ग. घ. ज. स एव गो° । ४ ग. घ. ज. °ज्जल्पाति स्वस्तिकस्य व्रजनं च प्र° ।

शुद्धायामेव भूम्यां तु मेध्यैकवृक्षमूलकः । गोष्ठे चतुष्पथागारे विष्णुमन्त्रं शिवस्य च ॥ १७
गाणपत्यस्य सूरस्य लिङ्गेऽनन्तफलं भवेत् । शून्यागारे शवस्याग्रे श्मशाने च चतुष्पथे ॥ १८
देवीमन्त्रं जपेद्यस्तु सद्यः सिध्यति साधकः । यावन्तो वैदिका मन्त्राः पौराणाश्चाऽऽगमोद्भवाः ॥
सर्वं रुद्राक्षमालायां दर्शितं मोक्षदायकम् । रुद्राक्षस्नवजं शुद्धं जलं शिरसि धारयेत् ॥ २०
सर्वस्मात्कल्मषात्पूतः पुण्यं भवति चाक्षयम् । रुद्राक्षस्य च प्रत्येकं बीजं प्रत्येकनिर्जरम् ॥
धारयेद्यस्तनौ मर्त्यः सुराणां सत्तमो भवेत् ॥ २१

द्विजा ऊचुः—

रुद्राक्षस्तु कुतो जातः कुतो वा मेध्यतां गतः । किमर्थं स्थावरो भूमौ केनैव च प्रचारितः ॥ २२

व्यास उवाच—

पुरा कृतयुगे विप्रास्त्रिपुरो नाम दानवः । सुराणां च वधं कृत्वा अन्तरिक्षपुरे हि सः ॥ २३
प्रणाशे सर्वलोकानां स्थितो ब्रह्मवरेण च । शुश्राव शंकरो भीमं देवैरीशो निवेदितम् ॥ २४
ततोऽजगवमासज्य बाणमन्तकसंनिभम् । धृत्वा तं च जघानाथ दृष्टं दिव्येन चक्षुषा ॥ २५
स पपात महीपृष्ठे महोल्केव च्युतो दिवः । घटनव्याकुलाद्रुद्रात्पतिताः स्वेदबिन्दवः ॥ २६
तत्रा[1]ऽऽशु बिन्दुतो जातो *महारुद्राक्षकः क्षितौ । अस्यैव च फलं जीवा[3] न जानन्त्यतिगुह्यतः ॥
ततः कैलासशिखरे देवदेवं महेश्वरम् । प्रणम्य शिरसा भूमौ स्कन्दो वचनमब्रवीत् ॥ २८

स्कन्द उवाच—

रुद्राक्षस्य फलं तात[4] ज्ञातुमिच्छामि तत्त्वतः । जप्येऽथ धारणे किंवा दर्शने स्पर्शनेऽपि वा ॥२९

ईश्वर उवाच—

लक्षं तु दर्शनात्पुण्यं कोटिर्वै स्पर्शनेन च । दशकोटिफलं पुण्यं धारणाल्लभते नरः ॥ ३०
लक्षकोटिसहस्राणि लक्षकोटिशतानि च । जप्त्वाऽस्य (च) लभते[1] पुण्यं नात्र कार्या विचारणा ॥
उच्छिष्टो वा विकर्मस्थो युक्तो वा सर्वपातकैः । मुच्यते सर्वपापेभ्यो रुद्राक्षधारणेन वा ॥ ३२
कण्ठे रुद्राक्षमाधाय श्वापदो म्रियते यदि । सोऽपि रुद्रत्वमाप्नोति किं पुनर्मानुषादयः ॥ ३३
ध्यानधारणहीनोऽपि रुद्राक्षं यदि धारयेत् । सर्वपापविनिर्मुक्तः स याति परमां गतिम् ॥ ३४

कार्तिकेय उवाच—

एकवक्त्रं द्वित्रिचतुष्पञ्चषड्वक्त्रमेव च । सप्ताष्टनववक्त्रं च दशैकादशवक्त्रकम् ॥ ३५
रुद्राक्षं द्वादशास्यं च त्रयोदशमुखं तथा । चतुर्दशास्यसंयुक्तं स्वयमुक्तं च शंकरम् ॥ ३६
तेषां च तन्मुखानां च देवताः काश्च तद्वद । गुणा वा कीदृशास्तेषां दोषो वा जगदीश्वर ॥
यदि मेऽनुग्रहो वाऽस्ति कथयस्व यथार्थतः ॥ ३७

ईश्वर उवाच—

एकवक्त्रः शिवः साक्षाद्ब्रह्महत्यां व्यपोहति । तस्मात्तु धारयेद्देहे सर्वपापक्षयाय च ॥ ३८
शिवलोकं स गच्छेच्च शिवेन सह मोदते । महता पुण्ययोगेन हरानुग्रहकारणात् ॥ ३९

---

* महारुद्राक्षवृक्षक इति क्वचित्पाठः ।

---

१ अ. लभेत् । २ ग. घ. °त्राश्रुबि° । झ. °त्राप्रबि° । ञ. °त्राग्नेर्बिन्दु° । ३ ग. घ. ज. वीरा । ४ क. ग. घ. ज. ञ. नाथ ।

एकवक्त्रं लभेन्मर्त्यो मोक्षमार्गं षडानन । देवदेवो द्विवक्त्रं च यस्तु धारयते नरः ॥ ४०
सर्वपापं क्षयं याति यदुक्तं गोवधादिकम् । स्वर्गं चाक्षयमाप्नोति द्विवक्त्रधारणात्ततः ॥ ४१
त्रिवक्त्रमनलः साक्षाद्यस्य देहे प्रतिष्ठति । तस्य जन्मार्जितं पापं दहत्यग्निरिवेन्धनम् ॥ ४२
स्त्रीहत्याब्रह्महत्याभ्यां बहूनां चैव हत्यया । यत्पापं लभते मर्त्यः सर्वं नश्यति तत्क्षणात् ॥ ४३
यत्फलं वह्निपूजायामग्निकार्ये घृताहुतौ । तत्फलं लभते धीरः स्वर्गं चानन्तमश्नुते ॥ ४४
त्रिवक्त्रं धारयेद्यस्तु स च ब्रह्मसमो भुवि । निचितं दुष्कृतं सर्वं दहेज्जन्मनि जन्मनि ॥ ४५
न चोदरे भवेद्रोगो न चैवापटुतां व्रजेत् । पराजयं न लभते नाग्निना दह्यते गृहम् ॥ ४६
एतान्यन्यानि सर्वाणि वज्रादेश्च निवारणम् । नाशुभं विद्यते किंचित्त्रिवक्त्रस्य च धारणात् ४७
चतुर्वक्त्रः स्वयं ब्रह्मा यस्य देहे प्रतिष्ठति । स भवेत्सर्वशास्त्रज्ञो द्विजो वेदविदां वरः ॥ ४८
सर्वधर्मार्थतत्त्वज्ञः स्मार्तः पौराणिको भवेत् । यत्पापं नरहत्यायां बहुसत्त्वेषु वेश्मसु ॥ ४९
तत्सर्वं दहते शीघ्रं चतुर्वक्त्रस्य धारणात् । [*पञ्चवक्त्रः स्वयं रुद्रः कालाग्निर्नाम नामतः॥५०
अगम्यागमनं चै(नाच्चै)व अभक्ष्यस्य च भक्षणम्(णात्) । मुच्यते नात्र संदेहः पञ्चवक्त्रस्य धारणात्]
महेशस्तुष्यते नित्यं भूतानामधिपो भवेत् । सद्योजातस्तथेशानस्तत्पुरुषोऽघोर एव च ॥ ५२
वामदेव इमे देवा वक्त्रैः पञ्चभिराश्रिताः । अतः सर्वत्र भूयिष्ठः पञ्चवक्त्रो धरातले ॥ ५३
रुद्रस्याऽऽत्मजरूपोऽयं तस्मात्तं धारयेद्बुधः । कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ ५४
तावत्कालं शिवस्याग्रे पूजनीयः सुरासुरैः । सार्वभौमो भवेद्भूमौ सर्वतेजाः शिवालये ॥ ५५
तस्मात्सर्वप्रयत्नेन पञ्चवक्त्रं तु धारयेत् । षड्वक्त्रं कार्तिकेयं तु धारयन्दक्षिणे भुजे ॥ ५६
ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः । स्कन्दस्य सदृशः शूरः कल्पान्ते समुपस्थिते ॥ ५७
नात्र पराजयं चैति गुणानामाकरो भुवि । कुमारत्वमवाप्नोति यथा गौरीशनन्दनः ॥ ५८
ब्राह्मणो भूपपूज्यश्च क्षत्रियो लभते जयम् । वैश्याः शूद्रादयो वर्णाः सदैश्वर्यप्रपूरिताः ॥ ५९
तस्यैव वरदा गौरी मातेव सुलभा भवेत् । ततो भुजबलादेव [1]विश्वजेता भवेन्नरः ॥ ६०
वाग्मी धीरः सभायां च नृपवेश्मनि संसदि । न च कातरतामेति नैव भङ्गो भवेद्ध्रुवम् ॥ ६१
एतान्यन्यानि सर्वाणि षड्वक्त्रस्यैव धारणात् । सप्तवक्त्रो महासेनस्त्वनन्तो नाम नागराट्॥६२
अस्य प्रत्येकवक्त्रे तु प्रतिनागा व्यवस्थिताः । अनन्तः कर्कटश्चैव पुण्डरीकोऽथ तक्षकः ॥ ६३
विषोल्बणश्च [2]कारोषः शङ्खचूडश्च सप्तमः । एते नागा महावीर्याः सप्तवक्त्रे व्यवस्थिताः ॥ ६४
अस्य धारणमात्रे तु विषं न क्रमते तनौ । हरश्च परमप्रीतो भवेन्नागेश्वरे यथा ॥ ६५
प्रीत्याऽस्य सर्वपापानि क्षयं यान्ति दिने दिने । ब्रह्महत्या सुरापानं स्तेयादिगुरुतल्पजम् ॥६६
यत्पापं लभते मर्त्यः सर्वं नश्यति तत्क्षणात् । देवस्य सदृशं भोग्यं त्रैलोक्ये निश्चितं लभेत् ६७
अष्टवक्त्रो महासेनः साक्षाद्देवो विनायकः । अस्यैव धारणादेव यत्पुण्यं तच्छृणुष्व मे ॥ ६८
जन्म जन्म न मूर्खः स्यान्नाऽऽतुरो न च नष्टधीः । अविघ्नं सर्वकार्येषु तस्यैव सततं भवेत् ॥६९
नैपुण्यं लिपिकार्येषु महाकार्येषु कौशलम् । सर्वारम्भादिकार्येषु क्ष(क्षे)मं तस्य दिने दिने ॥ ७०
+अर्धकूटं तुलाकूटं सर्वकूटं तथैव च । शिश्नोदरकरेणैव संस्पृशेद्वा गुरुस्त्रियम् ॥ ७१

---

* धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः । + अन्नकूटमिति क्वचित्पाठः ।

---

१ ग. घ. विश्वतेजा । २ ग. ज. कारीषः । भ. कारार्षः ।

एवमादीनि सर्वाणि हन्ति पापानि सर्वथा । अक्षयं त्रिदिवं भुक्त्वा मुक्तो याति परां गतिम् ॥
*गुणान्येतानि सर्वाणि अष्टवक्त्रस्य धारणात् । नवास्यं भैरवं प्रोक्तं धारयेद्यश्च बाहुतः ॥ ७३
कपिलं मुक्तिदं धृत्वा मम तुल्यबलो भवेत् । लक्षकोटिसहस्राणि ब्रह्महत्याः करोति यः ॥ ७४
ताः सर्वा दहते शीघ्रं नववक्त्रस्य धारणात् । सुरलोके सदा देवैः पूजितो मघवान्यथा ॥ ७५
हरवद्धरवेश्मस्थो गणेशो नात्र संशयः । पन्नगाश्च विनश्यन्ति दशवक्त्रस्य धारणात् ॥ ७६
वक्त्रे चैकादशे वत्स(तथाचैकादशवक्त्रे) रुद्राश्चैकादश स्मृताः । शिखायां धारयेन्नित्यं तस्य पुण्यफलं शृणु ॥ ७७
अश्वमेधसहस्राणि यज्ञकोटिशतानि च । गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ॥ ७८
तत्फलं शीघ्रमाप्नोति वक्त्रैकादशधारणात् । हरस्य सदृशो लोके पुनर्जन्म न विद्यते ॥ ७९
रुद्राक्षं द्वादशास्यं यः कण्ठदेशे तु धारयेत् । आदित्यस्तुष्यते नित्यं द्वादशास्ये व्यवस्थितः॥८०
गोमेधं नरमेधं च कृत्वा यत्फलमश्नुते । तत्फलं शीघ्रमाप्नोति वज्रादेश्च निवारणम् ॥ ८१
नैव वह्नेर्भयं चैव न च व्याधिः प्रवर्तते । अर्थलाभं सुखं भुङ्क्ते ईश्वरो न दरिद्रता ॥ ८२
हस्त्यश्वनरमार्जारमूषकान्शशकांस्तथा । व्यालदंष्ट्रिसृगालादीन्हत्वा व्याघातयत्यपि ॥ ८३
मुच्यते नात्र संदेहो वक्त्रद्वादशधारणात् । वक्त्रत्रयोदशो रुद्रो रुद्राक्षः प्राप्यते यदि ॥ ८४
शंतमः स तु विज्ञेयः सर्वकामफलप्रदः । सुधारसायनं चैव धातुवादश्च पादुकाः ॥ ८५
सिध्यन्ति तस्य वै सर्वे भाग्ययुक्तस्य षण्मुख । मातृपितृष्वसृभ्रातृगुरूंवाऽथ निहत्य च ॥ ८६
मुच्यते सर्वपापेभ्यो त्रयोदशास्यधारणात् । अक्षयं लभते स्वर्गं यथा देवो महेश्वरः ॥ ८७
चतुर्दशमुखं वत्स रुद्राक्षं यदि धारयेत् । सततं मूर्ध्नि बाहौ वा शक्तिपिण्डं शिवस्य च ॥ ८८
किं पुनर्बहुनोक्तेन वर्णितेन पुनः पुनः । पूज्यते सततं देवैः प्राप्यते पुण्यगौरवात् ॥ ८९

कार्तिकेय उवाच—

भगवञ्श्रोतुमिच्छामि वक्त्रे वक्त्रे यथाविधि । न्यसनं केन मन्त्रेण धारणं वा कथं वद ॥ ९०

ईश्वर उवाच—

शृणु षण्मुख तत्त्वेन वक्त्रे वक्त्रे यथाविधि । अमन्त्रोच्चारणादेव गुणा ह्येते प्रकीर्तिताः ॥ ९१
यः पुनर्मन्त्रसंयुक्तं धारयेद्भुवि मानवः । गुणांस्तस्य महत्त्वं च कथितुं नैव शक्यते ॥ ९२

इदानीं मन्त्रा दिश्यन्ते । ॐ रुद्र एकवक्त्रस्य । ॐ खं द्विवक्त्रस्य । ॐ वुं त्रिवक्त्रस्य । ॐ ह्रीं चतुर्वक्त्रस्य । ॐ ह्रां पञ्चवक्त्रस्य । ॐ ह्रूं षड्वक्त्रस्य । ॐ ह्रः सप्तवक्त्रस्य । ॐ कम् अष्टवक्त्रस्य । ॐ जूं नववक्त्रस्य । ॐ क्षं दशवक्त्रस्य । ॐ श्रीम् एकादशवक्त्रस्य । ॐ ह्रां द्वादशवक्त्रस्य । ॐ क्षौं त्रयोदशवक्त्रस्य । ॐ त्रां चतुर्दशवक्त्रस्य । एवं मन्त्रा यथाक्रमं न्यस्तव्याः ॥

शिरस्युरसि मालां च गृहीत्वा यो व्रजेन्नरः । पदे पदेऽश्वमेधस्य फलमाप्नोति नान्यथा ॥ ९३
सर्वेषामपि वक्त्राणां धारणे [+यो समो(मत्समो)भवेत् । तस्मात्सर्वप्रयत्नेन रुद्राक्षं पुत्र धारय ॥
य इदं शृणुयान्मन्त्रपुण्याख्यानमिदं स्मृतम् । सर्वेषामेव वक्त्राणां धारणे] यत्फलं लभेत् ॥ ९५
तत्फलं समनुप्राप्य स्वर्गापवर्गतां व्रजेत् । धारयित्वा तु रुद्राक्षं म्रियते यः क्षितौ नरः ॥ ९६
स याति मत्पुरं रम्यं सर्वदेवैः प्रपूजितः । मरुदेशे पुरा वत्स वाणिज्याय किल स्थले ॥ ९७

* सर्वपुस्तकेषु नपुंसकप्रयोगः । + धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

गच्छन्वणिक्सुतस्तात तरौ प्रेतामपीडितः । नरीनर्ति ततः प्रेता द्विजेन परमैक्षि च ॥ ९८

द्विज उवाच—

का त्वं नृत्यसि दीनाऽसि संवृता जीर्णवाससा । ९९

ईश्वर उवाच—

अथ सा च द्विजं प्राह देवदूतान्मया श्रुतम् । अस्य चारुनरस्यैव वज्रपातेन सांप्रतम् ॥ १००
निश्चितं निधनं विप्र मद्भर्ता तु भविष्यति । एतस्मिन्नन्तरे नाकाद्वज्रं तस्य शिरोपरि ॥ १०१
अपतत्स पपातोर्व्यां रुद्राक्षस्यार्धखण्डके । ततो मम पुरात्पुत्र विमानं चापतदद्भुतम् ॥ १०२
समारुह्य ततः श्रीमांस्तत्र तिष्ठति संचिरम् । समांसकं(रुद्राक्षकं)समासाद्य ईश्वरः को धनी भवेत्
एवं रुद्राक्षखण्डे च मृतस्य सुगतिः सुत । ज्ञानेन धारिणः पुंसः फलं वक्तुं न शक्नुमः ॥ १०४
स शैवो वैष्णवः शाक्तो गाणपत्योऽथ सौरकः । यो दधाति मृतो मालामेकं रुद्राक्षकं शिरः १०५
यः पठेत्पाठयेद्वाऽपि श्रावयेच्छृणुतेऽपि वा । सर्वपापात्प्रमुक्तात्मा सुखं मोक्षं लभेत्क्रमात् १०६

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे रुद्राक्षमाहात्म्यवर्णनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०१२४

---

अथाष्टपञ्चाशत्तमोऽध्यायः ।

---

स्कन्द उवाच—

अपरस्यापि पृच्छामि फलस्य पूततां वरोः । सर्वलोकहितार्थाय वद नो जगदीश्वर ॥ १

ईश्वर उवाच—

धात्रीफलं परं पूतं सर्वलोकेषु विश्रुतम् । यस्य रोपान्नरो नारी मुच्यते जन्मबन्धनात् ॥ २
पावनं वासुदेवस्य फलं प्रीतिकरं शुभम् । अस्य भक्षणमात्रेण मुच्यते सर्वकल्मषात् ॥ ३
भक्षणे च भवेदायुः पाने वै धर्मसंचयः । अलक्ष्मीनाशनं स्नानं सर्वैश्वर्यमवाप्नुयात् ॥ ४
यस्मिन्गेहे महासेन धात्री तिष्ठति सर्वदा । तस्मिन्गेहे न गच्छन्ति प्रेता दैतेयराक्षसाः ॥ ५
न गङ्गा न गया चैव न काशी न च पुष्करम् । एकैव हि नृणां धात्री संप्राप्ते हरिवासरे ॥ ६
एकादश्याशुभे पक्षे धात्रीस्नानं करोति यः । सर्वमापं क्षयं याति विष्णुलोके महीयते ॥ ७
धात्रीफलं महासेन भक्षणं स्नानमेव च । नियते पारणे विष्णोः स्नानमात्रं हरेर्दिने ॥ ८
संयते पारणे चैव धात्र्येकस्पर्शने नरः । भुक्त्वा तु लङ्घयेद्यस्तु एकादश्यां सितासिते ॥ ९
एकेनैवोपवासेन कृतेन तु षडानन । सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ॥ १०
अक्षयं लभते स्वर्गं विष्णुसायुज्यतां व्रजेत् । तस्मात्सर्वप्रयत्नेन धात्रीव्रतं समाचर ॥ ११
धात्रीद्रवेण सातत्यं यस्य केशाः सुरञ्जिताः । न पिबेत्स पुनर्मातुः स्तनं कश्चित्षडानन ॥ १२
धात्रीदर्शनसंस्पर्शान्नाम्न उच्चारणेऽपि वा । वरदः संमुखो विष्णुः संतुष्टो भवति प्रियः ॥ १३
धात्रीफलं च यत्रास्ति तत्र तिष्ठति केशवः । तत्र ब्रह्मा स्थिरा पद्मा तस्मात्तां तु गृहे न्यसेत् १४
अलक्ष्मीर्नश्यते तत्र यत्र धात्री प्रतिष्ठति । संतुष्टाः सर्वदेवाश्च न त्यजन्ति क्षणं मुदा ॥ १५
धात्रीफलेन नैवेद्यं यो ददाति महाधनम् । तस्य तुष्टो भवेद्विष्णुर्नान्यैः क्रतुशतैरपि ॥ १६

---

१ ग. घ. ज. 'ष्णवश्चान्यो गा' । २ ञ. शान्तो ।

स्नात्वा धात्रीद्रवेणैव पूजयेद्यस्तु माधवम् । सोऽभीष्टफलमाप्नोति यद्वा मनसि वर्तते ॥ १७
तथैव लक्षणं स्मृत्वा पूजयित्वा फलेन तु । सुवर्णशतसाहस्रं फलमेति नरोत्तमः ॥ १८
या गतिर्ज्ञानिनां स्कन्द मुनीनां योगसेविनाम् । गतिं तां समवाप्नोति धात्रीसेवारतो नरः ॥ १९
तीर्थसेवाभिगमनैर्व्रतैश्च विविधैस्तथा । सा गतिर्लभ्यते पुंसा धात्रीफलसुसेवया ॥ २०
प्रीतिश्च सर्वदेवानां देवीनां नो गणस्य च । संमुखा वरदाः स्नाने धात्रीफलनिषेवणे ॥ २१
ग्रहा दुष्टाश्च ये केचिदुग्राश्च दैत्यराक्षसाः । सर्वे न दुष्टतां यान्ति धात्रीफलसुसेवनात् ॥ २२
सर्वयज्ञेषु कार्येषु शस्तं चाऽऽमलकीफलम् । सर्वदेवस्य पूजायां वर्जयित्वा रविं सुत ॥ २३
तस्माद्रविदिने तात सप्तम्यां च विशेषतः । धात्रीफलानि सातत्यं दूरतः परिवर्जयेत् ॥ २४
यस्तु स्नाति तथाऽश्नाति धात्रीं च रविवासरे । आयुर्वित्तं कलत्रं च सर्वं तस्य विनश्यति ॥ २५
संक्रान्त्यां च भृगोर्वारे षष्ठ्यां प्रतिपदि ध्रुवम् । नवम्यां चाप्यमायां च धात्रीं दूरात्परित्यजेत् ॥
[*संक्रान्त्यां च भवेद्रोगी अलक्ष्मीर्भृगुवासरे । अनपत्यं यदा षष्ठ्यां नवम्यामायुषः क्षयः २७
दशधात्रीसमायोगात्सर्वनाशं विनिर्दिशेत् ] । नासिकाकर्णतुण्डेषु मृतस्य चिकुरेषु वा ॥ २८
तिष्ठेद्धात्रीफलं यस्य स याति विष्णुमन्दिरम् । धात्रीसंपर्कमात्रेण मृतो यात्यच्युतालयम् ॥ २९
सर्वपापक्षयस्तस्य स्वर्गं याति रथेन तु । धात्रीद्रवं नरो लिप्त्वा यस्तु स्नानं समाचरेत् ॥ ३०
पदे पदेऽश्वमेधस्य फलं प्राप्नोति धार्मिकः । अस्य दर्शनमात्रेण ये वै पापिष्ठजन्तवः ॥ ३१
सर्वे ते प्रपलायन्ते ग्रहा दुष्टाश्च दारुणाः । पुरैकः पुष्कसः स्कन्द मृगयार्थं वनं गतः ॥ ३२
मृगपक्षिगणान्हत्वा तृषया परिपीडितः । क्षुधयाऽऽमलकीवृक्षं पुरः पीनफलान्वितम् ॥ ३३
दृष्ट्वा संरुह्य सहसा चखाद फलमुत्तमम् । ततो दैवात्स वृक्षाग्रान्निपपात धरातले ॥ ३४
वेदनाभिरनुसंविद्धः पञ्चत्वमगमत्तदा । ततः प्रेतगणाः सर्वे रक्षोभूतगणास्तथा ॥ ३५
तं नु वोढुं मुदा सर्वे ये वै शमनसेवकाः । न शक्नुवन्ति चाण्डालं मृतं द्रष्टुं महाबलाः ॥ ३६
अन्योन्यं विग्रहस्तेषां ममायमिति भाषताम् । ग्रहीतुं च विनेतुं च न शक्तास्ते परस्परम् ॥
ततस्ते तु समालोक्य गता मुनिगणान्प्रति ॥ ३७

प्रेता ऊचुः—

किमर्थं मुनयो धीराश्चाण्डालं पापकारिणम् । प्रेक्षितुं न वयं शक्ता न चापि यमसेवकाः ॥ ३८
म्रियन्ते घातिता ये च स्थिरैर्युद्धपराङ्मुखाः । साहसैः पातिता भीता वज्राग्निकाष्ठपीडिताः ३९
सिंहव्याघ्रहता मर्त्या व्याघ्रैर्वा जलजन्तुभिः । जलस्थलस्थिताः प्रेता वृक्षपर्वतपातिताः ॥ ४०
पशुपक्षिहता ये च कारागारे गरे मृ(रान्मृ)ताः । आत्मघातमृता ये च श्राद्धादिकर्मवर्जिताः ४१
गूढकर्ममृता धूर्ता गुरुविप्रनृपद्विषः । पाखण्डाः कौलिकाः क्रूरा गरदाः कूटसाक्षिणः ॥ ४२
अशौचान्नस्य भोक्तारः प्रेतभोग्या न संशयः । [+एते चान्ये च ये धीराः प्रवदामः प्रधानतः ॥
नो चेत्किंचिद्द्रव्यं प्राप्य यमलोकं व्रजन्ति ते । किंकरा ये च धर्मस्य वयं प्रेताः सराक्षसाः] ४४
ममायमिति भाषन्तो नेतुं तं च न शक्नुमः । आदित्य इव दुष्प्रेक्ष्यः किं वा कस्य प्रभावतः ४५

---

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

---

१ ग. घ. °त् । मुखोदरे च मुण्डे च मृतस्य चिकुरे तनौ । ति° । २ ग. घ. ज. पृथ्व्यां । ३ ग. घ. °नागाढसं° । ४ अ. °था । तनुं वो° । ५ ग. घ. ज. °ताः । पातित्येन मृ° । ६ ग. घ. °रः क्षेत्रचान्द्रावगाहिनः । ए° ।

मुनय ऊचुः—

[1]अनेन भक्षितं प्रेताः पक्वं चाऽऽमलकीफलम् । तत्सङ्घाततिस्यैव फलानि प्रचुराणि च ॥ ४६
तेनैव कारणेनायं दुष्प्रेक्ष्यो भवतां ध्रुवम् । वृक्षाग्रपतितस्याथ प्राणः स्नेहान्न च त्यजेत् ॥ ४७
नायं वारेण सूर्यस्य न चान्ये(नान्येन) पापकारिणः । धात्रीभक्षणमात्रेण पापात्पूतो व्रजेद्दिवम् ४८

†प्रेता ऊचुः—

वः पृच्छामः सुविज्ञानान्न वयं निन्दकाः क्वचित् । विष्णुलोकाद्विमानं तु यावन्नैवात्र गच्छति ॥
+उच्यतां मुनिशार्दूला वो द्रुतं मनसि स्थितम् । यावद्द्विजा न घोषन्ति वेदमन्त्रादिकल्पितम् ५०
घोष्यन्ते यत्र वेदाश्च मन्त्राणि विविधानि च । पुराणस्मृतयो यत्र क्षणं स्थातुं न शक्नुमः ॥ ५१
यज्ञहोमजपस्थानदेवतार्चनकर्मणाम् । पुरतो वै न तिष्ठामस्तस्माद्वृत्तं समुच्यताम् ॥ ५२
किं वै कृत्वा प्रेतयोनिं लभन्ते हि नरा द्विजाः । श्रोतुमिच्छामहे सम्यक्कथं वै विकृतं वपुः ॥५३

द्विजा ऊचुः—

शीतवातातपक्लेशैः क्षुत्पिपासाविशेषकैः । अन्यैरपि च दुः[2]खैर्ये पीडिताः कूटसाक्षिणः ॥ ५४
वधबन्धँप्रमीताश्च प्रेतास्ते निरयं गताः । छिद्रान्वेषपरा ये च द्विजानां कर्मघातिनः ॥ ५५
तथैव च गुरूणां च ते प्रेताश्चापुनर्भवाः । दीयमाने द्विजाग्रे तु दातारं प्रतिषिध्यति ॥ ५६
चिरं प्रेतत्वमाश्रित्य नरकान्न निवर्तते । परगामात्मगां चैव कृत्वा पीडनवाहनम् ॥ ५७
न पालयन्ति ये मूढास्ते प्रेताः कर्मजा भुवि । हीनप्रतिज्ञकाः सत्यास्तथा भग्नव्रता नराः ॥ ५८
नलिनीदलभुक्ताश्च ते प्रेताः कर्मजा भुवि । विक्रीणन्ति सुतां शुद्धां स्त्रियं साध्वीमकण्टकाम् ५९
पितृव्यमातुलादेश्च ते प्रेताः कर्मजा भुवि । एते चान्ये च बहवः प्रेता जाताः स्वकर्मभिः ॥ ६०

प्रेता ऊचुः—

न भवन्ति कथं प्रेताः कर्मणा केन वा द्विजाः । हिताय वद नस्तूर्णं (तूर्णं वदत) सर्वलोकहितं परम्

द्विजा ऊचुः—

येन चैव कृतं स्नानं जले तीर्थस्य धीमता । नमस्कृतं परं लिङ्गं न प्रेतो जायते नरः ॥ ६२
एकादश्यामुपोष्यैव द्वादश्यां वा विशेषतः । पूजयित्वा हरिं मर्त्याः प्रेतत्वं न व्रजन्ति वै ॥ ६३
वेदाक्षरप्रसूक्तैश्च स्तोत्रमन्त्रादिभिस्तथा । देवानां पूजने रक्ता न वै प्रेता भवन्ति ते ॥ ६४
श्रुत्वा पौराणिकं वाक्यं दिव्यं च धर्मसंहितम् । पाठयित्वा पठित्वा च पिशाचत्वं न गच्छति ॥
व्रतैश्च विविधैः पूता रुद्राक्षधारणैस्तथा । जप्त्वा रुद्राक्षमालायां प्रेतत्वं नैव गच्छति ॥ ६६
धात्रीफलद्रवैः स्नात्वा नित्यं तद्भक्षणे रताः । तेन विष्णुं सुसंपूज्य न गच्छन्ति पिशाचताम् ६७

प्रेता ऊचुः—

सतां संदर्शनात्पुण्यमिति पौराणिका विदुः । तस्माद्वो दर्शनं जातं हितं नः कर्तुमर्हथ ॥ ६८
प्रेतभावाद्यथा मुक्तिः सर्वेषां नो भविष्यति । ब्रूतोपदेशकं धीरा युष्माकं शरणं गताः ॥ ६९

ईश्वर उवाच—

ततो दयालवः सर्वे तानूचुर्द्विजसत्तमाः ॥ ७०

† सर्वपुस्तकेषु प्रेता ऊचुरिति नास्ति तथाऽप्यपेक्षितम् । + अत्र सर्वपुस्तकेषु प्रेता ऊचुरिति वर्तते तदनपेक्षितम् ।

१ ग. चारेण । २ ग. °खैर्यैः पी° । ३ ग. घ. य. °न्धवता नित्यं प्रे° ।

द्विजा ऊचुः—

धात्रीणां भक्षणं शीघ्रं कुर्वतां मुक्तिहेतवे ॥ ७१

प्रेता ऊचुः—

धात्रीणां दर्शने विप्रा वयं स्थातुं न शक्नुमः । कथं तेषां फलानां च शक्ता वै भक्षणेऽधुना ७२

द्विजा ऊचुः—

अस्माकं वचनेनात्र धात्रीणां भक्षणं शिवम् । फलिष्यति परं लोकं तस्माद्गन्तुं समर्हथ ॥ ७३

ईश्वर उवाच—

अथ तेभ्यो वरं लब्ध्वा धात्रीवृक्षं पिशाचकाः । समारुह्य फलं प्राप्य भक्षितं लीलया तदा॥७४

ततो देवालयात्तूर्णं रथं [1]पीतं सुशोभनम् । आगतं तं समारुह्य सचाण्डालपिशाचकाः ॥

गतास्ते त्रिदिवं पुत्र व्रतैर्यज्ञैः सुदुर्लभम् ॥ ७५

स्कन्द उवाच—

धात्रीभक्षणमात्रेण [2]पुण्यं मत्वा(प्रेता) दिवं गताः । तद्भक्षणे कथं तूर्णं न गच्छन्ति नरादयः ७६

ईश्वर उवाच—

पूर्वं ते ज्ञानलोपाच्च न जानन्ति हिताहितम् । उच्छिष्टं श्वभिरुत्स्पृष्टं श्लेष्ममूत्रशकृत्तु वा ॥ ७७

मत्वा च मोहिताः श्रेष्ठं *प्रेताऽदन्ति सदैव हि । शकृच्छौचजलं वान्तं बलिसूकरकुक्कुटैः ॥ ७८

मृतके सूतके [3]जप्यं न त्यक्तं येन केनचित् । तस्यान्नं च जलं भक्ष्यं प्रेताऽदन्ति सदैव हि ॥ ७९

दुर्दान्ता गृहिणी यस्य शुचिसंयमवर्जिता । गुरुनिःसारिता दुष्टा सन्ति प्रेताश्च तत्र वै ॥ ८०

अपुंगवाः कुलैर्जात्या बलोत्साहविवर्जिताः । बधिराश्च कृशा दीनाः पिशाचाः कर्मजातयः ८१

क्षणं च मङ्गलं नास्ति दुःखैर्देहयुता भृशम् । तेनैव विकृताकाराः सर्वभोगविवर्जिताः ॥ ८२

नग्नका रोगसंतप्ता मृता रूक्षा मलीमसाः । तृषार्ता व्रणपूर्वाङ्गा गात्रगन्धैर्जनाप्रियाः ॥ ८३

ज्ञानलोपात्प्रशोकार्ताः क्षणशर्मविवर्जिताः । एते चान्ये च दुःखार्ताः सदैव प्रेतजातयः ॥ ८४

तेन कर्मविपाकेन जायन्ते काममीदृशाः । पितृमातृगुरूणां च देवनिन्दापराश्च ये ॥ ८५

पाखण्डाः कौलिकाः पापास्ते प्रेताः कर्मजा भुवि । गलपाशैर्जलैः शस्त्रैर्गरलैरात्मघातकाः ॥८६

इह लोके च ते प्रेताश्चाण्डालादिषु संभवाः । अन्त्यजाः पतिताश्चैव पापरोगमृताश्च ये ॥ ८७

अन्त्यजैर्घातिता युद्धे ते प्रेता निश्चिता भुवि । महापातकसंयुक्ता विवाहे च बहिष्कृताः ॥ ८८

सौर्याः साहसिका ये च ते प्रेताः कर्मजा भुवि । राजद्रोहकरा ये च पितॄणां द्रोहचिन्तकाः ८९

ध्यानाध्ययनहीनाश्च व्रतैर्देवार्चनादिभिः । अमन्त्राः स्नानहीनाश्च गुरुस्त्रीगमने रताः ॥ ९०

तथैव चान्त्यजस्त्रीषु दुर्गतासु च [4]संगताः । मृताः क्रूरोपवासेन म्लेच्छदेशस्थिता मृताः ॥ ९१

म्लेच्छभाषायुताशुद्धास्तथा म्लेच्छोपजीविनः । अनुवर्तन्ति ये म्लेच्छान्स्त्रीधनैरुपजीवकाः॥९२

स्त्रियो यैश्च न रक्ष्यन्ते ते प्रेता नात्र संशयः । क्षुधासंतप्तदेहं तु श्रान्तं विप्रं गृहागतम् ॥ ९३

गुणपुण्यातिथिं त्यक्त्वा पिशाचत्वं व्रजन्ति ते । विक्रीणन्ति च वै गाश्च म्लेच्छेषु च गवाशिषु

प्रेतलोके सुखं स्थित्वा ते च यान्त्यपुनर्भवम् । अशौचाभ्यन्तरे ये च जाताश्च पशवो मृताः ९५

---

* संधिरार्षः ।

१ क. ग. घ. च. ज. ञ. पीनं । २ ग. ज. °ण पूर्वं मत्वा दि° । घ. °ण पूर्वं गत्वा दि° । ३ घ. ज. पापं । ४ ग. घ. ज. पुल्कसाः ।

चिरं प्रेताः पिशाचाश्च मृता जाताः पुनः पुनः । जातकर्ममुखैश्चैव संस्कारैर्ये च वर्जिताः ॥ ९६
एकैके च प्रसंस्कारे प्रेतत्वं परिहीयते । स्नानसंध्यासुरार्चाभिर्वेदयज्ञव्रताक्षरैः ॥ ९७
आजन्मवर्जिताः पापास्ते प्रेताश्चापुनर्भवाः । भोजनोच्छिष्टपात्राणि यानि देहमलानि च ॥ ९८
निपातयन्ति ये तीर्थे ते प्रेता नात्र संशयः । दानमानार्चनैर्नैव यैर्विप्रा भुवि तर्पिताः ॥ ९९
पितरो गुरवश्चैव प्रेतास्ते कर्मजा भृशम् । पतिं त्यक्त्वा च या नार्यो वसन्ति चेतरैर्जनैः ॥१००
प्रेतलोके चिरं स्थित्वा जायन्ते चान्त्ययोनिषु । पतिं च वञ्चयित्वा या विषयेन्द्रियमोहिताः १०१
मिष्टं चादन्ति याः पापास्तास्तु प्रेताश्चिरं भुवि । विण्मूत्रभक्षका ये च ब्रह्मस्वभक्षणे रताः १०२
अभक्ष्यभक्षकाश्चान्ये ते प्रेताश्चापुनर्भवाः । बलाद्ये परवस्तूनि गृह्णन्ति चा(च)ददत्यपि ॥ १०३
अतिथीनवमन्यन्ते प्रेता निरयमास्थिताः । तस्मादामलकीं भुक्त्वा स्नात्वा तस्य द्रवेण तु १०४
सर्वपापाद्विनिर्मुक्तो विष्णुलोके महीयते । तस्मात्सर्वप्रयत्नेन सेवयाऽऽमलकीं शिवाम् ॥ १०५
य इदं शृणुयान्नित्यं पुण्याख्यानमिदं शुभम् । [*सर्वपापप्रपूतात्मा विष्णुलोके महीयते[1]]॥१०६
श्रावयेत्सततं लोके वैष्णवेषु विशेषतः । स याति विष्णुसायुज्यमिति पौराणिका विदुः ॥ १०७

स्कन्द उवाच—

महीरुहफलं ज्ञातं प्रपूतं द्विविधं प्रभो । इदानीं श्रोतुमिच्छामि पत्रं पुष्पं सुमोक्षदम् ॥ १०८

ईश्वर उवाच—

सर्वेभ्यः पत्रपुष्पेभ्यः सत्तमा तुलसी शिवा । सर्वकामप्रदा शुद्धा वैष्णवी विष्णुसुप्रिया ॥१०९
भुक्तिमुक्तिप्रदा मुख्या सर्वलोकपरा शुभा । यामाश्रित्य गताः स्वर्गमक्षयं मुनिसत्तमाः ॥ ११०
हितार्थं सर्वलोकानां विष्णुना रोपिता पुरा । तुलसीपत्रपुष्पं च सर्वधर्मप्रतिष्ठितम् ॥ १११
यथा विष्णोः प्रिया लक्ष्मीर्यथाऽहं प्रिय एव च । तथेयं तुलसी देवी चतुर्थो नोपपद्यते ॥११२
तुलसीपत्रमेकं तु शतहेमफलप्रदम् । नान्यैः पुष्पैस्तथा[3] पत्रैर्नान्यैर्गन्धानुलेपनैः ॥ ११३
तुष्यते दैत्यहा विष्णुस्तुलस्याश्च दलं विना । अनेन पूजितो येन हरिर्नित्यं पराशया ॥ ११४
तेन दत्तं हुतं ज्ञातं कृतं यज्ञव्रतादिकम् । जन्मजन्मानि भासित्वं सुखं भोग्यं यशःश्रियौ ॥ ११५
कुलं शीलं कलत्रं च पुत्रा दुहितरस्तथा । धनं राज्यमारोग्यं च ज्ञानं विज्ञानमेव च ॥ ११६
वेदवेदाङ्गशास्त्रं च पुराणागमसंहिताः । सर्वं करगतं मन्ये तुलस्या अर्चने हरेः ॥ ११७
यथा गङ्गा पवित्राङ्गी सुरलोके विमोक्षदा । यथा भागीरथी पुण्या तथेयं तुलसी शिवा ॥११८
किं च गङ्गाजलेनैव किं च पुष्करसेवया । तुलसीदलमिश्रेण जलेनैव प्रमोद्यते ॥ ११९
माधवः संमुखो यस्य जन्मजन्मसु धीमतः । तस्य श्रद्धा भवेच्छ्रुत्वा तुलस्या हरिमर्चितुम् ॥१२०
समञ्जरीदलैरेव तुलस्या विष्णुमर्चयेत् । तस्य पुण्यफलं स्कन्द कथितुं नैव शक्यते ॥ १२१
तत्र केशवसांनिध्यं यत्रास्ति तुलसीवनम् । तत्र ब्रह्मा च कमला सर्वदेवगणैः सह ॥ १२२
तस्मात्तां संनिकृष्टे तु सदा देवीं प्रपूजयेत् । स्तोत्रं मन्त्रादिकं यद्वा सर्वमानन्त्यमश्नुते ॥ १२३
ये च प्रेताश्च कूष्माण्डाः पिशाचा ब्रह्मराक्षसाः । भूतदैत्यादयस्तत्र पलायन्ते सदैव हि ॥ १२४
अलक्ष्मीर्नाशिनी घूर्णी या डाकिन्यादिमातरः । सर्वाः संकोचतां यान्ति दृष्ट्वा तु तुलसीदलम्

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

१ ग. घ. °ते । यः पठेत्स° । २ ग. घ. ज. प्रयतं विषमं प्र° । ३ ग. घ. °था वस्त्रैरन्यै° । ४ ग. घ. सर्वे । ५ ग. घ. ज. प्रमेध्यते ।

ब्रह्महत्यादयः पापा व्याधयः पापसंभवाः । कुमन्त्रणाकृता ये च सर्वे नश्यन्ति तत्र वै ॥ १२६
भूतले वापितं येन हर्यर्थं तुलसीवनम् । कृतं क्रतुशतं तेन विधिवत्प्रियदक्षिणम् ॥ १२७
हरिलिङ्गेषु चान्येषु शालग्रामशिलासु च । तुलसीग्रहणं कृत्वा विष्णोः सायुज्यतां व्रजेत् ॥ १२८
नन्दन्ति पुरुषास्तस्य माधवार्थे क्षितौ तु यः । तुलसीं रोपयेद्धीरः स याति माधवालयम् ॥ १२९
पूजयित्वा हरिं देवं निर्माल्यं तुलसीदलम् । धारयेद्यः स्वशीर्षे तु पापात्पूतो दिवं व्रजेत् १३०
पूजने कीर्तने ध्याने रोपणे धारणे कलौ । तुलसी दहते पापं स्वर्गं मोक्षं ददाति च ॥ १३१
उपदेशं ददेदस्याः स्वयमाचरते[2] पुनः । स याति परमं स्थानं माधवस्य निकेतनम् ॥ १३२
हरेः प्रियकरं यच्च तन्मे प्रियतरं भवेत् । सर्वेषामपि देवानां देवीनां च समन्ततः ॥ १३३
श्राद्धेषु यज्ञकार्येषु पर्णमेकं(?) षडानन । तस्मात्सर्वप्रयत्नेन तुलसीसेवनं कुरु ॥ १३४
तुलसी सेविता येन तेन सर्वं सुसेवितम् । गुरुविप्रदेवतीर्थं तस्मात्सेवय षण्मुख ॥ १३५
शिखायां तुलसीं कृत्वा यस्तु प्राणान्परित्यजेत् । दुष्कृतौघाद्विनिर्मुक्तः स्वर्गमेति निरामयम् १३६
राजसूयादिभिर्यज्ञैर्व्रतैश्च विविधैर्यमैः । या गतिः प्राप्यते धीरैस्तुलसीसेवया व्रजेत् ॥ १३७
तुलसीदलेन चैकेन पूजयित्वा हरिं नरः । वैष्णवत्वमवाप्नोति किमन्यैः शास्त्रविस्तरैः ॥ १३८
अर्चितः केशवो येन शाखामृदुलपल्लवैः । न पिबेत्स पयो मातुस्तुलस्याः कोटिसंभवैः(स्यकैः)
भावयेत्पुरुषान्मर्त्यः शतशोऽथ सहस्रशः । पूजयित्वा हरिं नित्यं कोमलैस्तुलसीदलैः ॥ १४०
प्रधानतो गुणास्तात तुलस्या गदिता मया । निखिलं पुरुकालेन गुणं वक्तुं न शक्नुमः ॥ १४१
यस्त्विदं शृणुयान्नित्यमाख्यानं पुण्यसंचयम् । पूर्वजन्मकृतात्पापान्मुच्यते जन्मबन्धनात् ॥ १४२
सकृत्पठनमात्रेण वह्निष्टोमफलं लभेत् । अजस्रपाठशीलस्य राजसूयफलं भवेत् ॥ १४३
न तस्य व्याधयः पुत्र मूर्खत्वं न कदाचन । सर्वदा जयमाप्नोति न गच्छेत्स पराजयम् ॥ १४४
लेखस्तिष्ठेद्गृहे यस्य तस्य लक्ष्मीः प्रवर्तते । न चाऽऽधयो न च प्रेता न शोको नावमानना ॥
न तिष्ठन्ति क्षणं तत्र यत्रेयं वर्तते लिपिः ॥ १४५

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे तुलसीमाहात्म्यकथनं नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०२८७

---

अथोनषष्टितमोऽध्यायः ।

---

द्विजा ऊचुः—

तुलसीपुष्पमाहात्म्यं श्रुतं त्वत्तो हरेः शुभम् । तस्याः स्तोत्रं कृतं पुण्यं श्रोतुमिच्छामहे वयम् १

व्यास उवाच—

पुरा स्कन्दपुराणे च यन्मया कीर्तितं द्विजाः । कथयामि पुराणं च पुरतो मोक्षहेतवे ॥ २
शतानन्दमुनेः शिष्याः सर्वे ते संशितव्रताः । प्रणिपत्य गुरुं विप्राः पप्रच्छुः पुण्यतो हितम् ॥ ३

शिष्या ऊचुः—

पूर्वं ब्रह्ममुखान्नाथ यः श्रुतस्तुलसीस्तवः । तं वयं श्रोतुमिच्छामस्त्वत्तो ब्रह्मविदां वर ॥ ४

---

१ ग. घ. ज. चार्पितं । २ घ. °ते तु यः । स ।

शतानन्द उवाच—

नामोच्चारे कृते तस्याः प्रीणात्यसुरदर्पहा । पापानि विलयं यान्ति पुण्यं भवति चाक्षयम् ॥ ५
सा कथं तुलसी लोकैः पूज्यते वन्द्यते न हि । दर्शनादेव यस्यास्तु दानं कोटिगवां भवेत् ॥ ६
धन्यास्ते मानवा लोके यद्गृहे विद्यते कलौ । शालग्रामशिलार्थं तु तुलसी प्रत्यहं क्षितौ ॥ ७
तुलसीं ये विचिन्वन्ति धन्यास्ते करपल्लवाः । केशवार्थं कलौ ये च रोपयन्तीह भूतले ॥ ८
किं करिष्यति संरुष्टो यमोऽपि सह किंकरैः । तुलसीदलेन देवेशः पूजितो येन दुःखहा ॥ ९
तीर्थयात्रादिगमनैः फलैः सिध्यन्ति किं नराः । स्नाने दाने तथा ध्याने प्राशने केशवार्चने १०
तुलसी दहते पापं कीर्तने रोपणे कलौ । तुलस्यमृत[1]जन्माऽसि सदा त्वं केशवप्रिये ॥ ११
केशवार्थं चिनोमि त्वां वरदा भव शोभने । त्वदङ्गसंभवैर्नित्यं पूजयामि यथा हरिम् ॥ १२
तथा कुरु पवित्राङ्गि कलौ मलविनाशिनि । मन्त्रेणानेन यः कुर्या[2]द्विचित्य तुलसीदलम् ॥ १३
पूजनं वासुदेवस्य लक्षकोटिगुणं भवेत् । प्रभावं तव देवेशि गायन्ति सुरसत्तमाः ॥ १४
मुनयः सिद्धगन्धर्वाः पाताले नागराट्स्वयम् । न ते प्रभावं जानन्ति देवताः केशवादृते ॥ १५
गुणानां परिमाणं तु कल्पकोटिशतैरपि । कृष्णानन्दात्समुद्भूता क्षीरोदम[3]थनोद्यमे ॥ १६
उत्तमाङ्गे पुरा येन तुलसी विष्णुना धृता । प्राप्यैतानि त्वया(ततो)देवि विष्णोरङ्गानि सर्वशः ॥
पवित्रता त्वया प्राप्ता तुलसीं त्वां नमाम्यहम् । त्वदङ्गसंभवैः पत्रैः पूजयामि यथा हरिम् ॥ १८
तथा कुरुष्व [4]मेऽविघ्नं यतो यामि परां गतिम् । रोपिता गोमतीतीरे स्वयं कृष्णेन पालिता १९
जगद्धिताय तुलसी गोपीनां हितहेतवे । वृन्दावने विचरता सेविता विष्णुना स्वयम् ॥ २०
गोकुलस्य विवृद्ध्यर्थं कंसस्य निधनाय च । वसिष्ठवचनात्पूर्वं रामेण शरयूतटे ॥ २१
राक्षसानां वधार्थाय रोपिता त्वं जगत्प्रिये । रोपिता तपसो वृद्ध्यै[5] तुलसीं त्वां नमाम्यहम्॥२२
वियोगे वासुदेवस्य ध्यात्वा त्वां जनकात्मजा । अशोकवनमध्ये तु प्रियेण सह संगता ॥ २३
शंकरार्थं पुरा देवि पार्वत्या त्वं हिमालये । रोपिता सेविता सिद्ध्यै तुलसीं त्वां नमाम्यहम् २४
सर्वाभिर्देवपत्नीभिः किंनरैश्चापि नन्दने । दुःस्वप्ननाशनार्थाय सेविता त्वं नमोऽस्तु ते ॥ २५
धर्मारण्ये गयायां च सेविता पितृभिः स्वयम् । सेविता तुलसी पुण्या आत्मनो हितमिच्छता२६
रोपिता रामचन्द्रेण सेविता लक्ष्मणेन च । सीतया पालिता भक्त्या तुलसी दण्डके वने ॥ २७
त्रैलोक्यव्यापिनी गङ्गा यथा शास्त्रेषु गीयते । तथैव तुलसी देवी दृश्यते सचराचरे ॥ २८
ऋष्यमूके च वसता कपिराजेन सेविता । तुलसी वालिनाशाय तारासंगमहेतवे ॥ २९
प्रणम्य तुलसीं देवीं सागरोत्क्रमणं कृतम् । कृतकार्यः प्रहृष्टश्च हनूमान्पुनरागतः ॥ ३०
तुलसीग्रहणं कृत्वा विमुक्तो याति पातकैः । अथवा मुनिशार्दूला ब्रह्महत्यां व्यपोहति ॥ ३१
तुलसीपत्रगलितं यस्तोयं शिरसा वहेत् । गङ्गास्नानमवाप्नोति दशधेनुफलप्रदम् ॥ ३२
प्रसीद देवि देवेशि प्रसीद हरिवल्लभे । क्षीरोदमथनोद्भूते तुलसि त्वां नमाम्यहम् ॥ ३३
द्वादश्यां जागरे रात्रौ यः पठेत्तुलसीस्तवम् । द्वात्रिंशदपराधांश्च क्षमते तस्य केशवः ॥ ३४
यत्पापं यौवने बाल्ये कौमारे वार्धके कृतम् । तत्सर्वं विलयं याति तुलसीस्तवपाठतः ॥ ३५
प्रीतिमायाति देवेशस्तुष्टो लक्ष्मीं प्रयच्छति । कुरुते शत्रुनाशं च सुखं विद्यां प्रयच्छति ॥ ३६

---

१ ग. घ. °तनामाऽसि । २ घ. °र्याद्गृहीत्वा तु° । ३ घ. °थने पुरा । उ° । ४ ग. घ. मे चिह्नं य° । ५ ग. ङ. °ता तपसो वृद्ध्यैं ।

तुलसीनाममात्रेण देवा यच्छन्ति वाञ्छितम् । गर्वाणामपि देवेशो मुक्तिं यच्छति देहिनाम् ॥ ३७
तुलसीस्तवसंतुष्टः सुखं वृद्धिं ददाति च । उद्धतं हेलया विद्धि पापं यमपथे स्थितम् ॥ ३८
यस्मिन्गृहे च लिखितो विद्यते तुलसीस्तवः । नाशुभं विद्यते तस्य शुभमाप्नोति निश्चितम् ॥ ३९
सर्वं च मङ्गलं तस्य नास्ति किंचिदमङ्गलम् । सुभिक्षं सर्वदा तस्य धनं धान्यं च पुष्कलम् ॥ ४०
निश्चला केशवे भक्तिर्न वियोगश्च वैष्णवैः । जीवति व्याधिनिर्मुक्तो नाधर्मे जायते मतिः ॥ ४१
द्वादश्यां जागरे रात्रौ यः पठेत्तुलसीस्तवम् । तीर्थकोटिसहस्रैस्तु यत्फलं लक्षकोटिभिः ॥
तत्फलं समवाप्नोति पठित्वा तुलसीस्तवम् ॥ ४२

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे तुलसीस्तवो नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०३२९

---

अथ षष्टितमोऽध्यायः ।

---

द्विजा ऊचुः—

मज्जनादखिलं पापं क्षयं याति सुनिश्चितम् । महापातकमन्यच्च तदादेशं[1] वदस्व नः ॥ १
पापात्पूतोऽक्षयं नाकमश्नुते दिवि शक्रवत् । सुरयोनेर्न हानिः स्यादुपदेशं वदस्व नः ॥ २
अत्र भोग्यं परं सर्वं मृते स्वर्गे सुरोत्तमः । कलिपापहतानां च स्वर्गसोपानमुच्यते ॥ ३

व्यास उवाच—

गतिं चिन्तयतां विप्रास्तूर्णं सामान्यजन्मनाम् । स्त्रीपुंसामीक्षणाद्यस्माद्(त्तसद्योग)ङ्गा पापं व्यपोहति
गङ्गेति स्मरणादेव क्षयं याति च पातकम् । कीर्तनादतिपापानि दर्शनाद्गुरुकल्मषम् ॥ ५
स्नानात्पानाच्च जाह्नव्यां पितॄणां तर्पणात्तथा । महापातकवृन्दानि क्षयं यान्ति दिने दिने ॥ ६
अग्निना दह्यते तूलं तृणं शुष्कं क्षणाद्यथा । तथा गङ्गा जलस्पर्शात्पुंसां पापं दहेत्क्षणात् ॥ ७
संप्राप्नोत्यक्षयं स्वर्गं गङ्गास्नानेन केशवम् । यशो राज्यं लभेत्पुण्यं स्वर्गान्ते च परां गतिम् ॥ ८
पितॄनुद्दिश्य गङ्गायां यस्तु पिण्डं प्रयच्छति । विधिना वाक्यपूर्वेण तस्य पुण्यफलं शृणु ॥ ९
अन्नैकेन तु साहस्रं वर्षं पूज्यः (पूज्यो वर्षसहस्रं स्यादन्नैकेन) सुरालये । तिलेन द्विगुणं विद्धि तथा मेध्यफलेन च ॥ १०
गव्येन विधिना विप्राः स्वर्गस्यान्तो न विद्यते । एवं पिण्डप्रदानेन नित्यं क्रतुशतं भवेत् ॥ ११
पितरो निरयस्था ये धन्यास्ते मर्त्यवासिनः । धनपुत्रयुतारोग्याः सुखसंमानपूजिताः ॥ १२
रसातलगता ये च ये च कीटा महीतले । स्थावरे पक्षिसंघादौ ते मर्त्या धनिनो नृपाः ॥ १३
तत्तत्पु(येषां पु)त्रैश्च पौत्रैश्च गोत्रैर्दौहित्रकैस्तथा । जामातृभागिनेयैश्च सुहृन्मित्रैः प्रियाप्रियैः ॥ १४
प्रदीयते जलं पिण्डं यथोपकरणान्वितम् । गङ्गातोयेषु तीरेषु तेषां स्वर्गोऽक्षयो भवेत् ॥ १५
पिण्डादूर्ध्वं स्थिता ये च पितरो मातृगोत्रजाः । भवन्ति सुखिनः सर्वे मर्त्याः शतसहस्रशः ॥ १६
स्वर्गे तस्य स्थिताः सत्त्वा अधःस्था मध्यवासिनः । नित्यं वाञ्छन्ति सद्गङ्गां गच्छन्ति सुरनिम्नगाम्
एको गच्छति गङ्गां यः पुनन्ति तस्य पूरुषाः[2] । एतदेव महापुण्यं तरते तारयत्यपि ॥ १८

---

[1] ग. घ. तदुद्देशं । [2] ग. घ. शात्युपपा° ।

गङ्गाकृत्स्नगुणं वक्तुं न शक्तश्चतुराननः । अतः किं(कं)चिद्वदाम्यत्र भागीरथ्या द्विजा गुणम् १९
मुनयः सिद्धगन्धर्वा ये चान्ये सुरसत्तमाः । गङ्गातीरे तपस्तप्त्वा स्वर्गलोकेऽच्युता *भवन्॥२०
दिव्येन वपुषा सर्वे कामगेन रथेन च । अद्यापि न निवर्तन्ते रत्नपूर्णालयेषु वै ॥ २१
प्रासादा यत्र सौवर्णाः सर्वलोकोर्ध्वगाः शिवाः । इष्टद्रव्यैः सुसंपूर्णाः स्त्रियो यत्र मनोरमाः २२
पारिजातसमाः पुष्पैर्वृक्षाः कल्पद्रुमोपमाः । गङ्गातीरे तपस्तप्त्वा तत्रैश्वर्यं लभन्ति हि ॥ २३
तपोभिर्बहुभिर्यज्ञैर्व्रतैर्नानाविधैस्तथा । पुरुदानैर्गतिर्या च गङ्गां संसेव्य तां लभेत् ॥ २४
जारजं पतितं दुष्टमन्त्यजं गुरुघातिनम् । सर्वद्रोहेण संयुक्तं सर्वपातकसंयुतम् ॥ २५
त्यजन्ति पितरं पुत्राः प्रियं पत्न्यः सुहृद्गणाः । अन्ये च बान्धवाः सर्वे गङ्गा तान्न परित्यजेत्॥
यथा माता स्वयं जन्म मलशौचं च कारयेत् । क्रोडीकृत्य तथा तांस्तु गङ्गा प्रक्षालयेन्मलम् २७
भवन्ति ते सुविख्याता भोग्यालंकारपूजिताः । दर्शनी क्रियते गङ्गा[*भुक्तिमुक्तिप्रदायिनी २८
तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान् । मासमेकं तु गङ्गायां समौ स्यातां न वा समौ ॥ २९
यैरवगाहिता गङ्गा] सकृद्भक्त्या नरोत्तमैः । तेषां कुलानां लक्षं तु भवात्तारयते शिवा ॥ ३०
स्मृताऽऽर्तिहर्त्री यैर्ध्याता संस्तुता साधु मोदिता । गङ्गा तारयते नृणामुभौ वंशौ भवार्णवात् ॥
संक्रान्तिषु व्यतीपाते ग्रहणे चन्द्रसूर्ययोः । पुण्ये स्नात्वा तु गङ्गायां कुलकोटिं समुद्धरेत् ॥ ३२
शुक्लपक्षे दिवा मर्त्या गङ्गायामुत्तरायणे । धन्या देहं विमुञ्चन्ति हृदिस्थे च जनार्दने ॥ ३३
अनेन विधिना यस्तु भागीरथ्या जले शुभे । प्राणांस्त्यक्त्वा व्रजेत्स्वर्गं पुनरावृत्तिवर्जितम् ३४
यो गङ्गानुगतो नित्यं सर्वदेवानुगो हि सः । सर्वदेवमयो विष्णुर्गङ्गा विष्णुमयी यतः ॥ ३५
गङ्गायां पिण्डदानेन पितॄणां वै तिलोदकैः । नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ॥३६
परदारपरद्रव्यबाधाद्रोहपरस्य च । गतिर्मनुष्यमात्रस्य गङ्गैव परमा गतिः ॥ ३७
वेदशास्त्रविहीनस्य गुरुनिन्दापरस्य च । समयाचारहीनस्य नास्ति गङ्गासमा गतिः ॥ ३८
किं यज्ञैर्बहुवित्ताढ्यैः किं तपोभिः सुदुष्करैः । स्वर्गमोक्षप्रदा गङ्गा सुखसौभाग्यपूजिता ॥ ३९
नियमैः परमैर्नित्यं किं योगैश्चित्तरोधकैः । भुक्तिमुक्तिप्रदा गङ्गा सुखमोक्षाग्रतः स्थिता ॥ ४०
अनेकजन्मसंघातपापं पुंसां विनश्यति । स्नानमात्रेण गङ्गायां सद्यः स्यात्पुण्यभाङ्नरः ॥ ४१
प्रभासे गोसहस्रस्य राहुग्रस्ते दिवाकरे । लभते यत्फलं दाने गङ्गास्नानादिने दिने ॥ ४२
दृष्ट्वा तु हरते पापं स्पृष्ट्वा तु लभते दिवम् । प्रसङ्गादपि सा गङ्गा मोक्षदा त्ववगाहिता ॥ ४३
सर्वेन्द्रियाणां चापल्यं वासनाशक्तिसंभवम् । निर्घृणत्वं ततो गङ्गादर्शनात्प्रविनश्यति ॥ ४४
परद्रव्याभिकाङ्क्षित्वं परदाराभिलाषिता । परधर्मे रुचिश्चैव दर्शनादेव नश्यति ॥ ४५
यदृच्छालाभसंतोषः स्वधर्मेषु प्रवर्तनम् । सर्वभूतसमत्वं च गङ्गायां मज्जतो भवेत् ॥ ४६
यस्तु गङ्गां समाश्रित्य सुखं तिष्ठति मानवः । जीवन्मुक्तः स एवेह सर्वेषामुत्तमोत्तमः ॥ ४७
गङ्गां संश्रित्य यस्तिष्ठेत्तस्य कार्यं न विद्यते । कृतकृत्यः स वै मुक्तो जीवन्मुक्तश्च मानवः॥ ४८
यज्ञो दानं तपो जप्यं श्राद्धं च सुरपूजनम् । गङ्गायां तु कृतं नित्यं कोटिकोटिगुणं भवेत् ॥ ४९
अन्यस्थाने कृतं पापं गङ्गातीरे विनश्यति । गङ्गातीरे कृतं पापं गङ्गास्नानेन नश्यति ॥ ५०

---

* अडभाव आर्षः । + धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

---

१ झ. ग. नरैस्तु यैः । तैं । २ ग. घ. पुण्ये । ३ ग. घ. 'व्यवाञ्छितो' ।

आत्मनो जन्मनक्षत्रे जाह्नवीसंगते दिने । नरः स्नात्वा तु गङ्गायां स्वकुलं च समुद्धरेत् ॥ ५१
आदरेण यथा स्तौति धनवन्तं सदा नरः । सकृद्गङ्गां तथा स्तुत्वा भवेत्स्वर्गस्य भाजनम् ॥ ५२
अश्रद्धयाऽपि गङ्गायां योऽसौ नामानुकीर्तनम् । करोति पुण्यवाहिन्याः स वै स्वर्गस्य भाजनम् ॥
क्षितौ भावयतो मर्त्यान्नागांस्तारयतेऽप्यधः । दिवि तारयते देवान्गङ्गा त्रिपथगा स्मृता ॥ ५४
ज्ञानतोऽज्ञानतो वाऽपि कामतोऽकामतोऽपि वा । गङ्गायां च मृतो मर्त्यः स्वर्गं मोक्षं च विन्दति
या गतिर्योगयुक्तस्य सत्त्वस्थस्य मनीषिणः । सा गतिस्त्यजतः प्राणान्गङ्गायां तु शरीरिणः ५६
चान्द्रायणसहस्राणि यश्चरेत्कायशोधनम् । पानं कुर्याद्यथेच्छं च गङ्गायाः स विशिष्यते ॥ ५७
तावत्प्रभावस्तीर्थानां देवानां तु विशेषतः । तावत्प्रभावो वेदानां यावन्नाऽऽप्नोति जाह्नवीम् ५८
तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् । दिवि भुव्यन्तरिक्षे च तानि ते सन्ति जाह्नवि
विष्णुपादार्घसंपूते गङ्गे त्रिपथगामिनि । धर्मद्रवीति विख्याते पापं मे हर जाह्नवि ॥ ६०
विष्णुपादप्रसूताऽसि वैष्णवी विष्णुपूजिता । त्राहि मामेनसस्तस्मादाजन्ममरणान्तिकात् ॥ ६१
श्रद्धया धर्मसंपूर्णे श्रीमता रजसा च ते । अमृतेन महादेवि भागीरथि पुनीहि माम् ॥ ६२
त्रिभिः श्लोकवरैरेभिर्यः स्नायाज्जाह्नवीजले । जन्मकोटिकृतात्पापान्मुच्यते नात्र संशयः ॥ ६३
मूलमन्त्रं प्रवक्ष्यामि जाह्नव्या हरिभाषितम् । सकृज्जपान्नरः पूतो विष्णुदेहे प्रतिष्ठति ॥ ६४
मन्त्रश्चायम्—ॐ नमो गङ्गायै विश्वरूपिण्यै नारायण्यै नमो नमः ॥ ६५
जाह्नवीतीरसंभूतां मृदं मूर्ध्ना बिभर्ति यः । सर्वपापविनिर्मुक्तो गङ्गास्नानं विना नरः ॥ ६६
गङ्गाजलोर्मिनिर्धूतपवनं स्पृशते यदि । स पूतः कल्मषाद्घोरात्स्वर्गं चाक्षयमश्नुते ॥ ६७
यावदस्थि मनुष्यस्य गङ्गातोये प्रतिष्ठति । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ६८
पित्रोर्बन्धुजनानां च अनाथानां गुरोरपि । गङ्गायामस्थिपातेन नरः स्वर्गान्न हीयते ॥ ६९
गङ्गां प्रति वहेद्यस्तु पितॄणामस्थिखण्डकम् । पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः ॥ ७०
धन्या जनपदा ये च पशवः पक्षिकीटकाः । स्थावरा जङ्गमाश्चान्ये गङ्गातीरसमाश्रिताः ॥ ७१
क्रोशान्तरमृता ये च जाह्नव्या द्विजसत्तमाः । मानवा देवताः सन्ति इतरे मानवा भुवि ॥ ७२
गङ्गास्नानाय संगच्छन्पथि संम्रियते यदि । स च स्वर्गमवाप्नोति गङ्गास्नानफलं लभेत् ॥ ७३
गङ्गाजले प्रयास्यन्ति ते जीवाः पथि ये मृताः । कीटाः पतङ्गाः शलभाः पादाघातेन गच्छताम् ॥
ये वदन्ति समुद्देशं गङ्गां प्रति जनं द्विजाः । ते च यान्ति परं पुण्यं गङ्गास्नानफलं नराः ॥ ७५
जाह्नवीं ये च निन्दन्ति पाखण्डैर्हतचेतसः । ते यान्ति नरकं घोरं पुनरावृत्तिदुर्लभम् ॥ ७६
दुःस्थो वाऽपि स्मरन्नित्यं गङ्गेति परिकीर्तयन् । पठन्स्वर्गमवाप्नोति किमन्यैर्बहुभाषितैः ॥ ७७
गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ७८
अन्धाश्च पङ्गवस्ते च वृथाभवसमुद्भवाः । गर्भपाताद्विपद्यन्ते ये गङ्गां न गता नराः ॥ ७९
न कीर्तयन्ति ये गङ्गां जाड्यतुल्या नराधमाः । परान्नोपदिशन्ति स्म वातुलाश्चित्तविभ्रमाः ॥८०
न पठन्ति जना ये च तेषां शास्त्रं विनिष्फलम् । गङ्गापुण्यं फलं विप्राः कुधियः पतिताधमाः ॥
पाठयन्ति जना ये च श्रद्धया निपठन्ति च । गच्छन्ति ते दिवं धीरास्तारयन्ति पितॄन्गुरून् ८२
पाथेयकं गच्छतां यो वसु शक्त्या प्रयच्छति । भागीरथ्या लभेत्स्नानं यः परान्नेन गच्छति ॥
कर्तुः स्नानफलं विद्याद्द्विगुणं प्रेरकस्य च । इच्छयाऽनिच्छया वाऽपि प्रेरणेनान्यसेवया ॥
जाह्नवीं यो गतः पुण्यां स गच्छेन्निर्जरालयम् ॥ ८४

द्विजा ऊचुः—

गङ्गायाः कीर्तनं व्यास श्रुतं त्वत्तो विनिर्मलम् । गङ्गा कस्मात्किमाकारा कुतः सा ह्यतिपावनी

व्यास उवाच—

शृणुध्वं कथयाम्यद्य कथां पुण्यां पुरातनीम् । यां श्रुत्वा मोक्षमार्गं च प्राप्नोति नरसत्तमः ॥ ८६
ब्रह्मलोकं पुरा गत्वा नारदो मुनिपुंगवः । नत्वा विधिं च पप्रच्छ पूतं त्रैलोक्यपावनम् ॥ ८७
किं सृष्टं च त्वया तात संमतं शंभुकृष्णयोः । सर्वलोकहितार्थाय भुवः स्थाने समीहितम् ॥ ८८
देवी वा देवता का वा सर्वासामुत्तमोत्तमा । यां समासाद्य देवाश्च दैत्यमानुषपन्नगाः ॥ ८९
अण्डजाः स्वेदजा वृक्षा ये चान्ये उद्भिजादयः । सेर्वें यान्ति शिवं ब्रह्मन्समग्रं विभवं ध्रुवम् ९०

ब्रह्मोवाच—

सृजता च मया प्रोक्ता पुरा प्रकृतिरूपिणी । आद्या भवस्व लोकानां त्वत्तो भवं सृजाम्यहम् ॥
एतच्छ्रुत्वा परा सा च सप्तधा चाभवत्तदा । गायत्री वाक्च स्वर्लक्ष्मीः सर्वसस्यवसुप्रदा ॥ ९२
ज्ञानविद्या उमादेवी शक्तिवीजा तपस्विनी[3] । वर्णिका धर्मद्रवा च एताः सप्त प्रकीर्तिताः ॥ ९३
गायत्रीप्रभवा वेदा वेदात्सर्वं स्थितं जगत् । स्वस्तिस्वाहास्वधादीक्षा एता गायत्रिजाः स्मृताः
उच्चारयेत्सदा यज्ञे गायत्रीं मातृकादिभिः । क्रतौ देवाः सुधां प्राप्य भवेयुरजरामराः ॥ ९५
ततः सुधारसं देवा मुमुचुर्धरणीतले । अथ सस्यवती पृथ्वी ओषधीनां परा शुभा ॥ ९६
फलमूलै रसैर्भक्ष्यैर्जनाः सुस्थतरा *भवन् । भारती सर्वलोकानां चाऽऽनने मानसे स्थिता॥ ९७
तथैव सर्वशास्त्रेषु धर्मोद्देशं करोति सा । विज्ञानं कलहं शोकं मोहामोहं शिवाशिवम् ॥ ९८
तया विना जगत्सर्वं यात्यतत्त्वमिति स्मृतम् । कमलासंभवश्चैवं वस्त्रभूषणसंचयः ॥ ९९
सुखं राज्यं त्रिलोके तु ततः सा हरिवल्लभा । उमया हेतुना शंभोर्ज्ञानं लोकेषु संततम् ॥ १००
ज्ञानमाता च सा ज्ञेया शंभोरर्धाङ्गवासिनी । वर्णिका शक्तिरत्युग्रा सर्वलोकप्रमोहिनी ॥ १०१
सर्वलोकेषु लोकानां स्थितिसंहारकारिणी । देव्या च निहतौ पूर्वमसुरौ मधुकैटभौ ॥ १०२
रुरुश्चापि हतो घोरः सर्वलोकपरिश्रुतः । सर्वदेवैकजेतारं सा जघ्ने महिषासुरम् ॥ १०३
[+निहतो लीलया देव्या युद्धेषु सुविशारदः । ततश्चण्डश्च मुण्डश्च रक्तवीजो महासुरः ॥ १०४
निशुम्भश्चाथ शुम्भश्च तयोर्ये च पुरोगमाः] । निहता लीलया देव्या येऽसुरा दैत्यपुंगवाः १०५
एवं बलानि दैत्यानां निहत्य सर्वदा तया । पालितं मोहितं चैव कृत्स्नमेतज्जगत्त्रयम् ॥ १०६
धर्मद्रवा स्वरूपा[11] च सर्वधर्मप्रतिष्ठिता[12] । महतीं तां समालोक्य मया कमण्डलौ धृता ॥ १०७
तस्याः प्रसादतोयेन विततं देवसंमतम् । अस्माभिश्च त्रिभिर्युक्ता ब्रह्मविष्णुमहेश्वरैः ॥ १०८
धर्मद्रवा परिख्याता जलरूपा कमण्डलौ । बलियज्ञेषु संभूता विष्णुना प्रभविष्णुना ॥ १०९
छद्मना छलितः पूर्वं बलिर्बलवतां वरः । ततः पदद्वयेनैव व्याप्तं सर्वं महीतलम् ॥ ११०

* अडभाव आर्षः । + धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

१ ग. घ. ज. °तः शाश्वतपा° । २ ग. घ. सर्वेषां च शिवं ब्रह्मन्समाश्रित्य भवेद्ध्रुवम् । ३ ग. घ. °नी । स्वर्णादी वर्म-वीजा च । ४ ग. घ. °धा यज्ञे एता मातृविधाः स्मृ° । ५ ग. घ. °ज्ञे यथा सा तन्त्रका° । ६ ग. घ. ओषधीभिः । ७ ग. घ. चण्डिका । ८ ग. घ. ज. सर्वमङ्गला । पा° । ९ क. ञ. मोदितं । १० ग. घ. वृद्धं । ११ ग. घ. °तो यज्ञे वि° । १२ ञ. °तं वेदसं° ।

[+नभः पादश्च ब्रह्माण्डं भित्त्वा मम पुरः स्थितः । मया संपूजितः पादः कमण्डलुजलेन वै १११
प्रक्षाल्यैवार्चितात्पादाद्धेमकूटेऽपतज्जलम् ] । तत्कूटाच्छंकरं प्राप्य भ्रमते सा जटास्थिता ॥ ११२
ततो भगीरथेनैव समाराध्य शिवं भुवि । आनीयाऽऽराधितो नित्यं तपसा गजपुंगवः ॥ ११३
तेन भित्त्वा नगं वीर्यात्त्रिभिर्दन्तैः कृतं विलम् । ततस्त्रिविलगा यस्मात्त्रिस्रोता लोकविश्रुता ११४
हरब्रह्महरेर्योगात्पूता लोकस्य पावनी । समासाद्य च तां देवीं सर्वधर्मफलं लभेत् ॥ ११५
पाठयज्ञपरैः सर्वैर्मन्त्रहोमसुरार्चनैः । सा गतिर्न भवेज्जन्तोर्गङ्गासंसेवया च या ॥ ११६
धर्मस्य साधनोपायो ह्यतः परो न विद्यते । त्रैलोक्यपुण्यसंयोगात्तस्मात्तां व्रज नारद ॥ ११७
गङ्गातोयास्थिसंयोगात्सुतास्ते सगरस्य च । स्वर्गताः पितृभिश्चैव स्वपूर्वापरजैः सह ॥ ११८

व्यास उवाच—

ततो ब्रह्ममुखाच्छ्रुत्वा नारदो मुनिपुंगवः । गङ्गाद्वारे तपः कृत्वा ब्रह्मणः सदृशोऽभवत् ॥ ११९
सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा । गङ्गाद्वारे प्रयागे च गङ्गासागरसंगमे ॥ १२०
त्रिरात्रेणैकरात्रेण नरो याति परां गतिम् । तस्मात्सर्वप्रयत्नेन सद्यो मुक्तिं विचिन्तयेत् ॥ १२१
ततो गच्छत धर्मज्ञाः शिवां भागीरथीमिह । अचिरेणैव कालेन स्वर्गं मोक्षं प्रगच्छथ ॥ १२२
विशेषात्कलिकाले च गङ्गा मोक्षप्रदा नृणाम् । कृच्छ्राच्च क्षीणसत्त्वानामनन्तः पुण्यसंभवः १२३

पुलस्त्य उवाच—

ततस्ते ब्राह्मणा हृष्टाः श्रुत्वा व्यासाद्गिरं शुभाम् । गङ्गायां तु तपस्तप्त्वा मोक्षमार्गं ययुस्तदा १२४
य इदं शृणुयान्मर्त्यः पुण्याख्यानमनुत्तमम् । सर्वं तरति दुःखौघं गङ्गास्नानफलं लभेत् ॥ १२५
सकृदुच्चरिते चैव सर्वयज्ञफलं भवेत् । दानं जप्यं तथा ध्यानं स्तोत्रमन्त्रसुरार्चनम् ॥ १२६
तत्रैव कारयेद्यस्तु स चानन्तफलं लभेत् । तस्मात्तत्रैव कर्तव्यं जपहोमादिकं नरैः ॥
अनन्तं च फलं प्रोक्तं जन्मजन्मसु लभ्यते ॥ १२७

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे गङ्गामाहात्म्यकथनं नाम षष्टितमोऽध्यायः ॥ ६० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०४५६

---

अथैकषष्टितमोऽध्यायः ।

---

पुलस्त्य उवाच—

*एतस्मिन्नन्तरे पूर्वं व्यासशिष्यो महामुनिः । नमस्कृत्य गुरुं [३]भीष्म संजयः परिपृच्छति ॥ १

संजय उवाच—

देवानां पूजनोपायं क्रमं ब्रूहि सुनिश्चितम् । अग्रे पूज्यतमः कोऽसौ को मध्ये नित्यपूजने ॥ २
अन्ते च पूजा कस्यैव कस्य को वा प्रभावकः । किं वा कं च फलं ब्रह्मन्पूजयित्वा लभेन्नरः ३

व्यास उवाच—

गणेशं पूजयेदग्रे अविघ्नार्थं परेह च । विनायकत्वमाप्नोति यथा गौरीसुतो हि सः ॥ ४

---

+ धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः । * सुतपा जैमिनिः पूर्वं व्यासशिष्यो महामुनिः । नमस्कृत्य गुरुं शिष्यः पर्यपृच्छन्महामतिरिति क्वचित्पाठः ।

---

१ घ. ज. लोकेषु । २ घ. स्नानं । ३ ग. घ. ज. शिष्यः ।

पार्वत्यजनयत्पूर्वं सुतौ महेश्वरादिमौ । सर्वलोकधरौ शूरौ देवौ स्कन्दगणाधिपौ ॥ ६
तौ च दृष्ट्वा [*च त्रिदशाः श्रद्धया परयाऽन्विताः । सुधयोत्पादितं दिव्यं तस्यै दत्तं(दुः) प्रमोदकम्
दृष्ट्वा तु मोदकं ताभ्यां जनन्यामर्थितं तदा । ततस्तु विस्मिता देवी सुतावेवाप्यभाषत] ॥ ७

पार्वत्युवाच—

इदं तु मोदकं पुत्रौ देवैर्दत्तं मुदाऽन्वितैः । महाबुद्धीति विख्यातं सुधया परिनिर्मितम् ॥ ८
गुणं चास्य प्रवक्ष्यामि शृणुतं वा समाहितौ । अस्यैवाऽऽघ्राणमात्रेण अमरत्वं भवेद्ध्रुवम् ॥ ९
सर्वशास्त्रार्थतत्त्वज्ञः सर्वशस्त्रास्त्रकोविदः । निपुणः सर्वतन्त्रेषु लेखकश्चित्रकृत्सुधीः ॥ १०
ज्ञानविज्ञानतत्त्वज्ञः सर्वज्ञो नात्र संशयः । पुत्रौ धर्मादधिकतां प्राप्य सिद्धिशतं व्रजेत् ॥
यस्तस्य वै प्रदास्यामि पितुस्ते संमतं त्विदम् ॥ ११

व्यास उवाच—

श्रुत्वा मातृमुखादेवं वचः परमकोविदः । स्कन्दस्तीर्थं ययौ सद्यः सर्वं त्रिभुवनास्थितम् ॥ १२
बर्हिणं स्वं समारुह्य त्वभिषेकः कृतः क्षणात् । पितरौ प्रदक्षिणं कृत्वा लम्बोदरधरः सुधीः १३
लम्बोदरं(ततश्चासौ) मुदा युक्तः पितुरग्राग्रतः स्थितः । पुरतश्च तथा स्कन्दो देहि मां हि ब्रुवन्स्थितः
ततः सुतौ समीक्ष्याथ पार्वती विस्मिताऽब्रवीत् ॥ १४

पार्वत्युवाच—

सर्वतीर्थाभिषेकैस्तु सर्वदेवनतैस्तथा । सर्वयज्ञव्रतैर्मन्त्रैर्योगैरन्यैर्यमैस्तथा ॥ १५
पित्रोरर्चाकृतस्यैव कलां नार्हति षोडशीम् । तस्मात्सुतशतैरेषोऽधिकः शतगणैरपि ॥ १६
अतो ददामि हेरम्बे मोदकं देवनिर्मितम् । अस्यैव का(एतस्मात्का)रणादस्य अग्रे पूजा मखेषु च
वेदशास्त्रस्तवादौ च नित्यं पूजाविधासु च ॥ १८

व्यास उवाच—

पार्वत्या सह भूतेशो ददौ तस्मै वरं महत् ॥ १९

महादेव उवाच—

अस्यैव पूजनादग्रे देवास्तुष्टा भवन्तु च । सर्वासामपि देवीनां पितॄणां च समन्ततः ॥
तोषो भवतु नित्यं च पूजितेऽग्रे गणेश्वरे ॥ २०

व्यास उवाच—

ततः सर्वेषु यज्ञेषु पूजयेद्गणपं द्विजः । कोटिकोटिगुणं तेषु देवदेववचो यथा ॥ २१
दत्त्वा सर्वगुणं पुण्यं देवदेव्या तथा मुदा । कृतं गणाधिपत्यं च सर्वदेवाग्रतस्तदा ॥ २२
तस्मात्प्राज्येषु यज्ञेषु स्तोत्रेषु नित्यपूजने । गणेशं पूजयित्वा तु सर्वसिद्धिं लभेन्नरः ॥ २३
एवं ज्ञात्वा तु देवैस्तु दयितप्राप्तिकाम्यया । पूजितश्चाथ सर्वैस्तु स्वर्गमोक्षार्थतो ध्रुवम् ॥ २४
नक्ताहारश्चतुर्थ्यां तु पूजयित्वा गणाधिपम् । लिङ्गे वा प्रतिमाचित्रे देवः पूज्यो भवेद्यदि ॥ २५
गणाधिप नमस्तुभ्यं सर्वविघ्नप्रशान्तिद । उमानन्दप्रद प्राज्ञ त्राहि मां भवसागरात् ॥ २६

---

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

---

१ ञ. °दृष्ट्वा नगसुता सिद्ध्यर्थं पर्यभाषत । २ क. °र्वमन्त्रार्थको° । झ. °र्वशास्त्रार्थको° । ३ ग. घ. ज. सर्वमन्त्रैश्च । ४ ग. घ. ङ. च । ददत्सुमेण साद्धर्ण नि° । ५ झ. ञ. °ण्यं पुण्यं दे° । ६ झ. सर्वे ।

हरानन्दकराध्यान ज्ञानविज्ञानद प्रभो । विघ्नराज नमस्तुभ्यं सर्वदैत्यैकसूदन ॥ २७
स(श)र्वप्रीतिप्र(द) श्रीद सर्वयज्ञैकरक्षक । सर्वाभीष्टप्रद प्रीत्या नमामि त्वां गणाधिप ॥ २८
एभिर्मन्त्रैर्गणाध्यक्षं पूजयेद्यो नरो मुदा । सर्वपापाद्विनिर्मुक्तः सुरलोके महीयते ॥ २९
स्तोत्रं तस्य प्रवक्ष्यामि नामद्वादशकं शुभम् । ॐ नमो गणपतये मन्त्र एष उदाहृतः ॥ ३०
गणपतिर्विघ्नराजो लम्बतुण्डो गजाननः । द्वैमातुरश्च हेरम्ब एकदन्तो गणाधिपः ॥ ३१
विनायकश्चारुकर्णः पशुपालो भवात्मजः । द्वादशैतानि नामानि प्रातरुत्थाय यः पठेत् ॥ ३२
विश्वं तस्य भवेद्वश्यं न च विघ्नं भवेत्कचित् । महाप्रेताः शमं यान्ति पीड्यते व्याधिभिर्न च ॥
सर्वपापाद्विनिर्मुक्तो ह्यक्षयं स्वर्गमश्नुते ॥ ३३

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे गणपतिस्तोत्रनिरूपणं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०४८९

---

अथ द्विषष्टितमोऽध्यायः ।

---

व्यास उवाच—

पुनरन्यत्प्रवक्ष्यामि स्तोत्रं गणाधिपस्य च । सर्वसिद्धिकरं पूतं सर्वाभीष्टफलप्रदम् ॥ १
एकदन्तं महाकायं तप्तकाञ्चनसंनिभम् । लम्बोदरं विशालाक्षं वन्देऽहं गणनायकम् ॥ २
मुञ्जकृष्णाजिनधरं नागयज्ञोपवीतिनम् । बालेन्दुकलिकामौलिं वन्देऽहं गणनायकम् ॥ ३
सर्वविघ्नहरं देवं सर्वविघ्नविवर्जितम् । मूषकोत्तममारुह्य देवासुरमहाहवे ॥ ४
योद्धुकामं महाबाहुं वन्देऽहं गणनायकम् । अम्बिकाहृदयानन्दं मातृकापरिवेष्टितम् ॥ ५
भक्तप्रियं मदोन्मत्तं वन्देऽहं गणनायकम् । चित्ररत्नविचित्राङ्गं चित्रमाल्यविभूषणम् ॥ ६
कामरूपधरं देवं वन्देऽहं गणनायकम् । गजवक्त्रं सुरश्रेष्ठं चारुकर्णविभूषितम् ॥ ७
पाशाङ्कुशधरं देवं वन्देऽहं गणनायकम् । यक्षकिंनरगन्धर्वैः सिद्धविद्याधरैः सदा ॥ ८
स्तूयमानं महादेहं वन्देऽहं गणनायकम् । गणाष्टकमिदं पुण्यं भक्तितो यः पठेन्नरः ॥ ९
सर्वसिद्धिमवाप्नोति रुद्रलोके महीयते । न निःस्वतां तथाऽभ्येति सप्तजन्मसु मानवः ॥ १०
य इदं[4] शृणुयान्नित्यं महान्राजा भवेन्नरः । वश्यं करोति त्रैलोक्यं पठनाच्छ्रवणादपि ॥
स्तोत्रं परं महापुण्यं गणपस्य महात्मनः ॥ ११

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे गणपतिस्तोत्रनिरूपणं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०५००

---

अथ त्रिषष्टितमोऽध्यायः ।

---

व्यास उवाच—

नान्दीमुखेषु सर्वेषु पूजयेद्यो गणाधिपम् । तस्य सर्वो भवेद्वश्यः पुण्यं भवति चाक्षयम् ॥ १

---

१ ङ. ञ. °भ्यं प्रसन्नो भव सर्वदा । कृतोपवासो गणपं पू° । २ ङ. ञ. °म् । मञ्जुक° । ३ ञ. भक्तिप्रियं । ४ क. ग. घ. ज. ञ. °दं पठते नित्यं ।

गणानां त्वेति मन्त्रेण सर्वयज्ञघटेषु च । सर्वसिद्धिमवाप्नोति स्वर्गं मोक्षं लभेन्नरः ॥ २
मृन्मये प्रतिमायां च चित्रे वाऽथ दृषन्मये । द्वारदारुणि पात्रे च हेरम्बं लेखयेद्बुधः ॥ ३
अन्यस्मिन्नपि देशे तु सातत्याद्दृष्टिगोचरे । स्थापयित्वा तु हेरम्बं शक्त्या यः पूजयेद्बुधः ॥ ४
तस्य कार्याणि सिध्यन्ति दयितानि समन्ततः । न विघ्नं जायते किंचित्त्रैलोक्यं वशमानयेत् ॥५
विद्यार्थी लभते विद्यां वेदशास्त्रसमुद्भवाम् । अन्यां च शिल्पिविद्यां च विजयां मोक्षदायिनीम्॥६
धनार्थी विपुलं वित्तं कन्यां साध्वीं मनोरमाम् । ऐश्वर्यं धर्मसाध्यं च तनयं कुलमोक्षदम् ॥ ७
न रोगैः पीड्यते कश्चिन्न ग्रहैः प्रेतयोनिभिः । शृङ्गिभिर्नापि रक्षोभिर्विद्युद्भिर्वज्रतस्करैः ॥ ८
न राजा कुप्यते गेहे न च मारी प्रवर्तते । न दौर्भिक्ष्यं न दौर्बल्यं पूजयित्वा विनायकम् ॥ ९
अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ १०

मन्त्रश्चायम्—ॐ नमो गणपतये ॥

नारायणप्रियैः पुष्पैरन्यैश्चापि सुगन्धिभिः । मोदकैः फलमूलैश्च द्रव्यैः कालोद्भवैस्तथा ॥ ११
दधिदुग्धैः प्रियैर्वाद्यैर्दीपधूपैः सुगन्धिभिः । पूजयेद्गणपं यस्तु सर्वसिद्धिमवाप्नुयात् ॥ १२
विशेषात्तस्य लिङ्गे तु यो ददाति वसु प्रियम् । पूजोपकरणं वस्त्रं सर्वं लक्षगुणं भवेत् ॥ १३
देशे च भारते वर्षे वनितापूर्वसंनिधौ । लौहित्यदक्षिणे तीरे लिङ्गरूपो विनायकः ॥ १४
हरगौरीसमादेशाद्देवानां संमतेन च । स्थितो लोकप्रशान्त्यर्थं सर्वविघ्नविनाशनात् ॥ १५
पूजयित्वा तु तं देवं शक्तितो द्रव्यसंचयैः । विनायकत्वमाप्नोति वेदशास्त्रार्थपारगः ॥ १६
सकृत्प्रदक्षिणं कृत्वा दृष्ट्वा स्पृष्ट्वा तु मानवः । अक्षयं लभते स्वर्गं सदा देवैः प्रपूज्यते ॥ १७
संसर्गिणां च म्लेच्छानां गत्यर्थं सुतपस्विनाम् । पुत्रार्थं सर्वलोकानां तत्र शंभुर्विनायकः ॥ १८
कृत्वाऽभिषेकं लौहित्ये स्पृशेद्यस्तु गणाधिपम् । सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ॥ १९
न वैधव्यं न कार्पण्यं न शोकं न च मत्सरम् । विनायकं समासाद्य जन्मजन्मनि संलभेत् ॥२०
पुनः सिद्धिः पुनर्भोग्यं पुनः कीर्तिः पुनर्बलम् । पूजयित्वा तु गणपं नरस्य नात्र संशयः॥ २१
अस्य पूजामकृत्वा च सर्वाभीष्टं विनश्यति । तत्र देवाश्च सुप्रीता ब्रह्मविष्णुहरादयः ॥ २२
मोहाद्भ्रान्त्या च न कृतं हरिणाऽस्यार्चनं पुनः । ततो विघ्नं समुत्पन्नं देवराजस्य धीमतः ॥ २३
मघोनो गणपस्याथ पूजाविरहितस्य च । अथासुरैर्महावीर्यैर्हिरण्याक्षमुखै रणे ॥ २४
मघवा तु जितो वीर्याद्धिरण्याक्षेण वै तदा । ततः सुराश्च निर्वीर्या यावद्वर्षशतं पुरा ॥ २५
देवासुरमहायुद्धे सुराणां च पराजयः । ततो देवाधिदेवे तु शिवे देवैर्निवेदितम् ॥ २६

देवा ऊचुः—

भगवन्नसुरैर्नो हि जितं राज्यं गता मखाः । २७

व्यास उवाच—

एतस्मिन्नन्तरे शंभुर्देवान्वचनमब्रवीत् ॥ २८

शंभुरुवाच—

हेरम्बाय वरो दत्त उमया प्रीतया मुदा । पूजया वः परा सिद्धिर्देवादीनां भवत्विति ॥ २९
अवजानाति यो मोहात्पुरुषस्तु महोत्सवे । न भवेत्तस्य सिद्धिश्च रणे वाऽपि पराजयः ॥ ३०

---

१ ग. घ. ज. °ङ्गिभूताभिर° । च. °ङ्गिभिर्नागर° । २ झ. °प्रपातकैः । न । ३ घ. अभिमता° । झ. अविघ्नता° । ४ म. °मो भगवते ग° । ५ घ. बहु । ६ ग. घ. ज. गुह्यार्थे । ७ ग. घ. पूतार्थे । ८ क. ख. ग. घ. ङ. अ. पुरः ।

महामखे तु युष्माभिः पूजा गणपतेः *कृता । हेलया न कृता मोहात्तस्मात्प्राप्तः पराजयः ॥ ३१
शीघ्रं गच्छत वै यूयं गणपस्य महात्मनः । पूजां कुरुत धर्मज्ञा जयस्तूर्णं भविष्यति ॥ ३२

व्यास उवाच—

ततो हरमुखाच्छ्रुत्वा वचः क्षेमपरं हितम् । प्रहृष्टा विबुधाः सर्वे गणपस्य पुरः स्थिताः ॥ ३३

देवा ऊचुः—

गणाधिप नमस्तुभ्यं सर्वदेवैकपालक । भुक्तिमुक्तिप्रद प्रीत्या हेरम्ब त्वां नताः स्म ह ॥ ३४
जयदं सर्वयुद्धेषु सिद्धिदं सर्वकर्मसु । महामायं महाकायं हेरम्बं त्वां नताः स्म ह ॥ ३५
एकदन्तं महाप्राज्ञं वक्रतुण्डं[1] विनायकम्[2] । [+मूषिकावाहनं देवं विघ्ननाशं नता वयम् ॥ ३६

व्यास उवाच—

एताः श्रुत्वा गिरस्तेषां त्रिदशानां महात्मनाम् । विस्मितो गणपो देवानिदं वचनमब्रवीत् ॥ ३७

गणेश उवाच—

कुतो मे तरसा स्तोत्रं पूजां कुरुथ सांप्रतम् । करिष्यामि हितार्थं वै तूर्णं कामं समुच्यताम् ॥ ३८

व्यास उवाच—

एतस्मिन्नन्तरे सूरिः सुराणां याजकः सुधीः । उवाच वचनं स्मेरं बृहस्पतिर्विनायकम् ॥ ३९

बृहस्पतिरुवाच]—

दोषं महर्षिदेवानामिन्द्रस्य च विनायक । यत्ते पुराऽर्चनं यज्ञे न कृतं तत्क्षमस्व नः ॥ ४०

व्यास उवाच—

सुराचार्यगिरः[3] श्रुत्वा गणपो वाक्यमब्रवीत् ॥ ४१

गणेश उवाच—

युष्माभिर्व्रियतां देवा वरो मत्तो हि वाञ्छितः ॥ ४२

व्यास उवाच—

ततः शक्रादयः सर्वे बृहस्पतिपुरोगमाः । ऊचुर्गणपतिं देवा जयोऽस्माकं भवत्विति ॥
देवानां वचनं श्रुत्वा गणेशो वाक्यमब्रवीत् ॥ ४३

गणेश उवाच—

बाढमेव सुरश्रेष्ठा जयो वो भवतु द्रुतम् ॥ ४४

व्यास उवाच—

ततो देवगणाः सर्वे हर्षनिर्भरमानसाः । गणेशं पूजयामासुर्गन्धैः[4]सारैस्तु मण्डनैः ॥ ४५
दिव्यधूपैः सुवस्त्रैश्च कुसुमैर्नन्दनोद्भवैः । पारिजातादिभिः पुष्पैरन्यैर्देवमनोहरैः ॥
पूजितो गणपो देवैरुवाच सुरसत्तमान् ॥ ४६

गणेश उवाच—

गच्छध्वं[5] विबुधा देवं विष्णुमद्भुतसाहसम् । स विधास्यति वः कामं वाञ्छितं च ततः सुराः ४७

---

* विहितेति यावत् । + धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

---

१ क. ग. घ. ज. ञ. लम्बतुण्डं । २ झ. ञ °म् । देवं महार्षिं° । ३ झ. ञ. सुराणां च गि° । ४ ग. °न्धपुष्पैस्तु । ५ ञ. °ध्वं विजयार्थाय जयं परमकोविदाः । सुरासुरविमर्दे च लप्स्यन्ते नात्र संशयः । जयशब्दं समुद्घुष्य पूजयित्वा गणाधिपम् । स्त्रं ।

व्यास उवाच—

स्वं स्वं रथं समारुह्य गतास्ते हरिमव्ययम् । पीतांबरं नमस्कृत्य ऊचुर्देवगणा मुदा ॥ ४८

देवा ऊचुः—

हरात्मजं तु संप्राप्य पूजयित्वा गणाधिपम् । आगतास्त्वत्सकाशं वै महात्मन्नद्य केशव ॥ ४९

व्यास उवाच—

एतच्छ्रुत्वा तु देवानां वचनं हरिरव्ययः । यथातथ्यमुवाचेदं हनिष्ये दैत्यपुंगवान् ॥ ५०

श्रुत्वा वागमृतं देवा नारायणमुखाच्युतम् । हृष्टाश्च सुमुदाऽऽविष्टा द्रव्यैरिष्टैः समर्चयन् ॥
पुनर्विष्णुरुवाचेदं देवानिन्द्रपुरोगमान् ॥ ५१

विष्णुरुवाच—

स्वं स्वं बलं समाहृत्य सज्जी भवत विज्वराः । हनिष्ये तान्दुराचारान्बलं चैव समन्ततः ॥
अस्त्रवृन्दं सुसंगृह्य यूयं तिष्ठत निर्भयाः ॥ ५२

व्यास उवाच—

माधवस्य वचः श्रुत्वा प्रगताः सुरपुंगवाः । विमानानि समारुह्य सर्वे दिव्यास्त्रधारिणः ॥ ५३
देवानां हर्षवाक्यानि दैत्यचाराः श्रुतानि वै । राजानं कथयामासुर्हिरण्याक्षं महाबलम् ॥ ५४
श्रुत्वा दैत्यपतिस्तत्र चुकोपातिमहाबलः । सचिवांस्तु समाहूय क्रुद्धो वचनमब्रवीत् ॥ ५५

दैत्यराज उवाच—

अधुनेन्द्रादिदेवाश्च निखिलाः क्रूरबुद्धयः । माधवं च परीप्सन्तः शंभौ सर्वं न्यवेदयन् ॥ ५६
कथं जयं च लप्स्यामो दैत्यवृन्देऽतिदारुणे । त्रिपुरारिरुवाचेदं गणेशं यजतामराः ॥ ५७
पूजयित्वा तु तं देवं जेष्यथासुरदानवान् । ततो देवगणैर्हृष्टैः पूजितो गणनायकः ॥ ५८
गणाधिपेन तुष्टेन क्रूरो दत्तो वरो महान् । जेष्यथाद्यासुरान्सर्वांस्तत्र देवा मुदाऽन्विताः ॥ ५९
हरिं निवेदयामासुरस्मद्वधपरीप्सवः । हरेर्वाढमुपश्रुत्य रथिनः शस्त्रपाणयः ॥ ६०
युद्धार्थमभितिष्ठन्ति निर्जरास्त्वभया मयि । यस्य या शक्तिरस्तीति[१] देवाञ्जेतुं वदत्वलम् ॥ ६१

व्यास उवाच—

ततो राज्ञो वचः श्रुत्वा मधुर्वचनमब्रवीत् ॥ ६२

मधुरुवाच—

जेष्यामि च हरिं राजन्सहायं मे नियोजय । जिते नारायणे देवाः सभयास्त्रिदशा ध्रुवम् ॥
तस्मान्नारायणोऽस्माकं भागः सर्वपुरंजयः ॥ ६३

व्यास उवाच—

ततो धुन्धुश्च सुन्दश्च कालकेयो महाबलः । सहायाश्च मधोस्तस्य जेष्यामो माधवं नृप ॥ ६४
सर्वदैत्यबले मुख्याश्चत्वारो दृढविक्रमाः । कालमृत्युसमा वीराः सर्वास्त्रविधिपारगाः ॥ ६५
बलस्तत्राब्रवीद्वाक्यं यस्मिञ्जय उपस्थितः । तं च जेष्यामि जिष्णुं च प्रतिज्ञा मे दृढा नृप ६६
नमुचिश्च मुचिश्चैव भ्रातरौ बलदर्पितौ । ऊचतुस्तु नृपं वाचं जेष्यावो वै बलाद्बलौ[२] ॥ ६७
जम्भश्चैवाब्रवीद्वाक्यमिन्द्रमिन्द्रपुरोगमान् । जेष्यामि नात्र संदेहो दैत्या भवन्ति(न्तु) विज्वराः ॥
त्रिपुरश्चाब्रवीद्वाक्यं जेष्यामि च विनायकम् । तावदूचेऽथ सेनानीर्मयो देवान्तको बली ॥ ६९

१ ग. घ. 'कोप दैत्यपुंगवः । स' । २ घ. ज. 'ति जेतुं प्रति वदस्व नः । त्वा' ।

कुवेरं प्रति रक्षोभिः सर्वांश्चैव हिरण्यकान्(?) । एतस्मिन्नन्तरे तत्र नारदो मुनिसत्तमः ॥ ७०
गत्वोवाच हिरण्याक्षं जिष्णुदूतोऽहमागतः । राज्यं त्यजस्व वाचा नः प्राणेषु यदि ते हितम् ॥
नं चेद्युध्यस्व मामद्य न वा गच्छ रसातलम् । ततः कोपादुवाचेदं नारदं मुनिसत्तमम् ॥ ७२

दैत्यराज उवाच—

अहिंस्यस्त्वं ब्राह्मणाद्य गच्छ तूर्णं ममाग्रतः । देवानां च विपत्तिं च कदनं निधनं पुरः ॥
पश्य विप्र क्षणे जातं प्राप्तं हरिहरादिकम् ॥ ७३

व्यास उवाच—

एवमुक्त्वा स दैत्येन्द्रो बलाध्यक्षानुवाच ह ॥ ७४

दैत्यराज उवाच—

सज्जीकृत्वा बलं सर्वान्रथांश्चाऽऽनयत द्रुतम् ॥ ७५

व्यास उवाच—

दैत्यराजवचः श्रुत्वा बलाध्यक्षाः समन्ततः । बलान्याहूय सहसा संत्रस्तास्तूर्णमागताः ॥ ७६
कोटिकोटिसहस्राणि [*अक्षौहिण्यो बलानि च । एकैकस्य च वीरस्य वाहनानि महान्ति च ॥
स्यन्दनानि विचित्राणि] गजोष्ट्राश्वखरानपि । सिंहव्याघ्रलुलायांश्च समारुह्य ययुस्तदा ॥ ७८
वाद्यैः सर्वैश्च भूयिष्ठैः सिंहनादैर्भयानकैः । दिशस्तु पूरयामासुः सिन्धुवेलाचलाधराः ॥ ७९
[+सर्वलोकाश्च वित्रेसुः समुद्राश्च चकम्पिरे । देवदुन्दुभयो नेदुः सर्वदेवैः समीरिताः ॥ ८०
वाद्यैश्च विविधैरन्यैर्वायुपूर्णैर्घनस्वनैः] । सर्वलोका भयत्रस्ता ये च त्रैलोक्यवासिनः ॥ ८१
भ्रष्टकामागताकाशं घोरं तीव्रं *महाहवम् । परिघैः पाशशूलैश्च खड्गयष्टिपरश्वधैः ॥ ८२
शरैश्च निशितैर्घोरैर्जघ्नुरन्योन्यमाहवे । शस्त्रास्त्रैर्बहुधा मुक्तैर्दिशः सर्वा निरन्तरम् ॥ ८३
निग्रहेषु धरण्यां च पर्वतेषु जलेषु च । देवस्थाने तथाऽऽकाशे पर्वताग्रेषु सानुषु ॥ ८४
गह्वरेषु महारण्ये तयोर्युद्धमवर्तत । पुष्करादिघनानां च वर्षधाराजलं यथा ॥ ८५
पतन्त्यस्त्राणि सैन्येषु शतशोऽथ सहस्रशः । केचित्पेतुः पृथिव्यां तु शरैः संभिन्नविग्रहाः ॥ ८६
शक्तिभिर्मुशलैश्चान्ये चक्रशूलपरश्वधैः । पतिताः संमुखे शूरा युद्धेषु न्यायवर्तिनः ॥ ८७
गच्छन्ति सुरसद्मानि स्वाम्यर्थे ये त्वभीरवः । ये चान्ये कातराः पापा हन्तारो विमुखान्रणे ॥
अन्यायैर्ये च योद्धारस्ते यान्ति यममन्दिरम् । त्रिदिवस्था गजारोहाः सैन्धवस्थास्तथा परान् ॥
रथस्थांश्च रथारोहाः पदगांश्च पदातयः । परस्परं विनिघ्नन्ति शूरा युद्धाभिकाङ्क्षिणः ॥ ९०
मुर्दिताः सत्त्वसंपन्ना धर्मिष्ठा बलसंवृताः । केषां चिद्धाहवश्छिन्ना मुशलैर्भिन्नमस्तकाः ॥ ९१
केशाः शिरांसि वस्त्राणि निपेतुर्धरणीतले । मध्यच्छिन्नास्तथा भिन्नाः पेतुरुर्व्यां महाबलाः॥ ९२
खड्गपातैस्तथा चोग्रैश्छिन्नभिन्नाः परश्वधैः । गामेव पतिता [1]धीरा दिव्यालंकारभूषिताः ॥ ९३
प्रदीप्तोऽभूद्धरादेशो वीरैर्नागैर्हयै रथैः । विविधाभरणैर्नष्टैः पताकाभिश्च केतुभिः ॥ ९४
ततो वसुंधरा सर्वा सशैलवनकानना । रुधिरौघप्लुता तत्र विबुधासुरयोर्युधि ॥ ९५
क्रव्यादैर्बहुभिस्तत्र खादितो द्रव्यसंचयः । लोहितं प्रचुरं पीतं रक्षोभिश्च वृकादिभिः ॥ ९६

---

* धनुश्चिह्नान्तर्गतः पाठः क. ग. घ. ङ. ज. ञ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. ज. पुस्तकस्थः । * महास्वनमिति क्वचित्पाठः ।

---

1 ग. घ. वीरा ।

अन्यैर्महागणैरेव क्षतजं पवनान्वितम् । खादितं प्रीतिमद्भिश्च फेरुगृध्रगणैर्मुदा ॥ ९७
एतस्मिन्नन्तरे सूरिः सुरपूज्यो बृहस्पतिः । मृतसंजीविनीं विद्यां सुराणां संजजाप ह ॥ ९८
विशल्यकरणीं दिव्यां ब्रह्मविद्यां महाबलाम् । ततो धन्वन्तरिर्विद्वान्सुरवैद्यो मनोजवः ॥ ९९
औषधैस्तत्प्रयोगैश्च रणे पर्यटते मुदा । तत्र देवाश्च जीवन्ति ये मृताश्च महाहवे ॥ १००
अव्रणा बलसंपन्नाः प्रयुध्यन्ति भृशं पुनः । एवं शतसहस्रं तु गणं दैत्यस्य चोद्धतम् ॥ १०१
पतितं पुण्ययोगाच्च शरैर्निर्भिन्नकंधरम् । ततस्तु(आलोक्य)जयशब्देन नन्दन्ति सिद्धचारणाः ॥
ऋषयः खेचराश्चान्ये ये चैवाप्सरसां गणाः । अथ सर्वा दिशो भीता दैतेया दुद्रुवुर्बलात् १०३
देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः । गीतं गायन्ति गन्धर्वाः शशंसुः परमर्षयः ॥ १०४
अथ क्रुद्धो महातेजा दैत्यमुख्यो महाबलः । कालकेय इति ख्यातः सेनानीर्दैत्यपस्य च ॥१०५
स्यन्दनस्थो महावीर्यो धनुरादाय तत्र च । जघान सुरसंघांस्तान्ननर्द च मदान्वितः ॥ १०६
स गजांश्च गजारोहानश्वारोहांस्तथैव च । रथिनं सरथं सूतं पातयामास भूतले ॥ १०७
निरन्तरं शरौघेण च्छादितं गगनं तदा । निपतन्ति शराः सैन्ये कोटिकोटिसहस्रशः ॥ १०८
निपतन्ति तदा देवाः संयुगेष्वनिवर्तिनः । रुधिरोद्गारिणः सर्वे सिद्धगन्धर्वकिंनराः ॥ १०९
विशिखैः पीडिता देवा निपेतुर्धरणीतले । केचिच्छरशतैर्भिन्नाः सहस्रैरयुतैस्तथा ॥ ११०
पेतुरुर्व्यां महावीर्या ये रणे सुरपुंगवाः । व्यथिताश्चाभवन्सर्वे स्यन्दनस्था दिवौकसः ॥ १११
शरैः प्रव्यथितास्ते तु स्थातुं शक्ता न संमुखे । तेनावगाहितं सैन्यं गजेनेव सरोवनम् ॥ ११२
शरैस्तस्यार्दिता देवा वज्रानलसमप्रभैः । न शेकुः समरे स्थातुं मघवन्तं ययुस्तदा ॥ ११३
चित्ररथ इति ख्यातो देवः शस्त्रभृतां वरः । ययौ स्यन्दनमारुह्य युद्धं प्रति धनुर्धरः ।
अब्रवीद्वचनं सोऽपि सेनान्यं तु महासुरम् ॥ ११४

चित्ररथ उवाच—

यथा हंसि महाशूर सुरसेनां मुदाऽन्वितः । स त्वं प्रशंसनीयश्च शूरोऽसि शूरसंमतः ॥ ११५
हिरण्याक्षप्रियं कर्म कृतं युद्धे त्वयाऽधुना । इदानीं मम बाणैश्च गच्छस्व यममन्दिरम् ॥ ११६

व्यास उवाच—

ततश्च कालकेयस्तु स्मितो वचनमब्रवीत् ॥ ११७

कालकेय उवाच—

पुरैव विजितो देवगणः सर्वः प्रलीलया । इदानीं तु स्थितं युद्धे बलं सर्वं तु हेलया ॥ ११८
यदि ते निधने प्रीतिरस्तीति सुरपुंगव । एभिस्त्वां निशितैर्बाणैर्नयामि यममन्दिरम् ॥ ११९

व्यास उवाच—

इत्युक्त्वा परमक्रुद्धो बाणमन्तकसंनिभम् । जघान समरे वीरस्त्रिभिश्चिच्छेद सोऽम्बरे ॥ १२०
पुनर्बाणांश्च समरे योजयित्वा द्रुतं रुषा । जघान प्रचुरान्दैत्यांस्तांश्चकर्त स लाघवात् ॥ १२१
ततोऽन्योन्यं शरैस्तीक्ष्णैः कालानलसमप्रभैः । युद्धे धनुष्मतां श्रेष्ठश्चिच्छेद भुवि वेगतः ॥ १२२
तद्युद्धमभवद्देवदैत्ययोर्धर्मतो भृशम् । द्रष्टुकामा गताः पार्श्वमृषिदेवाः सुरोरगाः ॥ १२३
एवं शतसहस्राणि बाणानां विधृतानि च । अन्योन्यं(न्य)समरे वीरौ विजयाय विरेजतुः ॥१२४
अथ क्रुद्धो महातेजा गन्धर्वाणां पतिस्तदा । त्रिभिर्बिभेद बाणैश्च ललाटे हृदि पञ्चभिः ॥ १२५
सप्तभिर्जठरे नाभौ वस्तौ तस्य स पञ्चभिः । शरैः संपातितो दैत्यो मुग्धः कश्मलतां गतः १२६

शिथिलीकृतचापश्च लेभे संज्ञां चिराद्बली । लब्धसंज्ञस्त्रिभिर्बाणैः स विभेद सुरोत्तमम् ॥ १२७
चकर्त धनुरस्त्रैश्च दैत्यराजस्य पश्यतः । महतीं शक्तिमुद्धृत्य सुरं दैत्यो विभेद च ॥ १२८
शक्त्या विभिन्नदेहोऽसौ वीर्यान्नैव प्रपश्यति । ततो बाणसहस्रैस्तु कालान्तकसमप्रभैः ॥ १२९
बिभेद दैत्यसिंहं तु सुराणामुत्तमो बली । हतचेताः स दैत्येन्द्रो बहुशोणितसंस्रवः ॥ १३०
विह्वलो बहुबाणार्तः शूलं जग्राह दानवः । शूलहस्तस्य तस्यैव चतुर्भिस्तुरगाञ्शरैः ॥ १३१
हत्वा च पातयामास त्रिभिर्यन्तारमेव च । जघान शूलं संविष्टस्ततो गन्धर्वसत्तमम् ॥ १३२
विचकर्त त्रिभिर्बाणैः शूलं चित्ररथो बली । शूलं च नष्टकं दृष्ट्वा हृतभोगमिवोरगम् ॥ १३३
गृहीत्वा मुद्गरं घोरं प्रदुद्राव सुरं बली । समुद्गरं समायान्तं दैत्यमालोक्य तं सुरः ॥ १३४
विचकर्त शिरो देहादर्धचन्द्रेण संभ्रमात् । स पपात महीपृष्ठे संचचाल वसुंधरा ॥
ततो दैत्यगणाः सर्वे विमुखा विप्रदुद्रुवुः ॥ १३६

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे कालकेयवधो नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०६३६

अथ चतुःषष्टितमोऽध्यायः ।

व्यास उवाच—

भ्रातरं निहतं दृष्ट्वा कालेयो नाम दानवः । चित्ररथं प्रदुद्राव धृत्वा बाणं सकार्मुकम् ॥ १
दृष्ट्वाऽसुरं विधावन्तं कालमृत्युसमप्रभम् । अरौत्सीत्तं महावीर्यो जयन्तः पाकशासनिः ॥ २
अब्रवीच्च महातेजा दैतेयं सुरसत्तमः । तथ्यं धर्माभिसंयुक्तं लोकद्वयहितं ध्रुवम् ॥ ३

जयन्त उवाच—

शस्त्राभिघातदुःखार्तं कश्मलं चान्य(लेनापि)संयुतम् । प्रभग्नं च निरस्तं च यो हन्ति स च बालिशः
सुचिरं रौरवं भुक्त्वा तस्य दासो भवेच्चिरम् । तस्मान्माऽमुं प्रयुध्यस्व युद्धधर्मस्थितो भव ॥ ५

व्यास उवाच—

जयन्तमब्रवीद्वाक्यं कालेयः क्रोधमूर्छितः ॥ ६

कालेय उवाच—

निहत्य भ्रातृहन्तारमथ त्वां हन्मि सांप्रतम् ॥ ७

व्यास उवाच—

ततस्तं चासुरश्रेष्ठं कालानलसमप्रभम् । जयन्तो निशितैर्बाणैर्जघान सुरसत्तमः ॥ ८
निचकर्त शरान्सोऽपि त्रिभिर्विव्याध चासुरः । [*ततः कोपसमाविष्टो(ष्टौ) नाराचैर्दशभिस्तथा
शरांश्चिच्छे(च्छि)दतुस्तत्र बिभे(भि)दतुः परस्परम् । स्यन्दनाच्च तयोरेव बहु सुस्राव शोणितम्]
यथा वृष्टिगणं प्राप्य नदी गैरिकवाहिनी । तथा तौ च महावीर्यौ न क्षीणौ न च कातरौ ॥ ११
न शर्म परिलेभार्ते परस्परजयैषिणौ । अथ तस्य च दैत्यस्य धनुश्चिच्छेद चेषुणा ॥ १२

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

१ ग. घ. ज. मघवच्छक्ति° । २ घ. देवस्त्वर्ध° । ३ ग. घ. ज. यो बलान्धश्च बा° । ४ ग. घ. ज. °शः । स चि° ।
५ ग. घ. ज. °स्मान्मां च प्र° ।

यन्तारं पञ्चभिर्बाणैः पातयामास भूतले । अष्टाभिर्निशितैर्बाणैश्चतुरोऽश्वानपातयत् ॥ १३
शक्तिं संगृह्य भूमिष्ठः कुमारं च जघान ह । आयान्तीं वह्निकूटाभां शरैश्चिच्छेद पञ्चभिः ॥ १४
गदामादाय वेगाच्च जयन्तं स जघान ह । गदया पीडितं साम्बं सवरूथं सकूबरम् ॥ १५
पातयित्वा धरण्यां च सिंहनादं ननाद ह । लाघवात्स धरां गत्वा गदापाणिरुपस्थितः ॥ १६
वज्रपाताद्यथा शब्दो लोकानां दुःसहो भवेत् । तथा तयोर्गदापाते शब्दः स्यात्तु मुहुर्मुहुः ॥ १७
एवं तयोर्गदायुद्धं यावद्दण्डचतुष्टयम् । प्रभग्ने ते गदे खस्थौ खड्गचर्मधरावुभौ ॥ १८
तदा पदातयोर्युद्धमद्भुतं लोमहर्षणम् । दृष्ट्वा च विस्मयं जग्मुर्देवासुरमहोरगाः ॥ १९
खड्गपातैर्मुहूर्तान्ते तयोश्छिन्ने तु चर्मणी । अभवत्खड्गयुद्धं च तयोर्युद्धातिशालिनोः ॥ २०
दधार चिकुरे तस्य जयन्तो भीमविक्रमः । शिरश्छित्त्वाऽस्य खड्गेन पातयामास भूतले ॥ २१
ततस्तु जयशब्देन देवाः सर्वे ननन्दिरे । प्रभग्ना दैत्यसंघाश्च दिशः सर्वाः प्रदुद्रुवुः ॥ २२

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे कालेयवधो नाम चतुःषष्टितमोऽध्यायः ॥६४॥

आदितः श्लोकानां समष्ट्यङ्काः—३०६५७

---

अथ पञ्चषष्टितमोऽध्यायः ।

---

व्यास उवाच—

एतच्छ्रुत्वा तु दैत्येन्द्रो हिरण्याक्षो महाबलः । सरोषश्चातिताम्राक्षो ह्यसुरानादिदेश ह ॥ १

हिरण्याक्ष उवाच—

स्वयं गच्छे तु युद्धाय देवानां विजिघांसया । नाऽऽगच्छन्ति न युध्यन्ते ते न मार्गाद्विशन्त्वितः

व्यास उवाच—

एतच्छ्रुत्वा तु वचनं शेषा दैत्यगणाधिपाः । युद्धाय प्रययुः सर्वे शूलपाशातिपण्डिताः ॥ ३
अधिकं पूर्वसैन्याच्च तथा शतगुणैरपि । निरन्तरं तथाऽऽकाशं प्रययुर्युद्धकाङ्क्षिणः ॥ ४
ततो रुद्रांश्च साध्याश्च विश्वे च वसवस्तथा । स्कन्दश्च गणपश्चैव विष्णुजिष्णुपुरोगमाः ॥ ५
सर्वे योद्धुं गतास्ते च हृष्टा रणसमुत्सुकाः । एतस्मिन्नन्तरे युद्धं देवदानवयोरपि ॥ ६
न भूतं न श्रुतं पूर्वं सर्वलोकभयंकरम् । शस्त्रास्त्रैर्बहुधा युक्तं शिशिरेणेव काननम् ॥ ७
*धरां स्वर्गौकमाकाशं संरुध्य युद्धमावभौ(?) । अन्योन्यं जघ्नुराकाशे तथाऽन्योन्यं महीतले ॥ ८
+शक्तिभिर्मुसलैर्भल्लैर्बहुभिः शरवृष्टिभिः । दारुणैः खड्गपातैश्च तथा चक्रपरश्वधैः ॥ ९
अन्यायुधैश्च विविधैर्विजघ्नुस्ते परस्परम् । अभवन्घोररूपाणि धराकाशेऽव्ययानि च ॥ १०
शस्त्रैः शरैरसृक्पातैः कङ्कवायसजम्बुकैः । यथा मुसलधाराभिर्घना वर्षन्ति लोहितम् ॥ ११
तथैव क्षतजैः प्राश्यैः स्वाङ्गाच्च देवदानवाः । केचित्पतन्ति मुह्यन्ति स्खलन्ति च हसन्ति च १२

---

* इदमर्धं क्वचित्पुस्तके नास्ति । + अयं श्लोको झ. पुस्तके नास्ति ।

---

१ झ. °वदब्दच° । २ ग. घ. °मभीषण° । ३ ग. घ. °गाः । ततो दण्डद्वयस्यान्ते । ४ क. मार्गाद्विशत्वितः । ख. ङ. मार्गे द्विषत्वितः । ग. मार्गाद्विशास्त्वितः । च. मार्गे द्विषन्त्वितः । ज. मार्गाद्विशात्वितः । ञ. मार्गे द्विषत्वितः । ञ. मार्गाद्विसत्वितः । ५ ग. घ. 'र्वे काल° । ६ घ. झ. °तिपीडिताः । ७ ग. °द्राः सप्रेताश्च । घ. °द्राः सन्निप्राश्च । ८ घ. °सवश्चकैः । ९ ग. घ. °न्ति युध्यन्ति खेल° । ज. °न्ति युध्यन्ति ।

नदन्ति चाऽऽर्तनादांश्च सिंहनादं मुहुर्मुहुः । केषांचिद्बाहवश्छिन्नाश्छिन्नपादास्तथाऽपरे ॥ १३
छिन्नपार्श्वोदराः केचिन्निपेतुः शतशो भुवि । [*कोटिकोटिसहस्राणि गजवाज्यसुराणि च(?)१४
अपतन्धरणीपृष्ठे रक्तौघे बहुधा भुवि] । ततस्तु धरणीपृष्ठे अभवल्लोहितार्णवः ॥ १५
विपरीतास्ततो नद्यः सद्यस्तत्र विसुस्रुवुः । तृणकाष्ठपरास्तत्र शक्तयो दारुसंचयाः ॥ १६
मुद्गरा मुशलाः शूला मकराद्या भवन्ति च । जयन्तिकाध्वजा मीनाः कमठाश्चर्मकायकाः ॥ १७
शरादिभिर्महोग्रैश्च निरुद्धाः प्रचुरैस्तथा । केशचामरशैवालाः संपूर्णास्तास्ततस्ततः ॥ १८
पेतद्भिश्च तथाऽन्यैश्च विविधैः क्षतजार्णवः । तदा वसुंधरा सर्वा सशैलवनकानना ॥ १९
रुधिरौघा महासिंहा सर्वलोकभयंकरा । स्कन्दस्य शक्तिपातेन गता दैत्या यमक्षयम् ॥ २०
पर्शुना परमेणैव अग्निनाऽग्निशिखैः शरैः । वरुणस्य च पाशेन बद्धा मया यमक्षये ॥ २१
एषां पुत्रैश्च पौत्रैश्च पुरोगैः सचिवैस्तथा । निपातिताश्च दैतेयाः शरशक्त्यृष्टिद्दृष्टिभिः ॥ २२
ग्रहैश्च श्वसनैरेव यक्षगन्धर्वकिंनरैः । महत्या गदया चैव कुबेरेण च धीमता ॥
घनानां निकरैर्वज्रैस्तुषारैर्विधुनेरितैः ॥ २३
[+पन्नगानां विषैर्घोरैर्दैत्याः पेतुर्धरातले । अन्यैश्च विविधैर्देवैः कोटिकोटिसहस्रशः] ॥ २४
पातिताश्च ययुः सर्वे धरण्यां तु गतासवः । देहांस्त्यक्त्वा दिवं यान्ति केचिच्च यममन्दिरम् २५
केचिद्गच्छन्ति पातालं पुण्यापुण्यप्रयोगतः । एतस्मिन्नन्तरे वेदाङ्गजल्पुः परमर्षयः ॥ २६
स्वस्त्यस्तु ब्राह्मणेभ्यश्च गोभ्यः स्त्रीभ्यस्तपस्विषु । प्रयुध्यमानेष्वन्येषु सांप्रतं सर्वजन्तुषु ॥ २७
विबुधैरर्दिता दैत्याः शेषाः पर्वतमाश्रिताः । प्रजग्मुश्च दिशः सर्वाः कातरा रणभीरवः ॥ २८
दैत्यव्यूहे प्रभग्ने च बलो नाम महाबलः । अर्दयामास देवांश्च संयमाग्निसमैः शरैः ॥ २९
तस्य बाणार्दिता देवा बहवो बलदर्पिताः । पतिता धरणीपृष्ठे केचिद्भग्ना रणाजिरे ॥ ३०
दृष्ट्वा तस्य महत्कर्म दारुणं लोकभीषणम् । शशंसुर्ऋषयो देवाः शुक्रशिष्याः प्रचुक्रुशुः ॥ ३१
अथ क्रुद्धो महातेजाः शतक्रतुररिंदमः । जघान शरसंदोहैर्बलं बलवतां वरम् ॥ ३२
सोऽपि क्रुद्धो बलो युद्धे विनिघ्नन्तं शितैः शरैः । अर्दयामास सहसा दर्शयन्हस्तलाघवम् ॥ ३३
परस्परं जघानाथ तौ च वीरौ महाबलौ । न श्रमश्च तयोर्युद्धे न व्यथा न तु विभ्रमः ॥ ३४
रुधिरेणावसिक्ताङ्गौ प्रस्रतेन महाबलौ । यथैव माधवे मासि पुष्पितौ किंशुकद्रुमौ ॥ ३५
चक्राणि च सहस्राणि शूलानि मुसलानि च । निचखान रणे शक्रे चपले चासुरोत्तमः ॥ ३६
तानि चक्राणि शूलानि निचकर्त शरोत्तमैः । सुरराट्सहसाऽभ्रान्तो लीलया समरे बली ॥ ३७
स च दैत्यो महातेजाः शक्त्या चैव पुरंदरम् । निजघान तदा तूर्णं गजस्थं च स्तनान्तरे ॥ ३८
तया विनिहतः शक्रः प्रचचाल गजोपरि । लब्धसंज्ञो बलं जिष्णुर्बिभेद दनुजं क्षणात् ॥ ३९
रथस्थस्य च हस्ताच्च धनुश्चिच्छेद चेषुणा । चर्म तीक्ष्णं ध्वजं तस्य शरेणैकेन वीरहा ॥ ४०
चतुर्भिर्निशितैर्बाणैर्विव्याध चतुरो हयान् । शरेणैकेन सूतस्य शिरश्चिच्छेद तत्क्षणात् ॥ ४१
छिन्नधन्वा हतरथो हताश्वो हतसारथिः । निपत्य मूर्छितः पृथ्व्यां मुहूर्तान्मृत्युमाप सः ॥ ४२
[illegible] क्रुद्धो महादैत्यो नमुचिः सुरदर्पहा । गदामादाय सहसा स जघान महागजम् ॥ ४३

* धनुश्चिह्नान्तर्गतः पाठः क. ग. घ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो ग. घ. ज. पुस्तकस्थः ।

१ ग. घ. °थापि जन्तवः । ज° । २ ग. घ. ज. चतुर्भिश्च । ३ ञ. महाघोरा । ४ ग. घ. ज. शक्रस्य । ५ ग. घ. ज. °त् । शक्तिहस्तश्च ह° ।

यथा मेरुगिरेः शृङ्गे वज्रपातो भवेद्ध्रुवम् । तथैव च महाशब्दो ह्यभवल्लोमहर्षणः ॥ ४४
प्रहारेणार्दितः पक्षी संचचाल स विह्वलः । रुधिरेणावसिक्ताङ्गो विमुखो वेदनातुरः ॥ ४५
शतक्रतुं विधावन्ति शतशोऽथ सहस्रशः । अर्धचन्द्रैः क्षुरप्रैश्च चिच्छेद पाकशासनः ॥ ४६
जन्तुभिस्तस्य मायाभिरर्दिताः सुरपुंगवाः । भूमौ निपतिताः केचित्केचित्सुप्ता रथोपरि ॥ ४७
दृष्ट्वा तस्य महत्कर्म माधवो विशिखांस्तदा । जन्तुभूतान्स चक्रेण चिच्छेद देहलग्नकान् ॥ ४८
ततो जिष्णुस्त्रिभिर्बाणैः पातयामास भूतले । पृथिव्यां पतितो दैत्यो मूर्छितः स्खलितः पुनः ॥
दधार मुद्गरं घोरं शक्रं हन्तुं समुद्यतः । ततो जघान मघवान्कुलिशेन महासुरम् ॥ ५०
स पपात महीपृष्ठे क्षतवक्षा महाबलः । साधु साध्विति देवाश्च सिद्धाश्चैव महर्षयः ॥ ५१
अपूजयंस्तदा शक्रं बहुभिः पुष्पवृष्टिभिः । ततो दैत्यगणाः सर्वे भीतास्तत्र प्रदुद्रुवुः ॥
गीतं गायन्ति गन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ५२

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे बलनमुचिवधो नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०७०८

---

अथ षट्षष्टितमोऽध्यायः ।

---

व्यास उवाच—

बलं च निहतं दृष्ट्वा नमुचिं च स्वकाग्रजम् । मुचिस्तत्राब्रवीद्वाक्यं ज्येष्ठो मे सूदितस्त्वया ॥
परोक्षेणाधुना त्वां च शरैर्नेष्यामि भास्करीम् ॥ १

व्यास उवाच—

तमब्रवीन्महातेजाः शक्रः सर्वसुरार्चितः ॥ २

शक्र उवाच—

भ्रातुस्ते धर्मपन्थानमिदानीं लप्स्यसे ध्रुवम् । वह्नेरुष्णमविज्ञाय प्रमोदाच्छलभा यथा ॥
सहसा प्रविशन्त्यग्निं तथा मां योद्धुमिच्छसि ॥ ३

व्यास उवाच—

एवं ब्रुवाणमिन्द्रं च जघान विशिखैस्त्रिभिः । स चिच्छेद त्रिभिर्बाणैः शक्रः परपुरंजयः ॥ ४
ततो जघान दशभिरिन्द्रमैरावणं त्रिभिः । सप्तभिर्मातलिं छित्त्वा नादैरुच्चैर्ननाद ह ॥ ५
शक्रं प्रति पुनर्दैत्यो भ्रामयामास संभ्रमात् । आयसीं तां गदां कोपान्महाबलपराक्रमः ॥ ६
ततस्तु लाघवाच्छक्रो जघान कुलिशेन हि । भिदुरस्यावपातेन गतासुर्निपपात ह ॥ ७
दनुजस्य प्रपातेन संचचाल वसुंधरा । देवाः प्रचक्रुर्नृत्यानि दानवा विप्रदुद्रुवुः ॥ ८

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे मुचिवधो नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०७१६

---

+ अनित्यत्वात्समासान्तो न ।

---

१ ग. ज. पुंसां ।

अथ सप्तषष्टितमोऽध्यायः ।

व्यास उवाच—

तारेयो बलसंपन्नः शक्रतुल्यपराक्रमः । [*जघान विशिखैः स्कन्दं पितृघातिनमाहवे ॥ १
ततः स्कन्दो महाबाहुर्हरितुल्यपराक्रमः ] । विचकर्त शरांस्तांस्तान्निर्बिभेद शरोत्तमैः ॥ २
स दैत्यः सहसा स्कन्दं छादयामास मार्गणैः । असंभ्रान्तः प्रचिच्छेद विशाखो विशिखैस्तदा ३
तारेयोऽग्निशरैः स्कन्दं जघान रणमूर्धनि । विशिखं भिदुरप्रख्यं चखान हरनन्दने ॥ ४
वैश्वानरेण सेनानीस्तं च संपर्यवारयत् । रौद्रमस्त्रं पुनर्दैत्यः प्रेषयामास तं प्रति ॥ ५
तन्निरस्तं कृतं तेन बाणेनाऽऽस्फालितेन च । अघोरं प्राक्षिपद्दैत्यो घोररूपं सुदारुणम् ॥ ६
भूधरा विटपाः सिंहास्तथा सर्पादयः शराः । धावन्ति पार्वतीपुत्रं कोटिकोटिसहस्रशः ॥ ७
छित्त्वा तांस्तु शरान्स्कन्दो बिभेद दैत्यपुंगवम् । आपादशीर्षपर्यन्तं शरैरग्न्यर्कसंनिभैः ॥ ८
स्वर्णपुङ्खाः शरा लग्ना देहे दैत्यपतेर्भृशम् । रेजुस्ते स्वर्णशकला यथा कृष्णशिलोच्चये ॥ ९
तस्य देहात्ततश्चैव बहु सुस्राव शोणितम् । यथा च माधवे मासि पुरुपुष्पः शमीतरुः ॥ १०
स्यन्दनाधश्चराश्वाश्च शयेयुर्भूमिलग्नकाः । अथ क्रुद्धो महादैत्यः शूलं भीमं च दारुणम् ॥ ११
धृत्वा तं प्रति चिक्षेप कालमृत्युसमप्रभम् । पार्वतीनन्दनः शूलं पाशुपत्यं मुमोच ह ॥ १२
तेन तस्य कृतं दग्धं मुहूर्तेन रणाजिरे । पुनः शक्तिं मुमोचाथ ब्रह्मदत्तां तु दानवः ॥ १३
शूलं प्रतिजघानाथ शतकूटसमप्रभम् । ततोऽस्त्रे वज्रसंकाशे जघटाते वियत्यपि ॥ १४
तयोः सवीर्ययोस्ते च धरण्यां प्रणिपेततुः । रोषाद्दैत्यपतिः स्कन्दं शरैरग्निशिखोपमैः ॥ १५
अर्दयामास सहसा घनधारेव पर्वतम् । तांस्तु च्छित्त्वा महाबाहुः सेनानीश्चापमस्य वै ॥ १६
विचकर्तार्धचन्द्रेण तथा यन्तुः शि[illegible] महत् । तथाऽश्वान्बहुभिर्बाणैः पातयामास भूतले ॥ १७
गृहीत्वा मुसलं वेगात्स दुद्राव स्थले [illegible]हम् । जघान तेन दैत्येन्द्रः शिखिनं शिखिवाहनम् ॥ १८
ततो मोहं गतो बर्हीं प्रचकम्पे मुहुर्मुहुः । ततः स्कन्दः पुनस्तं च जघानासुरपुंगवम् ॥ १९
प्रचिच्छेदासिना वेगान्मुसलं चातिदारुणम् । तारेयः शक्तिमादाय जघान क्रौञ्चदारणम् ॥ २०
सोऽपि शक्तिं मुमोचाथ अमोघां दुष्टघातिनीम् । ततः संदह्य सा शक्तिर्विश्वप्रलयकारिणी ॥२१
यमदण्डसमा तं च भित्त्वा पुनर्गुहं गता । स गतासुः पपातोर्व्यां चालयंश्च वसुंधराम् ॥
पुष्पधूपादिभिः स्कन्दः सर्वदेवैः प्रपूजितः ॥ २२

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे तारेयवधो नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०७३८

अथाष्टषष्टितमोऽध्यायः ।

व्यास उवाच—

ततो देवान्तको दैत्यो व्यवर्ध(गम)त्समरं प्रति । रथेनाऽऽदित्यवर्णेन संदष्टोष्ठपुटो बली ॥
स गत्वा चाब्रवीद्वाक्यं सर्वलोकविगर्हितम् ॥ १

---

* धनुश्चिह्नान्तर्गतः पाठो ज. पुस्तकस्थः ।

१ झ. म. रणं चचार धर्मेण सं॰ ।

देवान्तक उवाच—

न जानासि महद्धर्मं [*दुष्ट मोहाद्यथाक्रमम् । पापपुण्यप्रयोगाच्च निग्रहानुग्रहे प्रभुः ॥ २
अहं च निर्मितो धात्रा करोमि तव शासनम् । न जानासि यतो धर्मं] कालमृत्युपुरःसरः ॥ ३
न रोगो न जरा कालो न मृत्युर्न च किंकरः । धर्मात्प्रचलितः कर्मी कष्टं याति दिवानिशम् ॥ ४

व्यास उवाच—

उक्तं वसुं (क्त्वा चैवं) महावीर्यं यमं धर्मैकसाक्षिकम् । स जघान त्रिभिर्बाणैः कालमृत्युसमप्रभैः ॥
प्रचिच्छेद स धर्मात्मा तं त्व(तान)न्यैर्विशिखैस्त्रिभिः । ततस्तूच्चैः शरैः प्राज्यैर्युगान्तानलसप्रभैः ॥
निजघान यमं संख्ये स चिच्छेद शरैः शरान् । एतस्मिन्नन्तरे क्रुद्धौ परस्परजयैषिणौ ॥ ७
जघ्नतुः समरेऽन्योन्यं महाबलपराक्रमौ । अहोरात्रं तयोर्युद्धमवर्तत सुदारुणम् ॥ ८
एतस्मिन्नन्तरे क्रुद्धः शक्त्या प्रशमनं रुषा । बिभेद दैत्यशार्दूलो ह्यहंकारयुतो बली ॥ ९
तामेवाथ रुषा धर्मो गृहीत्वा शक्तिकां द्रुतम् । निजघान तथैवामुं स्तनयोरन्तरे भृशम् ॥ १०
स विह्वलितसर्वाङ्गो मुखादागतशोणितः । ततः क्रुद्धो महातेजा धृत्वा दण्डं सुदारुणम् ॥ ११
अमोघं पातयामास तस्य दैत्यस्य विग्रहे । साश्वं रथं तथा सूतं योद्धारं शस्त्रसंचयम् ॥ १२
चकार भस्मसात्तं च शमनः क्रोधमूर्छितः । पतिते च तथा दैत्ये दुर्धर्षो नाम दानवः ॥ १३
शमनं शूलहस्तं तु प्रदुद्राव जिघांसया । शूलहस्तं समायान्तं वडवानलसंनिभम् ॥ १४
आससाद रणे मृत्युः शक्तिहस्तोऽतिनिर्भयः । स च दृष्ट्वाऽसुरो मृत्युं शूलेनैव जघान ह ॥ १५
शक्तिं चैव ततो मृत्युः प्रचिक्षेप रणाजिरे । संदह्य सहसा शूलं वह्निकूटसमप्रभम् ॥ १६
दैत्यस्य हृदयं भित्त्वा गता सा च धरातलम् । सरथः स पपातोर्व्यां शक्तिजर्जरविग्रहः ॥ १७
अथान्यो दुर्मुखो मृत्युं कृष्टचापो महाबलः । खड्गचर्मधरः कालो रथ एव गतोऽभवत् ॥ १८
दृष्ट्वा तं विशिखैः प्राज्यैर्जघान स यमं रणे । स चाऽऽप्लुत्य रथाद्देवो ह्यसिना च सकुण्डलम् १९
शिरश्चिच्छेद सहसा पातयामास भूतले । हतशेषं बलं सर्वं प्रदुद्राव दिशो दश ॥ २०

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे देवान्तकदुर्धर्षदुर्मुखवधो नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०७५८

---

अथोनसप्ततितमोऽध्यायः ।

---

व्यास उवाच[1]—

अथान्यो नमुचिः क्रुद्धः स्यन्दनस्थो दिवौकसः । विशिखैरर्दयामास घोरैराशीविषोपमैः ॥ १
ततस्तत्संयुगे देवाः सिद्धकिंनरपन्नगाः । न शक्नुवन्ति बाणानां वेगं सोढुं समन्ततः ॥ २
रथमुच्चैःश्रवोश्वेन युक्तं मातलिनेरितम् । पुरुहूतः समास्थाय प्रागमत्तं महाबलम् ॥ ३
दृष्ट्वा शक्रं महावीर्यं नमुचिर्दैत्यपुंगवः । अब्रवीद्वासवं संख्ये वचनं सानुगं तदा ॥ ४

नमुचिरुवाच[2]—

प्राकृतं निर्जरं हत्वा न यशोऽस्ति न च प्रियम् । न लाभकृतकं वाऽपि न जैयस्तु[3] पुरंदर ॥ ५

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. ज. पुस्तकस्थः ।

---

१ ग, वचो । २ ग. घ.° च—नमुचिश्च महाबाहुः स्य° । ३ झ. जयस्तु पुरुष्टुत । त° । ञ. जयः पुरुषद्रुतः । त° ।

तस्मात्त्वयि हतेऽत्रैव सर्वं भवति शाश्वतम् । देवराज्यं प्रलप्स्यामि सुखभोग्यं सुरालये ॥ ६

व्यास उवाच—

तमब्रवीन्महातेजाः शक्रः परपुरंजयः ॥ ७

इन्द्र उवाच—

शूरता वाक्यमात्रेण सर्वत्र सुलभा भवेत् । महापराक्रमो यद्वा अस्ति ते दानवाधम ॥
दर्शयस्वाऽऽहवे वीर्यं पुरं नेष्यामि भास्करेः ॥ ८

व्यास उवाच—

एतच्छ्रुत्वा महातेजाश्चुकोप दैत्यपुंगवः । पञ्चभिर्निशितैर्बाणैर्जघान सुरसत्तमम् ॥ ९
तांस्तु चिच्छेद मघवा क्षुरप्रैः पञ्चभिर्द्रुतम् । जग्मतुस्तौ महावीर्यौ समरे विजयैषिणौ ॥ १०
अन्योन्यं सहसा वेगाच्छरैश्चिच्छे(च्छि)दतुः शरान्[+] । विभे(भि)दातेऽथ गात्राणि विशिखैर्भिदुरोपमैः
अत्यपूर्वं कृतं कर्म ताभ्यामेव रणे भृशम् । लाघवं शरसंघानां ग्रहमोक्षं सुदुर्लभम् ॥ १२
दृष्ट्वा तु विस्मयं जग्मुर्देवासुरगणास्तदा । एतस्मिन्नन्तरे दैत्यो मायास्त्रं प्रमुमोच ह ॥ १३
विशिखाः शतशस्तत्र विनिश्चेरुः समन्ततः । शक्रः कोपात्पुनः शीघ्रं धनुरुद्यम्य वीर्यवान् ॥ १४
जघान विशिखैरुग्रैः सर्वगात्रेषु संचलन् । ततो मार्गणसाहस्रैरष्टभिस्त्वधिकं त(कैस्त)था ॥ १५
विभे(भि)दाते ततोऽन्योन्यं चिच्छे(च्छि)दाते परस्परम् । शरैर्निरन्तराकाशं ददृशुस्तत्र संयुगे ॥
निपतन्ति धरापृष्ठे खड्गपातैः सहस्रशः । एवं सुदीर्घकाले तु गते तस्मिन्महाहवे ॥ १७
मायास्त्रं दर्शयामास क्रूरकृन्नमुचिस्तदा । तमसं त्रिषु लोकेषु कृतं स्याच्च निरन्तरम् ॥ १८
परस्परं न पश्यन्ति देवासुरगणा भृशम् । सूर्यचन्द्रग्रहाणां च वह्नीनां च दिवौकसाम् ॥ १९
तस्मिंस्तमसि दुष्पारे गभस्तिर्नैव दृश्यते । दैत्यस्य च ततस्तूर्णं शरैरग्निशिखोपमैः ॥ २०
विभग्नाः सर्वदेवाश्च शक्रश्च रणसंमुखे । शरैर्विभिन्नदेहास्तु निपेतुर्धरणीतले ॥ २१
प्रभग्नाश्चापरे शूराः संयान्ति च दिशो दश । कूटं तस्य परिज्ञाय सर्वदेवार्चितो हरिः ॥ २२
सौम्यमस्त्रं मुमोचाथ दिवि सूर्यशतप्रभम् । [2]विलम्बितं समालोक्य शक्त्या च बहुघण्टया ॥ २३
जघानोरसि दैत्यस्य स पपात व्यथान्वितः । चिरात्स लब्धसंज्ञश्च दैतेयः क्रोधमूर्छितः ॥ २४
गत्वा वेगात्सुरश्रेष्ठमैरावतं दधार ह । त्रासयामास सुतरामिन्द्रस्य द्विरदं रुषा ॥ २५
धृत्वा[3] स च गजं सेन्द्रं मुमोच धरणीतले । ततो भूमिगतः शक्रः कश्मलं च क्षणं गतः ॥ २६
अवप्लुत्य स दैत्येन्द्रो गजदन्तान्तरास्थितः । चक्रं ग्रहीतुकामस्य वधार्थं यूथपस्य हि ॥ २७
असिनाऽसुरमुख्यस्य शिरश्छित्त्वा निपातितः । सर्वे प्रजहृषुर्देवा गन्धर्वा ललितं जगुः ॥
मुदितास्ते च मुनयः स्तुवन्ति[4] सुरसत्तमम् ॥ २८

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे द्वितीयनमुचिवधो नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०७८६

---

+ संधिरार्षः ।

---

१ झ. पुरं नेष्यामि भास्करे । व्या° । २ झ. विलंविलं । ३. ज. °त्वा आशु ग° । ४ झ. °न्ति च बलैर्युतम् ।

अथ सप्ततितमोऽध्यायः ।

व्यास उवाच—

दिव्यं रथं समास्थाय धनुर्हस्तो बलैर्युतः । गत्वा च माधवं संख्ये देवासुरगणाग्रतः ॥ १

क्रोधेन महताऽऽविष्टो मधुर्निर्जरमर्दनः । अब्रवीत्परुषं वाक्यमव्ययं हरिमीश्वरम् ॥ २

नारायण न जानासि युद्धधर्ममितः कथम् । अन्यायाद्दुर्वधोपायं कृत्वा नष्टो न शोचसे ॥ ३

अनेन पङ्कयोगेन व्यवहाराकृतस्य च । सुरत्वं चोपनष्टं स्यादन्यां सृष्टिं करोम्यहम् ॥ ४

त्वामेव निहनिष्यामि सह देवगणैः शरैः । इत्युक्त्वा धनुरादाय जघान विशिखैर्विभुम् ॥ ५

माधवस्तान्विभेदाथ शरैर्वज्रसमप्रभैः । बहुभिः सर्वगात्रेषु जघान स मधुं ततः ॥ ६

मायया घटितास्तेन दैत्याश्च सुरसत्तमाः । ये वै शूराश्च रुद्राद्यास्त्रिदशाः सत्त्वधारिणः ॥ ७

देव्यो नानाविधाश्चापि सायुधा वाहनान्विताः । सेनान्यो गणपा देवा लोकेशहरविष्णवः ॥ ८

अन्ये ग्रहादयो देवाः सर्वे युध्यन्ति संगताः । विनष्टाश्च तदा देवा मधोर्वै मायया ध्रुवम् ॥ ९

संमुखे विमुखे चैव शरशक्त्यृष्टिद्विष्टिभिः । पतन्ति सहसा देवा भूमौ शस्त्राभिपीडिताः ॥ १०

एतस्मिन्नन्तरे विष्णुर्गृहीत्वा च सुदर्शनम् । असुरान्मायया युक्ताञ्जघान रणमूर्धनि ॥ ११

अथ तेषां शिरांस्येष च्छित्त्वा चैव सहस्रशः । पातयामास देवेशो दैत्यानां च दुरात्मनाम् ॥ १२

एवमन्यान्विभुर्दैत्यान्द्रावयामास संगरात् । तं दृष्ट्वा मुनयो देवाः सर्वे विस्मयमाययुः ॥
कर्णे कर्णे प्रजल्पन्ति देवा मुनिगणास्तदा ॥ १३

मुनिदेवा ऊचुः—

सदा देवैकगोप्ता च हरिरव्यय ईश्वरः । सर्वसाक्षी त्वयं देवो दैत्यजिष्णुर्युगे युगे ॥ १४

कथय(थं ह)न्ति सुरान्सर्वान्कल्पान्त इह कथ्यते ॥ १५

व्यास उवाच—

एतस्मिन्नन्तरे दूरे मधुर्मायां प्रयोजिता । हररूपधरो भूत्वा अब्रवीद्धरिमव्ययम् ॥ १६

मधुरुवाच—

दैत्यानामग्रतः पाप रणे देवान्समन्ततः । हत्वा किं ते शिवं चाद्य धर्मः कीर्तिर्यशो गुणः ॥ १७

+महदुन्मत्तसद्भावान्न जानासि परान्स्वकान् । अतस्त्वां निशितैर्बाणैर्नयामि यमसादनम् ॥ १८

व्यास उवाच—

एवमुक्त्वा शरैरुग्रैर्जघान केशवं रणे । निचकर्त शरांस्तांस्तु माधवो वाक्यमब्रवीत् ॥ १९

माधव उवाच—

जानामि त्वां रणे दैत्य हररूपधरं प्रियम् । शूरं शूरविकर्माणं मधु(धुं) मायानियोजितम् ॥
मिथ्यालोकं प्रदास्यामि पातयित्वा रणाजिरे । २०

---

+ आत्वाभाव आर्षः ।

---

१ ग. घ. ञ. °वीत्पुरु° । २ घ. शोभसे । ३ घ. °रैः । पश्य मे चाद्भुतां शक्तिं मायां च तपसाऽर्जिताम् । तमब्रवीन्महातेजा गर्जन्तं लोकभीषणम् । देवद्विजहितार्थाय पश्चौर्य(?)सहकारिणम् । निर्कृतिं क्रूरलोद्धारं गेय उच्छादनं परम् । उक्तवन्तं सुरश्रेष्ठं जघान दशभिः शरैः । चिच्छेद च तदा विष्णुः शरैराशीविषोपमैः । माध° । ४ घ. ज. °घानाऽऽशु समन्ततः । ५ झ. °या बाधितः सोऽभूद्दैत्यस्त्वसुरसत्तमः । ये । ६ घ. °म् । क्रूरं क्रूर° ।

व्यास उवाच—

एतस्मिन्नन्तरे तीक्ष्णैः शरैर्विव्याध संयुगे । जटिलं वृषकेतुं च वृषभस्थं महेश्वरम् ॥ २१
तयोर्युद्धमतीवाऽऽसीद्देवदानवयोस्तदा । परस्परं भिन्दतोश्च च्छिन्दतोश्च शराञ्शरैः ॥ २२
क्षुरप्रेण धनुस्तस्य चिच्छेद हरिरव्ययः । ततश्च पातयामास घोटकं वृषरूपिणम् ॥ २३
स दैत्यः शूलहस्तोऽथ प्रदुद्राव जगत्पतिम् । भ्रामयित्वा ततः शूलं जघान परमेश्वरम् ॥ २४
त्रिभिश्चिच्छेद बाणैश्च शूलं कालानलप्रभम् । ततः क्रूरो महाबाहुर्मधुर्मायातिमायिकः ॥ २५
देवीरूपं समास्थाय सिंहस्थः प्रययौ हरिम् । शरैर्बहुविधैर्विष्णुं जघानैवाब्रवीद्वचः ॥ २६

मधुरुवाच—

स्वामी तु मे सुरश्रेष्ठ त्वयैव पातितो युधि । अहं त्वां च हनिष्यामि सुतौ स्कन्दविनायकौ २७

व्यास उवाच—

उक्तवन्तं च दैतेयं जघान बहुमार्गणैः । स पपात महीपृष्ठे गतासुर्लोहितोद्गिरः ॥ २८
पितरौ निहतौ दृष्ट्वा मायाबद्धो महाबलः । स्कन्दः शक्तिं समादाय मायायोधयितुं हरिम् ॥
ततो धाताऽब्रवीद्वाक्यं स्कन्दं मोहप्रपीडितम् ॥ २९

ब्रह्मोवाच—

पश्य ते पितरौ दूरे पश्यन्तौ युद्धमीदृशम् । अन्तरिक्षे भ्रमन्तौ च संस्थितौ लोकसाक्षिणौ ॥ ३०

व्यास उवाच—

एतच्छ्रुत्वा तु तौ दृष्ट्वा तत्रैवान्तरधीयत । ततो धुन्धुश्च [३]सिन्धुश्च भ्रातरौ बलदर्पितौ ॥ ३१
वधं प्रति हरेर्युद्धे पेततुर्गरुडोपरि । खड्गहस्तं च धुन्धुं च सगदं [४]सिन्धुमेव च ॥ ३२
चिच्छेद नन्दकेनैकं गदयाऽऽसादयत्परम् । पेततुस्तौ धरापृष्ठे प्रवीरौ क्षतविक्षतौ ॥ ३३
मधुस्तदाऽगमत्तूर्णमन्तर्धानं तमोवृतः । पातयामास विष्णौ च मायया [५]शैलपर्वतान् ॥ ३४
ततस्तान्[६]पर्वतांश्छित्त्वा तमसोऽन्तर्गतो युधि । क्रोधात्सुदर्शनेनैव शिरश्छित्त्वा निपातितः ॥ ३५
ततो ब्रह्मादिभिर्देवैः शंभुना त्रिदशैरपि । मधुसूदन इति ख्यातिर्विष्णोर्लोकेषु [७]कारिता ॥ ३६

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे मधुवधो नाम सप्ततितमोऽध्यायः ॥ ७० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०८२२

---

अथैकसप्ततितमोऽध्यायः ।

---

व्यास उवाच—

ततो वृत्रो महातेजा दैत्यानां प्रवरो युधि । दिग्गजाढ्यं गजारूढः प्राद्रवद्बलसूदनम् ॥ १
आगच्छन्तं ततो वृत्रं शरैः कालानलप्रभैः । विव्याध सर्वगात्रेषु द्विरदस्थो महाहवे ॥ २
ततो वृत्रस्तु शीर्षे [८]च जिष्णोरेव पतत्रिणा । विव्याध सहसा तेन स चचाल महाबलः ॥ ३
आत्मानं च समाश्वास्य धनुरुद्यम्य वीर्यवान् । ववर्ष शरवर्षेण तस्य दैत्यस्य विग्रहे ॥ ४
शरांश्छित्त्वा बिभेदाऽऽशु शरैराशीविषोपमैः । शतक्रतुं महावीर्यं सर्वदेवाधिपं युधि ॥ ५

---

१ ग. घ. ज. सूतं च । २ घ. ज. क्रुद्धो । ३ घ. ज. सुन्धुश्च । ४ घ. ज. सुन्धुमेव । ५ घ. शरपं । ६ ग. घ. ज. न्पतितां । ७ ग. घ. ज. गीयते । ८ ग. घ. ज. ध शतशस्तेन ।

ततः शरसहस्रैस्तु दैत्यं विव्याध देवराट् । परस्परं शरा यान्ति [+हेमरत्नविभूषिताः ॥ ६
संचरन्ति यथा वाता वृत्ताः शतसहस्रशः । वियत्पथि शरा यान्ति] यथा सप्ताश्वरश्मयः ॥ ७
एवं शरसहस्रैस्तु विभे(भि)दाते परस्परम् । मनोजवसमाः शीघ्रा गाढाः शिखरिणो यथा ॥ ८
वाडवानलसंस्पर्शाः खगा वज्रैरभेदकाः । तयोर्धनुष्मतोर्युद्धे शरास्तुल्यगुणान्विताः ॥ ९
एवं क्रमेण युद्धे च अहोरात्रमवर्तत । महेन्द्रो द्विरदं तस्य शूलेनैव जघान ह ॥ १०
स निपत्य महीपृष्ठे लाघवात्स्वरथं ययौ । रथस्थस्तस्य देवस्य शक्त्या चैरावणं दृढम् ॥ ११
विभेद लाघवेनाऽऽशु वज्रेणेव महागिरिम् । शुशुभे कम्पमानस्तु सेन्द्रः स च महागजः ॥ १२
ततः शक्तिं समादाय आविध्य मघवाऽसुरम् । विभेदोरसि दैत्यस्य स पपात रथोपरि ॥ १३
क्षणात्संज्ञां समालम्भ्य स विनद्य पतत्रिणा । विभेद समरे शक्रं स ततः कश्मलं गतः ॥ १४
इन्द्रः संज्ञां पुनः प्राप्य जघान विशिखैः शितैः । शतकोटिसमैर्बाणैरर्दितो व्यथयाऽन्वितः॥ १५
ततो वृत्रो महाशूलं प्राक्षिपन्निर्जरेश्वरे । शांभवास्त्रं च देवेशो वैष्णवास्त्रं मुमोच ह ॥ १६
उभयोरन्तरे चास्त्रे वह्निकूटसमप्रभे । अन्योन्यं जघ्नतुस्तत्र स्फुलिङ्गानि विमुञ्चती ॥ १७
स्पर्शने च स्फुलिङ्गानामुभयोः सेनयोर्भटाः । न शक्ताः संमुखे स्थातुं शलभा ज्वलने यथा १८
दग्धाः पेतुः पृथिव्यां च दिशः सर्वाः प्रदुद्रुवुः । देवदानवयोर्वीराः शून्यस्तत्राभवद्रणः ॥ १९
स्वं स्वं श(स्वम)स्त्रं समाहूय चक्रतुः सुभृशं तथा। अस्त्रं(स्त्रं)निरस्तकं दृष्ट्वा स दैत्यः क्रोधमूर्छितः
मायया शैलसंदोहमस्त्रं शक्रे मुमोच ह । वाणौघैः शैलसंघातं प्रचिच्छेद रणे हरिः ॥ २१
अघोरं प्रासृजद्दैत्यः पुरुहूते महाबले । कोटिकोटिसहस्राणि जन्तूनां प्रवराणि च ॥ २२
सिंहशार्दूलभल्लाख्या वृकव्याघ्रमहागजाः । दन्दशूकादयः सत्त्वाः प्रधावन्ति सुरेश्वरम् ॥ २३
क्षुरप्रैरर्धचन्द्रैश्च भल्लैः शिलीमुखैस्तथा । असंप्राप्तान्प्रचिच्छेद मघवा परवीरहा ॥ २४
ततो वृत्रो महाबाहुर्धनुरुद्यम्य वीर्यवान् । विभेद शरसाहस्रैर्वज्रकल्पैः शतक्रतुम् ॥ २५
क्षुरप्रैश्छित्त्वा शक्रश्च धनुस्तस्य चकर्त च । सूतं चाश्वान्पृथिव्यां च पातयामास तत्क्षणात् ॥ २६
सकण्टकां गदां भीमां संपूज्यासुरसत्तमः । जघान पविनः शीर्षे मोहाद्दन्ती क्षितिं ययौ ॥ २७
सगदः सर्वदेवेशो धरणीं समुपस्थितः । ततस्तयोर्गदायुद्धमवर्तत मुहुर्मुहुः । २८
तयोः प्रहरतोः शब्दो गदापाताद्भवेद्ध्रुवम् । आवर्तपरिवर्तं च चक्रधन्वं पुनः पुनः ॥ २९
ऊर्ध्वमध्यप्रहारं च पार्श्वयोरतिभीषणम् । बभूवैवं तयोर्युद्धं लोकालोकभयंकरम् ॥ ३०
दृष्ट्वा देवगणाः सिद्धा दानवा विस्मयं गताः । युध्यमानौ तु तौ वीरौ मृत्युसंशयमागतौ ॥ ३१
देवदानववीराश्च द्रष्टुकामा बभासिरे । ईशब्रह्मादयः खे तु स्थिता द्रष्टुं तदद्भुतम् ॥ ३२
तयोर्हुंकारशब्देन गदापातस्वनेन च । ऊर्ध्वोर्ध्वमगमच्छब्दो ह्यशनेश्चोपजायते ॥ ३३
भग्ने गदे द्वयोरेव करः संपुटितस्तयोः । एवं चैवार्धयामेन तयोरस्त्रे विभे(भि)दतुः ॥ ३४
एतस्मिन्नन्तरे वीरौ खड्गचर्मधरौ तदा । पत्तियुद्धं महाघोरमाहवे संप्रचेरतुः ॥ ३५
निस्त्रिंशौ विद्युदुल्काभौ तयोर्गात्रे च चर्मणी । दृश्येते सर्वलोकैश्च लाघवाद्विस्मयं गतैः ॥ ३६
चिच्छिदाते तयोरेव चर्मणी बहुवर्णके । भीष्मकं बलयुद्धं च तयोरेवं प्रवर्तते ॥ ३७
मण्डलं चक्रधन्वं च लाघवं च(वेन) परिप्लुतम् । वृत्रवासवयोर्युद्धं वृत्रवासवयोरिव ॥ ३८
केशान्वृत्रस्य उत्प्लुत्य संप्रधृत्यासिना द्रुतम् । शिरश्छिच्छेद सहसा मघवा रणमूर्धनि ॥ ३९

+ धनुश्चिह्नान्तर्गतः पाठो ग. घ. ज. पुस्तकस्थः ।

जयशब्दस्ततस्त्वासीद्देवानां च समन्ततः । प्रोत्फुल्लहृदया देवा मघवन्तमपूजयन् ॥ ४०
देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः । गीतं गायन्ति गन्धर्वा मुनयः स्तुतिपाठकाः ॥ ४१
भीताः पलायिताः सर्वे दैत्यास्त्यक्तायुधा दिशः ॥ ४२

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे वृत्रवधो नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०८६४

---

अथ द्विसप्ततितमोऽध्यायः ।

---

व्यास उवाच—

चतुर्भिस्तुरगैर्जुष्टं रथं सूर्यसमप्रभम् । त्रैपुरिः संरुरोहाथाब्रवीद्वाक्यं गणाधिपम् ॥ १

त्रैपुरिरुवाच—

[*तव तातेन मे तातो हतः पूर्वं कुधीमता] । तस्मात्त्वामद्य विशिखैर्नयामि यमसादनम् ॥ २

व्यास उवाच—

ततस्तमब्रवीद्देवो गणेशस्त्रिपुरात्मजम् ।

गणेश उवाच— ३

तव तातेन दुष्टेन सुराणामहितं पुरा । कृतं कर्म महत्पापं श्रुतं नो जनकेन हि ॥ ४
पापकर्मरतं दुष्टं ज्ञात्वा ज्ञानबलेन च । अवधीत्तं शरैकेण पितरं ते बलेन च ॥ ५
पङ्कात्प्रतारितो मोहात्प्रेषितो यममन्दिरम् । त्वां चाहं तत्पथं दैत्य प्रेषयामि क्षणादिह ॥ ६

व्यास उवाच—

उक्तवन्तं महाप्राज्ञं सुराणां च गणाधिपम् । विव्याध दशभिस्तीक्ष्णैः कालानलसमप्रभैः ॥ ७
ततः शरसहस्रैस्तु दैत्यं विव्याध साहसात् । यमदण्डसमैर्बाणैः क्षुरप्रैश्च शिलीमुखैः ॥ ८
कङ्कपत्रैर्महातीक्ष्णैर्वज्रानलसमप्रभैः । [+स दैत्यस्तत्क्षणादेव क्षतजेन परिप्लुतः ॥ ९
क्रोधाद्द्विगुणताम्राक्षः क्षुरप्रैश्च शिलीमुखैः] । विचकर्त शरांश्चास्य लम्बोदरः सुरार्चितः ॥ १०
पुनर्विव्याध विशिखैः सहस्रैर्भिदुरोपमैः । शरैरर्दितसर्वाङ्गो मूर्छितस्त्वपतद्भुवि ॥ ११
ततो भद्रश्च सौभद्रो भीषणो निर्जरान्तकः । स्वां स्वां गदां समादाय दुद्रुवुस्तं विनायकम् ॥ १२
युगपत्ते गदापातैर्निजघ्नुर्गणनायकम् । लाघवात्तु वृथा कृत्वा गदास्तेषां महाबलः ॥ १३
भद्रकस्य तु शीर्षे च पर्शुना चाहनत्तदा । सौभद्रस्योत्तमाङ्गं च असिना संनिपातितम् ॥ १४
भीषणस्य कुठारेण खड्गेन निर्जरान्तकम् । पातयित्वा च हेरम्बो महागिरिसमांस्तदा ॥ १५
चतुरो गणमुख्यांश्च अन्यांश्चापातयद्द्विषः । ततः संज्ञां समालभ्य त्रैपुरिश्चासुरोत्तमः ॥ १६
समारुह्य रथं स्वं च जघान सुरसत्तमम् । विशिखैरर्धचन्द्रैश्च क्षुरप्रैर्भल्लकैस्तथा ॥ १७
तांस्तु चिच्छेद धर्मात्मा पुनर्विव्याध तं शरैः । चतुर्भिः सैन्धवांश्चैव शरैकेण च सारथिम् ॥ १८
शरैः संपातयामास धरण्यां गणनायकान् । लाघवात्तु रथं चान्यं गत्वा त्रिपुरनन्दनः ॥ १९
विशिखैर्वज्रसंकाशैः संबिभेद गणाधिपम् । रुधिरेणावसिक्ताङ्गो रुषा घोरयमप्रभः ॥ २०

---

* धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो ग. पुस्तकस्थः ।

---

१ घ. °स्मात्त्वां निहनिष्यामि शरैरग्निशिखोपमैः । त° ।

ललाटे च त्रिभिर्बाणैः सप्तभिश्च स्तनान्तरे । चतुर्भिर्नाभिदेशे च पञ्चभिर्मुष्टिमस्तके(?) ॥ २१
संविभेद महाक्रोधो बलिनं शंभुनन्दनः । शरैरर्दितसर्वाङ्गः स दैत्यो रणमूर्धनि ॥ २२
कश्मलं परमं गत्वा संपपात रथोपरि । ततः सूतेन धारेण अपनीतो रणाजिरात् ॥ २३
विमुखं नाहनच्छूरो विनायकः सुरार्चितः । चिरात्संज्ञां स संलभ्य यन्तारं चाब्रवीद्वचः ॥ २४

त्रैपुरिरुवाच—

गच्छ सूत रणे भीरु(रुं) विनायकं हरात्मजम् ॥ २५

व्यास उवाच—

ततो यन्ताऽब्रवीद्वाक्यं सत्यं पथ्यं च कोमलम् ॥ २६

सारथिरुवाच—

हरात्मजशरान्सोढुं कः समर्थो रणाजिरे । तस्मान्मोहगतस्त्वं च मयाऽऽनीतः प्रभासुत ॥
एतज्ज्ञात्वा त्विदानीं भो यद्युक्तं तद्विधीयताम् ॥ २७

व्यास उवाच—

एतस्मिन्नन्तरे राज्ञा प्रेरितः कवि(रि)सत्तमः । ओषध्यादिप्रयोगेण गजः संज्ञामबोधयत् ॥ २८
कारयेच्छतगुणं प्राणं प्राणं च जयमादिशत् । प्राग्जलं मन्त्रितं दत्त्वा रुरोधास्याङ्कव्रणान् ॥२९
स गजो दशनैरेव स्फोटयामास वै गिरिम् । एवं शतसहस्राणि सैन्यानि सैन्यपालकान् ॥ ३०
पातयामास समितौ गजः परमदुर्जयः । स दैत्यस्तस्य पृष्ठस्थः शरैः कालानलप्रभैः ॥ ३१
हत्वा चापातयच्चोर्व्यां मुख्यमुख्यान्सुराधिपान् । शरैस्तस्य तथा देवा यमदण्डसमप्रभैः ॥ ३२
निपतन्ति महावीर्या रुधिरौघपरिप्लुताः । यस्मिन्यस्मिंश्च मार्गे तु स दैत्यः सगजो गतः ॥ ३३
तत्र तत्र चकाराऽऽशु भीषणं संचितं शरैः । गजेन पातिताः केचिद्गजारोहेण चापरे ॥ ३४
वेगेन भ्रमणेनैव सुराः केचित्प्रतापिताः । एवं सुरगणाध्यक्षाः शस्त्रास्त्रैर्विविधैश्च तम् ॥ ३५
सगजं युद्धनिर्भीता निजघ्नुर्बहुभिः शरैः । तथाऽपि तद्गजं योद्धुं न शक्तास्ते महाबलाः ॥ ३६
क्षिप्रं तांस्तु गजो दन्तैस्त्रैपुरोऽपातयच्छरैः । न गता ये धरण्यां च देवा जर्जरविग्रहाः ॥ ३७
शरण्यं गणपं जग्मुर्भीतास्ते वेदनातुराः । देवानां कदनं दृष्ट्वा गणाधीशः प्रतापवान् ॥ ३८
सगजं ताडयामास वज्रानलसमैः शरैः । सगजो वेगसंरुद्धः शरेण च समुत्थितैः ॥ ३९
अथो तौ द्वौ शरैरेव विभिदाते परस्परम् । उभौ तौ नर्दमानौ च अन्योन्यं जयमैच्छताम् ॥४०
शोणितैर्लिप्तसर्वाङ्गौ वीरमुख्यौ सुरासुरौ । अथाऽऽखुं स गजो मत्तो विभेद दशनैः स्वकैः ॥४१
आखुनाऽभिद्रुतो नागो घोरयुद्धं तयोः परम् । अथोर्ध्वं संविभागे च चतुर्भिर्युद्धमद्भुतम् ॥ ४२
सशब्दं तुमुलं युद्धं सर्वलोकभयंकरम् । दशनैर्दशनैरेव शरैरेव शरोत्तमैः ॥ ४३
तद्घोरमभवद्युद्धं देवदानवसंगरे । आखुको भेदयांचक्रे महानागं महाबलम् ॥ ४४
पर्शुना पृष्ठवंशाग्रे स्थित्वा तेनाहनत्पुनः । दैत्यस्य दशनद्वारे हृदि स्कन्धेऽथ लाघवात् ॥ ४५
सगजः स पपातोर्व्यां गतासुर्लोहितं वमन् । शशंसुर्मुनयो देवाः साधु साध्विति चाब्रुवन् ॥ ४६
गणपं पुष्पगन्धैश्च गन्धधूपैरपूजयन् । दुद्रुवुर्दैत्यसंघाश्च भीताश्च प्राणकातराः ॥
तथैव सह पार्वत्या सुरानाह महेश्वरः ॥ ४७

१ ग. घ. ज. °येत गुणं प्राणं रणैकजयमादिशत् । २ ग. घ. गणपः क्रोधमूर्छितः । स° । ३ ग. घ. °तः । उच्चावचौ श° ।

महेश्वर उवाच—

अत्रान्येऽस्त्रैरमोघैश्च दैत्यानाजघ्नुराहवे । यावत्तु सेनयोर्नैव जययुद्धं समापयेत्(?) ॥ ४८

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे देवासुरविमर्दे त्रैपुरविधो नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०९१२

---

अथ त्रिसप्ततितमोऽध्यायः ।

---

व्यास उवाच—

श्रुत्वा महेश्वराद्वाक्यं देवाः शक्रपुरोगमाः । दुद्रुवुर्दैत्यसंघांस्तान्सर्वे सर्वान्समन्ततः ॥ १
आजगाम महाबाहुः कुम्भो नाम महासुरः । नैर्ऋतो +यक्षराजानं गदया चाहनद्भृशम् ॥ २
गुह्यकेशो गदापातैर्जघान भृशमुत्तमम् । ततोऽन्योन्यं गदायुद्धमभवद्भीषणं तयोः ॥ ३
चक्रवृन्धमहाबन्धं पुरोबध्यनिबन्धनम् । प्राचुरं भीषणं यानं स्फोटतैलाभिवास्तिकम्(?)॥ ४
तेन कृत्वा महायुद्धमवसाने धनेश्वरः । पातयामास तं स्फोटं तस्य कुम्भस्य चोरसि ॥ ५
भग्नदंष्ट्रस्ततः कुम्भो निपपात महीतले । स्यन्दनस्थो महावीर्यो जम्भो हरिहयं तदा ॥ ६
जघान शरसंघैश्च तथैवैरावणं भृशम् । वासवो भिदुरेणैव संबिभेदासुरोत्तमम् ॥ ७
स पपात धरापृष्ठे गतासुर्लोहितोक्षितः । तथाऽऽरण्यं सुघोरं च अघोरं घोरमेव च ॥ ८
चतुरो गणमुख्यांश्च शक्त्या विभेद संयुगे । सेनानीश्चैव प्रत्येकं पातयामास लाघवात् ॥ ९
सौरभं शरसंघैश्च जयन्तो वशमानयत् । शक्तिहस्तं च संह्रादं यमदण्डं नरान्तकम् ॥ १०
हत्वा च पातयामास स भस्मीकृतविग्रहः । कालश्च खड्गपातेन पातयामास वैभ्रमम् ॥ ११
शक्त्या मृत्युर्विभेदाश्वं तथा निघृणकं रणे । अग्निना दह्यमानाश्च सप्तैते च महाबलाः ॥ १२
भद्रबाहुर्महाबाहुः सुगन्धो गन्ध एव च । भौरिको वल्लिको भीम एते सेनाग्रगामिनः ॥ १३
रणे संदग्धदेहाश्च पेतुरुर्व्यां गतासवः । पाशबद्धा महावीर्या वरुणस्य महात्मनः ॥ १४
पेतुरुर्व्यां महासत्त्वाः शूराः शूरभयानकाः । सूरस्य रश्मिजालेन निहताः पञ्च दानवाः ॥ १५
तुरुतुम्बरुदुर्मेधःसाधकासाधकाभिधाः । क्रूरक्रौञ्चरणेशानमोदसंमोदषण्मुखाः ॥ १६
शरैर्निपातिता दैत्याः संयुगे मातरिश्वना । नैर्ऋतो गदया भीमं पातयामास भूतले ॥ १७
शूलपातैश्च रुद्राणां शतशो दैत्यदानवाः । निपेतुः संयुगे भीताः संमुखा रणपण्डिताः ॥ १८
वसूनां शरपातैश्च शूराणां रश्मिमालिनाम् । मेघानां करकाभिश्च वज्रपातैः सुदारुणैः ॥ १९
निपातिता रणे दैत्याः शतशो बलशालिनः । कुबेरस्य गदापातैर्निपतन्ति सहस्रशः ॥ २०
शक्रस्य भिदुरेणैव भेदिता दैत्यपुंगवाः । असंख्याताः पतन्त्युर्व्यां स्कन्दशक्त्या तथा हताः २१
गणेशपर्शुपातेन पतन्ति मुख्यदैत्यकाः । वैकुण्ठकरमुक्तेन चक्रेण तीव्रकर्मणा ॥ २२
दैत्यानां प्रवराणां च शिरांसि निपतन्ति कौ । शमनो [*यमदण्डेन कोटिकोटिसहस्रशः ॥ २३
अपातयत्तदा भूम्यां कालखड्गेन दानवान् । मृत्युः शक्त्या तया दैत्यान्पाशी पाशेन चापरान्॥

---

+ समासान्तविधेरनित्यत्वान्न टच् । * धनुश्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. ज. ञ. पुस्तकस्थः ।

---

१ घ. ज. रणे । २ झ. चक्रं ब° । ३ ञ. °लानिवा° । ४ ञ. लाघवम् । ५ झ. °लिभिः । मे° । ६ घ. ज. ञ. मख्यमुख्यकाः ।

पातेन तक्षकादीनां] सुधांशोः शिशिरेण च । अश्वारोही खरो मन्यो[1] हनिपातस्तथा गजान्(?)
परिघेण गजं कुम्भे दैत्यानां नाशयत्ततः(?) । एवमश्वा गजाश्चैव लाघवात्संनिपातिताः ॥ २६
एवं सिद्धैश्च गन्धर्वैरप्सरोभिर्महाबलैः । अन्याभिर्देवताभिश्च समातृगणनायकैः ॥ २७
निपातिता महाघोरा एते प्रलयदानवाः । शरैश्च खड्गपातैश्च शूलशक्तिपरश्वधैः ॥ २८
यष्टिपरिघकुन्तैश्च पातयन्त्यसुरान्सुराः । एवं संक्षीयमाणेषु दैत्यराट्समपद्यत ॥ २९
आदित्यरथसंकाशं रथं रत्नविभूषितम् । शातकुम्भमयं दिव्यं घण्टाचामरभूषितम् ॥ ३०
पताकाध्वजसंपूर्णं रम्यं शक्ररथोपमम् । समारुह्य महावीरो हिरण्याक्षोऽसुराधिपः ॥ ३१
जघान शरजालैश्च दुर्निवार्यैः सुरासुरैः । स सैन्यानि गजान्वीरो रथांश्च सहसैन्धवान् ॥ ३२
पातयामास भूमौ च शतशोऽथ सहस्रशः । एवं चरन्स वृन्देषु निखिलेषु दिवौकसाम् ॥ ३३
पातयामास दैत्येन्द्रः शरौघान्मृत्युसंनिभान् । क्रमेण समरे चाथ देवसैन्यान्यमन्थत ॥ ३४
यथा पुष्करिणीवृन्दे गजः कञ्जवनं शनैः । शरपातैरथो वेगात्सिंहनादैः पुनः पुनः ॥ ३५
धरण्यां पतिता वेगात्तदा दैत्येश्वरस्य च । दशभिश्च सुरा(शरै)श्चैव जयन्तं स जघान ह ॥ ३६
रेमन्तं पञ्चभिर्बाणैः शक्रं पञ्चदशेन तु (च दशपञ्चभिः)। चित्ररथं विंशतिभिः पञ्चविंशतिभिर्गुहम्
हेरम्बं त्रिशरेणैव चत्वारिंशतिभिर्यमम् । तथैव कालं मृत्युं च पाणिना द्विगुणेन च ॥ ३८
गुह्यकेशं जगत्प्राणं दशभिर्दशभिः शरैः । षष्टिभिः सप्तभिश्चैव रुद्रान्सर्वान्पृथक्पृथक् ॥ ३९
वसून्सर्वांश्च स शरैः सिद्धगन्धर्वपन्नगान् । दशाष्टदशभिः षड्भिर्युद्धे देवानभिनच्चयसौ ॥ ४०
ओजौघादतिवीर्याच्च शीघ्रलाघवदर्शनात् । आपत्प्राप्ताः सुरा भीत्या प्रतिकर्तुं न चेश्वराः ॥ ४१
महेशशूलसंकाशैः शरैर्मर्मविभेदिभिः[2] । ताडिता निर्जरा युद्धे मूर्छिता धरणीं ययुः ॥ ४२
तस्यैव संमुखे स्थातुं न शेकुः प्रवराः सुराः । ततो देवा विनिर्धूतास्त्रिदिवेशेन संयुताः[3] ॥ ४३
शरण्यस्य हरेस्तत्र शरणं ताडिता ययुः । एतस्मिन्नन्तरे विष्णुः प्राह जिष्णुं खगेश्वरम् ॥ ४४

विष्णुरुवाच—

अधुना गच्छ दैत्यस्य संमुखं रणमूर्धनि ॥ ४५

व्यास उवाच—

नारायणस्ततस्तूर्णं गतस्तस्यान्तिकं जवात् । स रथं मार्गणैर्भित्त्वा विष्णुमारोधयज्जवम् ॥
रथस्थं संमुखे दैत्य उवाच विष्णुमव्ययम् ॥ ४६

दैत्यराज उवाच—

अन्यसृष्टिं करोम्यद्य हत्वा त्वां च सनिर्जरम् ॥ ४७

व्यास उवाच—

ततो विष्णुरुवाचेदं गर्जन्तं दैत्यपुंगवम् ॥ ४८

विष्णुरुवाच —

शक्तस्त्वं शर्धनो पाप (सर्जनोपाये) यदि युद्धे स्थिरो भव ॥ ४९

व्यास उवाच—

ततः शरशतैरेव जघान विष्णुमव्ययम् । असंभ्रान्तः स चिच्छेद यमदण्डनिभाञ्शरान् ॥ ५०
पुनः शरसहस्राणि प्रेरयामास तं रणे । तांश्च च्छित्वा शरैः शौरिस्तं च विव्याध मार्गणैः ॥ ५१

१ घ. 'न्यो दन्तिपाशस्त' । ज. 'न्यो हनिपाशस्त' । २ घ. 'मर्मान्तभे' । ३ ज. 'त्रिदशास्ते महाबलाः । श' ।

प्रगौरवादहार्याभैः संस्पर्शाद्वाडवानलैः । शरैश्च भेदकैस्तीक्ष्णैः खगमैश्च मनोजवैः ॥ ५२
लाघवात्केशवास्त्रस्य तूलशुष्कतृणोपमैः । हैमैः शरसहस्रैस्तु ताडितो दैत्यपुंगवः ॥ ५३
बाधयाऽभ्यर्दितः क्रुद्धो धृत्वा शिखरिणं रणे । जघान माधवं वेगाद्धिरण्याक्षो महाबलः ॥ ५४
तं च संचूर्णयामास गदया लीलया हरिः । एवं पर्वतसाहस्रं पातितं तु क्रमेण हि ॥ ५५
तथैव लाघवाच्चूर्णं हरिणा दानवारिणा । पुनर्बाहुसहस्राणि कृत्वाऽसौ दानवोत्तमः ॥ ५६
शरैः शक्तिभिरत्युग्रैः शूलैः पट्टिशकादिभिः । ववर्ष बहुभिर्विष्णुं क्रोधाविष्टेन चेतसा ॥ ५७
तांस्तु तेनैव प्रहितांश्चिच्छेद सुरसत्तमः । शरैर्दीप्तैर्महाघोरैः सुराणामभयंकरैः ॥ ५८
विव्याध सर्वगात्रेषु शंभुशूलोपमैः सवैः(शरैः) । दानवाधिपतिं संख्ये अव्ययो हरिरीश्वरः ॥ ५९
स च कश्मलितां गत्वा सर्वशक्तिमनुत्तमाम् । कालजिह्वोपमां घोरामष्टघण्टासमन्विताम् ॥ ६०
हरेरुरसि पीने च विद्युत्यापातयदद्भुतम् । शुशुभे स सुरश्रेष्ठस्तडित्वत्सान्द्रमेघवत् ॥ ६१
ततश्च चुक्रुशुर्दैत्या जयेति साधुवादिनः । ततश्चक्रधरश्चक्रं दैत्यसैन्ये व्यसर्जयत् ॥ ६२
तेषां शिरांसि संछिद्य माधवं पुनरागमत् । स दैत्यं शक्तिपातेन पातयामास वै रथे ॥ ६३
चिरात्संज्ञां समालभ्य वह्निबाणेन केशवम् । निजघान रणे क्रुद्धो हरिः कौवेरमाक्षिपत् ॥ ६४
ततो मुमोच मायास्त्रं चाऽऽसुरं चातिदारुणम् । सिंहव्याघ्रलुलायांश्च तद्वद्द्विपसरीसृपान् ॥ ६५
जघान समरे विष्णुं हिरण्याक्षः प्रतापवान् । ततो मायास्त्रसंभूतान्शस्त्रास्त्रौघान्रणे हरिः ॥ ६६
प्रचिच्छेद शरैरेव शूलेनैवमताडयत् । स विह्वलितसर्वाङ्गस्तत्क्षणं लोहितोक्षितः ॥ ६७
विचकर्ष हसन्विष्णुरसृग्विप्लुतविग्रहः । तच्छूलं च त्रिभिर्बाणैः प्रविव्याध सुराधिपः ॥ ६८
वरूथं सध्वजं केतुं रथं चैवाऽऽतपत्रकम् । यन्तारं च प्रचिच्छेद दशभिश्च हरिः शरैः ॥ ६९
पातिते च रथे दैत्यः संप्लुत्याथ रथं परम् । आरुरोह स दैत्येन्द्रः संमुखं चाकरोद्बली* ॥ ७०

---

*अस्मिन्नध्याये सप्ततितमाच्छ्लोकात्सार्धद्व्यधिकशततमश्लोकपर्यन्तं "घ" पुस्तके ग्रन्थो न विद्यते । तत्स्थाने यो ग्रन्थो वर्तते तस्यात्रासंबद्धत्वान्मूले संग्रहो न कृतः । किंतु कुशाग्रबुद्धीनामुपयोगार्थमसौ ग्रन्थोऽत्र टिप्पणीरूपेण दीयते—

तथैव च क्रमेणैव विष्णुः सर्वसुरार्चितः । तद्रथाः पातिता भूमौ निशितैः सायकैः पुनः ॥ १ ॥
एवमष्टौ रथास्तस्य पातयित्वा जनार्दनः । विग्रहं सतनुत्राणं भित्त्वा च बहुमार्गणैः ॥ २ ॥
पातयामास तद्भूमौ शरैः संपूर्णविग्रहम् । जाम्बूनदमयैर्बाणैर्बहुरत्नसुशोभितैः ॥ ३ ॥
शुशुभे पतितो दैत्यः सर्वालंकारभूषितः । तस्य देहनिमग्नाश्च शराः संव्यक्तविन्मुखाः ॥ ४ ॥
दृश्यन्ते सर्वभूतैश्च यथाऽद्रौ स्वर्णमक्षिकाः । चिरात्संज्ञां संलभ्याथ दानैर्द्विरदमच्युतम् ॥ ५ ॥
बलैरेवाप्रमेयं च चतुर्दंष्ट्रं मनोजवम् । चिच्छेद माधवो बाणैः शरांश्च संमुखागतान् ॥ ६ ॥
देवाश्चैरर्दिता घोरैः पतिताः प्रपलायिताः । स गतो निर्जरान्वेगान्समर्द दशनैः किरन् ॥ ७ ॥
अधावत्समरे तत्र कालमृत्युसमप्रभः । अग्नेः स्पर्शो यथा जन्तुः प्रसोढुं नैव शक्यते ॥ ८ ॥
तथा तस्याग्रतः स्थातुं न शेकुः समरे सुराः । ततः शरसहस्रैस्तु भित्त्वा च गजपुंगवम् ॥ ९ ॥
दैत्यराजं शतैर्भीमैः संबिभेद जनार्दनः । शरपीडायुतो नागः क्रोधादुन्मत्तमानसः ॥ १० ॥
संबिभेद महादंष्ट्रैः स्फोटयामास संयुगे । नागान्तकोऽपि नखरैर्बिभेद भिदुरोपमैः ॥ ११ ॥
नागस्य सर्वगात्रे च चञ्च्वा तनुं जघान ह । गलितास्त्रः पपातोर्व्यां वज्रपाते यथाऽचलः ॥ १२ ॥
पतितेऽत्र तथा नागे भिन्नोरश्छदविग्रहे । सधनुश्चाऽऽविशद्दैत्यो मायया [ग]गनं भयात् ॥ १३ ॥
तद्गजं च(जघ्ने) सुपर्णेन भक्षितं(तः) क्षुधया क्षणात् । दृष्ट्वा तस्य तु तत्कर्म भिया दैत्याः प्रदुद्रुवुः ॥ १४ ॥
वियद्गतो महादैत्यः शरैर्मायाभिमन्त्रितैः । जघान समरे शौरिं व्यालशृङ्खलवाग्भवैः ॥ १५ ॥
केचिच्छेदा हरिं यान्ति नागेशं तक्षकोपमाः । कालकूटविषा घोरा दैत्यमायाभिमन्त्रिताः ॥ १६ ॥
तानभिनद्रणे विष्णुरतिनागेश्वरो जवात् । छेदितः खादितस्ताभ्यां नागपातास्त्रसंचयः ॥ १७ ॥

ततो युद्धं महाघोरमभवद्रोमहर्षणम् । हिरण्याक्षस्य च हरेर्लोकविस्मापनं महत् ॥ ७१
अस्त्रयुद्धं तथाऽन्योन्यं कृतप्रतिकृतं च तत् । ततो नियुद्धे सततं दिव्यवर्षशतं गतम् ॥ ७२
ततो दैत्यो महासत्त्वो ववृधे वामनो यथा । मुखेन जग्राह रुषा त्रैलोक्यं सचराचरम् ॥ ७३

---

मोघे तत्र महास्त्रे च इन्द्रजालोपमं शरैः । रणे युद्धं चकारोच्चैर्नष्टदेहो महाबलः ॥ १८ ॥
सर्वं ध्वान्तमयं घोरं नीहारसलिलाचितम् । न खं धरातलं क्ष्माभृन्न लोकं सचराचरम् ॥ १९ ॥
एतद्दृष्ट्वा रणे विष्णुर्मुमोच शक्तिमुत्तमाम् । तया तद्भक्षितं तूर्णं तस्य मायाबलं भृशम् ॥ २० ॥
ततश्चान्तर्गतं दैत्यं बहुमायाधरं युधि । ज्ञानदृष्ट्या प्रसंलक्ष्य गोविन्दो बहुभिः शरैः ॥ २१ ॥
संस्तभ्य पातयामास सर्वदैत्यजनेश्वरम् । सोऽसुरो धरणीं प्राप्य धृत्वा [तु] आयसीं गदाम् ॥ २२ ॥
जघान गरुडं वेगात्सर्वप्राणैर्महाबलः । गदयाऽभ्यर्दितस्तार्क्ष्यः क्षणं मोहं विवेश ह ॥ २३ ॥
तं च दृष्ट्वा तथाभूतं पर्शुना [चा]हनद्धरिम् । कृत्वा पर्शुं महातीक्ष्णं नन्दकेन जनार्दनः ॥ २४ ॥
गरुडस्तस्य(स्यश्च) तस्यैव शिरस्तेनासिनाऽच्छिनत् । स पपात गतश्रीर्व्यां मन्दः पापः सविग्रहः ॥ २५ ॥
हते तस्मिन्महावीर्ये दैत्यमुख्ये महाबले । देवदुन्दुभयो नेदुः सर्वदेवैः समीरिताः ॥ २६ ॥
ततः शङ्खादिवाद्यानि अवाद्यन्त तथा परैः । देवानां सिंहनादेन तुमुलं खं प्रलक्ष्यते ॥ २७ ॥
गेयं जगुः सगन्धर्वा ननृतुश्चाप्सरोगणाः । स्तुतिं पठन्ति देवस्य हरेश्च नारदादयः ॥ २८ ॥
पारिजातादिभिः पुष्पैरन्यैश्च नन्दनोद्भवैः । धूपैः सचन्दनैर्गन्धैः सुरा विष्णुमपूजयन् ॥ २९ ॥

इति श्रीपद्मपुराणे सुरासुरविमर्दे हिरण्याक्षवधो नाम त्रिंशोऽध्यायः ॥ ३० ॥

तस्मिन्महोत्सवे रम्ये दैत्यवृन्दक्षयावहे । प्रोत्फुल्लहृदया देवा मुनयो ब्रह्मवादिनः ॥ १ ॥
प्रस्तुवन्ति हरिं प्रीत्या दैत्यघातिनमीश्वरम् । नमो नित्याय देवाय वरदायाघनाशिने ॥ २ ॥
जयाय निजघोषाय विश्वव्याप्ताय विष्णवे । त्वमेकः सर्वभूतेशः सर्वलोकधर प्रभो ॥ ३ ॥
सूक्ष्माणामतिसूक्ष्मस्त्वं श्रीधरः श्रीनिकेतनः । सर्वं विष्णुमयं चैव जगदेतच्चराचरम् ॥ ४ ॥
ज्ञानात्मकानां सर्वेषां मुख्यः स्वान्ते जगत्प्रिये । त्वच्छक्त्या मोहितं नाथ त्रैलोक्यं वैष्णवात्मना ॥ ५ ॥
अमोघाक्षय लोकेश भारतीकमलाप्रिय । शुद्धः सदैव भक्तश्च सदैव भक्तवत्सल ॥ ६ ॥
स्मरतः पुरुषस्यैव शतशोऽथ सहस्रशः । पुरुषांस्तारयस्यस्मान्दुर्गान्ते दुःखवासिनः ॥ ७ ॥
यः पुनः सर्वभूतेषु त्वन्मयं च प्रपश्यसि(ति) । नित्यमाराधयेद्यस्तु स च त्वत्पदवीं व्रजेत् ॥ ८ ॥
उद्धृत्य कुलकोटिं च त्वद्गृहेषु विलीयते । विशेषो जायते सोऽपि लोकानां तारणाय वै ॥ ९ ॥
सुरासुरमनुष्याणां साक्षिणामधिपो भवेत् । एवं त्वं वरदो नाथ त्वत्प्रिया हरिवत्सला(?) ॥ १० ॥
भुक्तिमुक्तिप्रदः शुद्धः सर्वदः सर्वतारकः । ज्ञानी ज्ञानमयस्तुभ्यं नमो वेदमयाय च ॥ ११ ॥
ध्यानगम्यं च ध्यानं च योगिनां प्रवरान्विताः । प्रणताः स्म वयं सर्वे वरदो भव केशव ॥ १२ ॥

भगवानुवाच—

प्रीतोऽहं वः सुराध्यक्षाः स्तोत्रेणानेन फन्विताः(पूजितः) । वरं वरय(वृणुत) सर्वज्ञा यद्वरो भावमास्थितः ॥ १३ ॥

देवा ऊचुः—

कृतं पूर्वं त्वयाऽस्माकं हितं पथ्यं युगे युगे । इदानीं यत्कृतं प्रीत्या पूर्वस्मादतिरिच्यते ॥ १४ ॥
हत्वा दैत्यगणान्सर्वाञ्जयोऽस्माकं सदा ध्रुवम् । किमद्य न कृतं भद्रं किं न दत्तं त्वया प्रभो ॥ १५ ॥
त्रैलोक्यस्य च राज्यं च सुखं भोग्यं यशः प्रियम् । यदीच्छसि पुनर्दातुं त्वमेवं किं करिष्यसि ॥ १६ ॥

श्रीभगवानुवाच—

अन्येषामपि दैत्यानां राक्षसानां च संयुगे । करिष्यामि वधं घोरं भवतां च हिताय वै ॥ १७ ॥
इत्युक्त्वा परमप्रीतो गतो विष्णुः स्वमन्दिरम् । गता देवाः पुनः स्वं स्वं प्रचक्रुः स्वाधिकारणम् ॥ १८ ॥
य इदं शृणुयात्पुण्यं देवानां विजयं हितम् । सर्वं तस्य भवेद्द्रव्यं विजयो धर्मसंचयः ॥ १९ ॥
सकृदुच्चारमात्रेण सर्वयज्ञफलं लभेत् । सर्वतीर्थाभिषेकाच्च सर्वदेवप्रपूजनात् ॥ २० ॥
यत्फलं लभते मर्त्यस्तत्फलं श्रवणाद्भवेत् । यः पठेत्पाठयेद्वाऽपि सर्वदैत्यपराजयम् ॥ २१ ॥
विजयं सर्वदेवानां तस्य पुण्यफलं शृणु । अश्वमेधसहस्राणि राजसूयशतानि च ॥
कृत्वा यत्फलमाप्नोति तत्फलं लभते नरः ॥ २२ ॥

भूमण्डलं समुद्धृत्य विवेश च रसातलम् । शेषाश्च विविशुर्दैत्यास्तमनु प्रीतिसंयुताः ॥ ७४
ततो विष्णुर्महातेजा ज्ञात्वा दैत्यबलं महत् । दधार रूपं वाराहं दैत्यराजजिघांसया ॥ ७५
धृत्वा क्रोडतनुं विष्णुर्विवेश तमनु द्रुतम् । तत्र गत्वा रसामूले रसातलगतां महीम् ॥ ७६
दृष्ट्वा स्वदंष्ट्रयोर्दध्रे लोकाधारां वसुंधराम् । तां धृत्वा गच्छतस्तस्य विष्णोरमिततेजसः ॥ ७७
समाजगाम दैत्येन्द्रो धृष्टिं वाग्भिस्तुदन्ननु । मायाक्रोडतनुर्विष्णुर्दुर्वचांसि सहन्नुषा ॥ ७८
जलोपरि दधारेमां धरां भूधर एव च । तस्यां न्यस्य स्वसत्त्वं च स चकार तदाऽचलाम् ॥७९
ततः पश्चात्स संलग्नो दैत्यराट्समुपस्थितः । क्रोधेन महताऽऽविष्टो जघान गदया हरिम् ॥ ८०
मायया सूकरो विष्णुस्तां गदां समवञ्चयत् । योगयुक्तो यथा मृत्युं कौमोदक्याऽहनच्च तम् ॥८१
ततः पुना रुषाऽऽविष्टो हिरण्याक्षो महाबलः । मुष्टिना प्राहरद्देवं दक्षिणस्यां भुजि(?) प्रभोः ८२
एवं युद्धं महाघोरं सव्यासव्यं गतागतम् । परिभ्रमणविक्षेपं कृतानुकरणं तथा ॥ ८३
तथा(दा) ब्रह्मादयो देवा युद्धं पश्यन्ति खे स्थिताः । स्वस्ति प्रजाभ्यो देवेभ्य ऋषिभ्यश्चेति चाब्रुवन् ।
ऊचुश्च देवदेवेशं विष्णुं वाराहरूपिणम् ॥ ८४

ब्रह्मादय ऊचुः—

मा क्रीड बालवद्देव जह्यमुं देवकण्टकम् ॥ ८५

व्यास उवाच—

ततो विष्णुर्महातेजा मायावाराहरूपधृक् । ब्रह्माद्यनुमतिं प्राप्य चक्रं प्राक्षिपदुल्बणम् ॥ ८६
सहस्रसूर्यसंकाशं सहस्रारं महाप्रभम् । दैत्यान्तकरणं रौद्रं प्रलयाग्निसमप्रभम् ॥ ८७
तच्चक्रं विष्णुना मुक्तं हिरण्याक्षं महाबलम् । चकार भस्मसात्सद्यो ब्रह्मादीनां च पश्यताम् ८८
दैत्यदेहे क्षयं नीते चक्रं चागमदच्युतम् । ततो ब्रह्मादयो देवाः शक्रमुख्याश्च लोकपाः ॥
दृष्ट्वा च विजयं विष्णोः स्तुवन्ति स्म समागताः ॥ ८९

देवा ऊचुः—

नताः स्म विष्णुं जगदादिभूतं सुरासुरे[3]ड्यं जगतां प्रपालकम् ।
यन्नाभिपद्मात्किल पद्मयोनिर्बभूव तं वै शरणं गताः स्मः ॥ ९०
नमो नमो मत्स्यवपुर्धराय नमोऽस्तु ते कच्छपरूपधारिणे ।
नमः प्रकुर्मश्च नृसिंहरूपिणे तथा पुनर्वामनरूपिणे नमः ॥ ९१
नमोऽस्तु ते क्षत्रविनाशनाय रामाय रामाय दशास्यनाशिने ।
प्रलम्बहन्त्रे शितिवाससे नमो नमोऽस्तु बुद्धाय च दैत्यमोहिने ॥ ९२
म्लेच्छान्तकायापि च कल्किनाम्ने नमः पुनः क्रोडवपुर्धराय ।
जगद्धितार्थं च युगे युगे भवान्बिभर्ति रूपं त्वसुराभवाय ॥ ९३
निषूदितोऽयं ह्यधुना किल त्वया दैत्यो हिरण्याक्ष इति प्रगल्भः ।
यश्चेन्द्रमुख्यान्किल लोकपालान्संहेलया चैव तिरश्चकार ॥ ९४
स वै त्वया देवहितार्थमेव निपातितो देववर प्रसीद ।
त्वमस्य विश्वस्य विसर्गकर्ता ब्राह्मेण रूपेण च देवदेव ॥ ९५

---

१ झ. °भ तु । मां° । २ ज. °सि दह° । ३ ज. °रेन्द्रं ज° ।

पाता त्वमेवास्य युगे युगे च रूपाणि धत्से सुमनोहराणि ।
त्वमेव कालाग्निहरश्च भूत्वा विश्वं क्षयं नेष्यसि चान्तकाले ॥ ९६
अतो भवानेव च विश्वकारणं न ते परं जीवमजीवमीश ।
यत्किंच भूतं च भविष्यरूपं प्रवर्तमानं च तवैव रूपम् ॥ ९७
सर्वं त्वमेवासि चराचराख्यं न भाति विश्वं त्वदृते च किंचित् ।
अस्तीति नास्तीति च भेदनिष्ठं त्वय्येव भातं सदसत्स्वरूपम् ॥ ९८
ततो भवन्तं कतमोऽपि देव न ज्ञातुमर्हत्यविपक्वबुद्धिः ।
ऋते भवत्पादपरायणं जनं तेनाऽऽगताः स्मः शरणं शरण्यम् ॥ ९९

व्यास उवाच—

ततो विष्णुः प्रसन्नात्मा उवाच च दिवौकसः । १००

विष्णुरुवाच—

तुष्टोऽस्मि देवा भद्रं वो युष्मत्स्तोत्रेण सांप्रतम् । य इदं प्रपठेद्भक्त्या विजयस्तोत्रमादरात् १०१
न तस्य दुर्लभं देवास्त्रिषु लोकेषु किंचन । य इदं शृणुयान्नित्यं पठेद्वाऽपि समाहितः ॥ १०२
न भयं विद्यते तस्य इह लोके परत्र च । गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ॥ १०३
तत्फलं समवाप्नोति कीर्तनाच्छ्रवणान्नरः । सर्वकामप्रदं नित्यं देवदेवस्य कीर्तनम् ॥
अतः परं महाज्ञानं न भूतं त्वागमेषु च ॥ १०४

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे देवासुरसङ्ग्रामसमाप्तौ विजयस्तोत्रं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३१०१६

---

अथ चतुःसप्ततितमोऽध्यायः ।

---

संजय उवाच—

येऽसुराश्च मृता युद्धे संमुखे विमुखेऽपि वा । गतिं तेषामहं ब्रह्मञ्श्रोतुमिच्छामि तत्त्वतः ॥ १
असंख्याता इमे दैत्यास्त्रैलोक्ये सचराचरे । अद्याप्यासन्गताः कुत्र एतन्मे शंस भो गुरो ॥ २

व्यास उवाच—

ये मृताः संमुखे शूरा दैत्यानां प्रवरा रणे । स्वयं प्राप्य च देवत्वं भोग्यमश्नन्ति शाश्वतम् ॥ ३
प्रासादा यत्र सौवर्णा नानारत्नविभूषिताः । सर्वकामप्रदा वृक्षाः स्वर्णदीतोयसंयुताः ॥ ४
पद्मोत्पलसुकह्लारैर्गन्धाढ्यैरन्यपुष्पकैः । दधिदुग्धाज्यखण्डैश्च युता पुष्करिणी शुभा ॥ ५
अतीवरूपसंपन्नाः सदैव नवयौवनाः । यत्र सन्ति स्त्रियो दिव्याः सर्वाभरणभूषिताः ॥ ६
तत्र राज्यं प्रकुर्वन्ति तथैव वसुधातले । एवं जन्माष्टकं प्राप्य धनिनोऽध्यक्षमन्त्रिणः ॥ ७
अर्धसंमुखगात्रेण दिवमश्नन्ति शाश्वतम् । विमुखाः कातरा भीता ये च मायाविनो रणे ॥ ८
ते यान्ति निरयं घोरं ये च देवद्विजद्विषः । पतितं मूर्छितं भग्नमन्ययोद्धारमाहवे ॥ ९
हन्तारो निरयं यान्ति ते च म्लेच्छाः कुवाचकाः । परन्यासापहर्तारो विमुखाः सन्ति तत्त्वतः ॥

---

१ ज. °वजीवनम् । य° । २ अ. भेदनष्टं । ३ ग. °न्मे संशयं मुने । व्या° । घ. °न्मे संशयं गु° । ४ घ. ज. °काः पुरा न्यासाच्च कूटाच्च विमुखा घ्नन्ति ।

रात्रौ वा विपिने नष्टे चोराः साहसकारिणः । सर्वाभक्ष्यरता मूढा म्लेच्छाः गोब्रह्मघातकाः ११
कुवाचकाः परे म्लेच्छा एते ये [1]क्रूरयोनयः । तेषां पैशाचिकी भाषा लोकाचारो न विद्यते १२
नास्ति शौचं तपो ज्ञानं न दैवं पितृतर्पणम् । दानश्राद्धादिकं यज्ञे सुराणां च प्रपूजनम् ॥ १३
पितॄणां च न शुश्रूषा द्विजदेवतपस्विनाम् । ज्ञानलोपादतस्तेषां मलशौचं न विद्यते ॥ १४
मातरं भगिनीं चान्यां गृहिणीं कामयन्ति च । सर्वो विपर्ययो लोकात्तदाचारो मलीमसः ॥ १५
तार्क्ष्यस्योद्वमनानां च अन्येषां गोत्रवासिनाम् । कुले जाताः सदा दैत्या येषां पुण्यमकारणम् ॥
दुर्गतिं च मृता यान्ति द्विजस्त्रीशिशुघातिनः । गवाशिनो दुरात्मानो ह्यभक्ष्यभक्षणे रताः ॥ १७
कीटयोनिं व्रजन्त्येते तरवश्च पिपीलिकाः । न मन्त्रेषु न देवेषु कल्पन्ते ते सुरद्विषः ॥ १८
अग्रजः सहजस्तेषां [2]सद्यो ग्राम्यवृत्तयः(?) । लोमकेशभुजः काकाः कव्यभक्ष्यरता भुवि ॥ १९
साहसाच्च व्रतं दानं स्नानं यज्ञादिकं च यत् । मत्स्यमांसादिषु प्रीता मृषावचनभाषिणः ॥ २०
सदाकामाः सदालोभाः सदाक्रोधमदान्विताः । वधबन्धरतोद्वेगा द्यूतसंगीतसंप्रियाः ॥ २१
कुभृत्याः कुजनप्रीताः पूतिग[3]न्धरता नराः । न देवेषु न वित्तेषु न धर्मश्रवणेषु च ॥ २२
स्तोत्रमन्त्रादिके पुण्ये यथाकार्येष्वनिश्चयाः । बहुरोगाधिरोषाश्च बहुरूपपरिच्छदाः ॥ २३
नरजातिषु दैत्यानां चिह्नान्येतानि भूतले । न जानन्ति परं लोकं न गुरुं स्वं न चापरम् ॥ २४
गर्भपूरणमिच्छन्ति नातिथिं न गुरुद्विजान् । न देवं न सुतं गोत्रं न मित्रं न च बान्धवम् ॥ २५
स्वप्ने दानं न जानन्ति भक्षणान्नपरिच्छदम् । गोपायन्ति धनं यस्मात्ते यक्षा नररूपिणः ॥ २६
प्राणान्तेऽपि धनं किंचिन्न ददन्ते च राजनि । ते यक्षा दुर्गतिस्थाश्च परार्थे भारवाहकाः ॥ २७
प्रेतानां लक्षणं यद्वा सर्वलोकविगर्हितम् । स्त्रीणां च पुरुषाणां च शृणुष्वैकमना मम ॥ २८
मलपङ्कधरा नित्यं सत्यशौचविवर्जिताः । दन्तकुन्तलवस्त्राणां वपुषो मलसंचयाः ॥ २९
[*गृहपीठादिपात्राणां सकृच्छौचं न रोचते । न पश्यन्ति सुखं स्त्रीणां विशन्ति कानने द्रुतम् ]
विघसोच्छिष्टपूतीनां भक्षणेऽभिरता भुवि । अन्नं पानं च शयनमन्धकारेषु रोचते ॥ ३१
कदाचित्स्वच्छता नास्ति क्वचिद्वा शुचिता तनौ । लक्षणं नरलोकेषु प्रेतानामीदृशं किल ॥ ३२
हिताहितं न जानन्ति मित्रामित्रं गुणागुणम् । पापपुण्यादिकं स्थानं स्नानं देवद्विजार्चनम् ॥ ३३
अरिं मित्रमुदासीनं न विन्दन्ति स्वभावतः । मर्त्यस्थाः पशवस्ते च ज्ञाय[4]न्ते बुद्धिसंमतैः ॥ ३४
बुद्ध्या नानात्वभावाश्च भ्रमन्ति च मृषा भुवि । यक्षरूपा नरास्ते च सर्वकर्मबहिष्कृताः ॥ ३५
एषां भेदं प्रवक्ष्यामि लक्षणं धरणीतले । विजाता मर्त्यलोकेषु पापस्यैवानुरूपतः ॥ ३६
मलीमसभुवि [5]प्रेस्थं नागरं छन्नरूपिणम् । विघसादिप्रभोक्तारं काकमाहुर्मनीषिणः ॥ ३७
अभक्ष्ये निरतः पापः कुक्कुरः पूतिसंप्रियः । प्रवृत्तः सर्वगुह्येषु भक्ष्याभक्ष्यसजीवनः ॥ ३८
भूम्यां पश्वादियोनीनां कुलेषु प्राप्तसंभवाः । शुनो विगृह्य हस्तेन म्लेच्छानां भक्षणप्रियाः ॥ ३९
विशेषाच्छूकराणां च तथा चरणयो[6]धिनाम् । पोषणे भक्षणे प्रीता पूतिगर्ह्येष्वसाधुषु ॥ ४०
पर्वते करणाद्वन्द्वे[6] काष्ठसंचयसंग्रहे । विज्ञेयास्ते सदा म्लेच्छाः क्षत्रियाणां भयाकुलाः ॥ ४१

* धनुश्चिह्नान्तर्गतः पाठः क. ज. ञ. पुस्तकस्थः ।

१ क. ख. ङ. च. ञ. कूटयोनयः । घ. ज. कूटयोधिनः । २ घ. ज. सद्गभ्यो ग्रामवृष्टयः । ३ ग. °गर्धर° । ४ ज. °न्ते वीरसं° । ५ ज. तथ्यं । ६ घ. °ते कारणे द्वंद्वे का° । ७ ग. घ. निवसन्ति ।

लोकानां नष्टधर्मे च सदाशौचविवर्जिते । कुलीनानां तदा म्लेच्छा भविष्यन्ति च दस्यवः ४२
[*धनिनोऽध्यक्षभावापि(हि) सर्वत्र विजयान्विताः। कुवाचा मध्यमध्ये तु ये ते पर्वतवासिनः ॥
अन्ये च भीरवो मर्त्या म्लेच्छास्तत्रैव साधवः] । तेषां संसर्गतोऽन्ये च संवन्धादन्नभोजनात् ४४
मैथुनात्तस्य योषासु तद्भावं च व्रजन्ति ते । तस्मिन्काले जनाः सर्वे दुःखरोगप्रतापिताः ॥ ४५
दुर्भिक्षान्नपरा मूढाः सदा राजप्रपीडिताः । तत्रासत्ये रता मर्त्याः सर्वशौचविवर्जिताः ॥ ४६
श्रुतिस्मृतिविलोपाश्च व्रतयज्ञविवर्जिताः । न श्रूयन्ते जनैरेव पुराणागमसंहिताः ॥ ४७
मद्यमांसप्रियाः पापाः सर्वभक्षाः सुदारुणाः । दारुणाचारनिरता नित्यं छलपरायणाः ॥ ४८
न पुष्णन्ति सुतास्तातं प्रसूमेव गुरूनपि । न शुश्रूषन्ति वै भृत्याः स्वामिनं गुणशालिनम् ॥ ४९
भर्तारं न स्त्रियः काश्चिच्छ्वशुरौ च स्व(जा)मातरः । नित्यकष्टा नरास्तत्र कलहश्च गृहे गृहे ॥ ५०
नृपा म्लेछाः सुरापाश्च तथा मन्त्रिपुरोहिताः । मनुष्यैश्च वलिस्तेषां मत्स्यैर्मांसैर्निरामिषः(?)॥५१
पाखण्डायासयोगेभ्यः प्रधाना गुणवार्तयोः । धनिकैः कोकिलैर्मन्दैर्व्याप्तं तैस्तु महीतलम् ॥ ५२
ततोऽन्योन्याप्रिया मूढा वने वा नगरेषु च । भक्ष्याभक्ष्यं सदाऽश्नन्ति मत्स्यमांसादिकं नराः ॥
वने द्विजातिभिश्चान्यैर्भुज्यते चानु पापकम् । भक्तिमन्तं पशुं चान्यत्सर्वे यान्त्यपुनर्भवम् ॥ ५४
पातयन्ति पितॄन्पापाः सर्वे ते पूर्वदेवकाः । पिशाचा राक्षसा ये च मर्त्यका गुह्यका ध्रुवम् ॥
एते चाविनयप्रीता न देवा न च मानुषाः ॥ ५५

संजय उवाच—

कथं च मर्त्यभावेषु लक्षं(क्ष्म) जानन्ति सात्त्विकाः । एतं मे संशयं नाथ दूरी कुरु ततस्ततः ५६

व्यास उवाच—

कृतपापानुरूपास्तु द्विजातिष्वन्यजातिषु । असुरा राक्षसाः प्रेताः स्वभावं न त्यजन्ति ते ॥५७
जाता ये चासुरा मर्त्ये सदा ते कलहोत्सुकाः । कुहकाः कचराः क्रूरा विज्ञेया राक्षसा भुवि५८
जनोद्विग्नादिकं दानं तथा देवार्चनं भुवि । उग्रभावाद्वरं लब्ध्वा राज्यं भुञ्जन्ति शाश्वतम्॥ ५९
जयं शौर्यादिकं पुण्यं पुनः पापक्षयं व्रजेत् । एवमुर्व्यां तथा नाके नागलोके यमालये ॥ ६०
अग्र्येण तपसा कश्चित्सुरत्वं लभते दिवि । वासुदेवं समाराध्य प्रह्लादः सुरपूजितः ॥ ६१
हरं तथाऽन्धको दैत्यः स्तुत्वा तत्सेवकोऽभवत् । तस्यैव गणमुख्यत्वं लेभे भृङ्गी महावलः ॥६२
एते चान्ये च वहवो वलिरिन्द्रो भविष्यति । गच्छन्ति सद्गतिं तात इहामुत्र च सर्वदा ॥ ६३
केचिद्दैत्यकुले जाताः पृथिव्यां सुरसत्तमाः । भावयन्ति पितॄन्सर्वाञ्शतशोऽथ सहस्रशः ॥ ६४
एकेनापि सुपुत्रेण कुलत्राणं च धीमता । एकोऽपि वैष्णवः पुत्रः कुलकोटिं समुद्धरेत् ॥ ६५
म्रियन्ते पुण्यतीर्थेषु मुक्तिक्षेत्रे च ज्ञानतः । ब्रह्मज्ञानविदो ये ते तारयन्ति तरन्ति च ॥ ६६
एका पतिव्रता नारी कुलकोटिं समद्धरेत् । जितेन्द्रियोऽपि धर्मात्मा द्विजदेवार्चने रतः ॥ ६७
क्षयेऽधर्मे कलौ शेषे पुरे जनपदेषु च। एको रक्षति धर्मात्मा पुरं ग्रामं जनं कुलम् ॥ ६८
विज्ञातं मे पुरा चाऽऽसीद्ब्राह्मणानां पुरं महत् । तत्र सर्वे द्विजाः शश्वत्संध्योपासनतत्पराः॥६९

* धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

१ ग. घ. सत्यशौ° । ज. ञ. सप्तशौ° । २ ग. घ. °च्छा वलवन्तो मुदान्विताः । ते°।३ ग. °ताः । ततो म्लेच्छव··· लोकाः कलिशेषगताश्च ये । म्लेच्छाः किंकरतां यान्ति धनलोभादसाधवः । ४ ग. घ. वर्णे वाऽनन्तकेषु च । ज. वर्णे वा नरकेषु च । ५ ग. पार्श्वक° । घ. पार्थक° । ६ झ. °र्त्यलोकेषु ।

वेदपाठरता धीरा देवातिथिद्विजार्चकाः । यज्ञव्रताग्निकर्माणः षट्कर्मपरिनिश्चयाः ॥ ७०
अतिकृच्छ्रे च तेषां वै न पापे वर्तते मनः । कुर्वन्ति सततं वृद्ध्यै व्रतं यज्ञं सनातनम् ॥ ७१
कदाचिद्दैवयोगाच्च गृहस्थश्च स कोविदः । वह्नौ जुहोति विप्रर्षिः प्राज्यं मन्त्रेण मन्त्रवित् ॥ ७२
तस्मिन्काले च तस्यैव मूत्रकृच्छ्रं सुदारुणम् । तत्प्रोज्झितुं गतः सोऽपि रक्षार्थं स्थाप्य चेटिकाम् ॥
तस्यास्त्वनवधानेन शुना प्राज्यं च भक्षितम् । भिया तया ततः पात्रं स्वीयमूत्रेण संभृतम् ॥७४
असंलक्ष्याजुहोदग्नौ स विप्रस्तु त्वरेण च । आश्चर्यं च ततो वह्नौ लक्षितं तेन तत्क्षणात् ॥ ७५
कूटं हेममयं साक्षात्स्वर्णं जाम्बूनदप्रभम् । गृहीत्वा तन्मुदा विप्रः पापयोगं चकार ह ॥ ७६
पप्रच्छ विस्मयाद्दासीं कथमेतद्वद प्रिये । मुदा तत्र यथावृत्तं कथितं तु तया द्विजे ॥ ७७
ततो नित्यं यथाकालं तच्च तस्य प्रवर्तते । समृद्धिरद्भुता गेहे लोकविस्मयकारिणी ॥ ७८
ततः परस्पराच्छ्रुत्वा सर्वैरेव च तत्पुरे । कृतं कर्म दुराचारं श्रुत्वा लोभादसाधुभिः ॥ ७९
गुरुलोभाच्च सुमहत्स्वान्ते पङ्कं विशत्यपि । पङ्कादेव भयान्मोहान्मतिभ्रंशोऽभवत्ततः ॥ ८०
[+अहंकारयुतः प्राणः क्रोधान्मूढो भवेन्नरः । ततः पापे प्रवृत्तिः स्यान्न शान्तिमधिगच्छति ८१
अधर्मेण च ते तावत्ततोऽभद्राणि पश्यति । ततः सपत्नाञ्जयति समूलं च विनश्यति] ॥ ८२
अथ किल्बिषकूटेन दग्धमेव पुरं च तत् । स्त्रियो दुष्टा जना दुष्टाः सर्वे पापबलात्तदा ॥ ८३
दृष्ट्वाऽजानाद्द्विजस्तत्र तत्कार्ये न मतिं दधौ । तस्य भार्या तदा साध्वी पुरुदुःखेन पीडिता ॥
भर्तारं कृच्छ्रसंतप्ता पुरकार्यं जगाद सा ॥ ८४

ब्राह्मण्युवाच—

कष्टं मे वर्तते नाथ दृष्ट्वा त्वां दुःखसंयुतम् । ग्रामाचारमिदं यद्वा पुरटं कर्तुमर्हसि ॥
ततस्तत्र स दोषज्ञः स्मित्वा वचनमब्रवीत् ॥ ८५

द्विज उवाच—

यस्तु जीवति पापेन त्यक्त्वा धर्मं परं हितम् । स वैधेयो महाभागे प्रगच्छत्यपुनर्भवम् ॥ ८६
एते विप्रा दुराचाराः सदाराः सपरिच्छदाः । अतिपातकयोगाच्च महापातकसंमताः ॥ ८७
सह पापेन महता प्रयास्यन्ति रसातलम् । अन्तेऽपुनर्भवं प्राप्यापराधान्तो न विद्यते ॥
अहमेकोऽत्र तिष्ठामि स्वपुण्यपरिरक्षणात् ॥ ८८

व्यास उवाच—

ततः सा तमुवाचेदं लोकहास्यं वचस्तव । वक्तुमर्हसि नश्चाग्रे न पुरोऽन्यस्य कस्यचित् ॥ ८९

द्विज उवाच—

यदि यास्यामि चान्यत्र इतोऽहं तत्क्षणात्प्रिये । सवित्तैः स्वजनैरेव पुरी यास्यत्यधोगतिम् ॥९०

व्यास उवाच—

इत्युक्त्वा परमप्रीतः संगृह्य च धनं स्वकम् । क्षिप्रं स च तया सार्धं ययौ सीमान्तरं द्विजः ९१
स्थित्वाऽपश्यत्पुरी तावत्स्थिरा तिष्ठति पूर्ववत् । सा चाऽऽह तं पतिं साध्वी पुरी चेयं न नश्यति
विमृश्य तामुवाचेदं विप्रवर्यः सुविस्मितः । किंतु तिष्ठति तत्रैव द्रव्यमस्मद्गृहाद्बहिः ॥ ९३
विचार्य सा धवं प्राह मया भ्रान्त्या उपानहौ । नाऽऽनीतौ तिष्ठतस्तत्र धारयिष्यामि किंतु वै ॥
एवमुक्त्वा पतिं साध्वी गृहीत्वा तावुपागता । पत्युरभ्यासतो दृष्टं पुरं निर्व्ययनं गतम् ॥ ९५

+ धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

ततो विप्रादयो वर्णाः कच्चराः पुरवासिनः । तिष्ठन्ति नरके घोरे दुःखिताश्चापुनर्भवे ॥ ९६
कृच्छ्राद्यमपुरं यान्ति नास्ति तेषां च निष्कृतिः । पूतिगन्धं ततोऽमेध्यं वर्जनीयं प्रकीर्तितम् ॥९७
पूर्ववल्लक्षणे प्रीतः अद्य पापं करोति च । स्तेयशीलो निशाचारी बुधैर्ज्ञेयः स वञ्चकः ॥ ९८
अबुधः सर्वकार्येषु अज्ञातः सर्वकर्मसु । समयाचारहीनस्तु पशुरेव स बालिशः ॥ ९९
एवमुष्ट्रादयः सन्ति भक्षादिनकुलादयः(?) । हिंस्रो ज्ञातिजनोद्वेगी रते युद्धे च कातरः ॥ १००
विघसादिप्रियो नित्यं [+नरः श्वा कीर्तितो बुधैः । चौर्यकर्मरतो नित्यं बहुमित्रप्रवञ्चकः ॥१०१
मिथुने कलहो नित्यं मर्त्यस्तु परिकीर्तितः । प्रकृत्या चपलो नित्यं] सदा भोजनचञ्चलः ॥१०२
प्लवगः काननप्रीतो नरः शाखामृगो भुवि । सूचको भाषया बुद्ध्या स्वजनेऽन्यजनेषु च ॥१०३
उद्वेगजनकत्वाच्च स पुमानुरगः स्मृतः । बलवान्क्रान्तशीलश्च सततं वाऽनपत्रपः ॥ १०४
पूतिमांसप्रियो भोगी नृसिंहः समुदाहृतः । तत्स्वनादेव सीदन्ति भीता अन्ये वृकादयः ॥१०५
द्विरदादिनरा ये च ज्ञायन्ते दूरदर्शिनः । एवमादिक्रमेणैव विजानीयान्नरेषु च ॥ १०६
सुराणां लक्षणं ब्रूमो नररूपव्यवस्थितम् । द्विजदेवातिथीनां च गुरुसाधुतपस्विनाम् ॥ १०७
पूजातपोरतो नित्यं धर्मशास्त्रेषु नीतिषु । क्षमाशीलो जितक्रोधः सत्यवादी जितेन्द्रियः ॥ १०८
अलुब्धः प्रियवाक्शान्तो धर्मशास्त्रार्थसंप्रियः । दयालुर्दयितो लोके रूपवान्मधुरस्वरः ॥ १०९
वागीशः सर्वकार्येषु गुणी दक्षो महाबलः । साक्षरश्चापि विद्वांश्च गीतनृत्यार्थतत्त्ववित्[१] ॥ ११०
आत्मविद्यादिकार्येषु सर्वतन्त्रीस्वरेषु च । हविष्येषु च सर्वेषु गव्येषु च निरामिषे ॥ १११
सद्योगास्वादद्रव्ये च मत्स्यग्रे चातिशोभने । गन्धमाल्येषु वस्त्रेषु शास्त्रेष्वाभरणेषु च ॥ ११२
संप्रीतश्चातिथौ दाने पर्वनीतिषु कर्मसु । स्नानदानादिभिः कार्यैर्व्रतैर्यज्ञैः सुरार्चनैः ॥ ११३
कालो गच्छति पाठैश्च न क्लीवं वासरं भवेत् । अयमेव मनुष्याणां सदाचारो निरन्तरम् ॥११४
देववन्मानवाचारो गीयते मुनिसत्तमैः । किं तु सत्त्वाधिको देवो मनुष्यो भीत एव च ॥ ११५
गम्भीरः सर्वदा देवः सदैव मानवो मृदुः । द्वयोस्तुल्या च संप्रीतिर्न दैत्यादौ भवेत्किल[२] ॥११६
प्रीतिभावः परं सौख्यं सौहृदं सुकृतं शुभम् । देवमानुषयोरेव दैत्यराक्षसयोस्तथा ॥ ११७
प्रेतादीनां च प्रेतेषु पशौ प्रीतिः पशोरपि । काकादयः स्वजातौ च तथाऽन्ये[३] च स्वजातिषु ११८
प्रीता भवन्ति चाप्रीता विप्रा तेषां च लक्षणम् । एवं पुण्यविशेषाणामविशेषेषु जातिषु ॥ ११९
प्रियाप्रियं विजानीयात्पुण्यापुण्यं गुणागुणम् । दंपत्योर्न सुखं किंचिज्जातिभेदान्नृणां भुवि १२०
स्वजातिषु भवेत्प्रीतिर्मुक्तौ वा निरयेऽपि वा । अतिपुण्याल्लु[४]भेदायुः शोभनाः पुण्यकारिणः १२१
पापात्मानो लभन्तेऽन्तं ये च दैत्यादयो नराः । कृते जाताः सुरा भूमौ न दैत्याश्चान्यजातयः[५] ॥
त्रेतायामेकपादं च द्विपदं द्वापरे युगे । संध्यायां च कलेरेव सर्वपादं च संकुलम् ॥ १२३
देवादीनां भवेज्जातं भारतं यत्प्रवर्तितम् । ये ते दुर्योधनस्यैव योधाः सैन्यादयस्तथा ॥ १२४
ते च दैत्यादयः सर्वे ये च कर्णादयो भुवि । गाङ्गेयो वसुमुख्यश्च द्रोणो देवमुनिः प्रभुः ॥ १२५
अश्वत्थामा हरः साक्षाद्धरिर्नन्दकुलोद्भवः । पञ्चेन्द्राः पाण्डवा जाता विदुरो धर्म एव च ॥१२६

+ धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. ज. ञ. पुस्तकस्थः ।

१ ग. °रे रौरवे वाऽपु° । घ. °रे रौरवे चापु° । २ क. ख. ङ. च. अधैः । ज. प्रोच्चैः । ञ. अर्थैः । ३ ज. °तू । ज्ञातावि° । ४ ज. °ल । भृणु भ. वं प° । ५ ज. °न्ये नीचजा° ।

गान्धारी द्रौपदी कुन्ती एता देव्यो धरातले। देवदैत्याः कलेर्मध्ये दैत्याः शेषे च मानवाः १२७
उत्पत्स्यन्ते सदा प्रेताः क्रव्यादाः पशुपक्षिणः। तेषां च कुलटा दासी नित्यकष्टा यवीयसी १२८
नित्यं द्वंद्वेषु संप्रीता तेषामाचारभाषिणी । किल्बिषेषु च सर्वेषु कलहेऽन्यायकर्मणि ॥
रता दैत्यादयो ये ते सर्वे निरयगामिनः ॥ १२९

वैशम्पायन उवाच—

दैत्यादीनां मृषाभावात्सुरत्वं न सुरालयम् । कथं भोग्यं कथं सौख्यमारोग्यं बलसंचयम् १३०
राज्यमायुस्तथा कीर्तिमभीष्टं दयितं बलम् । नीतिविद्यादिकं भाव्यं जन्म वृद्धं सनातनम् १३१
दानाध्ययनकर्माणि यज्ञादि च कथं प्रभो । एतदाप्ताय शिष्याय मह्यं भो वक्तुमर्हसि ॥ १३२

व्यास उवाच—

दैत्यानां साहसादेव तपो भवति निश्चितं । व्रतं यज्ञादिकं चैव संप्रीतिः स्वजनस्य च ॥ १३३
यो दान्तो विगुणैर्मुक्तो नीतिशास्त्रार्थतत्त्वगः । एतैश्च विविधैः[१] प्रीतः स भवेत्सुरलक्षणः ॥१३४
पुराणागमकर्माणि नाकेष्वत्र च [२]वै द्विजः । स्वयमाचरते पुण्यं स धरोद्धरणक्षमः ॥ १३५
[+ यः शैवो वैष्णवश्चाण्डः सौरो गाणप एव च । तारयित्वा पितॄन्सर्वान्स धरोद्धरणक्षमः] १३६
विशेषे वैष्णवं दृष्ट्वा[३] प्रीयते पूजयेच्च तम् । [*विमुक्तः सर्वपापेभ्यः स धरोद्धरणक्षमः ॥ १३७
षट्कर्मनिरतो विप्रः सर्वयज्ञरतः सदा] । धर्माख्यानप्रियो[४] नित्यं स धरोद्धरणक्षमः ॥ १३८
विश्वासघातिनो ये च कृतघ्ना व्रतलोपिनः । द्विजदेवेषु विद्विष्टाः शातयन्ते धरां नराः ॥ १३९
[+पितरौ ये न पुष्णन्ति स्त्रियो गुरुजनाञ्शिशून्। देवद्विजनृपाणां च वसु ये च हरन्ति वै १४०
अपुनर्भवशास्त्रे च शातयन्ति धरां नराः] । ये च मद्यरताः पापा द्यूतकर्मरतास्तथा ॥ १४१
पाषण्डपतितालापाः शातयन्ति धरां नराः । महापातकिनो ये च अतिपातकिनस्तथा ॥ १४२
घातका बहुजन्तूनां शातयन्ति धरां नरा[५]ः । सुकर्मरहिता ये च नित्योद्वेगाश्च निर्भयाः ॥ १४३
स्मृतिशास्त्रार्थकोद्विग्नाः शातयन्ति धरां नराः । निजवृत्तिं परित्यज्य कुर्वन्ति चाधमां च ये ॥
गुरुनिन्दारता द्वेषाच्छातयन्ति धरां नराः । दातारं[६] ये रोधयन्ति पातके प्रेरयन्ति च ॥ १४५
दीनानाथान्पीडयन्ति शातयन्ति धरां नराः । एते चान्ये च बहवः पापकर्मकृतो नराः ॥ १४६
पुरुषान्पातयित्वा तु शातयन्ति धरां नराः । य इदं शृणुयाद्रम्यं गुह्याद्गुह्यं परं हितम् ॥ १४७
न तस्य दुर्गतिर्दुःखं दौर्भाग्यं दीनता भुवि । न दैत्यादौ भवेज्जन्म स्वर्लोके शाश्वतं सुखम् ॥
नाकाले मरणं तस्य न च पापैः प्रलिप्यते । इह सर्वजनाध्यक्षस्त्रिदिवे त्रिदिवेश्वरः ॥
कल्पं कल्पं दिवं भुक्त्वा मोक्षमार्गं व्रजत्यसौ ॥ १४९

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पुण्यव्यक्तिर्नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३११६३

---

+ अयं श्लोकः क. ग. घ. ज. ञ. पुस्तकस्थः । * अयं श्लोको ग. घ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

---

१ क. ग. घ. ज. ञ. पूतः । २ ग. घ. कौ । ३ ग. घ. °ष्ट्वा स्पृष्ट्वा चाथ दिने दिने । वि° । ४ घ. धर्मज्ञानप्रियो । ५ ग. घ. ज. °राः । नाक° । ६ घ. °रं प्रतिषेधन्ति ।

अथ पञ्चसप्ततितमोऽध्यायः ।

वैशम्पायन उवाच—

प्रभवत्ययमाकाशे नित्यं द्विजवर प्रभो । कोऽयं को वा प्रभावोऽस्य कुत्र जातो घृणीश्वरः ॥ १
किं करोति हि कार्यं वै यतो रश्मिमयो भृशम् । देवैर्मुनिवरैः सिद्धैश्चारणैर्दैत्यराक्षसैः ॥
निखिलैर्मानवैः पूज्यः सदैव ब्राह्मणादिभिः ॥ २

व्यास उवाच—

परमं ब्रह्मणस्तेजो ब्रह्मदेहाद्विनिःसृतम् । साक्षाद्ब्रह्ममयं विद्धि धर्मकामार्थमोक्षदम् ॥ ३
मयूखैर्निर्मलैः कूटमतिचण्डं सुदुःसहम् । दृष्ट्वा प्रदुद्रुवुर्लोकाः करैश्चण्डैः प्रपीडिताः ॥ ४
ततश्च सागराः सर्वे वरनद्यो नदादयः । शुष्यन्ति जन्तवस्तत्र म्रियन्ते चाऽऽतुरा जनाः ॥ ५
अथ शक्रादयो देवा ब्रह्माणं समुपागताः । इममर्थं तदा प्रोचुर्देवांश्च विधिरब्रवीत् ॥ ६

ब्रह्मोवाच—

आदिब्रह्मतनोर्देवाः [*संजातोऽप्सु च तत्समः । अयं तेजोमयो नित्यं तयोः पश्यत नान्तरम्॥
आब्रह्मस्तम्बपर्यन्तं त्रैलोक्ये सचराचरे । तिष्ठत्यस्यैव सद्भावः] सत्त्वगो जनकः प्रभुः ॥ ८
अयं रजोमयः साक्षात्सुधांशुस्तनुमध्यगः । एताभ्यां पालिता लोकास्त्रैलोक्ये सचराचराः ॥ ९
दिव्योपपादुका देवा ये वाऽत्रैव जरायुजाः । अण्डजाः स्वेदजाश्चैव ये वाऽत्रैवोद्भिजादयः॥१०
सूर्यस्यास्य प्रभावं तु वक्तुमेव न शक्नुमः । अनेन रक्षिता लोका जनिताः पालिता ध्रुवम् ॥ ११
अस्यैव सदृशो नास्ति सर्वेषां परिरक्षणात् । यं च दृष्ट्वाऽप्युषःकाले पापराशिः प्रलीयते ॥ १२
तमाराध्य जना मोक्षं साधयन्ति द्विजादयः । संध्योपासनकाले तु विप्रा ब्रह्मविदः किल ॥ १३
उद्बाहवो भवन्त्येव ते च देवप्रपूजिताः । अस्यैव मण्डलस्थां च देवीं संध्यास्वरूपिणीम् ॥ १४
समुपोष्य द्विजाः सर्वे लभन्ते स्वर्गमोक्षकम् । धरायां पतितोच्छिष्टाः पूतास्ते चास्य रश्मिभिः१५
संध्योपासनमात्रेण कल्मषात्पूततां व्रजेत् । दृष्ट्वा चाण्डालकं गोघ्नं पतितं कुष्ठसंगतम् ॥ १६
महापातकसंकीर्णमुपपातकसंवृतम् । पश्यन्ति ये नराः सूरं ते पूता गुरुकिल्बिषात् ॥ १७
अस्योपासनमात्रेण सर्वरोगात्प्रमुच्यते । नान्धत्वं न च दारिद्र्यं न दुःखं न च शोच्यताम् ॥१८
लभन्ते च इहामुत्र समुपास्य विरोचनम् । प्रदृष्टा नैव लोकैश्च देवा हरिहरादयः ॥
ध्यानरूपप्रगम्यास्ते दृष्टो देव इह(वो ह्ययं) स्मृतः ॥ १९

देवा ऊचुः—

अस्तु प्रसादनाराध्यमस्तूपासनपूजनम् । अस्यैव दर्शनं ब्रह्मन्प्रलयानलसंमितम् ॥ २०
सर्वे नरादयः सत्त्वा मृतावस्थां गता भुवि । अस्य तेजःप्रभावेण प्रनष्टाः सागरादयः ॥ २१
न समर्था वयं सोढुं कथमन्ये पृथग्जनाः । तस्मात्तव प्रसादाच्च पूजयामो यथा रविम् ॥
यजन्ति च नरा भक्त्या तदुपायो विधीयताम् ॥ २२

व्यास उवाच—

[+देवानां वचनं श्रुत्वा गतो ब्रह्मा खगेश्वरम् । गत्वा स्तोतुं समारेभे सर्वलोकहिताय वै ॥ २३

* धनुश्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. ज. ञ. पुस्तकस्थः ।

१ झ. °देवाद्धि° । २ झ. °साधना° ।

ब्रह्मोवाच—

देव त्वं सर्वलोकस्य चक्षुर्भूतो निरामयः] । ब्रह्मरूपधरः साक्षाद्दुष्प्रेक्ष्यः प्रलयानलः ॥ २४

सर्वदेवस्थितस्त्वं हि सदा वायुसखस्तनौ । अन्नादिपाचनं त्वत्तो जीवनं च भवेद्ध्रुवम् ॥ २५

उत्पत्तिप्रलये देव त्वमेको भुवनेश्वरः । त्वदृते सर्वलोकानां दिनैकं नास्ति जीवनम् ॥ २६

प्रभुस्त्वं सर्वलोकानां त्राता गोप्ता पिता प्रसूः । चराचराणां सर्वेषां त्वत्प्रसादादुद्धृतं जगत् ॥

देवेषु त्वत्समो नास्ति भगवंस्त्वखिलेषु च ॥ २७

अन्तर्देहेषु बाह्येषु सर्वेषु भुवनेषु च । सर्वत्र तेऽस्ति सद्भावस्त्वयैव धारितं जगत् ॥ २८

रूपगन्धादिकारी त्वं रसानां स्वादुता तथा । एवं विश्वेश्वरः सूरो निखिलस्थितिकारकः ॥२९

तीर्थानां पुण्यक्षेत्राणां मखानां जगतः प्रभो । त्वमेकः प्रयतो हेतुः सर्वसाक्षी गुणाकरः ॥ ३०

सर्वज्ञः सर्वकर्ता च हर्ता पाता सदोत्सुकः । ध्वान्तपङ्कामयघ्नश्च दारिद्र्यदुःखनाशनः ॥ ३१

प्रेत्येह च परो बन्धुः सर्वज्ञः सर्वलोकनः । त्वदृते सर्वलोकानामुपकारी न विद्यते ॥ ३२

आदित्य उवाच—

पितामह महाप्राज्ञ विश्वेन्द्र विश्वभावक । ब्रूहि शीघ्रं परं यत्ते करिष्यामि कृतं विधे ॥ ३३

ब्रह्मोवाच—

मयूखस्त्वतिचण्डश्च लोकानामतिदुःसहः । यथैव मृदुतामेति तथा कुरु सुरेश्वर ॥ ३४

आदित्य उवाच—

किरणं कोटिकोटिं मे लोकनाशकरं परम् । न चाभीष्टकरं लोके प्रयोगेणाऽऽच्छिद प्रभो ॥ ३५

व्यास उवाच—

ततो विरिञ्चिना(वै) तूर्णं रविवाक्यवशाद्ध्रुवम् । आहूय विश्वकर्माणं कृत्वा वेज्रमयीं भ्रमिम्॥

चिच्छेद च रवेर्भानुं प्रलयानलसंनिभम् । तेनैव रचितं तत्र विष्णोश्चक्रं सुदर्शनम् ॥ ३७

अमोघो यमदण्डश्च शूलं पशुपतेस्तथा । कालस्य च परः खड्गः शक्तिर्गुहप्रमोदिनी ॥ ३८

चण्डिकायाः परं शस्त्रं विचित्रं शूलकं तथा । चक्रे ब्रह्माज्ञया शीघ्रं तेनैव विश्वकर्मणा ॥ ३९

सहस्रकिरणं शिष्टमन्यच्चैव प्रशातितम् । अजनोपायभावेन पुनश्च कश्यपान्मुनेः ॥ ४०

अदितेर्गर्भसंजात आदित्य इति वै स्मृतः । अयं चरति विश्वान्ते मेरुशृङ्गं भ्रमत्यपि ॥ ४१

सदोर्ध्वं दिनरात्रं च धरण्या लक्षयोजने । ग्रहाश्चन्द्रादयस्तत्र चरन्ति विधिनोदिताः ॥ ४२

सूरः संचरते मासान्द्वादश द्वादशात्मकः । संक्रमादस्य संक्रान्तिः सर्वैरेव प्रगीयते ॥ ४३

तासु यद्वा फलं ब्रूमो लोकानां निखिलं मुने । धनुर्मिथुनमीनेषु कन्यायां षडशीतयः ॥ ४४

वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता । षडशीतिसहस्राणि षडशीत्यां फलं भवेत् ॥ ४५

विष्णुपद्यां तु लक्षं तु अयने कोटिकोटिकम् । [*द्वयोरयनयोः कर्म यत्कृतं चाक्षयं भवेत् ॥४६

मकरे च यदाचारे शृणु संक्रमणे द्विज । स्नानं तत्राप्युषःकाले गो(दाना)दयुतं फलम्] ॥ ४७

तर्पणं चाक्षयं विद्धि दानं देवार्चनं तथा । विष्णुपद्यां तथा दानमक्षयं परिकीर्तितम् ॥ ४८

दातुर्वेदाग्नि सांनिध्यं सदा जन्मनि जन्मनि । शीते तूलपटीदानान्न दुःखं जायते तनौ ॥ ४९

---

* धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

---

१ म. °न्धाधिका° । २ घ. ज. वज्रं च कुन्दकम् । ३ झ. म. दशरात्रं । ४ क. ख. ङ. च. ज. °यां तु यद्दान° । ५ ख. ङ. च. °नौ । तूलदा° ।

तुलादानं तथा शय्या द्वयोरेवाक्षयं फलम् । सर्वोपकरणां शय्यां यो ददाति विमत्सरः ॥ ५०
वर्णमुख्याय विप्राय स राजपदवीं लभेत् । तथैवाग्निजलं दत्त्वा नदीतीरे पथि प्रगे ॥ ५१
दत्त्वा च तैलताम्बूलमुर्व्या अधिपतिर्भवेत् । भक्तिभावाद्द्विजं नत्वा धनी चाक्षयतां व्रजेत् ॥५२
माघे मास्यसिते पक्षे पञ्चदश्यामहर्मुखे । पितॄंस्तिलजलैरेव तर्पयित्वाऽक्षयो दिवि ॥ ५३
गां च सुलक्षणां दत्त्वा हेमशृङ्गां मणिप्रभाम् । रौप्यखुरप्रदेशां च तथा कांस्यसुदोहनाम् ॥ ५४
एतां दत्त्वा द्विजाग्र्याय सार्वभौमो भवेन्नृपः । दत्त्वाऽन्नाभरणं राजा मण्डलेशो धनेश्वरः ॥५५
तिलधेनुं च यो दद्यात्सर्वोपस्करणान्विताम् । सप्तजन्मार्जितात्पापान्मुक्तो नाकेऽक्षयो भवेत् ५६
भोज्यान्नं ब्राह्मणे दत्त्वा अक्षयं स्वर्गमश्नुते । धान्यं वस्त्रं तथा भृत्यं गृहपीठादिकं च यत् ॥ ५७
यो ददाति द्विजाग्र्याय तं च लक्ष्मीर्न मुञ्चति । यत्किंचिद्दीयते दानं स्वल्पं वा यदि वा बहु
अक्षयं परलोकेषु युगाद्यासु तथैव च । यद्वा देवार्चनं स्तोत्रं धर्माख्यानप्रतिश्रवः ॥ ५९
पुनाति सर्वपापेभ्यो दिवि पूज्यो भवत्यसौ । तृतीया माघमासस्य सिता मन्वन्तरा स्मृता ॥६०
तस्यां यद्दीयते दानं सर्वमक्षयमुच्यते । धनं भोग्यं तथा राज्यं नाकं(कः) कल्पोत्तरस्थितम् ॥६१
तस्माद्दानं सतां पूजा मेत्यानन्तफलप्रदम् । मन्वन्तरा तु माघे स्यात्सप्तमी याऽसितेतरा ॥ ६२
तिथिः पुण्यतमा प्रोक्ता पुराणैरभिरक्षिता । माघमासे सिते पक्षे सप्तमी कोटिभास्करा ॥ ६३
तामुपोष्य नरः पुण्यां मुच्यते जन्मबन्धनात् । सूर्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ॥
अरुणोदयवेलायां तस्यां स्नानं महाफलम् । ६४
यच्च तत्र कृतं पापं मया सप्तसु जन्मसु । तन्मे रोगं च शोकं च भास्करी हन्तु सप्तमी ॥ ६५
जननी सर्वभूतानां सप्तमी सप्तसप्तिके । सप्तम्यामुदिते देवि नमस्ते रविमण्डले ॥ ६६
अर्कपत्रं यवाः पुष्पं सुगन्धबदरीफलम् । तत्पत्रे ताम्रपात्रे वा युक्तमानीय तण्डुलम् ॥ ६७
यज्ञसूत्रं ससिन्दूरं दत्त्वा चार्घं सुशोभनम् । सर्वं पापं क्षयं याति सप्तजन्मकृतं च यत् ॥ ६८
नरकैः पीड्यते तावद्रोगैः पापैश्च दुःखदैः । हविष्यं भोजयेदन्नं शुद्धमातपतण्डुलैः ॥ ६९
वर्जयेच्च शिलाघृष्टं शृङ्गवेरं तु शाककम् । कोरदूषकपत्रं च रम्भाश्छागीघृतं तथा ॥ ७०
मक्षेशकीटादिकं वर्ज्यमुष्णोदस्नानमेव च । अल्पबीजादिकं सर्वं व्रते सूरस्य वर्जयेत् ॥ ७१
अ[न्यच] नाऽऽचरेत्तत्र धर्मचिन्तां विना व्रती । सौरव्रतं महापुण्यं पुराणैरभिनन्दितम् ॥ ७२
वर्षकोटिसहस्राणि वर्षकोटिशतानि च । आदित्यस्य समं भोग्यं लभते दिवि शाश्वतम् ॥ ७३
एवं स्वर्गक्षयादेव राजा भूमौ महाधनी । मर्त्यलोके पुराभ्यासात्करोति भास्करव्रतम् ॥ ७४
तथा स्वयं सुखं भोग्यं लभते दिवि शाश्वतम् । आरोग्यं संपदं जन्मी भास्करस्य प्रसादतः ७५
रविवारे भवेद्या च सप्तमी माघशुक्लके । महाजयेति विख्याता अन्यत्र विजया स्मृता ॥ ७६
विजया कोटिलक्षं स्यादनन्तं स्यान्महाजया(!) । तत्रैकेन व्रतेनैव मुच्यते जन्मबन्धनात् ॥ ७७
अश्वं रत्नं सुवर्णं च रक्तवस्त्रं च धान्यकम् । ददाति भास्करप्रीत्या स्वर्गमर्त्यपतिः क्रमात् ॥७८
एषां भेदं प्रवक्ष्यामि शृणु विप्र यथार्थवत् । उत्तमाभरणैर्युक्तं सद्वाहं यो ददाति ह ॥ ७९
समुद्रैः सप्तभिर्जुष्टां भूमिमित्यरिवर्जिताम् । लभेद्भवान्तरे मर्त्यमेकेनैकाधिपो भवेत् ॥ ८०
अश्वहीनं च पैत्राङ्गं वृषभैर्वाऽप्यलंकृतम् (?) । हेममाषं द्विमाषं वा दक्षिणा विहिता बुधैः ॥ ८१
रत्नभाण्डं महार्घं च हैमैरेव कृतं च यत् । स्वर्णं वा केवलं दत्त्वा त्रिविष्टपधनेश्वरः ॥ ८२

१ ग. वर्णस्तुताय । घ. बहुश्रुताय । २ ङ. पात्राङ्गं ।

रक्तवस्त्रं च धान्यं च शक्तितो यः प्रयच्छति । स्वर्गोऽर्वोरीशतामेति न तं लक्ष्मीर्विमुञ्चति ॥ ८३
अरोगी सुप्रसन्नात्मा दस्युजेता प्रतापवान् । यावत्प्रभासते भानुस्तावत्पूज्यतमो हि सः ॥ ८४
माघादौ द्वादशीमायां (दावीदर्शी ना यः)सप्तमीं कारयेत्स तु। इहाभीष्टफलं भुक्त्वा सुरैश्चैव प्रपूज्यते
अर्काह्वसप्तमीव्रतं कृत्वा च विधिवद्बुधः । पापात्पूत इहाभीष्टं संप्राप्य मुक्तिमाप्नुयात् ॥ ८६
लक्षणं च प्रवक्ष्यामि मासि मासि च यो विधिः । व्रतस्यास्य प्रसादाच्च सुराणामर्चितो दिवि॥
शुक्लपक्षे रविदिने प्रवृत्ते चोत्तरायणे । पुंनामधेयनक्षत्रे गृह्णीयात्सप्तमीव्रतम् ॥ ८८
हस्तो मैत्रं तथा पुष्यः श्रवो मृगपुनर्वसु । पुंनामधेयनक्षत्राण्येतान्याहुर्मनीषिणः ॥ ८९
पञ्चम्यामेकभक्तं तु षष्ठ्यां नक्तं प्रकीर्तितम् । सप्तम्यामुपवासश्च अष्टम्यां पारणं भवेत् ॥ ९०

अर्काग्रं शुचि गोमयं सुमरिचं तोयं फलं चाश्नुते
मूलं नक्तमुपोषणं च विधिवत्कृत्वैकभक्तं तथा ।
क्षीरं वाय्वशनं घृताक्तमिति च प्रोक्ताः क्रमेणामुना
कृत्वा वासरसप्तमीं दिनकृतः प्राप्नोत्यभीष्टं फलम् ॥ ९१

अर्काग्रं ग्रामात्पूर्वोत्तरदिग्गतार्कविटपस्य *शाखाग्रस्थितं विशिष्टं सूक्ष्मपत्रद्वयं सतोयं दन्तैरस्पृष्टं पातव्यम्। शुचि गोमयं भूमावपतितं मध्याङ्गुष्ठाभ्यां पलमात्रं दन्तैरस्पृष्टं सतोयं पातव्यम्। सुमरिचमव्रणमपुरातनं स्थूलमवशुष्कमेकं दन्तैरस्पृष्टं सतोयं पातव्यम् । तोयं ब्रह्मपित्राङ्गुलीमूलप्रकरं पातव्यम्(?)। फलं खर्जूर(?)नारिकेलानामन्यतमं दन्तैरस्पृष्टं पातव्यम्। घृताक्तमिति चाऽऽहारं मयूरडिम्भपरिमाणम् । घृतमपि तत्परिमाणम् ॥ ९२

आत्मनो द्विगुणां छायां यदा कुर्वीत भास्करः।तदा नक्तं विजानीयान्न नक्तं निशि भोजनम् ॥
प्रथमं पूजयेद्देवं फलपुष्पादिमन्त्रकैः । अन्नदानं ततः कुर्याद्विध्युक्तपरिमाणकम् ॥ ९४

ततो ध्यानम्—

सर्वलक्षणसंपूर्णं सर्वाभरणभूषितम् । द्विभुजं रक्तवर्णं च रक्तपङ्कजधृक्करम् ॥ ९५
तेजोबिम्बं बहुजलमध्यस्थं सुपरिच्छदम् । पद्मासनगतं देवं रक्तगन्धानुलेपनम् ॥
आदित्यं चिन्तयेद्देवं पूजाकाले विशेषतः ॥ ९६

मन्त्रश्चायम्—

भास्कराय विद्महे सहस्ररश्मये धीमहि । तन्नः सूर्यः प्रचोदयात् ॥ ९७

जाप्य एष परः प्रोक्तः सप्तम्यां जयमावहः । करवीरैः करञ्जैश्च रक्तकुङ्कुमसंनिभैः ॥ ९८
पश्चाच्च पारणा कार्या तथाऽष्टम्यां विशेषतः । अष्टम्यामेव कर्तव्यं नवम्यां नैव पारणम् ॥ ९९
व्रते फलं न चाऽऽप्नोति नवम्यां पारणे कृते । पारणं त्वपराह्ने तु कटुतिक्ताम्लवर्जितम् १००
तण्डुलं शोधयेद्यत्नात्तृणबीजादिकं त्यजेत् । मुद्गमाषतिलादीनि घृष्टं च परिवर्जयेत् ॥ १०१
ब्राह्मणान्भोजयेद्भक्त्या शक्तः क्षीरादिहव्यकैः । यथाशक्त्यन्नपानैश्च व्यञ्जनैश्च निरामिषैः ॥
विप्राय दक्षिणां दद्याद्विभज्य चानुरूपतः । इमामनन्तफलदां यः कुर्यात्सप्तमीं नरः ॥ १०३
सर्वपापप्रशमनीं धनपुत्रविवर्धनीम् । मासि मासि द्विजश्रेष्ठ व्रतं कृत्वाऽर्कतुष्टये ॥ १०४

---

* अत्र 'ऐशान्यां दिशि' इत्यधिकं क्वचित्पुस्तके ।

---

१ क. ख. ग. ङ. ज. ञ. घृतं ।

यः कुर्यात्पारणं भक्त्या सूर्यलोकं स गच्छति । कल्पकोटिं वसेत्स्वर्गे ततो याति परां गतिम् ॥
इदमेव परं गुह्यं भाषितं शंभुना पुरा । श्रवणात्सततं तस्य व्रतस्य परिपालनात् ॥
श्रावयेद्वाऽपि लोकस्य फलं तुल्यं प्रकीर्तितम् ॥ १०६

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डेऽर्काङ्गसप्तमीव्रतं नाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३१२६८

---

अथ षट्सप्ततितमोऽध्यायः ।

---

वैशम्पायन उवाच—

भगवंस्त्वत्प्रसादाच्च श्रुतं मे पावनं व्रतम् । अपरं श्रोतुमिच्छामि ब्रध्नस्य च प्रियं च यत् ॥ १

व्यास उवाच—

कैलासशिखरे रम्ये सुखासीनं महेश्वरम् । प्रणम्य शिरसा भूमौ स्कन्दो वचनमब्रवीत् ॥ २
अर्काङ्गाख्यो विधिस्त्वत्तो मयैवं विस्तराच्छ्रुतः । वारादेर्यत्फलं नाथ श्रोतुमिच्छामि तत्त्वतः ३

ईश्वर उवाच—

रक्तपुष्पै रवेर्वारे अर्घ्यं दद्याद्व्रती नरः । नक्ताहारं हविष्यान्नं कृत्वा स्वर्गान्न हीयते ॥ ४
सप्तम्याश्च सदाचारं सर्वमेवार्कवासरे । कुर्वतः प्रीतिमाप्नोति सगणः परमेश्वरः ॥ ५
सूरस्य सदृशं याति तिथिवारस्य पालनात् । एकेन गाणपत्यस्य यावत्सूरो नभस्तले ॥ ६
सर्वकामप्रदं पुण्यमैश्वर्यं रोगनाशनम् । स्वर्गदं मोक्षदं पुण्यं रविवारे व्रतं हितम् ॥ ७
रविवारेण संक्रान्त्या सप्तम्या तद्दिने शिवे । व्रतपूजादिकं जाप्यं सर्वं चाक्षयतां व्रजेत् ॥ ८
आदित्यवासरे शुभ्रे ग्रहाधिपप्रपूजनम् । +प्राणादहतवक्त्रेण निःसार्य मण्डले न्यसेत्(?) ॥ ९

द्विभुजं रक्तपद्मस्थं सुगलं रक्तवाससं सर्वरक्ताभरणं ध्यात्वा हस्ताभ्यां पुष्पं विधृत्य संघ्रायैशान्यां समाक्षिपेत् ॥ १०

आदित्याय विद्महे भास्कराय धीमहि । तन्नो भानुः प्रचोदयात् ॥ ११

ततो गुरूपदिष्टेन विधि[*दिष्टेन तत्त्वतः । पूजयेद्भक्ति(द्रक्त)पुष्पैश्च कदल्यादिफलैः शुभैः ॥१२
पूजयेद्यो रविं नित्यं स याति भास्करालयम् । पुष्पं दत्त्वा जलं देयं जलान्ते] च विलेपनम् १३
विलेपान्ते च सद्धूपं धूपान्ते च प्रदीपकम् । प्रदीपान्ते च नैवेद्यं ततो वारि निवेदयेत् ॥ १४
ततो जाप्यं स्तुतिं मुद्रां नमस्कारं तु कारयेत् । अञ्जलिः प्रथमा मुद्रा द्वितीया धेनुका स्मृता ॥१५
एवं यः पूजयेदर्कं रविसायुज्यतां व्रजेत् । अस्मद्ब्रह्मवधाद्घोरं कपालं करलग्नकम् ॥ १६
रवेस्तस्य प्रसादात्तु मुक्तं वाराणसीतटे । रवेः परतरं दैवं त्रैलोक्ये न तु वर्तते ॥
यस्य प्रसादतो घोरान्मुक्तोऽहं गुरुकिल्बिषात् ॥ १७

स्कन्द उवाच—

श्रुत्वा त्वत्तो गिरं नाथ विस्मयो मेऽभवत्प्रभो । त्वदन्योऽस्ति न को देवः कथं ब्रह्मवधस्त्वयि ॥

---

+ घ्राणादहतवस्त्रेणेति क्वचित्पाठः । * धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

---

१ ग. घ. ज. सप्तम्यां च सदाचारं तत्कार्यं रविवा° । २ ग. घ. ज. रवेर्वारं परं हितम् । ३ सिते । ४ ग. घ. ज. विलोक्य । ५ ग. घ. ज. °स्ति कथं दे° ।

त्वं च ज्ञानीश्वरो योगी लोके भोक्ताऽक्षरोऽव्ययः । देवानां गुरुरेकस्त्वं व्याप्तरूपी महेश्वरः १९
सर्वज्ञो वरदो नित्यं सर्वेषां प्राणिनां प्रभुः । दुष्कृतं ते कुतो नाथ तथा क्रोधो विशेषतः ॥ २०

शंभुरुवाच—

लोकानां च हितार्थाय पृथग्भूत्वा युगे युगे । सर्वे कुर्मो वयं पुत्र ब्रह्मविष्णुमहेश्वराः ॥ २१
नास्माकं बन्धमोक्षौ च नाकार्यं कार्यमेव च । तथा लोकस्य रक्षार्थं चरामो विधिपूर्वकम् ॥ २२
सर्वं च परमं चैव सर्वविघ्नविनाशनम् । सर्वरोगप्रशमनं सर्वार्थप्रतिसाधकम् ॥ २३
एकोऽसौ बहुधा भूत्वा कालभेदादनिन्दितः । मासे मासे तु तपति एको द्वादशतां व्रजेत् ॥ २४
मित्रो मार्गशिरे मासि पौषे विष्णुः सनातनः । वरुणो माघमासे तु सूर्यो वै फाल्गुनेऽपि च २५
चैत्रमासे तपेद्भानुर्वैशाखे तापनः स्मृतः । ज्येष्ठे मासि तपेदिन्द्र आषाढे तपते रविः ॥ २६
गभस्तिः श्रावणे मासे यमो भाद्रपदे तथा । हिरण्यरेता*ऽऽश्वयुजि कार्तिके तु दिवाकरः ॥ २७
इत्येते द्वादशाऽऽदित्या मासि मासि प्रकीर्तिताः । उरुरूपा महातेजा(जो) युगान्तानलवर्चसः २८
य इदं पठते नित्यं तस्य पापं न विद्यते । न रोगो न च दारिद्र्यं नावमानो भवेत्क्वचित् ॥ २९
अक्षयं लभते स्वर्गं सुखं राज्यं यशः क्रमात् । महामन्त्रं प्रवक्ष्यामि सर्वप्रीतिकरं परम् ॥ ३०
नमः सहस्रबाहवे आदित्याय नमो नमः । नमस्ते पद्महस्ताय वरुणाय नमो नमः ॥ ३१
नमस्तिमिरनाशाय श्रीसूर्याय नमो नमः । नमः सहस्रजिह्वाय भानवे च नमो नमः ॥ ३२
[+त्वं च ब्रह्मा त्वं च विष्णू रुद्रस्त्वं च नमो नमः । त्वमग्निः सर्वभूतेषु वायुस्त्वं च नमो नमः ]
सर्वगः सर्वभूतेषु न हि किंचित्त्वया विना । चराचरे जगत्यस्मिन्सर्वदेहे व्यवस्थितः ॥ ३४
इति जप्त्वा लभेत्कामं स्वर्गभोग्यादिकं क्रमात् । आदित्यो भास्करः सूर्यः अर्को भानुर्दिवाकरः
सुवर्णरेता मित्रश्च पूषा त्वष्टा च ते दश । स्वयंभूस्तिमिराशश्च द्वादशः परिकीर्तितः ॥ ३६
नामान्येतानि सूर्यस्य शुचिर्यस्तु पठेन्नरः । सर्वपापाच्च रोगाच्च मुक्तो याति परां गतिम् ॥ ३७
पुनरन्यत्प्रवक्ष्यामि भास्करस्य महात्मनः । रक्ताख्या ये रक्तनिभाः सिन्दूरारुणविग्रहाः (?) ३८
यानि नामानि मुख्यानि तच्छृणुष्व षडानन । तपनस्तापनश्चैव कर्ता हर्ता महेश्वरः ॥ ३९
लोकसाक्षी त्रिलोकेशो व्योमाधिपो दिवाकरः । अग्निगर्भो महाविप्रः खगः सप्ताश्ववाहनः ॥ ४०
पद्महस्तस्तमोभेदी ऋग्वेदो यजुसामगः । कालप्रियं पुण्डरीकं मूलस्थानं च भावितम् ॥ ४१
यः स्मरेच्च सदा भक्त्या तस्य रोगभयं कुतः । शृणु कार्तिक यत्नेन सर्वपापहरं शुभम् ॥ ४२
न संदेहो मनाकार्य आदित्यस्य महामते । ॐ इन्द्राय नमः [‡स्वाहा] । ॐ विष्णवे नमः ॥ ४३
एष जप्यश्च होमश्च संध्योपासनमेव च । सर्वशान्तिकरश्चैव सर्वविघ्नविनाशनः ॥ ४४
नाशयेत्सर्वरोगांश्च लूताविस्फोटकादिकान् । कामलादिकरोगांश्च ये रोगाश्चैव दारुणाः ॥ ४५
ऐकाहिकं द्व्याहिकं च ज्वरं चातुर्थिकं तथा । कुष्ठरोगं क्षयं रोगं कुक्षिरोगं ज्वरं तथा ॥ ४६
अश्मरीमूत्रकृच्छ्रांश्च नानारोगभयं तथा । ये वातप्रभवा रोगा ये रोगा गर्भसंभवाः ॥ ४७
*मर्द मर्द महारोगा मूर्छित्वा वेदनात्मकम् । विलयं यान्ति ते सर्वे आदित्योच्चारणेन तु ॥ ४८

---

* संधिरार्षः । + धनुश्चिह्नान्तर्गतः पाठो ग. घ. ज. ञ. पुस्तकस्थः । ‡ घ. पुस्तकस्थम् । * इदमर्धमसंगतम् ।

---

१ ग. घ. ज. 'केनोक्तोऽक्ष' । २ ग. घ. ज. 'त्वा कोटिमे' । ३ क. ग. घ. ज. ञ. प्रहेश्वरः । ४ ग. घ. ज. 'कं त्र्याहि' ।

रक्ष मां देवदेवेश ग्रहरोगभयेषु च । प्रशमं यान्ति ते सर्वे कीर्तिते तु दिवाकरे ॥ ४९
मूलमन्त्रं प्रवक्ष्यामि सर्वकामार्थसाधकम् । भुक्तिमुक्तिप्रदं नित्यं भास्करस्य महात्मनः ॥ ५०

मन्त्रश्चायम्—ॐ ह्रां ह्रीं सः सूर्याय नमः । अनेन मन्त्रेण सदा सर्वसिद्धिर्भवेद्ध्रुवम् ॥ ५१
व्याधयो नैव बाधन्ते न चानिष्टभयं भवेत् । सूर्यावर्तोदकं यस्तु(स्तु)गृहीत्वा तु क्रमेण तु ॥ ५२
तस्य प्राशनमात्रेण नरो रोगात्प्रमुच्यते । न दातव्यं न ख्यातव्यं जप्तव्यं च प्रयत्नतः ॥ ५३
अभक्तेष्वनपत्येषु पाखण्डलौकिकेषु च । कटुतैलसमायुक्तं नस्ये पाने च दापयेत् ॥ ५४
सूर्यावर्तजलं पुत्र सर्वरोगाद्विमुञ्चति । मूलमन्त्रस्तु जप्तव्यः संध्यायां होमकर्मसु ॥ ५५
जप्यमाने तु नश्यन्ति रोगाः क्रूरग्रहास्तथा । किमन्यैर्बहुभिः शास्त्रैर्मन्त्रैर्वा बहुविस्तरैः ॥ ५६
सर्वशान्तिरियं वत्स सर्वार्थप्रतिसाधिका । नास्तिकाय न दातव्या देवब्राह्मणनिन्दके ॥ ५७
गुरुभक्ताय दातव्या नान्येभ्योऽपि कदाचन । प्रातरुत्थाय यो नित्यं कीर्तयिष्यति मानवः ५८
गोघ्नः कृतघ्नकश्चैव मुच्यते सर्वपातकैः । शरीरारोग्यकृच्चैव धनवृद्धियशस्करः ॥ ५९
[+जायते नात्र संदेहो यस्य तुष्टो दिवाकरः । ] एककालं द्विकालं वा त्रिकालं नित्यमेव च ६०
यः पठेद्रविसांनिध्ये सोऽभीष्टं फलमाप्नुयात् । पुत्रार्थी लभते पुत्रं कन्यार्थी कन्यकां लभेत् ॥ ६१
विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । शृणुयात्संयतो भक्त्या शुद्धाचारसमन्वितः ॥ ६२
सर्वपापविनिर्मुक्तः सूर्यलोकं व्रजत्यपि । भास्करस्य व्रते यश्च व्रताचारमखेषु च ॥ ६३
पुण्यस्थानेषु तीर्थेषु पठेत्कोटिगुणं भवेत् । ग्रहे भोज्येषु पूजायां ब्रह्मभोज्ये द्विजाग्रतः ॥ ६४
य इदं पठते विप्रस्तस्यानन्तफलं भवेत् । तपस्विनां च विप्राणां देवानामग्रतः सुधीः ॥
यः पठेत्पाठयेद्वाऽपि सूर्यलोके महीयते ॥ ६५

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे सूर्यशान्तिर्नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३१३३१

---

अथ सप्तसप्ततितमोऽध्यायः ।

---

व्यास उवाच—

मध्यदेशे स्वराट्सम्राड्भद्रेश्वर इति श्रुतः । तपोभिर्बहुभिः पूतो व्रतैर्नानाविधैरपि ॥ १
देवांस्तु पूजयेन्नित्यं [*द्विजातिथिगुरूनपि । न्यायवर्ती सुशीलात्मा शास्त्रार्थविधिपारगः ॥ २
जनांस्तु पालयेन्नित्यं] सुभावेन सदा खलु । तस्य सव्येऽभवत्कुष्ठं करे श्वेतमजायत ॥ ३
ततो भिषक्प्रयोगाच्च लक्षणं दृश्यते पुरा । आहूय द्विजमुख्यांश्च मन्त्रिणः सोऽब्रवीद्वचः ॥ ४

राजोवाच—

किल्बिषं मे करे विप्रा दुःसहं लोकगर्हितम् । तस्मात्पुण्ये महाक्षेत्रे यत्र त्यक्ष्यामि विग्रहम् ॥ ५

---

+ इदमर्धं क. ञ. पुस्तकस्थम् । * धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

---

१ ग. घ. गोसव्यं । २ ग. घ. ज. °व्यमाने° । ३ ग. घ. ज. ञ. सूरलो° । ४ ग. घ. ज. °भद्रकेतुरि° ।

आज्ञापयत धर्मज्ञाः परलोकहिताय वै । वंशहीनस्य मे वीराः प्रेत्यामुत्र हितं च यत् ॥
तद्ब्रूत सुप्रसन्ना मे उद्दिष्टं यत्करोम्यहम् ॥ ६

द्विजा ऊचुः—

परित्यक्ते त्वया राष्ट्रे धर्मशीलेन धीमता । नष्टं जगदिदं राजंस्तस्मान्नो वक्तुमर्हसि ॥ ७
अयमस्य प्रतीकारो ह्यस्माभिरवगम्यते । सूरमत्र महादेवं यत्नादाराधय प्रभो ॥ ८

राजोवाच—

केनोपायेन विप्रेन्द्रास्तोषयिष्यामि भास्करम् । अमेध्येनाथ कुष्ठेन लोकानां गर्हितेन च ॥ ९
अदृश्यः सर्वभूतानां गर्हितोऽहं द्विजातयः । किं करिष्यामि राज्यं च किं स्यादाराधनेन तु १०

द्विजा ऊचुः—

अत्र स्थित्वा स्वराज्ये तु समुपास्य विरोचनम् । प्रमुच्य किल्विषाद्घोरात्स्वर्गं मोक्षं च लप्स्यसे

व्यास उवाच—

एतच्छ्रुत्वा तु राजेन्द्रः प्रणिपत्य द्विजोत्तमान् । अकार्षीत्तस्य सूर्यस्य परमाराधनं च यत् ॥ १२
नित्यपूजां तथा मन्त्रैरुपहारैर्विलेपनैः । फलैर्नानाविधैर्घैरक्षतातपतण्डुलैः(?) ॥ १३
जपापुष्पार्कपर्णैश्च करवीरकरञ्जकैः । रक्तकुङ्कुमसिन्दूरैस्तथा वासन्तिकादिभिः ॥ १४
सुगन्धकदलीपत्रैस्तत्फलैः सुमनोहरैः । अर्घ्यमौदुम्बरे कृत्वा सदा सूर्याय पार्थिवः ॥ १५
आदित्यसंमुखो दत्ते सदा मन्त्रिपुरोहितैः । महिषीभिस्तथाऽऽचार्यो भोगिनीभिः समन्ततः १६
सर्वैरन्तःपुरस्थैश्च सपत्नीकैश्च रक्षिभिः । चेटवर्गैस्तथा चान्यैर्दीयतेऽर्घ्यं दिने दिने ॥ १७
अर्कशान्तिभिरत्युग्रैः स्तोत्रमन्त्रादिभिः परैः । मूलमन्त्रान्यमन्त्रैश्च यजन्ति स्म दिवाकरम् ॥ १८
तथाऽर्काङ्गव्रतं चान्यत्कृतं तैः सुसमाहितैः । क्रमात्समां समासाद्य रोगस्यान्तं गतो नृपः ॥ १९
बाधिते चाऽऽमये घोरे स राजा निखिलं जगत् । नियम्य कारयामास कल्ये च याजनं व्रतम् ॥
+एवमेव जपापुष्पं सुगन्धं कदलीफलम् । वाणैर्जायाभिरालभ्यमर्कपर्णान्यपुष्पकम् ॥ २१
एवमेव महापुण्यं कृत्वा सर्वो जनः प्रियात् । हविष्यान्नो निराहारोऽजनो यजति भास्करम् २२
एवमेव त्रिभिर्वर्गै*रर्चितस्तैर्विभाकरः । संतुष्टो भूपमागम्य कृपया चाब्रवीद्वचः ॥ २३

सूर्य उवाच—

वरं वरय चाभीष्टं यस्ते मनसि वर्तते । सर्वेषां वो हितार्थाय सानुगः पुरवासिनाम् ॥ २४

राजोवाच—

यदीच्छसि वरं दातुं सर्वलोचन मत्प्रियम् । सर्वेषां नः परं स्वर्गं(र्ग्यं) त्वत्सकाशे भवत्विति २५

सूर्य उवाच—

अमात्यास्ते द्विजा विप्राः सदाराः सपरिच्छदाः । नवीनयौवनाः शुद्धा यावदाभूतसंप्लवम् २६
तिष्ठन्तु मत्पुरे रम्ये सर्वभोगैर्निरामयाः । सुरद्रुमैः सुसंपूर्णैः प्रासादैर्द्रुमकल्पकैः ॥ २७
प्रमदाभिर्महाभागा नृत्यगीतादिभिः परैः । पञ्चकल्पान्तरे राजा मन्वादौ त्वं भविष्यसि ॥ २८

---

+ अयं श्लोकोऽसंगतः । * वर्णैरिति क्वचित्पाठः ।

---

१ ग. विप्राः । २ ग. घ. ज. भगिनीभिः । ३ ग. घ. व्यतीते । ४ ग. घ. ज. एकमें । ५ ग. घ. °म् । सुवर्णैः पञ्चभिर्लभ्यं । ज. °म् । वर्णैर्जपाभिं । ६ ग. घ. जना ।

अमी ते मनुजा भूप पुरस्थाश्च पुरोधसः। तथा जनपदस्थाश्च विद्वांसो धनिनो नराः ॥
तत्र मत्तो वरं लब्ध्वा सुखं स्वर्गमवाप्स्यथ। २९

व्यास उवाच—

एवमुक्त्वा जगच्चक्षुस्तत्रैवान्तरधीयत। ततो भद्रेश्वरो राजा सपुरो दिवि मोदते ॥ ३०
तत्र कीटादयो ये च ते मीताः ससुतादयः। स्वर्गे देवद्रुमे भोग्यं कुर्वन्ति महदद्भुतम् ॥ ३१
एवमेव नृपा विप्रा मुनयः संशितव्रताः। ये च क्षत्रादयो वर्णाः सूरस्वर्गं ययुर्द्रुतम् ॥ ३२
कैश्चिदभ्यर्थितं वित्तं पुत्रदारास्तथा परैः। सुखं स्वर्ग(र्ग्यं) तथाऽऽरोग्यं भास्करस्य प्रसादतः ॥
पुण्यकूटमिदं भद्रं यः पठेन्मानवः शुचिः। सर्वपापक्षयस्तस्य रुद्रवत्पूजितो भुवि ॥ ३४
सर्वसाक्षी भवेत्स्वर्गे वरदो भास्करप्रियः। शृणोति संयतो मर्त्यः सोऽभीष्टं फलमाप्नुयात् ॥ ३५
पारगः सर्वपापानां भास्करस्यैव संसदि। वावदूको भवेन्नित्यं श्रवणात्पुण्यवान्धनी ॥ ३६
इदं गुह्यातिगुह्यं च भास्करेण प्रचारितम्। इदं यमाय कथितं क्षितौ व्यासेन कीर्तितम् ॥ ३७

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे भद्रेश्वराख्यानं नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३१३६८

---

अथाष्टसप्ततितमोऽध्यायः।

---

वैशम्पायन उवाच—

श्रुतो ग्रहेश्वरस्यैष प्रभावस्त्वत्प्रसादतः। रव्यादीनां ग्रहाणां च साधनं नो वद द्विज ॥ १
के ते रव्यादयस्तेषां कथं तोषः कथं प्रियम्। काले देशे तु संप्राप्ते दर्शनं तच्छिवाशिवम् ॥ २

व्यास उवाच—

ग्रहादयो ये लोके तु भुञ्जन्ति पुण्यपातकम्। शिवाशिवं च कुर्वन्ति विश्वकर्मक्षयाय वै ॥ ३
सूरः कालोऽन्तको ज्ञेयो जनेषु च ग्रहेषु च। तिग्मसौम्याच्च योगात्स निग्रहानुग्रहे प्रभुः ॥ ४
ग्रहभावाच्च तस्यैव संतोषं निगदाम्यहम्। उदुम्बरपलाशाभ्यां पल्लवाभ्यां जुहोति यः (?) ॥ ५
आकृष्णेनेति मन्त्रेण मूलकेनाथ शान्त्यया(न्तये)। जुहुयादाज्ययुक्ताभ्यामभीष्टफलहेतवे ॥ ६
शान्तये सर्वरोगाणां वधबन्धविमोचने। एकैकेन तु मन्त्रेण होतव्यं च शतं शतम् ॥ ७
सितं च च्छागलं दद्यात्सूरायाऽऽदित्यवासरे। भोजयेद्ब्राह्मणाञ्शक्त्या हव्यकव्यैर्मनोहरैः ॥ ८
सप्तम्यां च सिते पक्षे पञ्चदश्यां तथैव च। रोगाद्विमुच्यते रोगी न रोगात्कृच्छ्रमेष्यति ॥ ९
परमं चापरं सत्त्वमाब्रह्मस्तम्बमात्रके। ब्रह्माण्डे चाणुमात्रे च सूरः संभावयिष्यते ॥ १०
संहारान्तं क्रमात्सर्वमुत्पत्तिस्थितिकारणात्। प्राणसर्गे जनानां च पाता विश्वचरस्तनौ ॥ ११
मृत्युकाले तनोर्मध्यात्प्राणेन सह गच्छति। शीर्षान्तस्थः सदा चन्द्रो द्विरष्टकलया युतः ॥ १२
अहर्निशं सुधावृष्टिं देहे वर्षत्यधोमुखः। जन्तवस्तेन जीवन्ति महासत्त्वानुमात्रकाः ॥ १३
उर्व्यां सस्यानि पुष्णाति तथा स्थावरजङ्गमान्। एताभ्यां पुष्पवभ्यां च धारितं जनितं जगत्
तयोराराधनात्पुष्टिः सदा पुण्यौत्पराधकम्। साधयेत्सर्वकार्याणि साधकः सर्वदा शुचिः ॥ १५
न पूजयति यो मोहात्सुधांशुं मानवाधमः। आयुस्तस्य क्षयं याति नरकं चाधिगच्छति ॥ १६

---

१ घ. °दं समासात्कथि°। २ ङ. सकलं। ३ ङ. °ण्यापराधिका। सा°। ग. °ण्यापर्धिका। सा°।

निष्कलङ्ककलाधार गङ्गाधरशिरोमणे । द्वितीयायां जगन्नाथ तुभ्यं चन्द्र नमोऽस्तु ते ॥ १७
तिथिमन्यामनुप्राप्य नमस्कारं विधोरपि । प्रकरोति नरो यस्तु सोऽभीष्टं फलमाप्नुयात् ॥ १८
अत्रिनेत्रोद्भव श्रीमन्क्षीरोदमथनोद्भव । महेशमुकुटावास तुभ्यं चन्द्र नमोऽस्तु ते ॥ १९
दिव्यरूप नमस्तुभ्यं सुधाकर जगत्पते । शुक्लपक्षे तथा कृष्णे त्रियामायां विदुर्बुधाः ॥ २०
ॐ ह्रां ह्रीं सोमाय नमः—इति जप्यमन्त्रः प्रभाते जपनीयः ॥
एवं यः पूजयेत्सोमं श्रावयेच्च शृणोति वा । स पीयूषसमो लोके भवेज्जन्मनि जन्मनि ॥ २१
एवं सहस्रनाम्ना यः स्तौति पूजयते भुवि । सोऽक्षयं लभते स्वर्गं पुनरावृत्तिदुर्लभम् ॥ २२
इति सोमपूजा ॥
पित्तले भाजने कांस्ये दधिपूर्णे(र्णं) घृते(तं) शिवे । न्यूनाधिकस्तु विभवाच्छ्रुत्वा कर्म विमत्सरः
स्वर्णे(र्णं) वा राजते(तं) कांस्ये सौमे कृष्णभवे बुधः । संप्राप्य पर्वसंस्थाने दद्याद्धंसुताय च ॥
परं भवति सौभाग्यं पीयूषादधिकं भृशम् । स्त्रीणां च पुरुषाणां च न दौर्भाग्यं कदाचन ॥ २५
रूपसौभाग्यकामोऽहं दधि स्वर्णं च राजतम् । ददामि कांस्यपात्रस्थं देहि सौभाग्यरूपकम् ॥ २६
द्विजाय वाक्यपूर्वेण दद्याद्विमत्सरो नरः । शक्तितो दक्षिणा देया तथा वस्त्रादिकं नवम् ॥ २७
भोज्यान्नं सर्वसंपूर्णं ताम्बूलं सुमनोहरम् । पुष्पमालादिकं दद्याद्रूपसौभाग्यहेतवे ॥ २८
एवं यः कुरुते दानं सोमोद्दिष्टं द्विजातये । स्वर्लोके नरलोके वा रूपसौभाग्यभुग्भवेत् ॥ २९

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे सोमार्चने रूपसौभाग्यकामतो द्रव्यादिदानं नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३१३९७

---

अथोनाशीतितमोऽध्यायः ।

---

वैशम्पायन उवाच—

उद्भवं लोहिताङ्गस्य संतोषं तु जनेषु च । प्रभावं वैभवं तेजः श्रोतुमिच्छामि तत्त्वतः ॥ १

व्यास उवाच—

हरांशसंभवो देवः कुजातः पृथिवीसुतः । सत्त्वस्थः सत्त्वसंपूर्णः शूरः शक्तिधरो भुवि ॥ २
तीक्ष्णः क्रूरग्रहो देवो लोहिताङ्गः प्रतापवान् । कुमारो रूपसंपन्नो विद्युत्पातमयः प्रभुः ॥ ३
अनेन भर्जिता दैत्याः क्रव्यादा ये सुरद्विषः । दशायोगाच्च मनुजा उद्भिजाः पशुपक्षिणः ॥ ४

वैशम्पायन उवाच—

शंभोरेष कथं जातः कथं जातो महीसुतः । ग्रहो देवः कथं क्रूर एतदिच्छामि वेदितुम् ॥ ५
कथमस्य भवेत्तुष्टिः सर्वलोकेषु सर्वदा । गुरो मय्याप्तभावे तु वद निःसंशयं मुखात् ॥ ६

व्यास उवाच—

हिरण्याक्षकुले धीमानसुराणां च पार्थिवः । अन्धकेति समाख्यातो दैत्यः सर्वसुरान्तकृत् ॥ ७
जातो विष्णुवराद्देव[+.................. । तेनैव निर्जिता देवाः सेन्द्राः क्रतुभुजः क्रमात् ॥ ८
ततो देवा विधिं गत्वा वचनं चेदमब्रुवन् । अन्धकेनैव चास्माकं हृतं राज्यं सुखं मखः ॥ ९

---

+ एतच्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।

१ घ. °हुश्रुता° । २ ग. घ. °रूपं । ३ घ. ञ. °धिपूर्णं च भाजनम् । ग. °धिपूर्णे । ४ घ. °ले श्रीमान° । ५ ग. °तो जातो विद्युत्पराक्रमः । ते° । घ. °तो जातो विष्णुपराक्रमः । ते° ।

तस्मात्तस्य वधोपायमुच्यतां तद्विधीयताम् । अथ धाताऽब्रवीद्वाक्यं देवानस्य च नैधनम् ॥ १०
नास्ति विष्णुवरादेव] पीयूषस्य च भक्षणात् । किंतु तस्यासुरत्वस्य यथा परिभवो ध्रुवम् ॥ ११
कुर्वे लोकहितार्थाय श्रद्धां कामसमन्विताम् । विचिकित्सा तु तत्रैव सर्वासूनथ गच्छति ॥ १२
त्यक्त्वैकां पार्वतीं दुर्गां न तस्य मानसं स्थिरम् । ततः क्रुद्धो जगत्स्वामी तं च वैरूप्यतां नयेत्
ततोऽसुरत्वं संत्यज्य गणस्तस्य भविष्यति । एवमुक्त्वा प्रजाध्यक्षः श्रद्धां कामसमन्विताम् ॥ १४
विचिकित्सां स्वमायां च प्रेषयामास तं प्रति । ततो विचेष्टितः कामाद्योषान्वेषणतत्परः ॥ १५
स्वदारान्परयोषां च न पश्येद्विचिकित्सया । ततो मायाप्रयुक्तोऽसौ त्रैलोक्यं विचचार ह ॥ १६
दृष्टं च हिमवत्पृष्ठे स्त्रीरत्नं चातिशोभनम् । दृष्ट्वा च पार्वतीं दैत्यः कामस्य वशगोऽभवत् ॥ १७
ज्ञानलोपात्ततो दुर्गां ग्रहीतुं तां स चेच्छति । उमा च कोटवीरूपं कृत्वा देहस्य चाऽऽत्मनः १८
ईश्वरस्यान्तिकस्था च ग्रहीतुं तां ससार सः । ततः कामविचेताश्च उन्मत्तीकृतचेतनः ॥ १९
न जहाति शिवपत्नीं पार्वतीं दैत्यपुंगवः । ततो ध्यानास्तमागम्य मिलितः पार्वतीं धवः ॥ २०
दृष्ट्वा तं च स दैत्येन्द्रः प्रगतस्तु स्वमालयम् । सज्जीकृत्य स्वयोधांश्च शंभुं जेतुं समुत्सुकः ॥ २१
गौरीमेव समानेतुं काममोहादचेतनः । एतच्छ्रुत्वा तु त्रिदशा गत्वा तं नन्दिनेरिताः ॥ २२
अकुर्वंश्च महद्युद्धं घोरं लोकभयंकरम् । दैत्यान्रणे मृतांस्तत्र दैत्याचार्यो [*महाकविः ॥ २३
मृतसंजीवनीं [जप्त्वा] तानेवायम]जीवयत् । [†पुनर्युध्यन्ति ते दैत्याः सुरैः सार्धं महाबलैः २४
अक्षयं चाव्ययं तत्र दैत्यानां च महद्भयम्] । एतद्वृत्तं तु कैलासे शर्वे चैव निवेदितम् ॥
क्रोधाच्छंभुस्तदा वाक्यं नन्दिनं निजगाद ह ॥ २५

शंभुरुवाच—

गच्छ दैत्यालयं वीर द्रुतमेव ममाऽऽज्ञया । पश्यतां सर्वदैत्यानां दैत्येन्द्रस्य च संसदि ॥ २६
गृहीत्वा चिकुरेऽत्यर्थं भार्गवस्य दुरात्मनः । लब्ध्वा चास्मत्सकाशं वै विह्वलं चाऽऽनय क्षणात्

व्यास उवाच—

ततो नन्दीश्वरः श्रीमान्पार्वतीपतिनेरितः । काव्यस्य कुन्तले धृत्वा दैत्यानां पुरतो बलात् ॥ २८
आनयत्तं कविं दैत्या जघ्नुः प्रहरणैः शरैः । न शेकुस्ते रुजं कर्तुं नन्दिनो बलशालिनः ॥ २९
देवानामग्रतो नन्दी गृहीत्वा तस्य कुन्तले । हरस्य पुरतो हृष्टः सह तेन समाययौ ॥ ३०
गृहीत्वा भार्गवं शंभुरसुराणां गुरुं रुषा । अगिलद्रौद्रमूर्तोऽसौ कालान्तकसमः प्रभुः ॥ ३१
ततो दैत्यपतिः क्रुद्धः सर्वसैन्यावृतो बली । दुद्राव शंकरं तत्र घोरैः प्रहरणादिभिः ॥ ३२
त्रिदशाश्च तथा क्रुद्धास्ततो विद्याधरादयः । प्रययुः समरं तत्र दैत्यानां च भृशं रुषा ॥ ३३
एतस्मिन्नन्तरे घोरं युद्धं भीष्मं समुत्थितम् । देवदानवयोरेवं सर्वलोकभयंकरम् ॥ ३४
ततः प्रत्ययिताश्चैश्च देवा निघ्नन्ति दानवान् । दनुजा निर्जरांस्तत्र विनिघ्नन्ति महाहवे ॥ ३५
शातकुम्भमयैर्गात्रैः शरैर्वज्रसमानकैः । विभिदू रत्नपुङ्खैश्च परस्परजयैषिणः ॥ ३६
दीपयन्ति भृशं कान्तैस्तद्गात्राणि नभांसि च । वीर्यवन्तो महादैत्यानमोघैरस्त्रसंचयैः ॥ ३७
हत्वा च पातयामासुः काश्यपाः सुरसत्तमाः । जगद्व्याप्तं महासैन्यं बलायुधसुसंवृतम् ॥ ३८
नीतं क्षयं सुरैः सर्वैः शस्त्रैः प्रत्ययितैः क्षणात् । ततो देवान्समाभाष्य शुक्रमुद्गीर्णवाञ्शिवः ३९
भूमौ निपतितो गर्भस्ततो भौम इति स्मृतः । शुक्रः शिवं समाभाष्य गतो दैत्यान्मुदाऽन्वितः ४०

* धनुश्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः । † अयं श्लोको घ. पुस्तकस्थः ।

चण्डिकायाः प्रसादेन दैत्योऽनाशं समेयिवान्। ततः शिष्टाश्च ये दैत्या विविशुस्ते रसातलम्॥
अन्धको गणतां नीतः कृत्वा भृङ्गिरिटिं द्विजः। एवं भौमः समुत्पन्नो हरांशो भूसमुद्भवः॥ ४२
तस्य(स च) पूजा च(ज्यश्च)तुर्थ्यां तु भौमवारे च सुव्रतैः। दशाग्रेरिष्टे च तथा गोचरेऽनिष्टराशिगे॥
त्रिकोणे मण्डले चैव रक्तपुष्पानुलेपनैः। एवं वै पूजितो भौमः प्रयच्छति मतिं धनम्॥
पुत्रान्सुखं यशश्चैव किं भूयः श्रोतुमिच्छसि॥ ४४

*व्यास उवाच—

एतद्वः कथितं शिष्या धर्माख्यानं शुभावहम्। यच्छ्रुत्वा न पुनर्भूयो जायते म्रियतेऽपि वा॥४५
द्विजातीनां पुण्यदं च संसेव्यं च शुभेप्सुभिः। यथासुखं च गच्छध्वं कृतकृत्या ममाऽऽज्ञया ४६

ब्रह्मोवाच—

एवं विश्राव्य भगवान्व्यासः सत्यवतीसुतः। निर्णीय धर्मं विविधं[1] शम्याप्राश(स)मगात्सुत ४७
त्वमपि श्रद्धया वत्स ज्ञात्वा तत्त्वं यथासुखम्। विहरस्व यथाकालं गायमानो हरिं मुदा॥
लोकान्धर्मं चोपदिशन्प्रीणयञ्जगतां गुरुम्॥ ४८

पुलस्त्य उवाच—

इत्युक्तः प्रययौ भूप नारदो गन्धमादनम्। नारायणं मुनिवरं द्रष्टुं बदरिकाश्रमे॥ ४९

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे भौमोत्पत्तिपूजनं नामोनाशीतितमोऽध्यायः॥ ७९॥

आदितः श्लोकानां समष्ट्यङ्काः—३१४४९

---

अथाशीतितमोऽध्यायः।

---

भीष्म उवाच—

चण्डिकानुग्रहाद्दैत्या गताः शिष्टा रसातलम्। तद्वदस्व महाप्राज्ञ चण्डिकापूजने फलम्॥ १
यथा संपूज्यते देवि तुष्टा यच्छति यत्फलम्। श्रोतुं कौतूहलं मेऽद्य तद्वदस्व सविस्तरम्॥ २

पुलस्त्य उवाच—

शृणुष्व नृपशार्दूल चण्डिकापूजने फलम्। यत्कृत्वा स्वर्गभुङ्मर्त्यः पश्चान्मोक्षं लभेद्ध्रुवम्॥ ३
यत्पूजने फलं देव्या न तत्क्रतुशतैरपि। लभ्यते नितरां तात तीर्थदानव्रतादिभिः॥ ४
चण्डिकां पूजयेद्भक्त्या यो नरः प्रत्यहं नृप। न क्षमस्तत्फलं वक्तुं साक्षाद्देवः पितामहः॥ ५
मातुर्देव्याः प्रसादेन सुलभं सर्वमेव हि। अश्वमेधसहस्राणि वाजपेयशतानि च॥ ६
चण्डिकाभ्यर्चनस्यैते लक्षांशेनापि नो समाः। स दाता स मुनिर्यष्टा स तपस्वी स तीर्थगः॥ ७
यः सदा पूजयेद्दुर्गां नानापुष्पानुलेपनैः। धूपैर्दीपैस्तथा भोज्यैः प्रणमेद्वाऽपि भाविनीम्॥ ८
स योगी स मुनिः श्रीमांस्तस्य मुक्तिः करे स्थिता। वर्षमेकं तु यो दुर्गां पूजयेद्विजितेन्द्रियः॥९
एकाहारो महाबाहो सोऽग्निष्टोमफलं लभेत्। पौर्णमास्यां नवम्यां च क्षीरेणैव नराधिप॥ १०
स्नापयित्वा शुभां दुर्गां वाजपेयफलं लभेत्। शुक्लपक्षे नवम्यां तु अष्टम्यां परमेश्वरीम्॥ ११

---

* इदमधिकम्।

---

१ ज. °धं शम्पाप्रा°। २ ज. अष्टम्यां च।

